Adarsh Granthmala's 2nd Pushpam

# VAIYAKARAN BHUSHANSAR

OF

## Kaund Bhatt

WITH

## Prabha and Darpan Commentaries

By

**Pt. Bal Krishna Pancholi**

Principal Khetan Sanskrit Mahavidyalaya, Benares.

&

**Pt. Hari Vallabha Shastri.**

Edited and published by

**Pt. Tarkeshwar Chaturvedi Shastri.**

1947

[ Price Rs. 7/-

# किञ्चिन्निवेदनम्

श्रीमद्गुर्जरदेशभूसुरवरोदीच्याङ्कपञ्चोलिनां 'गायकवाड' गतो 'वसाइ' इमलाग्रामः प्रसिद्धो महान् ।
तत्रासीन्नृपमानितो बुधवरोऽम्बारामशास्त्री श्रुतस्तस्मै 'गायकवाड' भूपतिमणिर्वर्षासनं दत्तवान् ॥ १ ॥
तत्पुत्रः स्वपितेव शास्त्रकुशलो लक्ष्म्यादिरामाभिधस्तद्वर्षासनमाप्नुवन् कुलगतं कीर्तिं समुद्वर्धयन् ।
विद्वांसं जनयन् गुणैकवसतिं श्रीकालिदासाभिधं विप्राणां जनतासु गौरवमथ प्रातिष्ठिपद् धीनिधिः ॥ २ ॥
शास्त्री श्रीकालिदासोऽप्रतिमप्रतिभया गुर्जरेष्वद्भुतोऽभूत् नासीच्छास्त्रं हि किञ्चिन्मतिगतिरभवद्यत्र नास्यातिसूरेः ।
आचार्य्यः शङ्करोऽभूद्भुवनजनतया मानितो माधवाख्यः पाण्डित्येनास्य प्रीत्या व्यददत पदवीं रत्नमेतत्कवीनाम् ॥ ३ ॥
देशे ग्रामे स्वकीये धनिजनधनतः कूपदेवालयादीन् संस्कृत्यान्योऽन्यवैरं द्विजजनमनसः दूरतस्त्याजयित्वा ।
वार्द्धक्यं येन नीतं निजगृहवसताऽध्यापनं कुर्वता च ग्राम्या यत्कीर्तिगाथां प्रतिदिनमनिशं श्रावयन्ति प्रसङ्गात् ॥ ४ ॥
चत्वारो गुणिनो बभूवुरमलाः श्रीकालिदासात्मजाश् 'चूनीलाल' इति ह्यजायत पुरो नीलादिकण्ठस्ततः ।
तस्मादुत्तरतो बभूव तनयः श्रीदेवयुक्शङ्करः तूर्यो विट्ठलदासनामविदितः सर्वेऽपि योग्या बुधाः ॥ ५ ॥
तेषां योऽजनि नीलकण्ठपदयुग्रामान्तशास्त्री सुधीस्तस्यासँस्तनयास्त्रय प्रथमतोऽम्यालालनाम्ना स्मृतः ।
तत्र द्वौ गिरिजादिशङ्करगुरोः प्रारम्भिकं शिक्षणं लब्ध्वा व्याकरणे परीक्षणविधावुत्तीर्य्य प्रासीदताम् ॥ ६ ॥
ज्येष्ठः श्रीसोमनाथस्तदवरजननो बालकृष्णाभिधोऽहं द्वावप्यध्येतुकामौ बुधजनमहितां काशिकामेतवन्तौ ।
विद्वत्पूज्यात् सभादेः चरमपतिपदात् सर्वतन्त्रस्वतन्त्रादध्योऽधीत्य स्वदेशं गत इह पठितुं शाङ्करं संश्रितोऽहम् ॥ ७ ॥
शास्त्री सोमसमः समाजनिपुणः श्रीसोमनाथोऽभवद् गोस्वामिव्रजरायनामकमहाविद्यालयेऽध्यापकः ।
अम्दावाद इति प्रसिद्धनगरे भक्तिं वितन्वन् जने दीक्षां वल्लभसम्प्रदायविहितां बिभ्रद्यशः व्यापयन् ॥ ८ ॥
शास्त्री श्रीबालकृष्णो गुरुपदकमलं संश्रयन् काशिकायामाचार्य्योपाधिमाप्त्वा बुधजनसमितौ सत्प्रतिष्ठामवाप्त् ।
काशीमानीय नीता बहुविधविषये भ्रातरः पण्डितत्वं स्वीये देशेऽधुना ये गुरुतमयशसाऽध्यापयन्ते बहुत्र ॥ ९ ॥
मुख्याध्यापकतामवाप्य कृपया विश्वेशितुः पुण्यदे देवीदत्तपदादिसूर्य्यमलयुक्खेतानविद्यालये ।
खेतानीययशः सुरद्रुकुसुमैः सार्धं स्वकीयं यशः काश्यां वर्द्धयता प्रमेयमतुला व्याख्या कृता भूषणे ॥ १० ॥
श्रीमद्रायबहादुरो गिरिसुताभक्तो रमायाः प्रियो धर्मात्मा हरिरामनामविदितो खेतानवंशोद्भवः ।
विद्यादानविधावुदारहृदयो विद्वत्समाराधकः जीव्याद्वर्षशतं प्रसन्नहृदयो लक्ष्मीसमृद्धया समम् ॥ ११ ॥
श्रीमद्रायबहादुरस्य भुवने विख्यातकीर्तिश्रियः खेतानान्वयभास्वतो धिषणया राजप्रजास्नेहिनः ।
एतद्भूषणसारमुद्रणविधौ साहाय्यकर्तुर्गृहे वाग्लक्ष्म्यौ वसतां सदा स्थिरतया केदारनाथस्य मे ॥ १२ ॥
पडरौनानिवासस्तन्व्याः खेतानान्वयसम्भवाः । सौभाग्यारोग्यसम्पद्भिर्वर्द्धन्तामुत्तरोत्तरम् ॥ १३ ॥
धीदोषादपराच्च हेतुत इह स्याद् या प्रभायां त्रुटिर्दोषज्ञाः परिमार्ज्य तां करुणया स्वीयां गुणग्राहिताम् ।
संदर्श्यातिपरिश्रमञ्च सफलं कुर्वन्त्विति प्रार्थये पञ्चोली विदुषां प्रसत्तिपिठरोऽहं बालकृष्णसुधीः ॥ १४ ॥
दोषा दोषवतां भान्ति गुणा गुणवतामिव । सुधियां सुधिया दोषा अदोषाः पुण्यशालिनाम् ॥ १५ ॥
नचात्रातीव कर्त्तव्यं दोषदृष्टिपरं मनः । दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ १६ ॥
यत्कारुण्यदिवाकरो निजकरैः प्रोत्सार्य्य हार्दं तमः दिव्यं ज्योतिरदायि येन रचिता रम्या प्रभा भूषणे ।
शास्त्राम्भोध्यवगाहदिव्यतपसा देवत्वमाभिभ्रतः पायामि प्रभया सभापतिगुरून् श्रीबालकृष्णाभिधः ॥ १७ ॥

## सम्मतयः

### श्रीमन्माध्वसम्प्रदायाचार्य-दार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्य-तर्करत्न-न्यायरत्न-
### श्रीगोस्वामिदामोदरशास्त्रिणः—

काशीस्थसेतानमहाविद्यालयप्रधानाध्यापकेन व्याकरणाचार्येण पञ्चोलीत्युपाख्य-श्रीबालकृष्ण-शर्मविदुषा रचिता वैयाकरणभूषणसारस्याभिनवा प्रभाख्यां व्याख्यामनेकत्र स्थलेषु निरीक्ष्यैनया न केवलमन्तेवसतामुपकारमपि तु नव्याध्यापकानाञ्च साहायकमुद्भाव्याधिविचारक्षेत्र तत्रत्यं विवेच्यमुपसं-जिहीर्षताऽऽत्मप्रतिभातरीतिमन्यटीककैरनुद्ग्रथितं ग्रन्थकमर्मव्यञ्जिजिषमाणेनोट्टङ्कितामालोच्यावधार्य च शब्दानुशासनगामिदमीया सर्वपथीना शेमुषीमवगच्छञ्च जिज्ञासुविचिकित्सानाबिन्धमपटिमानमस्येहोन्मी-लितमुज्जिहान स्वान्ते समदोद्रेकमन्तरमान्तमिव कतिपयाक्षरमिषेण प्रचिकटयिषु प्रभाभासिनमभिनन्दयति—

दामोदर गोस्वामी

### महामहोपाध्याय—शास्त्ररत्नाकर—मीमांसाकेसरि—पण्डितसार्वभौम—
### प्रिन्सिपल हिन्दू विश्वविद्यालय ( धर्म विज्ञान विभाग ) श्रीचिन्नस्वामिशास्त्रिणः

श्लाघनीयतमोऽयं श्रीमता पण्डितप्रवराणां श्रीबालकृष्णशास्त्रिपञ्चोलिमहोदयाना व्याकरणा-चार्याणा सेतानसंस्कृतमहाविद्यालयप्रधानाध्यापकाना वैयाकरणभूषणसारस्य 'प्रभा' नामकटीकाया विरचनविषयक प्रयत्न । भूषणसारो हि न वैयाकरणगोष्ठीषु केवलम्, परीक्षास्वपि प्रायेण सर्वदेशीयासु कृतप्रवेश इति नाविदित समेषा विदुषाम् ।

सोऽय विस्तृतप्रचारोऽपि समुचितोपकरणवैधुर्येण न तथात्मनो रहस्यमन्तर्निगूढमवबोधयितुं शक्नु-यन्नासीत् । सोऽय दोष परिहृत प्रभाख्ययाऽनया टीकया । श्रीमद्भि शास्त्रिवर्यैर्हि सरलतमया भाषया, गभीरया च शैल्या, नातिविस्तृततया रीत्या तथा ग्रन्थग्रन्थिविभेदन कृतम्, येन वैयाकरणानामन्येषा च शब्दतत्त्वमधिजिगमिषता महानुपकारो जायेत ।

तेनाधमर्णं पण्डितकुल छात्रवृन्द च श्रीपञ्चोलिमहोदयाना विषय इति नात्युक्ति, विश्वसिमि चायश्यमन्तरसन्तुष्येयुर्विमत्सरा विपश्चित्प्रवरा प्रभामिमामवलोक्येति । अत प्रमाणपदवीं मनागप्यनति-वर्तिनीं ग्रन्थमर्मप्रकाशिनीं सरलामपि गभीरहृदया पाण्डित्यप्रकर्षपरिपूर्णां प्रभामिमा विपश्चितो विद्या-र्थिनश्च यथावदुपयुज्य महत्तम लाभमवाप्नुयु, तेन च श्रीपञ्चोलिमहोदयाना परिश्रम सफलयेयु, प्रोत्साहयेयुश्च तानेतादृशग्रन्थरत्नाना बहूना निर्माण इति सुदृढं विश्वसन्, वितरश्चानेकान् धन्यवादास्तेभ्य, अन्ते श्रीविश्वनाथं नाथामि श्रीबालकृष्णशास्त्रिपञ्चोलिमहोदयेभ्यस्सर्वमायुरसर्वाङ्श्चाशिष प्रदाय तान् यथावत्सोऽनुगृह्णातु—

इति विद्वद्वशंवद ।

चिन्नस्वामिशास्त्री

न्याय—व्याकरणाचार्य—न्याय-साङ्ख्य-वेदान्त-मीमासा-व्याकरणतीर्थ—भू पू० काशीस्थ राज-कीय संस्कृतमहाविद्यालयप्रधानाध्यापक—प० श्रीबालबोधमिश्रस्य ।

अकस्माज्जातं सुवर्णे सौगन्ध्यमिव अकस्माज्जाता सर्वाभिलषिता विद्वज्जनचेतसि मोदमादधती पण्डितवर-बालकृष्णपञ्चोलिकृतेयं प्रभानाम्नी वैयाकरणभूषणसारव्याख्या सर्वास्वपि प्रकृतग्रन्थव्याख्यासु रा[illegible]यति । तदियं प्रभा प्रभाप्रभेव सूर्यादिप्रभा[illegible]रयाहृपप्रभामुपोद्बलयन्ती प्रज्ञाविद्येव सकलाविद्या प्रकृतग्रन्थाविद्यामुच्छेदयित्री भविता ।

एतत्प्रमाप्यायकश्चाय श्री प० बालकृष्णपञ्चोलिनामधेय सुवर्णे सौगन्ध्याधायक इव क्रियत्कौशल-[illegible] स्वय विद्वज्जनविदितवेद्येनेति प्रकृतग्रन्थ प्रमाणयति—

श्रीबालबोधमिश्रः

## SOME VALUABLE OPINIONS OF THE HIGHLY LEARNED PROFESSORS OF INDIA ON THIS 'PRABHA' COMMENTARY ARE AS FOLLOWS–

K A Subramania Iyer,
University of Lucknow
21–6–1944

'Hindska'
38, Major Banks Road,
Lucknow.

I have seen the commentary called 'Prabha of Pt Bala Krishna Pancholi Vyakarnacharya, on the Vaiyyakarana-Bhusana-Sara of Kaunda Bhatta I could do no more than read a few selected passages I was impressed by the clarity of the explanations and their faithfulness to tradition Though there are many other commentaries on this work the Prabha' will be of great use to students of advanced Vyakarana. There can never be too many aids to a through understanding of a work like the Vaiyyakarana Bhusana-Sara

K A Subramania Iyer,
Head of the Dept of Sanskrit and Hindi
University of Lucknow.



This is to certify that Pt Balkrishna Pancholi Vyakarnacharyaji is known to me I have glanced through portions of his commentary on Vaiyakaran-Bhusana Sara in manuscript and I am convinced of the usefulness of the work

Gopi Nath Kaviraj,
23–6–44
( Mahamahopadhyaya, Retired Principal,
Govt Sanskrit College, Benares )



Babu Ram Sakesena,
M A, D LITT.
University of Allahabad

24, Chatham Lines,
Allahabad
Dated August 22, 1944

I have been pleased to look into the Commentary 'Prabha' of Vaiyakarana-Bhusana-Sara, here and there and am impressed with the clarity of the

commentator's expression and his desire to dive deep. The study of grammar of Sanskrit on orthodox lines to-day is more an aim by itself and involves a vigorous discipline. The commentator, Pt. Bala Krishna Pancholi, gives sufficient evidence of being thoroughly grounded in this discipline. By writing this clear exposition of the stiff work, he has rendered a very valuable service. I hope he will continue in the line.

Babu Ram Saksena.
Reader in Sanskrit and
Member, Board of Skt. Studies, U. P.



Govt. Sanskrit College,
Benares.
Dated April 18, 1947

I glanced through the commentary called "Prabha" written by Pandit Balkrishna Pancholi, Vyakaranacharya, on the Vaiyakarana Baushana Sara of Kaunda Bhatta. There have been several commentaries already available on this important work. The speciality about this new commentary is that, owing to clarity of its explanations on difficult passages of the text as well as on Vedic and other quotations occuring therein, it is much better suited to the needs of the students community. The author of the commentary has moreover taken special care to collete the text with some original manuscripts The edition also includes the older Darpana–Vyakhya. I heartily congratulate the author on his achievement which is sure to bring him a well-deserved name among the learned community.

( M. D. Shastri ),
M. A, D. phil, principal,
Govt Sanskrit College,
Benares.

# ॥ किञ्चित्प्रास्ताविकम् ॥

॥ "विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि" ॥

इहापाततः प्रतीयमानसारेऽपि यथार्थतः साररहिते संसारे मृगतृष्णया प्राय ऐहिकेष्टानिष्टप्रेप्सा-परिजिहीर्षाभ्यामेव प्राणिमात्रस्य विद्याधनादिसंग्रहीतुं महत्तमः प्रयासस्तत्र तत्र दृष्टिपथमवतरति। ऐहिकसमुन्नतये शास्त्रप्रदर्शितोन्नतिपथमवगणयतामुच्छृङ्खलतया यथेच्छं व्यवहरतां पूर्वसुकृतवशात्प्राप्तै-श्वर्याणामप्यसुमतां भाव्यभ्युदयस्तु विचिकित्सामेवावगाहते। शास्त्रविरुद्धाचाराणां प्राणात्ययानन्तरं महापुण्यपण्यक्रेतव्यमनुष्यजन्मालभमानानां कीटपतङ्गादिदुःखदयोनिपूत्पद्यमानानां तेषां हीरकमन्वि-ष्यतां वराटिकालाभ इव चिरं कालमधःपातो निर्णीत एव।

अतः करुणावरुणालयो निमेषमात्रेण लोकत्रयसृष्टिविसृष्टिशक्तः, विहितनिषिद्धकर्मानुरोधेन प्राणिमात्रस्य निग्रहीतानुग्रहीता च परमेश्वरोऽनिर्वचनीयदुःखतः परिरिरक्षिषयाऽभ्युदयनिःश्रेयसाभ्यां संयुयुक्षया च ब्रह्माणमुत्पाद्य प्रवाहरूपेण प्रतिसर्गमापतितं मनुष्यबुद्ध्यविवेच्यधर्माधर्मसाधनोपदेशकं साङ्गं वेदं तस्मै समुपादिदेश। तदुक्तम्—

'यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मै' इति। (श्वे० उप० ६ अ० १८) 'सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक्। वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे' ॥ इति च। तथाच मानवबुद्ध्यनिर्णेयधर्माधर्मज्ञानाय वेदः, तन्मूलकानि शास्त्राणि एव च शरणीभूतानि।

वेदादिवाक्यार्थज्ञानमन्तरा धर्माधर्मयोर्ज्ञातुमशक्यतया द्विविधो हि शब्दो धर्मजनकोऽधर्मजनकश्च। तत्र धर्मजनकशब्दानां ज्ञानस्य व्याकरणाधीनतया 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' प्रधानञ्च षडङ्गेषु व्याकरणम्' इति भाष्योक्त्या, 'अभिविद्यं प्रकाशते' इति वाक्यपदीयेन च 'साङ्गं वेदम्' इत्यत्राङ्गपदस्योपकारार्थकतया व्याकरणशास्त्रस्य निखिलशास्त्रोपकारकत्वबोधनाद् व्याकरणज्ञानमावश्य-कम्। यद्यपि

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥

इत्यादिना अङ्गानाम् ( वेदोपकारकाणाम् ) अध्ययनमुक्तम्, तथापि व्याकरणस्य प्राधान्यमत्रापि स्थिरीकृतमेव।

व्याकृतिः=व्युत्पत्तिस्तत्साधनं व्याकरणम्। व्युत्पत्तिश्च—प्रकृति-प्रत्यययोः स्वरूपस्य, तदर्थयो-

स्तत्सम्बन्धस्य च ज्ञानत्वा। एतेन पाणिन्यादिव्याकरणाभावे वेदस्य न्यूनाङ्गत्वापत्तिरपास्ता, इष्टापत्तेः, उक्ताङ्गानां ज्ञानाभावे वेदस्वरूपस्य, तदर्थस्य च ज्ञानासम्भवाद् बुद्ध्युपजीविनाम् ।

यद्यपि व्याकरणज्ञानस्य 'रक्षोहागमलघ्वसंदेहाः प्रयोजनम्' इति भाष्योक्तं प्रयोजनं कौमुद्यादि-ग्रन्थाध्ययनेनापि सम्पद्येत तथापि प्रकृत्यर्थस्य प्रत्ययार्थस्य च किं विशकलितं स्वरूपम्, कश्च तयो परस्परं सम्बन्ध. । वाक्यार्थे च कस्यार्थस्य प्राधान्याप्राधान्ये, इत्यत्र मीमांसकनैयायिकादीनां भ्रममपाकर्तुम्, नाम्नाम्, धातूनाम्, प्रत्ययानाम्, समासादीनाञ्चार्थं मीमांसकादिविरुद्धमतनिराकरणपूर्वकं स्वमतेन निरूपयितुम्, नव्यन्यायपरिष्कारपद्धतिं व्याकरणरीत्या बोधयितुम्, निखिलप्रपञ्चकारणीभूतस्फोटात्मक-शब्दब्रह्मावगमयितुञ्च निखिलतन्त्रनिष्णातश्रीकौण्डभट्टेन वैयाकरणभूषणं शब्दकौस्तुभसारप्रदर्शकं ग्रन्थरत्नं निरमायि । ततोऽपि सौकर्य्येण प्रौढव्युत्पत्त्युपलब्धये वैयाकरणभूषणसारो निर्मितः । तत्र यद्यपि नैयायि-कादिपक्षप्रदर्शके स्वसिद्धान्तप्रतिपादके चात्र ग्रन्थे बहव्य टीकाः सन्ति, तथापि ते खण्डनीयमीमांसकादिम-तप्रदर्शने एव व्याख्यानविस्तृतिकरणेन, कठिनवागाडम्बरेण, क्वचित्क्वचिद्व्याख्येयग्रन्थस्य सम्यगव्या-ख्यातत्वेन, स्फोटस्वरूपोपपादने तन्न्यूनतादर्शनेन च व्याकरणाचार्य्येण पञ्चोलिबालकृष्णशास्त्रिणा स्वच्छदर्पणे मुखावबोधवद् भूषणसारवक्तव्यार्थस्य सुबोधाय गुरुपरम्परोपलब्धपरिष्करणपद्धत्यां छात्राणां शक्तिवर्धनाय च स्वनिर्मितया प्रभानाम्न्या व्याख्यया समलङ्कृतोऽयं वैयाकरणभूषणसार । अत्र च प्राय. सर्वासां टीकानां सारभूता विषया नोपेक्षिताः । क्वापि टीकासूपलब्धुमशक्या बहवो विषया अत्यु-पयुक्ता सन्ति । मन्ये ते विषया अध्ययनशीलैश्छात्रैः, गुणग्राहिभिर्विद्वद्भिश्च स्वयमेव प्रशंसनीया स्यु । यद्यप्यत्र त्रुटिर्नास्तीति नहि वक्तुं शक्यते, तथाप्यनया टीकया बहूपकृतमित्यत्र नास्ति विशयः। किञ्च दर्पणटीका अद्यावधि कैश्चिदपि विद्वद्भिर्न सम्यक् शोधयितु प्रयतितम्। क्वचिदक्षराशुद्धय, क्वचिद् वाक्यम्, वाक्यार्द्धम्, पदादिकं वोच्छिन्नमासीत्, तत्सर्वमनेकानि लिखितपुस्तकान्युपजीव्य पण्डितवर-श्रीबालकृष्ण-शास्त्रिपञ्चोलिना सशोधितम्। एतद्विषये बहूनामुपकरणानामभावाद् विस्तरस्य कर्तुमशक्यत्वेन मुद्रणान्तरे उपेक्षितापेक्ष्या विषया उक्ताः स्युरित्यलं पल्लवितेन साम्प्रतमिति

निवेदयते—

**श्रीसभापतिशर्मोपाध्यायः**

(प्रिन्सिपल, बिरला संस्कृत कालेज, बनारस )



प्रभाव्याख्यया दर्पणव्याख्यया च समुल्लसितः

# वैयाकरणभूषणसारः

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।
स्फोटरूपं यतः सर्वं जगदेतद् विवर्त्तते ॥ १ ॥

---

प्रभा

शास्त्रे रत्नैर्गुरुजनभवमज्ञयाऽऽसप्रकर्षैश्चित्रैस्तैर्नवनवधियां सत्तरङ्गैरुपेताम् ।
पौंस्तैरर्थैः कमलनिचयैर्निर्दिष्टं प्रीणयन्तीं वाचं वन्दे जलनिधिसमां श्रीलपद्मोल्यटं ताम् ॥१॥

श्रीनीलकण्ठप्रभवो गुरुश्रीसभापतेराप्तसमस्तविद्य ।
श्रीबालकृष्णस्तनुते प्रभाऽऽख्या श्रितां वरां भूषणसारसारम् ॥२॥

वैयाकरणमते प्रकृतिप्रत्ययार्थप्रदर्शनपूर्वकं वाक्य-वाक्यार्थनिर्णायकं भट्टोजिदीक्षितादिकारिकाव्याख्यारूपं भूषणसारनामकं प्रकरणमारभमाणः श्रीकौण्डभट्टः प्रारिप्सितस्य निर्विघ्नसिद्ध्यर्थं 'मङ्गलादीनि हि शास्त्राणि प्रथन्ते ( विस्तृतानि भवन्ति ) वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युः' ( भा० अ० १ पा० १ आ० ३ सू० १ ) इति भाष्योक्तेः 'विघ्नध्वंसकामो मङ्गलमाचरेत्' इत्यविगीतशिष्टाचारानुमितश्रुतेश्च मङ्गलमाचरति—

श्रीलक्ष्मीरमणमिति—श्रीर्लोकोत्तरा कान्तिस्तया सहिता लक्ष्मीर्निखिलसम्पदधिष्ठात्री देवतेति शाक-

---

दर्पणव्याख्या

रमाप्रेमाऽऽभञ्जजगदवनदक्ष मधुद्धव-श्रुतिस्तोमाहृत्या परिजनितवेदाननमुदम् ।
अखण्डानन्दाढ्य निखिलजनहृत्कञ्जनिलय हयग्रीव वन्दे प्रहतकविविघ्नग्रविष्टे ॥ १ ॥

सत्येकस्मिन्नपि बाधके समवहितसाधकसहस्रादपि कार्योत्पत्तेरदर्शनादपेक्षितप्रारिप्सितग्रन्थपूहापोहायानुष्ठितं भगवत्स्तुतिरूपं मङ्गलं ग्रन्थकृच्छिष्यशिक्षार्थमादौ निबध्नाति ❀ श्रीलक्ष्मीरमणमिति ❀ । अधिकरणल्युडन्तल्युडन्तरमणशब्देन कर्तृपर्यन्तलक्ष्मीपदस्य समासः । तेन च श्रीसहितशब्दस्य मध्यमपदलोपी समासः, शाकपार्थिवादेराकृतिगणत्वात् । तदुपादानञ्च सशक्तिकस्यैव भगवतो जगन्निर्माणकारणत्वमिति ध्वनयितुम् । ❀ नौमीति ❀ "णु स्तुतौ" इति धातोरस्मदा-

प्रभा

पार्थिवादित्वादुक्तसहिताशब्दस्य लोपः। यद्वा श्रीशब्दस्य श्रीमति लक्षणया श्रीश्चासौ लक्ष्मीरित्येव विग्रह उचितः, शाकपार्थिवादित्वकल्पने गौरवात्। यद्वा श्रीरिति लक्ष्मीरमणस्य विशेषणम्। श्रीलक्ष्मीपदस्य कर्मषष्ठ्यन्तस्य नन्द्यादित्वाण्णिजन्तात्कर्त्तरि ल्युटि निष्पन्नरमणशब्देन सह तत्पुरुषसमासः। यद्वा अधिकरणल्युडन्तरमणशब्देन कर्तृषष्ठ्यन्तश्रीलक्ष्मीरमणशब्दस्य समासः। तथाच श्रीलक्ष्मीरमणमित्यस्य विष्णुमित्यर्थः। सशक्तिकस्य परमात्मनः कारणत्वमिति द्योतनाय श्रीलक्ष्मीति विशेषणम्। लक्ष्मीरमणनमनेन तस्येष्टदेवत्वप्रतीतावपि 'ज्ञानन्तु शङ्करादिच्छेत्' इत्युक्तेर्गौरीरमणरूपवत्त्वेन नतेरौचित्यादाह—

गौरीरमणरूपिणमिति—'एकः सन् बहुधा व्यजायत', 'एकोऽहं बहु स्याम्' इत्यादिश्रुत्या एकस्यैव परमात्मनो नानारूपत्वं कार्यवैचित्र्याय, कारणवैचित्र्यस्यैव कार्यवैचित्र्यप्रयोजकत्वात्।

ननु गौरीरमणस्य रूपमिव रूपं यस्येति व्यधिकरणबहुव्रीहिणा गौरीरमणरूपमिति वक्तव्ये एकयैव वृत्त्या निर्वाहे वृत्तिद्वयादिकरणमनुचितमिति लाघवमूलक 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इति न्यायात्। अत्र कर्मधारयपदं वृत्तेरुपलक्षणम्, गौरवस्यान्यत्रापि सम्भवात्। षष्ठीतत्पुरुषाद् गौरीरमणरूपशब्दान्मत्वर्थे इनिर्न स्यादिति चेन्न, 'प्रत्ययस्थात्कात्' इति सूत्रे नास्ति सुप् यस्मादिति बहुव्रीहिणा 'असुपः' इति वक्तव्ये न सुप् असुबिति नञ्तत्पुरुषं कृत्वा मतुपि 'असुब्वतः' इति भाष्यप्रयोगेण तस्य न्यायस्यानित्यत्वज्ञापनेनादोषात्। किञ्च, गौरीरमणं रूपयतीति विग्रहे ण्यन्ताद्रूपधातोः कर्त्तरि णिनिप्रत्यये तस्साधुत्वौचित्यात्।

यत्तु कान्तिकाराः—रसादिषु रस-रूप-गन्धादिशब्दानां पाठोऽन्यमत्वर्थीयनिवृत्त्यर्थं इति 'रसादिभ्यश्च' (अ० ५ पा० २ सू० ९५) इति मतुपा बाधादिनेरत्रासाधुत्वमिति तन्न, 'रसादिभ्यश्च' इत्यत्र 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इत्यनेन तदन्तविधेर्निषेधाद् गौरीरमणरूपशब्दादिनिप्रत्यये बाधकाभावात्। अत एव 'शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे' इत्यादि सङ्गच्छते। णिनिप्रत्ययेन साधुत्वन्तु न युक्तम्, तत्रापि समासस्य कृद्वृत्तेश्च सत्त्वेन 'न कर्मधारयात्' इति न्यायविरोधस्य सत्त्वादिति पञ्चोलिनः।

ननु कथं विष्णोर्गौरीरमणरूपत्वम्, तयोर्भेदस्य सर्वलोकतन्त्रप्रसिद्धत्वादिति चेन्न, 'एकोऽहं बहु स्याम्',

---

दर्पणव्याख्या

इदाप्रयोगेऽपि गम्यमानतदर्थसामानाधिकरण्यस्य एकार्थकर्तरि सत्त्वाद् वर्तमानक्रियाद्योतकलडुत्तमपुरुषः। 'अस्मद्युत्तमः' (पा० सू० १-४-१०७) इत्यत्र पूर्वसूत्रात् स्थानिनीत्यस्यानुवृत्तेः। स्तुतिश्चोत्कृष्टगुणवत्त्वप्रकारकबोधानुकूलो व्यापारः। स एव च प्रकृतधात्वर्थः। बोधरूपधात्वर्थफलाश्रयत्वाल्लक्ष्मीरमणस्य कर्मता। एवञ्च वैयाकरणमते प्रकृते श्रीसहितलक्ष्मीरमणाश्रयकोत्कृष्टगुणवत्त्वप्रकारकबोधानुकूलो मदभिन्नाश्रयको वर्त्तमानशब्दप्रयोगरूपो व्यापार इति वाक्यार्थ। नन्वेतच्छास्त्रप्रवर्तकत्वेन शिवस्याभ्यर्हिततरत्वात्तत्स्तुत्यात्मकमङ्गलमपि कुतो नाचरितमत आह—ॐ गौरीरमणरूपिणमिति ॐ। स्वरूपपररूपपदेन गौरीरमणपदस्य षष्ठीसमासस्ततोऽदन्तत्वनियन्धनो मत्वर्थीय इनिः। गौरीरमणो रूपं स्वरूपं यस्येति षष्ठ्यर्थबहुव्रीहिणोक्तार्थलाभेऽपि लाघवमूलक-'न कर्मधारयाद्' इति न्यायस्य "प्रत्ययस्थात्" (पा० सू० ७-३-४४) इति सूत्रे "असुब्वत." इति प्रयोगमुदाहरता भाष्यकृताऽनादृतत्वान्न मत्वर्थीयानुपपत्तिः। दृश्यते चेदृशस्थले प्रयोगद्वैविध्यम्—

शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे। इत्यादि।

तथाच तदभिन्नमित्यर्थं। प्रमाणं चात्रोक्तपुराणवाक्यमेव। एवञ्च कार्यवैचित्र्यस्य कारणवैचित्र्यनियम्यत्व

## प्रभा

'एकः सन् बहुधा व्यजायत' इत्यादिश्रुत्या एकस्यैव परमात्मनः सृष्ट्यादिविभिन्नकार्यसम्पत्तयेऽनेकरूप-
परिग्रहात्। रमणशब्दप्रयोगेण महेष्टादीश्वरादिष्टलाभः सूचितः।

नौमीति—णुधात्वर्थश्च स्वनिष्ठापकर्षनिरूपितोत्कर्षविशिष्टज्ञानानुकूलो व्यापारः। ज्ञाने उत्कर्षवैशिष्ट्यञ्च स्व-स्वनिष्ठप्रकारतानिरूपकत्व-स्वप्रकारकज्ञानीयविशेष्यताश्रयसमवेतत्वाभ्याम्। स्वमुत्कर्षः। एवञ्च 'चैत्रो मैत्रं नौति' इत्यत्राञ्जलिकरणनौमीत्यादिशब्दोच्चारणरूपव्यापारेण 'एतदपेक्षया अहमुत्कृष्टः' इति मैत्रस्य ज्ञानं जातम्। तच्च ज्ञानमुत्कर्षविशिष्टम्, उत्कर्षाश्रयोऽहमित्यत्रोत्कर्षस्य प्रकारीभूतत्वात्। तथाच उत्कर्षनिष्ठ-प्रकारतानिरूपकत्वं मैत्रीयज्ञाने जातम्। द्वितीयसम्बन्धघटकज्ञानञ्च नतिकर्तुर्ग्राह्यम्। तच्च 'मदपेक्षया मैत्र उत्कृष्टः' इत्याकारकम्। तज्ज्ञानीयविशेष्यताश्रयो मैत्र इति मैत्रीयज्ञाने स्वप्रकारकचैत्रज्ञानीयविशेष्यताश्रय समवेतत्वमप्यस्तीत्युभयसम्बन्धेन मैत्रज्ञाने उत्कर्षवैशिष्ट्यमुपपन्नम्। तेन 'मैत्रं नमति चैत्रे' तत्र च विष्णु-मित्रस्योत्कर्षप्रकारकबोधेऽपि न 'विष्णुमित्रं नमति' इति प्रयोगः, 'मदपेक्षयोत्कृष्टो मैत्रः' इति चैत्रज्ञानीय-विशेष्यताश्रयत्वस्य मैत्रे एव सत्त्वात्। स्वशब्दार्थश्चात्र नतिकर्ता। उत्कर्षविशिष्टज्ञानञ्च नतिकर्मणो ग्राह्यम्। तच्च 'नतिकर्त्रपेक्षया अहमुत्कृष्टः' इत्याकारकम्। समवायसम्बन्धेन तादृशज्ञानरूपफलाश्रयत्वात् कर्मत्वम्। व्यापारश्चाञ्जलिकरणादिरूपः, 'नौमि' इत्यादिशब्दरूपश्च।

वस्तुतस्तु नायं णुधात्वर्थः, ईश्वरपित्रादिषु तादृशोत्कर्षबोधस्य स्वत एव सत्त्वेन तद्बोधनानुकूल-व्यापारस्य वैयर्थ्यापत्तेः, नमस्कारत्वस्य मङ्गलत्वव्याप्यतया व्याप्यसत्त्वे व्यापकसत्ताया आवश्यकतया स्वा-भीष्टार्थसिद्धिप्रतिबन्धकविघ्नध्वंसजनकतावच्छेदकधर्मविशेषरूपमङ्गलत्वस्य पूर्वोक्तव्यापारेऽसत्त्वेन तद्-व्यापकत्वानापत्तेश्च। अतः स्वाभीष्टसाधकाशीर्वचनानुकूलव्यापार एव णुधात्वर्थः। स च व्यापारः करशिरः-संयोगादिरूपः, नमस्करोमीत्यादिशब्दरूपश्चेति पर्यवसितः।

स्फोटरूपमिति—पूर्वोक्तोत्कर्षमेवाह—स्फोटरूपमित्यादिना। एतच्च भगवतो जगतश्च विशेषणम्। आद्ये स्फुटत्यर्थो जगद्रूपो यस्मात्स स्फोटः, बाहुलकादपादाने घञ्। शब्दात्मकं ब्रह्म स्फोटो रूपं स्वरूपं यस्य तमित्यर्थः। यद्वा स्फुटति बोधविषयो भवत्यर्थोऽस्मादिति स्फोटः=शब्दः। रूप्यते=ज्ञायते इति रूपोऽर्थः,

## दर्पणव्याख्या

जगदुत्पत्त्यादिकार्यवैचित्र्योपपत्तये तत्तद्गुणप्रधानमूर्तिपरिग्रहो भगवतो न पारमार्थिको भेद इति स्तुतिकर्मता शिवस्य नानुपपन्नेति भावः। उत्कृष्टगुणवत्त्वमेवाविष्करोति ※ यत इति ※ वेदान्तिमते मायाशबलस्य ब्रह्मणो जगदुपादानत्वात् "जनिकर्तुः" (पा० सू० १-४-३०) इत्युपादानहेतावपादानसंज्ञानिबन्धना पञ्चमी। 'गुण' इत्युक्तेः "विभाषा" (पा० सू० २-३-२५) इत्यस्य न प्रसक्तिः। तथाच यस्मादुपादानहेतोरित्यर्थः। सर्वं जगत् स्फोटरूपं विवर्तत इति योजना। स्फुटत्यभिव्यक्तीभवत्यर्थोऽस्मादिति स्फोटो नामात्मकः शब्दः। बाहुलकादपादाने घञ्, रूप्यते = निरूप्यते इति रूपमर्थः, तयोः समाहारद्वन्द्वे नपुंसकैकवचनान्तम्। वाच्यवाचकस्वरूपमिति तदर्थः। "नामरूपे व्याकरवाणि" (छान्दोग्ये ६।३।२) इति श्रुतेः ※ एतत् ※ अत्यन्तसान्निध्येन बुद्ध्या निर्दिश्यमानम् ※ विवर्तते ※ उत्पद्यत इत्यर्थः, धातोरुपसृष्टत्वात्। ननु नामरूपात्मकस्य "सदेव सोम्येदमग्र आसीत्" (छान्दोग्ये ६-२-१) इति श्रुत्या सनातनत्वबोधनात् कथमुत्पत्तिरित्यस्वरसमत आह ※ जगदिति ※ "वर्तमाने पृषत्" (उणादि सू० पा० २ सू० २५०) इति निपातनात्साधु। तथाच गच्छति = तिरोधत्ते इति व्युत्पत्त्या तिरोधानं उक्तं यत्तिरोधत्ते तदाविर्भवतीति नियमेनाविर्भावस्य

प्रभा

स्फोटश्च रूपञ्चानयोः समाहारः स्फोटरूपं शब्दार्थस्वरूपमित्यर्थः। शब्दार्थरूपस्य जगत उपादानकारणस्यापि शब्दार्थरूपत्वौचित्यात्। अन्त्येऽप्युक्तप्रकारेण शब्दात्मकमर्थात्मकञ्च जगदित्यर्थः, जगतो नामार्थरूपत्वात्, 'नामरूपे व्याकरवाणि' इति श्रुतेः। नामात्मकमर्थात्मकञ्च जगत्प्रकाशयानीति तदर्थः।

यत इति—वेदान्तिनये मायोपाधिकस्यैव परमात्मनो जगदुपादानत्वात्। यत इत्यस्य अनाद्युपादानत्वे सति ज्ञान ( ब्रह्मज्ञान ) निवर्त्याऽज्ञानरूपा माया तच्छबलिताद् ब्रह्मण इत्यर्थः। 'जनिकर्तुः प्रकृतिः' ( अ० १ पा० ४ सू० ३० ) इत्यपादानत्वात् पञ्चम्यन्तात्तसिल्। ब्रह्मण उपादानकारणत्वञ्च 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इत्यादिश्रुत्या बोधितम्। ब्रह्मणि स्थिति-लयकारणत्वे अपि अतः श्रुत्या लब्धे। अत्र 'आत्मन आकाशः सम्भूत आकाशाद्वायुः' इति श्रुतिरपि मानम्। यद्वा यत इत्यस्य यस्मिन्नित्यर्थः, आद्यादित्वात्तसिः। न्यायादिनये यत इति निमित्तहेतौ। 'विभाषा' इति योगविभागादगुणत्वेऽपि पञ्चमी। निमित्तकारणत्वे प्रमाणन्तु 'द्यावा भूमिं जनयन् देव एक एव आस्ते विश्वस्य कर्ता भुवनस्य गोप्ता' इत्यादिश्रुतिः। न चोपादाननिमित्तकारणत्वबोधकश्रुत्योः परस्परं विरोधः, जगतो विवर्तत्वे एकत्रोपादानत्व-निमित्तत्वयोः सत्त्वे बाधकाभावात्। सर्वमिति—स्थावर-जङ्गमात्मकमित्यर्थः। एतदिति–बुद्ध्या गोचरीक्रियमाणम्। जगदिति ननु 'सदेव सोम्येदमग्र आसीत्' इति श्रुत्या प्रपञ्चस्य नित्यता प्रतीयते तत्कथं परमात्मन उपादानत्वं निमित्तत्वं वेत्यत आह—जगदिति—गच्छति कारणे लीयते इति व्युत्पत्त्या विनाशित्वप्रतीत्या यद्विनाशि तज्जन्यमिति नियमेन जगतो जन्यत्वे बाधाभावात्। न च 'सदेव सोम्येदमग्र आसीत्' इति श्रुतिविरोधः, सत्तामात्रत्वेन नित्यत्वस्य नामादिविशिष्टत्वेनानित्यत्वस्य च स्वीकारेणादोषात्। विवर्तते—वेदान्तिमते रज्जूरगवद् जगतो ब्रह्मरूपत्वे विवर्तते इत्यस्यान्यथा प्रतीयत इत्यर्थः। यथा रज्ज्वां सर्पस्य रज्जुसत्तातिरिक्तसत्ता नास्ति तथा प्रपञ्चस्यापि ब्रह्मसत्ताऽतिरिक्तसत्ता नास्ति। यावद् रज्जुर्न प्रतीयते तावत्सर्पः प्रतीयते, एवं यावद् ब्रह्म न प्रतीयते तावत्प्रपञ्चः प्रतीयते। एवञ्च अतात्त्विकोऽ-

दर्पणव्याख्या

ऽभावस्य एवात्रोपसङ्ग्रहार्थं। एवञ्च सर्वेनैतस्य सनातनत्वेऽपि नामत्वादिनाऽऽविर्भावाद्यभ्युपगमान्नोक्तश्रुतिविरोधो नापि "तस्माद्वा एतस्मादात्मन आकाश सम्भूत." ( तैत्तिरीयके २।१ ) इत्याद्युत्पत्तिबोधकतद्विरोध। यत्किञ्चिन्नामरूपात्मकस्यान्यतोऽपि सम्भवादाह ॐ सर्वमिति ॐ यावदर्थकम्। उत्पत्तिरुपलक्षणम्—अवनादेः। तेन जगत्कर्तृत्वादिरूपोत्कृष्टधर्मस्य स्तुत्यताऽवच्छेदकस्य लाभ। अत्र च "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति" ( तैत्तिरीयके ३।१ ) इत्याद्या श्रुतय प्रमाणम्।

मतान्तरे यत इति पञ्चमी निमित्तहेतुतायाम्। व्युपसृष्टवृतुधातोराद्यक्षणसम्बन्धरूपोत्पत्तिरर्थ.। ननु सर्वान्तर्गतवियदाद्यात्मकपदार्थस्यानादितया कथमुत्पत्तिमत्त्वमत आह ॐ जगदिति ॐ स्थावर-जङ्गमात्मकमित्यर्थः। तथाच गच्छति = नश्यतीति व्युत्पत्त्या विनाशित्वे बोधिते विनाशिभावस्य जन्यत्वनियमेन तस्योत्पत्तिर्न विरुद्धेति भाव। एतत्कल्पे स्फोटपदं शाब्दानुमानप्रतीतिपरम्। शाब्दं रूपं यस्येति व्युत्पत्त्या स्फोटरूपमिति भगवतो विशेषणं बोध्यम्। शेषं पूर्ववत्। यद्वा स्तुत्यताऽवच्छेदकरूपं प्रदर्शयितुं विशिनष्टि ॐ स्फोटरूपमिति ॐ वक्ष्यमाणव्युत्पत्त्या समस्तार्थप्रकाशकस्वरूपमित्यर्थ। तदुपपादयन्नेव स्तुत्यताऽवच्छेदकान्तरमपि दर्शयति ॐ यत इति ॐ यस्मादुपादानादिति सार्वविभक्तिकस्तसिना यस्मिन्नधिष्ठाने इति वाऽर्थ। विवर्तश्चानात्त्विकोऽन्यथाभाव.। अपरित्यक्तपूर्वरूपस्य रूपान्तरप्रकारकप्रतीतिविषयत्वमिति यावत्। जगच्छब्दश्च रूढ्या नामरूपपर। तथाच यस्मिन्नधिष्ठाने एतस्मिन् जगद् भूतेन्द्रियादि तत्तद्रूपेण प्रतिभातीत्यर्थः।

अशेषफलदातारं भवाब्धितरणे तरिम् ।
शेषाशेषार्थलाभार्थं प्रार्थये शेषभूषणम् ॥ २ ॥

प्रभा

न्यथाभावो विवर्तः, अत्यक्तपूर्वरूपस्य रूपान्तरप्रकारकप्रतीतिविषयत्वमित्यर्थः । न्यायनये तु विवर्तते इत्यस्य उत्पद्यते इत्यर्थः । अस्य सर्वं कार्यरूपं जगदिति शेषः, तन्मते आकाशादीनां नित्यत्वात् । साङ्ख्यमते आविर्भवतीत्यर्थः, तन्मते सर्वेषां नित्यत्वेन उत्पत्ति-विनाशयोराविर्भावतिरोभावरूपत्वात् । उत्पत्तिश्चाद्यक्षणसम्बन्धः, क्षणे आद्यत्वञ्च-तत्सम्बन्धप्रागभावानधिकरणत्वे सति तत्सम्बन्धाधिकरणध्वंसानधिकरणत्वम् ॥ १ ॥

मुक्तिसाधनज्ञानविषयीभूतस्वरूपत्वेन वर्णयन् व्याकरणसिद्धान्तज्ञानाय प्रत्यक्षीकृतनिखिलशब्दसाधुत्वासाधुत्वकशेषभूषणं व्याकरणमूलभूतचतुर्दशसूत्रोपदेशकं भगवन्तं शिवं प्रार्थयते—अशेषेति—यदुद्दिश्य प्रवर्तते तत्फलम् । अशेषाणि सर्वाणि फलानि तेषां दातारमिति विग्रहे कर्मधारयस्य शेषषष्ठ्या तत्पुरुषः । अत्र दातृशब्दस्तृन्नन्तस्तृजन्तो वा । न च तृन्नन्ते 'न लोकाव्यय' ( अ० २ पा० ३ सू० ६९ ) इति षष्ठीनिषेधस्तृजन्ते च 'तृजकाभ्याम्' ( अ० २ पा० २ सू० १५ ) इति समासनिषेधः स्यादिति वाच्यम्, कारकषष्ठ्यामेव तयोः प्रवृत्तेः । अत एव 'जनिकर्तुः' इति 'तत्प्रयोजको हेतुश्च' इत्यादिनिर्देशाः सङ्गच्छन्ते । एतेन देवान्तरादस्योत्कर्षः सूचितः ।

भवाब्धीति—अशेषफलेति विशेषणेन मुक्तिरूपफलकुक्षीकृतत्वादेतद्वैयर्थ्यन्तु नाशङ्कनीयम्, अपवर्गफलदातृत्वस्यानन्यसाधारणत्वद्योतनाय तत्सार्थक्यात् । कामक्रोधादिषड्वर्गमकराक्रान्तत्वेन दुस्तरत्वाद् भव एवाब्धिरिति रूपकम् । यद्वा भवोऽब्धिरिवेति उपमितसमासः । तस्य तरणम्=एकस्मात्तटात्परतीरगमनम् । भवाब्धेः परं तीरमपवर्गरूपम्, तत्प्राप्तिरेव तरणम् । यद्वा भवाब्धेस्तरणम्=नाशः, वेदान्तिमते अपवर्गश्च विद्याविरुद्धा भावरूपा याऽविद्या तन्निवृत्तिकालिकस्वरूपप्राप्तिः । न च अविद्या ( अज्ञान ) निवृत्तेर्ब्रह्मरूपाधिष्ठानानतिरिक्ततया स्वरूपस्यापि सिद्धतया च तयोः साध्यत्वानुपपत्तिः । तद्विषयकवृत्तेः साध्यतया मुक्तावपि साध्यत्वोपचारात्, योगक्षेमसाधारण्याः साध्यतायाः सम्भवाच्च ।

किञ्च, सिद्धस्यैव ब्रह्मरूपमोक्षस्यासिद्धत्वभ्रमेण तत्तज्ज्ञानरूपतत्साधने प्रवृत्त्युपपत्तेः । यथा-प्राप्तप्राप्तिपरिहृतपरिहारौ । तथाहि—हस्तगतविस्मृतसुवर्णादौ 'तव हस्ते सुवर्णम्' इति रज्जौ सर्पत्वभ्रमवतः 'नायं सर्पः' इति चाऽऽप्तवाक्यात्प्राप्तस्यैव प्राप्तिः परिहृतस्यैव सर्पत्वस्य परिहारस्तथा मुक्तावपि ।

दर्पणव्याख्या

"नेह नानाऽस्ति" ( काठके २।४।११ ) इति श्रुत्या बोधितबाधस्यापि जगतः प्रतिभासे अधिष्ठानसत्ताया एव नियामकत्वात् समस्तार्थप्रकाशकत्वोपपत्तिरप्रच्युतस्वरूपस्यैव ब्रह्मणो जगद्रूपेण विवर्तनादविकारित्वरूपोत्कृष्टधर्मावगतिश्च । अत्र च "तमेव भान्तमनुभाति सर्वम्" ( काठके २।५।१५, मुण्डके २।२।१० ) इत्याद्याः कूटस्थस्वरूपप्रतिपादिकाश्च श्रुतयः प्रमाणत्वेनानुसन्धेया इति भावः । अत्र भगवद्विषयकरतिभावस्य हेत्वलङ्कारोऽङ्गम् ॥ १ ॥

जगदुपादानत्वेन स्तुत्वा अपवर्गसाधनज्ञानविषयत्वेनैतच्छास्त्रव्याख्यातृशेषभूषणत्वेन च सुवन्तेनैव समस्तसिद्धान्तप्रतिपत्तये प्रार्थयते ❀ अशेषेति ❀ । फलं प्रवृत्त्युद्देश्यम् । स्वर्गादियत्किञ्चित्फलदातृत्वस्य देवान्तरसाधारण्यादाह ❀ अशेषेति ❀ तथाचापवर्गरूपफलस्याप्यशेषपदेन कुक्षीकृतत्वात् तद्दातृत्वस्यानन्यसाधारण्यात् प्रार्थ्यताऽवच्छेदकधर्मलाभः । तदेव विशदयति ❀ भवाब्धीति ❀ भव एवाब्धिरिति रूपकम्, अन्धीयग्राहादिसदृशकामलोभाद्याक्रान्त-

प्रभा

स्फोटश्च रूपश्चानयोः समाहारः स्फोटरूपं शब्दार्थस्वरूपमित्यर्थः । शब्दार्थरूपस्य जगत उपादानकारणस्यापि शब्दार्थरूपत्वौचित्यात् । अन्त्येऽप्युक्तप्रकारेण शब्दात्मकमर्थात्मकञ्च जगदित्यर्थः, जगतो नामार्थरूपत्वात्, 'नामरूपे व्याकरवाणि' इति श्रुतेः । नामात्मकमर्थात्मकञ्च जगत्प्रकाशयानीति तदर्थः ।

यत इति—वेदान्तिनये मायोपाधिकस्यैव परमात्मनो जगदुपादानत्वात् । यत इत्यस्य अनाद्युपादानत्वे सति ज्ञान (ब्रह्मज्ञान) निवर्त्योऽज्ञानरूपा माया तच्छबलिताद् ब्रह्मण इत्यर्थः । 'जनिकर्तुः प्रकृतिः' (अ० १ पा० ४ सू० ३०) इत्यपादानत्वात् पञ्चम्यन्तात्तसिल् । ब्रह्मण उपादानकारणत्वञ्च 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इत्यादिश्रुत्या बोधितम् । ब्रह्मणि स्थिति-लयकारणत्वे अपि अतः श्रुत्या लब्धे । अत्र 'आत्मन आकाशः सम्भूत आकाशाद्वायुः' इति श्रुतिरपि मानम् । यद्वा यत इत्यस्य यस्मिन्नित्यर्थः, आद्यादित्वात्तसिः । न्यायादिनये यत इति निमित्तहेतौ । 'विभाषा' इति योगविभागाद्गुणत्वेऽपि पञ्चमी । निमित्तकारणत्वे प्रमाणन्तु 'द्यावा भूमिं जनयन् देव एक एव आस्ते विश्वस्य कर्ता भुवनस्य गोप्ता', इत्यादिश्रुतिः । न चोपादाननिमित्तकारणत्वबोधकश्रुत्योः परस्परं विरोधः, जगतो विवर्तत्वे एकत्रोपादानत्व-निमित्तत्वयोः सत्त्वे बाधकाभावात् । सर्वमिति—स्थावर-जङ्गमात्मकमित्यर्थः । एतदिति-बुद्ध्या गोचरीक्रियमाणम् । जगदिति ननु 'सदेव सोम्येदमग्र आसीत्' इति श्रुत्या प्रपञ्चस्य नित्यता प्रतीयते तत्कथं परमात्मन उपादानत्वं निमित्तत्वं वेत्यत आह—जगदिति—गच्छति कारणे लीयते इति व्युत्पत्त्या विनाशित्वप्रतीत्या यद्विनाशि तज्जन्यमिति नियमेन जगतो जन्यत्वे बाधाभावात् । न च 'सदेव सोम्येदमग्र आसीत्' इति श्रुतिविरोधः, सत्तामात्रत्वेन नित्यत्वस्य नामादिविशिष्टत्वेनानित्यत्वस्य च स्वीकारेणादोषात् । विवर्तत इति—वेदान्तिमते रज्जूरगवद् जगतो ब्रह्मरूपत्वे विवर्तते इत्यस्यान्यथा प्रतीयत इत्यर्थः । यथा रज्ज्वां सर्पस्य रज्जुसत्तातिरिक्तसत्ता नास्ति तथा प्रपञ्चस्यापि ब्रह्मसत्ताऽतिरिक्तसत्ता नास्ति । यावद् रज्जुर्न प्रतीयते तावत्सर्पः प्रतीयते, एवं यावद् ब्रह्म न प्रतीयते तावत्प्रपञ्चः प्रतीयते । एवञ्च अतात्त्विकोऽ-

दर्पणव्याख्या

ऽवभास इत्यर्थः पर्यवसितार्थः । एवञ्च जगतोऽनित्यस्य सनातनत्वेऽपि नामरूपादिनाऽऽविर्भावाद्युपगमात् तत्श्रुतिविरोधो नापि "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" (तैत्तिरीयके २।१) इत्याद्युत्पत्तिबोधकश्रुतिविरोधः । यत्किञ्चिन्नामरूपात्मकस्यान्यतोऽपि सम्भवादाह ❀ सर्वमिति ❀ यावदर्थकम् । उपलक्षणम्—अनन्तादेः । तेन जगत्कर्तृत्वादिरूपोत्कृष्टधर्मस्य व्यापकतावच्छेदकस्य लाभः । अत्र च "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति" (तैत्तिरीयके ३।१) इत्याद्याः श्रुतयः प्रमाणम् ।

मतान्तरे यत इति पञ्चमी निमित्तहेतुत्वाख्याम् । व्युत्पत्तिहेतुपातोपादानसम्बन्धरूपोत्पत्तिरर्थः । ननु सर्वान्तर्गतविपदार्थस्यानादितया कथमुत्पत्तिरत आह ❀ जगदिति ❀ स्थावर-जङ्गमात्मकमित्यर्थः । तथाच गच्छति = नश्यतीति व्युत्पत्त्या विनाशित्वे बोधिते विनाशिभावस्य जन्यत्वनियमेन तस्योत्पत्तिर्न विरुद्धेति भावः । एतच्चैवं स्फोटरूपं शब्दानुमानगम्यमित्यर्थम् । स्फोटं रूपं यस्येति व्युत्पत्त्या स्फोटरूपमिति भगवतो विशेषणं बोध्यम् । शेषं पूर्ववत् । यद्वा व्युत्पत्त्यर्थः स्वरूपं प्रदर्शयितुं विशिनष्टि ❀ स्फोटरूपमिति ❀ वक्ष्यमाणव्युत्पत्त्या समस्तार्थप्रकाशकस्वरूपमित्यर्थः । अद्वैतवादमतेन व्युत्पत्त्यर्थः कालान्तरमपि दर्शयति ❀ यत इति ❀ यस्मादुपादानादिति मायाविशिष्टात्तेन ब्रह्माभिन्नविवर्तः इति भावः । विवर्तोपादानत्वेऽन्यथाभावः । अपरित्यक्तपूर्वरूपस्य रूपान्तरप्रकारकप्रतीतिविषयत्वमिति यावत् । तदुक्तम् अतत्त्वतोऽन्यथाप्रथा विवर्तः । तथाच यस्मिन्नधिष्ठाने भूतगणे जगद् भूतेन्द्रियादि तत्त्वरूपेण प्रतिभासत इत्यर्थः ।

अशेषफलदातारं भवाब्धितरणे तरिम् ।
शेषाशेषार्थलाभार्थी प्रार्थये शेषभूषणम् ॥ २ ॥

प्रभा

न्यथाभावो विवर्तः, अत्यक्तपूर्वरूपस्य रूपान्तरप्रकारकप्रतीतिविषयत्वमित्यर्थः । न्यायनये तु विवर्तते इत्यस्य उत्पद्यते इत्यर्थः । अस्य सर्वं कार्यरूपं जगदिति शेषः, तन्मते आकाशादीनां नित्यत्वात् । साङ्ख्यमते आविर्भवतीत्यर्थः, तन्मते सर्वेषां नित्यत्वेन उत्पत्ति-विनाशयोराविर्भावतिरोभावरूपत्वात् । उत्पत्तिश्चाद्यक्षणसम्बन्धः, क्षयो ध्वंसश्च-तत्सम्बन्धप्रागभावानधिकरणत्वे सति तत्सम्बन्धाधिकरणध्वंसानधिकरणत्वम् ॥ १ ॥

मुक्तिसाधनज्ञानविषयीभूततत्त्वरूपत्वेन वर्णयन् व्याकरणसिद्धान्तज्ञानाय प्रत्यक्षीकृतनिखिलशब्दसाधुत्वासाधुत्वकशेषभूषणं व्याकरणमूलभूतचतुर्दशसूत्रोपदेशकं भगवन्तं शिवं प्रार्थयते—अशेषेति—यमुद्दिश्य प्रवर्तते तत्फलम् । अशेषाणि सर्वाणि फलानि तेषां दातारमिति विग्रहे कर्मधारयस्य शेषपष्ठ्या तत्पुरुषः । अत्र दातृशब्दस्तृन्नन्तस्तृजन्तो वा । न च तृन्नन्ते 'न लोकाव्यय' ( अ० २ पा० ३ सू० ६९ ) इति षष्ठीनिषेधस्तृजन्ते च 'तृजकाभ्याम्' ( अ० २ पा० २ सू० १५ ) इति समासनिषेधः स्यादिति वाच्यम्, कारकषष्ठ्यामेव तयोः प्रवृत्तेः । अत एव 'जनिकर्तुः' इति 'तत्प्रयोजको हेतुश्च' इत्यादिनिर्देशाः सङ्गच्छन्ते । एतेन देवान्तरादस्योत्कर्षः सूचितः ।

भवाब्धीति—अशेषफलेति विशेषणेन मुक्तिरूपफलकुक्षीकृतत्वादेतद्वैयर्थ्यन्तु नाशङ्कनीयम्, अपवर्गफलदातृत्वस्यानन्यसाधारणत्वद्योतनाय तत्सार्थक्यात् । कामक्रोधादिषड्वर्गमकराक्रान्तत्वेन दुस्तरत्वाद् भव एवाब्धिरिति रूपकम् । यद्वा भवोऽब्धिरिवेति उपमितसमासः । तस्य तरणम्=एकस्मात्तटात्परतीरगमनम् । भवाब्धेः परं तीरमपवर्गरूपम्, तत्प्राप्तिरेव तरणम् । यद्वा भवाब्धेस्तरणम्=नाशः, वेदान्तिमते अपवर्गश्च विद्याविरुद्धा भावरूपा याऽविद्या तन्निवृत्तिकालिकस्वरूपप्राप्तिः । न च अविद्या ( अज्ञान ) निवृत्तेर्ब्रह्मरूपाधिष्ठानानतिरिक्ततया स्वरूपस्यापि सिद्धतया च तयोः साध्यत्वानुपपत्तिः । तद्विषयकवृत्तेः साध्यतया मुक्तावपि साध्यत्वोपचारात्, योगक्षेमसाधारण्याः साध्यतायाः सम्भवाच्च ।

किञ्च, सिद्धस्यैव ब्रह्मरूपमोक्षस्यासिद्धत्वभ्रमेण तत्त्वज्ञानरूपतत्साधने प्रवृत्त्युपपत्तेः । यथा—प्राप्तप्राप्तिपरिहृतपरिहारौ । तथाहि—हस्तगतविस्मृतसुवर्णादौ 'तव हस्ते सुवर्णम्' इति रज्जौ सर्पत्वभ्रमवतः 'नायं सर्पः' इति चाऽऽप्तवाक्यात्प्राप्तस्यैव प्राप्तिः परिहृतस्यैव सर्पत्वस्य परिहारस्तथा मुक्तावपि ।

दर्पणव्याख्या

"नेह नानाऽस्ति" ( काठके २।४।११ ) इति श्रुत्या बाधितत्वाभावस्यापि जगतः प्रतिभासे अधिष्ठानसत्ताया एव नियामकत्वात्, समस्तार्थप्रकाशकत्वोपपत्तिरप्रच्युतस्वरूपस्यैव ब्रह्मणो जगद्रूपेण विवर्तनादविकारित्वरूपोत्कृष्टधर्मावगतिश्च । अत्र च "तमेव भान्तमनुभाति सर्वम्" ( काठके २।५।१५, मुण्डके २।२।१० ) इत्याद्याः कूटस्थस्वरूपप्रतिपादिकाश्च श्रुतयः प्रमाणत्वेनानुसन्धेया इति भावः । अत्र भगवद्विषयकरतिभावस्य हेत्वलङ्कारोऽङ्गम् ॥ १ ॥

जगदुपादानत्वेन स्तुत्वा अपवर्गसाधनज्ञानविषयत्वेनैतच्छास्त्रव्याख्यातृशेषभूषणत्वेन च स्तुवन्नुपोक्तसमस्तसिद्धान्तप्रतिपत्तये प्रार्थयते ❀ अशेषेति ❀ । फलं प्रवृत्त्युद्देश्यम् । स्वर्गादियत्किञ्चित्फलदातृत्वस्य देवतान्तरसाधारण्यादाह ❀ अशेषेति ❀ तथाचापवर्गरूपफलस्याप्यशेषपदेन कुक्षीकृतत्वात् तद्दातृत्वस्यानन्यसाधारण्यात् माध्यन्ताऽनच्छेदकधर्मलाभः । तदेव विशदयति ❀ भवाब्धीति ❀ भव एवाब्धिरिति रूपकम्, अध्यीयमाहादिसदृशकामलोभाद्याक्रान्त-

## प्रभा

न्यायमते मुक्तिस्तु आत्यन्तिकदुःखध्वंसरूपा। ध्वंसे आत्यन्तिकत्वञ्च—स्वसमानाधिकरणदुःखासमान-
कालिकत्वरूपम्। नन्वेवं मोक्षस्य तत्त्वज्ञानसाध्यत्वानुपपत्तिरिति चेन्न, तत्त्वज्ञानेन मिथ्याज्ञानवासनानाशः,
तन्नाशाच्च विशेषणाभावविधया वासनाविशिष्टरागादिदोषनाशः, तन्नाशे च धर्माधर्मरूपायाः प्रवृत्तेरभावः,
तस्माच्च प्रारब्धकर्माधीनवर्तमानदेहान्यदेहसम्बन्धरूपजन्माभावः, तथा च भोगतत्त्वज्ञानाभ्यां प्रारब्धतद्भिन्न-
कर्मनिवृत्तिरिति जन्माभावे दुःखानुत्पादाद् आत्यन्तिकदुःखध्वंसः। नव्यनैयायिकास्तु आत्यन्तिकदुरितध्वंस
एव मोक्षः। दुःखध्वंसस्य स्वोत्तरवर्तिगुणनाश्यतया तत्त्वज्ञानानुपयोगप्रसङ्गादित्याहुः। तथाचोक्तस्वरूपे तरणे
तरिम्—तरन्त्यनयेति तरिस्तरणसाधनम्। यद्यपि तरिपदार्थघटकतरणस्य सन्निहिततरणपदेनैव लाभस्तथापि
'विशेषणवाचकपदसमवधाने विशिष्टवाचकपदानां विशेष्यमात्रपरता' इति न्यायेनात्र तरिपदस्य साधनमात्र-
परत्वम्। तथा च तरिम् = मुक्तिसाधनतत्त्वज्ञानविषयमित्यर्थः।

शेषाशेषेति—अशेषस्सम्पूर्णो योऽर्थस्सोऽशेषार्थः। शेषः = पतञ्जलिः, शेषांशत्वात्, तस्य योऽशेषोऽर्थो
वैयाकरणनिखिलसिद्धान्तस्तल्लाभाय शेषो भूषणमलङ्कारो यस्य तं शिवं शय्यात्वेन भूषणत्वाद् विष्णुं प्रार्थये=
अभीष्टसिद्धये प्रवर्तये। एतेन शेषस्य शिवाधीनत्वप्रतीत्याऽवश्यमभीष्टलाभस्तत्प्रार्थनया भविष्यतीति सूचित-
मनिच्छतोऽपि दातुं स्वाम्यनुज्ञया दानस्य लोके दृष्टत्वादवश्यमखिलवैयाकरणसिद्धान्तलाभः स्यादित्याशय-
लाभात्, 'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः' इति कुवलयानन्दलक्षितोऽत्र परिकराङ्कुरालङ्कारः॥ २॥

> वाग्देवी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा।
> भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये॥

स्पष्टोऽर्थः। इदञ्च सर्वपुस्तकेषु नोपलभ्यते। अत एव टीकान्तरे न व्याख्यातम्। अत्रैतादृशविलक्षण-
सामर्थ्योपन्यासेन दीक्षितस्य देवांशत्वसूचनद्वारा तदीयस्तुतेरभीप्सितार्थसाधकत्वं समुचितत्वञ्च सूचित-
मिति कारिका॥

---

## दर्पणव्याख्या

त्वाद् दुरवगाहत्वेन भवे समुद्रारोप। तेन च भवस्य दुस्तरत्वं व्यज्यते। तस्य तरणं पारदेशप्राप्तिस्तस्मिन्नित्यर्थः ❀ तरिम् ❀
साधनम्। यद्यपि तरन्त्यनया इति व्युत्पत्त्या तरणसाधनं तरिपदार्थस्तथाऽपि तद्घटकीभूततरणस्य सन्निहितपदेनैव लाभाद्
द्विरुक्तिर्मा भूदिति विशेष्यमात्रपरतया व्याख्यातम्। मुक्तिसाधनज्ञानविषयमिति यावत्। मुक्तिश्च वेदान्तिमतेऽज्ञाननिवृत्ति-
समकालात्स्वरूपप्राप्तिः। नन्वज्ञाननिवृत्तेरधिकरणानतिरिक्तायाः स्वरूपस्यापि च सिद्धत्वात्तद्रूपायास्तस्यास्तत्त्वज्ञानसाध्य-
त्वानुपपत्तिरिति चेन्न, परेषां प्रागभावस्येव सिद्धाया एवाज्ञाननिवृत्तेर्योगक्षेमसाधारण्याः साध्यतायाः सम्भवात्।
अधिकमन्यतोऽवधेयम्।

नैयायिकास्तु—आत्यन्तिकदुःखध्वंसो मोक्षः। ध्वंसे आत्यन्तिकत्वञ्च—स्वसमानाधिकरणदुःखासमानकालिकत्वम्।
अत्रैव तत्त्वज्ञानस्योपयोगः। विशेष्यांशस्य स्वासाधारणसामग्र्या एव सम्भवादित्यमुखाभिव्यक्तिर्वा स इत्याहुः।

❀ शेषाशेषेति ❀ कर्मधारयोत्तरपदः षष्ठीतत्पुरुषः। तस्य च लाभपदेन समासो लाभायेदमिति विग्रहे चतुर्थ्यं-
न्तलाभपदस्यार्थपदेन सः। शेषः = पतञ्जलिः, शेषांशावतारत्वात्। तथा च शेषोक्तभाष्यप्रतिपादितनिखिलसिद्धान्तज्ञानायेत्यर्थः।
❀ शेषभूषणमिति ❀ शेषोऽनन्तः, स भूषणं यस्येत्यर्थः। यतोऽस्य भूषणं शेषोऽतोऽस्य शेषोक्तसिद्धान्तलब्ध्यै प्रार्थन-
मिति साभिप्रायविशेष्योपादानात्परिकराङ्कुराभिधानोऽत्र भगवद्विषयकरत्यङ्गम्॥ २॥

पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टाभिधं
द्वैतध्वान्तनिवारणादिफलिकां पुम्भाववाग्देवताम् ।
ढुण्ढिं गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये ॥ २ ॥

प्रभा

राजाज्ञायामपि मन्त्रिणोऽनिच्छायामिष्टसिद्धेरदर्शनात्, शब्दशास्त्रे पाणिन्यादिमुनित्रयस्य प्राधान्याच तन्नतिरूपं मङ्गलमाचरन् 'मातृदेवो भव', 'पितृदेवो भव' इत्यादिश्रुत्या पित्रोरपि देवतात्वेन पितरं विघ्नध्वंसपूर्वकमङ्गलप्रदत्वेन गणेशञ्च नमन् प्रवृत्तिप्रयोजकज्ञान ( इदं मदिष्टसाधनं मत्कृतिसाध्यञ्च ) जनकज्ञानविषयेषु विषयश्चाधिकारी च सम्बन्धश्च प्रयोजनम् । विनाऽनुबन्धं ग्रन्थादौ मङ्गलं नैव शस्यते ॥ १ ॥ चतुर्षु अनुबन्धेषु सम्बन्धाधिकारिविषयप्रयोजनरूपेषु विषयज्ञानाधीनज्ञानविषयतया सम्बन्धाद्यनुबन्धेषु विषयस्य प्राधान्येन विनेयानां ग्रन्थाध्ययनप्रवृत्तये वैयाकरणसिद्धान्तरूपं विषयं प्रदर्शयन्नाह—पाणिन्यादीति—आदिना पतञ्जलिकात्यायनयोर्ग्रहणम् । पाणिन्यादिमुनीन्, अभिधीयतेऽनयेत्यभिधा = नाम 'आतश्चोपसर्गे' (३—३—१०६) इति करणेऽङ् । रङ्गोजिभट्टोऽभिधा यस्येति रङ्गोजिभट्टाभिधं पितरम्, ढुण्ढति = अन्विष्यति प्रतिबन्धकान् विनाशयितुमिति ढुण्ढिर्गणेशः । अन्वेषणार्थकाड् ढुण्ढधातोरौणादिक इनिः । तञ्च प्रणम्येत्यर्थः । विनापि चशब्दं समुच्चयो द्योत्यते । पितरं विशिनष्टि—द्वैतेति— द्वाभ्याम् = जडत्वाजडत्वविरुद्धधर्माभ्यामितो ज्ञातो यश्चैतन्यरूपस्तत्र भवं द्वैतं विषयतासम्बन्धेन वर्तमानमज्ञानं भावरूपं मिथ्याज्ञानं तदेव ध्वान्तं तमः, सत्त्वाच्छादकत्वात् । 'एकमेवाद्वितीयं ब्रह्म', 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुत्या परमार्थदशायामधिष्ठानभूतस्य ब्रह्मण एव वास्तविकत्वात् । यद्वा—द्वावित आश्रयत्वेन प्राप्त इति द्वीतो भेदः । अथवा लक्षणया द्विपदं द्वित्वपरम्, द्वित्वेऽपि समवायसम्बन्धेन द्वित्वस्यारोपेण द्वित्वस्यापि द्वित्वविशिष्टत्वात् । न च 'आदशतः संख्या संख्येये' इति कोशविरोधः, तद्वचनस्य शक्यार्थपरत्वेनादोषाद् द्वित्वविशिष्टस्यैव संख्येयत्वेन तदविरोधाच्च । यद्वा इणधातोर्भावे क्ते इतम् = ज्ञानम् , द्वयोर्विरुद्धधर्मयोरितं द्वीतं संशयात्मकं ज्ञानं तदेव ध्वान्तं तस्य निवारणादिफलं यस्यास्ताम् । आदिना मोक्षस्य सज्ज्ञानस्य च संग्रहः ।

दर्पणव्याख्या

प्रेक्षावत्प्रवृत्तये इतरग्रन्थेभ्यः स्वग्रन्थस्योत्कर्षं प्रदर्शयन्नेव वर्णनीयविषयप्रयोजनसम्बन्धाधिकारिणो मध्येऽवश्यप्रदर्शनीयविषयं दर्शयति ॥ पाणिन्यादीति ॥ पुम्भाववाग्देवतामिति पितुर्विशेषणम् । पुंसो भावो यस्या इति व्यधिकरणबहुव्रीहिपूर्वपदकः कर्मधारयो वाग्देवतापदेन । अथवा पुम्भावशब्दोऽर्शआद्यजन्तः । तथाचाऽऽविष्कृतपुंविग्रहां सरस्वतीमित्यर्थः । ॥ द्वैतध्वान्तेति ॥ द्वाभ्यां प्रकाराभ्यामितः = ज्ञातः = विरुद्धोभयधर्मप्रकारकज्ञानविषयो धर्मीति यावत् । यद्वा द्वयोर्भावो द्विता । स्वनिष्ठैकविशेष्यतानिरूपितप्रकारतासम्बन्धेन विरुद्धनानाधर्मवतो धर्मिणोऽपि भावत्वसम्भवाद् द्वितापदार्थोऽपि धर्म्येव, तत्र भवं द्वैतं संशयात्मकज्ञानम् । अथवा द्वयोरनेकस्य भावो द्विता नानात्वं तत्सम्बन्धिज्ञानं द्वैतम्, परमार्थदशायामद्वितीयस्यैव ब्रह्मणोऽङ्गीकारेण श्रुतिबाधितनानात्वावगाहन्तःकरणवृत्तिविशेषरूपमविद्यापरपर्यायं मिथ्याज्ञानम्, तदेव ध्वान्तं तमः, सत्त्वाऽऽच्छादकत्वात्तन्निवारणमेकं मुख्यं फलं यस्यास्तामित्यर्थः । अनधिकारिणां स्वाधितानामेकतरकोटिकज्ञानोत्पादकत्वेनाधिकारिणां सन्मात्रावलम्बनज्ञानप्रदत्वेन

## प्रभा

न्यायमते मुक्तिस्तु आत्यन्तिकदुःखध्वंसरूपा। ध्वंसे आत्यन्तिकत्वञ्च—स्वसमानाधिकरणदुःखासमानकालिकत्वरूपम्। नन्वेवं मोक्षस्य तत्त्वज्ञानसाध्यत्वानुपपत्तिरिति चेन्न, तत्त्वज्ञानेन मिथ्याज्ञानवासनानाशः, तन्नाशाच्च विशेषणाभावविधया वासनाविशिष्टरागादिदोषनाशः, तन्नाशे च धर्माधर्मरूपायाः प्रवृत्तेरभावः, तस्माच्च प्रारब्धकर्माधीनवर्तमानदेहान्यदेहसम्बन्धरूपजन्माभावः, तथा च भोगतत्त्वज्ञानाभ्यां प्रारब्धतद्भिन्नकर्मनिवृत्तिरिति जन्माभावे दुःखानुत्पादाद् आत्यन्तिकदुःखध्वंसः। नव्यनैयायिकास्तु आत्यन्तिकदुरितध्वंस एव मोक्षः। दुःखध्वंसस्य स्वोत्तरवर्तिगुणनाश्यतया तत्त्वज्ञानानुपयोगप्रसङ्गादित्याहुः। तथाचोक्तस्वरूपे तरणे तरिम्—तरन्त्यनयेति तरिस्तरणसाधनम्। यद्यपि तरिपदार्थघटकतरणस्य सन्निहिततरणपदेनैव लाभस्तथापि 'विशेषणवाचकपदसमवधाने विशिष्टवाचकपदानां विशेष्यमात्रपरता' इति न्यायेनात्र तरिपदस्य साधनमात्रपरत्वम्। तथा च तरिम्=मुक्तिसाधनतत्त्वज्ञानविषयमित्यर्थः।

शेषाशेषेति—अशेषः सम्पूर्णो योऽर्थस्तोऽशेषार्थः। शेषः=पतञ्जलिः, शेषांशत्वात्, तस्य योऽशेषोऽर्थो वैयाकरणनिखिलसिद्धान्तस्तल्लाभाय शेषो भूषणमलङ्कारो यस्य तं शिवं शय्यात्वेन भूषणत्वाद् विष्णुं प्रार्थये=अभीष्टसिद्धये प्रवर्तये। एतेन शेषस्य शिवाधीनत्वप्रतीत्याऽवश्यमभीष्टलाभस्तत्प्रार्थनया भविष्यतीति सूचितम्। अनिच्छवोऽपि दातुं स्वाम्यनुज्ञया दानस्य लोके दृष्टत्वादवश्यमखिलवैयाकरणसिद्धान्तलाभः स्यादित्याशयलाभात्, 'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः' इति कुवलयानन्दलक्षितोऽत्र परिकराङ्कुरालङ्कारः ॥ २ ॥

वाग्देवी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा।
भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये ॥

स्पष्टोऽर्थः। इदञ्च सर्वपुस्तकेषु नोपलभ्यते। अत एव टीकान्तरे न व्याख्यातम्। अत्रैतादृशविलक्षणसामर्थ्योपन्यासेन दीक्षितस्य देवांशत्वसूचनद्वारा तदीयस्तुतेरभीप्सितार्थसाधकत्वं समुचितत्वञ्च सूचितमिति काशिका ॥

## दर्पणव्याख्या

त्वाद् दुरवगाहत्वेन भवे तदारोपः। तेन च भवस्य दुस्तरत्वं व्यज्यते। तस्य तरणं पारदेशप्राप्तिस्तस्मिन्नित्यर्थः ❀ तरिम् ❀ साधनम्। यद्यपि तरन्त्यनया इति व्युत्पत्त्या तरणसाधनं तरिपदार्थस्तथाऽपि तद्घटकीभूततरणस्य सन्निहितपदेनैव लाभाद् द्विरुक्तिर्मा भूदिति विशेष्यमात्रपरतया व्याख्यातम्। मुक्तिसाधनज्ञानविषयमिति यावत्। मुक्तिश्च वेदान्तिमतेऽज्ञाननिवृत्तिसमकालस्वरूपप्राप्तिः। नन्वज्ञाननिवृत्तेरधिकरणानतिरिक्तायाः स्वरूपस्यापि च सिद्धत्वात्तद्रूपायास्तस्यास्तत्त्वज्ञानसाध्यत्वानुपपत्तिरिति चेन्न, परेषां प्रागभावस्येव सिद्धाया एवाज्ञाननिवृत्तेर्योगक्षेमसाधारण्याः साध्यतायाः सम्भवात्। अधिकमन्यतोऽवधेयम्।

नैयायिकास्तु—आत्यन्तिकदुःखध्वंसो मोक्षः। ध्वंसे आत्यन्तिकत्वञ्च—स्वसमानाधिकरणदुःखासमानकालिकत्वम्। अत्रैव तत्त्वज्ञानस्योपयोगः। विशेष्यांशस्य स्वासाधारणसामग्र्या एव सम्भवान्नित्यसुखाभिव्यक्तिर्वा स इत्याहुः।

❀ शेषाशेषेति ❀ कर्मधारयोत्तरपदः षष्ठीतत्पुरुषः। तस्य च लाभपदेन समासो लाभायेदमिति विग्रहे चतुर्थ्यन्तस्तादर्थ्यपदस्यार्थपदेन सः। शेषः=पतञ्जलिः, शेषांशत्वात्तस्य। तथाच शेषोक्तभाष्यप्रतिपादितनिखिलसिद्धान्तज्ञानायेत्यर्थः। ❀ शेषभूषणमिति ❀ शेषोऽनन्तः, स भूषणं यस्येत्यर्थः। यतोऽस्य भूषणं शेषोऽतोऽस्य शेषोक्तसिद्धान्तलब्ध्यै प्रार्थनमिति साभिप्रायविशेष्यस्योपादानात्परिकराङ्कुरालङ्कारो ऽत्र [illegible] ॥ २ ॥

पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टाभिधं
द्वैतध्वान्तनिवारणादिफलिकां पुम्भाववाग्देवताम् ।
ढुण्ढिं गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये ॥ ३ ॥

प्रभा

राजाज्ञायामपि मन्त्रिणोऽनिच्छायामिष्टसिद्धेरदर्शनात्, शब्दशास्त्रे पाणिन्यादिमुनित्रयस्य प्राधान्याच्च तन्नतिरूपं मङ्गलमाचरन् 'मातृदेवो भव', 'पितृदेवो भव' इत्यादिश्रुत्या पित्रोरपि देवतात्वेन पितरं विघ्नध्वंसपूर्वकमङ्गलप्रदत्वेन गणेशञ्च नमन् प्रवृत्तिप्रयोजकज्ञान ( इदं मदिष्टसाधनं मत्कृतिसाध्यञ्च ) जनकज्ञानविषयेषु विषयश्चाधिकारी च सम्बन्धश्च प्रयोजनम् । विनाऽनुबन्धं ग्रन्थादौ मङ्गलं नैव शस्यते ॥ १ ॥ चतुर्ष्वनुबन्धेषु सम्बन्धाधिकारिविषयप्रयोजनरूपेषु विषयज्ञानाधीनज्ञानविषयतया सम्बन्धाद्यनुबन्धेषु विषयस्य प्राधान्येन विनेयानां ग्रन्थाध्ययनप्रवृत्तये वैयाकरणसिद्धान्तरूपं विषयं प्रदर्शयन्नाह—पाणिन्यादीति—आदिना पतञ्जलिकात्यायनयोर्ग्रहणम् । पाणिन्यादिमुनीन्, अभिधीयतेऽनयेत्यभिधा = नाम 'आतश्चोपसर्गे' (३—३—१०६) इति करणेऽङ् । रङ्गोजिभट्टोऽभिधा यस्येति रङ्गोजिभट्टाभिधं पितरम्, ढुण्ढति = अन्विष्यति प्रतिबन्धकान् विनाशितुमिति ढुण्ढिर्गणेशः । अन्वेषणार्थकाड्ढुण्ढधातोरौणादिक इनिः । तञ्च प्रणम्येत्यर्थः । विनापि चशब्दं समुच्चयो द्योत्यते । पितरं विशिनष्टि—द्वैतेति—द्वाभ्याम् = जडत्वाजडत्वविरुद्धधर्माभ्यामितो ज्ञातो यश्चैतन्यरूपस्तत्र भवं द्वैतं विषयतासम्बन्धेन वर्तमानमज्ञानं भावरूपं मिथ्याज्ञानं तदेव ध्वान्तं तमः, तस्याच्छादकत्वात् । 'एकमेवाद्वितीयं ब्रह्म', 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुत्या परमार्थदशायामधिष्ठानभूतस्य ब्रह्मण एव तात्त्विकत्वात् । यद्वा—द्वाविव आश्रयत्वेन प्राप्त इति द्वीतो भेदः । अथवा लक्षणया द्विपदं द्वित्वपरम्, द्वित्वेऽपि समवायसम्बन्धेन द्वित्वस्यारोपेण द्वित्वस्यापि द्वित्वविशिष्टत्वात् । न च 'आदशतः संख्या संख्येये' इति कोशविरोधः, तद्वचनस्य शक्यार्थपरत्वेनादोषाद् द्वित्वविशिष्टस्यैव संख्येयत्वेन तदविरोधाच्च । यद्वा इधातोर्भावे क्ते इतम् = ज्ञानम् , द्वयोर्विरुद्धधर्मयोरितं द्वीतं संशयात्मकं ज्ञानं तदेव ध्वान्तं तस्य निवारणादिफलं यस्यास्ताम् । आदिना मोक्षस्य सज्ज्ञानस्य च संग्रहः ।

दर्पणव्याख्या

प्रेक्षावत्प्रवृत्तये इतरग्रन्थेभ्यः स्वग्रन्थस्योत्कर्षं प्रदर्शयन्नेव दर्शनीयविषयप्रयोजनसम्बन्धाधिकारिणां मध्येऽवश्यप्रदर्शनीयविषयं दर्शयति ※ पाणिन्यादीति ※ पुम्भाववाग्देवतामिति पितुर्विशेषणम् । पुंसो भावो यस्या इति व्यधिकरणबहुव्रीहिपूर्वपदकः कर्मधारयो वाग्देवतापदेन । अथवा पुम्भावशब्दोऽर्श आद्यजन्तः । तथाचाऽऽविष्कृतपुंविग्रहां सरस्वतीमित्यर्थः । ※ द्वैतध्वान्तेति ※ द्वाभ्यां प्रकाराभ्यामितः = ज्ञातः = विरुद्धोभयधर्मप्रकारकज्ञानविषयो धर्मीति यावत् । यद्वा द्वयोर्भावो द्विता । स्वनिष्ठैकविशेष्यतानिरूपितप्रकारतासम्बन्धेन विरुद्धनानाधर्मांशे धर्मिणोऽपि भावत्वसम्भवाद् द्वितापदार्थोऽपि धर्म्येव, तत्र भवं द्वैतं संशयात्मकज्ञानम् । अथवा द्वयोरनेकस्य भावो द्विता नानात्वं तत्सम्बन्धिज्ञानं द्वैतम्, परमार्थदशायामद्वितीयस्यैव ब्रह्मणोऽङ्गीकारेण श्रुतिबाधितनानात्वोपग्राह्यस्तः करणवृत्तिविशेषरूपमविद्याऽपरपर्यायं मिथ्याज्ञानम्, तदेव ध्वान्तं तमः, तत्त्वाऽऽच्छादकत्वात्तन्निवारणमेकं मुख्यं फलं यस्यास्तामित्यर्थः । अनधिकारिणां स्वाश्रितानामेकतरकोटिकज्ञानोत्पादकत्वेनाधिकारिणां सन्मात्रावलम्बनज्ञानप्रदानेन

प्रभा

यत्तु—स्वनिष्ठैकविशेष्यतानिरूपितप्रकारतासम्बन्धेन विरुद्धनानाधर्मांशे धर्मिणो ( सङ्ख्येयस्य ) ऽपि भावत्व ( प्रकृतिजन्यबोधे प्रकारीभूतत्व ) सम्भवाद् द्वीतापदार्थोऽपि धर्म्यैवेति दर्पणकारास्तच्चिन्त्यम्, प्रकृतिनिष्ठशक्तिज्ञानजन्योपस्थितौ यशक्तिभास्यसम्बन्धावच्छिन्नप्रकारताश्रयस्यैव भावपदार्थत्वात् । अन्यथा यथाकथञ्चित्प्रकारतया भासमानस्य भावपदार्थत्वे घटपदोत्तरत्वादिमत्यस्य द्रव्यत्व—गुणाद्यर्थकत्वापत्तेरिति पञ्चोलिनः । पुम्भावेति—पुंसो भाव.=पुंस्त्वम् यस्या. सा पुंभावेति व्यधिकरणबहुव्रीहुत्तर वाग्देवताशब्देन कर्मधारय । यद्वा पुम्भावशब्दोऽर्श आद्यजन्तः । अथवा पुंस्पदं लक्षणया पुंस्त्वपरम् । तथा च पुम्भावयते = प्राप्नोतीति प्राप्त्यर्थकचुरादिण्यन्तभाविधातो. 'कर्मण्यण्' इति कर्त्तरि अणि पुम्भावी सा चासौ वाग्देवता चेति कर्मधारयः । एवञ्च पुंशरीरधारिणी सरस्वती एव वज्रोजिभट्ट इति लब्धम् । ढुण्ढिमिति—प्रणम्येति पूर्वेणान्वयः । पित्रादिपश्चाद् गणेशनमस्कारस्यानौचित्याद् ढुण्ढिं गणेशावतारं पितरमित्यर्थः । मङ्गलमूचित्वेन गणेशरूपत्वम्, वैदुष्येण सरस्वतीरूपत्वं तस्येति भावः ।

प्राचीनग्रन्थैरगतार्थत्वं सूचयन्नाह—गौतमेति—गौतमो ब्रह्मपुत्रस्तस्य गोत्रापत्यं गौतममुनिर्न्यायसूत्रकर्त्ता । जैमिनि' = पूर्वमीमांसासूत्रकर्त्ता व्यासशिष्य । गौतमजैमिन्योरिमानि गौतमजैमिनीयानि यानि वचनानि न्यायसूत्रमीमांसासूत्ररूपाणि तेषां व्याख्यातार, न्यायसूत्रभाष्यकर्त्ता वात्स्यायन', तदुत्तरव्याख्यातारश्चानेके प्राचीननैयायिका नव्यनैयायिकाश्च । मीमांसासूत्रभाष्यकर्त्ता शबरस्वामी, तदुत्तरव्याख्यायकाश्च कुमारिलभट्टप्रभाकरादयः । अत्र 'तृजकाभ्याम्' (२–२–१५) इति समासनिषेधस्तु 'अशेषफलदातारम्' इत्यत्रेव परिहरणीय । तैर्दूषितान् = दोषवत्त्वेन प्रदर्शितान् । एतेन गौतमजैमिनीयसूत्रसम्मता एव व्याकरणसिद्धान्ता न तु तद्विरुद्धा इति ध्वनितम् । कतिचिद्व्याकरणसिद्धान्तान् उपपत्तिभि. साधकप्रमाणरूपयुक्तिभि. मकदये = समर्थये । तेषां व्याख्यातॄणां दोषाधायक वचो दूषये = बाधकयुक्तिभिर्निराचक्षे ।

---

दर्पणव्याख्या

पुम्भावबाग्देवतायास्तन्निवर्तकत्वमिति भाव । ❀ ढुण्ढिम् ❀ गणपतिम् । प्रणम्येत्यनुषज्यते । ❀ सिद्धान्तानिति ❀ भाष्यकारादिनिर्णीतार्थां सिद्धान्तास्तानित्यर्थ । ❀ उपपत्तिभिः ❀ साधकप्रमाणोपन्यासरूपाभिर्युक्तिभिरित्यर्थ । ❀ दूषये ❀ उपपत्तिभिरेव बाधकप्रमाणोपन्यासरूपाभिरित्यर्थ ।

एतेनान्यग्रन्थेभ्य स्वग्रन्थस्योत्कृष्टत्वं ध्वनितम् । तथाच वैयाकरणसिद्धान्तोऽत्र विषय प्रदर्शितस्तेनैव तज्ज्ञानं प्रयोजन प्रतिपाद्यप्रतिपादकभाव सम्बन्ध सिद्धान्तजिज्ञासुरधिकारीति प्रयोऽन्येऽपि दर्शितप्राया इति भाव । ग्रन्थादावनुष्ठितस्य मङ्गलस्य तन्निबन्धनस्य च प्रयोजनमाह ❀ प्रारिप्सितेत्यादिना ❀ समाप्तये इति विहाय 'प्रतिबन्धकोपशमनाय' इत्युक्त्या अलौकिकाविगीतशिष्टाचारानुमितफलमङ्गलस्य विघ्नध्वंस एव फलम्, जन्मान्तरीयसमाप्तिमुद्दिश्य शिष्टाना मङ्गलानुष्ठानान्मङ्गलसमाप्त्यो शरीरानिष्ठप्रत्यासत्त्यैव कार्यकारणभावस्य कल्पनीयतया तस्य च नास्तिकसमाप्तौ व्यभिचारेण समाप्तेस्तत्त्वासम्भवात्, किन्तु कार्यमात्रं प्रति प्रतिबन्धकाभावस्य हेतुतया दुरितरूपप्रतिबन्धकनिरासे एव मङ्गलस्योपयोगो न तु समाप्तावपि, विघ्नध्वंसेनान्यथासिद्धत्वात्, समाप्तिस्त्वन्यत्र क्लृप्तकारणकलापादिति सूच्यते । ❀ फणिस्मरणेति ❀ फणी = शेष । "शेषाख्यं धाम मामकम्" इति भगवदुक्तेस्तत्स्मरणस्य विघ्ननिवारकत्वात् । मङ्गलस्य नतिस्तुत्यादिभेदेन नानात्वमिति सूचयितुं स्मरणेत्युक्तम् । ❀ प्रतिजानीत इति ❀ प्रतिज्ञाफलं तु शिष्यावधानं बोध्यम् ।

नत्वा गणेशपादाब्जं गुरूंस्तथ सरस्वतीम् ।
श्रीकौण्डभट्टः कुरुतेऽहं वैयाकरणभूषणम् ॥*

प्रारिप्सितप्रतिबन्धकोपशमनाय कृतं श्रीफणिस्मरणरूपं मङ्गलं शिष्यशिक्षार्थं निबध्नन् चिकीर्षितं प्रतिजानीते—

फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः ।
तत्र निर्णीत एवाऽर्थः सङ्क्षेपेणेह कथ्यते ॥ १ ॥

उद्धृत इति । अत्र 'अस्माभिः' इति शेषः । 'भाष्याब्धेः शब्दकौस्तुभ उद्धृतः' इत्यु-

प्रभा

एतेन वैयाकरणसिद्धान्ता विषयाः, तज्ज्ञानं प्रयोजनम्, तज्जिज्ञासुरधीतकौमुद्यादिग्रन्थोऽधिकारी, साध्य-साधनसम्बन्धश्चेत्यनुबन्धचतुष्टयं सूचितम् ।

स्वकीयग्रन्थनुष्ठचये मङ्गलस्य दार्ढ्याय च गणेशादिनमस्काररूपं मङ्गलमाचरयति—नत्वेति । गणेशेति—गणानाम्=शिवगणानाम्=प्रमथादीनामीशः=नियन्तेत्यर्थः । यद्वा, गणानाम्=विघ्नगणानाम् ईम्=लक्ष्मीं स्यति=तनूकरोतीति गणेशः, 'आतोऽनुपसर्गे' (३–२–३) इति कः । यद्वा, गणानाम्=भक्तगणानाम् इम्=कामादिदुःखं स्यतीति गणेशः । इपदं क्रोधादिषड्वर्गानामुपलक्षणम् । गुरूनिति—गृणाति=उपदिशति रहस्यभूतमर्थमिति गुरुः । 'कृग्रोरुच्च' इत्यौणादिकेन कुप्रत्यये ऋवर्णस्योत्वे च साधुः ।

सरस्वतीमिति—सरः=उदकं प्रशस्तं तदस्त्यस्या इति सरस्वती । यद्वा, सरः=सरोवरम्=अमृतसरस्तद-स्त्यस्या आश्रयत्वेनेति सरस्वती तां नत्वेत्यर्थः । कौण्डभट्टेति—न च

आत्मनाम गुरोर्नाम नामाऽतिकृपणस्य च ।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥ १ ॥

इतिस्मृतिविरोधात् स्वनामनिर्देशोऽयुक्त इति वाच्यम्, तस्य वैरस्योत्पत्तिविषयकत्वपरत्वेन लेखने तद्-विरोधात् । न चैवमपि लोकप्रत्ययाय 'रामो द्विर्नाभिभाषते' इति स्वदोषारणपररामायणनिर्णयो दुर्वार इति वाच्यम्, 'गोनर्दीयस्त्वाह' इति शातातपोऽब्रवीत्' इत्यादिषु स्वनामग्रहणाद् 'मनुमेकाग्रमासीनम्' इत्यादिस्थले भृगुणा गुरोर्नामोक्तेश्च कर्त्तव्यार्थविषयकज्ञानानुकूलशब्दप्रयोगात्मकप्रतिज्ञायास्तद्घटकतया, उत्कर्ष-कीर्त्यादिलाभप्रयोजकतया च स्वनामोच्चारणे दोषाभावबोधनात्, 'असौ नामाहमस्मीति स्वनाम परिकीर्तयेत्' इति मनूक्तेरभिवादे तदुच्चारणस्य प्रत्यवायाजनकत्वाच्च ।

वैयाकरणेति—भूष्यतेऽनेनेति भूषणम्, करणे ल्युट्, वैयाकरणानां भूषणं वैयाकरणभूषणम् । न चात्र 'उभयप्राप्तौ कर्मणि' (२–३–६६) इति षष्ठी, तथाच 'उभयप्राप्तौ कर्मणि' इति या षष्ठी सा न समस्यते इत्यर्थ-केन 'कर्मणि च' ( २—२—१४ ) इति समासनिषेध इति वाच्यम्, 'उभयप्राप्तौ' इत्यस्य कर्तृकर्मवाचकयोरु-भयोः प्रयोगे एव प्राप्तिग्रहणसामर्थ्यात् प्रवृत्त्याऽत्र 'कर्तृकर्मणोः कृति' (२–३–६५) इत्यनेनैव षष्ठीविधानात् । अत एव 'अथ शब्दानुशासनम्' इति भाष्यप्रयोगः सङ्गच्छते । * अयं श्लोको बहुषु पुस्तकेषु नोपलभ्यते ।

प्रारिप्सितेति—प्रारम्भश्चात्र ग्रन्थघटकाद्यशब्दोच्चारणम् । सनर्थः=इच्छा, तदन्वयार्थो विषय-

दर्पणव्याख्या

उद्धरणकर्त्राकाङ्क्षायामाह ॥ अस्माभिरिति मूले ॥ कथ्यते इति ॥ इत्यादिनिबद्धकर्तृकाभिरिति शेषः ॥ १ ॥

क्तिस्तु शब्दकौस्तुभोक्तानामर्थानामाधुनिकोत्प्रेक्षितत्वनिरासाय। अन्यथा तन्मूलकस्याऽस्य ग्रन्थस्याप्याधुनिकोत्प्रेक्षितासारत्वापत्तौ पाणिनीयानामनुपादेयतापत्तेः। 'तत्र निर्णीत' इत्युक्तिरितोऽप्यधिकं जिज्ञासुभिः शब्दकौस्तुभे द्रष्टव्यमिति ध्वनयितुम् ॥ १ ॥

प्रभा

तायाम्। तथाच प्रारम्भस्य विषयितासम्बन्धेनेच्छायाम्, तस्याश्च निरूपितत्वसम्बन्धेन विषयतायामन्वय इति प्रारम्भनिष्ठविषयतानिरूपकेच्छानिरूपितविषयताश्रयस्य ग्रन्थस्य यानि प्रतिबन्धकानि=विघ्नादीनि तेषां व्यूहः=समूहस्तस्योपशमनायेत्यर्थः। एतेन स्थूलतच्चच्छरीरावच्छिन्नात्मनिष्ठप्रत्यासत्त्या विघ्नध्वंसं प्रत्येव मङ्गलस्य कारणत्वं सूचितम्। सूक्ष्मशरीरावच्छिन्नात्मनिष्ठप्रत्यासत्त्या तु न कारणत्वम्, जन्मान्तरविघ्नध्वंसोद्देशेनाऽपि जन्मान्तरे मङ्गलकरणापत्तेर्नास्तिकादिग्रन्थे व्यभिचाराच्च। समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापादेवेति न तत्र मङ्गलस्य हेतुत्वमित्यन्यत्र विस्तरः। स्मरणरूपमिति। न च—

आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखम्।

इत्याद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात् स्मरणस्य मङ्गलत्वाभाव इति वाच्यम्, वस्तुनिर्देशपदेन मङ्गलात्मकवस्तुज्ञानस्यैव विवक्षितत्वेन स्मरणस्याऽपि ज्ञानत्वेनाऽदोषात्, मङ्गलस्य न त्रिविधत्वमेव, किन्त्वनेकविधत्वमिति सूचनाय तदुक्तेश्च। उक्ताभियुक्तोक्तेश्चोपलक्षणत्वात्।

शिष्यशिक्षेति—शिष्या अपि स्वकर्तृकग्रन्थारम्भे मङ्गलं कुर्युरिति शिक्षार्थं इत्यर्थः। निबध्नन्निति—ग्रन्थघटकीकुर्वन्नित्यर्थः। प्रतिजानीत इति—अस्य भट्टोजिदीक्षित इति शेषः। कर्तव्यार्थविषयकज्ञानानुकूलवाक्योच्चारणरूपां प्रतिज्ञां करोतीत्यर्थः।

फणिभाषितेति—फणिना=पतञ्जलिना भाषितं यद्भाष्यम्, तच—

'सूत्रार्थं पदमादाय वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥' इति।

तदेवाऽब्धिरिति रूपकम्। शब्दकौस्तुभ इति—कुम्=भुवं स्तुभ्नाति=व्याप्नोतीति कुस्तुभो विष्णुः समुद्रो वा, तस्य तत्र भवो वा मणिः कौस्तुभः। तदुक्तम्—

'स कौस्तुभो महातेजाः सूर्यकोटिसमप्रभः'।' इति।

शब्दः कौस्तुभो यत्र स शब्दकौस्तुभो ग्रन्थः। एतेन तद्ग्रन्थस्य सर्वार्थप्रकाशकत्वं ध्वनितम्। उद्धृत इति—पृथक्कृतो निष्कासित इति वार्थः।

तत्रेति—शब्दकौस्तुभे इत्यर्थः। निर्णीत इति—प्रमाणैर्वस्तुतत्त्वावधारणं निर्णयस्तद्विषय इत्यर्थः।

अर्थः=वैयाकरणसिद्धान्तभूतः प्रकृतिप्रत्ययाद्यर्थः। इह=कारिकावल्याम्। अस्माभिरिति—भट्टोजिदीक्षितैरित्यर्थः। अन्यथा=भाष्याब्धेरुद्धृत इति विशेषणाभावे। आधुनिकेति—व्याकरणप्रवर्तकाचार्यतात्पर्यानभिज्ञैराधुनिकैरित्यर्थः। एतेनाऽऽधुनिकानामपि प्रामाणिकार्थोपन्यासस्य निरासोऽनुचित इति शङ्का निरस्ता।

दर्पणव्याख्या

तत्र स्फोटस्यार्थबोधजनकत्वात् तेनैवाऽऽकाङ्क्षानिवृत्तेश्च वाक्यस्फोटस्य 'वाक्यस्फोटोऽतिनिष्कर्षे' इत्यादिना सिद्धान्तयिष्यमाणत्वेऽपि प्रतिवाक्यं सङ्केतग्रहासम्भवात् तदन्वाख्यानस्य लघूपायेनाशक्यत्वाच्च तत्र कल्पनया पदानि विभज्य

## [ अथ धात्वर्थनिर्णयः ]

प्रतिज्ञातमाह—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ २ ॥

प्रभा

उत्प्रेक्षितेति—तर्कितेत्यर्थः । आधुनिकेति—आधुनिकेन भट्टोजिदीक्षितेनोत्प्रेक्षितः = तर्कितो यः शब्द-कौस्तुभस्तस्याऽप्रामाणिकतयाऽस्य ग्रन्थस्याऽपि तत्सारत्वेनाऽप्रामाणिकत्वं मा भूदिति भाष्याब्धेरुद्धृत इति शब्दकौस्तुभस्य विशेषणम् । शब्दकौस्तुभस्य भाष्यमूलकतया तत्सारत्वेनाऽस्याऽपि प्रामाणिकत्वमेवेति भावः । पाणिनीयानाम् = पाणिनिशास्त्रविदाम् । अनुपादेयता = अस्वीकार्य्यता ।

निर्णीतार्थमाह—फलेति । वैयाकरणमते स्फोटस्यैव वाचकत्वम् । स्फोटश्च—स्फुटति = प्रकाशतेऽर्थोऽस्मादिति स्फोटोऽर्थवाचकः शब्दः । स चाऽष्टविधः, १—वर्णस्फोटः, २—पदस्फोटः, ३—वाक्यस्फोटः, ४—अखण्डपदस्फोटः, ५—अखण्डवाक्यस्फोटः, ६—वर्णजातिस्फोटः, ७—पदजातिस्फोटः, ८—वाक्यजाति-स्फोटश्चेति । तत्र स्फोट एक एव शब्दात्मकब्रह्मरूपः । स च वर्णादिरूपव्यञ्जकभेदात् तत्तत्संज्ञां लभते ।

परन्तु वाक्यस्फोटस्यैव मुख्यवाचकत्वम् । अन्ये स्फोटाः शास्त्रीयकार्यनिर्वाहकाः । कल्पितान्वय-व्यतिरेकाभ्यां कल्पितार्थवन्त एव । तत्र वाक्येषु पदकल्पना पदेषु प्रकृतिप्रत्ययादिकल्पनेति प्रकृतिस्फोटप्रत्यय-स्फोटावेव वर्णस्फोटशब्देनोच्येते । 'उणादयो बहुलम्' ( अ० ३ पा० ३ सू० १ ) इति सूत्रे 'नाम च धातुज-माह निरुक्ते' 'नाम खल्वपि धातुजमेवाहुः नैरुक्ताः ।' 'व्याकरणे शकटस्य च तोकम्' = अपत्यम्, वैया-करणानां शाकटायन आह—'धातुजं नामेति' इति भाष्यादिप्रामाण्यात् प्रकृतिषु धातोः प्राधान्यादादौ धातूनां तत्प्रकृतिकतिङाञ्चाऽर्थमाह—

फलव्यापारयोरिति—वाचकत्वरूपविषयत्वं सप्तम्यर्थः । एवम् 'आश्रये' इत्यत्राऽपि तदेव सप्तम्यर्थः; तथा-च विभक्त्यर्थे फलस्याऽऽश्रयस्य च निरूपितत्वसम्बन्धेनान्वयः । वाचकत्वस्य च स्वरूप ( आश्रयता ) सम्बन्धेन धातौ तिङि चान्वयः । एवञ्च फलनिरूपितवाचकतावान् धातुः, आश्रयनिरूपितवाचकतावन्तश्च तिङ इति पूर्वार्धार्थः ।

फलव्यापारयोरिति द्विवचनेन फलनिरूपिता व्यापारनिरूपिता च धातोः पृथक्शक्तिरिति, 'एकवृन्त-गतफलद्वय'न्यायेन पृथगुपस्थितिप्रयोजिका खण्डशः एकैव शक्तिरिति वा सूचितम् । अत एव फले स्तोकादि-रूपकर्मणोऽभेदेन ग्रामादिकर्मणश्च भेदसम्बन्धेनाऽन्वयः । फलविशिष्टव्यापारे शक्तौ तु फलस्य पदार्थैक-देशत्वेन तत्र 'पदार्थः पदार्थेनाऽन्वेति न तु पदार्थैकदेशेन' इति न्यायविरोधात् कर्माद्यनन्वयापत्तिः । तन्न्यायास्वीकारे तु 'नित्यो घटः' इत्याद्यापत्तिः, तन्न्यायस्य प्रायिकत्वस्वीकारस्त्वगतिकगतिः । न च विभिन्न-पदजोपस्थितयोरेवाऽऽकाङ्क्षाभास्यसम्बन्धेनान्वयात् फलव्यापारयोः परस्परमनन्वयापत्तिः, तादृशनियमासिद्धेः ।

दर्पणव्याख्या

रेष्वपि प्रकृतिप्रत्ययभागांस्तथैव प्रविभज्य कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तदर्थेष्वपि प्रकृतिप्रत्ययानामनादिसङ्केतबोधन-द्वारा साधुत्वान्वाख्यायके महर्षिप्रणीते शास्त्रे प्रक्रियानिर्वाहाय पदवर्णस्फोटावपि सम्मताविति दर्शयँस्तिङन्तार्थप्रधाने सुप्ति-ङ्घटितरूपे वाक्ये धात्वर्थस्य प्राधान्यात्तमेवादौ निरूपयितुमाह मूले ॐ फलव्यापारयोरिति ॐ तत्र धातुरित्यस्य

## प्रभा

न चैवं हरिशब्देनोपस्थितेन्द्राश्वयोराधाराधेयभावसम्बन्धेनान्वयापत्तिः, 'सकृदुच्चरित'न्यायेन हरिशब्देन युगपदुभयविषयकस्याऽभिधया शाब्दबोधस्याऽसम्भवात्। न च तिङा युगपत्कर्तृकालादीनां बोधानुपपत्तिः, विभिन्नशक्त्योपस्थितावेव 'सकृदुच्चरित'न्यायप्रवृत्तेः। विडश्वैकवृन्तगतफलद्वयादिन्यायेन खण्डशउपस्थापकैकशक्तेरेवाऽभ्युपगमात्। न चैवं विद्वन्मानसेत्यादौ मनःसरोवरयोर्युगपद्बोधानापत्तिः, व्यञ्जनया तत्र द्वितीयार्थस्य बोधात्।

यद्वा, न्यायमते लिङ्पदोपस्थितयोः कृतीष्टसाधनत्वयोस्तिङ्पदोपस्थितयोः कृति-वर्तमानयोश्च परस्परान्वयदर्शनेन संकोचऽऽस्यावश्यकत्वेन धातुतिङादिभिन्नं यदेकपदं तदुपस्थितयोरेव परस्परमनन्वयस्य तद्व्युत्पत्तिविषयत्वात्। अत एव व्युत्पत्तिवादे 'अनायत्या फलव्यापारयोः खण्डशक्तिद्वयमेव धातोः स्वीकरणीयम्' इत्युक्तम्।

न च संयोगरूपे फले भेदान्वयाभिप्रायेण 'गमनं न स्पन्दः' इति वाक्यस्य प्रामाण्यापत्तिरिति वाच्यम्, अन्तरङ्गत्वाद् युगपदुपस्थितयोः फलव्यापारयोरन्वयानन्तरमेव तत्र पदार्थान्तरस्याऽन्वययोग्यतया 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्' इति न्यायविरोधेन फले भेदान्वयानौचित्यात्। न चैवं फले स्तोकादीनां कर्मादीनाञ्चान्वयानुपपत्तिरिति वाच्यम्, 'क्रियाविशेषणानां कर्मत्वम्' इत्यभियुक्तोक्तेः, फलाश्रयस्य कर्मसंज्ञाविधानाच्च तेषामन्वये बाधकाभावात्।

नागोजिभट्टास्तु—फलविशिष्टव्यापारे, व्यापारविशिष्टफले च धातूनां शक्तिः। फले व्यापारे च पृथक्शक्तिस्वीकारे व्यापारोद्देश्यकफलविधेयकस्य फलोद्देश्यकव्यापारविधेयकस्य च बोधस्याऽऽपत्तिः, उद्देश्यविधेयभावेनाऽन्वयप्रयोजिकायाः पृथगुपस्थितेः सत्त्वात्।

विशिष्टवाचकत्वमते तु न दोषः, पृथगुपस्थितेरसत्त्वात्। न च पृथगुपस्थितेरुद्देश्यविधेयभावेनाऽन्वयप्रयोजकत्वे मानाभावः, घटादिपदोपस्थितयोर्घटत्वघटाद्योस्तथान्वयाभावदर्शनस्यैव मानत्वात्। न च धातुजफलव्यापारोपस्थित्योस्तादृशबोधे परस्परं प्रतिबन्ध्यप्रतिबन्धकभावकल्पनान्न दोष इति वाच्यम्, तत्कल्पनायां गौरवापत्तेः। न च विशिष्टद्वये शक्तिद्वयस्य गुरुभूतधर्मद्वये शक्यतावच्छेदकत्वस्य व्यापारविशेष्यकबोधे कर्तृप्रत्ययसमभिव्याहारे, फलविशेष्यकबोधे कर्मप्रत्ययसमभिव्याहारे च कारणत्वस्य, उपस्थितिद्वये द्विविधबोधम्प्रति हेतुत्वस्य च स्वीकारेऽतिगौरवमिति वाच्यम्, प्रामाणिकगौरवस्याऽदोषत्वात्।

पृथक्शक्तिवादेऽपि विभिन्नपदोपस्थितयोरेव परस्परान्वय इति व्युत्पत्तित्यागस्य धात्वर्थविषयकबोधे व्युत्पत्त्यन्तरस्य च कल्पने गौरवम्। किञ्च, व्यापारविशेष्यकबोधं प्रति कर्तृप्रत्ययसमभिव्याहृतधातुजशक्तेः फलविशेष्यकबोधं प्रति कर्मप्रत्ययसमभिव्याहृतधातुशक्तेश्च हेतुत्वाङ्गीकारः, शक्तिद्वयमुपस्थितिद्वयञ्च कल्पनीयमित्यतिगौरवम्।

न च नव्यमतेऽपि विशिष्टविषयकोपस्थितिद्वयस्य तादृशबोधद्वये कारणतया विशिष्टे शक्तिद्वयस्य कल्पनया च साम्यमिति वाच्यम्, विषयासम्बद्धे बोधजनकत्वान्यथानुपपत्त्या तत्तत्प्रत्ययसमभिव्याहृतधातुं

## दर्पणव्याख्या

'स्मृताः' इति न विशेषणम्, विभिन्नवचनान्तोपस्थापितत्वात्। विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षायां विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमात्। अत एव नीलो घटा इत्यादेर्न साधुत्वम्

धातुरित्यत्र स्मृत इति वचनविपरिणामेनाऽन्वयः ।

प्रभा

विशिष्टद्वयनिरूपितसम्बन्धद्वयस्य कल्पनीयतया गौरवाधिक्यस्य सुस्पष्टत्वात् । अन्यथा शक्तेर्वैफल्यम् । एवमन्यत्राऽपि पृथक्शक्तिकल्पना निरसनीयेत्याहुः ।

वस्तुतस्तु फले व्यापारे च खण्डशः शक्तिरिति प्राचीनमतमेव ज्यायः, उद्देश्यविधेयभावेनान्वय-नियामकव्युत्पत्तौ धातुभिन्नत्वस्य विशेषणदानेनादोषात् । तद्भिन्नत्वनिवेशे च फलोद्देश्यकेत्यादिपूर्वोक्तबोधम्प्रति नव्योक्तप्रतिबन्ध्यप्रतिबन्धकभावकल्पनागौरवाभावः ।

यत्तु, नव्येनोक्तम्—व्यापारविशेष्यकबोधं प्रति कर्तृप्रत्ययसमभिव्याहारः, फलविशेष्यकबोधं प्रति कर्मप्रत्ययसमभिव्याहारश्च कारणमिति पृथक्शक्तिवादिनाऽपि वक्तव्यमिति, तन्न, प्राचीनमते कर्तृकर्मप्रत्ययोभय-समभिव्याहारे व्यापारविशेष्यकबोधस्यैव तत्सम्मतत्वेन तादृशसमभिव्याहारस्य कारणत्वाकल्पनात् । किञ्च, विशिष्टे शक्तिस्वीकारे गुरुभूतस्य फलविशिष्टव्यापारत्वस्य व्यापारविशिष्टफलत्वस्य च शक्यतावच्छेदकत्व-मिति गौरवं दुर्वारम् ।

प्राचीननये तु व्यापारत्वं फलत्वञ्च शक्यतावच्छेदकमिति न तद्दोषः । किञ्च, व्यापारविशेष्यक शाब्दं प्रति फलविशिष्टव्यापारविशेष्यकोपस्थितेः फलनिष्ठप्रकारतानिरूपितव्यापारनिष्ठविशेष्यतानिरूपकत्वेन व्यापारनिष्ठविशेष्यतानिरूपितफलनिष्ठप्रकारतानिरूपकत्वेन च विनिगमनाविरहात् कारणत्वकल्पने महद् गौरवम् । एवं फलविशिष्टव्यापारविषयकशक्तिज्ञाननिष्ठकारणतानिरूपितफलविशिष्टव्यापारविषयकोपस्थिति-निष्ठकार्यताया व्यापारनिष्ठविशेष्यतानिरूपितफलनिष्ठप्रकारतानिरूपकोपस्थितित्वस्य फलनिष्ठप्रकारतानिरूपित व्यापारनिष्ठविशेष्यतानिरूपकोपस्थितित्वस्य चाऽवच्छेदकताया विनिगमनाविरहेण स्वीकारे गौरवमपि नव्यानामापततीत्याद्यूह्यमित्याहुः ।

एतेन विशिष्टव्यापारे व्यापारविशिष्टफले एव धातोः शक्तिरिति यदन्वः काशिकाकाराः परास्ता इति गुरवः ।

ननु धातुरित्यत्र 'स्मृताः' इति विशेषणमनुपपन्नम्, सम्बन्धानवच्छिन्नविशेष्यविशेषणभाव-सम्बन्धावच्छिन्न ( अभेदेन ) यत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति विशेष्य-

दर्पणव्याख्या

तद्विवक्षायां ■ 'वेदाः प्रमाणम्' 'जात्याकृतिव्यक्तयः पदार्थः' ( न्यायसूत्रे–२।२।१८ ) इत्यादौ भिन्नवचनत्वमपि । न च प्रकृते तद्विवक्षायां बीजमस्तीत्यतो वचनविपरिणामेनान्वयं दर्शयति भूषणसारे ❀ धातुरित्यत्रेति ❀

ननु यदुद्देशेन श्रुतेर्लोकतो वा प्रवृत्तिरवगता तत्त्वं फलत्वम् = अन्येच्छानधीनेच्छाविषयत्वमिति यावत् । यदुक्तं हरिणा—

यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः ।
तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम् ॥ इति ॥

'स्वरितञितः' ( पा० सू० १।३।७२ ) इति सूत्रेऽपि फलपदस्य प्रवृत्त्युद्देश्यमुख्यफले एव प्रसिद्धेः । तथाच तादृशफलस्य धातुवाच्यत्वे विक्लित्यनुकूलव्यापारदशायां तण्डुलस्य धात्वर्थतादृशफलाश्रयत्वाभावात् कर्मत्वानुपपत्तिर्नन्वय-

फलम्=विक्लित्यादि ।

## प्रभा

वाचकप्रकृत्युत्तरविभक्तितात्पर्यविषयसङ्ख्याविरुद्धसङ्ख्याया यत्र विशेषणवाचकप्रकृत्युत्तरविभक्त्याऽविवक्षितत्वं तत्र समानवचनकत्वनियमादाह—वचनेति । विशेष्यवाचकोत्तरविभक्त्या सङ्ख्याया विवक्षायान्तु 'वेदाः प्रमाणम्' इत्यादौ विभिन्नवचनकमपि साधु । प्रकृते तु विशेष्यवाचकधातूत्तरविभक्त्या धातूनां बहुत्वात् सङ्ख्याया अविवक्षितत्वात् समानवचनकत्वस्यावश्यकतया स्मृता इत्यस्य स्मृत इत्येकवचनान्तत्व परिणल्प्यान्वयः कार्यः । अर्थवशाद् विभक्तेर्विपरिणाम इति शिष्टोक्तेरित्याह—वचनविपरिणामेनेति ।

फलमिति—यदुद्दिश्य धात्वर्थक्रियायाम्प्रवृत्तिस्तत्फलम् 'स्वरितञितः' इति सूत्रे क्रियाफलम् । यथा स्वर्गमुद्दिश्य यागो विधीयते । तत्र स्वर्गरूपं फलं यदि कर्त्ता अभिप्रैति तदा आत्मनेपदम् । एवं भविष्यद्धान्यमुद्दिश्य वपिर्विधीयते इति भविष्यद्धान्य वपेः फलं यदि कर्तृगामि तदा आत्मनेपदम् । तथा भोजनमुद्दिश्य पाको विधीयते इति पाकफलस्य भोजनस्य कर्तृगामित्वे आत्मनेपदम् । न हि द्रव्यलाभादि यागादेः फलम्, द्रव्यलाभस्य कार्यान्तरेणापि सम्भवात् ।

तदुक्तम्—'स्वरितञितः' ( अ० १ पा० ३ सू० ७२ ) इति भाष्ये साधीयो यत्र क्रियाफलं कर्त्तारमभिप्रैति । न चान्तरेण यजिं यजिफलं वपिं वा वपिफलं लभन्ते । *याजिकाः पुनरन्तरेणापि यजिं गा* लभन्ते, भृतकाश्च पादिकम्' इति । हरिणाप्युक्तम्—'यस्यार्थस्य प्रसिद्ध्यर्थमारभन्ते पचादयः । तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम्' ॥ इति । यागस्य स्वर्गविशेषरूपं वपेर्धान्यविशेषरूपं पाकस्य भोजनविशेषरूपञ्च फलं नान्यतः कर्त्ता लभेत् । तादृशफलस्येह ग्रहणे तु सकर्मकाकर्मकत्वव्यवस्था उच्छिद्येत । धात्वर्थफलाश्रयस्यैव कर्मत्वविधानादित्याह—फलम्=विक्लित्यादीति—विक्लित्तिः = रूपान्तरम् = अवयवसंयोगविशेषस्तद्विभागविशेषश्च । धात्वर्थफलस्य च विक्लित्तित्वादितत्तद्रूपेण वाच्यता न तु फलत्वेन, तथैवानुभवात् ।

फलत्वञ्चात्र न अन्येच्छानधीनेच्छाविषयत्वरूपम्, तस्य सुखादावेव सत्त्वेनात्र तद्बाधात् तत्साधनत्वात् तदारोपेण फलत्वे तु व्यापारादीनामपि फलत्वापत्तिरिति धातुनिष्ठवृत्तिविशिष्टत्वमत्र फलत्वम् । वैशिष्ट्यञ्च – स्वज्ञानजन्योपस्थितिविषयत्व–स्वज्ञानजन्योपस्थितिविषयव्यापारविशिष्टत्वैतदुभयसम्बन्धेन । व्यापारविशिष्टत्वञ्च-स्वजन्यत्वप्रकारकप्रतीतिविषयत्व-स्वप्रयोज्यत्वप्रकारकप्रतीतिविषयत्वैतदन्यतरसम्बन्धेन ।

एवञ्च सत्तारूपफले वारिधात्वर्थे संयोगानुकूलव्यापाराभावरूपफले च नाव्याप्तिः, तत्र जन्यत्वाभावेऽपि स्वरूपसम्बन्धत्वरूपप्रयोज्यत्वस्य सत्त्वेनाऽदोषात् । यत्तु, आरोपितजन्यत्वस्य सत्तादावपि सत्त्वेन सम्बन्धघटकवैशिष्ट्यनिवेशो व्यर्थ इति, तन्न 'जन्यत्वाभाववती सत्ता' इति बाधस्य सत्त्वेन आहार्यारोपस्यैव तत्र वक्तव्यतया तत्प्रतीतये व्यञ्जनावृत्तिस्वीकारे गौरवापत्तेः । आद्यसम्बन्धनिवेशाद्विभागस्य न गमधातुफलत्वम् । द्वितीयसम्बन्धनिवेशाद् व्यापारस्य न तत्त्वम् । फलविशिष्टव्यापारे शक्तिरिति मतेऽपीदमेव धात्वर्थफललक्षणं बोध्यम् । यद्वा, कर्तृप्रत्ययसमभिव्याहारे तद्धातुजन्यशाब्दबोधीयधात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वे सति तद्धातु-

## दर्पणव्याख्या

तादृशफलाश्रयस्य तदापत्तिरथेन्यत आह—❀ फलम्=विक्लित्यादीति ❀ अयमाशय—फलपदस्य लोके रूढ्या तादृशार्थोपस्थापकत्वेऽप्यत्र पारिभाषिकार्थपरत्वेन । अन्यथा सकर्मकत्वादिव्यवहारो दुरुपपादः स्यादिति । तत्रापि तद्धात्वर्थज-

**व्यापारस्तु भावनाभिधा=साध्यत्वेनाऽभिधीयमाना क्रिया।**

प्रभा

वाच्यत्वम् = फलत्वम् इति न सत्तादावव्याप्तिः। व्यापारस्त्वित्ति—धातुवाच्यव्यापारस्त्वित्यर्थः, भावप्रत्यय-
वाच्यक्रियायाः साध्यत्वेनाऽभिधीयमानत्वाभावात्। तत्र क्रियात्वस्य

'सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः।

इति कारिकोक्तस्य निखिलवैयाकरणपरिगृहीतत्वात्।

किञ्च, साध्यस्यैव क्रियात्वे क्रिया द्विविधा—सिद्धरूपा साध्यरूपा चेति विभागानुपपत्तिः। एवञ्च द्विविध-
क्रियासाधारणं क्रियात्वं किमिति चेत्तत्रेदं गृहाण—गुणत्वानाश्रयत्वे सति विभागासमवायिकारणत्वं क्रिया-
त्वम्। विभागजविभागस्य संयोगजसंयोगस्य चाङ्गीकारे विभागजनकविभागे संयोगजनकसंयोगे चाऽतिव्याप्ति-
वारणाय गुणत्वानाश्रयत्वे सतीति। विभागसंयोगयोश्च गुणत्वाश्रयत्वान्नाऽतिव्याप्तिः। एतच्च लक्षणं साध्य-
सिद्धोभयक्रियासाधारणम्। व्यापारपदशक्यतावच्छेदकधर्मत्वं वा क्रियात्वम्। तच्च स्पन्दयत्नोभयनिष्ठम्। यद्वा—
तज्जन्यत्वे सति तज्जन्यजनकत्वम्। तथाहि—'पचति', 'पाकः' उभयत्रापि कर्तृजन्यत्वस्य कर्तृजन्यविक्लित्ति-
जनकत्वस्य च साध्यरूपक्रियायां सिद्धरूपक्रियायाञ्च सत्त्वेन लक्षणसमन्वयः। जनकत्वञ्चाऽत्र जनकत्वेन
प्रतीतत्वम्। तेन साक्षाद्विक्लित्तिजनकान्तिमाग्निसंयोगदशायामेव पचतीति प्रयोगः स्यात्, न त्वधि-
श्रयणादिदशायामित्यपास्तम्। जनकत्वेन प्रतीतत्वस्य अधिश्रयणादावपि सत्त्वात्। यत्त्वत्र दर्पण-
काराः—किञ्च, प्रयोजकत्वं यदि साक्षाज्जनकत्वं तदा 'पचति' इत्यादौ कर्तृव्यापारस्य धात्वर्थत्वानुपपत्तिः, तस्य
करणव्यापारद्वारैव फलजनकत्वात्। यदि जनकाजनकसाधारणम्, तदा तण्डुलक्रयणस्याऽपि फलप्रयोजकक्रिया-
त्वात् तद्दशायामपि देवदत्तादौ 'पचति' इति प्रयोगापत्तिः, इति, तन्न; व्यापारसामान्यस्य लक्षणप्रसङ्गे धात्व-
वाच्यव्यापारेऽपि तल्लक्षणसत्त्वे दोषाभावात्। यदपि जनकाजनकसाधारणस्य धातुवाच्यत्वे तण्डुलक्रयणादे-
रपि पच्यादिधातुत्वापत्तिरिति, तदपि न, बुद्धिविषयत्वोपलक्षिताधिश्रयणाद्यधःश्रयणान्तेष्वेव शक्तिस्वीकारेण
क्रयणादेः परम्परया फलजनकत्वेऽपि तदानीं पचतीति प्रयोगाप्राप्तेरिति पञ्चोलिनः।

अत्र जन्यत्वमुत्पत्त्याश्रयत्वरूपं परिपाल्यत्वरूपञ्चेति। तेन 'आत्माऽस्ति' इत्यादावस्त्यर्थस्य आत्म-

दर्पणव्याख्या

न्यत्वे सति तद्धातुजन्योपस्थितिविषयत्वम्, तद्धात्वर्थत्वं वा। अन्यत्वं च अन्यत्वप्रकारकप्रतीतिविषयत्वम्। तेन
सत्तादौ नाप्रसङ्गः। गम्याद्यर्थव्यापारजन्यविभागादावतिप्रसङ्गवारणाय विशेष्यम्, तदर्थव्यापारेऽतिप्रसक्तिनिरासाय च सत्य-
न्तम्। तच्च विक्लित्यादीनामक्षतम्, तस्यापि प्रकृतपच्यादिशक्यता तत्तद्रूपेणैव, तथाबोधस्य सर्वानुभवसिद्धत्वात्, धातुना-
दिकमजानतोऽपि तद्बोधाच्चेति भावः।

परे तु कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थजन्यत्वे सति तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम्। जन्यता
चाऽऽरोपिताऽनारोपिता चेत्यन्यदेतत्। विभागजन्यसंयोगादिरूपे पतत्यर्थे विभागसंयोगयोः फलत्ववारणायोभयम्। कर्मा-
ख्याते फलस्य विशेष्यतयैव भानात्तत्रातिप्रसङ्गवारणाय कर्तृप्रत्ययसमभिव्याहार इति वदन्ति, तच्चिन्त्यम्, अनुगतफलत्वा-
निरुक्तेः। विभागजन्यसंयोगे (निरवयवत्वात्प्रत्यक्षत्वात्) पतत्यर्थत्वाभावस्य वक्ष्यमाणतया व्यावर्त्याऽप्रसिद्धेश्चेत्यधिक-
मग्रे वक्ष्यते।

उक्तञ्च वाक्यपदीये—

'यावत् सिद्धमसिद्धं वा साध्यत्वेनाऽभिधीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यऽभिधीयते ॥' इति ॥

न च साध्यत्वेनाऽभिधाने मानाभावः, 'पचति, पाकः, करोति, कृतिः' इत्यादौ धात्वर्था-

प्रभा

धारणरूपसत्तानुकूलव्यापारस्य जन्यत्वाभावेऽपि न क्षतिः । अत्रात्मधारणञ्च—स्ववृत्त्यत्यन्ताभावाप्रतियोगित्व-रूपकालसम्बन्धरूपम्, सत्तारूपजात्यात्मकं स्वरूपाश्रयत्वरूपं वा । आत्मनः कालवृत्त्यत्यन्ताभावाप्रतियोगि-त्वात् कस्मिंश्चिदपि काले आत्मा नास्तीत्यस्य वक्तुमशक्यत्वात् । तदनुकूलव्यापारश्च तादृशात्यन्ताभाव-प्रतियोगित्वप्रागभावपरिपालनरूप एव । 'देवदत्तोऽस्ति' इत्यादौ च तत्तत्कालवृत्त्यत्यन्ताभावाप्रतियोगित्वरूप एव कालसम्बन्धः । उक्तञ्च वाक्यपदीये 'असौ 'अस्'धातौ' आत्मीयग्रहरूपेण साधनानां प्रवृत्तिः' इति का० ३ । भावनेति—उत्पत्त्यर्थकभवतेर्ण्यन्ताद् भावे युचि भावनेति सिद्धम् । अभिदधाति = फलं जनयति साध्यत्वेनाभिधीयते इति वा अभिधा । आद्ये 'आतश्चोपसर्गे' इति कर्त्तरि कः । अन्त्ये तादृशानुपूर्वीमता सूत्रान्तरेण कर्मण्यङ् । तथाच भावना अभिधा नामिका साध्यत्वेनाभिधीयमाना क्रिया व्यापार इत्यर्थ इति काशिकाकारः ।

साध्यत्वेनाभिधीयमानेति—'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । तदर्थश्च प्रकारीत्वम् । यथा विषयनिष्ठा विषयता त्रिविधा, प्रकारता, विशेष्यता, संसर्गता चेति । एवं विषयि ( ज्ञान ) निष्ठा विषयिता-ऽपि त्रिविधा प्रकारिता, विशेष्यिता, संसर्गिता चेति । प्रकारितादिश्च विषयनिष्ठप्रकारतादिनिरूपिता । यथा प्रकारतानिरूपिता प्रकारिता, विशेष्यतानिरूपिता विशेष्यिता, संसर्गतानिरूपिता संसर्गिता चेति । साध्य-त्वस्य निरूपितत्वसम्बन्धेन प्रकारितायां तस्याश्च स्वरूपसम्बन्धेन प्रतीतिरूपाभिधानपदार्थेऽन्वयः । अभिधीय-मानेत्यत्र कर्मप्रत्ययार्थो विशेष्यता । तथा च साध्यत्वनिरूपितप्रकारितावत् प्रतीतिविशेष्यत्वं क्रियात्वं फलितम् ।

दर्पणव्याख्या

ननु व्यापारस्य न फलप्रयोजकक्रियात्वम्, आत्माश्रयात्, क्रियात्वस्यैव हि तत्त्वाद्, दण्डादिव्यापारस्यापि धात्वर्थ-त्वापत्तेश्च । नचेष्टापत्तिः, धात्वर्थव्यापाराश्रयस्यैव कर्तृताया वक्ष्यमाणतया तदाश्रयस्य दण्डादेः कर्तुराख्यातेनाभिधानाद् 'दण्डेन देवदत्तः पचति' इत्यादौ दण्डादिपदोत्तरं तृतीयाऽनापत्तेः, प्रथमापत्तेश्च । कर्तृकरणसंज्ञयोराकडारीयतया संज्ञाद्वयस-मावेशासम्भवेनाभिमतकरणसंज्ञाया परया कर्तृसंज्ञया बाधात् । किञ्च, प्रयोजकत्वं यदि साक्षाज्जनकत्वं, तदा 'पचति' इत्यादौ कर्तृव्यापारस्य धात्वर्थत्वानापत्तिः, तस्य करणव्यापारद्वारैव फलजनकत्वात् । यदि जनकाजनकसाधारणं तदा तण्डुल-क्रयणस्यापि फलप्रयोजकक्रियात्वात् तद्दशायामपि देवदत्तादौ 'पचति' इति प्रयोगापत्तिः, तण्डुलादिक्रयणादिव्यावृत्तस्य तादृशप्रयोजकत्वस्य निर्वक्तुमशक्यत्वाच्च । अत एव न तज्जन्यत्वे सति तज्जन्यजनकत्वरूपं तन्त्रान्तरप्रसिद्धं तत् । तदव-च्छिन्नस्य धातुवाच्यत्वे साक्षाद्विक्लित्तिजनकान्तिमाग्निसंयोगदशायामेव 'पचति' इति प्रयोगः स्यान्नत्वधिश्रयणादिदशाया-मपि, तेषामन्तिमाग्निसंयोगेनान्यथासिद्धतया विक्लित्त्यजनकत्वादित्यत आह ⁂ व्यापारस्त्विति ⁂ ।

साध्यत्वेनेति विशेषणे तृतीया । तथाच पदान्तरसमभिव्याहाराप्रयोज्यसाध्यत्वप्रकारकाऽभिधानविषयत्वं व्या-पारत्वमित्यर्थः । अभिधानस्य प्रकारतावत्त्वं विषयतानिरूपकत्वं चौपचारिकम् । तादृशसाध्यत्वप्रकारकप्रतीतिविषयत्वमिति

वगमाविशेषेऽपि क्रियान्तराकाङ्क्षानाकाङ्क्षयोर्दर्शनस्यैव मानत्वात् । तथा च क्रियान्तरा-

प्रभा

यावदिति । सिद्धम् = भूतकालावच्छिन्नम्, 'अपाक्षीत्' इत्यादौ । असिद्धम् = भूतकालानवच्छिन्नम् = वर्तमानकालावच्छिन्नं भविष्यत्कालावच्छिन्नञ्च, यथा 'पचति' 'पक्ष्यति' इत्यादिस्थले । यावत्साध्यत्वेनाभिधीयते सा आश्रितक्रमरूपत्वात्—आश्रितमधिश्रयणाद्यवयवानां क्रमरूपं पौर्वापर्यं यया सा आश्रितक्रमरूपा तत्त्वात् । क्रियतेऽवयवानां क्रमेणोत्पत्त्या या सा क्रियेत्यन्वर्था संज्ञेत्यर्थः । यत्र धात्वादौ पौर्वापर्याभावस्तत्राप्यारोपेण रूढ्या वा क्रियात्वं बोध्यम् ।

साध्यत्वेनेति—प्रकारत्वं तृतीयार्थः । अभिधीयते = प्रत्याय्यते । तथा च साध्यत्वप्रकारकप्रतीतिविषय इत्यर्थः । साध्यत्वञ्चानुपदमेव वक्ष्यते । पचतीति—'पचति' 'करोति' इत्यादितिङन्तस्थले 'किम्' 'कः' 'क्व' इत्यादिसाधनाकाङ्क्षासत्त्वेऽपि अन्यक्रियाविषयिकाकाङ्क्षा नोदेति इति साध्यरूपत्वं क्रियायाः । 'पाकः' 'कृतिः' इत्यादौ 'अस्ति' 'भविष्यति' 'नङ्क्ष्यति' इत्यादिक्रियान्तराकाङ्क्षा जायते ।

ननु 'पाकः' इत्यादिस्थलेऽपि किंकर्तृकः किंकर्मकः पाक इत्याद्याकाङ्क्षायाः, तत्र कर्त्रादिकारकाणामन्वयस्य चानुपपत्तिः, साध्यक्रियायामेव तदन्वयस्य सिद्धान्तसिद्धत्वादिति चेन्न, घञन्तादावपि प्रकृत्या साध्यरूपक्रियाया एवोपस्थितेः । तदुक्तम्—

'साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥' इति ।

अत एव स्तोकस्य साध्यविशेषणत्वे 'स्तोकं पाकः' सिद्धविशेषणत्वे 'स्तोकः पाकः' इत्युभयं सिध्यति । न च पाक इत्यादौ साध्यसिद्धक्रिययोरन्वयानुपपत्तिः, न चाभेदेनान्वयः, सिद्धसाध्ययोरभेदस्य दुरुपपादत्वादिति वाच्यम्, स्ववृत्तिक्रियात्वरूपसामान्यधर्मवत्त्वेनान्वये बाधकाभावात् ।

दर्पणव्याख्या

यावत् । 'घटं करोति' इत्यादौ कृञ्समभिव्याहारे घटादीनामपि साध्यत्वेन प्रतीतेरतिप्रसङ्गभङ्गाय पदान्तरसमभिव्याहाराप्रयोज्येति प्रतीतिविशेषणम्, तदसमभिव्याहारे तेषां तत्त्वेनाप्रतीतेः । अधिश्रयणाद्यध श्रयणपर्यन्तविक्लित्त्यनुकूलव्यापारत्वमविकलमिति तदवच्छिन्ने पच्यादिधातुवाच्यता नानुपपन्नेति भावः ॥

उक्तार्थस्य स्वोत्प्रेक्षितत्वं निरस्यति ❀ उक्तञ्चेति ❀ यावदिति ❀ । सर्वमित्यर्थः । सर्वपदार्थमेव विवृणोति—सिद्धमित्यादि । सिद्धम् = विद्यमानध्वंसप्रतियोगि, 'अपाक्षीत्' इत्यादौ । असिद्धम् = भूतभिन्नं वर्तमानम्, तादृशप्रागभावप्रतियोगि च, 'पचति' 'पक्ष्यति' इत्यादौ । ❀ साध्यत्वेन ❀ वक्ष्यमाणस्वरूपेण । ❀ अभिधीयते ❀ तत्प्रकारकप्रतीतिविषय इत्यर्थः । क्वचिद्विवक्ष्यते इति पाठः ।

एतेन क्रियाशब्दस्य रूढिः प्रदर्शिता । यौगिकत्वमप्याह ❀ आश्रितेति ❀ आश्रितं क्रमरूपं यस्यास्तत्त्वात् पूर्वापरीभूतावयवकत्वादित्यर्थः । तदीयाऽवयवानामधिश्रयणाद्यधः श्रयणपर्यन्तानां क्रमेणोत्पत्तेः क्रियापदेन सा उच्यते । यत्र च न क्रमिकावयवको व्यापारस्तत्र रूढिरेवादरणीया, पौर्वापर्यारोपो वा । फलस्यापि स्वजनकव्यापारगतपौर्वापर्यारोपेण तथैव भानम् । अत एव तन्मात्रवाचकस्य धातुत्वसिद्धिरिति भावः । ❀ पाक इति ❀ यद्यपि साध्यत्वेनोपस्थितिरप्यत्र, कथमन्यथा 'स्तोकं पाक' इत्यादौ स्तोकादीनां कर्मता, तथाऽपि तत्र धातूपस्थाप्यभावस्य गुणतया प्रधानीभूतघञुपस्था-

काङ्क्षाऽनुत्थापकतावच्छेदकरूपं साध्यत्वम् । तद्रूपवत्त्वमसत्त्वभूतत्वम् । एतदेवाऽऽदाय

'असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते ।'

इति वाक्यपदीयमिति द्रष्टव्यम् ।

प्रभा

क्रियान्तरेति—अन्या क्रिया क्रियान्तरम्, मयूरव्यंसकादित्वादन्तरशब्दस्य नित्यसमासः, परनिपातश्च। धातूपस्थाप्यक्रियाज्ञाननिष्ठा या क्रियान्तराकाङ्क्षानुत्थापकता 'अस्या अन्वयिनी का क्रिया'? इतीच्छारूपा याऽऽकाङ्क्षा तदनुत्थापकता=तदुत्पादकत्वाभावः सामानाधिकरण्येन तदवच्छेदको यो धर्मस्तत्त्वैव साध्यत्वम् । तेन रूपेणोपस्थितौ शाब्दिकवृद्धानुभव एव मानम् । पाकपदेन सिद्धत्वप्रकारकमुख्यविशेष्यतया पाकोपस्थितौ या क्रियाऽन्तराकाङ्क्षोत्थापकता तदवच्छेदको धर्मः=सिद्धत्वरूपः । न च क्रियात्वलक्षणे क्रियायाः प्रवेशादात्माश्रयः, कालान्वय्यन्तरेत्यस्य निवेशेनादोषात् । तथा च कालान्वय्यन्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वं साध्यत्वमिति सिद्धम् । कालस्य साध्यक्रियायामेवान्वयात् कालान्वयित्वं क्रियाया एव ।

वस्तुतस्तु नाऽऽत्माश्रयः, साध्यक्रियात्वलक्षणे सामान्यक्रियाया निवेशे तस्याभावात् । गुरवस्तु पचति क्रिया भवतीत्यर्थके 'पचति भवति' इत्यादौ, 'पश्य मृगो धावति' इत्यादौ च उक्तसाध्यत्वलक्षणाव्याप्तेः साधनाकाङ्क्षोत्थापकताऽवच्छेदकरूपवत्त्वं कारकान्वयितावच्छेदकरूपवत्त्वं वा साध्यत्वं बोध्यमिति न कश्चिद्दोष इत्याहुः ।

साध्यत्वमेवासत्त्वभूतत्वम् । एतदेवादाय=साध्यत्वमेवादाय । तिङ्पदैः=तिङ्प्रकृतिभिः, यद्वा, तिङ्पदैः=भावविकन्तपदैरित्यर्थः ।

दर्पणव्याख्या

प्यस्य तस्य सिद्धतैवेत्याशयः । पर्यवसितार्थमाह ❀ तथा चेति ❀ क्रियान्तरेति ❀ अयमाशयः—यद्धर्मवत्ताज्ञानात् क्रियान्तराकाङ्क्षोदयस्ताद्दशज्ञाने प्रकारतयाऽवच्छेदकं यत्तत्सिद्धत्वम्, तद्भिन्नत्वं ज्ञाननिष्ठतादृशाऽऽकाङ्क्षोत्थापकत्वाभावावच्छेदकं वा साध्यत्वम् । साध्यत्वज्ञानस्य तु नाकाङ्क्षाप्रतिबन्धकत्वम्, फलसकारणाभावादेव तदनुत्पादात् । न च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मरूपसाध्यत्वेन धात्वर्थोपस्थितौ 'कृष्णं नमेच्चेत् सुखं यायात्' इत्यादावाकाङ्क्षाभावे क्रियान्तरान्वयो न स्यादिति वाच्यम्, तत्रापि चेत्पदसमभिव्याहारेणाकाङ्क्षोत्थापनात् । हिरुगादीनां क्रियार्थत्वसम्प्रदायस्य क्रियामात्रविशेषणत्वात्, अत एव न हिरुगाद्यर्थे कारकाणामन्वयः, तेषां तदर्थस्य क्रियान्तरसाकाङ्क्षत्वादिति ।

वस्तुतस्तु, सिद्धत्वज्ञाने साध्याकाङ्क्षावत् पच्याद्यर्थे साध्यतयाऽवगते 'किमस्य साधनम्' इत्याकाङ्क्षोदये साधनाकाङ्क्षोत्थापकतावच्छेदकरूपवत्त्वमेव साध्यत्वम् । अत एव 'एतदेवादाय' इत्यग्रिमग्रन्थसङ्गतिः, अन्यथा पचति भवतीत्यादौ पूर्वोक्तरूपाभावेन तदसङ्गतिः स्पष्टैव ।

उक्तञ्च हरिणा—

प्रयोगार्हेषु सिद्धः सन् मन्तव्योऽर्थो विशेषणैः ।
प्राक् च साधनसम्बन्धात् क्रिया नैवोपजायते ॥ इति ।

साधनं हि क्रियां निर्वर्तयति इति 'सुट् कात्' (पा० सू० ६।१।१३५) इति सूत्रस्थभाष्यमप्येतत्स्वरूपेऽनुगुणमित्यवधेयम् ।

अयञ्च व्यापारः फूत्कारत्वाधःसन्तापनत्वयत्नत्वादितद्रूपेण वाच्यः, पचतीत्यादौ तत्तत्प्रकारकबोधस्याऽनुभवसिद्धत्वात् । न च नानार्थतापत्तिः, 'तदादि'न्यायेन बुद्धिविशेषादेः शक्यता-

### प्रभा

अयञ्चेति—साध्यत्वेन प्रतीयमान इत्यर्थः । यद्यपि 'घटं करोति' इत्यादौ घटस्यापि साध्यत्वेन प्रती-
तिरित्यतिव्याप्तिस्तथापि करोत्यादिसमभिव्याहारे तथा प्रतीतावपि पदान्तरासमभिव्याहारे साध्यत्वेन प्रती-
तस्यैव धात्वर्थव्यापारत्वात् । न च 'घटं करोति' इत्यत्र घटस्याभावात् सिद्धत्वेनापि प्रतीतिर्न स्यादिति
वाच्यम्, सत्ख्यातिवादे सूक्ष्मरूपेण, बौद्धस्यैव तस्य कर्मत्वेन प्रतीत्या वाऽदोषात् । फुत्कारत्वेति—फला-
नुकूलः समूहघटकः फुत्कारादिर्व्यापारः फुत्कारत्वादिनैव वाच्यः । एवं फुत्कारादिजनको यत्नोऽपि यत्नत्वेन
रूपेण धातुवाच्य एव ।

तत्प्रकारेति—फुत्कारत्वादिप्रकारकेत्यर्थः । तत्राधिश्रयणमात्रस्य धातुना विवक्षितत्वे 'स्थाली पचति'
इति, अधः सन्तापनस्य तत्त्वे 'काष्ठानि पचन्ति' इति, धातुना तदविवक्षायाम् 'स्थाल्यां पचति' 'काष्ठैः पचति'
इति फुत्कारादेरेकस्यापि पूर्वापरीभूतावयवत्वेनैव क्रियात्वम्, तत्र तदभावेऽपि तदध्यासेन तत्त्वात्ततेः ।
तदुक्तं वाक्यपदीये—

'एकदेशे समूहे वा व्यापाराणां पचादयः ।
स्वभावतः प्रवर्तन्ते तुल्यरूपं समाश्रिताः ॥ १ ॥' इति ।

फुत्कारादिनिरूपितं शक्तताऽवच्छेदकन्तु पचित्वादिरूपतत्तद्धातुपूर्वीरूपमेव । पचादिरपि सङ्केत-
सम्बन्धेन धातुपदवत्त्वेन रूपेण क्रियात्वप्रकारकसामान्यक्रियोपस्थापक एव ।
अत एव कौमुद्यामुक्तम् 'धातुत्वेन सकलधातुवाच्या' इति । 'भूवादयो धातवः' इत्यत्र न धातुत्वेन
क्रियासामान्यवाचकत्वम्, तस्यैव शक्तिग्राहकत्वेन तदर्थबोधात् प्राक् धातुपदवत्त्वेन भ्वादीनां बोधकत्वा-
सम्भवात् । अतस्तत्र क्रियावाचिन इत्यस्य क्रियात्वव्याप्यतत्तद्व्यापारत्वावच्छिन्नवाचिन इत्येवार्थः । तत्र
धातुपदवत्त्वेन धातुपदशक्यताऽवच्छेदकतया क्रियात्वं जातिः । एवं क्रियानिरूपितशक्ततावच्छेदकतया
पच्यादिनिष्ठं धातुत्वमपि जातिरूपमेव । अत्रैव तात्पर्यग्राहकम् 'भूवादयो धातवः' इति सूत्रमिति दीक्षितादयः ।
नागेशभट्टास्तु—धातुत्वन्तु न शक्तताऽवच्छेदकम्, अतिप्रसक्तत्वात्, धातुत्वाद्यज्ञानतोऽपि बोधात्,
तादृशशक्तिग्रहस्य दृष्टफलाभावेनादृष्टमात्रार्थकत्वापत्तेश्चेत्याहुः ।
यद्वा, फुत्काराद्यनेकव्यक्तिवृत्तिपचित्वादिजातिरेव क्रिया । व्यक्तिद्वारकञ्च तस्याः साध्यत्वम् । स्फोट-
वदस्याः क्रमवद्भिरपि क्रियाक्षणैरभिव्यक्तिः । फलस्यापि स्वजनकव्यापारगतपौर्वापर्यारोपेण तथैव भानम् ।

### दर्पणव्याख्या

केचित्तु, पचतीत्यनुगतव्यवहारादस्ति पचित्वादिकं जातिः । तथा च क्रमिकानेकव्यक्तिवृत्तिजातिरेव क्रिया । साध्यत्व-
ञ्च तस्या व्यक्तिद्वारकमेव । स्फोटवदस्याः क्रमवद्भिः क्षणैरभिव्यक्तिः ।

जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्तिनीम् ।
असाध्या व्यक्तिरूपेण सा साध्येवोपलक्ष्यते ॥

इति वाक्यपदीयं चाऽत्र कल्पे मानमित्याहुः ।
साध्यत्वासत्त्वभूतपदयोः पर्यायतामाह ❀ तद्रूपवत्त्वमिति ❀ । ❀ एतदेवेति ❀ निरुक्तरूपासत्त्वभूतत्वमेवे-

वच्छेदकानामनुगमकस्य सत्त्वात् । आख्याते क्रियैकत्वव्यवस्थाऽपि अवच्छेदकबुद्धिविशेषैक्यमादायैव। उक्तञ्च वाक्यपदीये—

प्रभा

अत एव तन्मात्रवाचकस्य धातुत्वसिद्धिः। न च नानेति—यदि फुत्कारत्वाधःसन्तापनत्वादिनानाधर्मेण शक्यता तदा नानाधर्मावच्छिन्ना फुत्कारादिनिष्ठा या शक्यता तन्निरूपितशक्ततायाः पचादिनिष्ठायाः पचत्वादिरूपैकैकधर्मावच्छिन्नतया नानाधर्मावच्छिन्नशक्यतानिरूपितैकधर्मावच्छिन्नशक्ततावत्त्वरूपनानार्थकत्वापत्तिः पचादेः। न चेष्टापत्तिः, गौरवात्, हर्य्यादिनानार्थकस्थले प्रकरणादीनां शक्यताऽवच्छेदकस्य नियामकत्वेन दृष्टतया 'पचति' इत्यादिस्थले तु प्रकरणाद्यनपेक्षितत्वेन फुत्कारत्वादिरूपनानाधर्मप्रकारकबोधस्यानुभवसिद्धतया तत्र नानार्थकत्वस्यानुभवविरुद्धत्वाच्चेत्याशङ्क्याह—

तदादीति—अयम्भावः—यथा तद्यदित्यादिशब्दानां घटत्वपटत्वादिरूपेण नानार्थशक्ततया नानार्थकत्ववारणाय स्वीयविषयताऽवच्छेदकत्वसम्बन्धेन वक्तृबुद्धिविशेषोपलक्षिता ये घटत्व-पटत्वादयो धर्मास्तदवच्छिन्ने तदादीनां शक्तिस्वीकारेण न नानार्थकत्वम्, तथा प्रकृतेऽपि स्वीयविषयताऽवच्छेदकत्वसम्बन्धेन पचादिधातुप्रयोक्तृसमवेतबुद्धिविशेषो ( फुत्कारादिसमूहविषयकैकबुद्धि ) पलक्षिता ये फुत्कारत्वादयो धर्मास्तदवच्छिन्नशक्यतानिरूपितशक्ततावत्त्वस्य पचादौ स्वीकारात् । अननुगतनानाधर्मावच्छिन्नशक्यतानिरूपितशक्ततावत्त्वस्यैव नानार्थकतया प्रकृते बुद्धिविशेषस्यानुगमकस्य सत्त्वेन नानार्थकत्वाभावः। न च बुद्धेरपि आश्रयभेदाद्भेदेनाननुगमः, तद्व्यक्तित्वेन बुद्धेर्भेदेऽपि बुद्धित्वेन तस्या अनुगतत्वात्। तथा च अनेकशक्यताऽवच्छेदकत्वं न नानार्थकत्वम्। अनेका शक्यतावच्छेदकता यस्य शब्दस्येति तस्य भावः, अनेकशक्यताऽवच्छेदकताकत्वं नानार्थकत्वम्। यथा हर्य्यादिशब्दस्य विष्णुत्वेन्द्रत्वादिषु नानाशक्यतावच्छेदकता। आश्रयभेदेन शक्यतावच्छेदकताया भेदेऽपि प्रकृते शक्यतावच्छेदकतावच्छेदकस्य बुद्धिविशेषस्यैक्येन तद्भेदाभावात् ।

बुद्धिविशेषादेरिति—आदिना—बुद्धिविषयत्वतदवच्छेदकत्वयोः संग्रहः। अत्र बुद्धिविशेष उपलक्षणम्, न तु विशेषणम्। उपलक्षणत्वञ्च—तत्पदीयशक्यताऽवच्छेदकतावच्छेदकत्वेन शक्तिज्ञानविषयत्वे सति तत्पदजन्यबोधविषयत्वेन शक्तिग्रहाविषयत्वम् इति न शाब्दबोधे बुद्धिविशेषस्य भानम्। नन्ववयवीभूतफुत्कारादिव्यापाराणामाशुविनाशित्वाद् युगपदवस्थानासम्भवेन तत्समूहासम्भवात् 'आख्यातेनैका क्रिया प्रत्याय्यते' इति 'प्रशंसायाम्' (५—३—६६) इति सूत्रस्थभाष्यासङ्गतिः, 'न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति' इति 'सरूप' सूत्रस्थभाष्यासङ्गतिश्चेत्यत आह—

दर्पणव्याख्या

त्यर्थः ॐ असत्त्वभूत इति ॐ 'भावप्रधानमाख्यातम्' ( निरुक्ते १ अ० १ ख० ) इति निरुक्तार्थप्रतिपादकमेतत् ।

सत्त्वस्वभावमापन्ना व्यक्तिर्नामभिरुच्यते ।

इति अस्य पूर्वार्द्धम्। ॐ भावश्चेति ॐ। चोऽवधारणे। उक्तभाव एवेत्यर्थः। तेन सत्त्वभूतस्य तस्य व्यवच्छेदः। तिङ्पदैरिति बहुवचनस्वारस्येन तिङन्तपदैरित्यर्थः ॐ अभिधीयते ॐ बोध्यते इत्यर्थः। अभिधीयते इत्यस्य प्राधान्येनेति शेषः। तेन कृदन्तपदैरसत्त्वावस्थभावाऽभिधानेऽपि न क्षतिः। तिङ्पदैरिति भावाऽऽख्याताभिप्रायेणेति कश्चित्।

ॐ अयं चेति ॐ साध्यत्वेन प्रतीयमानो व्यापारश्चेत्यर्थः । ॐ वाच्य इति ॐ पचयादिशस्य इत्यर्थः ।

'गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते ॥' इति ।

प्रभा

आख्याते क्रियैकत्वेति—अत्राख्यातपदेन धातोरेव ग्रहणम्, न तु तिङन्तस्य, कृदन्तेऽपि धातूपस्था-
प्यक्रियायास्तथात्वात् । घञाद्युपस्थाप्यक्रियायां त्वेकत्वान्वये बाधकाभावात् ।
अत एव 'नामाख्यातोपसर्गनिपाताः' इति भाष्ये निरुक्ते च प्रकृतित्वेनोल्लेखः । अत एव नामा-
न्याख्यातजानि' इति शाकटायनः । आख्यायते =प्रत्याख्यते सर्वप्रधानीभूतोऽर्थोऽनेनेति बाहुलकात् करणे क्ते
आख्यातं धातुरेव । 'आख्यातमाख्यातेन' इत्यत्र तु आख्यात( धातु ) प्रकृतिकतिङन्ते लक्षणा, 'द्वितीया श्रित'
इत्यादौ श्रितादीनां यथा श्रितादिप्रकृतिसुबन्ते । न च भाष्ये, शाकटायनोक्तौ च तिङन्तवाचकाख्यातशब्दस्य
धातौ लक्षणा, अनेकत्र लक्षणास्वीकारे गौरवात् । 'भावप्रधानमाख्यातम्' इत्यत्रापि आख्यातपदेन धातुरेव
ग्राह्यः, सत्त्वप्रधानानि नामानि' इत्यत्र प्रकृतेरेवोपादानात् तत्रापि तस्यस्यैवौचित्यात् ।
व्याकरणे क्वचित्तिङन्तस्य ग्रहणम्, क्वचिद्धातोरिति नैयायिकानामाख्यातपदेन तिङो ग्रहणं
सर्वथा हेयमेव ।
शब्दरत्नकारास्तु आख्यातपदेन तिङन्तस्य ग्रहणमाहुः । आख्याते क्रियेत्यत्राख्यातपदेन धातोर्ग्रहणे
आख्यातवाच्यक्रियेत्यर्थः । तिङन्तस्य ग्रहणे आख्यातजन्यशाब्दबोधविषयीभूतेत्यर्थः, तिङन्तस्य क्रियावाचक-
त्वाभावात्, शक्तिमत्येव वाचकत्वव्यवहारात् । 'आख्याते' इति सप्तम्यन्तपाठे तु आख्यातशब्दस्य वाच्ये बोध्ये
वा लक्षणा । विषयत्वं सप्तम्यर्थस्तस्य स्वरूपसम्बन्धेन क्रियायामन्वयः । अवच्छेदकेति—फुत्कारत्वादिनिष्ठा
या शक्यतावच्छेदकता तदवच्छेदको यो बुद्धिविशेषस्तद्गतैकत्वं क्रियायामारोप्येत्यर्थः । सा च बुद्धिः
फुत्कारादिविषयकसमूहालम्बनरूपा एकैव । यद्वा, बुद्धिविषयसमूहगतैक्यारोपेणेत्यर्थः ।
गुणभूतैरिति—क्रमजन्मनाम् = क्रमेण=पौर्वापर्येणोत्पत्तिमतां फुत्कारादिव्यापाराणां समूहो बुद्ध्या
संकलनात्मैकत्वबुद्ध्या समूहालम्बनात्मिकया वा प्रकल्पितोऽभेदो यत्र समूहे स बुद्धिप्रकल्पितसमूह एव क्रिया ।
अभेदश्चावयवानाम् । स च समूहो गुणभूतस्तत्तद्रूपेण भासमानैः समूहे प्रकारीभूतैर्यावयवैः फुत्कारादिभिर्युक्तः
क्रियेति व्यपदिश्यते=व्यवह्रियते इत्यर्थः ।
एतेन क्षणनश्वराणामवयवानां युगपदवस्थानासम्भवेन समूहः क्रियेत्यसङ्गतमित्यपास्तम्, बुद्ध्या
प्रकल्पने बाधकाभावात् । समूहेऽवयवगतपौर्वापर्यस्यारोपः, स्वत एकत्वञ्चेत्यदोषः । एवञ्चैकैकावयवेऽपि
समूहरूपारोपादधिश्रयणाद्येकैकक्रियादशायामपि पचतीत्यादिव्यवहारो न विरुद्ध्यते । आरोपे च तादृशवृद्ध-
व्यवहार एव मानम् ।

दर्पणव्याख्या

❀ अनुभवसिद्धत्वादिति ❀ । अत एव व्यजनादिना वह्निप्रज्वलनदशायां फूत्कार एव गृहीतशक्तिकस्य न पचतीति प्रयोगः ।
❀ न च नानेति ❀ नानाधर्मावच्छिन्नशक्ति-
यागः, इच्छा, ज्ञानं चेति विप्रतिपत्तिस्तु स्वीयबोधानुसारादेवेति भावः । फलांशमादाय तत्त्वं त्वाशङ्कितुरपीष्टमेवेति
निरूपकतावच्छेदकैकधर्मवत्त्वं नानार्थत्वम् । तच्च पच्यादावक्षतमिति भावः ।
बोध्यम् । ❀ बुद्धिविशेषादेरिति ❀ स्वनिरूपितविषयतावच्छेदकत्वसम्बन्धेनेति शेषः । बुद्धिविशेषविषयतावच्छेदकत्व-
स्येति यावत् । अयं भावः—तदादिभ्यश्चैत्रत्वादितत्तद्रूपेण बोधः सर्वानुभवसिद्धः । स च चैत्रत्वाद्यनुगमकधर्मं विनाऽनुप-

धात्वर्थं निरूप्य तिङर्थमाह—

आश्रये त्विति—फलाश्रये, व्यापाराश्रये चेत्यर्थः। फलाश्रयः कर्म्म, व्यापाराश्रयः कर्त्ता। तत्र फलव्यापारयोर्धातुलभ्यत्वान्न तिङस्तदंशे शक्तिः, अन्यलभ्यत्वात्। शक्यतावच्छेदकं चाश्रयत्वं तत्तच्छक्तिविशेषरूपमिति सुबर्थनिर्णये वक्ष्यते।

---

प्रभा

ननु 'नासङ्गतं प्रयुञ्जीत' इत्यभियुक्तोक्तेः यद्यदनन्तरं निरूप्यं तत्तत्सङ्गतम्भवतीति व्याप्त्या 'अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयस्मरणानुकूलसम्बन्धः सङ्गतिः। तथा हि—धात्वर्थनिरूपणानन्तरं तिङर्थनिरूपणे अनन्तराभिधान तिङर्थनिरूपणरूपं तत्प्रयोजकजिज्ञासा 'तिङर्थज्ञानं मे जायताम्' इत्याकारिकेच्छारूपा तज्जनकं ज्ञानम्—'तिङर्थज्ञानं मदिष्टसाधनम्' इत्याकारकं तद्विषयस्तिङर्थस्तत्स्मरणानुकूल सम्बन्धश्च तिङर्थनिष्ठो धात्वर्थवाचकधातुनिष्ठोद्देश्यतानिरूपितविधेयताश्रयवाच्यत्वरूपस्तादृशसम्बन्धरूपा सङ्गतिः। सा च षोढा—तदुक्तम्—

'सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा।
निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते॥' इति।

स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः, प्रकृतार्थोपपादकत्वमुपोद्घातः, हेतुता=कारणता प्रसिद्धैव। कारणे कार्ये वा ज्ञाते किमस्य कार्यं कारणं वेति जिज्ञासोदयेन उपजीवकत्वोपजीव्यत्वयोर्हेतुतायामन्तर्भावः। न च षोढात्वव्याघातः, हेतुताया निरूपकताऽऽश्रयताऽन्यतरसम्बन्धेन सङ्गतित्वेन षोढात्वाक्षतेः। प्रतिबन्धकीभूतजिज्ञासानिवृत्तिकालावच्छिन्नावश्यवक्तव्यत्वमवसरः। यथा धात्वर्थे क इति जिज्ञासानिवृत्तौ तिङर्थस्यावश्यवक्तव्यत्वरूपावसरसङ्गतिः। निर्वाहकैक्यम्=एकप्रयोजकप्रयोज्यत्वम्। कार्यैक्यम्=एककार्यानुकूलत्वम्।

निरूप्येति—बोधनानुकूलो व्यापारो निपूर्वकरूपधात्वर्थः। धात्वर्थस्य प्राधान्येन तं निरूप्यावसरसङ्गत्या तिङर्थमाह—आश्रये त्विति—आश्रयस्याधेयसाकाङ्क्षतयाऽऽह—फलाश्रय इत्यादि। ननु व्यापारस्य प्राधान्यात् प्रथमतो व्यापाराश्रयोक्तिरेवोचितेति चेन्न, कारिकायां प्रथमं फलस्यैवोपादानात्, लकारविधायके 'ल: कर्मणि' इति सूत्रे कर्मण एव प्रथमोपादानाच्च। यद्यपि न्यायनये कर्मपदेन जडवृत्तिस्पन्दस्यैव कर्तृपदेन कृत्याश्रयस्यैव ग्रहणम्, तथापि प्रकृते 'कर्तुरीप्सिततमम्' (१-४-४९) इति सूत्रात् 'स्वतन्त्रः कर्त्ता (१-४-५४) इति सूत्राच्च कर्मपदेन फलाश्रयस्य कर्तृपदेन धातूपात्तप्रधानीभूतव्यापाराश्रयस्यैव ग्रहणमित्याह—फलाश्रयः कर्मेत्यादि। अत एव 'घटो भवति' इत्यादौ घटादेरपि कर्तृत्वसिद्धिः, शाब्दिकनये स्पन्दयत्नोभयसाधारणव्यापारत्वस्य स्वीकारात्।

---

दर्पणव्याख्या

पत्र इति बुद्धिविशेषविषयतावच्छेदकत्वं तदनुगमकधर्ममङ्गीकृत्य तदनुगतीकृततत्तदवच्छिन्नेषु चैत्रादिषु तदादीनां शक्तिः। बुद्धिविशेषविषयतावच्छेदकत्वस्योपलक्षणत्वोपगमाच्च न चैत्रत्वादीनां तेन रूपेण शाब्दबोधे भानापत्तिः। अननुगतनानाधर्मावच्छिन्नशक्तिनिरूपकतावच्छेदकैकधर्मवत एव नानार्थत्वम्, न तेषां तदपीति तदादिशक्तिनिरूपणे निर्णीतमन्यत्र, तद्दिशाप्ययमेयमिति।

ननु पूर्वापरीभूतक्षणावच्छिन्नव्यापाराणां भेदेनाऽसम्भवात्तदात्मकक्रियाया अनैक्याद् 'पुरा च क्रिया' इति

नन्वनयोराख्यातार्थत्वे किं मानम्। प्रतीते र्लक्षणया आक्षेपात् प्रथमान्तपदाद्वा सम्भवादिति चेद्—

प्रभा

तत्रेति—घटकत्वं प्रत्यर्थः। कर्मकर्तृघटकफलव्यापारयोर्धातुलभ्यत्वात् 'अनन्यलभ्यो हि शब्दार्थः'
इति न्यायेन अनन्यलभ्यमाश्रयमात्रं तिङर्थः। न चाश्रयस्य शक्यत्वे आश्रयत्वं शक्यतावच्छेदकं स्वीकार्यम्।
तच्चाधारत्वरूपम्। आधारत्वञ्च निरूपक ( आधेय ) भेदात्सम्बन्धभेदाच्च भिन्नमिति शक्यानन्त्यमिति
वाच्यम्, आश्रयस्य निरूपकादिभेदाद् भिन्नत्वेऽपि आश्रयत्वस्याखण्डोपाधिरूपत्वेन निरूपकाद्यनपेक्षत्वेन
शक्यानन्त्याभावात्,
यद्वा, निरूपकादिभेदेन भेदेऽपि आश्रयतात्वेनानुगमादित्याह—तत्तच्छक्तिविशेषरूपमिति—अखण्डो-
पाधिरूपमित्यर्थः। एतेन कृतिमतो व्यापारवतो वा तिङः शक्यत्वे प्रकारीभूतकृतिव्यापारयोरेव शक्यताऽ
वच्छेदकत्वमिति तेषामानन्त्याद् गौरवमिति नैयायिकोक्तमपास्तम्, गौरवोक्तेर्वैयाकरणमताज्ञानप्रयुक्तत्वात्।
तिङां कृतौ शक्तिरिति स्वीकर्तुस्तव मते कृतित्वस्य शक्यताऽवच्छेदकत्वे तस्य जातिरूपतया लाघवस्येवाश्रयत्व-
स्यापि तत्समत्वेन लाघवसत्त्वात्।
मीमांसकादिमतं निराकर्तुं स्वमतं स्थापयितुञ्च शङ्कते—नन्विति। अनयोः=कर्तृकर्मणोः। आख्या-
तेति—आख्यातपदं तिङ्बोधकमिति नैयायिकवासनाभिप्रायेणेदम्। वैयाकरणनिकाये आख्यातपदस्य धातु-
तिङन्तान्यतरबोधकत्वस्यैव स्वीकारात्। किं मानमिति—किंशब्दः प्रश्ने। प्रश्नश्च—जिज्ञासाबोधकशब्दः।
यद्वा, आक्षेपार्थकः। आक्षेपश्चात्र—किञ्चिन्निमित्तमभिसन्धाय प्रतिषेधः। प्रकृते लक्षणादिरूपं निमित्तमभि-
सन्धाय कर्तृकर्मणोर्वाचकत्वप्रतिषेध आक्षेपः।
ननु येन शब्देन यदर्थबोधो जायते स तस्यार्थ इति व्याप्त्या तिङा कर्तृकर्मणोः प्रतीतिरेव मानमित्याह—
प्रतीतेरिति—'देवदत्तः पचति' इत्यत्र देवदत्ताभिन्नाश्रयनिष्ठो विक्लित्त्यनुकूलो व्यापार इति प्रतीतिरेव
मानमिति चेन्न, प्रतीतेस्तिङः कृतिवाचकत्वेऽपि कृतिसमवायिनि आश्रये लक्षणयोपपत्तिसम्भवात्।
ननु मीमांसकादिमते भावनाया ( यत्नरूपायाः ) अपि शाब्दबोधे भानस्यावश्यकत्वेन तज्ज्ञानाय शक्ति-
ज्ञानस्य, आश्रयभानाय लक्षणाज्ञानस्य चावश्यकतया युगपद्वृत्तिद्वयज्ञानासम्भवेन लक्षणाया असम्भवः। न च
भावनाश्रये लक्षणेत्युभयोर्लक्षणयैव बोध इति वाच्यम्, कर्तृत्वरूपनिर्वाहाय भावनाया आश्रये विशेषणतयैव
भानस्यावश्यकत्वेन भावनायाः शाब्दबोधे प्राधान्यासम्भवादित्याह—
आक्षेपादिति—आक्षेपोऽनुपपत्तिरर्थापत्तिरिति यावत्, यथा 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र
दिवाभोजनाभावविशिष्टस्य देवदत्तस्य भोजनं विना पीनत्वानुपपत्त्या रात्रिभोजनं बुध्यते। एवमाश्रयं विना
भावनायाः ( यत्नस्य ) स्थित्यनुपपत्त्या आश्रयभानं स्यादिति भावः। अर्थापत्तिः=प्रमाकरणम्, प्रमात्मक-

दर्पणव्याख्या

"प्रशंसायाम्" ( पा॰ सू॰ ४।२।६६ ) इति सूत्रस्थभाष्यासङ्गतिरत आह ❀ आख्यातेति ❀। निर्विभक्तिकः पाठः
साधुः। आख्यातप्रतिपाद्यक्रियैकत्वव्यवस्थापीत्यर्थः। सविभक्तिकपाठे सप्तमी वैषयिकाधारे अध्याहृतज्ञानक्रियामादाय-
बोध्या। ❀ बुद्धिविशेषेत्यमिति ❀ संकलनरूपबुद्धिविशेषात्मकविच्छेदैक्यमादायेत्यर्थः। तथा चावयवाऽऽश्रयं पौर्वा-
पर्यम्, समुदायाश्रयमेकत्वमादाय तत्सङ्गतिरिति भावः। तत्र मानमुपन्यस्यति ❀ उक्तञ्चेति ❀। ❀ गुणेति ❀ क्रमिकैतद्-

अत्रोच्यते-'लः कर्म्मणि च भावे चाऽकर्म्मकेभ्यः' (पा० सू० ३ । ४ । ६९) इति सूत्रमेव
मानम् । अत्र हि चकारात् । 'कर्त्तरि कृत्' इति सूत्रोक्तं कर्त्तरीत्यनुकृष्यते । बोधकतारूपा

प्रभा

ानञ्च । आद्यम्—उपपाद्यज्ञानरूपम्—पीनत्वादिज्ञानम्, द्वितीयम्—उपपादकज्ञानम्—रात्रिभोजनादि-
ज्ञानम् । तथा च उपपाद्यज्ञानेनोपपादकज्ञानरूपा अर्थापत्तिरूपा प्रमा, तत्करणञ्च उपपाद्यज्ञानरूपमर्थापत्ति-
रूपप्रमाणम् । अक्षरार्थस्तु अर्थस्यापत्तिः,=कल्पना यया बुद्ध्या सा अर्थापत्तिः प्रमाणम् । तादृशप्रमाणेन जन्यं
यज्ज्ञानं तदित्यर्थापत्तिः ।
न्यायमते आक्षेपो व्याप्तिज्ञानादिस्तस्मादित्यर्थः । तथा हि—'भावना, क्वचिदाश्रिता, गुणत्वात्, रूपा-
दिवत्,' -इत्यनुमित्यात्मकं ज्ञानमाक्षेपस्तस्मादित्यर्थः, एवं कर्मप्रत्ययस्थलेऽपि फलमात्रं तिङर्थः तदाश्रयः
कर्मरूपार्थस्त्वाक्षेपलभ्यो बोध्यः ।
ननु व्याप्तिज्ञानानुपपत्तिज्ञानादिकं विनैव तिङ्श्रवणमात्रेण कर्तृकर्मणोर्बोधात् पदनिष्ठवृत्तिज्ञानजन्य-
पदार्थोपस्थितिविषयस्यैव प्रकारतया विशेष्यतया वा शाब्दबोधे भानस्य नियतत्वेनाऽऽक्षिप्तस्य भानानुपपत्तेश्चेदम-
सङ्गतमत आह—प्रथमान्तपदाद्वेति—पचत्यादितिङन्तसमभिव्याहृतात् 'चैत्रः' इत्यादिपदादित्यर्थः । न चाश्र-
यत्वेनाश्रयबोधायाऽऽश्रये तिङां शक्तिरावश्यकी, आश्रयत्वे शक्तिरिति मते तद्रूपस्य तिङाऽऽश्रयस्य च प्रथमा-
न्तपदेन बोधसम्भवान्नाश्रये तिङां शक्तिः सिद्ध्यति । प्रथमान्तपदासमभिव्याहारेऽध्याहारेण तद्बोध उपपादनीय
इति तदाशयः । अत्रेति—जिज्ञासितविषय इत्यर्थः । उच्यते—अस्य 'लः कर्मणि' इत्यादिवाक्यसन्दर्भः कर्म ।

दर्पणव्याख्या

व्यापारसमूहं प्रति गुणभूतस्तत्तद्रूपेण भासमानैरवयवैरुपलक्षित सङ्कलनात्मकैकत्वबुद्ध्या प्रकल्पितोऽभेदो यस्य तद्रूप समूहः
क्रियेति व्यवह्रियते इति कारिकार्थः । तत्र क्षणनश्वराणां व्यापाराणां वस्तुभूतसमुदायाऽभावाद् बुद्ध्येत्युक्तम् । निरूप्ये-
त्यस्य सङ्क्षेपेणेत्यादिः । प्रधानीभूतप्रकृत्यर्थनिरूपणानन्तरं विशेषणप्रत्ययार्थस्याऽवश्यवक्तव्यतयाऽवसरसङ्गत्या तन्नि-
रूपणमित्यभिप्रेत्याह ❀ तिङर्थमिति । अन्यलभ्यत्वादिति ❀ 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायादिति
भाव । एतेन कृतिमतो व्यापारवतो वा कर्तुं शक्यत्वेऽनेककृतिव्यापाराणां शक्यताऽवच्छेदकत्वकल्पने गौरवमिति नैया-
यिकाद्युक्तं दूषणमस्मन्मताऽज्ञानविजृम्भितमिति सूचितम् ।
नन्वाश्रयस्य तिङर्थत्वे आश्रयत्वं शक्यतावच्छेदकं वाच्यम् । तस्य च स्वरूपाऽभिन्नतया नानासम्बन्धाऽवच्छिन्नतया
च नानात्वादननुगमोऽत आह ❀ शक्यतावच्छेदकं चेति । ❀ वक्ष्यते इति ❀ अस्य द्वितीयार्थनिरूपणाऽवसर
इति शेष । तथा च तत्राऽखण्डोपाधिरूपस्यानुगतस्य वक्ष्यमाणत्वान्न तत्र नानात्वप्रयुक्तो दोष इति भाव ।
मीमांसकादिमतं प्रबलप्रमाणेन निराकरिष्यन् कर्तृकर्मणोरुक्तं तिङर्थत्वं व्यवस्थापयितुं शङ्कते ❀ नन्विति ❀
ननु 'यद् यद्बोधकं तत्तदर्थकम्' इति नियमादाख्यातजन्यकर्तृकर्मप्रतीतिरेव मानमत आह ❀ प्रतीतेरिति ❀ । सम्भवा
दित्यनेनान्वितम् । सम्भवहेतुमाह ❀ लक्षणयेति ❀ । नन्वाख्यातस्याऽऽश्रयलक्षकत्वे भावनाभानानुपपत्तिस्तदुपपत्त्यं
तत्र तस्य शक्तिकल्पने तु नाऽऽश्रये लक्षणासम्भवः, युगपद्वृत्तिद्वयविरोधात् । भावनाश्रयत्वेन भावनाश्रये लक्षणायां
भावनायाः प्राधान्यानुपपत्तिरत आह ❀ आक्षेपादिति ❀ । आक्षेपोऽनुपपत्तिस्तत इत्यर्थः । तथा हि—अन्विताभिधान
वादिमते पदानां विशेषणत्वेनैवार्थोपस्थापकतयाऽऽख्यातार्थभावनाया विशेषणत्वाऽनुपपत्त्या भवति तस्य आश्रयाऽऽक्षेपक
त्वम् । यद्वा, अनुमानं स । तत्प्रयोगश्च—'आख्यातपदबोध्या भावना, क्वचिदाश्रिता, विशेषणत्वेन गृहीतत्वात्

तिबादिशक्तिं तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य लकाराः कर्मणि कर्त्तरि चानेन विधीयन्ते,
नकारविसर्गादिनिष्ठां कर्मकरणादिबोधकताशक्तिमादाय शसादिविधानवत् ।

प्रभा

मानमिति—अनुमापकमित्यर्थः । अनुमितिप्रकारश्चेत्थम्—तिङ्प्रत्ययः, आश्रयनिरूपितशक्तिमान्,
'लः कर्मणि' इति गृहीतशक्तिकत्वात्, अणादितद्धितवत् । अत्र साध्यतावच्छेदको हेतुतावच्छेदकश्च
स्वरूपसम्बन्धः । यत्पदं यद्धर्मावच्छिन्ननिरूपितशक्तिग्राहकपाणिनिसूत्रकम्, तत्पदं तद्धर्मावच्छिन्ननिरूपित-
शक्तिमदिति सामान्यतो व्याप्तिग्रहः ।
ननु कर्मार्थकतिङस्तदर्थकत्वसिद्धावपि सूत्रे कर्तृपदाभावात् तिबादिषु तत्सूत्रगृहीतशक्तिकत्वरूपहेत्व-
सिद्धिरित्यत आह—अत्र हीति । ननु 'लः कर्मणि' इति सूत्रेण लकारस्याश्रये शक्तिसिद्धावपि तिङस्तदसिद्धि-
रित्याशङ्क्याह—बोधकतेति—'उच्चारितः शब्दः प्रत्यायको नानुच्चारितः' इति न्यायेन लाघवेन शास्त्र-
प्रक्रियामात्रनिर्वाहाय स्थानित्वेन कल्पिते लकारे तिबादिगतां बोधजनकताशक्तिं प्रकल्प्य लकारस्य विधानेऽपि
'यदर्थाभिधानसमर्थः स तस्याऽऽदेशः' इति न्यायेन, लकारस्य प्रयोगघटकतयाऽनुच्चरितत्वेन च तिबादिशक्ति-
बोधने एव तत्सूत्रतात्पर्यात् । शक्तेर्बोधजनकतातोऽतिरिक्तत्वेऽपि तत्समानाधिकरणां तां शक्तिमित्यर्थः ।
नकारेति—'रामान्' 'रामैः' इत्यादौ, आदेशात एवार्थबोधात् तन्निष्ठैव शक्तिरिति भावः । ननु कर्तृत्व (यत्न)
कर्मत्व ( फल ) योः शक्तिस्वीकारे यत्नत्वं फलत्वञ्च शक्यतावच्छेदकम्, तच्च जातिरूपमिति लाघवम् ।
कर्त्रादौ शक्तिस्वीकारे नानायत्नानां नानाफलानाञ्च शक्यतावच्छेदकत्वे गौरवम् ।
न च 'प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम्' इत्युक्तत्रिविधेषु यत्नेषु एकाकारप्रतीतेरभावात् यत्नत्वस्य
त्रितयसाधारणत्वे मानाभाव इति वाच्यम्, कार्यत्वावच्छिन्ननिरूपितकारणतावच्छेदकतया यत्नत्वजातिसिद्धेः ।

दर्पणव्याख्या

घटपदबोध्यघटत्ववत्' इति । समानसंवित्संवेद्यत्वं तु नाऽऽक्षेपः, प्रमेयमित्याश्रयभाने भावनाया अभानात्, भावनापदजन्य
भावनाबोधे आश्रयाऽभानाच्चेति ।
ननु व्याप्त्यादिप्रतिसन्धानं विनाऽप्याश्रयबोधस्यानुभवसिद्धत्वादाक्षेपादाश्रयभानोपपत्तिः, क्षणिकत्वात् तथा-
भानस्य । किञ्चोक्तरीत्या तद्भानसमर्थने आख्यातजन्यबोधे भावनायाः प्राधान्यानुपपत्तिः, शक्तिग्रहे तस्या विशेषणत्वेनैवो-
पस्थितत्वाद् घटत्ववत्, एतत्तत्त्वस्य विचाराऽसहत्वाच्चेत्यत आह ❀ प्रथमान्तपदाद्धेति ❀ समभिव्याहृतप्रथमान्तचैत्रादि-
पदादेवाश्रयप्रतीत्युपपत्तेरित्यर्थः । एवञ्च नाश्रयप्रतीत्यनुपपत्तिराश्रये आख्यातशक्तिसाधिकेति भावः ।
तथाऽपि धातोः फलव्यापारयोः शक्तिराख्यातस्याश्रयत्वे शक्तिरिति मते आश्रयस्य आश्रयत्वेनापि लाभाय सामान्यत आश्रये स्वाभि-
❀ मानमिति ❀ यद्यप्याश्रयत्वेनाश्रयभानार्थं तत्राख्यातस्य शक्तिरावश्यकीत्येवोत्तरं वक्तुमुचितं
मताख्यातशक्तिः सिद्ध्यतीति तन्मतनिरासार्थमपि सूत्रं प्रमाणत्वेनोपन्यस्तमिति बोध्यम् । ननु कर्तृपदाघटितमिदं सूत्रं
कथमाख्यातस्य कर्तृवाचकत्वे मानमित्याशङ्कां निरस्यति ❀ अत्र हीति ❀ नन्वेतत्सूत्रं लकाराणामेव कर्त्रादिशक्तिबोधकं
नाख्यातस्येत्यत आह ❀ बोधकतारूपामिति ❀ बोधजनकस्वरूपामित्यर्थः । इदं चादेशिष्वेव शक्तिरादेशानामादेशि-
स्मृतिद्वाराऽर्थोपस्थापकत्वमिति मतनिरासायोक्तम् । यथा चैतत् तथा वक्ष्यते । ❀ विधीयन्ते इति ❀ तथाच वर्ण-
स्फोटपक्षे श्रूयमाणवर्णानामेव वाचकताया व्यवस्थापयिष्यमाणतया 'लः कर्मणि' इत्यादिसूत्राणां तिबादिशक्तिग्रहे एव
तात्पर्यावधारणेन सम्भवति तस्याऽऽख्यातशक्तिसाधकप्रमाणत्वमिति भावः । ❀ नकारविसर्गादीति ❀ 'रामान्' 'रामैः'

न च सूत्रे कर्तृकर्मपदे कर्तृत्वकर्मत्वपरे। तथाच कर्तृत्वम्—कृतिः, कर्मत्वञ्च फलमेवार्थो-
ऽस्त्विति शङ्क्यम्, फलव्यापारयोर्धातुलभ्यत्वेन लकारस्य पुनस्तत्र शक्तिकल्पनाऽयोगात्।

प्रभा

न च प्रागभावध्वंसस्यापि कार्यतया तत्र च यत्नस्याकारणत्वात्तदसिद्धिरिति वाच्यम्, कार्ये भावत्वस्यापि
विशेषणत्वेनादोषात्। यद्वा, समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतया
यत्नत्वजातिसिद्धिः। यदि तु संयोगादिजनकतावच्छेदकतया क्रियात्वसिद्ध्या विनिगमनाविरहाद्यत्नत्वजात्य
सिद्धिरित्युच्यते, तदा यत्नपदशक्यतावच्छेदकतया तत्सिद्धिर्बोध्या। नैयायिकादिमतं दूषयति—न च सूत्र इति।
कर्तृत्वेति—कृत्याश्रयरूपकर्तृपदार्थे प्रकारीभूतायाः कृतेः, फलाश्रयरूपकर्मपदार्थे प्रकारीभूतस्य फलस्य
च त्वप्रत्ययार्थतया कर्तृत्वम्—कृतिः, कर्मत्वञ्च फलमिति फलतीति भावः। 'आकृतिः पदार्थः' इति मतेन लक्षणया
भावप्रधाननिर्देशाद्वा कर्तृकर्मपदं तदर्थकमिति भावः। 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायेन कृतिफलयो
र्धातुलभ्यत्वेन न तत्र तिङां शक्तिरिति भावः। ननु मीमांसकानां मते फलमात्रं धात्वर्थः, भावना तिङर्थः।
भावना च भवितु (उत्पद्यमानस्य) र्भवना (उत्पत्ति) नुकूलभावक (उत्पादक) व्यापारविशेषः स्पन्द
यत्नसाधारणः। तत्र तिङ्प्रत्ययेऽस्त्यंशद्वयम्—आख्यातत्वम्, लिङ्त्वञ्च। आख्यातत्वञ्च सकललतिबादिषु।
लिङ्त्वन्तु लिङ्स्थानिकतिबादिष्वेव। तत्र लिङा आख्यातत्वलिङ्त्वाभ्याम्भावनैवोच्यते।
तत्रेयान् विशेषः—लिङ्त्वेन तिङ्बोध्या या भावना सा शाब्दी भावना इत्युच्यते। यथा 'स्वर्गकामो
यजेत' इत्यत्र यागकर्तुः पुरुषस्य या यागे प्रवृत्तिस्तदनुकूलो यो भावक (प्रेरक) व्यापारविशेषः—प्रेरणारूपः
सा शाब्दी भावना। स च प्रवृत्त्यनुकूलव्यापारविशेषो लोके पुरुषनिष्ठः। वेदे तु पुरुषाभावात् लिङादि-
शब्दनिष्ठ एव। आदिना तव्यदादीनां संग्रहः। सा च भावना साध्यम्, साधनम्, इतिकर्तव्यताञ्चेति अंशः
त्रयमपेक्षते। तत्र पुरुषप्रवृत्तिरूपा आर्थी भावना साध्यत्वेन अन्वेति। करणाकाङ्क्षायां लिङादिज्ञानं साधन-
त्वेन अन्वेति। इतिकर्तव्यता = उपकारकम्, तच्च कर्मणः प्राशस्त्यज्ञानम् इतिकर्तव्यतया अन्वेति, प्राशस्त्य-
ज्ञानादेव प्रवृत्तिर्जायते। आख्यातमात्रेण आर्थी भावनोच्यते। स्वर्गादीच्छाजनितो यागविषयको यः प्रयत्नः
सा आर्थी भावना। 'रथो गच्छति' इत्यत्र अश्वादेश्चेतनस्य यत्नं रथे आरोप्य तथा प्रयोगः।
अन्ये त्वाहुः—भवितुः = उत्पद्यमानस्य भवना (उत्पत्ति) नुकूलो भावक (उत्पादक) व्यापारविशेषो
भावना। यस्मिन् व्यापारे कृते करणं फलोत्पादाय समर्थं भवति। 'कुठारेण छिनत्ति' इत्यत्र भवत्येतादृशी
मतिः—कुठारेण तथा व्यापारवान् भवति कर्त्ता यस्मिन्व्यापारे कृते कुठारेण छेदनं सम्पद्यते। एवं 'यजेत
स्वर्गकामः' इत्यत्र यागेन तथा व्याप्रियते कर्त्ता यस्मिन् व्यापारे कृते यागात् स्वर्गो भवति। करणन्तु वेदे
धात्वर्थयागादि। लोके तु कुठारादि। आख्यातार्थव्यापारश्च लोके उद्यमननिपातनादिः। वेदे तु अग्न्यन्वा-

दर्पणव्याख्या

❀ कर्तृकर्मपदे इति ❀ अस्यानुवृत्तोपात्ते इत्यादिः। ❀ कर्तृत्वकर्मत्वपरे इति ❀ आकृतिशक्ति
इत्यादावित्यर्थः। ❀ कर्तृत्वम्—कृतिरिति ❀ कृञो यत्नवाचकत्वेन तत्प्रकृतिककर्त्रर्थकतृजन्त-
त्वादभिप्रेत्य भावप्रधाननिर्देशाद्वेति भावः। ❀ कर्मत्वञ्च
कर्तृशब्दस्य कृत्याश्रयवाचकतया तदुत्तरभावप्रत्ययेन प्रकृत्यर्थप्रकारीभूतकृतिरूपधर्मबोधनादिति भावः। ❀ शङ्क्यमिति ❀ तथाच तत्सूत्रस्थ—
फलमिति ❀ कर्मशब्दस्य धात्वर्थफलाश्रये पारिभाषिकत्वादिति भावः।
कर्मणोराख्यातशक्तिः सिध्यतीति भावः।

अथ दर्शनान्तरीयरीत्या व्यापारस्य धात्वर्थत्वाभावात्तत्र लकारविधिः स्यादिति चेत्, तर्हि कृता-

प्रभा

यत्नोभयसाधारणम्।
घानादिप्राक्षणतर्पणान्तः। अन्योत्पादानुकूलव्यापारत्वमेतन्मते स्पन्द ( जडनिष्ठकर्म )
एवञ्च 'रथो ग्रामं गच्छति' इत्यत्र रथस्तथा गमने व्याप्रियते यस्मिन् व्यापारे कृते गमनाद् ग्रामप्राप्तिर्भवति।
अत्र गमनं धात्वर्थ एव। अत्र मते रथे न यत्नारोपः, स्वत एव गमनानुकूलव्यापारस्य रथे सत्त्वात्। एवं
'देवदत्तः प्रयतते' इत्यत्रापि देवदत्तस्तथा व्याप्रियते यथा प्रयत्नो भवति। यत्नानुकूलव्यापार एव आख्यातार्थः।
अत्र व्यापारश्चेच्छारूपो यत्नस्येच्छाजन्यत्वादिति धात्वर्थाद् भिन्न आख्यातार्थ इति मीमांसकाः।

दर्शनान्तरीयरीत्येति—दर्शनम्—अध्यात्मज्ञानोपायभूतं शास्त्रम्, अन्यद् न्यायशास्त्राद् भिन्नं यद्दर्शनं
मीमांसारूपं तद्रीत्येत्यर्थः। व्यापारस्य = आख्यातवाच्यस्येत्यर्थः। एतेन कस्यचिन्मीमांसकस्य मते व्यापारस्य
धात्वर्थत्वेऽपि धात्वर्थत्वाभावादित्युक्तिरसङ्गतेत्यपास्तम्, आख्यातार्थव्यापारस्य तन्मतेऽपि धात्वर्थभिन्न-
त्वात्। तत्र = व्यापारे।

यद्वा, फलमात्रं धात्वर्थः, फूत्कारादिव्यापार एवाऽऽख्यातार्थ इति भाट्टरहस्यमताभिप्रायेण व्यापा-
रस्य धात्वर्थत्वाभावादित्युक्तिः। परन्त्वेतन्मते 'अग्निष्टोमेन यजेत' इत्यत्र फलमात्रस्य यजधात्वर्थत्वे तत्र
फले अग्निष्टोमस्याभेदान्वयासम्भवः, यागरूपस्य कर्मणः क्षणनश्वरत्वादित्यादिमीमांसासिद्धान्तभङ्गश्चेति
यत्किञ्चिदेतत्। परन्तु तमेव सिद्धान्तं मत्वैतद्ग्रन्थप्रवृत्तिरिति प्रतीयते। विक्लित्त्यादिफलमात्रं धात्वर्थो न
व्यापारः, धातुद्वयस्यानुपूर्व्योः शक्ततावच्छेदकत्वे सदानन्त्यात्परिगणिततिबादिप्रत्ययानामेव व्यापार-
वाचकत्वं लाघवात्।

तत्र शक्ततावच्छेदकं नाख्यातत्वम्, अननुगमात्, किन्तु तिङ्वृत्त्यन्यतमत्वमेव। यद्वा, आख्यातत्वं
जातिरेवेति तदेवावच्छेदकम्।

तिप्त्वादिना साङ्कर्यन्तु न, आख्यातत्वाभावसामानाधिकरण्यस्य तिप्त्वेऽभावात्। साङ्कर्यञ्च—स्वसा-
मानाधिकरण्य—स्वाभावसामानाधिकरण्य—स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वैतत्त्रितयसम्बन्धेन पर-
स्परविशिष्टत्वरूपम्।

न च फलमात्रस्य धात्वर्थत्वे क्रियावाचकत्वाभावाद् धातुसंज्ञानापत्तिः, फलस्यापि 'कर्मवत्कर्मणा'
( ३-१-८७ ) इति सूत्रे क्रियापदव्यवहार्यत्वेन भाष्ये दृष्टतया क्रियावाचित्वात्तैः। 'पच्यते तण्डुलः स्वयमेव'
इत्यादौ वैयाकरणमतेऽपि तथात्वस्यैवाङ्गीकरणीयत्वात्। एवं फलस्य धातुवाच्यत्वे ऽपि तदाश्रयत्वरूपे कर्मत्वे
एव लकारः स्यादित्यपि पूरणीयम्। अन्यथा 'कर्तृकर्मादिवाचित्वं न' इत्युत्तरग्रन्थे कर्मग्रहणासङ्गतिः स्यात्। यदि

कृतामिति—ण्वुलादिकृत्संज्ञकप्रत्ययस्थले मीमांसकैरपि व्यापाराश्रयवाचकत्वस्यैव स्वीकारात्।

दर्पणव्याख्या

❀ दर्शनान्तरीयेति ❀ दर्शनं शास्त्रं न्यायादिः, अन्यद्दर्शनं दर्शनाऽन्तरं तत्र भवा दर्शनान्तरीया, गहादि-
त्वाच्छः। 'पचति' इत्यस्य पाकं करोतीति विवरणात् फलं पच्याद्यर्थस्तिङ् तु व्यापारवचन इति मीमांसका मन्यन्ते।
तन्मते व्यापारस्यान्यलभ्यत्वाभावात्तत्र लकारविधौ न किञ्चिद् बाधकम्। यद्यप्युक्तरीत्या व्यापारे शक्तिसिद्धावपि फल-
शक्तिबोधकं कर्मणीत्यनुपपन्नमेव, तथाप्यभिधानाऽनभिधानव्यवस्थार्थं तदप्यावश्यकमेव, द्वेधा मानं तु कथञ्चित् परिहर-
णीयमिति भावः। ❀ कृतामिति ❀ कृत्संज्ञकानां ण्वुल्तृजादीनामित्यर्थः। ननु 'कर्तरि कृत्' इत्येव तत्र शक्तिसाधकमत

मपि कर्तृकर्मादिवाचित्वं न सिद्ध्येत्, 'कर्त्तरि कृत्' इति च 'लः कर्म्मणि' इत्यनेन तुल्ययोगक्षेमम्। अपि च मीमांसकानां कृतामिवाऽऽख्यातानामपि कर्तृवाचित्वमस्तु, भावनाया एवाऽऽक्षेपेण कृदादिवत् प्रतीतिसम्भवे वाच्यत्वं माऽस्तु ।

प्रभा

लाघवादत्र कर्त्रादिपदं धर्मपरमेव तदा कृत्यपि तदेव स्यात्। ननु तत्र 'कर्त्तरि कृत्' 'तयोरेव कृत्यक्त' इत्यादिसूत्रबलात्तत्र कर्त्रादिपदं धर्मिपरं स्यादित्यत आह—कर्त्तरि कृदिति—चेन 'तयोरेव' इत्यस्य संग्रहः। तुल्ययोगेति—अलब्धस्य लाभो योगः। लब्धस्य परिरक्षणं क्षेमम्, योगश्च क्षेमश्चानयोः समाहारो योगक्षेमम्, तुल्यं योगक्षेमं यस्य तत्।

अयम्भावः—यदि 'कर्त्तरि कृत्' इत्यत एव 'लः कर्मणि' इत्यत्र 'कर्त्तरि' इत्यनुवर्तते। तत्र यदि 'पाचको देवदत्तः' इत्यत्र 'विक्लित्त्यनुकूलभावनाश्रयाभिन्नो देवदत्तः' इति सामानाधिकरण्येनान्वयलाभाय कर्तृपदमाश्रयबोधकमिति लब्धस्याश्रयरूपार्थस्य परिरक्षणरूपं क्षेमम्। अलब्धाया भावनाया लाभाय आक्षेप इति योगश्चाश्रीयते तदाऽत्रापि तथैव योगक्षेमं स्यात्, तत एव कर्तृपदानुवृत्तेः। लः कर्मणीति सूत्रे कर्तृपदं धर्म (कर्तृत्व) परं कर्त्तरि कृदिति सूत्रे तु धर्मि (कर्तृ) परमिति वैषम्यं न स्यात्, बीजाभावात्। यदि 'लः कर्मणि' इत्यत्र धर्मपरं तदा कर्त्तरि कृत् इत्यत्रापि धर्मपरमेव स्यादित्याश्रय (कर्त्ता) आक्षेपलभ्य स्यादिति कर्तृकर्मकृतामाश्रयबोधकत्वमिति मीमांसकसिद्धान्तभङ्ग इत्याह–तर्हि कृतामपीति—'न हि गोधा सर्पन्ती अहिर्भवति' इति भाष्यप्रामाण्यादुभयत्रापि तुल्यार्थकत्वमेव स्यादिति भावः।

ननु शब्दाधिकाराश्रयणात्कर्तृपदमत्र धर्मपरं स्यात्, न च प्रमाणाभाव, लिङ्गभिप्रायेण 'शक्तिः (कर्मत्वादिरूपा) कारकम्', कृदभिप्रायेण 'शक्तिमत् (कर्मादि) कारकम्' इति भाष्यस्यैव मानत्वादिति चेन्न, तादृशाभिप्रायस्य भवत्कपोलकल्पितत्वात्। ननु कृति सामानाधिकरण्येनान्वयदर्शनाद् धर्मिपरत्वमित्यत आह—अपि चेति। तथा च मीमांसकमते यथा कृदर्थकर्त्राऽऽक्षिप्तभावना शाब्दबोधे भासते तथाऽत्रापि तिङर्थकर्त्राक्षिप्तभावनायाः शाब्दबोधविषयत्वं स्यादिति भावः।

दर्पणव्याख्या

आह ❀ कर्तरि कृदिति चेति ❀ तत्सूत्रादेव च कर्तरीति अत्रानुवर्तते। तथा च पूर्वसूत्रस्थकर्तृपदस्य धर्मिपरत्वमेव, अत्र धर्मपरतायां तु तत्रापि धर्मपरतैव स्यात्। तदेवाह ❀ तुल्ययोगक्षेममिति ❀ अलब्धलाभो योगः, लब्धरक्षणं क्षेमम्। एवञ्च 'लः कर्मणि' इत्यस्यानन्यलब्धभावनाया आख्यातार्थत्वप्रतिपादकत्वोपगमे न्यायसाम्यात्, 'कर्तरि कृत्' इत्यस्यापि कृतां भावनार्थत्वप्रतिपादकत्वम्। तस्या आक्षेपादेव लाभात् कृतां तच्छक्तिप्रतिपादकं तदिति यदि, तर्हि 'लः कर्मणि' इत्यपि नाऽऽख्यातस्य भावनाशक्तिप्रतिपादकमिति समानमित्यर्थः।

ननु पूर्वसूत्रस्थकर्तृपदस्य धर्मिपरत्वेऽप्यनुवृत्तस्य तस्य शब्दाधिकाराऽऽश्रयणेन धर्मपरत्वसम्भवान्नोक्तदोषः। यदि च शब्दाधिकाराऽऽश्रयणं सत्येव गमके, प्रकृते च तदाश्रयणे प्रमाणाभाव इति विभाव्यते, तदाऽपि 'शक्तिः कारकम्' 'शक्तिमत्कारकम्' इति पक्षद्वयस्याप्याकरसिद्धतया तद्विकल्पस्य लिङ्कृतोर्व्यवस्थितत्वाश्रयणादर्थाधिकाराश्रयणेऽप्यभिमतार्थलाभोऽक्षत एवेत्यत आह ❀ अपि चेति ❀ तथा च विकल्पव्यवस्थाया एवाप्रामाणिकत्वेनैकार्थपरतैव न्याय्येति भावः। नन्वाख्यातस्य व्यापारावाचकत्वे कथं ततस्तद्बोधोऽत आह ❀ भावनाया इति ❀। ❀ कृदादिवदिति ❀ इति वतिः, कृदादिस्थले इवेत्यर्थः। आदिपदात् कर्त्रविहिततद्धित इत्यादेः परिग्रहः। तथा च यथा भवन्मते

तथा सति प्राधान्यं तस्या न स्यादिति. चेन्न, 'घटमानय' इत्यादावाक्षिप्तव्यक्तेरपि प्राधान्यवदुपपत्तेः। पचतीत्यादौ पाकं करोतीति भावनाया विवरणदर्शनाद्वाच्यत्वमिति चेन्न, पाकाऽनुकूलव्यापारवतः कर्त्तुरपि विवरणविषयत्वाऽविशेषात्।

न च कर्त्तुर्विवरणं तात्पर्याऽर्थविवरणम्, पाकं करोतीत्यशब्दाऽर्थकर्मत्वविवरणवत्, इतरेतर-

प्रभा

ननु कृदाक्षिप्तभावना यथा 'पाचकः' इत्यादिस्थलेऽप्रधानीभूता तथाऽऽक्षिप्तभावनायाः प्राधान्यं न स्यादित्याह—तथा सतीति–। व्यक्तेरपीति—'आकृतिः (जातिः) पदार्थः' इति मीमांसकनये 'घटमानय' इत्यादौ जातेरानयनासम्भवाज्जात्याक्षिप्तव्यक्तेर्यथा प्राधान्येन भानं तथा आक्षिप्ताऽपि भावना प्राधान्येन भासेत, आक्षिप्तस्याप्राधान्यमेवेति नियमाभावादुक्तस्थले व्यभिचारात्, प्राधान्याप्राधान्ययोरनुभवानुसारित्वाच्चेति भावः। न च प्रत्ययार्थोऽक्षिप्तस्याप्राधान्यमिति नियमान्नोक्तस्थले व्यभिचार, एतादृशनियमे मानाभावात्, लाभावात्, षष्ठ्यर्थसम्बन्धे मतुबिति पक्षे सम्बन्धाक्षिप्तव्यक्तेरपि प्राधान्यदर्शनेन 'गोमन्तमानय' इत्यादौ व्यभिचाराच्च। विवरणेति—तत्समानार्थकशब्दान्तरेण तदर्थकथनं विवरणम्। तथा च 'पचति' इत्यत्र अर्थ-च्छब्दद्वयम्–'पच्' इत्यस्य पाकमित्यनेन, तिबर्थभावनाया यत्नार्थककरोतिना च विवरणदर्शनादाख्यातवाच्या भावना प्रतीयत इति भावः। ननु विवरणस्यैवार्थनिर्णायकत्वे 'करोति' इत्यत्र कृञा यत्नस्य, तिपा यत्नाश्रयकर्त्तु-रपि विवरणविषयत्वेनाख्यातार्थो भावनेत्यत्र विवरणस्य निर्णायकत्वं न स्यादित्याह—कर्त्तुरपि विवरणेति। तात्पर्यार्थेति—'पचति' इत्यतस्तिङर्थभावनाक्षिप्तकर्त्तृबोधो जायतामितीच्छारूपतात्पर्यविषयीभूतार्थविवरणमेव कर्त्तुरिति न ततः कर्त्तुस्तिङ्वाच्यत्वं सिध्यति।

ननु शब्दार्थस्यैव विवरणत्वदर्शनेन तात्पर्यार्थविवरणाप्रसिद्धिरित्यत आह—पाकमिति–'पाकं करोति' इति विवरणेऽमा कर्मत्वस्यापि विवरणात् 'पचति' इत्यत्र कर्मत्ववाचकपदाभावादशब्दार्थस्यापि कर्मत्वविवरण-वदिति भावः। ननु अशब्दार्थस्याऽर्थस्यापि कर्मत्वस्य कर्मतानिरूपकत्वसम्बन्धेन विक्लित्तेर्व्यापारेऽन्वयेन फलस्यापि व्यपदेशिवद्भावेन कर्मत्वादाकाङ्क्षाभास्यसम्बन्धस्य विवरणविषयत्वेऽपि विशेषणतया भासमानस्य कर्त्तुस्तात्पर्यार्थविवरणत्वासम्भव इत्यरुचेराह—इतरेतरेति—मीमांसकादिमते समाहारद्वन्द्वे उत्तरपदस्य समा-हारे लक्षणेति चेन पदार्थस्यैव विवरणमित्यत उक्तमितरेतरेति। इतरेतरयोगद्वन्द्वे 'धवखदिरौ' इत्यादौ साहित्यबोधकपदाभावादपदार्थस्यापि साहित्यस्य द्वित्वान्वयानुरोधेन भानम्। तस्य च साहित्यस्य द्वित्वानति-

दर्पणव्याख्या

धातोर्व्यापारावाचकत्वेन कृदर्थकर्त्राक्षिप्तभावनाया बोधविषयत्वं तथाऽऽख्यातेऽपीति भावः। ❀ तथा सतीति ❀ भावनाया आख्यातावाच्यत्वे सतीत्यर्थः। ❀ तस्याः ❀ भावनायाः। ❀ प्राधान्यम् ❀ मुख्यविशेष्यत्वम्। ❀ घटमानयेति ❀ 'जातिः पदार्थः' इति मते जात्याक्षिप्तव्यक्तेर्यथा प्राधान्यं तथा कर्त्राक्षिप्तभावनाया अपि प्राधान्यमुपपत्स्यत इत्यर्थः। ❀ भावनाया इति ❀ ❀ विव-रणेति ❀ तत्समानाऽर्थकपदाऽन्तरेण तदर्थकथनस्य विवरणतया प्रकृते पचतीत्यस्य पाकभावनेत्याख्यातस्य भावनापदेन विवरणात्तस्य भावनावाचकत्वमित्यर्थः। विवरणस्य स्वस्वबोधानुसारितया न तेनाऽर्थनिर्णय इत्याह ❀ पाकाऽनु-कूलेति ❀ पचतीत्यस्यैककर्त्तृका पचिक्रियेति कर्त्तुर्विवरणस्याऽपि दर्शनेनाऽऽख्यातस्य भावनायां शक्तिरत कर्त्तरीत्यत्र विनिगमकाऽभावादिति भावः। ❀ इतरेतरयोगद्वन्द्व इति ❀ समाहारद्वन्द्वे उत्तरपदलक्ष्याऽर्थसमाहारस्य चशब्देन

वाच्यम्, 'सोमेन यजेत' 'स्तोकं पचति' 'राजपुरुषः' इत्यादावप्यभेदबोधाऽनापत्तेः।

प्रभा

उक्तनियमे व्यभिचारमाह—सोमेनेति। सोमो लताविशेषः। तस्य मत्वर्थे लक्षणया यजधात्वर्थयागेऽभेदान्वयेन, यागस्य च करणतानिरूपकत्वसम्बन्धेन तिङर्थभावनायामन्वयेन सोमवदभिन्नयागनिष्ठकरणतानिरूपिका इष्टफलिका भावनेति बोधः। इष्टञ्च—स्वर्गादि।

ननु सोमपदार्थस्य न यागेऽभेदान्वयः, किन्तु करणतया भावनायामन्वय इति नात्रोक्तनियमे व्यभिचार इति चेन्न, सोमयागयोः स्वातन्त्र्येण करणतानिरूपकत्वेन भावनायामन्वये वाक्यभेदापत्तेः, फलभावनायां करणीभूतस्यैव प्राधान्येन यागवत्सोमस्यापि प्राधान्यापत्त्या 'यागार्थः सोम' इति व्यवहारानुपपत्तेश्च। एवं तिङ्प्रत्ययोपात्तभावनायाः करणाकाङ्क्षायां समानपदोपस्थितधात्वर्थयागस्य करणतयाऽन्वयेनाकाङ्क्षानिवृत्तेर्विभिन्नपदोपस्थितसोमस्यान्वयानुपपत्तिः। न च सोमस्याभेदेन यागेऽन्वये 'क्रियाविशेषणानां कर्मत्वम्' इत्यभियुक्तोक्तेः कर्मतया सोमपदात् तृतीयानुपपत्तिः, यत्र धात्वर्थस्य भावनायां कर्मतानिरूपकत्वेनान्वयः, यथा 'स्तोकं पचति' इत्यादौ, तत्रैव क्रियाविशेषणानां कर्मत्वाभ्युपगमात्। प्रकृते यागस्य करणतयान्वय इति कर्मत्वाप्राप्तेः। नन्वेवमपि धात्वर्थफलस्य भावनारूपव्यापारोत्तरकालिकत्वेन तत्र करणतयाऽन्वयासम्भवः, भावनाभाव्यं यत्स्वर्गादि तन्निर्वर्तकत्वरूपपारिभाषिककरणत्वस्यैवात्र विवक्षितत्वात्। व्यभिचारान्तरमाह—स्तोकमिति—अत्र विक्लित्तिरूपफलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात्कर्मत्वेन तत्र स्तोकपदार्थस्याभेदान्वयः, समानविभक्तिकत्वं तु नास्तीति व्यभिचारः।

ननु नामार्थद्वयस्य यत्राभेदेन विशेष्यविशेषणभावस्तत्रैव समानविभक्तिकत्वं नियामकमिति व्यभिचाराभाव इत्यत आह—राजपुरुष इति—अत्र राजपदस्य राजस्वत्ववति (राजसम्बन्धिनि) लक्षणया पुरुषेऽभेदान्वयेनोक्तनियमे व्यभिचार इति भावः। नैयायिकमताभिप्रायेणायं दोषः। तन्मते व्यधिकरणतत्पुरुषे पूर्वपदस्य विभक्त्यर्थविशिष्टे लक्षणयाऽभेदेनैवान्वयात्।

दर्पणव्याख्या

❀ सोमेन ❀ इत्यादिना—

नन्वत्र यागे सोमस्य करणत्वेनैवान्वयात् कथमुक्तनियमस्य व्यभिचार इति चेत्, सोमस्य यागाभावनायां करणत्वेनाऽन्वये यागस्याऽपि तत्र करणत्वेनैवाऽन्वयात् 'सोमेन यागेनेष्टं भावयेत्' इत्युभयविधाने वाक्यभेदप्रसङ्गः। सोमस्य यागवत् फलभावनाकरणत्वेन प्राधान्यापत्तिर्यागार्थत्वानुपपत्ति, प्रत्ययवाच्यफलभावनायाः समानपदोपात्तयागस्य करणत्वेनैवान्वयादाकाङ्क्षानिवृत्तेर्विभिन्नपदोपात्तस्य सोमस्य करणत्वेनाऽन्वयानुपपत्तिश्च। 'सोमेन यागम्' इत्यन्वयाभ्युपगमे यद्यपि सोमस्य न यागार्थत्वानुपपत्ति, करणत्वेनैवान्वयात्, तथाऽपि प्रत्ययार्थभावनाकरणत्वेन उपस्थितस्य साध्यत्वेनाऽन्वयानुपपत्तिर्दुष्परिहरैवेति सोमपदस्य मत्वर्थलक्षणया 'सोमवता यागेनेष्टं भावयेत्' इति विशिष्टार्थविधानाद्वाक्यभेदप्रसङ्गो नेति मीमांसकसिद्धान्तः। तत्र चोक्तनियमे व्यभिचारो दुर्वार इति भावः।

❀ स्तोकं पचतीति ❀ अत्रापि धात्वर्थव्यापारजन्यफले विभिन्नविभक्तिकस्तोकपदार्थस्याभेदान्वयादित्यर्थः। ननु समानविभक्तिकत्वं नामाऽर्थयोरेवाऽभेदाऽन्वयबोधे प्रयोजकम्। अत एव व्युत्पत्तौ द्विवचनस्यैवोल्लेखः। नामत्वञ्च वक्ष्यते। प्रकृते चाऽनुयोगिप्रतियोगिनोर्नामार्थत्वाभावाद्योक्तदोषोऽत आह ❀ राजपुरुष इति ❀।

नच लक्षणया कर्तुरुक्तत्वात् सामानाधिकरण्यम्, पिङ्गाक्ष्यादियौगिकानामपि द्रव्यवाचित्वाऽनापत्तेः। एवं वैश्वदेवीत्यादितद्धितानामपि, 'अनेकमन्यपदार्थे' 'साऽस्य देवता'

प्रभा

वैयाकरणनये तु समासादिवृत्तावेकार्थीभावरूपशक्तिस्वीकारेण पदार्थयोः पृथगुपस्थित्यभावेनान्वयस्ये-
वाभावेन व्यभिचाराभावः, पृथगुपस्थितयोः परस्परं सम्बन्धस्यैवान्वयपदार्थत्वात्। तन्मतेऽपि व्यभिचारस्तु
'स्तोकं पाकः' इत्यादिस्थले बोध्यः। यदि नामार्थपदेन मुख्यविशेष्यतयोपस्थितस्यैव ग्रहणम्, प्रकृते च
घञर्थे विशेषणीभूतधात्वर्थे एवान्वयेन व्यभिचाराभावस्तर्हि 'स्तोकं पक्त्वा व्रजति' इत्यादौ व्यभिचारो
ज्ञेयः। तत्र क्त्वाप्रत्ययस्य लिङ्गसंख्याद्यनन्वय्यर्थप्रतिपादकत्वेन धात्वर्थानुवादकतया धात्वर्थस्य मुख्यविशे-
ष्यतयोपस्थितत्वात्। केचित्तु, उक्तव्युत्पत्तौ समासाघटकविशेषणवाचकेत्यादिनिवेशेन नोक्तव्यभिचार इत्याहुः।
वस्तुतस्तु समासघटकपदयोरपि अभेदान्वयप्रयोजकत्वमते व्युत्पत्त्यन्तरस्यैव स्वीकृतत्वेन नोक्तापत्ति-
रिति बोध्यम्। अभेदबोधानापत्तेरिति—तथा चाभेदान्वये समानविभक्तिकत्वस्याप्रयोजकत्वेन 'देवदत्तः
पचति' इत्यादावभेदान्वयानुरोधान् तिङः कर्तृवाचकत्वं स्वीकार्यमिति भावः। सामानाधिकरण्यमिति—
लक्षणयैवैकधर्मिबोधकत्वरूपसामानाधिकरण्यनिर्वाहे शक्तिस्वीकारो निष्फल एवेति भाव। यौगिकानामिति—
योगः=प्रकृतिप्रत्ययाद्यर्थसम्बन्धः, अवयवनिष्ठवृत्तिर्वा, तेन तया वा निर्वृत्ता यौगिकास्तेषामित्यर्थः। 'तेन
निर्वृत्तम्' (४-१-७९) इति ठकि साधु। द्रव्यवाचित्वेति—लक्षणयैव द्रव्यबोधनिर्वाहाद् धर्मिशक्त्यानापत्ते-
रित्यर्थः। एवम्=लक्षणयैव सामानाधिकरण्यनिर्वाहे, समासवदिति वा तदर्थः। इत्यादितद्धितानामिति—
इत्यादिवाक्यघटकतद्धितानामित्यर्थः।
ननु समस्यमानपदार्थसम्बन्धिन्येव बहुव्रीहिः, 'अनेकमन्यपदार्थे' इत्यनुशासनाद्विग्रहवाक्याद
यदुपसर्जनको वृत्तिपदार्थसम्बन्धः प्रतीयते स स्वाम्यादिरेवान्यपदार्थः। तथा च न यौगिकानां द्रव्यवाचित्वा-
नापत्तिः, एवं वैश्वदेव्यादिघटकतद्धितानामपीत्यनुपपत्तिमुपपादयति—अनेकमिति।

दर्पणव्याख्या

यद्यपि 'सोमेन यजेत' इत्यत्रेव 'देवदत्तः पचति' इत्यत्रापि समानविभक्तिकत्वस्याऽनन्वयतयाऽभिमतबोधान्वया-
नुरोधात् कर्तृवाचित्वं सिद्धमेव, तथाऽपि व्युत्पत्तेर्नामाऽर्थद्वयविषयकत्वेऽपि व्यभिचारो दुरुद्धर पूर्वोक्तादनेन नामार्थद्वय-
स्थलमुपात्तम्। नैयायिकमतेन चेदम्, तैः कर्मधारये, षष्ठीतत्पुरुषे च पूर्वपदलक्ष्यस्वाम्यतरस्योत्तरपदार्थेऽभेदान्वयो-
पगमात्। स्वमते जहत्स्वार्थवृत्त्यभ्युपगमेन 'पूर्वोत्तरपदार्थयोरन्वयस्यैवाऽभावेनोक्तव्युत्पत्तेरप्रसरादिति बोध्यम्। इदमुप-
लक्षणम्—षष्ठ्यर्थबहुव्रीहेरपि।
अपरे तु—उक्तव्युत्पत्तौ नामांशेऽसमस्तत्वस्यापि विशेषणात्नोक्तस्थले व्यभिचार इत्याहुः। अधिकमग्रे वक्ष्यते।
❀ सामानाधिकरण्यमिति ❀ पदयोरेकार्थाऽभिधायित्वमित्यर्थ। ❀ यौगिकानामिति ❀ योगोऽवयववृत्तिस्तन्मात्र-
पुरस्कारेण प्रवृत्तानामित्यर्थः। ❀ द्रव्यवाचित्वाऽनापत्तेरिति ❀। धर्मिशक्त्याऽनापत्तेरित्यर्थ। ❀ एवमिति ❀
लक्षणयैव सामानाधिकरण्योपपादने इत्यर्थ, इत्थमेवेति यावत्। ❀ वैश्वदेवीत्यादीति ❀ द्रव्यवाचित्वाऽनापत्तेरित्यनुष-
ज्यते। तथा च बलाबलाऽधिकरणोच्छेदाऽऽपत्तिरिति भावः।
तथाहि—'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति श्रूयते। अत्रायं संशय—किमनया
श्रुत्याऽऽमिक्षावाजिनोभयगुणकमेकं कर्म विधीयते? अथवा तत्तद्गुणदेवताभिन्नं कर्मद्वयमिति। यानेनाद्येनाऽऽमिक्षारूपेण

इत्यनुशासनेन पिङ्गे अक्षिणी यस्याः, विश्वे देवा देवता अस्या इति विग्रहदर्शनात् प्रधानषष्ठ्यर्थे एव अनुशासनलाभात् ।

प्रभा

अनुशासनेनेति—अनुशिष्यतेऽनेनेति करणे ल्युटि अनुशासनम् = शास्त्रम् । तस्माद्विग्रहाच्च प्रधानषष्ठ्यर्थे एव बहुव्रीहेस्तद्धितस्य चानुशासन ( अनुशिष्टिरनुशासनं विधानम् ) लाभात् । प्रकृतार्थोपसर्जनकः प्रधानीभूतः सम्बन्ध एव धूरयर्थ इति न शास्त्रबलाच्छक्त्या द्रव्योपस्थितिः । तदुक्तमधिकरणवार्तिके—

'बहुव्रीहिः समासोऽयं मतुबर्थे विधीयते ।
अस्यात्रेति च सम्बन्धे मत्वर्थीयः प्रवर्तते ॥' इति ।

एवं तद्धितान्तानामपि सम्बन्ध एव मुख्यार्थः ।

ननु तद्धितस्य समासस्य च सम्बन्धवाचकत्वेऽपि लक्षणया सम्बन्धिबोधकत्वेन सामानाधिकरण्योपपादने क्षत्यभाव इति चेन्न, बलाबलाधिकरणविरोधापत्तेः । तथाहि—'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति श्रूयते । आमिष्यते = सिच्यते इत्यामिक्षा, आङ्पूर्वकमिषधातोरौणादिके कर्मणि सकि आमिक्षा । तप्ते (पक्वे) पयसि दधियोजनायां या विकृतिः सा आमिक्षेत्युच्यते । घनीभूतं पयः पिण्डमिति यावत् । 'छेना' इति वङ्गदेशे प्रसिद्धिः । वाजिने देयम्, वाजिनो देवताऽस्येति वा विग्रहेऽणि वाजिनमामिक्षा-निःसृतं जलम् । तत्रायं संशयः—यदनया श्रुत्या आमिक्षावाजिनोभयगुणकमेकं कर्म विधीयते, अथवा आमिक्षा-गुणकं कर्म भिन्नम्, वाजिनगुणकं कर्म भिन्नमिति ।

तत्रायं सिद्धान्तः—वैश्वदेवीपदेन विश्वदेवसम्बन्धिन्या उपस्थितिरिति 'नीलो घटः' इत्यत्र नीलघटपद-योरिव सम्बन्धिविशेषकाङ्क्षायां सम्बन्धिनः श्रूयमाणतद्धितेनोपस्थितेरुभयोः समानार्थकतया श्रौतः सम्बन्धः । न चाऽऽमिक्षापदसमभिव्याहारादेवाऽऽमिक्षापदार्थरूपविश्वदेवाभिन्नदेवतासम्बन्धिद्रव्यस्य लाभादामिक्षयाऽपि वाक्यीयसम्बन्ध एव इति वाच्यम्, उभयोरेकार्थकत्वे श्रौतत्वमेवेति सिद्धान्तात्, यत्र भिन्नार्थकपदान्तरा-पेक्षा तत्रैव वाक्यीयसम्बन्धव्यवहारात् । 'वाजिभ्यो वाजिनम्' इत्यत्र 'वाजिभ्यः' इति याजवदर्थकपदोपस्था-प्ययाजपदार्थस्य विभिन्नार्थकवाजिपदोपस्थापिततया वैश्वदेव्या सह वाक्यीयः सम्बन्ध इति वाक्यात् श्रुतेर्बल-वत्तया आमिक्षया शान्ताकाङ्क्षेति विश्वदेवाभिन्नवाजिरूपदेवतान्तरोद्देश्यकवाजिन ( आमिक्षानिःसृतजल )

दर्पणव्याख्या

सम्बन्धाद्वाजिनो विश्वेदेवा, ताननूद्य वाजिनगुणो विधीयते । तेनोभयगुणकं वैश्वदेवमेकं कर्मेति पूर्वपक्षे, 'वैश्वदेव्यामिक्षा' इत्यत्र तद्धितस्य देवतासम्बन्धार्थकतया श्रौतः सम्बन्ध, 'वाजिभ्यो वाजिनम्' इत्यत्र तु वाक्येन सः । सत्यामपि पदान्तरापेक्षायां स्वाभिन्नाऽर्थकपदस्यैवापेक्षणात्र श्रौतत्वबाध. सम्बन्धस्य । यत्र तु भिन्नाऽर्थकपदाऽपेक्षा, तत्रैव वाक्यस्य विनियोजकत्वात् । एवञ्च, 'वैश्वदेव्याऽऽमिक्षा' इत्येतद्विहितवैश्वदेवयागानुवादेन न वाजिनगुणविधानम्, श्रौतद्रव्येण निराकाङ्क्षत्वात् । किन्तु कर्मान्तरविधि । 'वाजिभ्य' इति चापूर्वदेवताविधानमिति राद्धान्तः । यदि च तद्धितस्य देवतासम्बन्धे एव शक्तिस्तदा वाजिनाऽऽमिक्षयोर्वाक्यविनियोज्यत्वस्य साम्यादामिक्षाद्रव्येण देवतासम्बन्धस्य श्रौतत्वमिति सिद्धान्तव्याकोपः । लक्षिताऽऽमिक्षाद्रव्यमादाय देवतासम्बन्धे श्रौतत्वसम्बन्धात्तदनुपपत्त्यभावेन तद्धितस्य द्रव्यार्थकत्व कल्पनमत्ययुक्तं स्यादिति ।

❀ अनुशासनलाभादिति ❀ उपलक्षणमिदम्, युक्तेरपि । तथाहि—घटपदाद् घटत्वप्रकारकबोधवद् दण्ड्यादिपदाद्ण्ड

युक्तेः सामानाधिकरण्यस्योक्तरीत्योपपत्तेरिति प्रपञ्चितं विस्तरेण बृहद्वैयाकरणभूषणे।

तिङः इति। बोधकतारूपा शक्तिस्तिङ्क्ष्वेवेत्यभिप्रेत्येदम्।

पदार्थं निरूप्य वाक्यार्थं निरूपयति—फले इत्यादि। विक्लित्त्यादि फलं प्रति। तिङर्थः—कर्तृ-

प्रभा

भावः। अधिकन्त्वाकरग्रन्थे द्रष्टव्यम्। सामानाधिकरण्यस्येति—'पिङ्गाक्षी गौः' 'वैश्वदेवी आमिक्षा' इत्यनुभवसिद्धं सामानाधिकरण्यं तस्येत्यर्थः। उक्तरीत्या = लक्षणया। ननु 'लः कर्मणि' इति सूत्रेण लकाराणां शक्तिबोधनात् 'आश्रये तु तिङः स्मृताः' इत्युक्तिरसङ्गता इत्याशङ्कायामाह—बोधकतेति।

पदार्थं निरूप्येति—एतेन वाक्यार्थनिरूपणे पदार्थनिरूपणस्योपजीव्यत्वादुपजीव्योपजीवकभावरूपा सङ्गतिः प्रदर्शिता। फल इति—निरूपितत्वं सप्तम्यर्थः। तेनैव सम्बन्धेन प्रधानपदार्थघटकप्रधानत्वेऽन्वयः। तथाच फलनिरूपितप्राधान्यवद्भिन्नव्यापार इति बोधः। तिङर्थ इति—तिङ्शक्यत्वेनानुगमादेकवचनम्।

दर्पणव्याख्या

वस्तुतस्तु लिङ्गसंख्याऽन्वयित्वरूपासत्त्वमूर्तत्वमपि पञ्च्यर्थादावर्थसिद्धम्, प्रत्ययार्थलिङ्गसंख्यादेः प्रत्ययार्थ एव अन्वययोगात्, 'प्रत्ययानाम्' इति व्युत्पत्तेश्च। तस्मान्नासत्त्वभूतसम्बन्धः षष्ठीवाच्यः।

यत्तु, अनुयोगिरूपनिरूपकभानार्थं ग्रन्थे शक्तिकल्पने गौरवमिति, तदपि न, सम्बन्धप्रत्यक्षे हि यावदाश्रयभानापेक्षा, न शाब्दे, येन तच्छक्तिकल्पनागौरवं सम्भाव्येत। तस्मात् तत्र मतुबादेः शक्तौ न किञ्चिद् बाधकमिति। प्रपञ्चितं चैतदधिकमन्यत्र।

एवञ्चैकहायन्यादिपदानां सम्बन्धवाचकतायामनुशासनस्य तदुपष्टम्भकयुक्तीनां च सत्त्वात् तत्रैव शक्तिः सिध्येत सम्बन्धिनीत्यलमधिकम्।

❀ तथाचेति ❀ सामानाधिकरण्यस्य लक्षणयैवोपपादनं इत्यर्थः। ❀ अरुणाधिकरणेति ❀ तथाहि—"अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति" इति श्रूयते। तत्र किमरुणिमा वाक्यं भङ्क्त्वा प्रकरणे निवेशनीयः ?, किम्वा क्रीणातिना सम्बध्यते ? इति संशये, क्रीणातिना सम्बध्यमानस्तद्योगात् क्रयणकरणं स्यात्, तथाऽमूर्तस्य तदयुक्तमिति नास्य क्रयणसम्बन्ध इति पृथगेव प्रकरणे निवेशनीय इति पूर्वपक्षः।

सिद्धान्तस्तु, सम्भवति सन्निहितपदार्थान्वये प्रकरणनिवेशनानौचित्यात् पिङ्गाक्ष्यादिपदानां द्रव्यवचनतया तस्मिन्नन्वयसौलभ्येन तद्द्वारा क्रीणात्यर्थेनाऽपि समन्वयलाभाद् वाक्यघटकत्वमेव तस्येति। स चाऽनुपपन्नः, पिङ्गाक्ष्यादियौगिकानां पदानामुक्तयुक्त्या सम्बन्धार्थकतया द्रव्यस्य तैरनुपादानात्।

किञ्च, पूर्वपक्षोऽप्यनुपपन्नः, पिङ्गाक्ष्यैकहायनीशब्दार्थसम्बन्धस्याप्यमूर्तत्वात्, क्रीणातिकरणत्वाऽसम्भवेन क्रीणातिकरणत्वस्यैतद्वाक्यादलाभादरुण्यस्यैव वाक्यभेदशङ्कायां मूलशैथिल्याच्च। बहुव्रीह्योररुणपदस्य च लाक्षणिकद्रव्यविधायकताया अविशिष्टत्वेन बहुव्रीह्यादेरेव द्रव्यविधायकत्वम्, नारुणपदस्येत्यत्र विनिगमकाभावात्। अधिकमग्रे वक्ष्यते।

❀ उक्तरीत्येति ❀ सम्बन्धिलक्षणाकल्पनेनेत्यर्थः। ❀ प्रपञ्चितमिति ❀ प्रपञ्चस्तूक्तप्रायः। ❀ भूषणे इति ❀ प्रकृतस्थले, समासशक्तिनिरूपणाऽवसरे चेत्यर्थः। 'पदार्थं निरूप्य' इत्यनेन पदार्थनिरूपणानन्तरं वाक्यार्थनिरूपणे तयोः सङ्गतिः सूच्यते। तत्फलं च पूर्वापरग्रन्थैकवाक्यप्रतिपत्तिरेकप्रयोजनवती ज्ञानफलिका।

केचित्तु, उन्मत्तप्रलपितत्वशङ्कानिदानासङ्गतत्वज्ञाननिरासः प्रयोजनमित्याहुः।

सा चाऽनन्तर्याऽभिधानप्रयोजकजिज्ञासाजनकतावच्छेदकधर्मरूपा षड्विधा। तदुक्तम्—

'समसङ्ग उपोद्घातो हेतुताऽवसरस्तथा।
निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते॥' इति।

कर्मसंख्याकालाः । तत्र कर्तृकर्मणी फलव्यापारयोर्विशेषणे । संख्या कर्तृप्रत्यये कर्तरि, कर्मप्रत्यये कर्मणि, समानप्रत्ययोपात्तत्वात् ।

प्रभा

विशेषणे इति—तथाच 'देवदत्तस्तण्डुलं पचति' इत्यत्र यदा देवदत्तपदेन मांसपिण्डविशेषस्य ग्रहणं तदा समवायसम्बन्धावच्छिन्नाधेयतया देवदत्ताभिन्नकर्तुर्व्यापारेऽन्वयः । यदा तु शरीराद्यवच्छिन्नात्मनो ग्रहणं तदा यत्नरूपे धात्वर्थव्यापारे पूर्वोक्तसम्बन्धेनान्वयः, न तु फुत्कारादौ, स्पन्दरूपस्य तस्य जडवृत्तित्वात् । तथाचोक्तम्—

'क्षितिर्जलं तथा तेजः पवनो मन एव च ।
परापरत्वमूर्त्तत्वक्रियावेगाश्रया अमी ॥

इति क्षित्यादिपञ्चानामेव क्रियाऽऽश्रयत्वात् । यद्वा, आत्मरूपदेवदत्तादेर्यत्ने समवायसम्बन्धेन, फुत्कारादौ स्वनिष्ठकृतिजन्यत्वसम्बन्धेनान्वयः । एवं मांसपिण्डरूपदेवदत्तादेरपि समवायेन फुत्कारादौ, स्वावच्छिन्नात्मवृत्तितया कृतावन्वय ऊह्यः । फलव्यापारयोरिति—कर्त्ता व्यापारे, कर्म फले विशेषणम् । कर्तृप्रत्यये='चैत्रः पचति' इत्यादौ । कर्मप्रत्यये='तण्डुलः पच्यते' इत्यादौ । ननु सुबर्थसङ्ख्यायाः प्रकृत्यर्थे एवान्वयदर्शनात् तद्वद्धात्वर्थे एवान्वय उचित इत्याशङ्कायामाह—समानेति—धात्वर्थापेक्षया प्रत्यासत्त्यतिशयेन प्रत्ययार्थकर्त्रादावेव तदन्वय उचित इति भावः । अत एव रूपसूत्रे 'साधनापेक्षं पचत इत्यादौ द्विवचनम्' इति भाष्यं सङ्गच्छते ।

दर्पणव्याख्या

अनुकूलत्वञ्चात्र घटकवज्ञापकत्वादिरूपं
तत्र प्रकृतसिद्ध्यनुकूलचिन्ताकालावच्छिन्नप्रकृतानुकूलत्वमुपोद्घातः । एवमग्रेऽपि । स्मृतिकालानवच्छिन्नोपेक्षा-
यथायथं ग्राह्यम् । तत्रावच्छेदकांशः स्वरूपसन्, इतरांशश्च ज्ञात उपयोगी । प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिकालावच्छिन्नावश्यवक्तव्यत्वमवसरः ।
नर्हतावच्छेदकधर्मवत्त्वं प्रसङ्गः । हेतुता प्रसिद्धा । एककार्यत्वम्—एकस्य कार्यता सा च
निर्वाहकत्वम्—एककार्यजनकत्वं कारणतावच्छेदकसाधारणप्रयोजकत्वरूपम् । अन्यानि तु स्वयमूह्यानि । आक्षेपोदाहरणा-
अन्यता, अन्यज्ञानविषयत्वरूपा चेति । उदाहरणानि कानिचिदत्रैव वक्ष्यन्ते । प्रकृते च पदार्थसंसर्गविशेष-
दीनां तु तन्त्रान्तरे सङ्गतित्वेन प्रसिद्धानामेष्वेवान्तर्भाव इति न तेषामाधिक्यसम्भावना । प्रायशोऽसंसृष्टपदार्थाऽभावेन तत्संसर्गस्य सामान्यरूपेण
रूपवाक्यार्थयोः प्रसङ्गसङ्गतिः । तथाहि—निरूपितेषु पदार्थेषु 'क एषां संसर्गः' इत्याकारा विशेष-
स्मरणम् । ततः सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासाजनकत्वाच्छिष्यस्य गुरोः । ततो जिज्ञासाविषयज्ञाने इष्टसाध-
धर्मजिज्ञासा, ततस्तद्बोधनाय शिष्यस्य शब्दप्रयोगः । ततः शिष्यजिज्ञासाज्ञानं विशेषसंसर्गरूपवाक्यार्थाभिधानमिति ।
नताज्ञानात् कण्ठताल्वाद्यभिघातादिसम्पादनेन गुरोः शिष्यजिज्ञासानिवृत्तिफलकं इत्थमन्यत्रापि लक्षणानि योज्यानि ।
संसर्गगतसामान्यस्योपेक्षाऽनर्हतावच्छेदकत्वात्तद्वत्त्वस्य तत्र सत्त्वाल्लक्षणसङ्गतिः । तद्वयया आख्याताऽर्थकर्तृकर्माऽन्वयित्वे प्रयोज-

* विशेषणे इति *। आधाराऽऽधेयभावसम्बन्धेन प्रकाराविल्यर्थः । एतेन समानाऽभिधानश्रुतेर्वाक्याऽपेक्षया बलवत्त्वात् समानपदोपात्तान्व-
क्माह * समानप्रत्ययोपात्तत्वादिति *। एकप्रत्ययजन्योपस्थितिविषयत्वादिति तदर्थः । लडादीनां वाचक-
यित्वं विहाय प्रथमाऽन्तार्थेऽन्वयोऽनुचित इति व्यज्यते, व्यभिचारवारणाय कर्तृकर्मविषयत्वेन तां विशिनष्टि ।
त्वकल्पे आख्यातजन्योपस्थितिविषयत्वस्य कालेऽपि सत्त्वात्तत्र

तथाच 'आख्यातार्थसंख्याप्रकारकबोधं प्रति आख्यातजन्यकर्तृकर्मोपस्थितिर्हेतुः' इति कार्यकारणभावः फलितः।

नैयायिकादीनामाख्यातार्थसङ्ख्यायाः प्रथमान्तार्थे एवाऽन्वयात् 'आख्यातार्थसंख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुः' इति कार्यकारणभावो वाच्यः। सोऽपि 'चन्द्र इव मुखं दृश्यते'

## प्रभा

तथाच = संख्याया आख्यातार्थकर्तृकर्मणोरन्वयाङ्गीकारे च। आख्यातार्थेति—समवायसम्बन्धेनाख्यातार्थसंख्यानिष्ठप्रकारतानिरूपितकर्तृनिष्ठविशेष्यताकबोधम्प्रति आख्यातजन्यकर्तृविषयकोपस्थितिः समवायसम्बन्धेन कारणम्। तादृशप्रकारतानिरूपितकर्मनिष्ठविशेष्यताकबोधम्प्रति आख्यातजन्यकर्मोपस्थितिर्हेतुरिति कार्यकारणभावद्वयं फलितम्।

वस्तुतः विषयनिष्ठप्रत्यासत्त्या एव लाघवात् कार्यकारणभाव उचितः। समवायेन कार्यकारणभावे एकस्मिन्पुरुषेऽनेकविषयकोपस्थितिसत्त्वेन भिन्नविषयकोपस्थितेर्भिन्नविषयकशाब्दबोधवारणाय कार्यदले, कारणदले च विषयनिवेशस्याऽवश्यकत्वेन विषयाणामानन्त्येन गौरवप्रसङ्गात्। अतः कर्तृनिष्ठविशेष्यताकत्वं कर्मनिष्ठविशेष्यताकत्वञ्च कार्यदलेऽनिवेश्य कर्तृत्वावच्छिन्नविशेष्यतासम्बन्धेन आख्यातार्थसङ्ख्याप्रकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति विशेष्यतासम्बन्धेनोपस्थितिः कारणमित्येतावन्मात्रनिवेशेऽपि दोषाभावः। नचात्र पक्षेऽपि विशेष्यतासम्बन्धेनान्यपुरुषीयोपस्थितिमादायान्यपुरुषस्य बोधापत्तिः, तत्पुरुषीयतादृशबोधम्प्रति तत्पुरुषीयोपस्थितेः कारणत्वस्वीकारेणादोषात्। नचैवं लाघवाभावः, तत्पुरुषीयविषयाणां बाहुल्येन पुरुषस्य चैकत्वेन विषयस्य निवेशो तत्पुरुषीयत्वनिवेशापेक्षा गौरवस्यानिवार्यत्वात्।

'घटः' इत्यादौ संख्याप्रकारकबोधस्य सत्त्वात् व्यभिचारवारणाय सङ्ख्यायामाख्यातार्थेति विशेषणम्। कालप्रकारकबोधे व्यभिचारवारणाय संख्येति। प्रसङ्गान्नैयायिकमतं निराकरोति—नैयायिकानामिति—तन्मते यत्नस्यैवाख्यातार्थतया तत्र संख्याया अन्वयस्य गुणे गुणानङ्गीकारादनुचितत्वेनाह—प्रथमान्तेति—विशेष्यतासम्बन्धेनाख्यातार्थसङ्ख्याप्रकारकबोधम्प्रति प्रथमान्तपदार्थनिष्ठविषयतासम्बन्धेन प्रथमान्तपदजन्योपस्थितिः कारणमिति वक्तव्यम्। तेन प्रथमान्तपदजन्यसमूहालम्बनात्मकोपस्थितौ 'हस्तिपको गच्छति' इत्यत्र प्रथमान्तहस्तिपकपदजन्योपस्थितौ सम्बन्धिविधया हस्तिनोऽपि भाने न तत्र संख्यान्वयः, प्रथमान्तपदार्थनिष्ठविषयतासम्बन्धेन तादृशोपस्थितेर्हस्तिपके एव सत्त्वेन हस्तिनि तदभावात्। नैयायिकमते कारणदले आख्यातपदभिन्नप्रथमान्तपदज्ञानप्रयुक्तं गौरवमिति सूचितम्।

सोऽपि = उक्तकार्यकारणभावोऽपि। अस्य घटित इत्यत्रान्वयः। चन्द्र इवेति—'दृश्यते' इत्यत्र 'ते'रूपाख्यातार्थैकत्वसंख्याया मुखे एवान्वयः। उक्तकार्यकारणभावस्यैव स्वीकारे तु चन्द्रस्यापि प्रथमान्तचन्द्रपदजन्योपस्थितिविषयत्वेन तत्राख्यातार्थैकत्वस्यान्वयापत्तिः। तत्रान्वयवारणायेतराविशेषणीभूतप्रथमान्तार्थोपस्थितेः कारणत्वे इवार्थसादृश्ये विशेषणीभूतचन्द्रेऽन्वयवारणेऽपि अतिगौरवमिति भावः। न चेष्टापत्तिः, अननुभवात्, चन्द्र

## दर्पणव्याख्या

❀ तथाचेति ❀। घट इत्यादावेकत्वादिसङ्ख्याप्रकारकबोधे व्यभिचारो मा भूदिति कार्यतावच्छेदककोटौ ❀ आख्याता-र्थेति ❀ तदर्थकालप्रकारकबोधे तन्निरासाय ❀ सङ्ख्येति ❀ स्वोक्तमाख्यातस्य कर्तृकर्मार्थकत्वं दर्शयितुं प्रसङ्गान्न्यायमतं निराकरोति ❀ नैयायिकानामित्यादिना ❀। ❀ अन्वयादिति ❀। एकपदोपात्तयोरेकार्थान्वयित्वस्य न्याय्यत्वादिति। आख्यातार्थकालप्रकारकबोधे प्रथमान्तपदजन्योपस्थितेरनपेक्षणादाह—❀ सङ्ख्येति।

'देवदत्तो भुक्त्वा व्रजति' इत्यादौ चन्द्रक्त्वार्थयोराख्यातार्थानन्वयादितराऽविशेषणत्वघटित

प्रभा

इव मुखे दृश्येते' इत्यादावेकवचनापत्तेश्च। यद्वा, 'चन्द्र इव मुखं दृश्यते' इत्यत्र सति सम्भवे उपमानधर्म-
गैव सादृश्यस्यौचित्येन दर्शनकर्मत्वेनान्वयबोधनाय तत्राप्यन्वये इष्टापत्तिरत आह—देवदत्त इति—
'भुक्त्वा' इत्यत्र क्रियायाः साध्यरूपत्वेनैव भानेन कर्मत्वादेरसम्भवेनौत्सर्गिकं प्रथमायाः एकवचनमेव।
'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति तु अव्ययत्वप्रयोजककृदतिरिक्तविषय एव, तथैवानुभवात्। तथाच
प्रथमान्तक्त्वान्तवाच्यभुजिक्रियायामन्वयवारणाय उक्तकार्यकारणभावघटकप्रथमान्तार्थे इतराविशेषणेति
विशेषणं देयम्। इतरेति स्वरूपकीर्तनम्, विशेषणतानाश्रयमात्रनिवेशेनोक्तदोषवारणात्। प्रकृते चन्द्र
इवार्थसादृश्यनिष्ठविशेष्यतानिरूपितप्रकारताश्रयः। क्त्वान्तार्थभोजनञ्च स्वोत्तरकालिकव्रजननिष्ठविशेष्यता-
निरूपितप्रकारताश्रय इति तयोर्विशेषणतानाश्रयप्रथमान्तार्थत्वाभावान्नातिप्रसङ्गः। ननु शाब्दबोधे तयोः
प्रकारताश्रयत्वेऽपि उपस्थितौ विशेषणतानाश्रयत्वस्यैव सत्त्वाद्दोषतादवस्थ्यम्, विशेषणत्वानाश्रयेत्यस्य विशे-
षणत्वमात्राश्रयत्वप्रकारकतात्पर्यीयविषयत्वानाश्रयप्रथमान्तार्थोपस्थितिः कारणमित्यत्र तात्पर्यात्।
पणत्वमात्राश्रयत्वप्रकारकतात्पर्यीयविषयत्वानाश्रयप्रथमान्तार्थोपस्थितिः कारणमित्यत्र तात्पर्यात्।
एतेन 'चैत्र एव पचति' इत्यादौ चैत्रस्य एवशब्दार्थान्ययोगव्यवच्छेदघटकान्यान्वयेऽन्वयेन विशेषणता-
श्रयतया दोषतादवस्थ्यमित्यपास्तम्। चैत्रे विशेष्यताश्रयत्वप्रकारकतात्पर्यीयविषयताया अपि सत्त्वेन विशेषण-
त्वमात्राश्रयत्वप्रकारकतात्पर्यीयविषयतानाश्रयत्वस्य भावात्। घटित इति—घटितत्वञ्च—स्वव्याप्यत्वस्वव्या-
पकत्वाभाववत्त्वोभयसम्बन्धेन स्वविशिष्टत्वम्। व्याप्यताया व्यापकतायाश्च नियामकः सम्बन्धो विषयित्व-
रूपः। स्वम्—घटकत्वेन चिकीर्षितम्।
अयम्भावः विषयि=ज्ञानादि। तथाच 'रामः' इत्याकारकं यत्र यत्र श्रावणप्रत्यक्षात्मकं ज्ञानं तत्र
तत्र ज्ञाने रेफो विषयितासम्बन्धेन वर्तते। रामशब्दोऽपि विषयितासम्बन्धेन वर्तते इति यत्र यत्र रामशब्द-
स्तत्र तत्र रेफ इति रेफादेर्व्यापकत्वम्, रामशब्दे च व्याप्यत्वम्। व्यापकत्वञ्च—व्यापकतावच्छेदकसम्बन्धेन

दर्पणव्याख्या

※ इतराविशेषणत्वेति ※। प्रथमान्तार्थेतरविशेषणत्वाघटित इत्यर्थः। तथाचेतरविशेषणत्वाऽनापन्नार्थविषयकोप-
स्थितिः कारणमित्यर्थः। एवञ्च, चन्द्र-भोजनादीनां प्रथमान्तार्थत्वेऽपि इवार्थसादृश्यव्रजनादिविशेषणत्वान्न व्यभिचार इति
भावः। ※ घटित इति ※। तदविषयकप्रतीत्यविषयः स इत्यविषय इत्यर्थः। तदविच्छन्नावच्छेदकत्वाकारणतामहविषय
इति यावत्। इतराविशेषणत्वञ्च = इतरविशेषणत्वतात्पर्याविषयत्वम्। नातश्चैत्र इव पचतीत्यादौ, घटे कपोतन्यायेन बोधे
चैत्रीयं सादृश्यमित्यवान्तरबोधाऽभावेन चैत्रस्येतरनिरूपितप्रकारताशून्यत्वरूपेतराऽविशेषणत्वसत्त्वेऽपि क्षतिः अविशेषणत्वे-
ऽपि विशेषणत्वतात्पर्यविषयत्वसत्त्वात्। तथाऽऽख्यातार्थसङ्ख्याप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति इतर-
विशेषणत्वतात्पर्यविषयार्थवृत्तिविशेष्यतासम्बन्धेन प्रथमान्तपदजन्योपस्थितिर्हेतुरिति पर्यवसितोऽर्थः।
'चैत्रेण सुप्यते' इत्यादिभावाऽऽख्यातस्थले, 'चैत्रकर्तृकः स्वापः' इत्यादिबोधाय योक्तविशेषणकथा तर्यन्तरे तदन-
न्वयाद् व्यभिचारपरिहाराय प्रथमान्तेति पदविशेषणम्। यद्येवमपि, 'चैत्र एव पचति न मैत्रः' इत्यादावन्ययोगव्यवच्छेद-
रूपैवकारपदार्थैकदेशेऽन्यत्वे चैत्रस्य विशेषणत्वात् तत्र संख्याऽन्वयाऽनुपपत्तिरिति विभाव्यते, तदा प्रथमान्तार्थो विशेषण-
त्वमात्रतात्पर्याविषयत्वेन विशेषणीयः। अवशिष्टांशस्यापि निवेशे प्रयोजनाऽभावादुक्तस्थले च चैत्रस्य मुख्यविशेष्यत्व-
विशेषणत्वाभ्यां तात्पर्यविषयत्वाच्च सङ्ख्याऽन्वयाऽनुपपत्तिरिति तन्मतनिष्कर्षः।

इत्यतिगौरवम् । इदमपि कर्तृकर्मणोराख्यातार्थत्वे मानमिति स्पष्टं भूषणे ।

प्रभा

स्वाधिकरणवृत्त्यत्यन्ताभावीयप्रतियोगिताऽनवच्छेदकधर्मवत्त्वम् । स्वम् = व्याप्यम् । तथाच—रेफाभाववति घटादिज्ञाने रामशब्दस्याभावेन स्वाभाववदवृत्तित्वरूपव्याप्यत्वस्य सत्त्वेन स्व ( रेफ ) व्याप्यत्वं रामे । स्व ( रेफ ) व्यापकत्वाभाववत्त्वमपि रामे स्वा ( रेफ ) धिकरणे राजादिज्ञाने रामशब्दस्य विषयितासम्बन्धेनाभावात् स्वाधिकरणवृत्त्यत्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वरूपव्यापकत्वस्य रामशब्देऽभावाल्लक्षणसमन्वयः ।

प्रकृते विशेषणत्वमात्राश्रयत्वप्रकारकतात्पर्याविषयीभूतप्रथमान्तार्थोपस्थितेः कारणत्वे उक्ततात्पर्याविषयत्वे घटकत्वम्, उक्तोपस्थितेश्च घटितत्वम् । यत्र यत्र तादृशोपस्थितिज्ञानं तत्र तत्र विषयितया तादृशतात्पर्याविषयत्वमिति तात्पर्याविषयत्वस्य व्यापकत्वम्, उपस्थितेश्च व्याप्यत्वमिति तादृशतात्पर्याविषयत्वव्याप्यत्वस्य, तद्व्यापकत्वाभावस्य च तादृशोपस्थितौ सत्त्वेन स्वव्याप्यत्वस्वव्यापकत्वाभाववत्त्वसम्बन्धाभ्यामुपस्थितौ तादृशतात्पर्याविषयत्वरूपस्येतराविशेषणत्वस्य वैशिष्ट्यसत्त्वेनोपस्थितेर्घटितत्वम् । एवमेव स्वविशिष्टत्वं घटकत्वम्, वैशिष्ट्यञ्च—स्वव्यापकत्व स्वव्याप्यत्वाभाववत्त्वोभयसम्बन्धेन । उक्तोभयसम्बन्धेन रामादिशब्दरूपघटितस्य वैशिष्ट्यं रेफादिरूपघटके स्वयमूहनीयम् । अतिगौरवमिति—अधिकगौरवमित्यर्थः । इदमपि—प्रदर्शितगौरवमपि । यद्वा, स्वमते परमतापेक्षया लाघवमिदमर्थः । मानमिति—कृतेराख्यातार्थत्वनिरसनद्वारा गौरवस्य मानत्वं बोध्यम् ।

ननु वैयाकरणनयेऽपि 'आख्यातार्थाश्रयनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोधम्प्रति प्रथमान्तपदजन्योपस्थितिः कारणम्' इति चन्द्रपदार्थस्यापि प्रथमान्तपदजन्योपस्थितिविषयतया चन्द्रपदार्थस्याऽऽख्यातार्थाऽऽश्रयेऽऽन्वयवारणाय प्रथमान्तार्थे इतराविशेषणत्वं विशेषणं देयमित्युभयोः साम्यमिति चेन्न, शाब्दिकमते प्रथमान्तार्थस्य विशेषणतयैवाऽऽख्यातार्थेऽन्वयेनैकत्र विशेषणतयाऽन्वितस्यापरत्र विशेषणत्वायोगादिति न्यायादेवेवार्थसादृश्ये विशेषणतयाऽन्वितस्य चन्द्रस्य तत्रान्वयाप्राप्तेरितराविशेषणत्वरूपविशेषणस्यानावश्यकत्वात् ।

दर्पणव्याख्या

⊛ अतिगौरवमिति ⊛ । अन्यलभ्यकृतौ शक्तिकल्पने सङ्ख्यान्वयबोधहेतूपस्थितौ विभिन्नपदजन्यत्वनिवेश एव गौरवम् । प्रथमान्तपदार्थस्य विशेषणत्वमात्रतात्पर्याऽविषयत्वेन निवेशो त्वतिगौरवमित्यर्थः । ⊛ इदमपीति ⊛ उपदर्शितकार्यकारणभावे दर्शितलाघवमपीत्यर्थः ।

यद्यपि तन्मते भावनान्वयिनी सङ्ख्यान्वयनियमादाख्यातेन भावनाऽविषयकसङ्ख्यान्वयबोधस्य कार्यजननाद्भावनान्वयबुद्धित्वस्य सङ्ख्यान्वयबुद्धित्वव्यापकतया व्याप्यधर्मावच्छिन्नसामग्र्या फले जननीये व्यापकधर्मावच्छिन्नसामग्र्या अपेक्षणाद् विशेषणत्वमात्रतात्पर्याऽविषयत्वविशेषणविशिष्टप्रथमान्तार्थोपस्थितिरूपायास्तस्यास्तत्राऽभावादेवोक्तस्थले व्यभिचाराप्रसक्तेन तद्व्यावृत्तये सङ्ख्यान्वयकारणतावच्छेदककोटावुक्तविशेषणप्रवेशाऽवसर, तथाऽपि कृतिशक्तिवादिमते उक्तस्थले तद्दोषनिवारणाय भावनान्वयबोधकारणतावच्छेदककोटावेवोक्तविशेषणवितरणप्रयुक्तगौरवम् । अस्मन्मते तु प्रथमान्तपदार्थस्याख्यातार्थे विशेषणतयैवान्वयेन चन्द्रादेरेकत्र विशेषणतयाऽन्वितस्य नैराकाङ्क्ष्येणाऽपरत्र विशेषणतयान्वयाऽयोगात्तन्निवारकविशेषणोपादानप्रयुक्तगौरवमित्यभिप्रेत्योक्तम् ⊛ इदमपीति ⊛ । अधिकमन्यत्रानुसन्धेयम् ।

कालस्तु व्यापारे विशेषणम्, तथाहि—'वर्त्तमाने लट्' ( पा० सू० ३।२।१२३ ) इत्यत्रा-ऽधिकाराद् धातोरिति लब्धम्। तच्च धात्वर्थं वदत् प्राधान्याद् व्यापारमेव ग्राहयतीति तत्रैव तदन्वयः। नच सङ्ख्यावत् कर्तृकर्मणोरेवान्वयः शङ्क्यः, अतीतभावनाके कर्त्तरि पचतीत्यापत्तेः,

प्रभा

आख्यातार्थकर्त्रादीनामन्वयं व्यवस्थाप्य तदर्थकालस्याप्यन्वयं व्यवस्थापयति—कालस्त्वित्यादिना— तच्च=धातुपदञ्च। वदत्=उपस्थापयत्। प्राधान्यात्=धातुजन्यशाब्दबोधे फलापेक्षया प्राधान्याद्=विशेष्य-त्वाद् व्यापारमेव ग्राहयति=बोधयति। इतीति—इतिर्हेतौ, विशेष्यतया भासमानत्वादित्यर्थः। प्राधान्या-दित्युक्त्या यन्मते कर्मप्रत्ययस्थले फलस्य प्राधान्यं तन्मते फले एवान्वय इति ध्वनितम्, तन्मते धातूनां फलावच्छिन्ने व्यापारे, व्यापारावच्छिन्ने फले च शक्त्या कर्मप्रत्यये फलस्यैव प्राधान्यात्। अधिश्रयणकाले समूहत्या-फलानुत्पत्तिदशायामपि फले वर्तमानत्वारोपेण 'पच्यते' इत्यस्योपपत्तिः। अधिश्रयणकाले समूहत्या-दोषेण 'पचति' इति प्रयोगवत्। नापि 'पक्ष्यति' इत्यापत्तिः, अतिदिश्यमानधर्मविरुद्धस्याश्रयधर्मप्रयुक्तकार्या-भावस्यातिदेशस्वभावसिद्धत्वात्। व्यापाराविगमे फलसत्त्वे 'अपाचि' इति तु फलस्य सत्त्वेऽपि तदुत्पत्ते-र्नाशात् विद्यमानध्वंसप्रतियोग्युत्पत्तिकत्वरूपभूतत्वस्य फले सत्त्वेनोपपन्नमिति नव्याः। अत एव कर्मा-ख्यातेऽपि व्यापारविशेष्यक एव बोध इति प्राञ्चः। तत्रैव=व्यापारे एव। तदन्वयः=कालान्वयः। नचेति—समानप्रत्ययोपात्तत्वात् सङ्ख्याया यथा धात्वर्थ-कर्तृकर्मणोरेवान्वयस्तथा कालस्यापि तत्रैवान्वयोऽस्त्वित्याशङ्क्याह—सङ्ख्यावदिति—नच धातो-रित्यस्य वर्त्तमानत्वे ऽर्थद्वारान्वयेन व्यापारे एवान्वयलाभ इति वाच्यम्, धातोरित्यस्य पञ्चम्यन्तत्वेन तादृशा-न्वयस्य वक्तुमशक्यत्वात्, आवृत्तौ मानाभावात्। कर्त्रादावन्वये दोषमाह—अतीतेति—व्यापारविगमेऽपि कर्तुर्वर्तमानत्वात्।

दर्पणव्याख्या

अत्राऽऽहुर्नव्याः। लाघवोपबृंहितोक्तयुक्तिकदम्बेनाऽऽख्यातस्य धर्मवाचकत्वसिद्धावुत्तरकालकल्पनागौरवं कारण-भावप्रयुक्तगौरवम्, निपातस्यापत्यधिकरणन्यायेनाकिञ्चित्करम्, फलमुखत्वात्। किञ्च, चन्द्रायणमाने आख्यातार्थसंख्याया-न्वयोपगम आवश्यकः। तत्र तदन्वयाऽनुपगमे साकाङ्क्षप्रयोजकधर्माऽलाभेन वाक्यस्याऽपरिपुष्टार्थतापत्तेः। कर्तृकर्मणोः सङ्ख्या-न्वयोपगम आवश्यकः। तत्र तदन्वयाऽनुपगमे ... दोषस्तेनोऽर्थानि। कर्तृकर्मणोः सङ्ख्या-वादौ तु सङ्ख्यादीनामयोग्यत्वादेवानन्वयेनाऽनतिप्रसङ्गात्। एवञ्च, नास्मन्मते दोषलेशोऽपीति। ⊛ व्यापारे इति ⊙ धात्वर्थ-व्यापारे इत्यर्थः।

व्यापारस्य विशेषणतां व्यवस्थाप्य कालस्यापि तां प्रतिपादयति ⊛ कालस्त्वित्यादिना⊛।

नन्वाख्यातस्य कालशक्तिपरिच्छेदकेषु "वर्तमाने लट्" ( पा० सू० ३।२।१२३ ) इत्यादिषु व्यापारवाचकपदानुपा-दानात् कथं कालस्य धात्वर्थव्यापारविशेषणतेत्यतस्तत्सूत्रप्रामाण्येनैव तां साधयति ⊛ तथाहीति ⊛। ⊛ तच ⊙ धातुपदं चेत्यर्थः। ⊛धात्वर्थमिति⊛ फलव्यापारोभयात्मकमित्यर्थः। 'सत्तायाम्' इत्याद्यर्थनिर्देशात्, भूवादिसूत्रप्रामाण्याच्चेति भावः। ⊛ वदत् ⊛ बोधयत्। 'सन् ब्राह्मणः' इतिवच्छता। ⊛ प्राधान्यात् ⊛ धातुजन्यबोधे विशेष्यतया भासमानत्वादित्यर्थः। प्राधान्यादित्युक्त्या यन्मते कर्माऽऽख्याते फलस्य प्राधान्यं तन्मते फल एवान्वय इति ध्वनितम्। ⊛ ग्राहयतीति ⊛ व्यापारमेवेत्येवकारेण फलव्यवच्छेदः। आख्यातार्थकालविशेष्यतया बोधयतीत्यर्थः। "गुणानाञ्च परार्थत्वात्" इति न्या-यात्, प्रत्ययार्थस्य साक्षात्प्रकृतिजन्यबोधविशेष्यान्वयित्वनियमाच्चेति भावः। ⊙ कर्तृकर्मणोरिति ⊛ समान-प्रत्ययोपात्तत्वप्रत्यासत्तेरिति भावः। ⊛ पचतीत्यापत्तेरिति ⊛। कर्तुर्विद्यमानत्वादिति भावः। एवमग्रेऽपि।

अपाक्षीदित्यनापत्तेश्च । पाकानारम्भदशायां कर्तृसत्त्वे पक्ष्यतीत्यनापत्तेश्च । नापि फले तदन्वयः, फलाऽनुत्पत्तिदशायां व्यापारसत्त्वे, पचतीत्यनापत्तेः, पक्ष्यतीत्यापत्तेश्चेत्यवधेयम् ।

नचाऽऽमवातजडीकृतकलेवरस्योत्थानाऽनुकूलयत्नसत्त्वादुत्तिष्ठतीति प्रयोगाऽऽपत्तिः, परयत्नस्या-

प्रभा

अनापत्तेश्चेति—कर्तुरतीतत्वाभावात् । नचेष्टापत्तिः, अनुभवविरोधात् ।

व्यापारे कालान्वयस्वीकारे दोषमाशङ्क्य निराचष्टे—नचामेति—आमो रोगविशेषस्तेन जडीकृतम्=स्तब्धीकृतं कलेवरम्=शरीरम् ( कले=शुक्रे वरम् = श्रेष्ठम् । 'हलदन्तात्' इति सप्तम्या अलुक् ) यस्य तस्येत्यर्थः । उत्थानेति—उत्थानम् = ऊर्ध्वदेशसंयोगस्तदनुकूलयत्नरूपव्यापारस्य सत्त्वेन तस्य च वर्तमानकालावच्छिन्नत्वेनोत्तिष्ठतीति प्रयोगापत्तिरित्यर्थः । फले कालान्वये तु फलस्य=उत्थानस्याभावान्नायं दोषः ।

परयत्नस्येति—यत्नो नाम—चेष्टाजनक आत्मवृत्तिर्गुणविशेषः । तेन सह वक्तृमनस स्वसंयुक्ताऽऽत्मसमवायरूपसन्निकर्षाभावेन अज्ञानात्=मानसप्रत्यक्षाविषयत्वात् । अप्रयोगादिति—शब्दप्रयोगे ज्ञानस्यैव प्रयोजकत्वात् । चेष्टादिनेति—'हिताहितप्राप्तिपरिहारार्था शरीरावयवहस्तादिक्रिया चेष्टा' तथा तदवगतौ परकीययत्नानुमितौ । चेष्टापक्षिका, तल्लिङ्गिका वा अनुमितिः । तथाहि—'परकीयचेष्टा, यत्नजन्या, चेष्टात्वात्, मच्चेष्टावत्' इति ।

यद्वा, 'अयमुत्थानानुकूलयत्नवान्, चेष्टाविशेषवत्त्वात् अहमिव, इति । चेष्टा यदि यत्नाभावेऽपि स्यात्तर्हि तज्जन्या न स्यादिति कार्यकारणभाव एवानुकूलस्तर्कः । आदिना तत्कथनतल्लेखयोः संग्रहः । अन्ये तु तदीययत्नो नोत्थानानुकूलः, किन्तु उत्थानोद्देश्यकः । अत एव 'उत्थानाय यतते' इत्येव प्रयोगः, न तु उत्तिष्ठतीति, अनुकूलताविशेषस्यैव फलव्यापारयोः संसर्गत्वाभ्युपगमात् । अत एव यागपाकाद्युद्देश्यककुण्डनिर्माण-

दर्पणव्याख्या

❀ नापि फल इति ❀

केचित्तु—फलव्यापारयोर्धातोः पृथक्शक्तौ, तयोरुद्देश्यविधेयभावेनाऽन्वयाऽऽपत्तिः । पृथगुपस्थितयोस्तथाऽन्वयस्यौत्सर्गिकत्वात् । तत्तद्धातुजन्यतादृशबोधस्य तथाऽन्वयबोधे प्रतिबन्धकताकल्पने तु गौरवम् । तस्मात् फलाऽवच्छिन्नव्यापारे, व्यापारावच्छिन्नफले च धातूनां शक्तिः । कर्तृकर्मार्थकतत्प्रत्ययसमभिव्याहारश्च तत्तद्बोधे नियामकः । गौरवञ्च प्रामाणिकत्वान्न दोषाय । इत्थञ्च कर्त्राऽऽख्याते व्यापारस्य प्राधान्यम्, कर्माख्याते फलस्य । यदा यस्य प्राधान्यं तदा तस्मिन् कालाऽन्वयः । सुप्तस्थधातुपदादुभयोरपि प्राधान्येनोपस्थितत्वाद्योक्तनियमावकाशः । फलानुत्पत्तिदशायामारब्धे पाके फले वर्तमानत्वारोपाद्वा, पच्यत इत्यस्योपपत्तिः, पक्वाऽवयवेऽपि समूहाऽऽरोपादधिश्रयणकाले पचतीति प्रयोगवत् । आरोपे च प्रतीतिरेव मानम् । व्यापारविगमे फलसत्त्वे 'अपाचि देवदत्तेन' इत्यादिप्रयोगास्तु भूतत्वस्योत्पत्तिघटितत्वादित्याहुः ।

तदपरे न क्षमन्ते, पृथगुपस्थितयोस्तथान्वयबोधाभ्युपगमे नानार्थहर्य्यादिपदोपस्थितानामश्वसूर्यादीनामप्युद्देश्यविधेयभावापत्तिरतो विभिन्नपदजन्योपस्थितेरेव तन्त्रता तत्राऽनुसर्तव्या । तद्भावाच्च प्रकृते कथं तदन्वयबोधाऽऽपादनम् । तादृशफलव्यापारयोर्धातुशक्तौ मानाभावो गौरवञ्च । विशिष्टधर्मस्य शक्यतावच्छेदकत्वे उक्तप्रयोगाणाम् आरोपेणोपपादनं त्वगतिकगतिरिति स्पष्टमेव विवेकिनाम् । एतदनुरोधेन भूतत्वस्योत्पत्तिघटितत्वाऽभ्युपगमे परमताऽनुसृतिरपीति ।

ज्ञानादप्रयोगात्। किञ्चिच्चेष्टादिना तदवगतौ च, अयमुत्तिष्ठति, शक्त्यभावात् फलन्तु न जायते

प्रभा

तण्डुलक्रयणादिदशायां न यजति पचतीत्यादिप्रयोगः। फलतदुद्देश्यकः कश्च तदनुकूलो व्यापार इत्यत्र वृद्धव्यवहार एव शरणम्।

तदपरे न क्षमन्ते, तथाहि—तदुद्देश्यकत्वस्य तदिच्छाधीनेच्छाविषयत्वरूपत्वेन उपायेच्छायाः फलेच्छाधीनत्वात्। उपायत्वञ्च—प्रयोजकत्वमेव। तथाच कुण्डनिर्माणतण्डुलक्रयणादिकालेऽपि यजति पचतीत्यादिप्रयोगः स्यात्। तस्मात् साक्षाज्जन्यजनकभाव एव फलव्यापारयोः सम्बन्ध इति तण्डुलक्रयणादीनां परम्परया विक्लित्तिजनकत्वेऽपि साक्षाज्जनकत्वाभावान्न तदानीं पचतीत्यादिप्रयोगः। प्रकृते उत्थानानुकूलयत्नस्य सत्त्वेऽपि कर्तृनिष्ठशक्तिरूपसहकारिकारणाभावादुत्थानानुत्पादेऽपि साक्षादुत्थानजनकस्य यत्नस्य सत्त्वेन उत्तिष्ठतीति प्रयोगस्येष्टत्वमेव। धात्वर्थत्वेनावगते फलेऽपि साध्यत्वस्य सत्त्वेन उद्देश्यत्वासम्भवात्, सिद्धत्वेन प्रतीयमानस्यैवोद्देश्यत्वदर्शनात्। नच तदानीमुत्थानोद्देश्यकत्वस्य यत्ने सत्त्वेऽपि जनकत्वस्याभावान्न तादृशप्रयोग इति वाच्यम्, अधिश्रयणादिकाले जनकताया असत्त्वेऽपि स्वरूपयोग्यत्वरूपजनकत्वमादाय पचतीत्यादिप्रयोगवदुत्तिष्ठतीत्यस्य दुर्वारत्वात्।

वस्तुतस्तु फलानुकूलयत्नमात्रधात्वर्थाभिप्रायेणोक्तप्रयोगापत्तेराशङ्का, प्रयत्नशक्तिचेष्टादिसमुदायस्य धात्वर्थविवक्षायामुत्तिष्ठतीति प्रयोगाभाव इति समाधानम्।

दर्पणव्याख्या

व्यापारे आख्यातार्थकालाऽन्वये दूषणमाशङ्क्य निराचष्टे ❀ नचेति ❀। ❀ यत्नस्यादिति ❀ पचरूपव्यापारस्य वर्तमानत्वेन विषयाबाधात्। मम तु तदानीं फलाऽनुत्पत्त्या न तादृशप्रयोगाऽऽपत्तिरित्यर्थः। ❀ अप्रयोगादिति ❀ ननु परयत्नस्य विजातीयमनःसंयोगाश्रयसमवायरूपहेत्वभावात्प्रत्यक्षत्वेऽपि चेष्टादिपक्षकेण तल्लिङ्गकेन वाऽनुमानेन तदवगतावुत्तिष्ठतीति प्रयोगाऽऽपत्तिर्दुःसमाधेयैवेत्याशङ्क्येष्टापत्त्या परिहरति ❀ किञ्चिच्चेष्टादिनेति ❀ यत्किञ्चिच्छरीरावयवक्रियेत्यर्थः। ❀ तदवगतौ ❀ यत्नानुमितौ। अनुमानप्रयोगश्चैवम्—देवदत्तीयचेष्टा प्रयत्नजन्या, चेष्टात्वात्, मच्चेष्टावत्। अथवा, अयमुत्थानाऽनुकूलयत्नवान्, विजातीयचेष्टावत्त्वात्, अहमिवेति। चेष्टाप्रयत्नयोः कार्यकारणभावश्च प्रकृतेऽनुकूलस्तर्कः। स्वाश्रयावच्छेद्यत्वस्य हेतुतावच्छेदकसम्बन्धत्वाच्च स्वरूपासिद्धिरपि।

परे तूक्तापत्तिमन्यथैव परिहरन्ति—तथाहि—आमवातजडीकृतकलेवरप्रयत्नस्योत्थानोद्देश्यकत्वेऽपि तदजनकत्वान्नोक्तप्रयोगापत्तिः। अत एव 'उत्थानाय यतते' इत्येव तत्र प्रयोगः। यागपाकाद्युद्देश्यककुण्डनिर्माणतण्डुलक्रयणादिदशायां 'यजति पचति' इत्यादिप्रयोगवारणाय स्वरूपसम्बन्धरूपप्रयोजकताविशेषस्यैव सम्बन्धताया अभ्युपेयत्वादिति।

तच्चिन्त्यम्, तदुद्देश्यकत्वं हि तदिच्छाऽधीनेच्छाविषयत्वम्, उपायेच्छायाः फलेच्छाधीनत्वात्। उपायत्वञ्च प्रयोजकत्वमेव। कथमन्यथा तत्रेच्छेति, प्रकृते यजतीत्यादिप्रयोगो दुर्वार एव। तस्मात् साक्षाज्जन्यजनकभाव एव फलव्यापारयोः सम्बन्ध इत्येवाभ्युपेयम्, तावतैवोक्तप्रयोगवारणात्। प्रकृते शक्तिरूपसहकारिकारणाभावेन तदनुत्पादेऽपि तदीययत्ने साक्षाज्जनकत्वस्य निराबाधत्वेनोत्तिष्ठतीति प्रयोगस्येष्टत्वात्, प्रकृतधात्वर्थतयाऽवगते तस्मिन् साध्यत्वेनैव सत्त्वेनोद्देश्यत्वस्य तदानीमसम्भवाच्च। एतदभिप्रेत्यैव सारकृता, 'उत्थानानुकूलयत्नसत्त्वे' इत्युक्तम्। अत एव पाकानुकूलप्रकृतधात्वर्थयत्नसत्त्वे पचतीत्येव प्रयोगोऽन्यदा तु 'पाकाय यतते' इति।

इति लोकप्रतीतेरिष्टत्वात् । एवञ्च तिङर्थो विशेषणमेव, भावनैव प्रधानम् । यद्यपि प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमन्यत्र दृष्टम्, तथाऽपि 'भावप्रधान-

प्रभा

एवञ्चेति—पूर्वोक्तयुक्तीनामवश्याश्रयणीयत्वे चेत्यर्थः । यद्वा, कालस्यापि विशेषणत्वसिद्धौ चेत्यर्थः । भावनैवेति—धात्वर्थव्यापार एवेत्यर्थः । एवपदेनात्र प्रत्ययार्थस्य प्राधान्यनिरासः । ननु भावनाया धात्वर्थत्वे तस्यास्तिङर्थकर्त्रादिकम्प्रति विशेषणत्वापत्तिः, 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोश्च प्रत्ययार्थः प्रधानम्' इत्यभियुक्तोक्तेः । नन्वेवं सङ्ख्याकालयोरपि प्राधान्यापत्तिः, तयोरपि प्रत्ययार्थत्वादिति चेन्न, 'क्रियाभेदाय कालः स्यात् सङ्ख्या सर्वस्य भेदिका' इति वृद्धोक्तेः सङ्ख्याकालातिरिक्तप्रत्ययार्थस्यैव प्राधान्यादित्याशङ्क्य निराकरोति—यद्यपीति । अन्यत्र=कृदाद्यन्ते ।

भावप्रधानमिति—आख्यातम्=तिङन्तम्, भावप्रधानम्=तिङर्थनिष्ठप्रकारतानिरूपितधात्वर्थनिष्ठविशेष्यताकबोधजनकमित्यर्थः । आख्यातं लक्ष्यम्, भावप्रधानत्वं लक्षणम् । अत्र भावपदेन फलव्यापारयोर्ग्रहणमिति कर्मतिङि फलस्य प्राधान्यमिति मतेऽपि न दोषः । नच कृदन्तानां भावप्रधानत्वात् तत्रातिप्रसङ्गः, तिङर्थनिष्ठप्रकारतानिरूपितविशेष्यताशालिभावार्थप्रतिपादकत्वम् आख्यातत्वमिति तदर्थात् । तेन 'काष्ठैः पाकः' 'पक्त्वा' इत्यादौ नातिप्रसङ्गः । पचति भवति, (पाको भवतीत्यर्थके) 'पश्य मृगो धावति' इत्यादौ च नाव्याप्तिः । भावप्रधान-

दर्पणव्याख्या

यस्तुतस्तु कृतिरूपव्यापारमात्रस्य धात्वर्थत्वविवक्षायामुत्तिष्ठतीति प्रयोगः । प्रयत्नसामर्थ्यचेष्टादिघटितस्य तस्य समुदायस्य तद्विवक्षायान्तु नेति सारकाराशयः, अत एव तदोत्थानाय यतते इति प्रयोगोऽपि सूपपाद इति बोध्यम् ।

उपसंहरति ❀ एवञ्चेति ❀ विशेषणमेवेत्येवकारेण तिङर्थस्य विशेष्यत्वव्यवच्छेदः ❀ भावनैवेति ❀ धात्वर्थभावनैवेत्यर्थः । अत्राप्येवशब्देन फलस्य तिङर्थकर्त्रादेश्च व्यवच्छेदः । प्रकृतिप्रत्ययार्थयोरिति व्युत्पत्तिविरोधमाशङ्कते ❀ यद्यपीति ❀ । ❀ अन्यत्र ❀ पचत्यादौ । ❀ दृष्टमिति ❀ तथाच प्रकृत्यर्थभावनायाः प्राधान्योपगमे तद्विरोध इति भावः । ❀ भावप्रधानमिति ❀ नामाऽऽख्यातोपसर्गनिपातभेदेनोद्दिष्टं चतुर्विधं पदं प्रकल्प्य नामाऽऽख्यातलक्षणप्रतिपादके इमे वाक्ये । अत्राऽऽख्यातं भावप्रधानमिति योजना । यथाश्रुते यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्

इत्यभियुक्तोक्तेः, शाब्दबोधे प्राङ्निर्दिष्टस्यैवोद्देश्यतया विवक्षितार्थत्वाभावात् । अत एव 'वृद्धिशब्दस्य प्राङ्निर्देशो मङ्गलार्थः' इत्याऽऽकरोक्तं सङ्गच्छते । एवमग्रेऽपि । आख्यातत्वावच्छिन्ने प्रधानभावार्थप्रतिपादकत्वरूपलक्षणतात्पर्यावधारणाय लक्षणवाक्यारुढशब्दमर्यादया प्रकृतपदद्वयार्थाभेदस्याऽधिकस्य भानेऽपि न क्षतिः । लक्ष्यताऽवच्छेदकञ्च तिङन्तत्वरूपाऽऽख्यातत्वम् । 'आख्यातमाख्यातेन' इत्यादौ तथैवाऽऽख्यातपदस्य रूढ्यवधारणात् । 'भावकालकारकसङ्ख्याश्चत्वारोऽर्था आख्यातस्य, तत्र भावः प्रधानम्' इति भट्टनिरुक्तभाष्याच्च । एतेन तिङः प्रधानभावार्थकत्वस्य प्रतिपादकमेव तदिति वदन्तः प्रत्युक्ताः ।

तच्छब्दप्रयोगस्य भावादिषु दृश्यत्वेऽकदा लिङा प्रतिपादनासम्भवाच्च । भावत्वं निष्पाद्यत्वम् । नातः कर्माऽऽख्यातस्य फलविशेष्यकबोधजनकत्वादिमते तत्राऽप्रसक्तिः । प्रधानप्रतिपादकत्वस्य नाममात्रे, भावप्रतिपादकत्वस्य भुजेत्यादिप्रातिपदिकेऽप्रसङ्गवारणाय विशिष्टमुपात्तम् ।

प्राधान्यप्रोक्तिरित्यत्र लक्षणप्रकृतिप्रत्ययार्थनिरूपितमेव । नातः 'काष्ठैः पाकः' इत्यादौ 'प्रत्ययार्थकरणित्व-

माख्यातं सत्त्वप्रधानानि नामानि' इति ( नि० अ० १ ख० १ ) निरुक्तात्, भूवादिसूत्रादिस्थ-
क्रियाप्राधान्यबोधकभाष्याच्च धात्वर्थभावनाप्राधान्यमध्यवसीयते ।

प्रभा

स्वमात्रन्तु न लक्षणम्, अव्याप्त्यतिव्याप्तिदोषग्रस्तत्वात् ।
सत्त्वप्रधानानीति—नामानि सत्त्वप्रधानानि । नामानि लक्ष्याणि, सत्त्वप्रधानानीति लक्षणम् । तत्र
नामानि कृदन्तप्रकृतिकविभक्त्यन्तानि । यद्वा, उपसर्गनिपातभिन्नानि सुबन्तानि । अत एव 'नामाख्यातोप-
सर्गनिपाताः' इति पदचतुष्टयविभागः सङ्गच्छते । सत्त्वम्=द्रव्यम्=लिङ्गाद्यन्वयि, तन्निष्ठमुख्यविशेष्यताकार्थोप-
स्थापकम् । मुख्यविशेष्यतानिवेशाच्च 'पचति' इत्यादौ तिङन्ते आश्रयत्व-सङ्ख्यानिष्ठप्रकारतानिरूपितविशेष्य-
कर्त्रादिनिष्ठविशेष्यताकबोधजनकत्वसत्त्वेऽपि नातिप्रसङ्गः ।
निरुक्तादिति—निरुक्ते हि 'चत्वार्य्याहुः पदजातानि—नामाख्यातोपसर्गनिपाताः । 'सत्त्वप्रधानं नाम
भावप्रधानमाख्यातम्' इत्युक्तम् । आख्यातम्=तिङन्तम्, न तु तिङ्मात्रम्, अत एव तन्निरुक्तभाष्ये 'भावकाल-
कारकसङ्ख्याश्चत्वारोऽर्था आख्यातस्य, तत्र 'भावः प्रधानम्' इत्युक्तिः सङ्गच्छते । एतेन 'भावप्रधानमा-
ख्यातम्' इति निरुक्ते भावपदेन भावनाऽपरपर्य्याया कृतिरेवाभिधीयते । तस्याश्च प्रथमान्तपदासमभिव्याहारे
प्राधान्यसत्त्वेन तिङा कृतेरभिधाने नैयायिकानामपि उक्तनिरुक्तेन विरुद्धयत इत्यपास्तम्, कारकस्याख्यात-
वाच्यत्वबोधकनिरुक्तभाष्यविरोधात् ।
भूवादिसूत्रादिस्थेति—तत्र हि 'का तर्हि इयं वाचोयुक्तिः' 'पचति भवति' 'त्वं पचसि भवति' 'पचपति

दर्पणव्याख्या

प्रकारतानिरूपितविशेष्यताशालिबोधजनके पाकादिनाम्न्यतिप्रसङ्गः । नवौत्सर्गिकैकवचनान्तभावविहितनाम्नाम्नापि सः,
तथाच तिङ्बोध्यार्थनिष्ठप्रकारतानिरूपितविशेष्यतातात्पर्यप्रतिपादकत्वं तत् पर्यवस्यति ।
इतराविशेषणत्वरूपं तु न तत्, पचति भवतीत्यादिवाक्यघटकपच्यायर्थक्रियायां तदसत्त्वेन पचतीत्याख्यातेऽ-
व्याप्तेः । क्त्वः पूर्वकालार्थकत्वस्य निराकरिष्यमाणत्वाद्योक्तलक्षणस्यालक्ष्येऽतिप्रसङ्गः । "कृदभिहितो भावो द्रव्यवत् प्रकाशते"
इति भाष्येण, पाक इत्यादाविव तस्य सत्त्वाऽतिदेशेन साध्यत्वरूपभावत्वाऽभावादेव नाऽतिप्रसङ्ग इति न सत् । यतः
साधुत्वान्वाख्यायकव्याकरणस्मृत्या यत्कृदर्थभावे लिङ्गाद्यन्वयेऽनुभवसिद्धस्तस्मिन्नेव तदतिदिश्यते । यथा पाक इत्यादौ
घञर्थभावे । क्त्वार्थे तु लिङ्गाद्यनुभवेन तत्र तदतिदेशविषयस्यान्याय्यत्वात्, अव्ययकृत्त्वेन तस्य धात्वर्थानुवादक-
त्वस्य वक्ष्यमाणत्वाच्च ।
तथाच भावप्रधानकत्वं तिङर्थनिष्ठप्रकारतानिरूपितविशेष्यताशालिभावप्रतिपादकत्वं पर्यवस्यति । एतेन, पचति
भवतीत्यादिवाक्यघटकाऽऽख्यातसंग्रहाय क्वचित् क्रियान्तरनिष्ठविशेष्यतानिरूपितविशेषणताभाववत्त्वं तत् । पच्याद्यर्थक्रियाया
भवत्यर्थविशेषणत्वेऽपि क्वचित्तदसमभिव्याहारे विशेष्यतयैव भानात् तत्रातिप्रसङ्ग इत्युक्तं निरस्तम् । उक्तापेक्षया प्रभाव-
घटितत्वेनास्य गुरुत्वात् । अग्रिमलक्षणे प्राधान्यस्य विशेष्यत्वरूपस्यैव वक्ष्यमाणतयाऽत्रापि तस्यैव न्याय्यत्वात् । तत्र
'भावप्रधानम्' इति भाष्येण मदुक्तार्थस्यैव लाभाच्च ।
꙳ सत्त्वप्रधानानीति ꙳ अत्रापि पूर्ववदुद्देश्यविधेयभावकल्पना । लक्ष्यतावच्छेदकं च कृदाद्यन्तप्रकृतिकवि-
भक्त्यन्तत्वरूपं नामत्वम् । प्रकृतिः, प्रत्ययः, विभक्तिरित्येतन्नाम, सत्ता, द्रव्यम्, लिङ्गम्, संख्या, च नामार्थ इति वद्भाष्यात् ।
'क्रियाप्रधानमाख्यातं सत्त्वप्रधानं नाम । यतः क्रियां पृष्टस्तिङाचष्टे—किं करोति ?, पचतीति । द्रव्यं पृष्टः कृताऽऽचष्टे—कतरो
देवदत्तः, यः पाचक' इति 'प्रशंसायाम्' इति सूत्रस्थमहाभाष्याच्च । तत्र कृतेत्यस्य तत्प्रकृतिकसुबन्तेनेत्यर्थः । कृता द्रव्या-

अपिच, आख्यातार्थप्राधान्ये तस्य देवदत्तादिभिः सममभेदान्वयात् प्रथमान्तस्य प्राधान्या-

प्रभा

भवति' इति सैषा बाधोयुक्तिः पच्यादिक्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति' इत्युक्तम्। अत्र 'पचति भवति'
इत्यस्य पाककर्तृका भवनक्रिया, 'त्वं पचसि भवति' इत्यस्य त्वदभिन्नाश्रयनिष्ठपाकाभिन्नाश्रयिका भवनक्रिया,
'पक्ष्यति भवति' इत्यस्य च भविष्यत्कालिकपाकाभिन्नाश्रयिका भवनक्रियेति बोधः। प्रथमान्तार्थस्य मुख्य-
त्वे तु उक्तबोधासिद्धिः। 'त्वं पचसि भवति' इत्यत्र भवसीत्यस्यापत्तिश्च, युष्मदर्थस्यैव प्राधान्येन भवतिक्रियाः
कर्तृत्वापत्तेः। मन्मते तु पाकक्रियाया एव प्राधान्यात् 'भवति' इति प्रथमपुरुषोपपत्तिः। नच 'पक्ष्यति भवति'
इत्यसम्भवः, भविष्यत्कालिकपाकक्रियाया वर्तमानकालिकभवनक्रियायाः कर्तृत्वासम्भवादिति वाच्यम्,
भविष्यन्ती पाकक्रिया सूक्ष्मरूपेण भवतीत्यर्थात्, बौद्धभविष्यत्पाकक्रियायास्तदानीमपि सत्त्वाच्च।

अत्रेदं बोध्यम्—कालकर्त्रादिनिरूपिता या शक्तिः सा निरूपकतासम्बन्धेन कालाद्यर्थे आश्रयतासम्ब-
न्धेन च लट्त्वाद्यवच्छिन्ने शब्दे। तत्र वर्तमानत्वम्—न 'प्रारब्धापरिसमाप्तक्रियाधिकरणदिवसादिकाल-
वृत्तित्वरूपम्', व्यापारविगमेऽपि तद्दिनमादाय 'पचति' इत्यस्यापत्तेः। किन्तु 'पचति' इत्यादिशब्दप्रयोगा-
धिकरणकालवृत्तित्वरूपमिति न गतदिनमादाय 'पचति' इत्यस्य प्रयोगः। एवं विद्यमानध्वंसप्रतियोग्युत्पत्ति-
कत्वरूपातीतत्वे, वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वरूपे भविष्यत्वे च तत्तच्छब्दप्रयोगाधिकरणकालवृत्ति
त्वरूपमेव वर्तमानत्वं माह्यम्। एवं 'पचति' इत्याद्याख्यातजन्या या वर्तमानत्वप्रकारिका क्रियाविशेष्यिका
प्रतीतिस्तदीया या पचतीत्यादिशब्दप्रयोगाधिकरणकालवृत्तिविषयता तादृशविषयताश्रयक्रियात्वं वर्तमानका-
लिकक्रियात्वम्। अत एव पाकान्निवृत्तेऽपि कर्तरि तदीयव्यापारे वर्तमानत्वभ्रमेण 'पचति चैत्रः' इति
व्यवहारस्योपपत्तिः। भूतत्वादिघटकवर्तमानत्वस्य ध्वंसप्रागभावयोरन्वयः। वर्तमानत्वप्रकारकक्रियाविशेष्यक-
प्रतीतिविषयताया वर्तमानकालिकत्वादेव कृष्णजन्मादिवर्णने 'श्रीकृष्णो विहरति' इत्यादिप्रयोगाणामुपपत्तिः।
एवञ्च भविष्यत्वादिघटकवर्तमानत्वमपि तत्तच्छब्दप्रयोगाधिकरणक्षणवृत्तित्वप्रकारकज्ञानविषयत्वरूपं
बोध्यम्। तेन भविष्यत्पाकाभावेऽपि पक्ष्यतीति प्रयोगसिद्धिः। ननु न्यायादिमतेऽपि प्रथमान्तपदासमभिव्याहारे
प्रत्ययार्थकृतिरूपभावनायाः प्राधान्यस्यानुभवसिद्धत्वात् पूर्वोक्तनिरुक्तभाष्योपपत्तिर्भविष्यति। एवं भूवादि-
सूत्रस्थभाष्यस्यापि भवनक्रियाकर्तृविक्लित्त्यनुकूलव्यापारानुकूलकृतिरित्यर्थाश्रयणेन विरोधाभाव इत्यत आह—
अपिचेति।

अभेदान्वयादिति—तिङर्थाऽऽश्रयस्य प्रथमान्तार्थे मृगादावभेदेनान्वयादित्यर्थः। अभेदान्वयोक्तिः स्व-

दर्पणव्याख्या

ऽभिधानेऽपि, 'न केवलाः' इति न्यायेन केवलस्य प्रयोगाऽनर्हत्वात्, निरुक्तभाष्यस्थविभक्तिपदस्वारस्याच्च। व्युत्पत्तिपक्षे
लभ्यं चेदम्। नातोऽव्युत्पत्तिपक्षे नामाऽऽदिष्वतिप्रसङ्गः।

लक्षणमाह ❀सत्त्वप्रधानानीति❀ सत्त्वम् = द्रव्यं वक्ष्यमाणलक्षणं तत्प्रधानं यत्रेति विग्रहाल्लिङ्गादिनिष्ठप्रकार
निरूपितविशेष्यताशाल्यर्थप्रतिपादकत्वं नामलक्षणमित्यर्थः। विशेष्याऽर्थकत्वस्य निपाताऽऽख्यातादावतिप्रसक्तत्वात्
रणाय प्रकारतानिरूपितत्वान्तं विशेषणम्। व्यक्तिबोधस्य धर्मविषयकत्वनियमेन जातिप्रकारतानिरूपितत्वस्यातिप्रसङ्ग
वारकत्वात्तदनुपादानम्। लक्ष्यतावच्छेदकाऽनाक्रान्तेषु यादृच्छिकेष्वतिप्रसङ्गस्तु लक्षणे तद्व्यतिरिक्तत्वविशेषणेनैव प
हरणीयः। एवं धात्वर्थाऽनुवादकप्रत्ययान्तेष्वप्रसङ्गोऽपि लक्ष्यतावच्छेदकसंकोचेनैव परिहार्यः। तत्र नामत्वव्यवहारो
स्वाद्यन्तत्वनिबन्धनो भाष्य इति तद्भावः। उपसर्गादिलक्षणं वक्ष्यते। ❀ भूवादीति ❀।

पत्तिः । तथाच, 'पश्य मृगो धावति' इत्यत्र भाष्यसिद्धैकवाक्यता न स्यात्,

प्रभा

वासनाभिप्रायेण, तन्मते एव तिङ आश्रयार्थकत्वात्। नैयायिकनये तु कृतिरेव तिङर्थः। तस्याश्चाऽऽश्रयतासम्ब-
न्धेन, समवायसम्बन्धेन वा प्रथमान्तार्थेऽन्वयः। उभयमतेऽपि भाष्यसिद्धैकवाक्यत्वानुपपत्तिरस्त्येव।

तथाहि—'कर्मणा यमभिप्रैति' (१-४-३२) इति सूत्रे क्रियाग्रहणमपि कर्त्तव्यम्, इहापि यथा स्यात्
'श्राद्धाय निगह्नुते' 'युद्धाय संनह्यते' 'पत्ये शेते' इति, तर्हि वक्तव्यम्, न वक्तव्यम्, कथं क्रियां हि नाम लोके
कर्मेत्युपचरन्ति। कां क्रियां करिष्यसि। किं कर्म करिष्यसीति, एवमपि कर्त्तव्यम्। कृत्रिमाकृत्रिमयोः कृत्रिमे
कर्मसम्प्रत्ययो भवति। क्रियाऽपि कृत्रिमं कर्म। न सिद्ध्यति। 'कर्तुरीप्सिततमं कर्म' इत्युच्यते। कथन्नाम
क्रियया क्रिया ईप्सिततमा स्यात्। क्रियाऽपि क्रियया ईप्सिततमा भवति। कया क्रियया? संदर्शनक्रियया
प्रार्थयतिक्रियया, अध्यवस्यतिक्रियया च' इत्युक्तं भाष्यकृता। एवञ्च 'सन्दर्शनक्रियया' इत्युक्त्या धावनक्रियायाः
दर्शनक्रियाम्प्रति कर्मत्वमुक्तप्रायमिति 'पश्य मृगो धावति' इति वाक्यं मृगकर्तृकधावनकर्मकदर्शनपरत्वेन
भाष्यकृतामभिप्रेतमिति प्रतीयते। तदुक्तं हरिणाऽपि—

'सुबन्तं हि यथाऽनेकं तिङन्तस्य विशेषणम्।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्॥' इति॥

न तु भाष्यकृता 'पश्य मृगो धावति' इत्यस्यैकवाक्यत्वं कुत्रापि कण्ठरवेणोक्तम्। तदुक्तं भाष्यसिद्धेति।
एकवाक्यता न स्यादिति—वायमते धावनानुकूलकृतिमान्मृगः, 'दर्शनाश्रयत्वम्' इत्येव बोधः स्यात्।
धावनस्य कृतौ विशेषणतया 'एकत्र विशेषणत्वेनान्वितस्यापरत्र विशेषणत्वायोगात्' दर्शनविशेषणता न स्यादि-
त्येकवाक्यताभङ्गः स्पष्ट एवेति भावः। पदयोरेकवाक्यत्वञ्च—'साक्षात् परम्परया वा स्वार्थान्वितापरार्थ-
बोधकत्वसम्बन्धेन परस्परविशिष्टत्वम्'।

यद्वा, 'स्वघटकमुख्यविशेष्यतायोग्यक्रियाविषयकबोधजनकत्वप्रकारकतात्पर्यीयविशेष्यतावत्पदविशिष्ट-
भिन्न यन्मुख्यविशेष्यतायोग्यक्रियाविषयकबोधजनकत्वप्रकारकतात्पर्यीयविशेष्यतावत्पदं तादृशपदद्वयाघटितत्वे
सति परस्परनिरूप्यनिरूपकभावापन्नविषयताप्रयोजकपदाघटितत्वमेकवाक्यत्वम्'। पदवैशिष्ट्यञ्च—स्वघटकत्व
—स्वप्रयोज्यविषयताप्रयोजकत्वैतदुभयसम्बन्धेन। 'देवदत्तो ग्रामं गच्छति' इत्यत्र मुख्यविशे-
ष्यानुपूर्वीमत्त्व

दर्पणव्याख्या

इत्थं हि तत्र भाष्यम्—'का तर्हीयं वाचोयुक्तिः 'पचति भवति' 'त्वं पचसि भवसि' पश्यति भवतीति।
सैषा 'वाचोयुक्तिः', पचादिक्रिया भवतिक्रियायाः कर्म्यो भवन्ति" इति। तेन धाऽऽहत्यैव पचाद्यर्थक्रियाकर्तृक-
भवनक्रियायाः प्राधान्यं प्रतिपाद्यते। धात्वर्थक्रियाया आख्यातार्थविशेषणत्वाभ्युपगमे तु स्वस्वार्थविरुद्धत्वेन पदार्थान्तरे
विशेषणतयाऽन्वये नैराकाङ्क्ष्येण भवत्यर्थक्रियायामाख्यातार्थविशेषणपचादिक्रियाणामन्वयाऽसम्भवेन तद्विरोधोऽप्रतिरोध
एव स्यादिति भावः। सूत्रादीत्यादिना "प्रशंसायाम्" इति सूत्रपरिग्रहः।

ननु "भावप्रधानमाख्यातम्" इति निरुक्तेन तिङन्ते भावनाऽपरपर्यायभावप्राधान्यं प्रतिपाद्यते। सा च नैयायिक-
मते कर्त्राख्याते कर्तृत्वं कृतिः, कर्माख्याते कर्मत्वं फलम्, तन्निरूपिताऽऽश्रयत्वं वा। तैः सङ्ख्याकालातिरिक्ताऽऽख्यातार्थस्य
भावनापदव्यपदेश्यत्वोपगमात्। भावाऽऽख्याते तु धात्वर्थव्यापार एवाऽनुवादकत्वात् तदाख्यातस्य। प्राधान्यं च तस्याः
प्रकृत्यर्थापेक्षम्।

समानप्रत्ययोपात्तत्वप्रत्यासत्त्या क... ...र्थं इति वदतां मीमांसकानामेतदपि भाष्यं मूलम्। तत्र लडाद्यर्थ-

प्रथमान्तमृगस्य धावनक्रियाविशेष्यस्य दृशिक्रियायां कर्मत्वापत्तौ द्वितीयापत्तेः।

प्रभा

ष्यतायोग्यक्रियाविषयकबोधजनकत्वप्रकारकं तात्पर्यम्—'गच्छतिपदं मुख्यविशेष्यतायोग्यगमनक्रियाविषयकबोधकम्भवतु' इत्याकारकतात्पर्यीयविशेष्यतावत्पदं गच्छतिपदं तद्विशिष्टं पदन्तदेव। यतः स्व (गच्छति) वृत्तिरानुपूर्वी गच्छतित्वरूपा तद्वत्त्वं तत्रैव गच्छतिपदे एव। स्व (गच्छति) प्रयोज्यविषयता गमननिष्ठा तत्प्रयोजकत्वमपि तत्रैवेति गच्छतिपदविशिष्टं गच्छतिपदमेव, तद्भिन्नं मुख्यविशेष्यतायोग्यक्रियाविषयकबोधजनकत्वप्रकारकतात्पर्यीयविशेष्यतावत्पदं 'पचति देवदत्त.' इतिवाक्यघटकं पचतिपदं तादृशपदद्वयाघटितत्वं 'देवदत्तो ग्रामं गच्छति' इत्यस्य। स्वघटकपदप्रयोज्यविषयत्वानिरूपितविषयताप्रयोजकं पदं घटादिपदं तदघटितत्वमपि 'देवदत्तो ग्रामं गच्छति' इति वाक्ये।

'ओदनं पच तव भविष्यति' इत्यस्य तु नैकवाक्यत्वम्—पचपदविशिष्टं पचपदं तद्भिन्नं भविष्यतिपदमिति तादृशपचपदभविष्यतीतिपदद्वयघटितत्वमेव तत्र। 'ओदनं पच तव' इत्यस्यापि नैकवाक्यत्वम्। स्वघटकपदप्रयोज्यविषयत्वानिरूपितविषयताप्रयोजकं पदं तवपदं तद्घटितत्वं तत्र नास्तीति। 'पश्य मृगो धावति' इत्यत्रैकवाक्यत्वमुपपन्नम्, धावनक्रियायां तादृशतात्पर्यीयविशेष्यता नास्तीति तादृशं पदं पश्यपदं तद्विशिष्टं तदेव तद्भिन्नं तादृशं पदमुदासीनं न तु धावतिपदम्, तदर्थस्य दर्शनक्रियायां विशेषणत्वान्मुख्यविशेष्यत्वाभावात्‌ एवं 'पचति भवति' इत्यादावप्येकवाक्यत्वं बोध्यम्। विच्छिद्यपाठे साकाङ्क्षत्वे सति एकार्थं (परस्परनिरूप्यनिरूपकभावापन्न) प्रतिपादकत्वमेकवाक्यत्वमित्यर्थकम् 'अर्थैक्यादेकं वाक्यं साकाङ्क्षञ्चेद्विभागे स्यात्' इति जैमिनिसूत्रमपि तदर्थकमेव।

प्रथमान्तमृगस्येति—प्रथमान्तमृगपदेनोपस्थितस्येत्यर्थः। एतेन प्रथमान्तस्यानन्वयादिदमसङ्गतमित्यपास्तम्।

द्वितीयापत्तेरिति—धावनजनककृतिमान् मृगकर्मकदर्शनाश्रयस्त्वमित्यर्थे 'पश्य मृगं धावति' इति

दर्पणव्याख्या

कालान्वयोपगमे तु तदपेक्षमपि। उक्तभाष्येऽपि क्रियापदार्थस्तत्सम्मतभावनैव। अत एव "क्रियां पृष्टस्तिङाऽऽचष्टे" इत्येवोक्तम्, न तु तिङन्तेनेति।

कृत्यादिरूपभावनाया आख्यातार्थत्वे मानं तु भूवादिसूत्रस्थम् "कथं ज्ञायतेऽयं प्रकृत्यर्थः अयं प्रत्ययार्थः" इति प्रश्नकेऽन्वयव्यतिरेकाभ्यां शक्तिग्राहकम्—"इह पचतीत्युक्ते कश्चिच्छब्दः श्रूयते, पच्शब्दश्चकारान्त अतिश्च प्रत्ययः। श्रूयते प्रथमार्थोऽपि कश्चिद् गम्यते, विक्लित्तिः, कर्तृत्वम्, एकत्वम्। 'पठति' इत्युक्ते कश्चिच्छब्दो हीयते, कश्चिदुपजायते, कश्चिदन्वयी। पच्शब्दो हीयते, पठ्शब्द उपजायते, अतिशब्दश्चान्वयी। अर्थोऽपि कश्चिद्धीयते, कश्चिदुपजायते, कश्चिदन्वयी। विक्लित्तिर्हीयते, पठिक्रियोपजायते, कर्तृत्वमेकत्वं चान्वयि। तेन मन्यामहे यः शब्दो हीयते यस्याऽसावर्थो योऽर्थो हीयते, यः शब्द उपजायते तस्याऽसावर्थो योऽर्थ उपजायते, यः शब्दोऽन्वयी तस्याऽसावर्थो योऽर्थोऽन्वयी" इति भाष्यम्। तत्राऽप्रत्ययस्य कैश्चित्पूर्वाचार्यैः प्रकल्पनाद्, अतिश्च प्रत्यय इत्युक्तमिति कैयटः। 'पच्यते' 'पठ्यते' इत्यादावप्युक्तान्वयव्यतिरेकोदेशे कर्मत्वस्याप्याख्यातार्थत्वं न्यायसाम्यात् तत एवाऽवधार्यते। किञ्च, भावप्रधानम्" इति निरुक्तं तद्भाष्यस्वरसात् सकलकारकसङ्ख्याविशिष्टभावनाया धात्वर्थत्वमाश्रित्य प्रवृत्तम्। अत एव, नामलक्षणनिर्वचनेन कारकस्य तत्र नामार्थत्वेनोल्लेखस्य धातुलभ्यत्वेन नामार्थत्वाभावादिति तदाशयात्।

ननु रूपसूत्रस्थभाष्यप्रामाण्यात् क्रियाया एकत्वसत्त्वेऽपि द्वित्वाऽऽदिसत्त्वे मानाऽभावात् कथं तयोस्तत्तितिरिति

## दर्पणव्याख्या

कालसङ्ख्ययोर्द्योत्यत्ववत् कारकस्याऽ
वाच्यम्, परे त्वित्यादिना वक्ष्यमाणरीत्या कारकगतायास्तस्यास्तत्राऽऽरोपसम्भवात्। व्यतिरिक्तपदार्थस्य
पि द्योत्यत्वम्, न्यायसाम्यात्। तस्य प्रत्ययार्थत्वोपगमे 'पाचकः' 'पक्तः' इत्यादाविव प्राधान्यापत्तेः। लिङ्गस्य वाच्यतापक्ष
विशेषणतया द्योत्यत्वस्यैव सन्नत्वाच्च। अत एव "स्त्रियाम्" इति सूत्रे भाष्ये प्राधान्याऽऽपत्तिभिया
उपेक्षितः। वाच्यस्याऽपि प्रकृत्यर्थाविशेषणत्वे तदसङ्गतिः स्पष्टैव।
प्रचोक्तकल्पे 'ग्रामं गच्छति' इत्यत्र कर्मद्योतकद्वासोरपादानादिकारकविशिष्टक्रियाबोधाऽऽपत्तिः। पञ्चम्यादिरूप-
समभिव्याहृतद्वितीयादिविभक्तिश्च द्योतिका, अन्येषां त्वन्याः। नहि स्वप्रकृतिकप्रत्ययत्वमेव स्वार्थद्योतकतायां तन्त्रम्,
उपसर्गाणां तदनापत्तेः। किन्तु, स्वसमभिव्याहृतप्रत्ययनिपातान्यतरत्वम्। तच्च तण्डुलादिपदोत्तरविभक्तेरप्यक्षतम्।
प्रन्यस्य संख्याऽविशेषितस्य तस्ये नाम्नः सङ्ख्यामानाऽऽपत्त्या तदर्थकत्वमावश्यकमिति तद्भावः। अत एव "भावकाल-
कारकसङ्ख्याश्चत्वारोऽर्था आख्यातस्य" इति भाष्यस्थकारकपदस्याऽसङ्कुचितवृत्तिताऽपि सङ्गच्छते।
यदि धात्वन्यप्रकृतिकविभक्तेरन्यप्रकृत्यर्थद्योतकतायाः क्वाप्यदृष्टचरत्वाल्लोकाऽऽदायवर्णनं सामीप इति निभाव्यते,
तदापि सङ्ख्याकालकर्तृकर्मकारकविशिष्टक्रियाया धात्वर्थत्वमादाय तत्प्रवृत्तिः, आख्यातस्यैव तादृशक्रियाद्योतकतासम्भवात्।
प्रचास्त्वेवमेवाऽऽशयः, वाच्यताकल्पोक्तकार्यकारणभावकल्पनप्रयुक्तलाघवस्योपोद्बलकत्वादिति वाच्यम्, यत्
शास्त्रमतं प्रक्रियादशायां चक्षुःश्रुत्युक्तिविषयतैस्याश्रयितुमशक्यम्, प्रागेव ■ प्रकृतिप्रत्ययाऽर्थविवेचनचतुरैराक्षपादैः।
तथाहि—कारकविशिष्टक्रियाया धात्वर्थत्वे 'क्तः कर्मणि' इति विधिवैयर्थ्यापत्तिः। नच तस्या द्योतकत्वप्रतिपादकता,
धातुआदेरपि तथात्वाऽऽपत्त्या तत्राऽपि कर्त्रादीनां क्रियाविशेषणतया भानापत्तेः।
किञ्च, 'चैत्रौ पचतः' इत्यादौ चैत्रादिगतसङ्ख्यायास्तत्रारोपे मानाभावः, वाचकतामते कर्त्रांशे तद्भानोपगमेन
प्रयोगप्रामाण्योपपत्तावप्रामाण्याऽभ्युपगमस्याऽन्याय्यत्वात्, स्वाश्रयाऽऽधेयत्वसम्बन्धेन द्वित्वादेस्तत्र सत्वेऽप्यन्यायत्वक-
तया विशेषणत्वाऽभावेन तद्वैशिष्ट्यस्य तत्राऽसम्भवाच्च। नहि द्वित्वाश्रयाश्रितं घटाऽऽदिरूपं क्रिया वा, द्वे इति व्यवह्रि-
यते। अधिकमग्रे वक्ष्यते।
किञ्च, कर्तृकर्मणोः पदार्थैकदेशतया तत्र देवदत्तादीनामन्वयाऽसम्भव, "पदार्थः पदार्थेनाऽन्वेति" इति
व्युत्पत्तेः। तदन्वयाऽभ्युपगमेऽपि धात्वर्थे ऽभेदेन विशेषणतया स्तोकादिपदनपुंसकत्वाऽऽपत्तिश्च। अपिच, क्रियाविशेषण-
त्वेनोपस्थितस्य कर्तृविशेषेणाऽऽकाङ्क्षाविरहात् पचतीत्युक्ते, कः कीदृगिति प्रश्नाऽनुपपत्तिः। वक्ष्यति हि ग्रन्थकृत्—
'नहि गुणभूतः कर्ता निर्भेदं स्वाङ्गत्वेन ग्रहीतुमलम्' इति। अत एतत्प्रामाण्यात् प्रत्ययवाच्यत्वम्, कर्त्रंशे प्रत्ययार्थविशेषणं
चेति गर्भमन्तः परास्ता', प्रत्ययस्य द्योतकतायामेव तन्नियमस्य दर्शितत्वात्, प्रत्ययार्थप्राधान्यस्यैव ततो लाभाच्च।
नच भावनायाः प्रत्ययवाच्यतापक्षेऽप्युक्तप्रश्नाऽनुपपत्तिर्दुःसमाधेयैवेति वाच्यम्, शक्तिभ्रमाल्लक्षणया चोपस्थि-
तस्य कर्तुः साकाङ्क्षत्वसम्भवात्।
किञ्च, 'प्रत्ययानां प्रकृत्यर्थाऽन्वितस्वार्थबोधकत्वम्' इति व्युत्पत्तिसिद्धविभक्त्यर्थसङ्ख्याप्रकारकबोधं प्रति विशेष्य-
तया प्रकृतिजन्योपस्थितेर्हेतुत्वस्य कर्त्राद्यभावेन सङ्ख्याऽन्वयाऽसम्भवः। आख्यातार्थसङ्ख्याप्रकारकबोधे आख्यातार्थक-
र्तृकर्मोपस्थितेर्हेतुत्वकल्पनमप्याग्रहमूलकमेव, पदार्थयोराधाराधेयभावेनाऽन्वये विभिन्नपदजन्योपस्थितेस्तन्त्रत्वात्।
विभक्त्यर्थकर्तृलिङ्गानन्वयिनोऽद्रव्यतया तत्र सङ्ख्यान्वयासम्भवात्, "गुणानाञ्च परार्थत्वात्" इति न्यायाच्च। सन्मते
अयोग्यतया तस्याः स्वप्रकृत्यर्थानन्वयेऽपि प्रकृत्यर्थान्वयनियमोऽक्षत एव, "अगुणत्वे विशेषोऽप्यवसायकरः"
इति न्यायात्।
किञ्चाऽऽख्यातस्य कर्त्रर्थकत्वे राजसम्बन्धिपुरुषाऽभिन्नकर्तृकं गमनमित्यभिप्रायेण, 'राज्ञः पुरुषो गच्छति' इतिवत्
स्वस्वामिभावादिसम्बन्धेन राज्ञः कर्तृत्वेन विवक्षया 'राजा पुरुषो गच्छति' इति प्रयोगाऽऽपत्तिः। नच तत्र षष्ठीप्रसक्तिः,

## दर्पणव्याख्या

तदर्थस्य प्रातिपदिकार्थविशेष्यतया विवक्षायामेव तत्प्रसरात्। व्यक्तीभविष्यति चैतदुपरिष्टात्। आख्यातार्थकर्तुर्नामार्थत्वेन "नामार्थधात्वर्थयोः" इति व्युत्पत्तिविषयताया अप्यभावात्।

नच तथापि चैत्रस्य पाकानुकूला कृतिरिति 'चैत्रस्य पचति' इति प्रयोगापत्तिरिति वाच्यम्, षष्ठ्यर्थस्य नामार्थसाकाङ्क्षतयाऽऽख्यातार्थकृतेश्च प्रथमान्तार्थसाकाङ्क्षतया परस्पराकाङ्क्षाविरहात्, "गुरुविप्रतपस्विदुर्गतानाम्" इत्यादाविव पाकादिसम्बन्धितया चैत्रादिविवक्षायां षष्ठ्यन्तप्रयोगस्य सर्वैरेवोपगमाच्च। तस्माद्धात्वर्थक्रियाया आख्यातार्थं प्रति प्राधान्ये निरुक्तमानोपन्यसनं मुधैवेति कोविदो विदाङ्कुर्वन्तु।

पचतिभवतीत्यादौ पाकानुकूलाऽऽख्यातार्थकृतौ भावनाश्रयत्वरूपभवतीति तिङन्तार्थभावनाऽन्वयोपगमेन पाकविशिष्टकृतौ भवनकर्तृत्वेऽवगते तद्विशेषणपच्यर्थक्रियायामपि तल्लाभात् 'पचादयः क्रियाः भवतिक्रियायाः कर्त्र्यो भवन्ति' भाष्यस्यादिपदस्य हेतुपरतया तेन व्यापाराऽर्थरूपचादिशब्दस्य समासे पच्याद्यर्थहेतव क्रियाः कृत्यात्मकव्यापारभवनक्रियानिरूपितकर्तृत्ववत्यो भवन्तीत्यर्थस्य तस्माल्लाभाद् वा तादृशैकवाक्यत्वस्याऽस्माभिरभ्युपगमाच्च भूवादिसूत्रस्थभाष्यविरोधोऽपि। तादृशभाष्यप्रामाण्यादेव च भवन्मते धात्वर्थप्रकारकबोधे धातुजन्योपस्थितेर्हेतुत्ववन्मन्मतेऽप्याऽऽख्यातार्थभावनाप्रकारकबोधे तिङ्जन्यभावनोपस्थितेरपि विशेष्यतासम्बन्धेन हेतुत्वस्य कल्प्यतयोक्तैकवाक्यत्वस्य सूपपादत्वात्।

यथोक्तबोधाभ्युपगमे आख्यातेन कर्तृत्वोक्तावनाश्रयैत्रादिपदोत्तरं तृतीयाऽऽपत्तिरिति वाच्यम्, तादृशप्रथमान्तार्थप्रकारकबोधे विशेष्यतया तिङ्जन्योपस्थितेर्हेतुतया तस्यां चैत्रस्याऽऽधेयतासम्बन्धेनाऽन्वयाभ्युपगमेन मुख्यविशेष्यतयैव तदानेन आश्रयातिरिक्तांशे विशेषणतया कृत्याश्रयबोधनरूपस्याभिधानस्य तत्र सत्त्वात् तृतीयाऽप्रसम्भवात्।

नच चैत्रः पचतीत्येतावन्मात्रप्रयोगेऽपि चैत्रस्याऽऽधेयतासम्बन्धेनान्वयाऽऽपत्तिरिति वाच्यम्, प्रथमान्ताऽर्थप्रकारकबोधे तिङर्थविशेष्यताप्रभावनोपस्थितेर्हेतुत्वस्यापि कल्पनेनोक्तदोषाऽप्रसक्तेः।

नच चैत्रे पाकानुकूला कृतिरित्यत्रैव चैत्रः पचति भवतीत्यादौ सप्तम्याऽऽपत्तिर्दुर्वारैवेति वाच्यम्, धात्वर्थविशेषणभूताधेयत्वस्य प्रातिपदिकार्थविशेष्यतया विवक्षायामेव सप्तमीविधानात्, एवमाधेयत्वस्य प्रकारतयाऽविवक्षणाच्च। इदं चाख्यातार्थकृतिमुख्यविशेष्यकबोधमभिप्रेत्योक्तम्। वस्तुतस्तु, चैत्रः पचति भवतीत्यादौ प्रथमान्तार्थविशेष्यकबोधाभ्युपगमेऽपि नैकवाक्यताक्षतिः, भवनकर्तृत्वाऽन्वितताया एव पाकविषयकभावनायाश्चैत्रांशे प्रकारतया भानसम्भवात्।

एतेन कृतिविशेष्यकबोधाभ्युपगमे प्रथमान्तार्थप्रकारकबोधे तिङर्थभावनोपस्थितेर्हेतुत्वकल्पने गौरवमिति दूषणमप्यनवकम्, विशेषणतयैव तदन्वयाभ्युपगमादित्यरुचेराह ❀ अपिचेति ❀। ❀ अभेदान्वयादिति ❀ इदं च तन्मतेऽपि कर्त्राख्यातार्थ इति स्वीयवासनाऽनुसारेण। नैयायिकमते तु कृतेराख्यातार्थतया तस्या आश्रयत्वेनैव प्रथमान्तपदार्थेऽन्वयादित्यवधेयम्।

❀ भाष्यसिद्धेति ❀ "क्रियाऽपि कृत्रिमं कर्म, क्रियाऽपि हि क्रियेप्सिता भवति, कया, सन्दर्शनप्रार्थनादिक्रियया" इति "कर्मणा यम्" इतिसूत्रस्थभाष्यसिद्धेत्यर्थः। त्वन्मते धावनाऽनुकूलकृतिमान् मृग इत्यावान्तरवाक्यार्थबोधस्य तत्र जायमानत्वेन धावनस्य कर्त्रंशस्थतया विशेषणतयाऽन्यत्राऽन्वये नैराकाङ्क्ष्येण दर्शने कर्मतयाऽन्वयाऽयोगात्। किन्तु धावनाऽनुकूलकृतिमान् मृगो दर्शनाश्रयत्ववानित्येव बोध एष्टव्यः। एवमेकमुख्यविशेष्यकबोधजनकत्वरूपैकवाक्यत्वाऽभावात् तद्विरोधो दुर्वार इति भावः।

ननु धावनाऽनुकूलकृतिमन्मृगस्यैव कर्मतया दृशधात्वर्थेऽन्वयान्नोक्तदोषोऽत आह—❀ प्रथमान्तेति ❀। ❀ कर्मत्वापत्ताविति ❀ कर्मत्वेन प्रकारतापत्तावित्यर्थः। कर्मतासम्बन्धेन मृगस्य दर्शनक्रियायामन्वयस्यासम्भवी, "नामार्थधात्वर्थयो" इति व्युत्पत्तिविरोधात्, वक्ष्यमाणद्वितीयाऽऽपादनविरोधाच्चेति भावः। ❀ द्वितीयापत्तेरिति ❀ कर्मणोऽत्र तिङाऽनभिधानेन अनभिहिताधिकारीय "कर्मणि द्वितीया" इत्यस्य जागरूकत्वादिति भावः।

नचैवमप्रथमासामानाधिकरण्याच्छतृप्रसङ्गः, एवमपि द्वितीयाया दुर्वारत्वेन 'पश्य मृगः' इत्यादि-
वाक्यस्यैवाऽसम्भवापत्तेः।

नच पश्येत्यत्र तमिति कर्माध्याहार्य्यम्, वाक्यभेदप्रसङ्गात्, उत्कटधावनक्रियाविशेषस्यैव दर्शन-
कर्मतयाऽन्वयस्य प्रतिपिपादयिषितत्वात्, आध्याहारेऽनन्वयापत्तेश्च।

प्रभा

वाक्यस्यैव सम्भवेन तादृशवाक्यस्यैवासिद्धिरित्याशयः। वैयाकरणमते तु न द्वितीयापत्तिः, धावनस्यैव कर्मतया
तद्वाचकधातोरप्रातिपदिकत्वात्, मृगस्याकर्मत्वाच्च। धावनस्य च कर्मतानिरूपकत्वसम्बन्धेन दर्शनेऽन्वयः।

ननु तार्किकमतेऽपि न द्वितीयापत्तिः, धावनक्रियाविशिष्टमृगस्यैव कर्मतया मृगशब्दस्य तादृशविशिष्टावाचक-
त्वेन कर्माबोधकत्वात्। नच विशिष्टस्य शुद्धानतिरिक्ततया शुद्धस्यापि कर्मत्वेन द्वोपतावश्यम्, ज्ञानार्थक-
धातुसमभिव्याहारे कर्मत्वस्य विषयतारूपतया प्रकृते धावनविशिष्टमृगत्वावच्छिन्नविषयताया एव कर्मतात्वेन
मृगशब्दस्य तदप्रयोजकत्वात्। अत एव

'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः।'

'जानामि सीता जनकप्रसूता।'

इत्यादिषु सीताशब्दादुत्पत्तिशब्दाच्च न द्वितीयेति चेन्न, नीलगुणविशिष्टपटादेः कर्मत्वविवक्षायां
'नीलं घटमानय' इत्यादौ द्वितीयानापत्तेः। नचेष्टापत्तिः, 'अनभिहिते' (२-३-१) इतिसूत्रस्थभाष्यविरोधात्।
तत्र हि 'अभिधानञ्च प्रायेण तिङ्कृत्तद्धितसमासैः' इति परिगणनाभावे भीष्मगुणविशिष्टस्य कर्मत्वविवक्षायां
कटशब्दादुत्पन्नद्वितीयया कर्मत्वस्योक्ततया भीष्मशब्दाद् द्वितीया न स्यादिति परिगणनमित्युक्तम्। विशिष्टस्य
कर्मत्वे प्रत्येकं कर्मत्वाप्रयोजकत्वे 'भीष्मं कटं कुरु' इत्येतत्परकभाष्यस्यासङ्गत्यापत्तिः स्पष्टैव। पूर्वोक्तेषु

'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः।'

'जानामि सीता जनकप्रसूता' इत्यादिषु 'उत्पत्तयः शुभाः' इत्यत्राऽऽर्षत्वादेव द्वितीयार्थे प्रथमा।
'जानामि सीतां जनकप्रसूताम्' इत्येव पाठः। वाक्यभेदेति—'धावनजनककृतिमान् मृगः' इत्येको बोधः।
'तत्कर्मकदर्शननिरूपिताऽऽश्रयतावांस्त्वम्' इत्यपर इत्येकवाक्यत्वाभावः, पूर्ववाक्यघटकपदार्थनिष्ठविषयत्वानि-
रूपितविषयताप्रयोजकपश्यादिपदघटितत्वात्। ननु तमित्यस्याध्याहारे पूर्ववाक्यघटकमृगपदार्थतत्पदार्थयोरैक्या-
त्स्वेनैकवाक्यत्वात्तत्तिरत
न्मृगनिष्ठकर्मतानिरूपकत्वसम्बन्धावच्छिन्नविषयतानिरूपितदर्शननिष्ठविषयतायां सत्त्वेनैकवाक्यत्वात्तत्तिरत
आह—उत्कटधावनेति। अनन्वयेति—धावनक्रियाया इति शेषः। यद्वा, तदर्थमृगस्य। तथाच दर्शनक्रिया-

दर्पणव्याख्या

❀ एवमिति ❀ मृगपदोत्तरं द्वितीयाप्रसङ्गे इत्यर्थः। शतृशानज्विधौ लडर्थकर्तुः प्रथमान्तार्थसामानाधिकरण्येन
विशेषितत्वान्मृगपदस्य द्वितीयान्तत्वे तदापत्त्या द्वितीया न भविष्यतीति शङ्कितुराशयः। नहि तत्रापि द्वितीयाप्रविव-
न्धिका, किन्तु कर्मणोऽभिधानम्, तदभावसत्त्वाच्च द्वितीया दुर्वारेत्याशयेन समाधत्ते—❀ एवमपीति ❀। ❀ असम्भ-
वापत्तेरिति ❀। मृगस्य कर्मतया दर्शनेऽन्वयोपगमे 'धावन्तं मृगं पश्य' इति वाक्यस्यैवोचितत्वादित्यर्थः।

ननु "अर्थैक्यादेकं वाक्यं साकाङ्क्षञ्चेद्विभागे स्यात्" इति जैमिनिसूत्राद् विच्छिद्य पाठे साकाङ्क्षत्वे सत्येकार्थप्रतिपत्ति-
जनकत्वमेकवाक्यत्वमित्यर्थो लभ्यते। प्रकृते तमित्युक्ते कमित्याकाङ्क्षासत्त्वात्पश्याकथञ्चिद्वाक्यद्वयस्य धावनाऽनुकूलकृतिम-
न्मृगकर्मकदर्शनरूपैकार्थप्रतिपादकत्वाच्च न वाक्यभेदप्रसङ्गोऽस्त आह—❀ उत्कटेति ❀। ❀ अध्याहार इति ❀
पूर्वाऽनुपात्ताकाङ्क्षितपदस्याऽनुसन्धाने इत्यर्थः। ❀ अनन्वयापत्तेश्चेति ❀ तत्पदेन मृगस्य धावनाऽनुकूलकृतिमन्मृ-

एवञ्च, 'भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणम्' इति नैयायिकोक्तं नादरणीयम्। किन्तु 'आख्यातार्थकर्तृप्रकारकबोधे धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणम्' इति कार्यकारणभावो द्रष्टव्यः। भावनाप्रकारकबोधं प्रति तु कृज्जन्योपस्थितिवद् धात्वर्थभावनो-

## प्रभा

निरूपितविषयतारूपफलाश्रयत्वेन धावनस्यैव विवक्षितत्वया मृगस्याकर्मत्वेनानन्वयापत्तेरित्यर्थः। एवञ्च भाष्याभिमतैकवाक्यत्वासिद्धिरिति भावः। न च अध्याहृततत्पदेन धावनस्यैव ग्रहणमिति नानुपपत्तिरिति वाच्यम्, सर्वनाम्नां प्रधानपरामर्शित्वेन विशेषणीभूतधावनस्य तेन परामर्ष्टुमशक्यत्वात्। एवञ्च = उक्तरीत्या कर्त्राख्यातार्थत्वस्य, धात्वर्थप्राधान्यकबोधस्य च सिद्धौ। भावनेति—तार्किकमते सङ्ख्याकालातिरिक्तस्तिङर्थो भावना। बोध इति—विशेष्यतासम्बन्धेन इति शेषः। कारणमिति—तत्तत्प्रथमान्तार्थनिष्ठविशेष्यतासम्बन्धेनेति शेषः। तेन प्रथमान्तपदजन्यसमूहालम्बनोपस्थितौ पदार्थान्तरे नान्वयः। कर्तृप्रकारकेति—कर्तृनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनेत्यर्थः। फले व्यभिचारवारणायाऽऽह—भावनात्वेति—ननु धातुना भावनायाः पृथगुपस्थितौ भावनात्वनिष्ठप्रकारतानिरूपिता भावनानिष्ठा विशेष्यतारूपविषयता सा च न भावनात्वावच्छिन्ना, स्वनिष्ठप्रकारतानिरूपितविशेष्यतायाः स्वेनानवच्छिन्नत्वादिति चेन्न, भावनात्वनिष्ठप्रकारतानिरूपितविशेष्यताऽऽख्यविषयतयेति तदर्थात्, भावनात्वस्य भावनानिष्ठोपस्थितीयविशेष्यतायाः शक्तिभास्यसमवायसम्बन्धेनावच्छेदकत्वाभावेऽपि सामानाधिकरण्यसम्बन्धेनावच्छेदकत्वसम्भवाच्चेति तत्त्वम्। धातुना भावनात्वेन भावनोपस्थितिरित्यभिप्रायेणेदम्।

वस्तुतस्तु, नेदं युक्तम्, सर्वधातूनां पर्यायतापत्तेः, एकधर्मप्रकारकोपस्थापकानामेव पर्यायत्वात्। अतस्तत्तद्विशेषधर्मेणोपस्थापकत्वे तु पाकत्वादिनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनेत्यर्थो बोध्य इति गुरवः।

एवं कर्मप्रत्ययस्थले विशेष्यतासम्बन्धेन तिङर्थकर्मप्रकारकबोधम्प्रति धातुजन्यफलोपस्थितिर्विशेष्यतासम्बन्धेन कारणमित्यपि द्रष्टव्यम्।

ननु धात्वर्थभावनायाः कृदर्थम्प्रत्येव विशेषणत्वम्, यथा 'पक्ता' इत्यादौ विक्लित्त्यनुकूलव्यापाराश्रय इति बोधः। तथा च 'पश्य मृगो धावति' 'पचति भवति' इत्यादौ क्रियाप्रकारकक्रियाविशेष्यकबोधो न स्यादित्यत आह—भावनाप्रकारकेति। कृज्जन्योपस्थितिवदिति। ननु यत्र कृज्जन्योपस्थितौ कथञ्चिद् घटार्थोऽपि विषयीभूतस्तत्र कृज्जन्योपस्थितिर्विशेष्यतासम्बन्धेन घटेऽपीति तत्रापि भावनान्वयः स्यादिति चेन्न, स्वजनकज्ञानीयकृन्निष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन कृज्जन्योपस्थितेः कारणत्वस्वीकारात्। स्वम् = उपस्थितिस्तज्जनकं ज्ञानम्, शक्तिसम्बन्धेन कृद्विशिष्टः कर्तृरूपोऽर्थस्तज्ज्ञानीयविशेष्यता कर्तृनिष्ठेति तादृशविशेष्यतासम्बन्धेन कर्तर्य्येवोपस्थितेः सत्त्वान्न घटादावन्वयो भावनायाः।

## दर्पणव्याख्या

गस्य वा परामर्शेऽपीप्सितस्य तादृशधावनक्रियाया इत्यर्थकर्मत्वान्वयस्य तद्वाक्याद् भानाऽनुपपत्तेरित्यर्थः। उपसंहरति—❀ एवञ्चेति ❀ आख्यातार्थविशेष्यकबोधाऽङ्गीकर्तृनये एकवाक्यताऽनुपपत्तिरूपदूषणदार्ढ्ये चेत्यर्थः। ❀ नादरणीयमिति ❀ उक्तदोषग्रस्तत्वादिति भावः। स्वमतनिष्कर्षमाह—❀ किन्त्विति ❀ फले व्यभिचारनिरासायोपस्थितिं विशिनष्टि—❀ भावनात्वावच्छिन्नेति ❀।

पस्थितिरपि हेतुः, 'पश्य मृगो धावति', 'पचति भवति' इत्याद्यनुरोधादिति दिक्।
इत्थञ्च पचतीत्यत्रैकाऽऽश्रयिका पाकाऽनुकूला भावना। पच्यते इत्यत्रैकाऽऽश्रया या विक्लि-
त्तिस्तदनुकूला भावनेति बोधः।

प्रभा

कल्प्यत इति भावः।
हेतुरिति—कार्यकारणभावस्यानुभवमूलकत्वात्तादृशकार्यकारणभावोऽपि कल्प्यत इति भावः। तिङर्थसंख्यायास्तिङर्थकर्त्तृ-
इत्थञ्चेति—कर्त्तृप्रत्यये तिङर्थकर्त्तुः, कालस्य च धात्वर्थव्यापारविशेषणत्वे, संख्यायास्तिङर्थ-
विशेषणत्वे, कर्माऽऽख्याते तृतीयार्थकर्त्तुः, तिङर्थकालस्य च धात्वर्थव्यापारविशेषणत्वे चेत्यर्थः। एकाऽऽश्रयि-
कर्मविशेषणत्वे, कर्मणश्च धात्वर्थफलविशेषणत्वे, फलस्य च धात्वर्थव्यापारविशेषणत्वे वर्तमानकालावच्छिन्ना विक्लित्त्यनुकूला भावनेति
केति—समवायसम्बन्धेनैकत्वविशिष्टो ■ आश्रयस्तन्निष्ठा वर्तमानकालावच्छिन्ना विक्लित्त्यनुकूला भावनेति
बोधः। पच्यत इति—समवायसम्बन्धेनैकत्वविशिष्टो यः कर्मरूप आश्रयस्तन्निष्ठा या विक्लित्तिस्तदनुकूला
देवदत्ताभिन्नकर्त्तृनिष्ठा वर्तमानकालावच्छिन्ना भावनेति बोधः।
नवीनमते कर्मणि तिङि धात्वर्थव्यापारः फले जन्यत्वसम्बन्धेन विशेषणम्। 'पक्वः' इत्यादौ कर्मणि
क्तेऽपि 'फूत्कारादिव्यापारजन्यविक्लित्त्याश्रयः' इति बोधानुसारेण व्यापारम्प्रति फलस्य प्राधान्यदर्शनात् कर्म
तिङ्यपि फलस्यैव विशेष्यत्वमुचितम्। अत एव 'इष्यते पुत्रः' 'इष्टः पुत्रः' इत्यर्थे 'पुत्रीयति' इति न प्रयोगः,
भिन्नार्थत्वात्। किन्तु पुत्रमिच्छतीत्यर्थे एव 'क्यच्' इति 'सुप आत्मनः' इति सूत्रे भाष्यम्। भिन्नार्थत्वञ्चैकत्र
फलप्राधान्यम्, अपरत्र व्यापारस्येति नव्याः।
उभयत्र व्यापारविशेष्यकबोधवादिप्राचीनास्तु पुत्रीयतीत्यत्र कर्त्तरि संख्यान्वयः, कर्मप्रत्यये कर्मणि
तदन्वय इति भिन्नार्थत्वमाश्रित्य भाष्यं सङ्गमयन्ति। तथाच देवदत्ताभिन्नकर्तृनिष्ठतण्डुलाभिन्नाऽऽश्रयनिष्ठ-
विक्लित्त्यनुकूलो वर्तमानकालावच्छिन्नो व्यापार इति प्राचीनमते व्यापारविशेष्यक एव बोधः। नव्यमते तु
देवदत्ताभिन्नकर्त्तृनिष्ठवर्तमानकालावच्छिन्नव्यापारजन्या तण्डुलाभिन्नाऽऽश्रयनिष्ठा विक्लित्तिरिति बोधः।

दर्पणव्याख्या

नन्वेवमतेऽव्याप्त्यातस्य धात्वर्थमुख्यविशेष्यकबोधजनकत्वनियमभङ्गप्रसङ्गोऽत आह—❀ पश्येति ❀ तथाचो-
क्तनियम एतदतिरिक्तविषयक इति भावः।
ननु धावनकर्तृत्वविशिष्टमृगरूपवाक्यार्थस्य कर्मतया दर्शनेऽन्वयः। तथाच ■ "नामार्थयोः" इति व्युत्प-
त्तिविरोधः, वाक्यस्यानामत्वात्। अत एव न ततो द्वितीयापत्तिरपि। धावनविशिष्टस्य दर्शनकर्मत्वाऽवगतौ विशेषणीभूत-
धावनस्यापि कर्मतालाभाच्च न प्रतिपिपादयिषितान्वयालाभोऽपि। 'चैत्रः पचति भवति' इत्यादौ तूक्तदिशैकवाक्यत्वमुप-
पादितमेव। तथाचोक्तकार्यकारणभावकल्पे कथं तदनुरोधो बीजमत आह—❀ दिगिति ❀ तदर्थस्त्वेवंरीत्या वाक्यैक-
वाक्यताप्रतिपादने भाष्यकृत्सम्मतपदैकवाक्यतया प्रतिपिपादयिषितान्वयालाभ एव। किञ्चाभेदेन नीलविशिष्टघटस्य कर्मत्वे
प्रतिपिपादयिषिते, 'नीलं घटं जानाति' इत्यादौ द्वितीयानुपपत्तिरिति।
अत्र नैयायिकाः—धावनक्रियाकर्त्तृत्वावरुद्धमृगस्य कर्मतासम्बन्धेन दृश्यर्थेऽन्वयोपगमात्र पदैकवाक्यताभङ्गः।
तदवरुद्धत्वञ्च तदन्वयितया तात्पर्यविषयत्वम्। नचैवं कर्मतासंसर्गेण तण्डुलस्याऽप्यन्वयसम्भवात् 'तण्डुलः पचति' इति
प्रयोगापत्तिरिति वाच्यम्, यतो न वयं सामान्यतः कर्मत्वादिभेदसम्बन्धेन नामार्थस्य धात्वर्थे अन्वयमभ्युपेमः, किन्तु
क्रियान्तरकर्तृत्वाऽवरुद्धस्य। नच तण्डुलस्तथा, येन पच्यर्थे तस्य कर्मतासंसर्गः स्यात्। अत एव 'काष्ठं भस्मराशिः
करोति' इति न प्रयोगः, भस्मराशेः कर्तृत्वानवरुद्धत्वात्। 'काष्ठं भस्मराशिः क्रियते' इत्यादौ कर्मत्वान्तरावरुद्धक्रियायां
तु तदनवरुद्धस्यापि व्युत्पत्तिवैचित्र्यात्। तस्य तत्र तत्संसर्गत्वाऽनभ्युपगमे वाक्यभेदाऽऽपत्या तद्वाक्यजबोधस्य, 'काष्ठं

## दर्पणव्याख्या

मानयते' 'भस्म क्रियते' इति वाक्यद्वयजबोधस्येव 'भस्मकाष्ठविकृतिरन्यविकृतिर्वा' इति संशयनिवर्तकत्वानापत्तेरित्याद्यन्यत्र प्रपञ्चितम् ।

एवञ्चाऽत्र पदैकवाक्यतया अनायासेनैवोपपत्तौ भावनाप्रकारकबोधे धात्वर्थभावनोपस्थितेर्हेतुत्वं निष्प्रमाणकमेव। नाऽपि मृगपदोत्तरं द्वितीयाऽऽपत्तिः, प्रातिपदिकार्थविशेष्यतया कर्मत्वस्याऽविवक्षणात्। अत एव न तत्र षष्ठीप्रसक्तिरपि, संसर्गस्य प्रातिपदिकार्थविशेष्यतया विवक्षायामेव, "षष्ठी शेषे" इत्यनेन तद्विधानात्। एवम्, 'घटो नास्ति' इत्यादावपि बोध्यम्। किन्तु प्रातिपदिकार्थे तत्र प्रथमैव। नाऽपि 'नीलं घटं जानाति' इति प्रयोगाऽनुपपत्तिः, घटस्य क्रियान्तरकर्तृत्वाऽनवरुद्धत्वेन कर्मत्वान्तरविशेषणतानापन्नायां ज्ञानार्थक्रियायां कर्मतायाः संसर्गत्वासम्भवात्।

'पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः'।

इत्यादावस्तीत्यध्याहार्यम्। वस्तुतस्त्वेतद् दृष्टान्तेन 'तण्डुलः पचति' इत्यादौ बोधाऽऽपादनं न विचारसहम्, कर्मताऽन्वयसंसर्गकपच्यर्थविशेष्यकबोधस्याप्रसिद्धौ तयाऽऽपादनासम्भवात्। 'तण्डुलं पचति' इत्यादौ विभक्त्यर्थकर्मत्वसम्बन्धेन तादृशबोधः प्रसिद्ध इति चेत्तर्हि तादृशबोधे द्वितीयान्ततण्डुलपदसमभिव्याहृतपचतीत्यानुपूर्वीज्ञानस्य हेतुत्वं तदभावादेवाऽऽपाद्यस्याप्यसम्भवात्। तदुक्तम्—'यादृशं यत्रं क्वचित् प्रसिद्धं तादृशस्यैवाऽऽपत्तिः सम्भवति' इति।

*एतेन 'पश्य लक्ष्मण' इत्यत्र "अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति" इति भाष्यस्याऽपि शब्दस्वारस्येन वाक्यपरि*पोषकक्रियान्तराऽभावेऽस्तेरध्याहार इत्यर्थलाभेन प्रकृते वाक्यपरिपोषिकाया दर्शनक्रियायाः सत्त्वेन तदध्याहारे मानाभावाच्च कर्मतासंसर्गेणाऽन्वयोऽनुपपन्न इति दूषणमकिञ्चित्करम्। *एवञ्चाऽऽख्याते प्रथमान्तपदसमभिव्याहारे प्रायः प्रथमान्तार्थविशेष्यक* बोधो निराबाधः। अत एव, 'यो यः धूमस्य पचति द्विजोऽयं सोऽतिनिन्दितः' इत्यत्र प्रधानपरामर्शितदो द्विजपरामर्शकत्वमनायासेन संगच्छते।

ननु प्रथमान्तार्थविशेष्यकबोधवादिमते, 'पचतिकल्पं चैत्रः' "पचतकल्पं चैत्रौ" इत्यादौ कल्पबाद्यन्तस्य नामतया, तद्विशेषणवाचकतया च प्रथमान्तचैत्रादिपदसमानलिङ्गवचनत्वाऽऽपत्तिरल्पपातार्थकृतेः प्रथमान्तार्थचैत्रादावभेदान्वयापत्तिश्चेति चेन्न, स्वार्थिकानां प्रायशः प्रकृत्यर्थताऽवच्छेदकगतकुत्सादिद्योतकतया प्रकृते प्रकृत्यर्थताऽवच्छेदकक्रियागतेषदसमाप्तत्वस्य कल्पपा बोधनात्, सत्त्वासत्त्वाभ्यां प्रकृत्यर्थतावच्छेदकसमानस्य भावेषदसमाप्तत्वप्रतिपादककल्पबाद्यन्ते नपुंसकैकवचनान्तत्वयोरौचित्यात्। कल्पबाद्यन्तस्य नामत्वेन समानविभक्तिकत्वेन च तदर्थस्य चैत्रेऽभेदाऽन्वयाऽऽपत्तिरिति तु मूर्खप्रलपितत्वादनादेयम्, एकधार्मिकर्तृभेदान्वयस्येष्टत्वात्। शब्दार्थस्य स्वयोग्यत्वादेवानन्वयात्, 'घटः' 'पटः' इत्यादौ व्यभिचारवारणाय व्युत्पत्तावसति बाधके इति विशेषणाच्चेत्याहुः।

*अत्रेदमाभाति—प्रथमान्तकर्तृवाचकपदसमभिव्याहारे प्रायः प्रथमान्तार्थविशेष्यकबोध एव नैयायिकानाम्।* क्वचित्तु, पश्य मृगो धावतीत्याद्येकवाक्यताऽनुरोधात् तिङर्थभावनाविशेष्यकोऽपि सः। यथाहि—वैयाकरणैरकस्यचिदेकवाक्यतानुरोधाद्धात्वर्थभावनाप्रकारकबोधे धातुजन्यभावनोपस्थितेर्हेतुता कल्प्यते।

नैयायिकैस्तु कर्मतासम्बन्धेन तिङर्थभावनाप्रकारकबोधे धातुजन्यभावनोपस्थितेस्तद्धेतुतेति सममेव। 'देवदत्तः पचति भवति' इत्येकवाक्यतानुरोधात्प्रथमान्तार्थकर्तृप्रकारकबोधे तिङर्थभावनोपस्थितेरपि तत्कल्प्यते। तथाचोक्तस्थल आधेयतासम्बन्धेन *मृगविशिष्टधावनाऽनुकूलकृतेः कर्मतया दृश्यर्थेऽन्वये मृगनिष्ठा या धावनाऽनुकूला* कृतिस्तत्कर्मदर्शनाऽऽश्रयस्त्वमिति वाक्यार्थबोधः। धावनविशिष्टकृतौ च बोधितकर्मत्वस्य, "सविशेषणे हि" इति न्यायाद्धावने पर्यवसानाच्च प्रविविपान्विवितार्थस्याऽपि लाभः। नाऽपि *मृगपदोत्तरं द्वितीयाऽऽपत्तिः, मृगकर्मताया* पुनर्वाक्यार्थलाभात्। एवञ्च, 'पचति भवति' इत्यत्राऽपि 'प्रथमान्तार्थकर्तृविशिष्टा पाककृतिर्वर्तमानभावनाऽऽश्रयिका' इति बोधात् तत्राऽप्येकवाक्यताऽऽभाति। एवं

व्यापार इति बोधः । स चान्तत आश्रयतैवेतिरीत्योह्यम् ॥ २ ॥

नन्वाख्यातस्य कर्तृकर्मशक्तत्वे 'पचति'इत्यत्रोभयबोधापत्तिः । कर्तृमात्रबोधवत् कर्ममात्रस्यापि बोधापत्तिरित्यतस्तात्पर्यग्राहकमाह—

फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः ।
व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयाऽन्वयम् ॥ ३ ॥

तङादयः फले आश्रयाऽन्वयं द्योतयन्ति, फलाऽन्वय्याश्रयस्य कर्मत्वात् । तद्द्योतकाः = कर्मद्योतकाः । व्यापाराऽन्वय्याश्रयस्य कर्तृत्वात् । तद्द्योतकाः = कर्तृद्योतका इति समुदायार्थः । द्योतयन्ति = तात्पर्यं ग्राहयन्ति ॥ ३ ॥

प्रभा

अत्र फलतावच्छेदको व्यापारतावच्छेदकश्च समवाय एवेति व्यापाराधिकरणमात्रवृत्तिफलवाचकत्वेनाकर्मकतया देवदत्ताभिन्नाश्रयवृत्तियत्नसमानाधिकरणो व्यापार इति बोधः । व्यापारश्च आत्ममनःसंयोग एव । तदनुसन्धानाभावे त्वाह—आश्रयतैवेति । आश्रयता चात्राखण्डधर्मरूपा । तत्र क्रमिकत्वाभावेऽपि क्रमिकत्वारोपः, स्वरूपसम्बन्धविशेषरूपैव वा ।

यत्त्वावरणभङ्गानुकूलो ज्ञानरूपो व्यापारो जानात्यर्थ इति तन्न, 'धर्माधर्मौ जानाति' इत्यादावनुपपत्तेः । तथाहि—आवरणं द्विविधम्—असत्त्वापादकम्, अभानापादकञ्च । तत्र धर्माधर्मयोः परोक्षत्वात् परोक्षान्तःकरणवृत्त्याख्यज्ञानेन असत्त्वापादकावरणस्य भङ्गेऽपि अभानापादकावरणस्य, परोक्षवृत्तिरूपज्ञानेनानिवृत्तिः । यथा 'पर्वतो वह्निमान्' इत्यत्र व्याप्त्याकारान्तःकरणवृत्त्यवच्छिन्नचैतन्ये प्रतिबिम्बितवह्न्यवच्छिन्नरूपचैतन्यरूपपरोक्षज्ञानेन वह्न्यसत्त्वापादकावरणस्य भङ्गेऽपि अभानापादकावरणस्य तेनानिवृत्तिः । ऊह्यमिति—इच्छत्यादावप्यूह्यमित्यर्थः ॥ २ ॥

उभयेति—कर्तृकर्मोभयबोधापत्तिरित्यर्थः । ननु 'सकृदुच्चरितः' इति न्यायविरोध इत्यत आह—कर्तृमात्रेति—यत्र तात्पर्यग्रहस्तस्यैव बोधेन कर्मणि तात्पर्यग्रहे तन्मात्रस्यापि बोधापत्तिः, कर्मण्यपि 'लः कर्मणि' इत्यनेन शक्तिबोधनात् ।

तात्पर्येति—तात्पर्यञ्च—'तिङ्पदं कर्तृत्वावच्छिन्नविषयकबोधजनकम्भवतु' इति, 'कर्मत्वावच्छिन्नविषयकबोधजनकम्भवतु' इत्याकारकश्चेच्छाविशेषरूपम् । न च 'पचति' इत्यत्र 'तिपदं कर्मत्वावच्छिन्नं बोधयतु' इति तात्पर्यस्यापि सत्त्वे तिपा कर्मणोऽपि बोधापत्तिः, तात्पर्यपदेनाभानादितात्पर्यस्यैव ग्रहणात् । तथाच तात्पर्यग्राहकमित्यस्यानादितात्पर्यग्राहकमित्यर्थः । फलव्यापारयोरिति—निर्द्धारणे षष्ठी । निर्द्धारणे बहुवचनान्तस्यैव प्रयोगदर्शनात् । तादृशषष्ठ्यसम्भवे तु 'मध्ये' इति शेषो बोध्यः । तत्र 'षष्ठी शेषे' इति षष्ठी । तङादयो धातूपस्थाप्ययोः फलव्यापारयोर्मध्ये फले आख्यातार्थाऽऽश्रयान्वयं द्योतयन्ति । शबादयो व्यापारे आश्रयान्वयं द्योतयन्ति = व्यञ्जनया बोधयन्तीत्यर्थः । ननु तिङादिसमभिव्याहारे आश्रयस्य फलव्यापारयोरन्वयेऽपि कर्मादिद्योतकत्वं न सिध्यतीत्यत आह—फलान्वयीति । तत एव हेतोस्तद्द्योतकाः । तदर्थबोधनायाह—कर्मद्योतका इति । अत्र तङ्पदं कर्मविषयकबोधजनकत्वप्रकारकतात्पर्येणोच्चरितमित्येवं व्यञ्जनया बोधयन्तीत्यर्थ इत्याह तात्पर्यं ग्राहयन्तीति ।

दर्पणव्याख्या

❀ स चेति ❀ । ज्ञानानुकूलो व्यापारश्चेत्यर्थः । तदन्वेषणायात्ममनः संयोगस्यैव सुलभत्वादाह ❀ अन्तत इति ❀ तदनुपस्थिताविन्यर्थः ❀ आश्रयतैवेति ❀ तस्या अनवयवत्वेऽपि सावयवत्वारोपाद् व्यापारत्वं निर्बाधमिति भावः ।

नन्वेवं 'क्रमादमुं नारद इत्यबोधि स' इत्यादौ, 'पच्यते ओदनः स्वयमेव' इत्यादौ च व्यभिचारः, कर्मणः कर्तृत्वविवक्षायां कर्त्तरि लकारे सति, 'कर्मवत् कर्मणा तुल्यक्रियः' (पा० सू० ३।१।८७) इत्यतिदेशेन यगात्मनेपदचिण्चिण्वदिटामतिदेशाद्यगादिसत्त्वेऽपि कर्तुरेव बोधात्, व्यापारे एवाश्रयान्वयाच्च। अबोधीत्यत्रापि बुध्यतेः कर्त्तरि लुङ्, तस्य "दीपजन" (पा० सू० ३।१।६१) इति चिण्, 'चिणो लुक्' (पा० सू० ६।४।१०४) इति तस्य लुग् इति साधनादित्याशङ्कायामाह—

उत्सर्गोऽयं कर्मकर्तृविषयादौ विपर्ययात्।
तस्माद् यथोचितं ज्ञेयं द्योतकत्वं यथागमम् ॥ ४ ॥

प्रभा

एवञ्च यत्र यत्र यगादिसमभिव्याहारस्तत्र तत्राऽऽख्यातस्य कर्मद्योतकत्वमिति, यत्र यत्र शबादिसमभिव्याहारस्तत्र तत्राऽऽख्यातस्य कर्तृद्योतकत्वमिति चान्वयव्याप्ति। यत्र यत्राऽऽख्यातस्य कर्मबोधकत्वाभावस्तत्र तत्र यगादिसमभिव्याहाराभाव इति, यत्र यत्राऽऽख्यातस्य कर्तृबोधकत्वाभावस्तत्र तत्र शबादिसमभिव्याहाराभाव इति च व्यतिरेकव्याप्ति फलति ॥ ३ ॥

तत्र यगादीनामन्वयव्याप्तौ व्यभिचारमाह—नन्वेवमिति—अत्र चिण्यक्सत्त्वेऽपि आख्याते कर्मबोधकत्वाभाव। अबोधीति—अत्र कर्त्तरि लुङ्। अत एव 'स' इति कर्तृवाचके तृतीयाया अभाव। पच्यते ओदन स्वयमेवेति—अत्र ओदनरूपे कर्त्तरि लट्।

यत्तु दर्पणकारेणोक्तम्—शबादीना व्यतिरेकव्याप्तौ अत्र व्यभिचार इति, तन्न, आख्याते कर्तृबोधकत्वाभावस्य शबादिसमभिव्याहाराभावव्याप्यत्वेन व्याप्याभावे व्यापकस्य शबादिसमभिव्याहाराभावस्य सत्त्वेऽपि व्यतिरेकव्यभिचाराभावादिति पञ्चोलिन।

कर्मण कर्तृत्वेति—सौकर्यातिशयद्योतनायैतादृशी विवक्षा। अयम्भाव—सर्वेषा कारकाणा व्यापारा धातुवाच्या। यदा यस्य व्यापारो बुद्धिस्थ सन् धातुना विवक्ष्यते तदैव तादृशव्यापाराश्रय कर्त्ता। अत एव 'काष्ठेन पचति' इत्याद्यप्युपपन्नम्, तत्र तद्व्यापारस्य धातुना अविवक्षणात्। 'काष्ठ पचति' 'स्थाली पचति' इत्यादिप्रयोगा सङ्गच्छन्ते। एवञ्च

अयम्—तङादय शबादयश्च तत्तदर्थद्योतका इत्युक्तोऽर्थ। यथागमम्=यथाशास्त्रम्, यथाबोध वा।

दर्पणव्याख्या

उपोद्घातसङ्गत्या शबादीनां द्योतकता निरूपयितुमाह ❀ नन्विति ❀ ननु 'सकृदुच्चरित शब्द सकृदर्थं गमयति' इति व्युत्पत्तेर्नैकदाऽर्थद्वयबोधोऽत आह ❀ कर्तृमात्रबोधवदिति ❀ मात्रशब्दोऽवधारणे ❀ तात्पर्य्येति ❀ तत्तदर्थप्रतीतौ वक्त्रोच्चरितत्वरूपतात्पर्यग्राहकमित्यर्थं। अत एव कर्त्तरि शबित्यादौ कर्त्रादिग्रहण सार्थकम्। अन्यथा 'ल कर्मणि' इत्येतद्विहितलादेशैरेव कर्त्रादिबोधेनान्यतरस्यानैरर्थक्यं स्पष्टमेवेति भाव।

मूले ❀ फलव्यापारयोस्तत्रेति ❀। तत्रेति धातूपस्थाप्ययोरित्यर्थं। 'फलव्यापारयो' इति निर्धारण सप्तम्याशयेन व्याचष्टे सारे ❀ फल इति ❀।

❀ व्यभिचार इति ❀। यगादीनामन्वये शबादीना व्यतिरेके चेत्यर्थं। यगादिसत्त्वेऽपि फले आश्रयाऽन्वयाऽबोधाच्छबाद्यभावेऽपि व्यापारे तिङर्थ आश्रयान्वयात् तदेवोपपादयति ❀ कर्मण कर्तृत्वविवक्षायामित्यादि ❀। सौकर्यातिशयद्योतनार्था च तद्विवक्षा तण्डुलादिगताग्निसंयोगादिरूपव्यापारस्यैव फलजनकतया धात्वर्थत्वविवक्षया मित्यर्थं।

एवं सूचीकटाहन्यायेन सोपपत्तिकं वाक्यार्थमुपवर्ण्य 'फलव्यापारयोः' इति प्रतिज्ञातं धातोर्व्यापारवाचित्वम्, लडाद्यन्ते भावनाया अवाच्यत्वं वदतः प्राभाकरादीन् प्रति व्यवस्थापयति—

प्रभा

ननु 'फलव्यापारयोर्धातु.' इत्यनेन प्रतिज्ञातं फलव्यापारयोर्धातुवाच्यत्वं समर्थ्य उभयोर्वाच्यत्वमस्वी-कुर्वतां मतं निराकरणीयम्, तदकृत्वा ततः पूर्वमेव शाब्दबोधनिरूपणमसङ्गतमित्याशङ्कायामाह—एवं सूची-कटाहेति—युगपत् सूचीकटाहापेक्षिणौ लौहकारसमीपे गतवन्तौ । तत्र सूच्यपेक्षक आह 'कुरु मे सूचीम्' इति । अपर आह 'कुरु मे कटाहम्' इति । शिल्पी तु अल्पकालायाससाध्यां सूचीं निर्माय बहुकालायाससाध्यं कटाहं निर्मांति, यतः सूच्यपेक्षकस्य बहुकालयापनं मा भूदिति । तथैवाल्पायाससाध्यम्, अल्पवादिविप्रतिपन्नञ्च वाक्यार्थमुपवर्ण्य बहुकालायाससाध्यं बहुवादिविप्रतिपन्नञ्च फलव्यापारयोर्धातुवाच्यत्वं समर्थयितुमाह— लडाद्यन्त इति—परसमीपवाचकान्तशब्देन बहुव्रीहिणा, अतद्गुणसंविज्ञानबहुव्रीहिणा वा लडादिरन्तः समीपोऽन्तावयवो वा यस्येत्यर्थकेन लडाद्यन्तशब्देन धातोर्ग्रहणम् । तेन तिङन्ते आख्यातवाच्यां भावनां स्वीकुर्वतोऽपि प्राभाकरादीन् प्रति 'भावनाया अवाच्यत्वं वदतः' इति विशेषणस्य नासङ्गतिः ।

प्राभाकरास्तु—फलमेव धात्वर्थः । पचिगमित्यजिप्रभृतीनां विक्लित्तिसंयोगविभागादिरूपफलमेवार्थः । आख्यातार्थवर्तमानत्वादिकं भावनायामेवान्वेति, समान-पुरुषप्रवृत्तिरूपा आर्थी भावना चाऽऽख्यातार्थः । आख्यातार्थवर्तमानत्वादिकं भावनायामेवान्वेति, समान-पदोपस्थितत्वात् । तेन भावनाविरामे न 'पचति' इत्यादिप्रयोगः । नच 'ग्रामो गमनवान्' इत्यापत्तिरुत्तर-देशसंयोगरूपफलस्योभयनिष्ठत्वादिति वाच्यम्, निरूपकत्वादिरूपसम्बन्धविशेषेण वर्तमानस्य फलस्यैव धातुवाच्यत्वात् । अन्यथा आभिमुख्यसम्बन्धेन संयोगानुकूलक्रियाया ग्रामेऽपि सत्त्वाद् धातोर्व्यापारवा-चित्वेऽपि तुल्यो दोषः। नचैवं 'यजति' 'ददाति' 'जुहोति' एतेषां पर्यायत्वापत्तिः, स्वत्वध्वंसरूपैकफलार्थत्वादिति वाच्यम्, यजतेरदृष्टोत्पादकस्वत्वध्वंसरूपफलस्य, ददातेः परस्वत्वोत्पत्तिमात्रफलस्य, जुहोतेरदृष्टोत्पादकप्रक्षेप-फलस्य च वाच्यत्वाङ्गीकारात् । तथाच स्वस्वत्वध्वंसरूपफलोपलक्षितदेवतोद्देश्यकद्रव्यत्यागो यजतिपदस्य, सङ्कल्पितस्वीकरणपूर्वकपरस्वत्वोपत्तिस्वस्वत्वध्वंसफलकद्रव्यत्यागो ददातिपदस्य, देवतोद्देश्यकप्रक्षेपफलको द्रव्यत्यागो जुहोतिपदस्य च वाच्य इति फलितम् । अत एव 'अस्ति' 'विद्यते' इत्यादितः फलमात्रप्रतीतिरुप-पद्यते । 'करोति' इत्यत्रोत्पत्तिरूपफलं धातुवाच्यम्, तदनुकूलो यत्नश्चाख्यातवाच्यः । एवञ्च न करोतियतत्योः समानार्थकत्वम् । एवं 'जानाति' इत्यत्र विजातीयविषयता, 'इच्छति' इत्यत्र च विजातीयविषयता च फलमिति सर्वधातूनां फले एव शक्तिरित्याहुः ॥

आदीनिति—आदिना प्राचीननैयायिकादिसङ्ग्रहः । तन्मते हि मीमांसकमत इव फलं धात्वर्थः, कृतिराख्यातार्थः ।

दर्पणव्याख्या

तेन जिज्ञासाविच्छेदा-
प्रतिज्ञातस्योत्तरक्षणे एवोपपत्तिभिस्तद्व्यवस्थापनं कर्तुमुचितम्, नतु वाक्यार्थनिरूपणानन्तरम्, आख्यातस्य तिङर्थत्वे च
द्विधाशङ्कायामाह ॥ सूचीकटाहन्यायेनेति ॥ । तथाच सामान्यतः फलव्यापारयोर्धात्वर्थत्वे, स एवाऽऽदौ
प्राप्ते, निरसनीयवादिविप्रतिपत्तिमत्त्वेन सुप्रतिपाद्यतया च प्रथमं वाक्यार्थे एव शिष्यजिज्ञासोदयात् । भावः ।
निरूपितः, नतु धात्वर्थः, निरसनीयबहुवादिविप्रतिपत्तिकत्वेनातिदुरूहतया च तस्य पूर्वमजिज्ञासितत्वादिति यज्यादिधातावित्यर्थः ।
'लडाद्यन्ते' इत्यतद्गुणसंविज्ञानबहुव्रीहिणा धातुपरम् । तथाच, यजेत, पचेतेत्यादौ
अवाच्यत्वम् ॥ वाच्यतानिरूपकत्वाऽभावम् । 'प्रभाकरादीन्' इत्यादिना नैयायिकसंग्रहः ।

नचैवमेषां शक्यताऽवच्छेदकत्वे गौरवापत्त्या कृतित्वमेव तदवच्छेदकं वाच्यम्, 'रथो गच्छति' जानातीत्यादौ च व्यापारत्वादिप्रकारकबोधो लक्षणयेति नैयायिकरीतिः साध्वी, शक्यताऽवच्छेदकत्वस्यापि लक्ष्यताऽवच्छेदकत्ववद् गुरुणि सम्भवात्,

प्रभा

नचेति—अस्य साध्वीति वक्ष्यमाणेनान्वय । नच साध्वीत्यर्थ । एषामिति—अथ मन्तापनत्वादीना-
मित्यर्थ । गौरवेति—यत्नत्वजात्यपेक्षया फूत्कारत्वादीनामुपाधित्वाश्च नानाधर्मत्वाच्च गौरवापत्त्येत्यर्थ । तद
वच्छेदकमिति—धातुवाच्यतावच्छेदकमित्यर्थ । यत्नत्वस्य जातिरूपतया लघुत्वादिति भाव ।
ननु यत्नत्वस्यापि जातित्वे मानाभाव इति चेन्न, चेष्टाम्प्रति यत्नस्य कारणतया कारणतावच्छेदकतया
प्रवृत्तिरूपयत्नम्प्रति इष्टसाधनताज्ञानस्य कारणत्वेन, कार्यताऽवच्छेदकतया वा जातित्वसिद्धे । तथा च फल
धात्वर्थ, यत्न आख्यातार्थ इति नैयायिकमत पर्यवसन्नम् ।
ननु यत्नस्य प्राणिधर्मत्वाद् रथादौ बाधात् 'रथो गच्छति' इत्यादौ सर्वानुभवसिद्धा व्यापारप्रतीति-
र्निरुध्येतेत्यत आह—रथो गच्छतीति । जानातीति—आदिना 'इच्छति' 'नश्यति' इत्यादे सङ्ग्रह ।
व्यापारत्वादीति—आश्रयत्व-प्रतियोगित्वादीना सग्रह । जानातीत्यत्र ज्ञानजनकताया जन्यताया वा
कृतौ बाधात् 'इच्छति' इत्यत्रेच्छाया कृतावनन्वयस्य 'नश्यति' इत्यत्र नाशस्य च कृतावनन्वयस्य चाऽऽपत्तिर्बोध्या।
लक्षणयेति—उक्तेषु आख्यातस्य व्यापारे आश्रयत्वे, प्रतियोगित्वे च लक्षणयेत्यर्थ । 'रथो गच्छति' इत्यत्र
'सयोगानुकूलव्यापारवान् रथ' इति । 'जानाति' 'इच्छति' इत्यत्र ज्ञानेच्छानिरूपिताश्रयतावान् देवदत्त इति,
'नश्यति घट' इत्यत्र 'नाशनिरूपितप्रतियोगितावान् घट' इति च बोध । नचैवमिति—नचेत्यस्य साध्वी-
त्यनान्वय । नैयायिकेति—नैयायिकेन यथा कृत्यर्थकाऽऽख्यातस्य तत्र व्यापारे लक्षणा कृता, तथा मयाऽपि
कर्तव्येति भाव ।
लक्ष्यतावच्छेदकत्ववदिति—व्यापारे लक्षणावादिनये यथा गुरुभूतस्य = (सखण्डोपाधिरूपस्य) व्यापार-
त्वस्य लक्ष्यताऽवच्छेदकत्व तथा धातुशक्यत्वे ऽपि तस्य शक्यतावच्छेदकत्वस्वीकारे गौरवाभाव इति भाव ।
वस्तुतस्तु व्यापारत्वमखण्डोपाधिरूपमेवेति न गौरवम् । व्यापारत्वस्य जातित्वन्तु न, यत्नत्वेन साङ्कर्यात् ।
यदि तु यत्नत्वस्य गुणत्व नाङ्गीक्रियते तदा नोक्तदोष । रथो गच्छतीत्यत्र तव लक्ष्यताऽवच्छेदके गौरवम्,
अस्माक शक्यताऽवच्छेदके तदिति साम्यमेव । गुरुणीति—शक्तिलक्षणयोरुभयोरपि धात्वर्थसम्बन्धत्वाविशेषाद्

दर्पणव्याख्या

❀ एषाम् ❀ अधिश्रयणत्वादीनाम् । ❀ गौरवेति ❀ धातुवाच्यत्वावच्छेदकत्वे गौरवापत्तेरित्यर्थः । तेषां कृतित्वा पेक्षया गुरुत्वात्तेषां वाच्येति भाव ।
❀ तदवच्छेदकमिति ❀ धातुवाच्यताऽवच्छेदकमित्यर्थः । ननु कृतेरेव धात्वर्थत्वे रथादावचेतने तद्बाधा त्सादृशप्रयोगानुपपत्तिरत आह ❀ रथो गच्छतीत्यादि ❀ व्यापारादीत्यादिनाऽऽश्रयत्व-प्रतियोगित्वपरिग्रह । जानातीत्यादावित्यादिपदग्राह्ये घटो नश्यतीत्यादौ नाशाश्रयत्वस्य बाधात्प्रतियोगित्वे एव लक्षणाया द्रष्टव्यत्वात् ।
❀ नैयायिकरीतिरिति ❀ आख्यातार्थविचारे हि तैर्व्यापारे लक्षणाम, कृतौ च शक्तिं स्वीकृत्याऽयं प्रयोग समर्थित स्तद्वन्मयाऽपि समर्थनीय इति साधयात् रीतिपदोपादानम्, न स्वन्याऽशे तन्मतादर इति भाव । लाघवोपष्टम्भमानादेवा ❀ शक्यताऽवच्छेदकत्वस्येति ऽर्थसिद्धि नै केवलाल्लाघवादित्याशयेन मीमांसकरीत्या तद्रीतेरेवाऽसाधुत्वमाविष्करोति

व्यापारो भावना सैवोत्पादना सैव च क्रिया ।
कृञोऽकर्म्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते ॥ ५ ॥

पचति = पाकमुत्पादयति, पाकानुकूला भावना, तादृश्युत्पादना इति विवरणाद् विव्रियमाणस्यापि तद्वाचकतेति भावः । व्यापारपदं च फूत्कारादीनामयत्नानामपि फूत्कारत्वादिरूपेण वाच्यतां ध्वनयितुमुक्तम् । अत एव पचतीत्यत्र अधःसन्तापनत्व-फूत्कारत्व-चुल्ल्युपरिधारणत्व-यत्नत्वादिभिर्बोधः सर्वसिद्धः ।

प्रभा

सैवेति—यद्यपि तच्छब्देन व्यापारस्य परामर्शात् पुल्लिङ्गनिर्देश उचितस्तथापि 'उद्देश्यविधेययोरैक्यमापादयत् सर्वनाम पर्यायेण तत्तल्लिङ्गभाग् भवति' इति वृद्धोक्तेरुभयविधप्रयोगदर्शनाच्च भावनारूपविधेयानुरोधेन 'सा' इति स्त्रीलिङ्गनिर्देशः । अत एव 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इत्यादिप्रयोगाः सङ्गच्छन्ते । यद्वा 'स' इति पुल्लिङ्गनिर्देश एव, 'सोऽचि लोपे चेत्' इत्यनेन सोर्लोपे वृद्धौ तद्रूपसिद्धेः । व्यापारभावनयोर्भेदभ्रमनिरासाय एक एवार्थः कुत्रचित् केनचिच्छब्देन बुध्यते, कुत्रचित् केनचिच्छब्देनेति प्रसिद्ध्यनुरोधाय चानेकपर्यायोपादानम् । चेतनाचेतनसाधारणयत्नफूत्कारादीनां धातुवाच्यत्वक्रियात्वयोर्बोधनार्थं वा अनेकपर्य्यायोपादानम् ।

ननु न हि क्रियापदं व्यापारपर्य्यायभूतम्, यत्नमात्रार्थककृधातुना निष्पन्नत्वेन यत्नमात्रार्थकत्वादित्याशङ्कायामाह—कृञोऽकर्मकतेति । ननु धातोर्व्यापारवाचित्वे मानाभावः, इति चेद् विवरणस्यैव मानत्वादित्याह—पाकमिति । अत एव = फूत्कारयत्नादीनां तेन तेन रूपेण धातुवाच्यत्वादेव । सर्वसिद्धः = सर्वानुभवसिद्धः । अनुभवोऽर्थनिर्णये प्रबलं प्रमाणमिति भावः ।

दर्पणव्याख्या

यद्यपि व्यापारो धात्वर्थत्वेन नैयायिकसम्मतस्तथापि नाऽसौ तन्मते भावनापदव्यपदेश्य इति भावः । 'व्यापारो भावना सैव' इत्यादिपूर्वार्द्धस्य यो 'गुणभूतैरवयवैः' इत्याद्युक्तलक्षणलक्षितोऽर्थस्तद्वाचकव्यापारपदं भावनादिपदैर्विभिद्यते । विव्रियमाणस्य विवरणसमानार्थकत्वेन धातोर्भावनावाचकत्वसिद्धिरित्यर्थः । तत्रोद्देश्यविधेययोरैक्यमापादयत् सर्वनाम पर्यायेणान्यतरलिङ्गकत्वस्य, 'शैत्यं हि यत् सा प्रकृतिर्जलस्य' इत्यादिबहुषु स्थलेषु दर्शनात् 'सा' इति स्त्रीलिङ्गनिर्देशात् उपपत्तिः । पुंलिङ्गत्वेऽपि, 'सोऽचि लोपे चेत्' इति लोपेन साधुत्वात् । भावनैव याऽस्तु तत्पदपरामृष्टा ।

ननु सम्मतैव धातोर्व्यापारार्थकत्वे, तत्र च किं मानमित्याशङ्कां कृत्वा धातुविवरणे मानं दर्शयति सार्द्ध पचति पाकमुत्पादयतीति । ननु 'या क्रिया भावना सैवोत्पादनाऽपि च सा स्मृता' इत्युक्तेऽपि क्रियाया भावनात्वलाभे किमिति व्यापारपदोपादानमत आह— व्यापारपदमिति । तथा च व्याप्रियतेऽनेनेति करणव्युत्पत्त्या, भावव्युत्पत्त्या वा व्यापारपदेन फलानुकूलयावत्तामधिश्रयणादीनां भावनात्वलाभाय तदुपादानम् । क्रियापदेन तु कृतिपदवाच्यमात्रार्थकत्वस्यापि सम्भवेन सम्पाद्यस्यैव तद्विवरणेन भावनात्वलाभः स्यादिति भावः ।

अत एवेति तत्तद्रूपेण फूत्कारत्वादीनां धातुवाच्यत्वादित्यर्थः । सर्वसिद्ध इति । अत एव पचतीत्युक्ते फूत्कारादिमान् वेति सन्देहानुदयादिति भावः । यद्वा नैयायिकैर्व्यापारस्याख्यातार्थत्वतावच्छेदकत्वं निरस्य कृतित्वस्य तदवच्छेदकत्वमिति तन्मतेऽपि धातोः कृतिमात्रं वाच्यमाऽस्त्वित्युक्तं भविष्यतीति तदाशङ्कां निराकरोति सर्वैव व्यापारमित्यादि 'यत्न' इति शास्त्रीयव्यवहारनिरसनम् ।

नचैवमेषां शक्यताऽवच्छेदकत्वे गौरवापत्त्या कृतित्वमेव तदवच्छेदकं वाच्यम्, 'रथो गच्छति' जानातीत्यादौ च व्यापारत्वादिप्रकारकबोधो लक्षणयेति नैयायिकरीतिः साध्वी, शक्यताऽवच्छेदकत्वस्यापि लक्ष्यताऽवच्छेदकत्ववद् गुरुणि सम्भवात्,

प्रभा

नचेति—अस्य साध्वीति वक्ष्यमाणेनान्वय । नच साध्वीत्यर्थ । एषामिति—अथ फलावच्छिन्नव्यापारत्वादीना-
मित्यर्थ । गौरवेति—यत्नत्वजात्यपेक्षया फलव्यापारत्वादीनामुपाधिरूपाणामनेकधर्मत्वाच्च गौरवापत्त्येत्यर्थ । तद
वच्छेदकमिति—धातुवाच्यतावच्छेदकमित्यर्थं । यत्नत्वस्य जातिरूपतया लघुत्वादिति भाव ।
ननु यत्नत्वस्यापि जातित्वे मानाभाव इति चेन्न, चेष्टाम्प्रति यत्नस्य कारणतया कारणतावच्छेदकतया
प्रवृत्तिरूपयत्नम्प्रति इष्टसाधनताज्ञानस्य कारणत्वेन, कार्यताऽवच्छेदकतया वा जातित्वसिद्धेः । तथा च फल
धात्वर्थ, यत्न आख्यातार्थ इति नैयायिकमत पर्यवसन्नम ।
ननु यत्नस्य प्राणिधर्मत्वाद् रथादौ बाधात् 'रथो गच्छति' इत्यादौ सर्वानुभवसिद्धा व्यापारप्रतीति-
र्विरुध्येतेत्यत आह—रथो गच्छतीति । जानातीति—आदिना 'इच्छति' 'नश्यति' इत्यादे सङ्ग्रह ।
व्यापारत्वादीति—आश्रयत्व-प्रतियोगित्वादीना सग्रह । जानातीत्यत्र ज्ञानजनकतया जन्यतया वा
कृतौ बाधात् 'इच्छति' इत्यत्रेच्छाया कृतावनन्वयस्य 'नश्यति' इत्यत्र नाशस्य च कृतावनन्वयस्य चाऽऽपत्तिर्बोध्या।
लक्षणयेति—उक्तेषु आख्यातस्य व्यापारे आश्रयत्वे, प्रतियोगित्वे च लक्षणेत्यर्थ । 'रथो गच्छति' इत्यत्र
सयोगानुकूलव्यापारवान् रथ ' इति । 'जानाति' 'इच्छति' इत्यत्र ज्ञानेच्छानिरूपिताश्रयतावान् देवदत्त इति,
नश्यति घट ' इत्यत्र 'नाशनिरूपितप्रतियोगितावान् घट ' इति च बोध । सर्वत्रमिति—तत्रैतस्य साध्वी-
त्यत्रान्वय । नैयायिकेति—नैयायिकेन यथा कृत्यर्थकाऽऽख्यातस्य तत्र व्यापारे लक्षणा कृता, तथा मयाऽपि
कर्त्तव्येति भाव ।
लक्ष्यतावच्छेदकत्ववदिति—व्यापारे लक्षणावादिनये यथा गुरुभूतस्य = (सखण्डोपाधिरूपस्य) व्यापार-
त्वस्य लक्ष्यताऽवच्छेदकत्व तथा धातुशक्यत्वे ऽपि तस्य शक्यतावच्छेदकत्वस्वीकारे गौरवाभाव इति भाव ।
वस्तुतस्तु व्यापारत्वमखण्डोपाधिरूपमेवेति न गौरवम् । व्यापारत्वस्य जातित्वन्तु न, यत्नत्वेन साङ्कर्यात् ।
यदि तु यत्नत्वस्य गुणत्व नाङ्गीक्रियते तदा नोक्तदोष । रथो गच्छतीत्यत्र तव लक्ष्यताऽवच्छेदके गौरवम्,
अस्माक शक्यताऽवच्छेदके तदिति साम्यमेव । गुरुणीति—शक्तिलक्षणयोरुभयोरपि धात्वर्थसम्बन्धत्वाविशेषाद्

दर्पणव्याख्या

ॐ एषाम् ॐ अधिश्रयणत्वादीनाम । ॐ गौरवेति ॐ धातुवाच्यत्वावच्छेदकत्वे गौरवापत्त्यर्थं । तेषा कृतिभ्या
पक्षया गुरुत्वाज्ञानाच्चेति भाव ।
ॐ तदवच्छेदकमिति ॐ धातुवाच्यताऽवच्छेदकमित्यर्थ । ननु कृतेरेव धात्वर्थत्वे रथादावचेतने तद्बाधा
त्तादृशप्रयोगानुपपत्तिरत आह ॐ रथो गच्छतीत्यादि ॐ व्यापारादीत्यादिनाऽऽश्रयत्व-प्रतियोगित्वपरिग्रह । जानाती
त्यादाविच्छादिरूपाश्रये घटो नश्यतीत्यादौ नाशाश्रयत्वस्य बाधात्प्रतियोगित्वे एव लक्षणाया द्रष्टव्यत्वात् ।
ॐ नैयायिकरीतिरिति ॐ आख्यातार्थविचारे हि तैर्व्यापारे लक्षणाम्, कृतौ च शक्ति स्वीकृत्याऽस्य प्रयोग समर्थित
स्तद्वन्मयाऽपि समर्थनीय इति सादृश्यात् रीतिपदोपादानम्, न त्वन्याऽपो तन्मतादर इति भाव । लाघवोपष्टम्भमानादेवा
र्थसिद्धि नैव केवलाल्लाघवादित्याशयेन मीमासकरीत्या तद्रीतेरेवासाधुत्वमाविष्करोति ॐ शक्यताऽवच्छेदकत्वस्येति ॐ

तयोर्वैषम्ये बीजाभावात्। नच पचति = पाकं करोतीति यत्नार्थककरोतिना विवरणाद् यत्न एवाऽऽख्यातार्थ इति वाच्यम्,

प्रभा

गुरुधर्मावच्छिन्ने लक्षणाया इव शक्तेरपि सम्भवादित्यर्थः। वैषम्य इति—शक्तिलक्षणयोर्द्वयोरपि पद-तदर्थसम्बन्धघटितत्वसाम्याद् गुरुधर्मे लक्ष्यतावच्छेदकत्वं स्वीकार्यम्, शक्यतावच्छेदकत्वं न स्वीकार्यमिति वैषम्य इत्यर्थः।

बीजाभावादिति—समनियतस्य गुरुधर्मस्य, लघुधर्मस्य च सत्त्वे लघुधर्मे एवावच्छेदकत्वं स्वीकार्यं न तु गुरुधर्मे, गौरवात्। प्रकृते रथो गच्छति' इत्यत्र व्यापारे लक्षणायां व्यापारत्वं लक्ष्यतावच्छेदकम्। 'इच्छति' इत्यत्र आश्रये लक्षणायामाश्रयत्वम्। 'नश्यति' इत्यत्र प्रतियोगिनि लक्षणायां प्रतियोगित्वं लक्ष्यताऽवच्छेदकमिति शक्यतावच्छेदकीभूतकृतित्वापेक्षया गौरवसत्त्वेऽपि यथा लक्ष्यतावच्छेदकत्वं नैयायिकानामिष्टं तथा शाब्दिकानां व्यापारस्य शक्यत्वे व्यापारत्वस्य फूत्कारत्वादीनाञ्च शक्यतावच्छेदकत्वे गौरवसत्त्वेऽपि तत्स्वीकार्यम्, समनियतस्य तादृशस्य लघुधर्मस्याभावादित्युक्तं बीजाभावादीति। तादृशलघुधर्मस्यासम्भवेन 'सम्भवति लघुधर्मे' इत्यस्य विषयाभावादिति भावः। कृतित्वस्य व्यापारत्वादेश्च समनियतत्वाभावात्। किञ्चावच्छेदकत्वं यदि स्वरूपसम्बन्धविशेषस्तदा गुरूणामपि धर्माणां सत्त्वेन स्वरूपसम्बन्धत्वकल्पने गौरवाभाव एव।

अथ स्वरूपसम्बन्धादतिरिक्तं तदापि 'गङ्गातीरत्वं लक्ष्यतावच्छेदकम्' इत्युपपत्तये गुरुधर्मस्याप्यवच्छेदकत्वमावश्यकम्। यद्यवच्छेदकत्वमन्यूनानतिरिक्तवृत्तित्वरूपं तदापि तादृशत्वस्य गुरुधर्मेऽपि सत्त्वादवच्छेदकत्वं दुर्वारमेव।

अयम्भावः—स्वरूपसम्बन्धविशेषरूपमवच्छेदकत्वं सम्भवति लघुधर्मे गुरुणि न तत्प्रकल्पयेत्। यथा प्रत्यक्षं प्रति महत्त्वस्य कारणत्वे लघुनि महत्त्वत्वे कारणतावच्छेदकत्वं कल्प्यते, न तु अनेकद्रव्यस्य कारणत्वं स्वीकृत्यानेकद्रव्यत्वे। यथा वा 'प्रमेयघटो नास्ति' इत्यत्र घटत्वे एव प्रतियोगिताऽवच्छेदकत्वं न तु प्रमेयत्वविशिष्टघटत्वे। अतः 'सम्भवति' इति न्याये सम्भवतीत्यस्य सम्भवत्तदवच्छेदकताके धर्मे इत्यर्थः।

एवञ्च—सम्भवत्तदवच्छेदकताकधर्मापेक्षया यो गुरुः स तदवच्छेदकत्वाभाववानिति व्याप्तिः फलिता। असम्भवत्तदवच्छेदकताकधर्मे गुरुण्यपि तदवच्छेदकत्वमुचितमेव। सम्भवत्तदवच्छेदकत्वञ्च = तदवच्छेदकबाधकशून्यत्वम्। बाधकञ्चावच्छेद्यं यत्प्रतियोगितादि तदसमनैयत्यम्। तथा प्रतियोगिसमनैयत्यमेव सम्भवत्तदवच्छेदकत्वम्। समनैयत्यञ्चात्र न स्वव्याप्यत्व-स्वव्यापकत्वोभयसम्बन्धेन परस्परविशिष्टत्वरूपम्, 'गुणे गुणकर्मान्यत्वविशिष्टसत्ता नास्ति' इतिवत् 'गुणे सत्ता नास्ति' इति प्रतीत्यापत्तेः।

तथाहि—विशिष्टसत्तानिष्ठप्रतियोगिताया विशिष्टसत्ताशुद्धसत्तयोरैक्येन सत्तायामपि सत्त्वेन सत्तात्वस्यापि प्रतियोगितासमनैयत्येन तत्रैव प्रतियोगितावच्छेदकत्वकल्पनेनोक्तप्रतीतेर्दुर्वारत्वात्। किन्तु 'तदन्यूनवृत्तित्वे सति तन्निरूपकाभावविरोधिताऽवच्छेदकत्वरूपम्'।

दर्पणव्याख्या

तथाच असति बाधके शक्तिर्गुरुणाऽपि धर्मेणावच्छिद्यते, कृतित्वाल्लक्षणावदित्यनुमानात्तेषु शक्तिः सेत्स्यतीति भावः।

ननु तेषां कृतित्वाऽपेक्षया गुरुत्वमेव बाधकमत आह ॐ तयोरिति ॐ शक्यतावच्छेदकस्य लक्ष्यतावच्छेदकत्वयोरित्यर्थः। ॐ बीजाभावादिति ॐ सम्भवति समनियते लघौ धर्मे गुरौ तदभावादित्यस्य प्रकृतेऽनवतारेण यद्यवच्छेदकत्वं स्वरूपसम्बन्धविशेषस्तदा तत्स्वरूपत्वस्य गुरूणामपि सत्त्वाकिमनुपपन्नम्। अथातिरिक्तं तदा गुरुधर्मेऽपि तत्स्वीकार

तयोर्वैषम्ये बीजाभावात् । नच पचति = पाकं करोतीति यत्नार्थककरोतिना विवरणाद् यत्न एवाऽऽख्यातार्थ इति वाच्यम्,

प्रभा

गुरुधर्मावच्छिन्ने लक्षणाया इव शक्तेरपि सम्भवादित्यर्थः । वैषम्य इति—शक्तिलक्षणयोर्द्वयोरपि पद-सम्बन्धघटितत्वसाम्याद् गुरुधर्मे लक्ष्यतावच्छेदकत्वं स्वीकार्यम्, शक्यतावच्छेदकत्वं न स्वीकार्यमिति इत्यर्थः ।

बीजाभावादिति—समनियतस्य गुरुधर्मस्य, लघुधर्मस्य च सत्त्वे लघुधर्मे एवावच्छेदकत्वं स्वीका गुरुधर्मे, गौरवात् । प्रकृते रथो गच्छति' इत्यत्र व्यापारे लक्षणायां व्यापारत्वं लक्ष्यतावच्छेदकम् । ' इत्यत्र आश्रये लक्षणायामाश्रयत्वम् । 'नश्यति' इत्यत्र प्रतियोगिनि लक्षणायां प्रतियोगित्वं लक्ष्यताऽवच्छे शक्यतावच्छेदकीभूतकृतित्वापेक्षया गौरवसत्त्वेऽपि यथा लक्ष्यतावच्छेदकत्वं नैयायिकानामिष्टं तथा कानां व्यापारस्य शक्यत्वे व्यापारत्वस्य फूत्कारत्वादीनाञ्च शक्यतावच्छेदकत्वे गौरवसत्त्वेऽपि तत्स्वी समनियतस्य तादृशस्य लघुधर्मस्याभावादित्युक्तं बीजाभावादीति । तादृशलघुधर्मस्यासम्भवेन 'सम्भ धर्मे' इत्यस्य विषयाभावादिति भावः । कृतित्वस्य व्यापारत्वादेश्च समनियतत्वाभावात् । किञ्चा यदि स्वरूपसम्बन्धविशेषस्तदा गुरूणामपि धर्माणां सत्त्वेन स्वरूपसम्बन्धत्वकल्पने गौरवाभाव एव

अथ स्वरूपसम्बन्धादतिरिक्तं तदापि 'गङ्गातीरत्वं लक्ष्यतावच्छेदकम्' इत्युपपत्तये गुरुधर्मस्य

नचात्र घटस्य कर्तृत्वेन तत्संज्ञया कर्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम्, अनुगतकर्तृत्वस्य त्वन्मते दुर्वचत्वेन घटस्याकर्तृत्वात्। कृत्याश्रयत्वस्य, कारकचक्रप्रयोक्तृत्वस्य वा घटादावभावात्, धात्वर्थानुकूलव्यापाराश्रयत्वस्य च कारकमात्रातिव्यापकत्वात्।

प्रभा

फलमात्रस्य धातुवाच्यत्वे तु बाधो न स्यादित्याह—नचेति। अनुगतेति—चेतनाचेतनसाधारणेत्यर्थः। कृत्याश्रयत्वस्येति—धात्वर्थफलानुकूलकृत्याश्रयत्वस्येत्यर्थः। कारकेति—कारकाणां चक्रम् = समूहः, सकलकारकेत्यर्थः, तस्य प्रयोक्तृत्वम् = प्रवर्तकत्वम्, इतरकारकाणां व्यापारस्य कर्तृव्यापारप्रयोज्यत्वात्, कृत्याश्रयत्वस्य प्रयोक्तृत्वस्य च प्राणिधर्मतया घटादावभावात्। एवञ्च तव मते कृतिमत एव स्वतन्त्रपदेन विवक्षिततया कृतेरभावे कर्तृसंज्ञाऽप्राप्त्या फलाश्रयत्वेन कर्मसंज्ञायां द्वितीयापत्तिर्दुर्वारा स्यादिति भावः। ननु धात्वर्थानुकूलव्यापाराश्रयत्वमेव कर्तृत्वमस्मन्मते विवक्षितमिति दोषाभाव इत्यत आह—कारकमात्रेति—सकलकारकेष्वित्यर्थः, मात्रशब्दस्य सर्वार्थकत्वात्।

ननु कारकचक्रप्रयोक्तृत्वप्रकारकविवक्षाविषयत्वमेव कर्तृत्वम्, तस्य च घटेऽपि विवक्षितुं शक्यत्वेन नोक्तापत्तिरत एव 'कारके' (अ० १ पा० ४ सू० २३) इति सूत्रभाष्ये 'सर्वत्रैवात्र स्वातन्त्र्यं पारतन्त्र्यञ्च विवक्षितम्। तयोः पर्यायेण वचनम्। तयोः = स्वातन्त्र्यपारतन्त्र्ययो' पर्यायेण वचनं भविष्यति। वचनाश्रया च संज्ञा भविष्यति। तद्यथा 'बलाहकाद् विद्योतते विद्युत्' 'बलाहके विद्योतते' 'बलाहको विद्योतते' इत्युक्तम्। अनेन विवक्षाधीनं कारकमात्रमिति स्पष्टमेव बोधितमित्यत आह—

दर्पणव्याख्या

❀ नचेति ❀। घटस्येति ❀ घटं भावयतीत्यत्रेव, घटो भवतीत्यत्राऽपि द्वितीयाऽऽपत्तिः। मन्मते तु धात्पात्त-
व्यापाराऽऽश्रयत्वेन परया कर्तृसंज्ञया बाधान्न तदापत्तिरिति भावः।
निराकरणप्रकारतामाह ❀ अनुगतेति ❀ चेतनाऽचेतनसाधारणेत्यर्थः। ❀ त्वन्मते ❀ भवदीयमते।
❀ दुर्वचत्वेनेति ❀ वक्तुमशक्यत्वेनेत्यर्थः। तदेवाऽऽह ❀ कृत्याश्रयत्वस्येति ❀ तस्याऽचेतनेऽव्याप्तत्वादिति भावः।
❀ कारकचक्रप्रयोक्तृत्वस्य वेति ❀ तद्धात्वर्थीयनिखिलकारकप्रवर्तकत्वरूपस्य चेत्यर्थः। नैयायिकमतं निरस्य
मीमांसकं प्रत्याह ❀ धात्वर्थेति ❀। ❀ कारकमात्रेति ❀ मात्रपदं कृत्स्नार्थकम्। सर्वस्याऽपि कारकस्य धात्व-
र्थाऽनुकूलयत्किञ्चित्क्रियाश्रयत्वात्। क्रियाजनकत्वस्यैव कारकत्वादिति भावः।
नन्वचेतने कृत्याश्रयत्वरूपकर्तृत्वस्य बाधेऽपीतरव्यापाराऽनधीनत्वप्रकारकविवक्षाविषयव्यापाराश्रयत्वरूपकारक-
चक्रप्रयोक्तृत्वरूपमेव कर्तृसंज्ञानियामकम्। व्यापारश्च क्वचित् कृतिः, क्वचित् संयोगादिरेव। तादृशव्यापाराश्रय एव
'स्वतन्त्रः कर्ता' इति सूत्रे स्वतन्त्रपदार्थः, तत्सूत्रप्रणयनसामर्थ्यात्। तदुक्तम्—'कारके' इति सूत्रे भाष्ये–प्रधानेन समवाये
स्थाली परतन्त्रा व्यवाये स्वतन्त्रा। किं पुनः प्रधानम्? कर्ता। कथं ज्ञायते कर्ता प्रधानमिति? यत्सर्वेषु कारकेषु सन्निहि-
तेषु कर्ता प्रवर्तयिता भवति' इति। स्थाली काष्ठैः पचतीत्यादौ स्थाल्येव तत्त्वेन विवक्षिता इति तद्भावः। वक्ष्यते
चाऽधिकमुपरिष्टात्।
मीमांसकमते प्रसक्तदूषणोद्धृतिरपि वक्ष्यमाणैव। एवञ्च घटगततादृशव्यापारस्यैव स्वातन्त्र्यविवक्षया कर्तृत्वस्य
निराबाधेन न द्वितीयाप्रसङ्गोऽत आह

किञ्च, भावनाया अवाच्यत्वे घटं भावयतीत्यत्रेव घटो भवतीत्यत्रापि द्वितीया स्यात्।

## प्रभा

फूत्कारत्वादिना। अन्यथा पचेर्व्यापारसामान्यार्थककरोतिना विवरणासङ्गतिः, तत्र तत्र विक्लित्यनुकूलव्यापारः पचेरर्थ इत्यर्थोल्लेखासङ्गतिश्च।

नच पचिना लोकप्रसिद्धफूत्कारत्वादिरूपेण बोधानुपपत्तिः, लक्षणादिना तथाबोधस्योपपादयितुं शक्यत्वात्।

ननु व्यापारावाच्यत्वे यत्नजन्यत्वाप्रतिसन्धानदशायां 'घटः कृत.' 'अङ्कुरः कृत.' इति व्यवहारानुपपत्तिः, व्यापारजन्यत्वप्रतिसन्धानाविशेषात्, ईश्वरकृतिजन्यत्वेऽपि चैत्रादिकृतिजन्यत्वाभावप्रतिसन्धानदशायां तादृशव्यवहारस्येष्टत्वात्। तदुक्तमाचार्यैः—

कृताकृतविभागेन कर्तृरूपव्यवस्थया।
यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना॥ इति

परस्मिन्=मीमांसकमत इत्यर्थः। निरूढलक्षणा एव कर्तृपदस्थकृञोऽपीति चेल्लाघवात्कृतित्वावच्छिन्ने एव शक्तिरस्तु, व्यापारे एव लक्षणाऽस्तु, लघुधर्मावच्छिन्ने एव शक्तेर्मीमांसकादिमतसिद्धत्वात्, लक्षणया बोधात् तत्पदजन्यबोधविषयत्वप्रकारकभगवदिच्छायाः सन्मात्रविषयिण्यास्तत्रावश्यकत्वेऽपि लघुधर्मावच्छिन्न एव सम्बन्धत्वमङ्गीक्रियते, न गुरुधर्मावच्छिन्ने, अनुभवबलेन गौरवज्ञानस्य प्रतिबन्धकत्वकल्पनात्। शक्यसम्बन्धरूपलक्षणायास्तु तत्रापि सम्बन्धत्वं क्लृप्तम्, न कल्प्यमिति वैषम्यमत एव न लक्षणोच्छेद इति सकलतान्त्रिकसिद्धमित्यत आह—किञ्चेति।

अवाच्यत्व इति—व्यापाररूपभावनाया धातोस्तिङश्चावाच्यत्वे इत्यर्थः। द्वितीयेति—व्यापारस्यावाच्यत्वे स्वजनकव्यापारव्यधिकरणधात्वर्थफलाश्रयत्वरूपं कर्मत्वं वक्तव्यम्, धात्वर्थफलाश्रयत्वरूपं वा। तथाच 'घटो भवति' इत्यत्रापि घटपदाद् द्वितीयापत्तिः, भूधात्वर्थोत्पत्तिरूपफलाश्रयत्वात्। व्यापारस्य धातुवाच्यत्ववादिनये तु न दोषः, धात्वर्थव्यापाराश्रयस्यैव कर्तृत्वेन परया कर्तृसंज्ञया कर्मसंज्ञाया बाधात्।

## दर्पणव्याख्या

त्वमवश्यमङ्गीकरणीयमिति भावः।

अत्रेदमवधेयम्—वैयाकरणमतेऽपि पचत्यादेः फूत्कारादिव्यापारे व्यापारत्वेनैव शक्तिः, व्यापारसामान्यार्थककृञा विवरणात्। एवञ्च व्यापारत्वेन कृतेरपि सङ्ग्रहान्मतो भूतं ननु 'मया कृतम्' इति तत्र तत्रोक्तं सङ्गच्छते। तत्तद्रूपेण क्वचिद् बोधस्तु पचत्यादीनां तत्तद्रूपावच्छिन्ने लक्षणयोपपाद्यः।

वाक्यादन्येन रूपेण ज्ञाने भवति लक्षणा। इत्यभियुक्तोक्तेः।

अत एव वाक्यार्थप्रदर्शनावसरे विक्लित्त्यनुकूलो व्यापारः, ज्ञानानुकूलो व्यापार इति व्यापारसामान्यार्थकव्यापारपदेन सङ्कीर्तितस्य सङ्गतिरिति। 'कृञोऽकर्मकतापत्ते.' इति मूलमवतारयति ❀ किञ्चेति ❀। ❀ अवाच्यत्वे ❀ धात्ववाच्यत्वे। ❀ द्वितीया स्यादिति ❀ धात्वर्थोत्पत्तिरूपफलाऽऽश्रयत्वात्।

ननु घटो भवतीत्यत्र कृत्याश्रयत्वरूपकर्तृत्वबाधेऽपि धात्वर्थफलाऽन्विताऽऽख्यातार्थव्यापाराश्रयत्वरूपकर्तृत्वसत्त्वात्तेन कर्मत्वस्याऽवश्य बाधेन नोक्तस्थले द्वितीयाप्रसक्तिः, अन्यथा कर्त्तरि लकारोऽप्यनाकरतामापद्येतेत्याशङ्क्य निराकुरुते

नचात्र घटस्य कर्तृत्वेन तत्संज्ञया कर्म्मसंज्ञाया बाधात्र द्वितीयेति वाच्यम्, अनुगतकर्तृत्वस्य त्वन्मते दुर्वचत्वेन घटस्याकर्तृत्वात्। कृत्याश्रयत्वस्य, कारकचक्रप्रयोक्तृत्वस्य वा घटादावभावात्, धात्वर्थानुकूलव्यापाराश्रयत्वस्य च कारकमात्रातिव्यापकत्वात्।

प्रभा

फलमात्रस्य धातुवाच्यत्वे तु बाधो न स्यादित्याह—नचेति। अनुगतेति—चेतनाचेतनसाधारणेत्यर्थः। कृत्याश्रयत्वस्येति—धात्वर्थफलानुकूलकृत्याश्रयत्वस्येत्यर्थः। कारकेति—कारकाणां चक्रम्=समूहः, सकलकारकेत्यर्थः, तस्य प्रयोक्तृत्वम्=प्रवर्तकत्वम्, इतरकारकाणां व्यापारस्य कर्तृव्यापारप्रयोज्यत्वात्, कृत्याश्रयत्वस्य प्रयोक्तृत्वस्य च प्राणिधर्मतया घटादावभावात्। एवञ्च तव मते कृतिमत एव स्वतन्त्रपदेन विवक्षिततया कृतेरभावे कर्तृसंज्ञाऽप्राप्त्या फलाश्रयत्वेन कर्मसंज्ञायां द्वितीयापत्तिर्दुर्वारा स्यादिति भावः। ननु धात्वर्थानुकूलव्यापाराश्रयत्वमेव कर्तृत्वमस्मन्मते विवक्षितमिति दोषाभाव इत्यत आह—कारकमात्रेति—सकलकारकेष्वित्यर्थः, मात्रशब्दस्य सर्वार्थकत्वात्।

ननु कारकचक्रप्रयोक्तृत्वप्रकारकविवक्षाविषयत्वमेव कर्तृत्वम्, तस्य च घटेऽपि विवक्षितुं शक्यत्वेन नोक्तापत्तिरत एव 'कारके' (अ० १ पा० ४ सू० २३) इति सूत्रभाष्ये 'सर्वत्रैवात्र स्वातन्त्र्यं पारतन्त्र्यञ्च विवक्षितम्। तयोः पर्यायेण वचनम्। तयोः=स्वातन्त्र्यपारतन्त्र्ययोः पर्यायेण वचनं भविष्यति। वचनाश्रया च संज्ञा भविष्यति। तद्यथा 'बलाहकाद् विद्योतते विद्युत्' 'बलाहके विद्योतते' 'बलाहको विद्योतते' इत्युक्तम्। अनेन विवक्षाधीनं कारकमात्रमिति स्पष्टमेव बोधितमित्यत आह—

दर्पणव्याख्या

❀ नचेति ❀। घटस्येति ❀ घटं भावयतीत्यत्रेव, घटो भवतीत्यत्राऽपि द्वितीयाऽऽपत्तिः। मन्मते तु धात्वर्थव्यापाराऽऽश्रयत्वेन परया कर्तृसंज्ञया बाधान्न तदापत्तिरिति भावः।

❀ त्वन्मते ❀ भवदीयमते। निराकरणप्रकारतामाह ❀ अनुगतेति ❀ चेतनाऽचेतनसाधारणेत्यर्थः।

❀ दुर्वचत्वेनेति ❀ वक्तुमशक्यत्वेनेत्यर्थः। तदेवाऽऽह ❀ कृत्याश्रयत्वस्येति ❀ तस्याऽचेतनेऽव्याप्तत्वादिति भावः। नैयायिकमतं निरस्य ❀ कारकचक्रप्रयोक्तृत्वस्य वेति ❀ तद्धात्वर्थानिखिलकारकप्रवर्तकत्वरूपस्य चेत्यर्थः। मीमांसकं प्रत्याह ❀ धात्वर्थेति ❀। ❀ कारकमात्रेति ❀ मात्रपदं कृत्स्नार्थकम्। सर्वस्याऽपि कारकस्य धात्वर्थाऽनुकूलयत्किञ्चित्क्रियाश्रयत्वात्। क्रियाजनकत्वस्यैव कारकत्वादिति भावः।

नन्वचेतने कृत्याश्रयत्वरूपकर्तृत्वस्य बाधेऽपीतरव्यापाराऽनधीनस्वप्रकारकविवक्षाविषयव्यापाराश्रयत्वरूपकारकचक्रप्रयोक्तृत्वरूपमेव कर्तृसंज्ञानियामकम्। व्यापारश्च कचित् कृतिः, कचित् संयोगादिरेव। तादृशव्यापाराश्रय एव 'स्वतन्त्रः कर्त्ता' इति सूत्रे स्वतन्त्रपदार्थः, तत्सूत्रप्रणयनसामर्थ्यात्। तदुक्तम्—'कारके' इति सूत्रे भाष्ये-प्रधानेन समवाये स्थाली परतन्त्रा व्यवाये स्वतन्त्रा। किं पुनः प्रधानम्? कर्त्ता। कथं ज्ञायते कर्त्ता प्रधानमिति? यत्सर्वेषु कारकेषु सन्निहितेषु कर्त्ता प्रवर्त्तयिता भवति' इति। स्थाली काष्ठैः पचतीत्यादौ स्थाल्येव तत्त्वेन विवक्षिता इति तद्भावः। वक्ष्यते चाऽधिकमुपरिष्टात्।

मीमांसकमते प्रसक्तदूषणोद्धृतिरपि वक्ष्यमाणैव। एवञ्च घटगमनादव्यापारस्यैव स्वातन्त्र्यविवक्षया कर्तृत्वस्य निराबाधेन न द्वितीयाप्रसङ्गोऽत आह

तथाच 'न हि यत्नः' इत्यत्र फलस्थानीयत्वेनेति शेषः । कृञ इति-धातुमात्रोपलक्षणम्, सर्वेषामप्यकर्म्मकता, सकर्म्मकता वा स्यादिति भावः ।

अथवा, 'व्यापारो भावना' इत्यर्थेन व्यापारस्य वाच्यत्वं प्रसाध्य फलांशस्यापि तत् साधयन्

### प्रभा

नच धातुमात्रस्य व्यापारवाचकत्वे सकर्मकधातुभिन्नाकर्मकधातुत्वमिति दुर्वचम्, भेदप्रतियोगिनः सकर्मकधातोर्दुर्लभत्वादिति वाच्यम्, ण्यन्तधातुदुहादिधातुरूपप्रतियोगिनः सुलभत्वात् । ननु अकर्मकत्वापत्त्या सविषयार्थकज्ञाधात्वादेर्व्यापारार्थकत्वसिद्धावपि धातुमात्रस्य व्यापारवाचकत्वे प्रमाणाभाव इत्यत आह—धातुमात्रेति । 'फलमात्रं धात्वर्थः' इति कस्यचिन्मीमांसकस्य मतं खण्डयित्वा व्यापारमात्रं धात्वर्थः, संयोगादिरूपफलविशेषान्वयबोधे च गम्यादिधातुविशेषजन्यव्यापारोपस्थितेर्हेतुतया न गच्छति-त्यजत्योः समानान्वयबोधजनकतेति व्युत्पत्तिवादोक्तनैयायिकविशेषस्य मतं निराकर्तुमाह—अथवेति । तत्=सकलधातुवाच्यत्वम् ।

### दर्पणव्याख्या

नन्विदानीं धातुमात्रस्यैव व्यापारवाचकत्वस्याऽसिद्धत्वात् सकर्मकरूपप्रतियोग्यऽसिद्धया अननुक्तार्थापादनस्याऽप्यसम्भवदुक्तिकत्वं समानम् । अन्यतमत्वरूपस्य तु स्वयमेव निराकृतत्वादुक्तरूपेण तद्ग्रहणाऽसम्भवादिति चेन्न, नयत्यादिद्विकर्मकाणां संयोगाऽद्यनुकूलाऽजादिनिष्ठक्रियात्मकफलार्थकत्वस्य धातोः फलमात्रार्थकत्वत्वादिनाऽप्यभ्युपगमादजादिनिष्ठक्रियायाः संयोगरूपफलजनकत्वाल्लोकप्रसिद्धेश्च व्यापारत्वात्तदर्थकधातून् ण्यन्तादिधातून् चोपादायैव कथञ्चित्प्रसिद्धिसम्भवादिति नोक्तव्याख्याने दोषः ।

नन्वेतावता ज्ञाकृञादीनां व्यापारार्थकत्वं सिद्धम्, न धातुमात्रस्येत्यतः कृञ्पदं धातुमात्रपरतया व्याचष्टे—❀ कृञ इति ❀ । ❀ धातुमात्रोपलक्षणमिति ❀ कृञ्पदं शक्यलक्ष्यसाधारणधातुत्वेनाऽजहत्स्वार्थलक्षणया धातुमात्रबोधकम् । तथाच धातुमात्रस्याऽकर्मकतापत्त्या न फलमात्रार्थकता, किन्तु व्यापाराऽर्थकताऽपीत्यर्थः । ❀ अकर्मकतेति ❀ पूर्वोक्तभिन्नसर्वधातूनां सेत्यर्थः । यदि फलवाचकत्वमेव सकर्मकत्वं, तदा सर्वेषामविशेषेण सकर्मकतैव स्यादित्याह ❀ सकर्मकतेति ❀

वस्तुतस्तु, उक्तयुक्त्या धातोर्व्यापारार्थकत्वसिद्धिस्तदैव स्याद् यदि स्वार्थफलेत्यादिसकर्मकलक्षणं सकर्मकधातुमात्रसाधारणं स्यात्, तदेव न, अध्याद्युपसृष्टशीङादिष्वऽव्याप्तेः । तस्माद् ज्ञादीनां धातुत्वाऽनापत्तिः । मैत्रेण पाच्यतीत्यादौ मैत्रादीनां कर्तृत्वाऽनुपपत्तिश्च तथा । अत एव 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते' इत्याद्युपपत्तिरिति दिक् ।

ननु, 'कृञोऽकर्मकतापत्तेः' इति ग्रन्थो न मीमांसकमतनिराकरणपरः । तस्य, तस्मात् करोतिरित्यादिना निराकरिष्यमाणत्वात्, तैः कृञो यत्नार्थकत्वाऽनभ्युपगमाच्च । नापि नैयायिकमतनिरासपरः, नैयायिकैः फलव्यापारयोरुभयोरपि धातुवाच्यत्वाऽभ्युपगमात् । तदुक्तमाख्यातवाददीधितौ 'स्तां वा फलव्यापारौ पृथगेव धात्वर्थौ' इति । धातोः फलाऽवच्छिन्नव्यापारार्थकत्वे कर्माख्याते फलस्य द्वेधा भानापत्त्या तयोर्विभक्तयोरेव शक्तिर्ज्यायसीति तद्भावः । फलस्य धातुवाच्यत्वे परं केषाञ्चिन्न्यायविदां विप्रतिपत्तिः, कर्माख्यातेन द्वितीयया च तद्भानसम्भवात् । किञ्चैतद्ग्रन्थस्य धातुमात्रस्य व्यापारार्थकत्वसाधकत्वे धातोरकर्मतापत्तेः, 'फलमात्रार्थता न हि' इत्येव ब्रूयात्र तु कृञ इत्यपरितोषादन्यार्थपरतया मूलमवतारयति ❀ अथवेति ❀ ।

❀ प्रसाध्येति ❀ पूर्वार्द्धस्य विवरणपरतया व्याख्यानादिति भावः । ❀ तदिति ❀ धातुवाच्यत्वमित्यर्थः ।

नैयायिकाभ्युपगतं जानाति-करोत्यादेः केवलज्ञान-यत्नादिक्रियामात्रवाचित्वं दूषयति-कृञ इति ।
अयं भावः—फलांशस्यावाच्यत्वे व्यापार एव धात्वर्थः स्यात् । तथाच स्वार्थफलव्यधिकरण-

प्रभा

क्रियामात्रेति—मात्रपदेन फलस्य धातुवाच्यत्वनिरासः । ननु फलावाचकत्वेऽपि फलव्यधिकरणव्यापार-वाचकत्वरूपसकर्मकत्वं धातोर्व्यापारमात्रवाचित्वेऽपि अक्षतम्, यद्वा, द्वितीयाद्यर्थफलान्वय्यर्थकत्वं सकर्मकत्वम्, द्वितीयादीनामेव फलार्थकत्वाददोष इत्यत आह—अयम्भाव इति ।

दर्पणव्याख्या

❀ जानातिकरोत्यादेरिति ❀ निर्दिष्टयत्नार्थकभिन्नसविषयार्थकधातुमात्रोपलक्षणम् । ❀ क्रियामात्रेति ❀ मात्रपदेन फलव्यवच्छेदः । सकर्मकाणां प्रायशः फलावच्छिन्नव्यापारवाचकत्वम्, विशकलितफलव्यापारोभयार्थकत्वं वा, जाना-त्यादीनां तु ज्ञानादिव्यापारार्थकत्वमेव । अकर्मकाणां तु सर्वेषां न फलार्थकत्वम्, तस्य ततोऽननुभवात्, किन्तु व्यापारार्थकत्वमेवेति प्राचीननैयायिकाभ्युपगमात् । वक्ष्यमाणरीत्या कृञः फलार्थकत्वे तु तुल्यन्यायात् सर्वेषामेव तत्सिद्धि-रिति भावः ।

ननु कृञः फलावाचकत्वे कथमकर्मकत्वमत आह ❀ अयं भाव इति ❀ । वाचकत्वादीत्यादिना स्वार्थव्यापारव्यधि-करणफलवाचकत्वस्य नैयायिकनये फलावच्छिन्नव्यापारार्थकत्वस्यापि सकर्मकत्वात्तस्य च सद्भावः । जानात्यादीनामेव फलार्थकत्वानभ्युपगमे उच्छेदपदार्थोऽव्याप्तिः, सर्वेषामेव तदनभ्युपगमे त्वसम्भवः । तथाच कृञ्धातुः फलवाचकः, सकर्मक-स्यात्, पच्यादिवदित्यनुमाने विपक्षबाधकतर्कप्रदर्शकं कृञोऽकर्मकत्वापत्तिरिति बोध्यम् ।

वस्तुतस्तु, व्यापारो भावना सैवेति पूर्वार्द्धमेव विवरणप्रदर्शनेन धातोः फलव्यापारोभयार्थत्वसाधकम् । तथाहि—धातोर्व्यापारार्थकत्वेऽसिद्धे भावनादिपदैर्व्यापारपदविवरणमात्रान्न तस्य तावत्सिद्धिरिति स्फुटमेव । अतः पचति पाकं करोति, पाकभावना, तादृक्युत्पादना, इत्यादिविवरणपरतैव तस्य वाच्या । व्याख्यातं च तथैव सारकृता । तथाच व्यापारार्थकत्वेन निक्रियाद्यर्थकवाक्यादिपदेनाऽपि विवरणादुभयोरपि धात्वर्थत्वसिद्धिः तत्र जानात्यादौ फलांशे विप्रतिपन्नं नैयायिकं प्रत्यु-क्तार्थोपष्टम्भकतया कृञोऽकर्मकतेत्याद्युक्तम् । धातुमात्रे व्यापाराऽवाचकत्वं वदन्तं मीमांसकं प्रति तु तदुपपादकतयैव-तस्मात्करोतिरित्यादि ।

यद्यपि व्यापारांशे विप्रतिपन्नं प्रत्यपि कृञ इत्याद्युपष्टम्भकम्, तथापि विवरणस्यैवाऽऽख्यातपरतया सकर्मकत्वस्य व्यापारार्थकत्वं विनाऽप्यन्यथासिद्धायुक्तावितायां तद्ग्रन्थस्याऽऽवश्यकत्वादिति ।

नव्यनैयायिकास्तु—सकर्मकधातूनां फले तज्जनकत्वेन विवक्षितव्यापारेषु चोपलक्षणीभूतसाधनाऽऽकाङ्क्षोत्थापकताऽव-च्छेदकधर्मसमानाऽधिकरणधर्मत्वाऽनुगतीकृततत्तद्धर्माऽवच्छिन्नेषु शक्तिः, सम्भवति फलजनकतया विवक्षितानां तेषां विभिन्न-धर्मवत्त्वम् । यत्र त्वेकधर्माऽवच्छिन्नस्यैव फलाऽनुकूलत्वं विवक्षाविषयस्तत्र तदवच्छिन्न एव धातोः सा । यदि सर्वत्र समुदाय एव शक्तिरिति राजाऽऽज्ञाऽस्ति । बहुकालसाध्योक्तधात्वर्थविषयमिति न तद्व्याकोपः । अन्यथा सर्वत्राऽगतिक-

'क्रिया नामेयम्' इत्यादि भाष्य तु बहुकालसाध्योक्तधात्वर्थविषयमिति न तद्व्याकोपः । कृतित्वस्य तादृशधर्मसमानाधिकरणधर्मत्वेऽपि न तस्य पच्या-गत्यारोपाश्रयणापत्तेः । तेषामेव च व्यापारपदव्यपदेश्यत्वम् । अत एव व्युत्पन्नानां न कदाचिदपि तत्तात्पर्येण यागपाकादि-घर्थताऽवच्छेदकत्वम्, तदंशे तस्योपलक्षणत्वाऽनङ्गीकारात् । एतेन तस्या अपि व्यापारतया धातोरेव लाभान्न तिङस्तत्र शक्ति-पदप्रयोगस्तथा प्रयुक्तादपि तस्मात्पाकादिकृतिबोधश्च । रिति निराकृतम् ।

**व्यापारवाचित्वादिरूपसकर्म्मत्वोच्छेदापत्तिः। नच कृञादौ सकर्मकत्वव्यवहारो भाक्त इति नैयायिकोक्तं युक्तम्, व्यवहारस्य भाक्तत्वेऽपि कर्म्मणि लकारासम्भवात्।**

प्रभा

ननु पच्यादेरुक्तसकर्मकत्वानुरोधेन, गच्छति-त्यजत्योरेकस्यैव व्यापारस्य संयोगविभागजनकतया पर्यायत्ववारणाय द्वितीयया फलविशेषबोधे गम्यादिरूपतत्तत्समभिव्याहारादिरूपानेकविधकारणकल्पने गौरवेण च फलव्यापारोभयार्थकत्वेऽपि यत्नादिरूपसविषयार्थककृञ्ज्ञाधात्वादेर्यत्नज्ञानादिरूपव्यापारमात्रवाचित्वेऽपि बाधकाभावः। सकर्मकत्वव्यवहारस्तु सविषयार्थकधातूनां विषयत्वरूपं लाक्षणिकं कर्मत्वमादायेत्यत आह—भाक्त इति—लाक्षणिक इत्यर्थः, भज्यते=सेव्यते स्व (लक्षणा) प्रयोजकतयाऽनयेति भक्तिर्लक्षणा, शक्यसम्बन्धरूपलक्षणायाः स्वघटकत्वेन शक्यस्यापि भजनादिति भावः। नैयायिकोक्तमिति—प्राचीननैयायिकोक्तमित्यर्थः, नव्यनैयायिकैः फलव्यापारयोरुभयोरपि धातुवाच्यत्वस्वीकारात्। व्यवहारस्य=सकर्मकशब्देन

दर्पणव्याख्या

ज्ञानात्यादीनां तु विषयत्वं फलं तन्निर्वाहकज्ञानादिव्यापारश्च शक्यम्। कृञस्तु साध्यत्वम्, यत्नश्चार्थः। तेन तद्वाच्यार्थफलसम्बन्धित्वरूपं मुख्यकर्मत्वं घटादीनां निराबाधम्। एवं स्वार्थफलव्यधिकरणत्वरूपं सकर्मकत्वमपि। यत्नार्थकर्मकाणां तु तत्तद्धर्मावच्छिन्नयत्नादिरूपव्यापार एव सा। 'ओदनं यतते' इत्यप्रयोगेण तद्विषयत्वस्य धातुशक्यत्वाऽनुपगमात्। 'यतते' इत्युक्ते कर्माऽऽकाङ्क्षाया अभावाच्च।

अन्याद्युपसृष्टशीङादीनां च फले निरूढलक्षणैव, शीङादितः सर्वत्र फलाबोधात्। तदर्थेऽनादितात्पर्यग्राहकतयैव "अधिशीङ्स्थासाम्" (पा० सू० १।४।४६) इत्यादिसूत्रोपयोगः। कर्मेत्यत्र तु कृञो यत्नबोधकत्वादेव नाऽचेतने स्वरसतः कर्तृपदप्रयोगः।

एवञ्च कर्तृबोधनिर्वाहार्थं पचतीत्यादावाख्यातस्य कृतौ शक्तिरावश्यकी। तदर्थं प्रयत्नस्याऽऽश्रयाश्रयिभावेन प्रथमान्तार्थेऽन्वयात् तद्बोधोपपत्तेः। यत्र तु न तद्बोधसिद्धौ यथा गच्छतीत्यादौ तत्र व्यापारे, आश्रयत्वादौ वा यथायथं लक्षणा। 'स्वतन्त्रः कर्ता' (पा० सू० १।४।५४) इतिसूत्रसामर्थ्येन, धात्वर्थव्यापाराऽऽश्रयत्वप्रतियोगिनामपि कर्तृत्वस्य परिभाषणात् कर्तृबोधाऽनुपपत्तिः। यत्र प्रथमान्तसमभिव्याहारः, यत्र तु कृत्यादिविशेष्यक एव तात्पर्यं तत्र तद्विशेष्यकोऽपि बोध। अबोधनं स्वाश्रयाऽतिरिक्तार्थे विशेषणतया कृत्याद्यर्थप्रबोधनमेवेति नाऽभिधानाऽनभिहित इत्यस्याप्यबोधित इत्येवार्थः। चैत्रः पचतीत्यादौ कर्तृबोधस्य कृतिशक्त्यैव निर्वाहे तत्राऽऽख्यातशक्तिकल्पनाऽनौचित्याच्चाऽनभिधानव्यवस्थाऽनुपपत्तिः। व्यापारव्यपदेशाभावेन विक्लित्यादीनामुत्कधर्मत्वस्योपलक्षणत्वाऽनुपगमात्, पृथक्छक्तिरदृष्टैव। फलत्वं तु पूर्वं निरूपितमेव। एवं सति क्वचिद् दूषणं प्रसक्तमवगणयिष्यते इत्याहुः। एवं सकर्मकत्वादिनिर्वचनाऽनुपपत्त्या धातोरुभयार्थकत्वमावश्यकमिति पर्यवसितम्।

व्यापारमात्रशक्तिवादिनस्तु—द्वितीयार्थान्वय्यर्थकत्वं सकर्मकत्वम्। पच्यादिसमभिव्याहारे द्वितीयाया विक्लित्यर्थकत्वात्। ज्ञानात्यादिसमभिव्याहारे च विषयत्वाद्यर्थकत्वात्, तदन्वयित्वं तदर्थेऽक्षतमित्याहुः। ज्ञानात्यादियोगे घटादीनां गौणकर्मत्वमिति वदतां मतमाशङ्क्य निराचष्टे ❀ नचेति ❀। ❀ भाक्त इति ❀ भज्यते=आगृह्यते सेव्यते वा शक्यार्थोऽनयेति भक्तिर्लक्षणा, तया, शक्याऽर्थस्य तिरोधानात्, स्वज्ञाने घटकतया शक्यार्थस्याऽपेक्षणाच्च। तत आगतो भाक्त इत्यर्थः।

❀ भाक्तत्वेऽपि ❀। लक्षणानिबन्धनत्वेऽपि। ❀ कर्मणीति ❀। मुख्यसकर्मत्वमादाय शास्त्रस्य चरितार्थे गौणे तद्व्यापारे मानाऽभावादिति भावः।

नहि तीरे गङ्गापदस्य भाक्तत्वेऽपि तेन स्नानादिकार्य्यं कर्त्तुं शक्यम्। एवञ्च 'नहि यत्नः' इत्यत्र यत्नमात्रमित्यर्थः ॥ ५ ॥

अत एवाह—

किन्तूत्पादनमेवातः कर्म्मवत् स्याद् यगाद्यपि ।
कर्म्मकर्त्तर्य्यन्यथा तु न भवेत् तद् द्वशेरिव ॥ ६ ॥

उत्पादनम् = उत्पत्तिरूपफलसहितं यत्नादि कृञर्थ इत्यर्थः।

प्रभा

प्रयोगस्य । तेन = तटरूपलाक्षणिकार्थेन। तथाच 'क्रियते घट' इत्यादेरसिद्धिरिति भाव, धातुवाच्यव्यापारव्यधिकरणफलाश्रयस्यैव प्रधानकर्मतया धात्ववाच्यस्य विषयत्वरूपफलस्योत्पत्तिरूपफलस्य वा घटादौ सत्त्वेन मुख्यकर्मत्वाभावात् 'गौणमुख्य'न्यायेन, प्रधानाप्रधानयोरिति न्यायेन च तादृशकर्मण 'ल कर्मणि' इति सूत्रेऽग्रहणात् ।

नचैव तुल्यन्यायात् कर्तुरपि तादृशस्यैव ग्रहणेन 'पच्यते तण्डुल' इत्यादेरसिद्धि, 'कर्मवत्कर्मणा' इति सूत्रारम्भसामर्थ्येन कर्तृपदे गौणमुख्यन्यायाद्यप्रवृत्ते । यत्नमात्रमिति—व्यापारस्थानीययत्नमात्रमित्यर्थ । कृञादेर्मुख्यसकर्मकत्वसिद्धये यत्नादिरूपव्यापारस्य, उत्पत्त्यादिरूपफलस्य च धातुमात्रपदेन फलव्यवच्छेद । वाच्यत्व स्वीकार्यमिति भाव ॥ ५ ॥

अत एवेति—उक्तदोषनिरासाय धातूना फलव्यापारार्थकत्वादेवेत्यर्थ । उत्पादनमिति—उत्पत्तिरूपफलम्, व्यापारश्च धात्वर्थ । अत एव 'स्तोक पचति' इत्यत्र चिक्लित्त्यादौ स्तोकादेरन्वये 'पदार्थ पदार्थेन' इति न व्युत्पत्तिविरोध । यत्नादीति—आदिना यत्नेतरव्यापारस्यापि धातुवाच्यत्व सूचितम्। तेन 'रथो गच्छति' 'रथो गमन करोति' इत्यादौ शक्यार्थयत्नाश्रयत्वस्य बाधेऽपि यत्नेतरशक्यार्थव्यापाराश्रयत्वस्य रथादिरूपेऽपि कर्त्तरि सत्त्वान्न लक्षणाऽऽश्रयत्वरूप गौरवमिति ध्वनितम् ।

ननु व्यापारमात्रस्य धात्वर्थत्वेऽपि प्रत्यया (द्वितीयादि) र्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वस्य प्रत्ययार्थफलाश्रयत्वरूपाकर्मकत्वस्य चाश्रयणे दोषाभाव, 'घट भाययति' इत्यादौ फलस्यान्वयव्यतिरे-

दर्पणव्याख्या

तत्र लौकिक दृष्टान्तमाह—* नहीत्यादि * भाक्तराजपदव्यवहार्येण पुरोहितादिना तदीयकार्यप्रसंगात्महद्भूत-चन्द्रमा इत्यादावारवारणायाऽऽश्रितगौणमुख्यन्यायस्य विशिष्यार्थोपस्थापकविशिष्टरूपोपादानपुरस्सरपदकार्यविषयकत्व-स्याऽन्यत्र व्यवस्थापनाय नाऽत्र तद्विषयतेत्यन्ये ।

परेत्वेतच्छास्त्रीयकर्मसंज्ञकार्थान्वयार्थकत्वमेव सकर्मकत्वम्, सकर्मकपदात् कर्मणा सहेत्यर्थकाच्छन्दमर्यादया पूर्वोक्तार्थलाभाच्च 'ल कर्मणि' इत्यादौ सकर्मकपदाद् बोधाऽनापत्ते । तदनन्वयार्थकत्वमकर्मकत्वम्। अत एवाऽध्यासिता भूमय इत्यादौ कर्मणि क्तोपपत्ति । अन्वयस्य पृथगुपस्थितससर्गरूपतया न जीवन्यादिषु दोष इत्याहु ।

अयमेव पक्ष फलावच्छिन्नव्यापारबोधकत्व सकर्मकत्वमिति वद्भिराश्रित, फलस्य कर्मताया सर्वैरेवोपगमात्, फलाऽन्वय्यर्थकत्वस्य सकर्मकेषु सत्त्वात्। यदि चैकोपस्थितिविषयत्वांशोऽक प्रकार सम्भवतीति विभाव्यते तदा पृथक्शक्तिवादिमते निर्दुष्टत्वमेव, अवच्छिन्नपदस्य सम्बन्धपरत्वेन कर्मीभूतफलसम्बन्धिव्यापारार्थकत्वस्य सुस्पष्टत्वात्। अकर्मकाणा फलार्थत्वाऽनङ्गीकारेणाऽतिव्याप्त्यव्याप्त्योरनवकाशादित्यवधेयम्। 'अध्यासिता भूमय' इत्यादौ यथोक्तोपपत्तिस्तथोपपादितं प्राक् ॥ ५ ॥

फलस्य वाच्यत्वे युक्त्यन्तरमाह–अत इत्यादि। यतः कृञो यत्नमात्रमर्थो नेष्यते, अतः 'कर्मवत् स्यात्'इतिपदेन 'कर्म्मवत् कर्म्मणा तुल्यक्रियः' (पा० सू० ३।१।८७) इति सूत्रं लक्ष्यते। अयमर्थः–यत एवास्योत्पादनार्थकता, अतः पच्यते ओदनः स्वयमेवेतिवत्, क्रियते घटः स्वयमेवेति यगादयोऽप्युपपद्यन्ते। अन्यथा यत्नस्य कर्म्मनिष्ठत्वाभावात् तन्न स्यात्, दृशिवत्। यथा दृश्यते घटः स्वयमेवेति न,

प्रभा

काभ्यां कर्मप्रत्ययस्य बहुत्वेनानुपूर्वीरूपशक्तताऽवच्छेदके गौरवेण, प्रत्ययार्थत्वे मानाभावेन च णिच्प्रकृति-
धातुवाच्यत्वे सिद्धे घटे कर्मत्वस्य भाविधातौ सकर्मकत्वस्य चाव्याप्त्यापत्तेः, पचतीत्यादौ द्वितीयादिकं विना-
ऽपि सर्वानुभवसिद्धस्य फलविषयकबोधस्यापलापापत्तेश्च।

ननु मुख्यामुख्यसाधारणकर्मत्वान्वितव्यापारवाचकत्वमेव सकर्मकत्वम्। कर्मत्वञ्च—सङ्केतसम्बन्धेन कर्मपदवत्त्वमेवेति नाननुगमः। 'कर्मवत्कर्मणा' इति सूत्रबलात् 'गौणमुख्य'न्यायस्य 'कारके'इत्यधिकारेऽप्रवृत्त्या गौणकर्तृत्ववद् गौणकर्मत्वस्यापि ग्रहणे द्वितीयादिसिद्धावपि 'लः कर्मणि' इत्यादौ 'गौणमुख्य'न्यायाप्रवृत्तौ मानाभावेन 'ज्ञायते घटः' 'क्रियते घटः' इत्याद्यसिद्धिरिति चेन्न, कर्मणि लकारादिविधायके स्वरितत्वप्रतिज्ञा-करणेन 'स्वरितेन अधिकः कार.' इत्यर्थकेन 'स्वरितेनाधिकार.' इति सूत्रबलेन गौणकर्मत्वस्यापि ग्रहणेनादो-पात्। सङ्केतसम्बन्धेन कर्मपदवदर्थान्वितार्थकत्वरूपसकर्मकत्वस्य ग्रहणादेव 'अध्यासिता भूमय.' इत्या-दीनां सिद्धिः। अन्यथा स्वार्थफलव्यधिकरणव्यापारवाचकस्य सकर्मकत्वे तत्सिद्ध्यनापत्तिरित्यत आह—युक्त्यन्तरमाहेति।

अतः=फलव्यापारोभयार्थत्वात्। कर्मवत्—कर्मणि इवेत्यर्थे सप्तम्यन्ताद्वतिः। कर्मणि प्रत्यये यथा यगा-दिर्भवति तथा कर्मकर्तर्यपि यगादिः स्यादित्यर्थः। यद्वा, 'कर्मवत्' इति 'कर्मवत्कर्मणा तुल्यक्रियः' इति सूत्रविहिते लाक्षणिकम्, सूत्रे लक्षणायामप्यनन्वयापत्तेः। सूत्रैकदेशानुकरणम्। तच्च 'कर्मवत्कर्मणा' इति सूत्रविहिते लाक्षणिकम्, सूत्रे लक्षणायामप्यनन्वयापत्ते.।
सूत्रैकदेशानुकरणम्। तच्च 'कर्मवत्कर्मणा' इति सूत्रविहितं लक्ष्यते इत्यर्थः। तस्य यगादिन्यन्वयः। अन्यथा=व्यापार-
तथाच मूले 'सूत्रं लक्ष्यते' इत्यस्य सूत्रविहितं लक्ष्यते इत्यर्थः। तस्य यगादिन्यन्वयः। अन्यथा=व्यापार-
मात्रार्थत्वे। तत्=यगादि। न स्यादिति—कर्मस्थक्रियया=फलरूपया, फलसमानाधिकरणव्यापाररूपया वा
तुल्या क्रियोक्तरूपा यत्र तादृशः लकारवाच्यः कर्ता कर्मवदित्यर्थकस्य 'कर्मवत्कर्मणा' इत्यस्य कृञो व्यापारमात्र-
वाचकत्वेऽप्राप्तेर्धात्वर्थयत्नस्य घटाद्यसमवेतत्वाच्च। 'कर्मवत्कर्मणा' इत्यत्र 'कर्मणा'पदम् 'मञ्चा. क्रोशन्ति'
इतिवत् कर्मस्थक्रियायां लाक्षणिकम्, क्रियायां क्रियाप्रतियोगिकतुल्यत्वस्यैवोचितत्वात्। सादृश्यनियामको
धर्मश्च—स्वसजातीयान्यूनानतिरिक्तत्वरूपः। नच 'घटं जानाति' इत्यत्र विषयतया घटस्य ज्ञानाश्रयत्ववद्
यत्नस्यापि विषयतया सत्त्वात् 'क्रियते घटः स्वयमेव' इत्युपपन्नमेवेति वाच्यम्, उक्तरीत्या 'दृश्यते घटः स्वय-
मेव' इत्यादेरप्यापत्तेरित्याशयेनाह—दृश्यते घटः स्वयमेवेति। नचेष्टापत्तिः, कर्मस्थभावकानां कर्मस्थक्रिया-
णाञ्च कर्मवद्भाव.' इति भाष्यविरोधात्। नचैव 'घट यतते' इत्यपि स्यात्, विषयताया 'यत्'धात्वर्थफलाश्रय-
तानवच्छेदकतया तदनापत्ते., समवायस्यैव तत्र फलतावच्छेदकतायाः शिष्टप्रयोगानुसारेण कल्पनात्।

दर्पणव्याख्या

ननु 'कर्मवत् स्याद् यगाद्यपि' इति मूलस्य कर्मवद् यगाद्यपि भवेदित्यर्थो लभ्यते। स च बाधितोऽविवक्षितश्चेत्यत आह–❀ कर्मवत्स्यादिति पदेनेति ❀। ❀ सूत्रं लक्ष्यते इति ❀। सूत्रविहितं लक्ष्यते इत्यर्थः। यथाश्रुते कर्मपदस्य स्वघटितत्वेन लक्षणया सूत्रोपस्थितावपि तस्य यगादिकमित्यनेनाऽनन्वयापत्तेः। एतद्बोधनायैव स्यादिति लक्ष्यकोटावुपात्त-मिति।

दर्शनस्य घटावृत्तित्वात्, तथा यत्नस्यापि, इति तथा प्रयोगानापत्तेरिति ॥ ६ ॥

नन्वेवं कृञादेरिव जानातीत्यादेरपि विषयावच्छिन्नावरणभङ्गादिफलवाचित्वमावश्यकम्, अन्यथा सकर्म्मकतानापत्तेः ।

---

प्रभा

ननु यत्धात्वादौ विषयतायाः फलताऽनवच्छेदकत्वे समवायस्यैव फलताऽवच्छेदकत्वं वाच्यमिति तेन सम्बन्धेन फलाश्रयत्वात् कर्तुः कर्मत्वापत्तिः, कर्तृसंज्ञया बाधेन तदनापत्तेः । यत्तु—विषयतया घटवृत्तित्वेऽपि समवायेन कर्तृवृत्तितया न कर्ममात्रवृत्तिक्रियकत्वरूपकर्मस्थक्रियकत्वमिति तन्न, 'दृश्यते घटः' इतिवत् 'क्रियते घटः' इत्यस्याप्यसङ्गत्यापत्तेः । मन्मते तु लक्ष्यानुरोधात् समवाय-विषयत्वोभयोरपि दृश्धात्वर्थफलतावच्छेदकत्वस्वीकारेण फलतावच्छेदकसम्बन्धेन कर्ममात्रवृत्तिक्रियकत्वाभावान्न दृश्यत्धात्वादौ क्षतिः ।

अयम्भावः - प्राचीननैयायिकमते विषयत्वस्य फलत्वेन यथा 'क्रियते घटः' इत्यत्र विषयत्वरूपफलस्य घटादिरूपकर्ममात्रवृत्तित्वात् कर्मस्थक्रियकत्वेन कर्मवद्भावस्तथा यत्—दृशिधात्वादावपि तत्त्वस्य सत्त्वेन 'यत्यते घटः स्वयमेव' 'दृश्यते घटः स्वयमेव' इति स्यात् । यदि तयोः कर्मस्थक्रियकत्वं त्वन्मते नास्ति तदा कृञोऽपि तन्न स्यादिति । वैयाकरणनये तु उत्पत्तेः =फलस्य, यत्नरूपव्यापारस्य च कृञर्थत्वादुत्पत्तिरूपफलस्य घटादिमात्रवृत्तित्वात् कर्मवद्भाव इति । एवमिति—स्वार्थफलव्यधिकरणव्यापारवाचकत्वस्यैव सकर्मकत्वे इत्यर्थः ।

विषयावच्छिन्नेति—अयम्भावः—ज्ञानार्थकधातूनां सकर्मकत्वसिद्धये फलव्यापारोभयार्थकत्वं वक्तव्यम् । तत्र फलम् =आवरणभङ्गरूपं धातुवाच्यम् । घटादिप्रत्यक्षस्थलेऽन्तःकरणं चक्षुरादिद्वारा घटादिरूपविषयदेशे गत्वा विषयाकारेण परिणमति । विषयाकारपरिणाम एवान्तःकरणस्य वृत्तिरित्युच्यते । तया वृत्त्या चावरणभङ्गो जायते । आवरणन्नाम—आध्यासिकतादात्म्यसम्बन्धेन विषयघटाद्यवच्छिन्नं यच्चैतन्यं तस्यावरक ( नास्ति न प्रकाशते इति व्यवहारयोग्यत्वम् =आच्छादकमिति यावत् ) मज्ञानं तन्निष्ठा या आवरकशक्तिः सैवावरणमित्युच्यते । तस्यावरणस्योक्तरूपया ज्ञानपदव्यवहर्त्तव्यया वृत्त्या भङ्गो (नाशो) जायते स एवावरणभङ्गः फलम्, ज्ञानञ्च व्यापारः । एतदाशयेनाह—विषयावच्छिन्नावरणभङ्गादिफलेति । आदिना वृत्तौ चैतन्यसम्बन्धस्य परिग्रहः । ज्ञानस्य चैतन्यसम्बन्धरूपत्वे, चैतन्यरूपत्वे वा आवरणभङ्गस्य फलत्वासम्भवः, धात्वर्थफले व्यापारजन्यत्वस्य, जन्यत्वप्रकारकप्रतीतिविषयत्वस्यैव फलप्रयोज्यत्वस्य वा आवश्यकतया आवरणभङ्गे तदुभयोरप्यसम्भवात् । अतो ज्ञानमेव फलम्, व्यापारश्चात्ममनःसंयोगरूपो वृत्तिरूपो वा बोध्यः । ज्ञानस्य चैतन्यरूपत्वे अभिव्यक्तिगतजन्यत्वारोपेण जन्यत्वप्रकारकप्रतीतिविषयत्वं सूपपादम् । अत एव 'जानाति' 'इच्छति' इत्यादौ ज्ञानानुकूलव्यापारः, इच्छानुकूलो व्यापार इति बोधो वैयाकरणनिकाये प्रसिद्ध उपपद्यते इति पञ्चोलिनः ।

---

दर्पणव्याख्या

ॐ घटावृत्तित्वादिति ॐ घटमात्रवृत्तित्वाऽभावेन कर्मस्थक्रियकत्वाभावादिति परमार्थः ॥ ६ ॥

ॐ एवमिति ॐ कर्मवद्भावानुरोधेन करणाऽर्थकरोतेरुत्पत्तिसहितयत्नाऽर्थकत्वाऽभ्युपगमे इत्यर्थः । जानात्यादेरपीत्यादिपदाद् गम्यादिपरिग्रहः । आवरणभङ्गादीत्यादिपदेन संयोगादेः सः । आवश्यकमित्यनेन तत्र ज्ञानस्यैव फलत्वाऽङ्गीकारे तदनाश्रयत्वाद् घटादेः कर्मत्वानुपपत्तिरपि सूच्यते । आवरणभङ्गस्याऽप्यतीतादौ यथा फलत्वं तथा सारे एव सुबर्थनिर्णये वक्ष्यते । ॐ सकर्मकताऽनापत्तेरिति ॐ स्वार्थफलव्यधिकरणेत्याद्युक्तरूपस्य तत्राऽसम्भवादिति भावः ।

तथाच ज्ञायते घटः स्वयमेवेति किन्न स्यात् ।

प्रभा

विषयावच्छिन्नत्वविशेषणं स्वरूपकीर्तनपरम्, आवरणभङ्गमात्रं धात्वर्थः । उत्पत्तिरूपफलस्य कर्ममात्रनिष्ठत्वेन कर्मस्थक्रियत्वे चेत्यर्थः । अत्रेदं बोध्यम्—आवरणभङ्गस्य, विषयताया वा फलत्वे ज्ञाधात्वादीनां कर्मस्थक्रियकत्वापत्तिः । तदुक्तं हरिणा—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥

इति । यत्र कर्मणि धात्वर्थक्रियाकृतविशेषदर्शनं तत्र कर्मस्थक्रियकत्वम् । यत्र कर्तरि क्रियाकृतविशेषदर्शनं तत्र कर्तृस्थक्रियकत्वमिति पूर्वार्धस्याशयः ।

नन्वेवं पच्यादिकर्तर्यपि श्रमादिरूपविशेषस्य दर्शनात् पच्यादीनामपि कर्मस्थक्रियकत्वानुपपत्तिः, चिन्तयति-पश्यतीत्यादीनां कर्तृस्थभावकत्वानुपपत्तिश्च कर्तरि क्रियाकृतविशेषाभावादतो मतान्तरमाह—क्रियाव्यवस्थेति—अन्येषां मते क्रियाव्यवस्था शब्दैरेव प्रकाश्यते ।

अयम्भावः—येऽपि कर्मस्थभावकाः पच्यादयः तत्रापि श्रमादिविशेषः कर्तर्यपि दृश्यते । तथाच 'विशेषदर्शनं यत्र' इति लक्षणेन नास्ति निर्वाहः । तस्माद् यत्र शब्दैरेव विशेषः प्रतिपाद्यते तत्रैव क्रिया स्थिता । तद्यथा—'घटं पश्यति' इत्यादौ शब्दः किञ्चिद् विशेषविशिष्टं दृशिक्रियाविषयं घटादिकं नाभिधत्ते इति शब्दवशेन कर्तृस्थभावकत्वात् 'दृश्यते घटः स्वयमेव' इति न भवति । 'काष्ठं भिनत्ति' इत्यादौ भिदिक्रियाविषयं काष्ठादिकं किञ्चिद् विशेषविशिष्टमभिधत्ते इति तद्वशेन कर्मस्थभावकत्वात् 'भिद्यते काष्ठं स्वयमेव' इति भवति ।

मञ्जूषाकारास्तु—उत्तरार्धमन्यथा व्याचख्युः । तथाहि—यत्र कर्तृकर्मसाधारणधर्मरूपं फलं शब्देन प्रतिपाद्यते स कर्तृस्थभावकः, यथा—'पश्यति घटम्' 'ग्रामं गच्छति' 'हसति' इत्यादौ । तत्र विषयतासमवायाभ्यां ज्ञानमुभयनिष्ठं संयोगश्चोभयनिष्ठः, एवं हासोऽपि । नच विषयताऽऽवरणभङ्गावेवम् । यत्र तु कर्मवृत्तिधर्मरूपं फलं सः कर्मस्थभावकः । यथा—'भिनत्ति' इत्यादौ । नहि द्विधाभवनादि कथमपि कर्तृनिष्ठं प्रतीयन्तीति हेलाराजः ।

अत एव कर्मवत्सूत्रे भाष्ये उक्तम्—'नच कर्तृस्थभावकानां कर्मणि क्रियायाः प्रवृत्तिरस्ति' इति । तेषां धातूनां वाच्यायाः फलरूपक्रियायाः कर्ममात्रे प्रवृत्तिर्नास्तीत्यर्थ इत्याहुः । ज्ञायते घट इति—अत्रेदमाकूतम्—यद् गमि–जानात्योः फलव्यापारोभयार्थकत्वं प्रसाध्य तत्र ज्ञायते घटः' स्वयमेवेत्याद्यापत्तिः प्रदर्शिता । सा

'विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता'

इति हर्युक्तप्रथमकल्पाभिप्रायेण बोद्धव्या । 'शब्दैरेव प्रकल्पिता' इति द्वितीयपक्षे तु गमि–जानात्योः केवलव्यापारार्थकत्वेऽपि शब्दतः कर्मणि क्रियाकृतविशेषादर्शनेन कर्तृस्थक्रियकत्वात् कर्मवद्भावो न सम्भवति । सकर्मकत्वोपपत्तये तु ज्ञानानुकूलव्यापारार्थकत्वमभ्युपेयम् । धातुवाच्या फलरूपा क्रिया यत्र कर्ममात्रनिष्ठा तस्य कर्मस्थक्रियकत्वमिति मते तु धातूनां फलवाचकत्वमावश्यकम्, फलवाचकत्वाभावे कर्मस्थक्रियकत्वानापत्तेः । एवञ्च सिद्धान्तभूतकर्मस्थक्रियकत्वपक्षे उक्तस्थले कर्मवद्भावाप्राप्त्या 'कर्मवत्कर्मणा' इत्यस्य यथाश्रुतकर्मसंज्ञकार्यक्रियातुल्यक्रियः कर्ता कर्मवदित्यर्थाभिप्रायेणाऽऽशङ्का । प्राप्यकर्मत्वप्रदर्शनेन करिष्यमाणमुत्तरमपि प्राचीनमताभिप्रायेणेत्याह—

तथाच ज्ञायते घटः स्वयमेवेति किन्न स्यात् ।

प्रभा

विषयावच्छिन्नस्यविशेषणं स्वरूपकीर्तनपरम्, आवरणभङ्गमात्रं धात्वर्थः। उत्पत्तिरूपफलस्य कर्ममात्रनिष्ठत्वेन कर्मस्थक्रियत्वे चेत्यर्थः। अत्रेदं बोध्यम्—आवरणभङ्गस्य, विषयताया वा फलत्वे ज्ञाधात्वादीनां कर्मस्थक्रियकत्वापत्तिः। तदुक्तं हरिणा—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता॥

इति। यत्र कर्मणि धात्वर्थक्रियाकृतविशेषदर्शनं तत्र कर्मस्थक्रियकत्वम्। यत्र कर्तरि क्रियाकृतविशेषदर्शनं तत्र कर्तृस्थक्रियकत्वमिति पूर्वार्धस्याशयः।

नन्वेवं पच्यादिकर्तर्य्यपि श्रमादिरूपविशेषस्य दर्शनात् पच्यादीनामपि कर्मस्थक्रियकत्वानुपपत्तिः, चिन्तयति-पश्यतीत्यादीनां कर्तृस्थभावकत्वानुपपत्तिश्च कर्तरि क्रियाकृतविशेषाभावादतो मतान्तरमाह—क्रियाव्यवस्थेति—अन्येषां मते क्रियाव्यवस्था शब्दैरेव प्रकाश्यते।

अयम्भावः—येऽपि कर्मस्थभावकाः पच्यादयः तत्रापि श्रमादिर्विशेषः कर्तर्य्यपि दृश्यते। तथाच 'विशेषदर्शनं यत्र' इति लक्षणेन नास्ति निर्वाहः। तस्माद् यत्र शब्दैरेव विशेषः प्रतिपाद्यते तत्रैव क्रिया स्थिता। तद्यथा—'घटं पश्यति' इत्यादौ शब्दः किञ्चिद् विशेषविशिष्टं दृशिक्रियाविषयं घटादिकं नाभिधत्ते इति शब्दवशेन कर्तृस्थभावकत्वात् 'दृश्यते घटः स्वयमेव' इति न भवति। 'काष्ठं भिनत्ति' इत्यादौ भिदिक्रियाविषयं काष्ठादिकं किञ्चिद् विशेषविशिष्टमभिधत्ते इति तद्वशेन कर्मस्थभावकत्वात् 'भिद्यते काष्ठं स्वयमेव' इति भवति।

मञ्जूषाकारास्तु—उत्तरार्धमन्यथा व्याचख्युः। तथाहि—यत्र कर्तृकर्मसाधारण
प्रतीते स कर्तृस्थभावकः. यथा—'पश्यति घटम्' 'ग्रामं गच्छति' 'हसति' इत्य।

**नान्त्ये प्राप्यत्वञ्च—क्रियाकृतविशेषानुपलभ्यमानत्वमिति सुबर्थनिर्णये वक्ष्यते। नह्ययं घटः केनचिद् दृष्टो ग्रामोऽयं केनचिद् गत इति शक्यं कर्म्मदर्शनेनाऽवगन्तुम्।**

प्रभा

एतेन यत्र नगरादौ राजागमनप्रयोज्यपताकाद्यलङ्करणदर्शनेन गम्धात्वर्थाऽगमनस्य ज्ञातु शक्यतया गम्यादीनामपि कर्मस्थक्रियकत्वापत्तिरित्यपास्तम्, तद्वैलक्षण्यस्य गम्धात्वर्थसंयोगरूपफलाप्रयोज्यत्वात्। एवञ्च 'कर्मणा'पदसामर्थ्यादुक्तकर्मस्थक्रियकाणा धातूनामेव कर्ता कर्मवन्नान्येषामित्याह—

नान्त्य इति—प्राप्ये कर्मस्थक्रियया तुल्यक्रिय कर्ता कर्मवन्नेत्यर्थ । राजदर्शनग्रामगमनादौ कर्तर्य्येव हर्षश्रमादिरूपविशेषस्य दर्शनात् तत्र 'कर्तृस्था क्रिया' इत्येव व्यवहार । वक्ष्यत इति—यद्यपि हरिणा सप्तविध कर्म उक्तम्, तथाऽपि ईप्सितस्य कर्मणस्त्रैविध्यमेवोक्तमिति कर्मवद्भावे तस्यैवोपकारकतया अनीप्सित' कर्म चतुर्विध सुबर्थनिर्णये वक्ष्यत इत्युक्तमित्यर्थ । तथाच कर्मगतो यो विशेषस्तद्व्यवहारप्रयोजकव्यापारार्थको यो धातुस्तत्कर्मण कर्तृत्वविवक्षाया कर्मवद्भाव इति सिद्धम्। तदाह—न ह्यय घट इति।

अवगन्तुमिति—यथा पाकाद्विना तण्डुलादौ विशेषो भवति नैव गमनादिना ग्रामादाविति विशेषाभावात् कर्मदर्शनेन कर्तृव्यापारोऽनुमातुमशक्य एवेति भाव । तथाच 'क्रियाव्यवस्था त्वन्येषा शब्दैरेव प्रकल्पिता' इति भाष्यकारीयसिद्धान्तेन फलताऽवच्छेदकसम्बन्धेन व्यापारनिष्ठजनकतानिरूपितफलनिष्ठजन्यतावच्छेदकसम्बन्धेन वा यत्र कर्तृकर्मोभयनिष्ठ धातुवाच्य फल तत्र कर्तृस्थक्रियत्वम्। यथा—'पश्यति घटम्' इत्यत्र ज्ञानरूप फल फलताऽवच्छेदकसम्बन्धेन विषयत्वरूपेण घटे, ज्ञानरूपफलस्य जन्यताऽवच्छेदकसम्बन्धश्च समवायस्तेन ज्ञानरूप फल कर्तरि तिष्ठति इति फलताऽवच्छेदकसम्बन्धेन कर्मणि फलजन्यताऽवच्छेदकसम्बन्धेन कर्तरीत्युभयवृत्तितया कर्तृस्थक्रियत्व जानाते । 'तण्डुल पचति' इत्यत्र विक्लित्ते पूर्वरूपध्वसपूर्वकरूपान्तरोत्पत्तिरूपत्वे उत्पत्तेराद्यक्षणसम्बन्धरूपतया तस्या स्वरूपसम्बन्ध फलतावच्छेदक फलजन्यतावच्छेदकश्चेति तेन सम्बन्धेन कर्ममात्रवृत्तित्वात् कर्मस्थक्रियत्वम्। विक्लित्तेरवयवशैथिल्य–काठिन्यादिरूपत्वे च समवायसम्बन्ध एव फलताऽवच्छेदकस्तज्जन्यताऽवच्छेदकश्चेति तेनापि कर्ममात्रवृत्तित्वमेव फलस्येति कर्मस्थक्रियत्वमेवेति कर्मवद्भाव सिद्ध्यति। नच स्वरूप–समवाययो फलजन्यताऽवच्छेदकत्वे धात्वर्थव्यापारेण सह कार्यकारणभावानुपपत्ति, व्यापारस्य व्यापारताऽवच्छेदकसमवायादिसम्बन्धेन कर्तृवृत्तितया व्यधिकरणत्वात् कार्यताऽवच्छेदक–कारणतावच्छेदकसम्बन्धेन कार्य–कारणयो सामानाधिकरण्यस्यैव कार्यकारणभावनियामकत्वादिति वाच्यम्, स्व (व्यापार) जन्यरूपादिध्वसवत्त्वस्यैव कारणताऽवच्छेदकत्वस्वीकारेण तेन सम्बन्धेन व्यापारस्यापि तण्डुलादिवृत्तित्वात्।

नन्वेवमपि जन्यत्वस्य सम्बन्धनियततया व्यापाररूपध्वसयोर्व्यधिकरणत्वेनोक्तसम्बन्धासिद्धि, स्वसमानाधिकरणेन्छोद्देश्यत्वस्यैव कारणतावच्छेदकत्वेनाद्दोषात्।

नचैव फलसमानाधिकरणव्यापारवाचकतया पच्यादेरकर्मकत्वापत्ति, फलताऽवच्छेदकसम्बन्धेन

दर्पणव्याख्या

पुनरम्। यद्यपि हरिणा—

"कर्मेप्सिततमम्। तथेप्सिततमम्"—

इत्यादिना कार्यस्येन विभजनात् तदनुगुण्याऽपि तथैवानिति ध्येयम्। [illegible] आद्ययोस्तु सुबर्थनिर्णये वक्ष्यते। [illegible] वक्ष्यत इति [illegible] क्रियाकृतविशेषाणामिति कारिकार्थः। कर्मगतविशेषाधायकक्रियार्थकस्य कर्मवद्भावप्रयोजकमिति दर्शयितुं तदन्यत्र तन्निषेधं दर्शयति—नह्ययमित्यादि

धातूनां फलावाचकत्वे त्यजिगम्योः पर्य्यायतापत्तिः, क्रियावाचकत्वाविशेषात्। फलस्योपलक्षणत्वेऽप्येकक्रियाया एव पूर्वदेशविभागोत्तरदेशसंयोगजनकत्वादुक्तदोषतादवस्थ्यमित्यपि वदन्ति। तस्मादावश्यकं सकर्म्मकाणां फलवाचकत्वम्।)

प्रभा

नव्यनैयायिकरीत्या फलस्य धातुवाच्यत्वं साधयितुमाह—धातूनामिति—बहुवचनेन सर्वेषामेव धातूनां पर्यायतापत्तिः सूचिता। सा च धातुवाच्यव्यापारनिष्ठशक्यताया व्यापारत्वस्यावच्छेदकत्व एव। यदि तु व्यापारत्वव्याप्यफूत्कारत्वादीनामेव शक्यतावच्छेदकत्वं तदा धात्वन्तरस्य पर्यायत्वाभावेऽपि त्यजिगम्यादीनां विभाग-संयोगजनकक्रियावाचकतया पर्यायापत्त्या ग्रामं गच्छतीत्यर्थे ग्रामं त्यजतीति प्रयोगापत्तिर्दुर्वारैव।

अविशेषादिति—एकधर्मावच्छिन्नाया एव क्रियायाः संयोग-विभागजनकत्वादिति भावः।

ननु विभागोपलक्षिते व्यापारे त्यजतेस्संयोगोपलक्षिते गच्छतेः शक्तिस्वीकारेणोक्तदोषाभाव इत्यत आह—फलस्येति। उपलक्षणत्व इति—उपलक्षणत्वञ्चात्र अशक्यत्वे सति शक्यव्यावर्तकत्वम्। जनकत्वादिति—तथाच संयोग-विभागयोः स्वार्थव्यापारजन्यत्वाविशेषाद् गम्यर्थव्यापारे संयोग एवोपलक्षणम्, न विभाग इत्यत्र विनिगमनाविरहादुभयोपलक्षणत्वे पर्यायापत्तिस्तदवस्थैवेति भावः।

नच व्यापारमात्रस्य धात्वर्थतानये कर्मवाचकत्वेनाभिमतद्वितीयादेरेव फलवाचकत्वं स्वीकार्यम्। तथाच द्वितीयाद्यर्थसंयोगनिष्ठजनकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितव्यापारनिष्ठविशेष्यताकबोधम्प्रति गम्यादिधातुसमभिव्याहारज्ञानस्य कारणत्वम्। द्वितीयाद्यर्थविभागप्रकारकबोधम्प्रत्युक्तरीत्या कार्यकारणभावात् पर्यायापत्त्यादिदोषवारणे तु गौरवमिति धातूनां फलवाचकत्वमेवोचितमित्युपसंहरति तस्मादिति—पूर्वोक्तयुक्तिक-

दर्पणव्याख्या

तत्प्रदर्शनाद्याऽतिव्याप्त्यादिदोषादुक्तभाव्येण,

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।

क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता॥

इति हरिकारिकोत्तरार्द्धेन च पूर्वोक्तलक्षणयोरेव निर्भरः प्रतीयते इत्युच्यते, तदाऽपि न क्षतिः। कर्मस्थक्रियकलक्षणे जानात्यादिभिन्नत्वस्य चोपदेशलक्षणे त्वरकाद्यन्यतमत्वस्येव कर्तृस्थक्रियकलक्षणे जानात्याद्यन्यतमत्वस्यापि निवेशेन करोतौ कर्मस्थक्रियकत्वस्य जानात्यादौ कर्तृस्थक्रियकत्वस्य चोपपत्तेः। अत एव हरिणाऽपि,- 'शब्दैरेव प्रकल्पिता' इत्यत्र शब्दपदमुपात्तम्। शब्दप्रतिपाद्याऽर्थगतविशेषैः शब्दैश्चेति तदर्थादिति। दर्शनान्तरीयां युक्तिमुपन्यस्यति-

क्ष धातूनामिति क्ष त्यजिगम्योरित्युपलक्षणं तादृशधातुमात्रस्य। क्ष पर्यायतापत्तिरिति क्ष तच्छक्यताऽवच्छेदकाऽवच्छिन्नशक्तत्वस्यैव पर्यायतापदार्थत्वादिति भावः।

नन्वत्र पर्यायलक्षणे तदुपलक्षणेतरानुपलक्षितत्वस्याऽपि ...

ननु त्यजिगम्योः क्रमेण विभागसंयोगोपलक्षितव्यापाराऽर्थकत्वमेव ... क्ष उपलक्षणत्वेऽपीति क्ष उपलक्षणत्वं च तत्पदजन्यबोधविषयत्वेन शक्यविषयत्वे सति विशेषणाद्यतोऽऽपत्तिरत आह— क्ष जनकत्वादिति क्ष। तथाच संयोगविभागयोः स्वार्थव्यापारजन्यत्वाऽविशेषाद् गम्यर्थव्यापारे संयोग एवोपलक्षणं, नो विभाग इत्यत्र विनिगमकाऽभावादुभयस्यैवोपलक्षणत्वे उक्तापत्तिर्दुर्वारेति फलेऽपि शक्तिरावश्यकीति भावः। अत्र ग्रामं गच्छतीत्यादौ द्वितीयाऽर्थसंयोगादिरूपफलाऽन्वयित्वस्यैव विनिगमकत्वाद् गमनक्रियायां संयोगस्यैवोपलक्षणत्व-मित्यस्य सुवचनयाऽन्यत्र लक्षणयोपपत्तेश्च गौरवादिनिः सार्व्वाग्यत्वतोऽपि यश्नितिम्यां सूचितः। उपसंहरति—क्ष तस्मा-

अकर्म्मकाणां तु तन्निर्विवादमेव, "भू सत्तायाम्" इत्याद्यनुशासनाच्च । अत एव 'द्व्यर्थः पचिः' इति भाष्यं सङ्गच्छते इति दिक् ॥७॥

एवं सिद्धयतु फलव्यापारयोर्वाच्यत्वम्, किन्तु आख्यातवाच्यैव सा भावना, न धातोः, प्राधान्येन प्रतीयमानस्य व्यापारस्य धात्वर्थतायाः 'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यम्' इति न्यायविरुद्धत्वात्, 'तदागमे हि दृश्यते' इति न्यायविरुद्धत्वाच्च ।

प्रभा

दन्यादित्यर्थः। निर्विवादमेवेति—सकर्मकस्थले फलस्य द्वितीयार्थत्वं सम्भवति, अकर्मके भवतीत्यादौ च सत्ता-
दिरूपफलवाचकत्वं धातोरेव सम्भवतीति भावः। द्व्यर्थ इति—विक्लेदना, निर्वर्तना च पचेरर्थः। तण्डुलान्
विक्लेदयन्नोदनं निर्वर्तयतीत्यर्थः। एवञ्च विक्लित्तिनिर्वृत्तिरूपफलावाचकत्वे भाष्योक्तद्व्यर्थत्वासम्भवेन फलव्या-
पारोभयोर्वाच्यत्वं भाष्यसम्मतमिति भावः। सङ्गच्छत इति—तण्डुलानोदनं पचतीत्यत्र तण्डुलानां विकार्य-
कर्मत्वमोदनस्य निर्वर्त्यकर्मत्वमभिमतं तन्निर्वाहार्थमुत्पत्तिविक्लित्तिरूपफलद्वयार्थकत्वपरमेव भाष्यम् ।
ननु धातुमात्रस्योभयार्थकत्वे चक्षुरादिकं जानातीति स्यात्, ज्ञानानुकूलचक्षुरादिमनःसंयोगादेः फलस्य
सत्त्वादिति चेन्न, स्थाली पचतीतिवदिष्टापत्तेरित्याह—दिगिति ॥ ७ ॥
पूर्वोक्तयुक्त्यादिकदम्बैः फलव्यापारयोर्धातुवाच्यत्वे साधिते तिङ्वाच्यैव भावनेति मण्डनमिश्रमतमा-
शङ्क्य निराकुरुते—एवं सिद्धयत्विति। आख्यातेति—आख्यातम्=तिङ् तद्वाच्यैव भावनेत्यर्थः। यद्वा,
आख्यातम्=तिङन्तं तज्जन्यबोधविषयत्व भावनाया इत्यर्थः। विरुद्धत्वादिति—प्रत्ययान्तेन प्रतीयमानार्थ-
योर्यस्य प्राधान्येन प्रतीतिस्तस्य प्रत्ययार्थत्वमिति नियमादिति भाव.।
प्रत्ययार्थसङ्ख्यायाः स्त्रीत्वस्य च विशेषणतयैव भानदर्शनेन तन्नियमस्य प्रायिकत्वदर्शनादाह—तदागम
इति—'पशुना यजेत' इत्यत्रैकत्वस्य करणत्वेन साक्षात् क्रियायामन्वय 'प्रकृत्यर्थान्वितस्वार्थबोधकत्वं
प्रत्ययानाम्' इति व्युत्पत्त्या प्रकृत्यर्थे एवान्वयस्य सिद्धत्वादेकत्वस्य यागाङ्गत्वाभावादविवक्षितत्वमेव तस्य
स्यादिति पशुद्वयादिकरणत्यागेनापीष्टभावनापत्तिरिति पूर्वपक्षे 'शब्दवत्तूपलभ्यते तदागमे हि तद् दृश्यते तस्य
ज्ञानं यथाऽन्येषाम्' इत्युत्तरपक्षीयजैमिनिसूत्रम् । एतदर्थस्तु शब्दोद्यमेकत्व यथा भवति तथोपलभ्यते।
हि=यतः तदागमे=एकवचनागमे एकवचनश्रवणे तत्=एकत्वं दृश्यते=बुध्यतेऽतः शब्दत उपस्थितत्वात्

दर्पणव्याख्या

ॐ निर्विवादमेवेति ॐ स्वार्थफलसमानाधिकरणव्यापारवाचकत्वरूपाऽकर्मकत्वस्य धातो फलवाचकत्वं विना-
ऽनुपपन्नत्वादिति भाव। ननु सकर्मकत्व पूर्वोक्तमेव, तद्भिन्नधातुत्वं चाऽकर्मकत्वमिति मोक्ताऽनुपपत्तिरत आह—ॐ भू सत्ता-
यामिति ॐ गणेषु फलस्यैव निर्देशादिति भाव । ॐ अत एवेति ॐ धातुमात्रस्य फलवाचकत्वादेवेत्यर्थः।
ॐ द्व्यर्थ इति ॐ द्व्यर्थपदं फलव्यापारोभयार्थकमित्याशयः। ननु 'द्व्यर्थः पचि.' इति भाष्यं पचेरुपादानात्सकर्मकाणां
फलार्थकत्वे साधकमस्तु, न त्वकर्मकाणामत आह—ॐ दिगिति ॐ तथा सति सत्ताद्यर्थनिर्देशवैयर्थ्याऽऽपत्तेः। धातु-
सामान्यशक्त्या पच्यादेरिव भवत्यादेरपि व्यापारबोधसम्भवादिति दिगर्थोऽवसेय ॥ ७ ॥
ननु 'व्यापारो भावना सैव' इत्युक्तविवरणेन न व्यापारस्य धात्वर्थतानिर्णयः, पचति=पाकं करोतीति विवरणेन
आख्यातार्थताया अपि वक्तुं शक्यत्वादिति मीमांसकाशङ्कासमाधानपरतया मूलमवतारयति—ॐ एवमित्यादिना ॐ।
ॐ वाच्यत्वमिति ॐ तिङन्तजन्यबोधविषयत्वमित्यर्थ.। तथाच पाकाऽनुकूला भावनेत्यादिविवरणेनाऽपि पचतीत्यस्य
पाकाऽनुकूलभावनाबोधकत्वमस्त्वित्यर्थः। यथाश्रुते विवरणेन धातोर्भावनावाचकत्वनिर्णये 'तिङ्वाच्याख्यातवाच्यैव सा' इत्यु-
क्तग्रन्थासङ्गते.। 'प्रकृतिप्रत्ययौ' इति न्यायस्य संख्यादौ व्यभिचरमाणत्वमाह—ॐ तदागमे हीति ॐ

एवञ्च 'स्वयुक्ताख्यातार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्म्मकत्वम्, आख्यातार्थव्यापाराश्रयत्वञ्च कर्तृत्वं वाच्यम्' इत्यादिवदन्तं मीमांसकम्मन्यं प्रत्याह—

प्रभा

तस्य=एकत्वस्य ज्ञानम्=यागाङ्गत्वज्ञानं यथाऽन्येषाम्=पशुत्वादीनां यागाङ्गत्वं तथा एकत्वस्यापीत्यर्थः। तदागमे यद् दृश्यते तत्तस्यार्थ इत्यर्थः। एवञ्च यथा एकवचनागमे एकत्वं प्रतीयतेऽतः एकवचनार्थत्वं तस्य, तथा आख्यातप्रयोगे व्यापारः प्रतीयतेऽत आख्यातार्थत्वं व्यापारस्याङ्गीकार्यम्, अन्यथा न्यायविरोधापत्तिरिति तात्पर्यम्। तथाचोक्तं भट्टपादैः—

प्रत्ययार्थं सह ब्रूतः प्रकृति-प्रत्ययौ सदा।
प्राधान्याद् भावना तेन प्रत्ययार्थोऽवधार्यते ॥ १ ॥
तथा क्रमयतो नित्यं प्रकृति-प्रत्ययार्थयोः।
प्रत्ययश्रुतिवेलायां भावनात्माऽवगम्यते ॥ २ ॥ इति

प्रत्ययश्रुतिवेलायामित्यस्यैव 'तदागमे' इत्यनेनोक्तिः। नन्वेवं पूर्वोक्तसकर्मकाकर्मकत्वविभागानुपपत्तिः, धात्वर्थव्यापाराश्रयत्वरूपकर्तृत्वस्य दुर्वचत्वेन कर्तरि प्रत्ययासिद्धिश्चेत्यत आह—एवञ्च स्वयुक्तेति—स्वम्=प्रकृतधातुरूपम्। स्वयुक्तेति—आख्यातविशेषणम्। योगश्च स्वाव्यवहितोत्तरवर्तित्वरूप इति 'देवदत्तः पचति' 'भवति घटः' इत्यादौ भूधातुयुक्तत्वेऽप्याख्यातस्य न भूधात्वादावतिव्याप्तिः। वाच्यमिति—कृदन्तेऽप्यादृशकर्तृत्वस्य वक्तव्यतया गौरवञ्चेति भावः। यद्वा, स्वयुक्तप्रत्ययार्थव्यापाराश्रयत्वं कर्तृत्वं वाच्यमिति भावः। सकलमीमांसकैः फलव्यापारयोर्धातुवाच्यत्वं स्वीक्रियते, नतु केवलफलस्येत्याह–मीमांसकम्मन्यमिति—नतु मीमांसकान्प्रति, तैरुभयवाचकत्वस्य धातौ स्वीकारादिति भावः।

दर्पणव्याख्या

इदं च यः प्रधानं स प्रत्ययार्थ इति न्यायाऽऽकार इत्यभिप्रेत्य सम्मूलसूत्रालोचने ॥ यः प्रत्ययार्थः स प्रधानमिति न्यायाकारो लभ्यते। तथाहि—'पशुना यजेत' इति श्रूयते, तत्रैकवचनोपात्तमेकत्वं यागे विशेषणमुत प्रकृत्यर्थे इति संशये पशुपदार्थस्य यागं प्रति गुणत्वात् सम्भावितयावत्पशुकरणेन प्रधानावृत्तौ प्रधानभङ्गापत्त्या यावद्गुणप्रधानोऽऽवृत्तेरयोगादेकत्वविशिष्टपशोर्विधाने त्वेकत्वस्य पशुविशेषणतया यागाङ्गत्वाऽभावात्तदविवक्षितमेव स्यादित्यर्थकेन "तथैकत्वमयागाङ्गमर्थस्य गुणभूतत्वात्" इति सूत्रेण पूर्वपक्षिते, "शब्दवत्तूपलभ्यते तदागमे हि दृश्यते तस्य ज्ञानं यथाऽन्येषाम्" (जै० अ० ४ पा० १ सू० १५) इति सिद्धान्तसूत्रम्। शब्दवत्=शब्दवाच्यम्, यथा भवति तथोपलभ्यते। एकत्वं हि यतस्तदागमे=एकवचनसमवधाने दृश्यते। अतस्तस्य प्राधान्येन प्रतीतिर्यथान्येषामरुणादीनामित्यर्थः। यद्वा 'तदागमे' तत्=एकत्वम्, आगमे=एकवचनविधायकागमे 'द्व्येकयोः' इत्यत्र दृश्यते एकवचनरूपप्रत्ययार्थत्वेन प्रतीयते, अन्येषाम्=करणादीनामिवेत्यर्थः।

एवञ्च समानप्रत्ययोपात्तत्वप्रत्यासत्त्या विभक्त्यर्थकरणाऽन्वितस्याऽरुणाऽधिकरणन्यायेन प्रथमं क्रियायामन्वयः, पश्चात् प्रकृत्यर्थे। तथाच पश्वेकत्वोभयकरणको याग इति बोधेनैकत्वस्य यागाङ्गत्वाऽवगमादनेकपशुभिर्योग इति तद्भावः। प्राधान्यं च प्रकृत्यर्थाऽविशेषणत्वमेव, प्रत्ययार्थमादाय न्यायावतारात्तः प्रत्ययार्थ इति भागस्य न्यायघटकत्वम्। प्रकृते आख्याताऽऽगमे यद्याने भावनाऽवबोधात् तस्याप्राधान्येन मानमिति तत्सङ्गतिरिति बोध्यम्।

ननु सकर्मकत्वाऽनुगतकर्मत्वयोर्दुर्वचत्वमेवैतन्मते दूषणमत आह ❀ एवञ्चेति ❀ भावनाया आख्यातवाच्यत्वे चेत्यर्थः। तथाचाऽऽरब्धे पाके फलाऽनुत्पत्तिदशायां पाको जातो नवेति प्रश्ने, भविष्यतीत्युत्तराऽनुरोधात् फलमात्रं धातुवाच्यमिति मीमांसकाशयः।

तस्मात् करोतिर्धातोः स्याद् व्याख्यानं नत्वसौ तिङाम्।
पक्ववान् कृतवान् पाकं किं कृत पक्वमित्यपि ॥ ८ ॥

तस्मात् = अभिप्रायस्थहेतोः, स चेत्थम्—फलमात्रस्य धात्वर्थत्वे 'ग्रामो गमनवान्' इति प्रयो
गापत्तिः, संयोगाश्रयत्वात्। फलानुत्पाददशायां व्यापारसत्त्वे 'पाको भवति' इत्यनापत्तिः, व्यापार
विगमे फलसत्त्वे पाको विद्यत इत्यापत्तिश्च।

यत्तु, भावप्रत्ययस्य घञादेरनुकूलव्यापारवाचकत्वाभ्रानुपपत्तिरिति, तन्न, कर्त्राख्यातवत्
'कर्तरि' इत्यस्यावृत्त्या एकस्य 'कर्तरि' इत्यस्य धर्मिपरत्वेन वा सामानाधिकरण्योपपत्तेः।

प्रभा

अभिप्रायस्थेति—तच्छब्दस्य बुद्धिविशेषविषयत्वोपलक्षितधर्मावच्छिन्ने शक्तिस्वीकारादित्याशयात्।
स चेति—अभिप्रायस्थहेतुरित्यर्थः। गमनवानिति—गमन-संयोगयोः पर्यायत्वादिति भावः। अनापत्तिरिति—
पाकपदस्य फलमात्रार्थकत्वेन तदानीं फलाभावादिति भावः। आपत्तिश्चेति—फलस्य विक्लित्त्यादेः सत्त्वात्।
फलव्यापारयोः पृथक्धात्वर्थत्वमतेऽपि केवलफलार्थत्वमादाय तदापत्तिस्तु न शङ्क्या, अन्तरङ्गत्वात् फलस्य
व्यापारे एव प्रागन्वयात्।

केनचिदुक्तं दूषणोद्धारं निराकुरुते–यत्त्विति—घञादिर्व्यापारार्थकत्वे फलमात्रं धात्वर्थ इति मतस्यानुप-
पत्तिर्नेत्यर्थः। अन्विताभिधानवादिनये पदमात्रस्य सम्बन्धविशिष्टस्वार्थबोधकत्वादाह–अनुकूलेति।

वस्तुतस्तु अनुकूलत्वस्याकाङ्क्षालभ्यत्वात् फलितार्थपरमेतत्। तथाच 'पाकानुकूला भावना' इति मानसो
बोधः। अत एव 'दध्ना जुहोति' इत्यत्र दधि जुहोतीत्यर्थः। 'ज्योतिष्टोमेन' इत्यत्र तु यागस्य मानसिक पार्थिव
करणत्वबोधः, असिद्धस्यापि यागस्य स्वकरणनिष्पन्नस्य करणत्वसम्भवात्। सोमादीनान्तु साक्षात् करणत्वं न
सम्भवति, नहि क्रियामन्तरेण काष्ठादिमात्रात् सोमरसे पाक उत्पद्यतेति। कर्त्राख्यातवदिति—'ल कर्मणि' इति
सूत्रेऽनुवृत्तकर्तृपदस्य व्यापाराश्रयार्थकत्वेन तत्र प्रकारतया भासमानस्य व्यापारस्य धर्मवाचककर्तृपदेन लाभय-
दत्रापि कर्तृपदं तत्परं स्यादिति भावः। नचैव 'पक्ता देवदत्तः' इत्यादेः सामानाधिकरण्यानुपपत्तिः, लक्षणया,

दर्पणव्याख्या

हेतोः पूर्वमनुपादानादाह ॐ अभिप्रायस्थेति ॐ स्वदार्दीनां बुद्धिस्थपरामर्शकत्वादिति भावः। ॐ प्रयोगापत्तिरिति ॐ भावल्युडन्तगमनपदार्थसंयोगात्मकफलस्य ग्रामे सत्त्वाद् ग्रामः संयोगवानितिवद् ग्रामो
गमनवानिति प्रयोगस्य प्रामाण्यापत्तिरित्यर्थः। एवमग्रेऽप्यूह्यम्। ॐ फलाऽनुत्पादेति ॐ फलानुत्पादे तादृशप्रयोगस्य
सर्वानुमतत्वादुक्तम् ॐ व्यापारसत्त्व इति ॐ। ॐ भवतीत्यनापत्तिरिति ॐ पाकपदार्थस्य विक्लित्तेरवर्तमानत्वादि
त्यर्थः। फलोत्पाददशायामर्थाऽबाधात्तादृशप्रयोगस्येष्टत्वादाह ॐ विद्यत इत्यापत्तिश्चेति ॐ व्यापारापरित्यागेन फलमात्रस्य
धात्वर्थत्वाऽभिप्रायेण तु भविष्यतीत्युत्तरं पाकमुत्पादयतीति विवरणञ्चेति भावः।

ॐ अनुकूलेति ॐ अनुकूलत्वोत्कीर्तनं त्वन्विताऽभिधानवादिनां मतमेतदिति सूचयितुम्। ॐ नानुपपत्तिरिति ॐ
भावविहितल्युड्घञाद्यर्थव्यापारस्य ग्रामादौ बाधाच्च पूर्वोक्तप्रयोगापत्तिरित्यर्थः। विक्लित्त्यनुकूलघञाद्यर्थव्यापारस्य कर्तृतया
भावनादावन्वयात्र पूर्वोक्तप्रयोगाऽनुपपत्त्यापत्तिरिति भावः।

ननु कर्तरि कृदिति विहितस्य कृतः पक्ता पाचक इत्यादौ कर्त्रर्थत्वदर्शनात्तद्विहितघञादीनां व्यापारार्थत्वेऽपि
भ्योक्तदर्थत्वबोधनाय 'भावे' इत्यनुशासन चारितार्थ्यमित्याशङ्कामपाकरिष्यंस्तदनुगुणं दृष्टान्तमाह ॐ कर्त्राख्यातवदिति ॐ।
तथाच ल कर्मणीति विहितकर्त्राख्यातस्य त्वन्मते व्यापाराऽर्थकत्ववत्, कर्तरि कृदिति विहितघञादीनामपि व्यापाराऽर्थकत्व
सम्भवादित्यर्थः।

'कर्त्तरि कृत्' इत्यत एव तद्विधानलाभे भावे विधायकाऽनुशासनवैयर्थ्यापत्तेः, तद्विरोधापत्तेश्च। अथ व्यापारोऽपि धात्वर्थ इत्यभ्युपेयमिति चेत्तर्हि धातुत एव सकलव्यापारलाभसम्भवेनाख्यातस्य पृथक्शक्तिकल्पने गौरवमिति। पचतीत्यस्य पाकं करोतीति विवरणात्मा करोतिर्धातोरेव व्याख्यानम् = विवरणम्, अतस्तदपि नाख्यातार्थत्वसाधकमिति भावः। मीमांसकोक्तं बाधकमुद्धरंस्तन्मतं दूषयति—नन्वित्यादिना।

प्रभा

वैयर्थ्यापत्तेरिति—तथाच तद्विरोध इति भावः। तद्विरोधापत्तेश्चेति। (तद्भाष्यविरोधापत्तेरिति
क्वचित्पाठः) घञादीनामपि असत्त्वभूतकारकान्वययोग्यव्यापारार्थकत्वे 'भावे' इति सूत्रस्थभाष्यविरोधापत्ते-
रित्यर्थः। तत्र हि भावे सर्वलिङ्गो निर्देशः..........'सर्वलिङ्गे भावे एते प्रत्यया यथा स्युः', एतेन घञादीनां
सत्त्वार्थकत्वं सूचितम्। यदि घञादीनामसत्त्वभूतक्रियार्थकत्वं स्यात्तदा भाष्यविरोधः स्पष्ट एवेति भावः। चो
हेतौ यतो भावे इत्यस्य वैयर्थ्यापत्तिरतस्तद्विरोध इति भावः। यद्वा, 'भावप्रधानमाख्यातमिति निरुक्तबलादा-
ख्यातस्य व्यापारार्थकत्वस्वीकारेऽप्यत्र तथात्वे मानाभावेन भावप्रत्ययानां घञादीनां साधुत्वमात्रार्थकत्वमिति
स्वकीयसिद्धान्तविरोधापत्तिरिति भावः। वस्तुतस्तु तद्भाष्यविरोधापत्तेरित्येव पाठः काशिकासम्मतः साधुः।
ननु घञादीनां सत्त्वासत्त्वोभयार्थकत्वस्वीकारेण सत्त्वार्थकत्वपरकभाष्याद् विरोधाभाव इत्यत आह–
चेति—चेन दूषणान्तरसङ्ग्रहः, तथाहि—आख्यातस्य व्यापारवाचकत्वे कर्त्रादीनामभिधानानभिधानयोर्व्य-
वस्थायाः 'पाचकः' 'पक्वः' इत्यादौ साध्यक्रियान्वययोग्यकर्मत्वाद्यनुपपत्त्या कारकषष्ठ्यादीनाञ्चानुपपत्ते-
सङ्ग्रहः। नच घञादीनां सत्त्वासत्त्वार्थतयोक्त एवं दोषपरिहारः, तद्वाचकत्वे गौरवापत्तेः। अभ्युपेयमिति—
उक्तदोषनिकरनिरासाय फलातिरिक्तो व्यापारोऽपि धात्वर्थो वस्तु आख्यातार्थ इति भावः। सकलेति—
विनिगमनाविरहाद् फलव्यापारयोरित्यर्थः। पृथक्शक्तीति—व्यापारे धातोराख्यातस्य च यत्ने शक्तिकल्पनायां
गौरवमिति भावः। नन्वाख्यातार्थस्य करोतिना विवरणाद् यत्नार्थत्वं तस्येत्यत आह–पचतीत्यस्येति।
विवरणात्मेति—विवरणस्यात्मा = स्वरूपम् = करोतिः धातोरेव नाख्यातस्येति भावः। व्याख्यानमित्यस्यैवार्थो
विवरणमिति—तदर्थकथनमित्यर्थः। करोतिना धात्वर्थविवरणे भाष्यमपि मानम्।
तथाहि—'कथं ज्ञायते क्रियावचनाः पचादय इति प्रश्ने यदेषां करोतिना सामानाधिकरण्यम्, किं
करोति? पचति' इति। अनेन 'करोति' इति धात्वर्थविवरणमिति स्पष्टमेवोक्तम्। मीमांसकेति–मीमांसकम्मन्ये-
त्यर्थः, बहुमीमांसकैरुभयार्थकत्वस्वीकारात्। बाधकमिति—'प्रकृतिप्रत्ययौ सहार्थम्' इति न्यायविरोधा-
त्मकमित्यर्थः। तन्मतमिति—

'प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययौ सदा।
प्राधान्याद् भावना तेन प्रत्ययार्थोऽवधार्यते॥'

इति भट्टपादोक्त्या आख्यातार्थ एव भावनेति मीमांसकमतमित्यर्थः।

दर्पणव्याख्या

❀ विरोधाऽऽपत्तेश्चेति ❀ चो हेतौ, यतो वैयर्थ्यमतस्तद्विरोधापत्तिरित्यर्थः। उक्तिवैचित्र्यमेतत्। यद्वा भाव
विहितप्रत्ययानां धात्वर्थानुवादकत्वात् प्रयोगसाधुतामात्रार्थकत्वमिति स्वकीयसिद्धान्तविरोधापत्तेरित्यर्थः। व्याख्यानमित्यस्य
विवरणम्—❀ विवरणमिति ❀।
❀ अतस्तदपीति ❀ पचतीत्यस्य पाकं करोतीति विवरणमपीत्यर्थः। अपिना दूषयिष्यमाणप्रकृतिप्रत्ययाविति
न्यायसमुच्चयः। धातोः पृथग्विवरणं तु तथाऽऽख्यातार्थसंख्याकालव्यापाराणां मध्ये व्यापारस्य कृञा संख्यादेस्तदुत्तरतिङा

नाऽसौ तिङां व्याख्यानम्, 'पक्वान्'इत्यादावनन्वयापत्तेः ।
अयं भावः—"प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इत्यत्र हि 'विशेष्यतया
प्रकृत्यर्थप्रकारकबोधे(बोधम्प्रति)तदुत्तरप्रत्ययजन्योपस्थितिर्हेतुः' इति कार्य्यकारणभावः फलितः ।
तथाच पक्ववानित्यत्र पाकः कर्म्मकारकम्, क्तवतुप्रत्ययार्थः कर्तृकारकम् । तयोश्चारुणाधिकर-
णोक्तरीत्या, वक्ष्यमाणाऽस्मद्रीत्या चान्वयासम्भव इति

प्रभा

अनन्वयापत्तेरिति—ननु पदार्थोपस्थित्यादिसामग्रीसत्त्वेऽन्वये बाधकाभावः । नच कारकाणां क्रियाया-
मेवान्वयनियमेन प्रकृते 'पक्वान्' इत्यादौ प्रकृतिप्रत्ययाभ्यां क्रियाया अनुपस्थित्या तदन्वयाभाव इति वाच्यम्,
कर्तृत्वादिना क्रियायामेवान्वय इति नियमेऽपि सम्बन्धसामान्येनान्वये बाधकाभावादित्यत आह—अयम्भाव
इति । सहार्थमिति—सह चासावर्थश्चेति सहार्थ इति अन्वितार्थ इत्यर्थः । नचार्थशब्दात् 'सह युक्ते' इति
तृतीयापत्तिः, 'उपपदविभक्तेः' इति न्यायाद् द्वितीयया बाधात् । केनान्वित इत्याकाङ्क्षायां प्रकृत्यर्थेनान्वित-
मर्थं प्रत्ययः प्रत्ययार्थेनान्वितमर्थं प्रकृतिश्चाभिधत्ते इत्यर्थः । विशेष्यविशेषणभावाकाङ्क्षायामाह—तयोश्चेति ।
विशेष्यतयेति—प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनेत्यर्थः । हेतुरिति—विशेष्यतासम्बन्धेनेत्यर्थः ।
पाकः=विक्लित्तिरूपफलरूपः । कर्मकारकमिति—व्यपदेशिवद्भावेन फलस्यापि फलाश्रयत्वात् कर्मत्वमित्यर्थः ।
नच कालिकसम्बन्धेन फलाश्रयत्वमादाय कर्मत्ववारणाय फलतावच्छेदकसम्बन्धेन फलाश्रयस्य कर्मत्वं वाच्यम्,
व्यपदेशिवद्भावेनेत्यस्य फलतावच्छेदकसम्बन्धेन फलाश्रये व्यपदेशिनि तण्डुलादाविव तेनैव सम्बन्धेन फला-
श्रयत्वातिदेशेनेत्यर्थः । अत्र मानञ्च 'क्रियाविशेषणानां कर्मत्वम्' इत्यभियुक्तोक्तिरेव । अरुणेति—यथा आरु-
ण्यादिगुणानां गुणिनाञ्च करणत्वश्रुत्या कारकाणां क्रियान्वयनियमात् क्रियायामेवान्वयः न परस्परम्, तथा
कारकयोः कर्मकर्त्रोः परस्परमन्वयाभाव एव स्यादिति भावः । इयाँस्तु विशेषो यदरुणेत्यत्र गुणगुणिनोः परस्परं
विशेष्यविशेषणभावयोग्यतासम्भवेनार्थिकः पार्ष्ठिकान्वयः । अत्र तु अयोग्यतयाऽनन्वय एव इति । वक्ष्यमाणेति—
क्रियात्वस्यैव कारकान्वयितावच्छेदकतया क्रियायामेव कारकान्वय इति वक्ष्यमाणरीत्येत्यर्थः ।

दर्पणव्याख्या

विवरणवद्धात्वर्थव्यापारस्याऽप्युपपन्नमिति न तदाख्यातार्थत्वसाधकम् । अत एव "कथं ज्ञायते क्रियावचनाः पच्यादयः यदेषां
करोतिना सामानाधिकरण्यम्, किं करोति ? पचति" इति भूवादिसूत्रभाष्ये उक्तम् । तेन विवरणमपि धात्वर्थेनेति स्पष्टमेव
बोध्यते इति भावः । पक्ववानिति मूलमपि करोतेराख्यातविवरणत्वाऽभावमात्रपरतया व्याचष्टे ❀ पक्ववानित्यादावपीति ❀ ।
अनन्वयमेव विशदयति ❀ अयम्भाव इत्यादि ❀ ।
❀ सहार्थमिति ❀ सम्बद्धार्थमित्यर्थः । ❀ ब्रूतः ❀ बोधयतः, ❀ तयोः ❀ प्रकृतिप्रत्ययार्थयोर्मध्ये,
❀ प्रत्ययाऽर्थः ❀ प्रत्ययवृत्तिग्रहविशेष्यः, ❀ प्रधानमिति ❀ प्रकृत्यर्थप्रकारतानिरूपितविशेष्यताशालीत्यर्थः । तादृश-
व्युत्पत्तिसिद्धिकार्य्यकारणभावमभिनयेन दर्शयति ❀ विशेष्यतयेति ❀ प्रत्ययस्य प्रकृत्यर्थप्रकारतानिरूपितविशेष्यतासम्बन्धेन
शाब्दबोधं प्रतीत्यर्थः । हेतुरित्यस्य विशेष्यतासम्बन्धेनेति शेषः ।)
❀ अरुणाधिकरणोक्तरीत्येति ❀ अरुणयेति पदोपात्ताऽऽरुण्यस्य प्रथमं करणत्वेनैकक्रियायामन्वयः, नामा-
र्थाऽन्वयस्तु पार्ष्ठिक इति तत्रोक्तम् । ❀ वक्ष्यमाणेति ❀ कारकत्वस्य क्रियाजनकत्वरूपत्वेन क्रियाजनकमिति ज्ञाने, का
सा क्रियेत्याकाङ्क्षोदयेन क्रियाया अपि साध्यरूपायाः साधकाऽऽकाङ्क्षया च परस्पराऽन्वयौचित्यमित्याशयेन क्रियात्वमेव
हि कारकाऽन्वयिताऽवच्छेदकमिति सुबर्थनिर्णये वक्ष्यमाणरीत्येत्यर्थः ।

प्रकृतिप्रत्ययार्थयोरन्वयनियमस्यैवाऽभावे क्व प्राधान्यबोधक उक्तकार्य्यकारणभावः। नच

सम्बन्धमात्रमुक्तञ्च श्रुत्या धात्वर्थभावयोः।
तदेकांशनिवेशे तु व्यापारोऽस्या न विद्यते॥

इति भट्टपादोक्तरीत्या सम्बन्धसामान्येन कारकाणामन्वयः शङ्क्यः, योग्यताविरहात् अन्वयप्रयोजकरूपवत्त्वस्य तथात्वात्।

प्रभा

अन्वयनियमस्यैवेति—मीमांसकमते एतादृशस्थले (पक्वानित्यादौ) पाकस्य कर्मत्वात् क्वत्वर्थस्य कर्तृत्वाद् 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्' इति न्यायेन क्रियायामेवान्वययोग्यत्वसत्त्वेन च प्रकृत्यर्थप्रत्ययार्थयोरन्वयाभावेन व्यभिचारादुक्तनियमस्य (अन्वितार्थबोधकत्वं प्रकृतिप्रत्यययोः) वासम्भवे इत्यर्थः। प्राधान्येति—'तयोश्च प्रत्ययार्थः प्रधानम्' इति प्राधान्यबोधककार्यकारणभाव इत्यर्थः। भावाधिकरणोक्तरीत्या अन्वयमाशङ्क्य निराकरोति–नचेत्यादिना—तत्र हि भावार्थाधिकरणे 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्युदाहृत्य भट्टपादैः सिद्धान्तितम्। आख्यातार्थभावनायां स्वर्गकामपदोपात्तः स्वर्ग एव फलत्वेन सम्बध्यते, नतु धात्वर्थो यागः, तस्यासुखरूपत्वेनापुरुषार्थत्वात्। नच स्वर्गस्य भिन्नपदोपात्तत्वादाख्यातरूपसमानपदश्रुतेर्बलवत्त्वाद् यागस्यैव साध्यत्व (फलत्वम्) मस्त्विति वाच्यम्, 'यागसम्बन्धिनी भावना' इत्येवं सम्बन्धं बोधयित्वैव समानपदश्रुतेश्चरितार्थत्वात्। सर्वदैव हि धात्वर्थभावनयोः प्रथमं सम्बन्धसामान्यमेव प्रत्याय्यते। तस्य=सम्बन्धसामान्यस्य य एकोंऽशः=सम्बन्धविशेषः तस्य निवेशे=बोधने तु श्रुतेः=यजेत इति शब्दस्य सामर्थ्यं नास्ति। यथा पचतीत्यत्र 'पाकसम्बन्धिनी भावना' इत्येव श्रौतोऽर्थः। 'पाकानुकूला भावना' इति तु पश्चान्मानसो बोध इति 'सम्बन्धमात्रमुक्तञ्च' इति कारिकार्थः। वाजपेयाधिकरणेऽपि भट्टपादैः स्पष्टीकृतोऽयमर्थः। तथैव प्रकृते 'पाकसम्बन्धी कर्ता' इति प्रकृतिप्रत्ययार्थयोरन्वयसम्भवेन व्यभिचाराभावादुक्तनियमस्यैवाभाव इत्यसङ्गतमित्याशङ्कायामाह—योग्यताविरहादिति—कारकाणां कर्तृत्वकर्मत्वादिसंसर्गेण क्रियायामेवान्वय इति संसर्गविधयैवान्वयस्य भाष्यसम्मतत्वेन क्रियायामेवान्वय इति तात्पर्यम्। फलस्य कर्मरूपकारकत्वेन क्रियायामेव योग्यतया अन्वयबोधो नतु कारकान्तरे, 'वह्निना सिञ्चति' इत्यत्रेव योग्यताविरहात्। योग्यतामुपपादयति–अन्वयेति—अन्वयप्रयोजकरूपवत्त्वमेव योग्यता, नतु तत्तत्पदार्थे पदार्थतावच्छेदकधर्मावच्छिन्नसंसर्गत्वम्। 'घटेन जलमाहर' इत्यादौ जलाहरणे घटत्वावच्छिन्नसंसर्गः प्रतिपाद्यः। स च यत्र

दर्पणव्याख्या

॥ सम्बन्धमात्रमिति ॥ "ज्योतिष्टोमेन यजेत" इत्यत्र यजेतेति श्रुत्या धात्वाख्यातार्थयागभावनयोः सम्बन्धसामान्यं प्रतिपाद्यते। तयोः क्रियाकारकभावरूपसम्बन्धविशेषबोधने तु नास्याः श्रुतेः कश्चिदभिधादिरूपो व्यापार, तद्वाचकपदाऽभावादिति तदर्थः। तथाच यजेतेत्यत्र यागसम्बन्धिभावनेति बोधः, न यागकरणकभावनेति, तद्वत्प्रकृते पाकसम्बन्धी कर्तेति बोधः। कर्मत्वादिना तत्संसर्गकबोधे एव क्रियाया अपेक्षणादित्याशङ्कितुराशयः। फलस्य कारकत्वेनाऽयोग्यत्वात्तत्राऽन्वयबोधोऽप्यसम्भवदुक्तिक इत्याह ॥ योग्यताविरहादिति ॥।

ननु तत्पदार्थे तत्पदार्थत्वं योग्यता, अस्ति च सा प्रकृते, पाकप्रयोजकत्वरूपपाकसम्बन्धित्वरूपाऽत्रेत्यत आह ॥ अन्वयप्रयोजकरूपवत्त्वस्येति ॥ तथाच तत्पदार्थे तत्पदार्थताऽवच्छेदकावच्छिन्नत्वस्यैव योग्यत्वे जलाहरणे घटकरणत्वस्य भावात्तादृशघटस्यापि करणत्वेनाऽन्वयापत्तिः। मन्मते तु सछिद्रेतरघटत्वस्य जलाऽऽहरणान्वयप्रयोजकत्वेन छिद्रघटस्य जलाऽऽहरणान्वयप्रयोजकत्वमिति न तदन्वयापत्तिरिति भावः।

क्रियात्वमेव हि कारकान्वयिताऽवच्छेदकमिति वक्ष्यते । तदेतदाविष्कर्तुं विवरणेन धात्वर्थक-
त्वर्थयोः कर्मत्व-कर्तृत्वे दर्शयति—'कृतवान् पाकम्' इति ।

वस्तुतस्तु 'प्रत्ययार्थः प्रधानम्' इत्यस्य, यः प्रधानं स प्रत्ययार्थ एवेति वा, यः प्रत्ययार्थः स
प्रधानमेवेति वा नार्थः, 'अजा' 'अश्वा' छागीत्यत्र स्त्रीप्रत्ययार्थे स्त्रीत्वस्यैव प्राधान्यापत्तेः, छाग्या-
देरनापत्तेश्च । किन्तूत्सर्गोऽयम् । विशेष्यत्वादिना बोधस्तु तथा व्युत्पत्त्यनुरोधात् ।

अत एव नैयायिकानां प्रथमान्तविशेष्यक एव बोधः ।

प्रभा

कस्यचिद् घटस्य कारणतारूपोऽपि सम्भवति इति सुषिरेतरत्वस्य लाभो न स्यात् । यदि तु अन्वयप्रयोजक-
रूपवत्त्वं योग्यतेत्युच्यते तदा सच्छिद्रस्य घटस्य जलाहरणे करणत्वासम्भवेन सच्छिद्रेतरत्वलाभः । अन्यथा
तदन्वयासम्भव इत्याह—क्रियात्वमिति ।

ननु क्तवत्प्रत्ययार्थो भावनाश्रयः कर्त्तेति तेनाक्षिप्तभावनायामन्वय स्यादित्यत आह—वस्तुतस्त्विति—
अयम्भावः—यत्र यत्र प्राधान्यं तत्र तत्र प्रत्ययार्थत्वमिति व्याप्त्या प्राधान्यस्य व्याप्यत्वं प्रत्ययार्थत्वस्य
व्यापकत्वं लभ्यते । यत्र यत्र प्रत्ययार्थत्वं तत्र तत्र प्राधान्यमिति व्याप्तौ च प्रत्ययार्थत्वस्य व्याप्यत्वं
प्राधान्यस्य व्यापकत्वं प्रतीयत इत्युभयथाऽपि 'अजा' इत्यादौ 'स्त्रीत्वविशिष्टा अजा' इत्येवं स्त्रीत्वप्रकारकबोध-
स्यैव सर्वसम्मतत्वेन व्यभिचारस्य दुर्वारतयोक्तनियमासम्भव एव इत्याह—अजेति । उत्सर्ग इति—प्रायिक
इत्यर्थः । अयम्—प्रत्ययार्थः प्रधानमिति न्यायः । ननु नियामकाभावे यथेच्छं विशेष्यविशेषणभावः स्यादत
आह—विशेष्यत्वादिनेति । व्युत्पत्त्यनुरोधादिति—व्युत्पत्तिः = शास्त्रप्रयोज्यप्रकृति-प्रत्ययस्वरूप—तदर्थ—तद-
न्वयादिविषयकयथार्थज्ञानजन्यसंस्कारविशेषः, तथाच तत्तच्छास्त्रप्रयोज्यसंस्कारानुरोधादिति फलति । तथाच
तत्तच्छास्त्रप्रयोज्यव्युत्पत्त्य ( संस्कार ) नुसारी बोधः, नतु बोधानुसारिणी व्युत्पत्तिरिति भावः । व्युत्पत्त्यनु-
सारिबोधं दर्शयति—अत एवेति—आख्यातस्थले वैयाकरणानां व्यापारविशेष्यकबोधेऽपि नैयायिकादीनां
स्वव्युत्पत्त्यनुसारात् प्रथमान्तार्थादिविशेष्यक एव बोधः ।

दर्पणव्याख्या

ननु 'घटेन जलमाहर' इत्यत्र घटे छिद्रेतरघटत्ववत् प्रकृते किं कारकान्वयिताऽवच्छेदकं यदभावादनन्वयापत्तिरुक्तास्यतेऽत
आह ॐ क्रियात्वमेव हीति ॐ ।

ननु कृदर्थकर्त्राक्षिप्तभावनायां पाकादीनां कर्मत्वेनान्वयमील्याख्यातोक्तरूपगमत आह ॐ वस्तुतस्त्विति ॐ प्रधान-
प्रत्ययार्थवचनमिति सूत्रस्वरसो यः प्रधानं स प्रत्ययार्थः । तदागमे हीति न्यायश्च, यः प्रत्ययार्थ इत्यर्थे मूलमिति ध्येयम् ।
अजेत्यादौ विशेष्याजादिपदार्थस्य प्रत्ययार्थत्वाऽभावेन व्यभिचारस्य स्फुटत्वात् तदुपेक्ष्य, द्वितीयकल्प एव व्यभिचारं दर्शयति—
ॐ अजेति ॐ

इष्टापत्तावाह—ॐ छाग्यादेरिति ॐ स्त्रीत्वविशेषणछाग्यादेश्छागनिष्ठस्त्रीत्वादेरिति वार्थः । एवञ्च विशेषणतयाऽ-
न्वितस्यापरत्र विशेषणतयाऽन्वये नैराकाङ्क्ष्येण छागीमानयेत्यादौ कर्मत्वादिकारके छागी गच्छतीत्यादौ छागनिष्ठस्त्रीत्वस्य
छागीपदार्थस्यायोग्यतयाऽऽख्यातार्थकर्त्तरि वाऽनन्वयापत्तेश्चेति भावः । छाग्यादेरनापत्तेश्चेति पाठे प्राधान्यानापत्तेरित्यर्थः ।

ननु सा व्युत्पत्तिरप्यर्थैव स्यादत आह ॐ किन्त्विति ॐ तथाच तादृशव्युत्पत्तेः कृत्तद्धितमात्रविषयकत्वं न प्रत्यय-
मात्रविषयकत्वमिति न तद्बलाद् व्यापारस्याख्यातार्थत्वमिति भावः । ननु कथं तर्हि व्यापारविशेष्यको बोधोऽत आह
ॐ विशेष्यत्वादिनेति ॐ तथाच व्युत्पत्त्यनुसारी बोधः, नतु बोधानुसारिणी व्युत्पत्तिः । एवञ्च तादृशव्युत्पत्त्यङ्गीकर्तॄणां
तथैव बोधः, अन्यादृग्व्युत्पत्तिमतां त्वन्यथापीति भावः । तदेव विशदयति ॐ अत एवेति ॐ ।

लक्षणायामालङ्कारिकाणां शक्यतावच्छेदकप्रकारक एव बोधः, न नैयायिकादीनाम्। घटः, कर्मत्वम्, आनयनं कृतिरित्यादौ विपर्ययेणापि व्युत्पन्नानां नैयायिकनव्यादीनां बोधः, नतु तद्व्युत्पत्तिरहितानाम्। अन्येषां तन्निराकाङ्क्षमेवेत्यादिकं सङ्गच्छते।

अत एव "प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्" ( पा० सू० १।२।५६ ) इत्याह भगवान् पाणिनिः।

प्रभा

आलङ्कारिकाणाम्—अलङ्कारशास्त्रवासनावताम्। शक्यतावच्छेदकेति—'गङ्गायां घोषः' इत्यादौ गङ्गात्वेन तटबोधः, न तु तटत्वेन, तटत्वेन बोधे चमत्कारासिद्धेः। नेति—नैयायिकानां मते 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इत्यभियुक्तोक्त्या लक्ष्यवृत्तितटत्वादिनैव लक्ष्यस्य बोधः। अत एव 'कचतस्त्रस्यति वदनम्' इत्यादौ कचस्य राहुत्वेन बोधात् त्रासोपपत्तिः, वदने चन्द्रस्यारोपश्च सिध्यति। शक्यतावच्छेदकरूपेण भाननये तु तदनुपपत्तिरेव।

वस्तुतस्तु शक्यतावच्छेदकरूपेण लक्ष्यार्थबोधनयेऽपि कचत्वेन राहोरेव बोधात् त्रासात् चमत्कारसिद्धिः। राहुत्वेन राहुबोधे चमत्कारे तु तादृशबोधे सर्वत्रैव चमत्कारापत्तिः। 'शक्यादन्येन' इत्यस्य लक्ष्यवृत्तिधर्मेण लक्ष्यस्य ज्ञाते एव लक्षणा इत्येवार्थः। अत एव 'विधौ न लक्षणा', विधेयस्यापूर्वबोध्यस्य ज्ञातत्वाभावात्। घट इति—'घटमानय' इत्यादौ यथा घटकर्मकानयनविषयको बोधस्तथा तत्रैव 'घटः' कर्मत्वम्, आनयनम्, कृतिः, इत्यादौ शब्दजन्योपस्थितिसत्त्वान्नव्यनैयायिकानां बोधः। तद्व्युत्पत्तिरहितानाम्—शब्दजन्यपदार्थोपस्थितिमात्रेण बोध इति व्युत्पत्तिरहितानाम्। किन्तु प्रकृत्यर्थस्य प्रत्ययार्थे एव विशेष्यतया, विशेषणतया वाऽन्वय इति व्युत्पत्तिमतां न तेन बोधः। निराकाङ्क्षमिति—आकाङ्क्षाया अपि शाब्दबोधे कारणत्वात् 'घटनिष्ठं कर्मत्वम्' इत्यादिबोधे घटाद्युत्तरकर्मत्ववाचकप्रत्ययसमभिव्याहाररूपाकाङ्क्षाया अपेक्षितत्वेन तदभावादेव न बोध इति भावः। अत एव=बोधस्य व्युत्पत्त्यनुसारित्वादेव।

दर्पणव्याख्या

शक्यताऽवच्छेदकप्रकारक इति ❀ 'लक्षणाऽऽरोपिता क्रिया' इति काव्यप्रकाशीयसूत्रपर्यालोचनया शक्यतावच्छेदकारोपविषयनिष्ठसंसर्गस्यैव लक्षणात्वलाभात्, 'गङ्गायां घोषः' इत्यत्र गङ्गात्वेनैव लक्ष्यार्थप्रतीतिरत एव ततो वैलक्षणिकी शैत्यपावनत्वादिप्रतीतिः। 'जाता लता हि शैले' इत्यादौ च कनकलतात्वेनैव रूपेण बोधस्य चमत्काराऽऽधायकत्वादिति तदाशयः।

❀ नैयायिकादीनामिति ❀ सम्बन्धिताऽवच्छेदकरूपेणैव लक्ष्यार्थस्य भानम्। अत एव 'कचतस्त्रस्यति वदनम्' इत्यादौ सम्बन्धिताऽवच्छेदकराहुत्वादिनैव बोधस्य त्रासाऽऽधायकस्योपपत्तिः। कचत्वादिशक्यताऽवच्छेदकरूपेण लक्ष्यार्थबोधाङ्गीकारे तदनुपपत्तिः स्पष्टैव। किञ्च, शक्यताऽवच्छेदकम्, न लक्ष्यतावच्छेदकम्।

शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा।

इत्यभियुक्तोक्तिविरोधादिति तद्भावः।

❀ घटः कर्मत्वमिति ❀ नव्यमते एकपदेऽपरपदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वस्याकाङ्क्षात्वोपगमेन 'घटपदे कर्मत्वपदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वज्ञानदशायां तादृशवाक्यात्ते. शाब्दबोधाऽभ्युपगमादित्यभिप्रेत्य 'नव्यानाम्' इत्युक्तम्। निराकाङ्क्षमित्यस्याऽऽधेयतासंसर्गेण बोध इति शेषः। ❀ अत एवेति ❀ बोधस्य व्युत्पत्त्यनुसारित्वादेवेत्यर्थः।

'प्रधानं प्रत्ययार्थः' इति वचनम् ('न' इत्यनुवर्त्य) न कार्य्यम्, अर्थस्य=तथाबोधस्य, अन्य-प्रमाणत्वात्=व्युत्पत्त्यनुसारित्वादिति हि तदर्थः। एवं सत्यपि नियामकापेक्षणे च "भावप्रधानमाख्यातम्" इति वचनमेव गृह्यतामिति सुधीभिरूह्यम्।

'तदागमे हि' इति न्यायो विवरणश्चाऽतिव्याप्तमित्याह—किं कृतं पक्वमिति।

## प्रभा

वचनमिति—प्राचीनवैयाकरणैर्हि 'प्रधानं प्रत्ययार्थः' इति सूत्रं कृतम्। तच्च पाणिनिना खण्ड्यते—'प्रधानप्रत्ययार्थवचनम्' इत्यादिना। नचात्र निषेधवाचकशब्दाभावात् 'खण्ड्यते' इत्यसङ्गतमित्यत आह—न इत्यनुवर्त्येति—पूर्वसूत्रादिति शेषः। वस्तुतस्तु पूर्वसूत्रे नञोऽभावात् 'तदशिष्यं संज्ञाप्रमाणत्वात्' इति सूत्रात् 'अशिष्यम्' इति पदमनुवर्तनीयम्। 'न' इत्यनुवृत्तिकथनन्तु तुल्यार्थाभिप्रायेणेति पञ्चोलिनः।

ननु प्रत्ययार्थस्य क्वचित् प्राधान्यं क्वचिदप्राधान्यमित्यर्थे नियामकाभावे त्वन्मतेऽपि आख्यातसमभिव्याहारे धात्वर्थव्यापारस्य प्रकारतया भानं दुर्वारमित्यत आह—नियामकापेक्षण इति। आख्यातमिति—अत्राख्यातपदेन धातुरुच्यते, आख्यायते सर्वप्रधानभूतोऽर्थोऽनेनेति व्युत्पत्तेः। तत्र नाम्नः प्रकृतित्वेनाख्यातपदेनापि प्रकृतेरेव ग्रहणस्यौचित्यात्, 'नामान्याख्यातजानि' इति निरुक्ताच्च। नह्याख्यातप्रत्ययजन्यत्वं तदन्तजन्यत्वं वा नाम्नि सम्भाव्यते। अत एव 'सर्वं नाम च धातुजमाह' इति निरुक्तार्थसमानार्थकं भाष्योक्तं सङ्गच्छते। तथाच यास्ये सर्वापेक्षया प्रधानीभूतभावार्थकत्वं धातुलक्षणं फलति।

नागेशास्तु—'आख्यातमाख्यातेन' इति मयूरव्यंसकादिगणसूत्रात्, 'चत्वारि पदजातानि—नामाख्याते उपसर्गनिपाताश्च' इति निरुक्ताद् भाव-काल-कारक-सङ्ख्याश्चत्वारोऽर्था आख्यातस्य, तत्र 'भावः प्रधानम्' इति भाष्योक्तेश्च आख्यातपदं तिङन्तपरमेवेति। प्राङ्नव्योभयमतेऽपि 'भावप्रधानमाख्यातम्' इति निरुक्तं प्रागुक्तप्रमाणैर्भावस्य धात्वर्थत्वे व्यवस्थापिते तत्प्राधान्यनियामकं भवत्येव। तदागम इति—यथा हि- एकवचनागमे एकत्वप्रतीतेरेकवचनार्थत्वमेकवचनस्य, तथा—आख्यातागमे भावनाप्रतीतेर्भावनाया आख्यातार्थत्वं वक्तुमशक्यम्। किं कृतमिति प्रश्ने 'पचम्' इति उत्तरदर्शनाद् आख्यातस्याभावेऽपि भावनाप्रतीतेरसङ्गत्यापत्तेः। मन्मते तु भावनाया धात्वर्थत्वात्रानुपपत्तिरित्याह—न्यायो विवरणश्चेति। 'पक्वम्' इत्यस्य 'पाकः कृतः', इति विवरणमित्यर्थः। अतिव्याप्तमिति—अतिव्याप्तो न्यायः, अतिव्याप्तञ्च विवरणमिति 'नपुंसकमनपुंसकेन' इति

## दर्पणव्याख्या

❀ व्युत्पत्त्यनुसारित्वादिति ❀ कार्यकारणभावग्रहाधीनत्वादित्यर्थः। बोधानुसारिणी हि व्युत्पत्तिः, नहि बोधो व्युत्पत्त्यनुसारी। अत एवारोपे सति निमित्तानुसरणम्, नतु निमित्तमस्तीत्यारोप इति प्रामाणिकाः।

❀ अर्थस्य ❀ विशेष्यत्वादिना प्रतीयमानस्य। ❀ अन्यप्रमाणत्वात् ❀ स्वविशेषणीभूतप्रतीत्यनुरोधकव्युत्पत्तिकत्वादित्यर्थः। 'प्रधानं प्रत्ययार्थः' इति नियमस्य पाणिनिनाऽनादृतत्वेऽपि, 'यो यः प्रत्ययार्थः स प्रधानम्' इत्यर्थस्य 'तदागमे हि' इति सूत्रयता जैमिनिनाऽऽदृतत्वाऽदुष्टत्वादाख्यातार्थतयैव व्यापारस्य प्राधान्यम्, टाबादीनां द्योतकत्वेन सङ्ख्यावाचकत्वेऽपि प्रत्ययजन्योपस्थितौ सङ्ख्यावृत्तित्वस्य विशेषणाद्योतकार्यकारणभावस्य निर्दुष्टत्वादित्यन्ये। प्रतीयमानार्थस्य प्राधान्यमिति 'तदागमे हि' इति न्यायाकार इत्याशयेनाह—❀ तदागमे हीति ❀। ❀ अतिव्याप्तमिति ❀ 'नपुंसकमनपुंसकेन' इति ईत्वदोषतैकवचनान्ततायो च व्यभिचरितमित्यर्थः। तदेव विशदयति ❀ कृतेति ❀ 'पक्वम्' इत्यत्राऽपिनाऽनुपदोक्त 'पक्वान्' इत्यस्याऽपि संग्रहः, तत्र भावनाया आक्षेपात् प्रतीयमानत्वेऽपि प्रत्ययार्थत्वाऽभावेन व्यभिचारसम्भवात्। किं कृतमित्यतो व्यापारविषयस्य जिज्ञास्यत्वाऽवगमात् 'पक्वम्' इत्यतस्तदनवबोधेनाऽस्योत्तरत्वाऽनुपपत्त्या व्यापारबोधकत्वध्रौव्ये तस्य प्रत्ययार्थत्वाऽभावाद्व्यभिचार इत्यर्थः।

कृत्वा विवरणं प्रतीतिश्च पक्वमित्यत्रापि, इति तत्रापि भावना वाच्या स्यादिति भावः ।

नन्वस्तु तिङ इव कृतामपि भावना वाच्येत्यत आह—अपीति—तथाचोभयसाधारण्येन तत्प्रतीतेरुभयसाधारणो धातुरेव वाचक इति भावः । भवद्रीत्या प्रत्ययार्थत्वात् प्राधान्यापत्तिश्चेति द्रष्टव्यम् ॥ ८ ॥

साधकान्तरमाह—किं कार्य्यं पचनीयं चेत्यादि दृष्टं हि कृत्स्वपि ।
किञ्च क्रियावाचकतां विना धातुत्वमेव न ॥ ९ ॥

'कार्य्यम्'इत्यत्र 'ऋहलोर्ण्यत्' (पा० सू० ३।१।१२४) इति कर्मणि ण्यत् । 'पचनीयम्' इत्यादौ चानीयर् । आदिना 'ज्योतिष्टोमयाजी' इत्यादौ करणे उपपदे कर्त्तरि णिनिः । एते च क्रियायोग-

प्रभा

एकशेषे एकवद्भावः । इत्यत्रापीति—अपिना 'पक्ववान्' इत्यस्य संग्रहः । अत्र त्वन्मते धातुना फलस्य, प्रत्ययेन कर्मादेश्च प्रतीतिसम्भवेऽपि भावनायाः प्रतीतिराक्षेपेणैव वाच्या, इति तस्याः प्रत्ययार्थत्वाभावेन पूर्वोक्तन्यायादेर्व्यभिचार इति भावः । उभयेति—अत्र साधारण्यम्=समभिव्याहारः । कृदाख्यातोभयत्रोपलभ्यमानस्य धातोरेव भावनावाचकत्वे लाघवमिति । नच धातुत्वं दुर्वचम्, पाणिन्याद्यभियुक्तसङ्केतसम्बन्धेन धातुपदवत्त्वरूपधातुत्वस्य सुवचत्वात् । अन्यथा 'सर्वं नाम च धातुजमाह' इत्यादिधातुपदघटितवाक्याद् बोधानापत्तिः ॥ ८ ॥

अनीयरिति—कर्मणीति शेषः ।

दर्पणव्याख्या

❁विवरणमिति❁ विवरणञ्चाऽत्र प्रश्नोत्तररूपमेव । तद्बोधनार्थमेव किमनुल्लेखः, अन्यथा केवलकृतशब्दस्य पचपदविवरणतया लोकाऽप्रसिद्धेर्विवरणं चाऽतिव्याप्तमित्यस्याऽसङ्गतेः । ❁वाच्या स्यादिति❁ प्रत्ययवाच्या स्यादित्यर्थः । 'अपि'शब्दः पूर्वोक्ताऽर्थस्यैव न समुच्चायकः, किन्त्वर्थान्तरस्यापीति वक्तुमाशङ्कते—❁ नन्विति ❁ तथाचोक्तापत्तिरिष्टैवेति भाव ।

अपिसमुच्चितार्थं प्रकटयति—❁ तथाचेति ❁ । ❁ उभयेति ❁ आख्यातकृदन्तोभयेत्यर्थः । ❁ साधारण्येनेति ❁ साधारण्यमत्र समभिव्याहारविशेषः । ❁ प्रतीतेरिति ❁ भावनाप्रतीतेरित्यर्थः । ❁ उभयसाधारण इति ❁ घटकतया प्रयोगद्वयाऽनुस्यूत इत्यर्थः । तथाच प्रयोगद्वये नियतवृत्तित्वेन धातोरेव भावनावाचकत्वसिद्धिः, धातुत्वस्य शक्ततांऽवच्छेदकत्वेन लाघवात् , नतु तिङ्कृतोः, तिङ्त्वस्य चाननुगतस्य शक्तताऽवच्छेदकत्वे गौरवात्, परस्परव्यभिचाराच्चेत्युक्तापत्तेर्नेष्टत्वसम्भावनेति भावः ।

ननु धातुत्वस्य शक्ततावच्छेदकतायाः प्रागेव निराकृतत्वात्तदुक्तदूषणस्य 'अपि'शब्दसमुच्चयत्वमत आह—❁ भवद्रीत्येति ❁ स्वमते भावनायाः प्रकृत्यर्थत्वादुक्तम्—भवदिति । प्रत्ययार्थत्वादित्यनेन पूर्वोक्तमतद्वयमध्ये स्वस्यैव मीमांसकसम्मतत्वमिति सूच्यते । व्याख्यातञ्च तथैव । अवतरणे तन्न्यायविरोधोपदर्शनं तु प्रत्ययाऽर्थत्वप्राधान्ययोः प्रायशः समनैयत्येन, प्रधानस्य प्रत्ययार्थत्वसाधकत्वस्याऽपि ततो लाभेन प्रकृतिवाच्यत्वे तदनुपपत्तिमित्याशयेनेति बोध्यम् ॥ ८ ॥

साधकान्तरमित्यस्य धातोर्व्यापारवाचकत्वे इत्यादिः । किं कार्यमित्यत्र प्रश्नोत्तरभावरूपविवरणेनैव व्यापारस्य धात्वर्थत्वसिद्धिरित्यत्र न तात्पर्यम्, किन्तु प्रश्नोत्तरभावरूपविवरणस्य प्रकान्तत्वात् किम उल्लेख इति सूचयन्नाह ❁ कार्यमित्यत्रेति ❁ । ❁ णिनिरिति ❁ "भूते" इत्यधिकृत्य "करणे यजः" (पा० सू० ३ । २ । ८५) इति सूत्रेणेति शेषः । ❁ एते ❁ ण्यदादय इत्यर्थः ।

मन्तरेणासन्तस्तद्वाच्यतां बोधयन्ति, विना क्रियां कारकत्वासम्भवेन तद्वाचकप्रत्ययस्याप्यऽ-
सम्भवात्। नच 'गम्यमानक्रियामादाय कारकयोगः' इति भाट्टरीतिर्युक्ता, आख्यातेऽपि तथा-
त्वापत्तौ तत्रापि भावनाया वाच्यत्वासिद्धयापत्तेः।

अथ लिङ्गसंख्यान्वयानुरोधात् कर्तुर्वाच्यत्वमावश्यकमिति तेनाऽऽक्षेपाद् भावनाप्रत्ययः
स्यादिति मतम्, तर्हि संख्यान्वयोपपत्तये आख्यातेऽपि कर्त्ता वाच्यः स्यात्। 'पक्वान्' इत्यादौ
कालकारकान्वयानुरोधाद् भावनाया अपि वाच्यत्वस्याऽऽवश्यकत्वाच्चेति भावः।

अपिना हेत्वन्तरसमुच्चयः। तथाहि—नखैर्भिन्नः 'नखभिन्नः', हरिणा त्रातः 'हरित्रातः' इत्यादौ,
"कर्तृकरणे कृता बहुलम्" (पा० सू० २।१।३२) इति समासो न स्यात्, 'पुरुषो राज्ञो
भार्य्या देवदत्तस्य' इतिवद्, असामर्थ्यात्।

प्रभा

असन्त इति—असम्भवन्त इत्यर्थः, कारकस्य क्रियान्वयनियमादिति भावः। तद्वाच्यताम्=क्रियाया
वाच्यताम्। असम्भवमेव दर्शयति—विना क्रियामिति। गम्यमानेति—पदं विनाऽपि प्रतीयमानाम् 'क्रियते'
इत्यादिक्रियामित्यर्थः। भाट्टरीतिरिति—कृदन्ते कर्त्रादिना भावनाऽऽक्षिप्यते इति तदुक्तेरिति भावः।
तथात्वापत्तौ=भावनाया आक्षेपापत्तौ। आवश्यकमिति—कृतीति शेषः। लिङ्गस्य सत्त्वेन प्रतीयमाने
ष्वान्वयस्य सर्वसम्मतत्वादिति भावः। सङ्ख्यान्वयेति—'सङ्ख्यान्वितं द्रव्यम्' इत्यभियुक्तोक्तेरित्याशयः।
अनुरोधादिति—कालकारकयोस्तत्रैवान्वयनियमादिति भावः। न स्यादिति—नखैरित्यादिकरणादिकारकाणां
क्रियायामेवान्वयनियमेन भिदादिधातुवाच्यायाः क्रियाया अभावात् अध्याहृत 'कृत्वा' इत्यादिनिरूपितान्वयस्य
वाच्यतया भिन्नादिपदार्थेन सामर्थ्याभावादिति भावः। भार्य्येति—भार्य्याया देवदत्तेनान्वयाद् राज्ञाऽन्व-
याभावेन यथा सामर्थ्याभावः।

दर्पणव्याख्या

❀ क्रियायोगमन्तरेणेति ❀ क्रियान्वयिनामेव कारकतया धातोरर्थोपाराभावकत्वे 'करणं घटः' इत्यादौ कर्मादि-
संज्ञानां, 'कारके' इत्यधिकृत्य विहितानां घटादावसम्भवेन तत्र विधीयमानप्रत्ययानुपपत्तिर्धातोस्तदाक्षिपति, देवदत्तस्य
पीनत्वानुपपत्तिरिव रात्रिभोजनमिति भावः। तदेवाह—❀ विना क्रियामिति ❀। गम्यमानेति ❀ अस्य तदुपस्थापक-
पदाभावेऽपीत्यादिः। ❀ तथात्वापत्ताविति ❀ गम्यमानक्रियामादायैव कर्तृकर्माद्यर्थकप्रत्ययोपपत्तावित्यर्थः। ❀ तत्राऽपि ❀
तिङ्संज्ञकाऽऽख्याते।

❀ लिङ्गसङ्ख्यान्वयाऽनुरोधादिति ❀ अस्य पाचक इत्यादावित्यादिः। ❀ आवश्यकम् ❀ इत्यस्य कृतीति शेषः।
कृन्निरूपितवाच्यत्वं कर्तुरवश्यमङ्गीकरणीयमित्यर्थः। ❀ तेन ❀ कर्त्रा। ❀ आक्षेपात् ❀ इत्यस्य स्वरूपनिरूपकत्वेत्यादिः।
❀ प्रत्यय इति ❀ बोध इत्यर्थः। ❀ तस्य ❀ वाच्यत्वस्येत्यर्थः।

❀ असामर्थ्यादिति ❀ विशिष्टार्थोपस्थित्यजनकत्वादित्यर्थः, निराकाङ्क्षत्वादिति यावत्। त्रात-भिन्नपदान्तर्गतधात्वर्थ-
क्रिययोः कर्तृकरणकारकसाकाङ्क्षत्वेन, हरिणेत्यादिपदोपस्थितकर्तृकरणयोश्च कारकत्वेन क्रियासाकाङ्क्षत्वेन परस्परसाकाङ्क्षत्वरूप-
सामर्थ्यं सुघटम्, व्यापारस्य धात्वर्थतावादिमते। अवन्मते तु 'पुरुषो राज्ञो भार्या देवदत्तस्य' इत्यादिवन्निराकाङ्क्षत्वात्
समासाऽनुपपत्तिरिति भावः। इदमुपलक्षणम्—कारकविभक्तेरपि।

नचाध्याहृतक्रियामादाय सामर्थ्यं वाच्यम्, 'दध्योदनः' 'गुडधानाः' इत्यादिवत्। अन्यथा तत्रापि "अन्नेन व्यञ्जनम्" (पा० सू० २।१।३४) "भक्ष्येण मिश्रीकरणम्" (पा० सू० २।१।३५) इति समासो न स्यादिति वाच्यम्, तत्र विध्यानर्थक्यादगत्या तथा स्वीकारेऽपि 'हरिकृतम्' इत्यादौ साक्षाद्धात्वर्थान्वयेनोपपद्यमानस्य, "कर्तृकरणे" इत्यस्याक्षेपेण परम्परासम्बन्धे प्रवृत्त्ययोगात्।

नचैकक्रियान्वयित्वमेव सामर्थ्यमिति शङ्क्यम्, 'असूर्य्यम्पश्याः'

प्रभा

अध्याहृतेति—भिन्नादिपदघटककृदर्थकर्मादिना 'हरिणा' इत्यत्र तृतीयार्थकर्त्रादिना वा स्वान्वयियो-ग्यत्वेन 'नखैः कृत्वा भिन्नः' 'इत्येवं क्रियाया अध्याहारेण तस्यां हर्यादीनामन्वये स्वान्वय्यन्वयित्वरूपप-रम्परासम्बन्धेन भिन्नादिपदार्थेऽप्यन्वयसत्त्वादिति भावः। दध्योदन इति—'अन्नेन व्यञ्जनम्' इत्यादि-सूत्रसामर्थ्यात् 'दध्नोपसिक्तो गुडेन मिश्रितः' इत्येवमुपसेकादिक्रियाद्वारासामर्थ्यमादाय यथा समा-सस्तद्वदेवेत्यर्थः। अन्यथा = आक्षिप्तक्रियान्वयेऽसामर्थ्याङ्गीकारे। धानर्थक्यादिति—सूत्रवैयर्थ्यादित्यर्थः। अगत्या = उपायान्तराभावेन। इत्यादाविति—आदिना 'हिरण्येन कृतम्' इत्यादेः संग्रहः। साक्षादिति—हर्या-दिनिष्ठकर्तृत्वादिनिरूपकत्वसम्बन्धेनेत्यर्थः। कृधातोः यत्नरूपव्यापारार्थकतया तन्निरूपितकर्तृत्वस्य हर्यादौ साक्षात्सत्त्वेन साक्षादन्वयेन चरितार्थस्य 'कर्तृकरणे' इति सूत्रस्येत्यर्थः। आक्षेपेण = कृत्वेत्याद्याक्षेपेण। परम्परासम्बन्धे = स्वान्वय्यन्वयित्वरूपे। स्वम् = कर्त्रादिस्तदन्वयी कृञर्थव्यापारस्तदन्वयी भिन्नादिपदार्थ इत्युक्तपरम्परासम्बन्धः सुलभः।

नचैकक्रियान्वयित्वमिति—एकस्यां क्रियायामन्वयित्वमेव मुख्यं सामर्थ्यम्। अत एव 'धवखदिरौ' इत्या-दिद्वन्द्वे परस्परं धवखदिरयोः सम्बन्धाभावेऽपि एकत्र छेदनादिक्रियायामन्वयमादाय सामर्थ्यम्। तथ 'नखैः कृत्वा भिन्नः' इत्यर्थे, 'नखैर्भिन्नः कृतः' इति वार्थे नखपदार्थभिन्नपदार्थयोः करणकर्मणोः कारकत्वेन कृञर्थव्यापारेऽन्वयेन सुलभमित्यत आह—असूर्यमिति—नञर्थनिषेधस्य सूर्यरूपकर्म-कारकस्यापि क्रियायामन्वयेन मुख्यसामर्थ्यस्यैव सत्त्वेनासमर्थसमासपरकभाष्यविरोधापत्तिरिति भावः।

दर्पणव्याख्या

ꕥ अध्याहृतक्रियामादायेति ꕥ करोत्यर्थव्यापारमादायेत्यर्थः। ꕥ सामर्थ्यमिति ꕥ तथाच 'नखैः कृत्वा भिन्न.' इति बोधाभ्युपगमेनाध्याहृतार्थमादाय सामर्थ्योपपत्तिरित्यर्थः। अध्याहृतक्रियामादाय सामर्थ्याऽभ्युपगमे दृष्टान्तमाह— ꕥ दध्योदन इत्यादि ꕥ। ꕥ विध्यानर्थक्यादिति ꕥ अन्नेन व्यञ्जनम्' इत्यादेरपि पदविधित्वेन समर्थपरिभाषाविषयतया स्वतोऽसमर्थदध्यादिपदानां समासविधानवैयर्थ्यापत्त्योपसेचनादिक्रियाध्याहाराऽभ्युपगमेऽपीत्यर्थः।

ꕥ हरिकृतमिति ꕥ कृधातोर्व्यापारार्थकत्वस्वीकारात्तन्निरूपितकर्तृत्वस्य हरौ साक्षात्सत्त्वादध्याहार विनैव शास्त्र चारितार्थ्ये 'हरित्रातः' इत्यादावध्याहृतक्रियाद्वारकसामर्थ्यमादाय तत्प्रवृत्तौ मानाभावादित्यर्थः। कृञो व्यापारार्थकत्वानभ्यु-पगमे त्वध्याहृतार्थस्यापि सामर्थ्यानुपपादकत्वाच्छास्त्रवैयर्थ्यमेव स्यादिति सूचनाय 'कृतम्' इत्युक्तम्। आदिना 'शरहृतम्' इत्या दिकरणतृतीयातत्पुरुषपरिग्रहः।

केचित्तु, कृदर्थस्यैव तृतीयार्थकर्त्राक्षिप्तभावनामादाय 'हरित्रातः' इत्यादौ, 'नखैर्भिन्न' इत्यादौ तु करणसामर्थ्येनाध्या-हृतां तामादाय सामर्थ्योपपत्तौ न तदनुपपत्तिर्धातोर्भावनावाचकत्वसाधिका। एवञ्च कृञः फलार्थकत्वेऽपि न समासानुप पत्तिरित्याहुः, तच्चिन्त्यम्।

ꕥ एकक्रियान्वयित्वमेवेति ꕥ 'धवखदिरौ' इत्यादौ तस्य दृष्टत्वेनान्यत्रापि साक्षात्परम्परया वा तस्यैव समास-प्रयोजकत्वमिति भाव। ꕥ असूर्य्यम्पश्या इति ꕥ नञर्थप्रसज्यप्रतिषेधस्य क्रियान्वयित्वस्य वक्ष्यमाणतया सूर्यस्यापि

इत्यादेरसमर्थसमासत्वानापत्तेः । इष्टापत्तौ कृतः सर्वो मृत्तिकयेत्यत्र 'कृतसर्वमृत्तिकः'
इत्यापत्तेः । नचाऽत्र समासविधायकाभावः, "सह सुपा" ( पा० सू० २ । १ । ४ ) इत्यस्य
सत्त्वात् । अन्यथा असमर्थसमासोऽपि विधायकाभावान्न स्यादिति ।

किञ्च, भावनायास्तिङर्थत्वे 'भावयति घटम्' इतिवद् 'भवति घटम्' इत्यपि स्यात्, धात्वर्थफला-
श्रयत्वरूपकर्मत्वसत्त्वात्। नचाख्यातार्थव्यापाराश्रयत्वेन कर्तृत्वात्तत्संज्ञया कर्मसंज्ञाया बाधान्न द्विती-
येति वाच्यम्, आख्यातार्थव्यापाराश्रयस्य कर्तृत्वे 'पाचयति देवदत्तो विष्णुमित्रेण' इत्यत्र विष्णुमित्र-
स्याकर्तृतापत्तौ तृतीयानापत्तेः, 'ग्रामं गमयति देवदत्तो विष्णुमित्रम्' इत्यत्र विष्णुमित्रस्याकर्तृतापत्तौ

प्रभा

इत्यादेरिति—'अश्राद्धभोजी ब्राह्मणः' 'अपुनर्गेयाः श्लोकाः' इत्यादेः संग्रहः । कृतः सर्व इति—कृत्यर्थक्रियायां
मृत्तिकापदार्थस्य करणतया, सर्वपदार्थस्य कर्मतया चान्वयेनोक्तसामर्थ्यस्य सत्त्वादिति भावः । नचात्रापीष्टा-
पत्तिः, अत्र समासाभावस्यैव सर्वसम्मतत्वात् । अत एव 'सर्वचर्मणः कृतः' इति सूत्रे 'सर्वचर्मणः' इति
निर्देशात् निपातनात् समास इत्युक्तम् । ननु कृत सर्व इत्यादावनभिधानान् समासाभावः । यद्वा 'सह सुपा'
इत्यस्यासार्वत्रिकत्वान्नोक्तापत्तिः, तेनैव सर्वत्र समाससिद्धौ 'द्वितीया श्रित' इत्यादिसूत्रवैयर्थ्येन तस्यासार्वत्रि-
कत्वज्ञापनात् । अन्यथा तत्तत्सूत्रैस्तत्पुरुषादिसंज्ञा एव विधीयेरन् । एवञ्च 'प्रथमानिर्दिष्टम्' इति सूत्रे समा-
सञ्ज्ञासंज्ञाविधायकशास्त्रघटकप्रथमान्तपदनिर्दिष्टमुपसर्जनमित्यर्थवर्णनेनोपसर्जनसंज्ञाऽपि नियंस्यते । अत एव
'सुपा' इत्यनेन समासस्यागतिकगतित्वं तत्र तत्रोक्तं सङ्गच्छते । 'देवत्रातो गलो ग्राहः' इति निर्देशात्
'कर्तृकरणे' इति न्यासेन 'सुपा' इत्यनुवृत्त्या च कृदन्तेनैव समासे सिद्धे कृद्ग्रहणसामर्थ्यात् क्रियाद्वारक-
सामर्थ्यमादाय कृदन्तेन समासो भवतीति ज्ञापनेन सिद्धिरित्यत आह—किञ्चेति । धात्वर्थफलेति—
उत्पत्तिरूपभूधात्वर्थफलाश्रयत्वरूपस्य कर्मत्वादित्यर्थः। नन्वियमापत्तिः 'फलव्यापारोभयमपि धात्वर्थः' इतिवादि-
मतेऽपि तुल्या, कर्तृसंज्ञया कर्मसंज्ञाया बाध इति समाधानमप्युभयसम्मतमित्यत आह—नचाख्यातेति—तथा
दृष्टान्ते घटं भावयतीत्यादौ प्रयोजकव्यापारो णिजर्थः, दार्ष्टान्तिके घटो भवतीत्यत्र तु घटरूपप्रयोज्यव्यापार
आख्यातार्थः । एवञ्च घटं भावयतीत्यत्र घटस्याख्यातार्थव्यापाराश्रयत्वाभावात् णिजर्थभावनां प्रति कर्मत्वम् ।
घटो भवतीत्यत्र घटस्याख्यातार्थव्यापाराश्रयत्वात् कर्तृसंज्ञया कर्मसंज्ञाया बाधात्कर्मत्वाभावः ।

अकर्तृतापत्ताविति—'गुरुः शिष्याभ्यां 'पाचयति' इति सर्वसम्मतत्वात्स्यानुरोधेनाख्यातार्थव्यापारान्वयि-
न्येव तदर्थसंख्यान्वयनियमादाख्यातेन गुरोरुक्तत्वात् प्रथमा, तदनुरोधेन 'पाचयति' इत्यत्रैकवचनोपपत्तिश्च ।
प्रयोज्यस्याख्यातार्थव्यापाराश्रयत्वे पाचयतीत्येकवचनानुपपत्तिः, शिष्यशब्दात्प्रथमापत्तेश्च प्रयोज्यस्याख्यातार्थ-
व्यापाराश्रयत्वाभावात् प्रयोज्यविष्णुमित्रस्याकर्तृत्वापत्तिरिति भावः । नच विष्णुमित्रस्य करणत्वविवक्षया
करणतृतीयया निर्वाहः, कर्तुः प्रयोजकव्यापाराश्रयस्यैव हेतुसंज्ञाविधानेन तस्य करणत्वे णिजनुत्पत्त्यापत्तेः ।

दर्पणव्याख्या

कर्मकारकतया तदन्वयित्वेन भवदुक्तसामर्थ्यस्य तत्र सत्त्वादिति भावः । कृतसर्वमृत्तिकः इति मृत्तिकायाः करण-
तया, सर्वपदार्थस्य कर्मतया कृधात्वर्थेऽन्वयित्वादिति भावः । योगविभागस्यानिष्टानापादकत्वादाह— किञ्चेति ।
अकर्तृतापत्ताविति आख्यातार्थव्यापारानाश्रयत्वादिति दोषः । अस्मन्मते तु णिजन्तकृत्यर्थव्यापाराश्रयत्वेन
कर्तृत्वात् तदनुपपत्तिरिति भावः । ननु विष्णुमित्रस्याऽकर्तृत्वेऽपि करणत्वविवक्षयैव तत्र तृतीया भुक्तेत्यत आह— ग्रामं
गमयतीति 'कर्तुरीप्सिततमम्' इत्यनेन प्रकृतिकर्तृनिष्ठव्यापारजन्यफलसम्बन्धिन एव कर्मसंज्ञाविधानेन तन्मते विष्णु-

ग्रामस्य गमिकर्मत्वानापत्तेश्च । तथाच ग्रामाय गमयति देवदत्तो विष्णुमित्रम्' इत्यपि न स्यात्, "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" (पा० सू० २।३।१२) इति गत्यर्थकर्मण्येव चतुर्थीविधानात् । एतेन णिजन्ते आख्यातार्थं उभयम्, तदाश्रयत्वाद्देवदत्त-यज्ञदत्तयोः कर्तृतेत्यपास्तम् ।

प्रभा

ननु 'फलव्यापारौ धात्वर्थः' इति मतेऽपि प्रयोज्यविष्णुमित्रस्य कर्मतया 'कर्तुरीप्सिततमम्' इत्यनेन ग्रामस्य कर्मत्वाप्राप्तौ तद्वारणाय तत्र सूत्रे कर्तृपदं स्वतन्त्रपरं वाच्यम्, स्वातन्त्र्यञ्च—'धात्वर्थफलानुकूलव्यापाराश्रयत्वरूपम्'इति मम मतेऽपि तस्य प्रयोज्ये सत्त्वाद्दोषाभाव इति चेन्न, फलानुकूलव्यापाराश्रयत्वस्य कारकमात्रेऽतिव्याप्तत्वादाख्यातार्थव्यापाराश्रयत्वस्यैवैतन्मते स्वातन्त्र्यपदार्थत्वात्तस्य च प्रयोज्येऽभावादुक्तदोषतादवस्थ्यात् । ननु प्रयोज्यस्य स्वतन्त्रार्थककर्तृपदेनाग्रहणेऽपि प्रयोजके उक्तस्वातन्त्र्यसत्त्वेन तन्निष्ठव्यापारजन्यं फलं प्रयोज्यव्यापारस्तादृशव्यापारजन्यं फलं संयोगादिरिति ग्रामवृत्तिसंयोगे कर्तृवृत्तिव्यापारजन्यत्वस्याभावेऽपि साक्षादुत्पाद्यं परम्परया चोत्पाद्यं यत्तदुभयसाधारणस्य प्रयोज्यत्वस्य सत्त्वेन प्रयोजककर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वमादाय कर्मत्वाद् द्वितीयासिद्धिरित्यत आह—गमिकर्मत्वेति—णिच्प्रकृतिगमिनिरूपितकर्मत्वानापत्तेरित्यर्थः । तथाचेति—णिच्प्रकृतिगमेः कर्मत्वाभावे चेत्यर्थः । गत्यर्थकर्मण्येवेति—फलमात्रस्य धात्वर्थतावादिनये गत्यर्थकर्मत्वञ्च—संयोगरूपगत्यर्थकधातुविहितलस्थानिकाख्यातार्थव्यापाराश्रयकर्तृनिष्ठाख्यातार्थव्यापारजन्यफलाश्रयत्वरूपम्, तच्च ग्रामे बाधितम्, प्रयोज्यव्यापारजन्यसंयोगरूपफलाश्रयत्वस्यैव ग्रामे सत्त्वात्, प्रयोज्यस्य च गत्यर्थकर्तृत्वाभावादिति भावः ।

एतेन=उक्तरीत्या 'ग्रामाय' इति प्रयोगनिर्वाहेण । उभयम्—प्रयोज्यव्यापारः, प्रयोजकव्यापारश्चेत्यर्थः । अपास्तमिति—अयमभावः—आख्यातस्य व्यापारद्वयाभिधायकत्वेन विष्णुमित्रस्य कर्तृत्वोपपादनेऽपि तत्कर्तृत्वस्य तिङाऽभिधानात्तृतीयानुपपत्तेरुक्तार्थकसूत्राप्राप्त्या चतुर्थ्यनापत्तेश्चेति भावः । ननु गत्यर्थकर्मपदेन गम्यर्थसंयोगाश्रयत्वे सति तदर्थव्यापारानाश्रयो विवक्षितः, लक्ष्यानुसारात् । किञ्च 'गत्यर्थकर्मणि' इति सूत्रं भाष्ये प्रत्याख्यातम् । तथाहि—"किमर्थं पुनरिदमुच्यते' चतुर्थी यथा स्यात् ।······चतुर्थ्यपि सिद्धा, कथम् ? 'सम्प्रदान इत्येव, न सिध्यति, 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इत्युच्यते, क्रियया चासौ ग्राममभिप्रैति, कया क्रियया=गमिक्रियया, क्रियाग्रहणमपि तत्र (सम्प्रदाने) चोद्यते" इति । एवञ्च 'पत्ये

दर्पणव्याख्या

मित्रस्याकर्तृतया तद्व्यापारजन्यफलाश्रयस्यापि ग्रामस्याकर्मत्वेन तद्वाचकपदोत्तरं द्वितीयानापत्तिः, विष्णुमित्रस्य करणत्वे णिचोऽसम्भवश्च । धात्वर्थव्यापारजन्यफलाश्रयस्यैव कर्मत्वाङ्गीकारे तु णिजन्तकर्मतैव स्यान्न गमिकर्मतेति भावः । इष्टापत्तावाह—

॥ तथाचेति ॥ ।

॥ एतेनेति ॥ आख्यातार्थव्यापाराश्रयस्य कर्तृत्वनिरासेनेत्यर्थः । ॥ णिजन्ते ॥ पाचयतीत्यादौ । ॥ उभयमिति ॥ प्रयोज्य—प्रयोजकव्यापारद्वयमित्यर्थः । ॥ तदाश्रयत्वादिति ॥ आख्यातार्थव्यापारद्वयाश्रयत्वादित्यर्थः ।

॥ अपास्तमिति ॥ अयं भाव—आख्यातस्य व्यापारद्वयाऽभिधायकत्वेन विष्णुमित्रस्य कर्तृत्वोपपादनेऽपि तत्कर्तृत्वस्याख्यातानभिधानादेवदत्तपदोत्तरमिव विष्णुमित्रपदोत्तरं तृतीयादौर्लभ्यम्, एवमाख्यातार्थव्यापाराश्रयत्वस्योभयोरप्यविशिष्टत्वात् प्रधानव्यवहारोऽप्येतदापत्त्या "हेतुमति च" (पा० सू० ३।१।२६) इत्यनुशासनविरोधश्चेति ।

अव्यये = 'वा' इत्यादावतिप्रसङ्गः, तादृशस्यैव गणे पाठेन निर्णयासम्भवात् । तथाच विकल्पार्थकः 'वाति' इति प्रयोगः स्यादिति भावः । नच गतिगन्धनाद्यर्थनिर्देशो नियामकः, तस्य "अर्थानादेशनात्"

प्रभा

त्वुभयसम्बन्धेन । विधेयतायामानुपूर्वीविशिष्टत्वञ्च—स्वावच्छिन्नत्वम्, स्वावच्छिन्नपदप्रयोज्योद्देश्यतानिरूपितत्वमित्येतदन्यतरसम्बन्धेन । स्वविशिष्टमित्यत्र स्वपदेन यत्र सूत्रे परिभाषा प्रवर्तनीया तत्सूत्रं ग्राह्यम् । यथा 'गतिस्थाघुपा' इति । आद्यसम्बन्धनिवेशेन 'गतिकारकपूर्वपदस्य यण्विष्यते' इति वार्तिके परिभाषाया अप्रवृत्त्या 'आध्यै' 'प्रध्यै' इति भाष्योक्तबहुव्रीहावपि यणसिद्धिः, गतित्वावच्छिन्नविधेयताश्रयत्वस्य समासेऽसम्भवाद्विशेषेण बहुव्रीहितत्पुरुषयोरुभयोर्ग्रहणात् । द्वितीयसम्बन्धदानात् 'विभाषा दिक्समासे' इत्यत्र स्वपदकदिक्पदवृत्त्यानुपूर्वीमत्पदघटित 'दिङ्नामानि' इति शास्त्रविहितबहुव्रीहेरेव ग्रहणम् । अत्रोद्देश्यतावच्छेदकसमर्पकशास्त्रेति विशेषणेन 'तृतीयासमासे' इति सूत्रीयसर्वादित्वज्ञानायोपयुज्यमानपूर्वस्वादिरूपानुपूर्वीमत्पूर्वपदघटित 'पूर्वसदृश' इति विहिततृतीयासमासस्यैव ग्रहणम् ।

यत्तु, 'भूवादयः' इति सूत्रे 'लक्षणप्रतिपदोक्तयोः' इति परिभाषा न प्रवर्तते । अन्यथा

'नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चेः षाट्टवर्गस्तवर्गजः' ॥

इत्याप्तोक्तेरनुस्वारादिघटितानां धातुसंज्ञा न स्याल्लाक्षणिकत्वादिति तन्न, 'भूवादयः' इति सूत्रदृष्ट्याऽनुस्वारादीनामसिद्धत्वेन तेषामपि प्रतिपदोक्तानामेवोपलब्धेः । 'आतोऽनापः' इति न्यासे दोषाभावेनाह—अव्यये चेति—आदावित्यादिना 'मा' 'नु' इत्याद्यव्ययानां संग्रहः । ननु 'वा' इत्यस्य धातुत्वेऽपि न क्षतिः, 'वाति' इति प्रयोगस्येष्टत्वादिति चेन्न, गत्यर्थस्य वातीत्यस्येष्टत्वेऽपि विकल्पार्थे तस्यानिष्टत्वात्, तदाह—विकल्पार्थक इति—तथाच विकल्पार्थके वातीत्यस्यानिष्टत्वमिति भावः ।

नियामक इति—एवञ्च गतिगन्धनयोर्वाशब्दो धातुः । एवं मानेऽर्थे माङ्शब्दो धातुरित्येवं रूपेण नियामकत्वे विकल्पेऽर्थे वाशब्दस्य धातुत्वाभाव इति भावः । तस्य = अर्थनिर्देशस्य । अनादेशनात् = अक-

दर्पणव्याख्या

इति भाष्यपर्य्यालोचनया आधुनिकत्वलाभात् ॥ १० ॥

नन्वस्तु 'क्रियावाचकत्वे सति गणपठितत्वं धातुत्वम्', क्रिया च धात्वर्थ एव, न व्यापार इत्याशङ्कां समाधत्ते—

धात्वर्थत्वं क्रियात्वञ्चेद्धातुत्वं च क्रियार्थता।
अन्योऽन्यसंश्रयः स्पष्टस्तस्मादस्तु यथाऽऽकरम् ॥ ११ ॥

यदि क्रियात्वं धात्वर्थत्वमेव तर्हि धातुत्वग्रहे तदर्थत्वरूपक्रियात्वग्रहः, क्रियात्वग्रहे च तदवच्छिन्नवाचकत्वघटितधातुत्वग्रह इत्यन्योन्याश्रय इति ग्रहपदं पूरयित्वा व्याख्येयम्। यथाश्रुते चान्योन्याश्रयस्योत्पत्तौ ज्ञप्तौ वा प्रतिबन्धकत्वाभ्युपगमेनासङ्गत्यापत्तेः।

प्रभा

धनात्। गणपाठकृता पाणिनिना इति शेषः। गणपाठे प्रायो धातुमात्रस्यैव पाठो नत्वर्थस्येति भावः। अत एव 'भूवादयः' इति सूत्रे भाष्ये 'परिमाणग्रहणं कर्तव्यम्, इयानवधिर्धातुसंज्ञो भवतीति वक्तव्यम्। कुतो ह्येतद्भूशब्दो धातुसंज्ञो भवति, न पुनर्भ्वेधशब्द इति'। इति भाष्य-वार्तिकयोः सङ्गतिः। यदि 'भू सत्तायाम्' 'एध वृद्धौ' इति पाठः स्यात्तदा गणे भ्वेधशब्दाभावात् तदसङ्गतिः स्पष्टैव। नच 'चुद्द' इति सूत्रभाष्ये 'उबुन्दिर् निशामने' 'स्कन्दिर् गतिशोषणयोः' इति अर्थनिर्देशासङ्गतिः, क्वचिदर्थनिर्देशेऽपि सर्वत्र तथात्वा-भावात्। अत एव 'नमो वरिवस' इति सूत्रे भाष्ये उक्तम्—'एवमर्थं खल्वप्याचार्येश्चित्रयति क्वचिदर्था-नादिशति क्वचिन्नेति'। अत एव 'कुर्द खुर्द गुर्द क्रीडायामेव' इत्येवकारग्रहणस्य धातूनामनेकार्थत्वेऽभियुक्तोक्ता ज्ञापकता संगच्छते। आधुनिकत्वेति—आधुनिको हि अर्थनिर्देशो न स्वार्षे इति भावः। सत्यन्तोपादाने [redacted] न दोषः, धात्वर्थस्य कालानन्वयित्वेनाक्रियात्वात् ॥ १० ॥

धात्वर्थ एव = फलमेव। धातुत्वग्रहे = धातुत्वज्ञाने। तदर्थेति—धात्वर्थेत्यर्थः। क्रियात्वग्रहः = क्रिया-त्वज्ञानम्। तदवच्छिन्नेति—क्रियात्वावच्छिन्नक्रियेत्यर्थः। अन्योऽन्याश्रय इति—सामान्यलक्षणन्तु परस्परा-पेक्षितत्वमेव। एष च दोषः ज्ञाने, उत्पत्तौ, स्थितौ च। यथा—कार्यत्वज्ञानकारणत्वज्ञानयोः, घटोत्पत्तिबीजो-त्पत्त्योः, जलस्थितिपृथिवीस्थित्योः। उत्पत्तौ ज्ञप्तौ चेति—उत्पत्तावस्य दूषकताबीजन्तु तर्क एव। तथाहि—घटो

दर्पणव्याख्या

❀ आधुनिकत्वलाभादिति ❀ भीमसेनादिप्रणीतत्वावगतेरित्यर्थः। तथाच भूवादिसूत्रे 'परिमाणग्रहणं कर्त्तव्यम्, कुतो ह्येतत्, भूशब्दो धातुसंज्ञको भवति, न पुनर्भ्वेधशब्द इति,' यद्यप्यर्थनिर्देशस्य सूत्रकृत्प्रणीतत्वमपि। तथाच "चुद्द" ( पा० सू० १।३।७ ) इति सूत्रे-यदयमिरितः काँश्चिन्नुमनुषक्तान् पठति, उबुन्दिर् निशामने, स्कन्दिर्गतिशोषणयोः, इति। तेन नेरित्तामिदङ्विधिरिति भाष्ये उक्तम्। तथापि भाष्यद्वयप्रामाण्यात्सर्वधात्वर्थनिर्देशस्यापाणिनीयत्वेन न तन्निर्देशस्य नियामकतेति भावः। चुलुम्पादीनां स्तम्भ्वादीनां च 'कास्यनेकाच आम्' इतिवचनादुदित्करणाच्च धातुतेति दिक् ॥ १० ॥

❀ धात्वर्थत्वमेवेति ❀ फलमेवेत्यर्थः। तथाच नैतत्सूत्रानुपपत्तिर्धातोर्व्यापारार्थत्वसाधिकेति भावः। ❀ उत्पत्ता-विति ❀ यथाबीजाङ्कुराद्युत्पत्तौ अनादित्वेन तत्परिहार इत्यन्यत्। यथा वा चैत्रपुत्रश्चैत्र इत्यादौ, तत्राप्येकोत्पत्तिं विनाऽपरानुपपत्तेः। ❀ ज्ञप्ताविति ❀। हलन्त्यमित्यादौ प्रसिद्धः। ❀ असङ्गत्यापत्तेरिति ❀। यथा पृथिवी-जलयोरा-धाराधेयभाव इत्यादावुभयोः परस्पराधाराधेयभावेन स्थितेः सर्वैरेवाभ्युपगमात्। प्रकृते वस्तुतो धात्वर्थस्य क्रियात्वे क्रिया-त्वस्य धात्वर्थत्वे बाधकाभावेन तत्र दूषणदानस्यानुचितत्वापत्तेरित्यर्थः।

नच 'अन्यतमत्वं धातुत्वम्', "भूवादयः" इत्यस्य वैयर्थ्यापत्तेरित्यभिप्रेत्याह— अस्त्विति । व्यापारसन्तानः क्रिया, तद्वाचकत्वे सति गणपठितत्वमित्यर्थः । ननु सत्तादीन् फलांशानन्यतमत्वेनादाय तद्वाचकत्वे सति गणपठितत्वं लक्षणमुच्यताम् । धात्वर्थत्वात् तेषां क्रियाशब्देन व्यवहारो भाष्यादौ कुतोऽप्युपपत्स्यत इति चेन्न, अन्यतममध्ये विकल्पस्यापि 'विकल्पयति' इति प्रयोगानुसारात् प्रवेशावश्यकत्वेन तदर्थके 'वा' इत्यव्यये उक्तरीत्या गणपठितत्वसत्त्वेनाऽतिव्याप्तेरिति ॥ ११ ॥

प्रभा

यदि घटजन्यः स्यात्तदा घटभिन्नः स्यात्, कारणस्य कार्याव्यवहितप्राक्क्षणवृत्तित्वनियमादिति । एवं ज्ञप्त्यादावपि बोध्यम् । वस्तुतस्तु धात्वर्थस्य क्रियात्वे, क्रियात्वस्य च धात्वर्थतायामविवादात्तत्र दूषणोद्भावनमनुचितमिति ग्रहपदं पूरयित्वेत्युक्तमिति पर्यवसितोऽर्थः । यत्रोत्पत्तौ अनादित्वं तत्रान्योन्याश्रयो न क्षतिकरः, बीजाङ्कुरवत् । एवं स्थितावपि बोध्यम् । यावन्तो धातुपदव्यवहार्यास्तान्निर्दिश्यैतदन्यतमत्वं धातुत्वम् 'धात्वर्थत्वं क्रियात्वञ्चेत्' इति कारिकायां ग्राह्यमतो नान्योन्याश्रय इत्याह—अन्यतमत्वमिति—भ्वादिभिन्नभिन्नत्वरूपमित्यर्थः । भ्वादिभिन्ना ये तद्भिन्नत्वं भ्वादिष्वेवेति तत्त्वं सुवचम् । यदि [illegible] उक्तान्यतमत्वलक्षणे जगतः प्रवेशाद् गौरवं तदा भ्वादिप्रतियोगिकयावद्भेदकूटाभाववत्त्वमेवान्यतमत्वं ग्राह्यम् । लघुभूतं तदेवादाय धातूद्देश्यककार्यसिद्धौ संज्ञाविधायकशास्त्रस्य निष्प्रयोजनत्वापत्तिरित्याह—वैयर्थ्यापत्तेरिति ।

केचित्तु मीमांसको धात्वर्थत्वं क्रियात्वं यदि ब्रूयास्तदाऽन्योन्याश्रयो दोषस्तव मते इति वैयाकरणं प्रति दोषमुक्त्वा 'तस्मादाख्यातार्थः क्रिया' इत्याह—वैयाकरणः समाधत्ते—अस्त्विति—'व्यापारसन्तानः क्रिया' तद्वाचको धातुरिति नान्योन्याश्रय इत्यर्थ इत्याहुः । लक्षणमिति—सूत्रजन्यवाक्यार्थरूपमित्यर्थः । नन्वेवं 'कथं पुनर्ज्ञायते क्रियावचनाः पच्यादयो यदेतेषां करोतिना सामानाधिकरण्यम्' इति भाष्यविरोधः, फलांशस्य करोतिना सामानाधिकरण्याभावादत आह—धात्वर्थत्वादिति—तथाच गौणस्तत्र क्रियात्वव्यवहार इत्याशयः । विकल्पयतीति—'कर्मवत्कर्मणा तुल्य' इति सूत्रे 'क्रिया' शब्देन फलस्यैव ग्रहणात् । तेषाम्=फलानाम् । विकल्पयतीति—कृपधातोरेव 'विकल्पयति' इति प्रयोगानुसारेण विकल्परूपफलार्थकत्वमावश्यकम् । तथाच तादृशफलवाचक 'वा' इत्यव्ययस्य धातुत्वं दुर्वारमिति भावः । अस्यैव=क्रियावाचकत्वे सति गणपठितत्वस्यैव ॥ ११ ॥

दर्पणव्याख्या

ॐ अन्यतमत्वमिति ॐ । भ्वादिभिन्नभिन्नत्वमित्यर्थः ॥

ॐ वैयर्थ्यापत्तेरिति ॐ तावतैवातिप्रसङ्गभङ्गे गुरुधर्मावच्छिन्नशक्तिप्रतिपादकस्य तस्यानतिप्रयोजनकत्वापत्तेरित्यर्थः । क्रियात्वमपि जातिरेव वाचकतावच्छेदकत्वेन शास्त्रादृष्टत्वाभावादिति भावः । केचित्तु भ्वादिषु धातुरित्यनुगतव्यवहारात् [illegible] च्छेदकतयाप्यसति बाधके जातिसिद्धेर्निष्प्रत्यूहत्वात् । भूवादिसूत्रं त्वनभिज्ञप्रतीतिनिरासाय, साधकजातिपरिचायकप्रदर्शकमित्याहुः । [illegible] फलस्य क्रियात्वोपपत्तिः ।

मन्यन्मन्मते पूर्वापरीभूतावयवसमुदायरूपक्रियाया धात्वर्थत्वेन [illegible] आह ॐ धात्वर्थत्वादिति ॐ तथाच तत्र कल्प्यव्यवहार [illegible] तु क्रियाया धात्वर्थत्वानुपगमेन कथं तत्र तद्व्यवहारो [illegible] । ॐ भाष्यादौ कुत इति ॐ "कर्मवत्कर्मणा" इव क्रियाव्यवहारोऽपि धात्वर्थत्वप्रयोजकत्वाभ्युपगमेन तदुपपत्तेरिति भावः । इति सूत्रे 'भूवादि' सूत्रे च भाष्यादावित्यर्थः । आदिपदात् वृत्त्यादिपरिग्रहः ॥ ११ ॥

नन्वस्यैव धातुत्वे 'अस्ति' इत्यादौ क्रियाप्रतीत्यभावादस्त्यादीनां तद्वाचकानामधातुत्वप्रसङ्ग इत्यत आह—

अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना ।
अन्यत्राशेषभावात्तु सा तथा न प्रकाशते ॥ १२ ॥

अस्त्यादौ = 'अस् भुवि' इत्यादौ, धर्म्यंशे=धर्मिभागे, भाव्ये=भाव्यत्वेन विवक्षिते, अस्त्येव = प्रतीयत एव । अयमर्थः—'स ततो गतो न वा' इति प्रश्ने, महता यत्नेन 'अस्ति' इति प्रयोगे सत्तारूपफलानुकूला भावना प्रतीयत एव ।

प्रभा

क्रियेति—तत्तत्कालसम्बन्धरूपसत्तायाः, जातिरूपसत्ताया वा एवं प्रतीतेः क्रियावाचकत्वाभाव इति भावः । धर्मिभागे—धर्मः=फलं तदस्यास्तीति धर्मी=कर्त्ता, अकर्मकधातुस्थले फलाश्रयस्य कर्तृत्वात् । तथाच धर्मिभागे इत्यस्य धर्मिणि ( कर्तरि ) प्रकारतया भासमाने फले इत्यर्थः । धर्मिणो धर्मघटिततया फले धर्म्यंशव्यवहारः । फलस्य भाव्यतायां विवादादाह—भाव्यत्वेन विवक्षित इति । अयमर्थः=अयमभिप्रायः । गतो न वेति प्रश्न इति—अनेन भाव्यजिज्ञासा ध्वनिता । सा च भाव्यस्य बोधेनैव निवर्तेत । यद्युत्तरवाक्याद् भाव्य ( फल ) बोधो न स्यात्तदा—

'जिज्ञासितपदार्थस्य संसर्गो येन गम्यते ।
तदुत्तरमिति प्रोक्तमन्यदाभासशब्दितम् ॥

इत्यभियुक्तोक्तिविरोधादुत्तरवाक्यत्वानुपपत्तिः । प्रतीयत इति—उत्पत्त्यनुकूलव्यापार आत्म ( स्वरूप ) धारणानुकूलव्यापारश्चास्त्यादीनामित्यर्थः । तत्तद्धर्मिणि उत्पाद्यत्वेन विवक्षिते सति 'रोहितो लोहितादासीत्' इत्यत्र उत्पत्त्यनुकूलो व्यापारः प्रतीयत एव ।

दर्पणव्याख्या

❀ अस्त्यैवेति ❀ क्रियावाचकस्यैवेत्यर्थः । एवकारेण फलमात्रवाचकत्वव्यवच्छेदः । एतद्वाचकत्वे हेतुः ❀ क्रियाप्रतीत्यभावादिति ❀ तद्वाचकानाम् = व्यापारावाचकानामित्यर्थः । ❀ अधातुत्वप्रसङ्ग इति ❀ । आपत्तेरिष्टत्वं तु न, ततो लकाराद्युत्पत्तिप्रसङ्गादिति भावः ॥

❀ धर्म्यंशे ❀ फलरूपे इत्यर्थः । अंशपदोपादानात् धर्मिणो धर्मघटितमूर्तिकत्वादकर्मकस्थले कर्तृवृत्तित्वाच्च फलस्यापि सदंशत्वात् तस्य भाव्यतायामेव विवादादाह ❀ भाव्यत्वेनेति ❀ भावनानिष्पाद्यत्वेनेत्यर्थः । फलसाध्यव्यापारस्य जिज्ञासितत्वे इति यावत् । अत एव वक्ष्यति 'आसन्नविनाशम्' इति । विवक्षास्थलमेव प्रश्नोत्तरभावेन दर्शयति ❀ स ततो गतो न वेति ❀ गत्यर्थाऽकर्मकेति कर्त्तरि क्तः । प्रश्न इत्यनेन भाव्यत्वस्य जिज्ञास्यत्वं ध्वन्यते । तथाच गतो न वा किमिति प्रश्नाऽऽकारः ।

❀ प्रयोग इति ❀ प्रश्ननिवर्त्तके वाक्य इत्यर्थः । ❀ प्रतीयत एव ❀ इत्यस्यास्धातुनेति शेषः । ननु स ततो गतो न वेति वाक्याद् गेहावधिकविभागानुकूलव्यापाराश्रयत्वतदभावान्यतरस्य जिज्ञास्यत्वमवगम्यते । महता यत्नेनाऽस्तीति वाक्यादस्तेर्व्यापारार्थकत्वाभ्युपगमेऽपि चैत्रादिकर्तृकसत्ताऽनुकूलव्यापार एवेति कथमेतयोः प्रश्नोत्तरत्वम् ? तथाहि—यद्धर्मावच्छिन्ने जिज्ञासितयद्धर्माऽवच्छिन्नस्य सम्बन्धो यत्प्रश्नवाक्याद् प्रतीयते तद्धर्मावच्छिन्ने जिज्ञासिततद्धर्मावच्छिन्नसम्बन्धबोधकवाक्यस्योत्तरता । यदाहुः—

उत्पत्त्यादिबोधने तु सुतराम् ।

रोहितो लोहितादासीद् धुन्धुस्तस्य सुतोऽभवत् । ( रामायणम् ) ।

इत्यादिदर्शनात् ।

किञ्च, अत्र भावनाविरहे लडादिव्यवस्था न स्यात्, तस्या एव वर्तमानत्वादिविवक्षायां तद्विधानात् ।

"क्रियाभेदाय कालस्तु सङ्ख्या सर्वस्य भेदिका"

इति वाक्यपदीयादिति ।

नन्वेवम् अस्ति इत्यत्र स्पष्टं कुतो न बुद्ध्यत इत्यत आह—अन्यत्रेति ।

प्रभा

उत्पत्त्यादीति—उत्पत्त्याद्यर्थकत्वे मानन्तु 'धान्यानां भवने क्षेत्रे' 'तत्र भवः' इति निर्देश एव । आसीदिति—अभवदित्यर्थः । वाल्मीकीयरामायणे वंशवर्णनमिदम् । तस्या एव =भावनाया एव । एवेन फलांशव्यवच्छेदः ।

क्रियाभेदायेति—स्व (काल) विशिष्टक्रियाया इतरक्रियातो व्यावृत्तये इत्यर्थः । तदुक्तं भाष्ये—'नान्तरेण क्रियां भूतभविष्यद्वर्तमानाः काला व्यज्यन्ते । अस्त्यादिभिरपि भूतभविष्यद्वर्तमानाः काला व्यज्यन्ते' इति । अस्तिभवतिविद्यतीनामात्मभरणमित्यर्थः । आत्माऽत्र सत्ता । सत्ता च षड्भावविकाराः—जन्म, सत्ता, वृद्धिः, परिणामः, अपचयः, विनाशः । तत्र आविनाशरूपपञ्चविकारानुगतं सदिति प्रत्ययवेद्यं यद्रूपं तत् । निरुक्तेऽपि—'अस्तीत्युत्पन्नस्य सत्त्वावधारणात्' इति । अस्तीति चोत्पन्नस्य सत्त्वस्य=सत्तायत्तोऽवधारणमाचष्टे इति तट्टीकाकृतः । सर्वस्य—क्रियायास्तद्भिन्नस्य च । एवम्=धातुमात्रस्य क्रियावाचकत्वे । अन्यत्र=सकर्मकत्वस्थलभिन्नस्थलेऽकर्मके इत्यर्थः ।

दर्पणव्याख्या

भिन्नाभिन्नपदार्थस्य संसर्गो येन गम्यते ।

तदुत्तममिति प्रोक्तम् [illegible] ॥ इति ।

यथा [illegible] इति [illegible] 'दण्डाद् घटः' इति [illegible] इति, [illegible]

[illegible]

[illegible]

अशेषभावात् = भावनायाः फलसमानाधिकरणत्वात् । तथाच भावनायाः फलसामानाधिकरण्यं तत्स्पष्टत्वे दोष इति भावः ।

नन्वेवम् 'किं करोति'इति प्रश्ने, 'पचति' इत्युत्तरस्येव 'अस्ति' इत्युत्तरमपि स्यादिति चेत्, इष्टापत्तेः, आसन्नविनाशं कञ्चिदुद्दिश्य 'किं करोति' इति प्रश्ने, पचतीत्युत्तरस्येव, 'अस्ति' इत्युत्तरस्य सर्वसम्मतत्वात् । इतरत्र तु सुस्थतया निश्चिते 'किं करोति' इति प्रश्नः,- पाकादिविशेषगोचर एवेत्यवधारणात् 'अस्ति' इति नोत्तरमिति ॥ १२ ॥

प्रभा

अशेषभावादिति—भावशब्दो भवत्यस्मिन्निति व्युत्पत्त्याऽधिकरणघञन्तोऽधिकरणवाची, शेषः = फलव्याप्त्यतिरिक्तः =फलानधिकरणम् । तथाच शेषः=फलानधिकरणम्, भावः=अधिकरणं यस्याः सा फलासमानाधिकरणा सा न भवतीत्यशेषभावा=फलसमानाधिकरणा । अशेषभावशब्दोऽत्र धर्मपरः, तथाच अशेषभावात्=फलसामानाधिकरण्यादित्यर्थः ।

यद्वा अशेषेण=कात्स्न्र्येन भावः=भवनं तस्मादित्यर्थः । भावनायाः फलेन सहान्यूनानतिरिक्तवृत्तित्वादिति यावत् । ननु सकर्मकगम्यादिस्थलेऽपि फलसामानाधिकरण्यसत्त्वात् भावनाप्रतीतिर्न स्यादिति चेन्न, भावनानधिकरणावृत्तिफलसामानाधिकरण्यं भावनानिष्ठं स्वरूपतो भावनाप्रतिबन्धकम्, न तु तज्ज्ञानापेक्षया । तथाच गम्यादिस्थले संयोगस्य भावनानधिकरणग्रामादिवृत्तित्वान्न तत्सामानाधिकरण्यं भावनाप्रतीति स्थगयति । एवञ्च आत्मधारणानुकूलव्यापारार्थके घटोऽस्तीत्यादौ फलव्यापारयोः सामानाधिकरण्याद् भावना स्पष्टं न प्रतीयत इति भावः ।

ननु 'घटोऽस्ति' इत्यादौ साध्यमानावस्था प्रतीयते, तदानीञ्चासिद्धस्य घटस्य न कर्तृत्वसम्भवः । किञ्च निष्पन्ने घटे न साध्यमानत्वसम्भव इति चेन्न, बौद्धघटस्य बाह्यघटेनाभेदमध्यस्योभयोपपादनसम्भवात् । तत्स्पष्टत्वे=भावनाप्रतीतिस्पष्टत्वे । स्पष्टत्वञ्च प्रतीतौ फलप्रतीत्यनभिभूतत्वम् । निरूपितत्वं सप्तम्यर्थस्तेनैव सम्बन्धेन दोषपदार्थैकदेशप्रतिबन्धकतायां स्पष्टत्वस्यान्वयः, तथाच भावनाप्रतीतिस्पष्टत्वनिरूपितप्रतिबन्धकतावदुक्तफलसामानाधिकरण्यमित्यर्थः । भावनाप्रतीतिस्पष्टताप्रतिबन्धकफलसामानाधिकरण्यमिति यावत् ।

नचात्माऽस्ति, दिगस्ति, इत्यादौ दिगात्मकर्तृकसत्ताया नित्यत्वात् कथं भावनाप्रतीतिरिति वाच्यम्, स्वरूपधारणानुकूलव्यापारस्यैव तत्रास्त्यर्थत्वात् । तथाच 'पच्यते तण्डुलः स्वयमेव' इत्यादिस्थले आश्रयतारूपव्यापारस्य साध्यत्वेन यथा भानं तथाऽऽत्माऽस्तीत्यादावपि तस्या एव साध्यत्वेन भानम्बोध्यम् । आत्मादिकर्तृकं स्वरूपधारणमिति बोधः । एवमिति—अकर्मकाणामपि व्यापारार्थकत्वे इत्यर्थः ॥ १२ ॥

दर्पणव्याख्या

मूले—❀ अशेषभावादिति ❀ शेषः = फलव्याप्त्यतिरिक्तः, भवत्यस्मिन्निति भावः=अधिकरणं यस्येति बहुव्रीहिणा शेषभावशब्दः फलव्यधिकरणार्थकः भावप्रधाननिर्देशात्तस्मान्नञ्समस्तात् पञ्चम्येकवचने फलव्यधिकरणत्वाभावादित्यर्थावगतिः ॥ ११ ॥

नन्वसत्त्वभूतक्रियाया धात्वर्थत्वे 'पाकः' इत्यत्रापि तत्प्रत्ययापत्तिः । नचेष्टापत्तिः, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति भाष्यविरोधादित्यत आह—

आख्यातशब्दे भागाभ्यां साध्यसाधनरूपता ।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥ १४ ॥

आख्यातशब्दे = 'पश्य मृगो धावति' इत्यादौ, भागाभ्याम् = तिङन्ताभ्याम्, प्रकृतिप्रत्ययभागाभ्यामिति विवरणकारोक्तमपव्याख्यानम्, पचतीत्यत्राऽपि भागद्वयसत्त्वात् । साध्यसाधनरूपता

प्रभा

च्छेदकविषयतासम्बन्धेन शरीरात्मनः फलाश्रयत्वात्कर्मत्वम् । व्यापारतावच्छेदकसमवायसम्बन्धेन व्यापाराश्रयत्वादन्तरात्मनः कर्तृत्वम् ॥ १३ ॥

असत्त्वभूतेति—क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मविशिष्टेत्यर्थः । तत्प्रत्ययेति—असत्त्वभूतक्रियाबोधापत्तिरित्यर्थः । द्रव्यवदिति—लिङ्गसङ्ख्यान्वयि अत्र द्रव्यम् ।

आख्यातेति—'आख्याते' इत्येव वक्तव्ये शब्दग्रहणं बहुव्रीहिलाभार्थम् । द्वे आख्याते शब्दौ यत्र वाक्ये तदाख्यातशब्दम्—तिङ्द्वयघटितवाक्यमित्यर्थः । यद्वा आख्यातयोः शब्द आख्यातशब्दः, घटितत्वं षष्ठ्यर्थः, तथाचाख्यातद्वयघटितवाक्यात्मकशब्द इत्यर्थः । तदाह—पश्य मृग इति—आदिना 'पचति भवति' इत्यादेः सङ्ग्रहः । भागाभ्याम् = वाक्यस्य तिङन्तरूपांशाभ्याम् । 'भागाभ्याम्' इत्यस्य प्रकृतिप्रत्ययभागाभ्यामिति विवरणकारोक्तं यद्व्याख्यानं तद् अपव्याख्यानम्—दूषितं व्याख्यानमित्यर्थः । भागद्वयेति—एतन्मते आख्यातश्चासौ शब्दश्चेति कर्मधारयः । तथाच तत्रापि प्रत्ययशक्तिमादाय धात्वर्थस्य सिद्धत्वापत्तिरिति भावः । वस्तुतोऽपव्याख्यानमित्युक्तिश्चिन्त्या । तथाहि—'धावति' इत्यादौ धातुना साध्यावस्था क्रिया, तदुत्तरप्रत्ययेन च कर्त्राद्यभिधानात् साधनवर्तित्वं यथा, तथा 'पाकः' इत्यत्रापि । अन्ते इयान् विशेषो यद् धातुप्रत्ययाभ्यां क्रियैवाभिधीयत इति । साध्यसाधनेति—'पश्य' इति तिङ्प्रकृत्यर्थदर्शनस्य साध्यरूपता, साध्यरूपक्रियायामेव कारकान्वयस्य वक्ष्यमाणत्वात् । 'धावति' इत्यत्र प्रकृत्यर्थधावनस्य दर्शने कर्मत्वेनान्व-

दर्पणव्याख्या

❀ असत्त्वभूताया इति ❀ क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्माक्रान्ताया इत्यर्थः । ❀ तदिति ❀ तेन रूपेण प्रतीत्यापत्तिरित्यर्थः । ❀ कृदभिहित इति ❀ कृदर्थ इत्यर्थः । ❀ द्रव्यवदिति ❀ द्रव्येण = नामार्थेन तुल्यं प्रकाशते = भासते इत्यर्थः । द्रव्यधर्माणि—लिङ्गसङ्ख्याकारकत्वानि गृह्णातीति यावत् । यद्वा द्रव्यम् = क्रियाकाङ्क्षोत्थापकतावच्छेदकरूपसिद्धत्ववत्, तेन तुल्यं प्रकाशते इत्यर्थः, सिद्धत्वेन भासत इति यावत् । तथाच साक्षाद्भाष्येणासत्त्वनिर्णये तद्गुणभूते प्रामाण्योपगमादिशब्दस्य सुकरत्वादिति भावः ।

आख्याते शब्दौ यस्मिन्निति बहुव्रीहिणा वाक्यमन्यपदार्थं इत्याशयेनाह—❀ पश्येत्यादि ❀ । ❀ तिङन्ताभ्याम् ❀ पश्य-धावतिभ्याम् । धावतेः साधनत्वेन, पश्यतेः साध्यत्वेन क्रियाबोधकत्वाद् दृष्टान्तोपपत्तिरत एव पचति 'इयान् परं विशेष' इति । ❀ प्रकृत्यादीति ❀ ❀ व्याख्यानम् ❀ विवरणस्य । आख्यातशब्द इति कर्मधारय इति सिद्धान्तः । अपव्याख्याने हेतुमाह ❀ पचतीत्यत्रेति ❀ तथाच तिङन्तस्थले प्रकृत्यादिनैव पचत्यादितिङन्तरूपार्थलाभे शब्दपदवैयर्थ्यम् । मन्मते तु तस्य बहुव्रीहिणाऽसम्पादकतयाऽऽख्यातशब्दपदस्य तिङन्तद्वयघटितवाक्यपरतोपपत्तिः, पचत्यादेर्भागद्वयस्य साध्यसाधनवर्तित्वेऽपि क्रियायामन्तः साधनत्वेनाबोधाद् दृष्टान्तासम्भवश्चेति भावः । तदेव विशदयति—❀ साधनरूपतेति ❀ ।

यथाक्रमं ग्राह्या । साध्यत्वम्—क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम् । साधनत्वम्—
कारकत्वेनान्वयित्वम् । स घञादिष्वपीति—प्रकृत्या साध्यावस्था, प्रत्ययेन साधनावस्था । इयान्
परं विशेषः—घञाद्युपस्थाप्या लिङ्गसङ्ख्यान्वयिनी, कारकान्वयिनी च । आख्यातान्तोपात्ता तु
नैवम् । तथापि कारकत्वेनान्वयित्वमात्रेण दृष्टान्तदार्ष्टान्तिकतेत्यवधेयम् ।

प्रभा

यात् साधनम्=कारकं तद्रूपता । लोके यथा 'पश्य मृगो धावति' इत्यादौ भागाभ्यां साध्यसाधनवर्तिना=
वृत्तिः प्रकल्पिता, तथा शास्त्रे=व्याकरणशास्त्रे स एव क्रमो घञादिभावार्थकप्रत्ययेष्वपि 'पाकः' इत्यादिषु
प्रकृत्या साध्यवर्तिता प्रत्ययेन साधनवर्तिता प्रकल्पनीयेति ।

एवञ्च 'पश्य मृगो धावति' इत्यनेन कर्मत्वसम्बन्धेन एकत्वविशिष्टमृगाभिन्नाश्रयवृत्तिवर्तमानकालाव-
च्छिन्नधावनविशिष्ट त्वदभिन्नाश्रयनिष्ठ प्रवर्तनाविषयो दर्शनमिति बोध । अत्र धावनस्य कर्मत्वसम्बन्धेन
दर्शनेऽन्वय' । एवम् 'देवदत्तः पचति भवति' इत्यनेन कर्तृत्वसम्बन्धेन एकत्वविशिष्टदेवदत्ताभिन्नाश्रयनिष्ठवर्त-
मानकालावच्छिन्नपचिक्रियाविशिष्टा वर्तमानकालावच्छिन्ना भवनक्रियेति बोधः । अत्र पचिक्रिया भवनक्रियायाः
कर्त्री । अत एव 'भवतिक्रियायाः पचिक्रिया कर्त्री भवन्ति' इति भाष्य सङ्गच्छते । विशेषः=भेद' । कार-
कान्वयिनीति—कारकत्वव्याप्यधर्मेण कर्मत्वादिनाऽन्वयिनीत्यर्थ । यथा 'पाकं पश्य' 'पाकेन कृतम्' इत्यादि ।

तथाच कृदुपस्थाप्यक्रियाया लिङ्गसङ्ख्यान्वितत्वम्, कारकत्वव्याप्यधर्मत्वादिसम्बन्धेनान्वितत्वञ्चानुभवं
भासते । नैवम्=उभयधर्मवती न, किन्तु कारकत्वव्याप्यधर्मेण कर्मत्वादिनाऽन्वयित्वेनैव दृष्टान्त (पश्य मृगः)
दार्ष्टान्तिक (पाकम्) यो. साधर्म्यम्, सर्वधर्मेण सादृश्यस्य प्रायोऽदर्शनात् । तदाह—कारकत्वेनान्वयित्वेति ।

ननु तिङन्तार्थक्रियायाः कारकत्वेनान्वयित्वे कारकत्वेनानन्वयित्वरूपासत्त्वरूपता तस्या भज्येतेति चेन्न,
धात्वर्थानाश्रयकारकत्वेनानन्वयित्वस्यैवासत्त्वरूपत्वात् । तिङन्तार्थक्रियाया धात्वर्थफलाश्रयकर्मत्वेन धात्वर्थ-
व्यापाराश्रयकर्तृत्वेन चान्वयेऽपि तदितरकारकत्वेनान्वयित्वस्याक्षते, कर्तृकर्मणोरेव धात्वर्थाश्रयकारकत्वात् ।
तदुक्तं वाक्यपदीये—

'क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः ।
असत्त्वरूपता तस्या इयमेवावधार्यताम्' ॥ इति ।

साधनाकाङ्क्षोत्थापकतावच्छेदकधर्मवत्त्वरूपस्यासत्त्व (साध्यत्व) स्य स्वीकारे दोषाभावात् । धात्वर्थ-
क्रियैव हि साधनमाकाङ्क्षति । नन्वेकत्रैव धावनादिक्रियायां साध्यत्वसाधनत्वाङ्गीकारे तयोर्वैधर्म्यमङ्ग इति
चेन्न, सम्बन्धिभेदे वैधर्म्याभावात्, धावनादेर्दर्शनम्प्रति साधनत्वस्य, मृगादिकम्प्रति साध्यत्वस्य च स्वीकारे
बाधकाभावात् । यथा एकत्र एकनिरूपितपितृत्व-पुत्रत्वयोरसम्भवेऽपि विभिन्ननिरूपितपितृत्व-पुत्रत्वयो.

दर्पणव्याख्या

ॐ प्रकृत्या ॐ—'पाक.' इत्यादाविति शेष । वैधर्म्यात् कथ दृष्टान्तदार्ष्टान्तिकभावोऽत आह ॐ इयान् परमिति ॐ
नन्वनयोर्लिङ्गसङ्ख्यान्वयित्वानन्वयित्वेन
तथाच यत्किञ्चिद्धर्मवत्त्वेन सादृश्यविवक्षणान्नोक्तदोष इति भावः ।
ननु धात्वर्थस्य कारकत्वेनाऽनन्वयित्वे कारकानन्वयित्वरूपमसत्त्व तस्या भज्येतेति चेन् तत्र क्रियानाधारत्वविशेषणेन
कर्तुर्व्यापाराऽऽधारत्वेन कर्मण' फलाधारत्वेन कर्तृत्वेन कर्मत्वेनान्वयेऽप्युक्तरूपस्याक्षतत्वात् । उक्तञ्च—

'क्रिया न युज्यते लिङ्ग क्रिया नाऽऽधारकारकै ।
असत्त्वरूपता तस्या इयमेवाऽवधार्यताम्' ॥ इति ।

नच घञन्ते धातुना तथाभिधाने मानाभावः, 'ओदनस्य पाकः' इति कर्म्मषष्ठ्या मानत्वात् । नचाध्याहृततिङन्तक्रियान्वयात् षष्ठी, "कर्तृकर्म्मणोः कृति" ( पा० सू० २ । ३ । ६५ ) इति कृदन्तेन योग एव तद्विधानात्, "न लोकाव्ययनिष्ठाखलर्थतृनाम्" ( पा० सू० २ । ३ । ६९ ) इति लादेशयोगे षष्ठीनिषेधाच्च । एवंरीत्या 'काष्ठैः पाकः' इत्याद्यपीष्टमेव । एवं फलांशोऽपि धातुना असत्त्वावस्थापन्न एवोच्यते ।

प्रभा

सामानाधिकरण्यं प्रसिद्धमेव । धातुना = धातुभागेन । तथाभिधाने = साध्यत्वेनाभिधाने । मानत्वादिति— साध्यत्वेन प्रतीयमानक्रियायामेव कारकान्वयात्, प्रकृते साध्यत्वेन पाकानुपस्थितौ कर्मत्वानुपपत्त्या कर्म- षष्ठ्यनुपपत्तिरिति भावः । नचेति—यथा 'कटे शेते' 'स्थाल्यां पचति' इत्यादौ कर्तृकर्मद्वारा क्रियायोगमा- श्रित्याधिकरणसप्तम्याः साधुत्वम्, तथा प्रकृतेऽपि पाकद्वारा भवतिक्रियायोगमादाय षष्ठी भविष्यतीति भावः । कृदन्तेनेति—यद्धात्वर्थफलवत्त्वं प्रत्यासत्त्या तद्धात्वर्थक्रियानिरूपितकारकत्ववत एव कर्मणो ग्रहणात् षष्ठ्यसिद्धिरिति भावः । नन्वेवं घञन्तादौ साध्यक्रियाया भाने करणादीनामपि तत्रान्वयः स्यादित्याह— एवंरीत्येति । एवम् = क्रियांशवत् ।

दर्पणव्याख्या

क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्त्वम् = असत्त्वभूतत्वमिति मते त्वत्र दोषः प्रागुक्त एव । साधनाकाङ्क्षोत्थापकता- वच्छेदकधर्मवत्त्वरूपतया परिष्कृते तु न क्वापि दोष इति । ❀ तथाभिधाने इति ❀ उक्तसाध्यत्वेन रूपेण प्रतीतावित्यर्थः ।

❀ ओदनस्येति ❀ अत्रौदनपदं तण्डुलादिपरम्, अन्यथा सिद्धस्यैवौदनपदार्थतया तस्य पाकासम्भवेन बाधितार्थकताऽऽपत्तेः । ❀ कर्मषष्ठ्या इति ❀ कर्मत्वेन कर्मशक्तायाः षष्ठ्या इत्यर्थः । ❀ मानत्वादिति ❀ अनुपपत्तिरूप- प्रमाणत्वादित्यर्थः । घञन्तेन सिद्धभावस्यैवाऽभिधाने कारकाणां साध्यस्वभावक्रियाऽन्वयित्वनियमेनौदनस्याकारकतयाऽकर्म- त्वेन तत्र षष्ठ्यनुपपत्तेरेव तस्य साध्यस्वभावक्रियार्थकत्वे मानत्वादिति भावः । ❀ क्रियान्वयादिति ❀ साध्यस्वभावाऽध्या- हृतभवत्यर्थस्य परम्परान्वयादित्यर्थः ।

नन्वोदनस्य कृदन्तार्थफलाश्रयत्वरूपकृदन्तयोगसत्त्वात् सत्त्वेन कथं तदनुपपत्तिरत आह—❀ न लोकेति ❀ इदम् समाधिसौकर्यादुक्तम् । प्रत्यासत्त्या यद्धात्वर्थफलाश्रयत्वं तद्धात्वर्थकारकस्यैव कर्मतालाभेन पाकपदार्थस्य क्रियात्वेन भवत्यर्थस्य क्रियात्वेऽपि तदर्थफलाश्रयत्वाभावेनौदने कर्मत्वस्यैव दुरुपपादत्वात् । ननु तत्र मा भूत् कृद्योगषष्ठी, शेषषष्ठ्यैव तथा प्रयोगोपपत्तेरिति चेत्, सर्वत्र सम्बन्धषष्ठ्यैव प्रयोगोपपत्त्या कर्तृकर्मणोरित्यादिविधिवैयर्थ्यापत्तेः । यदि च 'जगतः कर्ता' इत्यादौ कर्मत्वेन कर्मण्यप्रत्ययरूपसिद्ध्यभावोपपादनार्थं समासस्थले "गतिकारकोपपदात्कृत्" ( पा० सू० ६।२।१३९ ) इत्यादिविहितस्वरनियमार्थञ्च तस्यावश्यकत्वेनेति विभाव्यते, तदा प्रकृते किं तत्प्रयोजनं षाष्ठीविहितमिति भावः । नन्वसत्त्वभूतक्रियाया भावप्रत्ययप्रकृत्यर्थत्वे कारकाणां तन्निरूपितकारणत्वस्यापि सम्भवात्तदर्थमध्याहारेऽपि 'काष्ठैः पाकः' इत्यादावपि प्रयोगे स्यादित्यपेक्षायां परिहरति—❀ एवंरीत्येति ❀ ।

अन्ये तु भावप्रत्ययस्थले सम्बन्धिभेदेनैकस्यैव क्रियाख्य-धात्वर्थस्य कृदन्तेन सम्बन्धिभेदात् साधनत्वेनैव एव क्रियाया बाधकत्वरूपसम्बन्धिभेदात् साध्यत्व-साधनत्वोभयानुरूपस्थितिः तत्त्वतो भिन्नभिन्नक्रियांशस्थितिरित्याहुः । ❀ एवमिति ❀ यथा 'ओदनस्य पाकः' इत्यादावोदनस्य कर्मत्वाऽनुपपत्त्याऽसत्त्वभूतक्रियायाः धात्वर्थत्वमित्यर्थः । फलांश- स्यापि तादृश्येनानुपपत्तिं दर्शयति—

अत एव 'स्तोकं पचति' इतिवत् 'स्तोकं पाकः' इत्युपपद्यते इति ॥ १४ ॥

एतदेव स्पष्टयति—

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥ १५ ॥

नच घञादिभिः सिद्धत्वेनाभिधाने मानाभावः, 'पाकः' इत्युक्ते, भवति नष्टो वेत्याद्याकाङ्क्षो-स्थापनस्यैव मानत्वात्,

प्रभा

स्तोकं पाक इति—व्यपदेशिवद्भावेन फलस्यापि फलाश्रयत्वेन कर्मतया तत्समानाधिकरणात्स्तोकपदाद् द्वितीया। अत एव 'क्रियाविशेषणानां कर्मत्वम्' इत्यभियुक्तोक्ति सङ्गच्छते।

नच कृद्योगे 'कर्तृकर्मणो' इति षष्ठ्या द्वितीयाया बाधः स्यादिति वाच्यम्, कर्तृसाहचर्याद् भेदेन क्रियान्वयिनः कर्मण एव तेन षष्ठीविधानात्। प्रकृते च फलेऽभेदेनैव स्तोकपदार्थस्यान्वयः। अत्र च 'मलोप-वचनञ्च' इति वार्तिकमेव मानम्, अन्यथा 'दारुणाध्यापक' इति भाष्योक्तमुदाहरणमसङ्गतं स्यात्, कृद्योग-षष्ठ्या समासेन सिद्धत्वात्। नचैवं 'कर्तृकर्मणो.' इत्यस्य वैयर्थ्यम्, 'कर्तरि कृत्' इति सूत्रभाष्यानुरोधेन तुमुन्नादीनामिव क्तिनोऽपि साध्यावस्थापन्नधात्वर्थानुवादकत्वमेवेति 'यज्ञस्य कृतिः' इत्यादौ चरितार्थत्वात्।

नच शेषषष्ठ्यैव समासो वास्त्वति वाच्यम्, कर्तृत्यादिना बोधासिद्धेः। यद्वा—'ओजःसहोम्भसा वर्तते' इत्यतः 'वर्तते' इत्यनुवर्त्य 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' इत्यनेन द्वितीयान्तात् प्रतीपान्वीपादिशब्दात् 'वर्तते' इत्यर्थे ठग् विधीयते। तत्र 'वर्तते' इत्यस्याकर्मकत्वाद् द्वितीया-न्ताट्ठग्विधानवैयर्थ्येन ज्ञाप्यते—'क्रियाविशेषणाद् द्वितीया भवति' इति, नतु व्यपदेशिवद्भावेन कर्मत्वम्, फलतावच्छेदकसम्बन्धेन फलाश्रयत्वाभावादिति स्तोकशब्दात् षष्ठ्यप्राप्तिः ॥१४॥

एतदेव=प्रकृत्या साध्यावस्था, प्रत्ययेन साधनावस्थेत्यर्थस्वरूपमेव। साध्यत्वेनेति—तत्र पाकादिशब्दे साध्यत्वेन प्रतीयमाना या क्रिया सा धातुरूप निबन्धनम्=प्रतिपादकं यस्याः सा धातुप्रतिपाद्या क्रिया वाचकतासम्बन्धेनास्ति। यद्वा—धातुरूपं निबन्धनम्=निमित्तं यस्याः क्रियायाः। प्रतीतौ यन्निमित्तजन्यत्व सत् प्रतीयमानक्रियायामारोप्यान्यपदार्थत्वं तस्याः। तस्याः=क्रियायाः, यः सिद्धभावः=सिद्धत्वम्। स घञादि निबन्धनम्=प्रतिपादकं यस्य स घञादिनिबन्धनः—घञादिप्रतिपाद्य इत्यर्थः। कारिकाप्रतिपाद्यमर्थं शङ्कासमाधिभ्यां द्रढयति—नच इत्यादिना। आकाङ्क्षोत्थापनस्येति—क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकधर्म-

दर्पणव्याख्या

❀ अत एवेति ❀ अन्यथा तादृशप्रयोगानुपपत्तिस्तादृशफलस्य वाच्यत्वे तु तस्य व्यपदेशिवद्भावेन स्वसम्बन्धितया कर्मत्वात् तत्समानाधिकरणस्तोकादिशब्देभ्यो द्वितीयोपपत्तिः। तत्र स्तोकादिभ्य कर्तृकर्मणोरिति षष्ठी तु न, कर्तृ-साहचर्येण भेदान्वयिन एव कर्मणस्तत्र ग्रहणात्। अत एव "पूजनात्पूजितम्" इति सूत्रे भाष्ये 'दारुणं यथा भवति तथाऽध्यापक इत्यर्थे दारुणाध्यापकसिद्ध्यर्थं मलोपवचनमारब्धं भाष्ये'। अन्यथा, कर्तृकर्मणोरिति विहितषष्ठ्यन्तेन समासे तद्वैयर्थ्यं स्फुटमेवेत्यन्यत्र विस्तरः।

अन्ये तु ओजःसहोऽम्भसा वर्तते, इत्यधिकारे "तत्प्रत्यनुपूर्वमीपलोमकूलम्" (पा० सू० ४।४।२८) इति सूत्रे द्वितीयान्ततच्छब्दग्रहणं ज्ञापकम्—'क्रियाविशेषणाद् द्वितीया' इत्यस्यार्थस्य, नतु स्तोकाद्यर्थस्य कर्मत्वमपि, फलस्य फलाश्रयत्वाऽभावात्। एवञ्च न तद्वाचकेभ्यः षष्ठीप्रसक्तिरित्याहुः ॥ १४ ॥

धातूपस्थाप्यायां तदसम्भवस्योक्तत्वात्, 'स्तोकः पाकः' इत्यनापत्तेश्च। तस्माद्धात्वर्थान्वये स्तोकादि शब्देभ्यो द्वितीया। घञर्थान्वये प्रथमा, पुँल्लिङ्गता चेति—तत्सिद्धये घञादेः शक्तिरुपेया। एतेन घञादीनां प्रयोगसाधुतामात्रमिति नैयायिकनव्योक्तमपास्तम्।

नच घञन्तशक्त्युपस्थाप्यान्वये 'स्तोकः पाकः' इति भवतीति वाच्यम्, घञन्तानुपूर्व्याः शक्ततावच्छेदकत्वे गौरवादनुशासनाच्च घञादेरेव तथा शक्तिकल्पनादिति दिक्।

प्रभा

वस्यस्यैव साधनरूपत्वमिति भाव । अनापत्तेश्चेति—प्रत्ययेन सिद्धावस्थापन्नक्रियाया अनभिधाने धातुप्रतिपाद्यक्रियायामेवाभेदान्वयेन द्वितीयैव स्यान्न तु प्रथमा, धात्वर्थतान्वये नपुंसकलिङ्गता च। धात्वर्थान्वये = धात्वर्थफलान्वये। द्वितीयेति— पदार्थमात्रस्य लिङ्गत्रयवत्त्वेन क्रियाया अपि लिङ्गत्रयवत्त्वात् क्रियाविशेषणे विनिगमनाविरहाल्लिङ्गत्रये प्राप्ते 'सामान्ये नपुंसकम्' इति नपुंसकविधानात्। घञ्वाच्यक्रियाया 'घञबप पुंसि' इति पुंस्त्वनिर्णयात्र तद्विशेषणे नपुंसकत्वमिति भाव । घञर्थेति—घञर्थस्य सिद्धरूपत्वेन = लिङ्गसङ्ख्यान्वयित्वेन भानम्। एव व्यापारान्वयेऽपि 'स्तोक पाक' इत्येव, व्यापारस्याकर्मतया तद्विशेषणे द्वितीयाया अप्राप्ते। वस्तुतस्तु 'तत्प्रत्यनुपूर्वम्' इति ज्ञापकसिद्धेन 'क्रियाविशेषणाद् द्वितीया' इति वचनेन साध्यभूतव्यापारान्वयेऽपि द्वितीयैव। एतेन = घञादिशक्त्या उक्तप्रयोगव्यवस्थापनेन। कातन्त्रपरिशिष्टमतमनूद्य दूषयति—नच इत्यादिना —तथाहि—'पाक पश्य' इत्यादौ घञन्तानुपूर्व्या शक्ततावच्छेदकत्वमावश्यकम्, अन्यथा सुवर्थसङ्ख्याकर्मादेर्धात्वर्थेऽन्वयो न स्यात्, धातो सुपप्रकृतित्वात्, प्रत्ययाना प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्। प्रकृत्येकदेशार्थेऽपि अन्वयाभ्युपगमे तु यत्रैक एव कर्ता पाकद्वय करोति तत्र पाके द्वित्वान्वयानाधात् 'पचन्तौ पश्य' इति प्रयोगापत्ति । ननु 'धात्वर्थे सुवर्थसङ्ख्यान्वयबुद्धिम्प्रति धातूत्तरप्रत्ययविशेष्यकयत्किञ्चिदर्थपरत्वज्ञान प्रतिबन्धकम्' इत्युच्यते, अस्ति च प्रकृते 'शता कर्तृबोधको भवतु' इति ज्ञानम्, तथाच न तत्र सङ्ख्यान्वय इति चेन्न, कल्पनागौरवात्। एवञ्च प्रकृत्यर्थप्रत्ययार्थान्वयाभिप्रायेण घञन्ते शक्तिरुपेया। एवञ्च घञन्तार्थेऽन्वयाभिप्रायेण 'स्तोक पाक' इत्यपि सिध्यतीत्याशङ्कायामाह—गौरवादनुशासनाच्चेति। नच वैयाकरण-

दर्पणव्याख्या

❀ उक्तत्वादिति ❀ क्रियान्तराकाङ्क्षाऽनुत्थापकतावच्छेदकरूपवत्त्व साध्यत्वमित्यादिनेत्यर्थ, क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपेणोपस्थिते क्रियान्वयासम्भवादिति भाव । तेन रूपेणोपस्थिते 'पश्य मृगो धावति' इत्यादौ व्यभिचरितत्वाद्वाह—❀ स्तोक पाक इति ❀ घञा सिद्धावस्थक्रियाया अबोधने धात्वर्थविशेषणवाचकस्तोकादिशब्दस्य लिङ्गसर्वनाम नपुंसकत्वापत्तिरिति भाव । तदेव विशदयति—❀ तस्मादिति ❀। ❀ एतेनेति ❀ घञादीनां सिद्धावस्थाऽऽपन्नक्रियावाचकत्वव्यवस्थापनेनेत्यर्थं । ❀ प्रयोगसाधुतामात्रमिति ❀ मात्रपदेन वाचकत्वव्यवच्छेद ।

❀ नैयायिकनव्योक्तमिति ❀ धातूना सुब्विभक्त्यप्रकृतित्वात्तदर्थे सुवर्थसङ्ख्याकर्मत्वादीनामन्वयानुपपत्त्या धातोरिव घञन्तस्यापि क्रियावाचकत्वमभ्युपेयम् प्रकृत्येकदेशार्थे तदन्वयाऽभ्युपगमे तु यत्र पाककर्त्रादेर्द्वित्वादिक बाधितम्, पाकादेश्च तदबाधितम् तत्र 'पचन्तौ पश्यति' इत्यादिप्रयोगापत्ते । धातूपस्थाप्यार्थे सुवर्थान्वयबोधं प्रति तद्धातूत्तरधर्मिककिञ्चिदर्थपरत्वज्ञानस्य प्रतिबन्धकत्वावगमे गौरवम्। एवञ्च यत्र धातुमात्रस्य पाकादौ तात्पर्यं तत्र तद्विशेषतावाचकस्तोकपदाद् द्वितीयैव। यत्र कृदन्तसमुदायस्य तत्र तद्विशेषणवाचकपद तत्समानविभक्तिकमेवेति कातन्त्रपरिशिष्टकृन्मत नव्यनैयायिकमतत्वेनानूद्य दूषयति—❀ नचेति ❀। ❀ गौरवादिति ❀।

प्रभा

यतावत्त्वरूपपरम्परासम्बन्धेन भाषणक्रियायामन्वयात् देवदत्तपदार्थभाषणक्रिययोः विशेष्यविशेषणभावसत्त्वादेकवाक्यस्थत्वम् । तथाहि—स्वनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्व-स्वनिष्ठविशेष्यतानिरूपितप्रकारत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतावत्त्वैतदन्यतरसम्बन्धेन क्रियाविशिष्टार्थप्रयोजकत्वरूपैकवाक्यत्वघटकद्वितीयान्यतरसम्बन्धो देवदत्तपदे सुलभः । तथाहि—भाषणक्रियानिष्ठविशेष्यतानिरूपितप्रकारत्वावच्छिन्नविशेष्यता इच्छानिष्ठा तन्निरूपितप्रकारत्वावच्छिन्नविशेष्यताऽभिमुखीभावनिष्ठा तन्निरूपितप्रकारतावत्त्वं देवदत्तस्येति तत्प्रयोजकत्वं देवदत्तपदे इति 'त्वं ब्रूहि देवदत्त' इत्यत्र पदात्परस्यामन्त्रितस्य निघात ( अनुदात्त ) इत्यर्थकेन 'आमन्त्रितस्य च' इत्यनेन निघातः सिद्ध्यति, निमित्तं ब्रूहिपदं निमित्ति (कार्यि) देवदत्तपदं तयोरेकवाक्यस्थत्वात् । यद्वा विभक्त्यर्थसम्बन्धेन देवदत्तस्य भाषणे प्रकारत्वमिति प्रथमनिरूपितत्वमादायैव लक्षणसमन्वयः ।

नागेशमते तु बोधनायाभिमुखीभावः सम्बोधनमिति व्युत्पत्त्या 'बोधफलकाभिमुखीभाव एव विभक्त्यर्थः', तस्य च संख्याया इव प्रकृत्यर्थे आश्रयतासम्बन्धेनान्वयः । प्रकृत्यर्थस्य च

'प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते'

इति हर्युक्तेरुद्देश्यतानिरूपकत्वसम्बन्धेन प्रवर्तनान्वयद्वारा विधेयभूतक्रियायामन्वयः । तथाच अभिमुखीभवद् देवदत्तोद्देश्यकप्रवर्तनाविषयः त्वत्कर्तृकं भाषणमिति बोधः । एवं 'व्रजानि देवदत्त' इत्यत्र प्राचीनमते 'प्रकृतवाक्यार्थविषयकबोधफलकदेवदत्तनिष्ठाभिमुखीभावानुकूलव्यापारविषयकेच्छाविषयः प्राप्तकालिकं मत्कर्तृकं गमनम्' इति बोधः । नव्यमते—'जानीहि' इत्यस्याध्याहारः । तथाचाभिमुखीभवद् देवदत्तोद्देश्यकप्रवर्तनाविषयः मत्कर्तृकव्रजनविषयकं त्वत्कर्तृकं ज्ञानमिति बोधः । अत्र व्रजननिष्ठविशेष्यतानिरूपितप्रकारताया देवदत्तेऽभावेऽपि साक्षात्परम्परासाधारणाख्यातार्थनिष्ठविषयतानिरूपितविषयताप्रयोजकत्वरूपस्यैकवाक्यत्वस्य सत्त्वेन निमित्तनिमित्तिनोरेकवाक्यस्थत्वान्निघातसिद्धिः । अस्ति च प्रकृते आख्यातार्थव्रजननिष्ठविषयतानिरूपितज्ञाननिष्ठा विषयता तन्निरूपिता विषयता च प्रवर्तनानिष्ठा तन्निरूपिता विषयता देवदत्तनिष्ठा तत्प्रयोजकत्वं देवदत्तस्येति निघातसिद्धिः । अत एव 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकमते देवदत्तपदात् प्रथमा सिध्यति ।

यत्तु स्वोद्देश्यकप्रवर्तनाविषयत्वसम्बन्धेन क्रियायामन्वय इति तन्न, नामार्थस्य साक्षाद् भेदसम्बन्धेन धात्वर्थेऽन्वयस्याव्युत्पन्नत्वात् । अन्यथा कर्मत्वादिसम्बन्धेन अन्वये 'तण्डुलः पचति' इत्यपि स्यात् । तस्माद् विभक्त्यर्थसम्बन्धेन विभक्त्यर्थान्वयद्वारा वा क्रियायामन्वय इत्येव पक्षो ज्यायान् । प्राचीनमते 'व्रजानि देवदत्त' इत्यत्र तिङ्सामानाधिकरण्याभावात् प्रथमा न सिध्यतीत्यतो नव्यमतमेवादरणीयम् । 'उद्देश्यत्वसम्बन्धेन प्रवर्तनायामन्वयः' इत्यनेन सिद्धस्यैव सम्बोध्यत्वं सूचितम् । तेन 'राजन् भव युध्यस्व' इत्यस्य न साधुत्वम्, सिद्धस्यैवोद्देश्यत्वात्, राजत्वस्य चासिद्धत्वात् । एवञ्च सम्बोध्यतावच्छेदकधर्मावच्छिन्नस्य सम्बोध्यतावच्छेदकरूपेण सिद्धत्वे एव सम्बोधनविभक्तिरिति फलितम् । 'आख्यातं सविशेषणं वाक्यम्' इति समर्थसूत्रोक्तैकवाक्यत्वस्य, पूर्वोक्तैकवाक्यत्वस्य च 'पचति भवति देवदत्त' इत्यत्र सत्त्वान्निघातसिद्धिः । नचात्र 'पाको भवति' इत्यर्थे देवदत्तपदार्थस्य तत्रानन्वयान्निघातासिद्धिः, किञ्च तिङ्सामानाधिकरण्याभावात् प्रथमानुपपत्तिरिति वाच्यम्, 'जानीहि' इत्यस्याध्याहारेणादोषात्, 'वाक्यैकदेश'न्यायेन तावन्मात्रस्यैव ज्ञानार्थकत्वाद्वा । तिङन्त-

दर्पणव्याख्या

इत्यादौ 'शालीनाम्' इत्यादेः समानवाक्यस्थत्वसिद्धये 'परम्परया' इति । 'पचति भवति' इत्यादिसाधारणं चैतत् । प्रकृते च सम्बोधनस्याभुख्यविषयताऽनुवाद्यस्य विधेयगाकाङ्क्षया, विधेयतायाश्च क्रियानिष्ठत्वेन तत्रैव सम्बोधनान्वयान्वयीविधया समानवाक्यस्थत्वमक्षतमिति भावः । बोधस्वरूपाभिमुखीभवनानुकूलव्यापारविषयदेवदत्तोद्देश्यकप्रवर्तनाविषयत्वदर्भिकर्तृकं

निघातयुष्मदस्मदादेशाः" इत्यनेन समानवाक्ये एव तन्नियमात्। उक्तञ्च वाक्यपदीये—

सम्बोधनपदं यच्च तत् क्रियायां विशेषणम्।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥ इति ॥

'पचति भवति देवदत्तः' इत्यादौ तु सूत्रभाष्यादिरीत्यैकवाक्यतासत्त्वात् स्यादेव निघातः, "तिङ्ङतिङः (पा० सू० ७।१।८८) इति सूत्रयता तिङन्तानामप्येकवाक्यतास्वीकारात्। 'एकतिङ् वाक्यम्' इति वदतां

प्रभा

तिङ्ङतिङ इति—तिङन्तद्वये एकवाक्यत्वाभावे 'अतिङः' इत्यस्य वैयर्थ्यापत्त्या तिङन्तद्वयेऽपि एकवाक्यत्वं सूत्रकृदभिमतमिति प्रतीयते इति भावः। भाष्यकृता तु 'पचति भवति' इत्यस्य 'पचिक्रिया भवतिक्रियायाः कर्त्री भवन्ति' इत्यर्थः स्वयमेवोक्तः। तदुक्तं हरिणा—

'बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता।
तिङन्तेभ्यो निघातस्य पर्युदासस्तथाऽर्थवान्' ॥ इति।

एकतिङिति—एकम्=अद्वितीयं तिङन्तं यत्र समुदाये तद्वाक्यमित्यर्थः। अत्रापि 'विशेषणविशिष्टक्रियाद्यादिघटितेऽप्येकवाक्यत्वे सूत्रकारसम्मतिमाह— इत्यंशमादाय निघातापत्तिः, एकतिङ्घटितत्वात्, तद्दाने तु पचतिना सह चैत्रस्य सम्बन्धाभावान्न दोषः। हरिणाप्युक्तम्—र्थकम्' इति विशेषणं देयम्, अन्यथा 'पठति चैत्रः, पचति मैत्रः' इत्यत्र 'चैत्रः पचति'

'एकतिङ् यस्य वाक्यन्तु शास्त्रे नियतलक्षणम्।
तस्यातिङ्ग्रहणे नार्थो वाक्यभेदान्न विद्यते ॥' इति।

दर्पणव्याख्या

ॐ उक्तञ्चेति ॐ। तत्र हरिसम्मतिमाह— ॐ विशेषणमिति ॐ स्वोद्देश्यकप्रवर्त्तनाविषयवरूपपरम्पराभावणमिति। ॐ सम्बोधनपदमिति ॐ तद्बोध्यमित्यर्थः। सम्बन्धेनेत्यर्थः। व्रजानीत्यस्य हि 'जानीहि' इति शेषः,

सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः।
प्राप्ताऽऽभिमुख्यो हि जनः क्रियासु विनियुज्यते ॥

इति कारिकान्तरे 'विनियुज्यते' इति वदता प्रवर्त्तनाविषयक्रियायामेव तदन्वयबोधनात्। प्रवर्त्तनोद्देश्यस्यैव तद्विषयक्रियोद्देश्यत्वादुद्देश्यविधेयभावस्य तयोः संसर्गमर्यादया लाभादेकवाक्यतया निघात इति सदर्थः। शाब्दबोधस्त्वत्र सम्बोधनविषयदेवदत्तोद्देश्यकप्रवर्त्तनाविषयो मत्कर्तृकव्रजनकर्मकं ज्ञानमिति। ॐ सूत्रभाष्यादिरीत्येति ॐ भूवादिसमर्थसूत्रस्थभाष्योक्तरीत्येत्यर्थः।

ॐ स्यादेवेति ॐ आमन्त्रितदेवदत्तपदस्येत्यर्थः। अत्र 'जानीहि' इति पदाध्याहारेणोक्तरीत्या देवदत्तपदस्यैकवाक्यस्थत्वाक्षतेरिति भावः। तत्र सूत्रकारसम्मतिमाह ॐ तिङ्ङतिङ इतीति ॐ। ॐ तिङन्तानामिति ॐ बहुवचनेन प्रकृते 'जानीहि' पदाध्याहारः सूच्यते, अन्यथा तत्र निघाताप्राप्त्या तत्पर्युदासबोधकातिङ्ग्रहणस्य वैयर्थ्यापत्तेरिति भावः।

सम्मतिरियं सूत्रकृत एकवाक्यतांशे निघातांशे च। भाष्यसम्मतिस्तु न, तेनातिङ्ग्रहणस्य प्रत्याख्यानात्। नन्वेवं कथमतिङ्ग्रहणप्रत्याख्यानसङ्गतिः, पचति भवतीत्यत्र निघातवारकतया तस्याऽऽवश्यकत्वादिति चेन्न, तत्र कारकान्वितक्रियाबोधकस्वरूपैकवाक्यत्वस्य सुप्चयसुप्तिङन्तचयसाधारणस्य सत्त्वेऽपि वार्तिककारपरिभाषितश्रूयमाणैकतिङ्स्वरूपैकवाक्यत्वस्य तत्रासत्त्वादित्याशयात्। तथाचोक्तस्थले तादृशैकवाक्यत्वाभावान्नियताप्रसक्तिरेवैत सूचनायैव ॐ स्यादेव निघात

वार्त्तिककाराणां मते परं न। वस्तुतस्तु 'एकतिङ्विशेष्यकं वाक्यम्' इति तदभिप्रायस्य हेलाराजीयादौ, वैयाकरणभूषणेऽस्माभिश्च प्रतिपादितत्वात्तन्मतेऽपि भवत्येवेत्यवधेयम्॥ कृत्वोऽर्थाः,

प्रभा

नियतलक्षणम् = विवक्षितैकत्वम्। ऋषीणां दर्शनं सार्थकं भवतीति मतभेदेन वाक्यत्वभेदो न न्याय्य इत्याह—वस्तुतस्त्विति—एकं तिङन्तं मुख्यविशेष्यीभूतार्थप्रतिपादकं यत्रेति व्युत्पत्त्या मुख्यविशेष्यताश्रयार्थबोधकैकतिङन्तघटितसमुदायस्वरूपं वाक्यत्वं फलितम्। नन्वेकतिङ्घटितस्य वाक्यत्वे 'त्वया शयितव्यम्' 'ब्रूहि ब्रूहि देवदत्त' इत्यस्य चैकवाक्यत्वानापत्तिः, आद्ये तिङन्तघटितत्वाभावात्, द्वितीये 'तिङन्तद्वयघटितत्वात्। किञ्च, 'त्वया शयितव्यमिति मैत्रो ब्रूते' इत्यस्यैकवाक्यत्वापत्तिश्च, इति चेन्न, 'मुख्यविशेष्यतायोग्यक्रियाप्रतिपादकत्वनिष्ठप्रकारतानिरूपिततात्पर्यीयविशेष्यतावत्, पदाघटकञ्च यत्पदद्वयं तदघटितत्वे सति परस्परनिरूप्यनिरूपकभावापन्नविषयत्वाप्रयोजकपदाघटितत्वमेकवाक्यत्वम् इति स्वीकारेणादोषात्। आद्ये मुख्यविशेष्यतायोग्यक्रियाप्रतिपादकत्वनिष्ठप्रकारतानिरूपिततात्पर्यीयविशेष्यतावद् एकमेव शयितव्यपदमिति तादृशपदद्वयाघटितत्वात्, द्वितीये 'नित्यवीप्सयोः' इति सूत्रेण 'सर्वस्य द्वे' इति द्विर्वचननिर्देशेन एकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते। अतः स्थानिवद्भावेन समुदायस्य पदत्वम्, अवयवयोश्च स्वत एव, अत्रानरतमितावयवभेदस्य समुदायस्याऽऽदेशत्वात्। एवञ्च 'वृक्षाम् वृक्षाम्' इत्यत्र णत्वनिषेधः, 'अश्वेऽश्वे' इत्यादौ पूर्वरूपादिकम्, 'अश्नीताश्नीत' इत्यादौ पररूपाभावादिकञ्च सिध्यति। तथाच यद्यपि 'ब्रूहि ब्रूहि' इति पदद्वयम्, तथापि समुदायरूपपदघटकतया पदाघटकपदद्वयाघटितत्वस्य तत्राक्षतत्वात्। तृतीये वदनक्रियायां शयनस्य कर्मत्वेऽपि मुख्यविशेषतायोग्यक्रियावाचकपदद्वयघटितत्वाद् दोषाभावो बोध्यः। उदासीनपदसादायातिव्याप्तिवारणाय विशेष्यदलम्। यथा—'त्वया शयितव्यं देवदत्तस्य वलम्' इत्येतद्घटके 'त्वया शयितव्यं देवदत्तस्य' इत्यत्र। एतेन—'सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता'। इत्यमरकारोक्तं लौकिकवाक्यलक्षणमपि संगृहीतम्। 'क्रिया वा' इत्यत्र 'वा' शब्दश्चेदर्थे। 'सुप्तिङन्तचयः' इत्यत्र सुप् च तिङ् च सुप्तिङौ तावन्तौ ययोस्ते सुप्तिङन्ते, सुब्विशिष्टं तिङन्तं सुप्तिङन्तम्, सुप्तिङन्ते च सुप्तिङन्तञ्च सुप्तिङन्तानि तेषां चय इत्यर्थः। तथाच सुबन्तचयः—'देवदत्तेन शयितव्यम्' इत्यादिः, तिङन्तचयः—'पचति, भवति' इत्यादिः, सुबन्तविशिष्टतिङन्तचयः—'चैत्रः पचति' इत्यादिः, त्रयाणामपि वाक्यत्वम्।

'अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्'।

इति जैमिनिसूत्रमप्येतत्परमेव। हेलाराजीयेति—हेलाराजः = वाक्यपदीयटीकाकारः, तस्येदं व्याख्यानमित्यर्थे 'वा नामधेयस्य' इत्यनेन वृद्धत्वे 'वृद्धाच्छः' इत्यनेन छप्रत्यये हेलाराजीय इति शब्दः सिध्यति। कृत्वोऽर्थाः इति—कृत्वसुच् सुच् च द्वावेव कृत्वोऽर्थौ प्रत्ययौ, बहुवचनन्तु लक्ष्यबहुत्वाभिप्रायेण। तत्रैकशब्दात् 'एकस्य सकृच्च' इति सुचि सकृदादेशे एकवारं पचतीत्यर्थे—'सकृत्पचति' इत्यस्य साधुत्वम्। गणनञ्च—कस्यचित्पदार्थस्य संख्यावत्तया बोधनम्। अभ्यावृत्तिश्चैकशब्देन बोधयितुं न शक्यते इति

दर्पणव्याख्या

इति ❀ सुम्भावनाद्योतव तिङ उपादानम्। तदेतदाविष्करोति— ❀ वार्त्तिककाराणामिति ❀ ❀ परम् ❀ केवलम्। यथाश्रुतसूत्रमनुरुध्याह ❀ वस्तुतस्त्विति ❀। ❀ हेलाराजीय इति ❀

बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता।

तिङन्तेभ्यो निघातस्य प्रतिषेधस्तथाऽर्थवान्॥

इति वाक्यपदीयव्याख्याऽवसर इति शेषः। ❀ तन्मतेऽपि भवत्येवेति ❀ इदञ्च निरुक्तलौकिकवाक्यत्वस्यैव

"संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच्" ( पा० सू० ५ । ४ । १७ ) इति क्रियायोगे तत्साधुत्वोक्तेः, क्रियाया अभ्यावृत्तिः = पुनः पुनर्जन्म, तस्मिन् द्योत्ये इति तदर्थात् ।

कारकम्, 'कारके' इत्यधिकृत्य तेषां व्युत्पादनात् । कारकशब्दो हि क्रियापरः, करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः । तथाचाग्रिमेष्वपादानादिसंज्ञाविधिषु क्रियाऽर्थककारकशब्दानुवृत्त्या क्रियान्वयिनामेव संज्ञेति भाष्ये स्पष्टम् ।

प्रथमो वतिः, "तेन तुल्यं क्रिया चेद्वतिः" ( पा० सू० ५ । १ । ११५ ) इति निहितः,

प्रभा

'द्वित्रिचतुर्भ्यः सुच्' इति द्व्यादिभ्य सुजेव, इति पञ्चा
अभ्यावृत्तिरत्र न सम्बध्यते । क्रियागणनाया सुजत्र, 'पञ्चकृत्वो भुङ्क्ते' इत्यादौ पञ्चादिशब्दास्तत्सङ्ख्योत्पत्तिपरास्तद्द्योतकाश्च
दिभ्य एव कृत्वसुच्प्रत्ययो बोध्य । साध्यार्थविषयतया क्रियायामेव सम्भव, न द्रव्यगुणयो,
कृत्वसुजादय । पुन पुनर्जन्मैवाभ्यावृत्तिस्तस्याश्च
तयो सिद्धस्वभावत्वात् । पुन पुनर्दण्ड, पुन पुन स्थूल, इत्यादावपि भवतिक्रियाया एवाभ्यावृत्ति,
एवञ्चाभ्यावृत्ते क्रियायामेवान्वय आवश्यक, तदन्वयिताऽवच्छेदकस्यान्यत्रासम्भवात् । नन्वेव क्रियाग्रहण
व्यर्थम्, 'एको देवदत्त' इत्यत्र सुज्वारणायोत्तरसूत्रे क्रियाग्रहणस्याननुवृत्तेरुक्तत्वात् । सङ्ख्यायास्तत्तत्सङ्ख्यावत्तया बोधरूप यद्गणन तत्रैव हेतुतया गणनलाभे गणनग्रहण लोके गणनाया प्रसिद्धा ये तेषामेव
ग्रहणार्थमिति युग्मशरादिशब्दान्न ते प्रत्यया । तथाच 'पञ्चकृत्वो भुङ्क्ते' इत्यादिना पञ्चादिसङ्ख्योत्पत्तिका
वर्तमानादिकालिकी एकादिकर्तृका भुज्यादिक्रिया इति बोध । क्रियापर इति—तथाच भाष्यम्—
'अथवा यावद् ब्रूयात् क्रियायामिति तावत्कारके इति' इति, कारकशब्द क्रियापर्याय इति तदर्थ । 'एवञ्च
कृत्वा निर्देश उपपन्नो भवति—'कारके' इति । इतरथा हि कारकेष्विति ब्रूयात्' इति भाष्यात् 'कारके'
इति विषयसप्तमी, 'अन्वयी' इत्यध्याह्रियते, तथाच 'क्रियायामन्वयी कर्मादिसंज्ञो भवति' इति
कर्मादिसंज्ञाविधायकानामर्थ । एवञ्च 'कारके' इत्यस्य क्रियायामित्यर्थे कारकसंज्ञा एव नास्ति । 'गतिकारकोपपदात्' इत्यादौ कारकपदे स्वरितत्वप्रतिज्ञया स्वरितेनाधिक कार इत्यर्थमादाय कर्मादीना ग्रहणम् । क्रियाऽन्वयिनामिति—क्रियायामन्वयि कर्मसंज्ञं स्यात्, क्रियायामन्वयि कर्तृसंज्ञ स्यादित्येव रूपेणेत्यर्थ । प्रथम
इति—इदमुपलक्षणम्—'तदर्हम्' इति निहितवतेरपि, तत्रापि क्रियाग्रहणानुवृत्ते, द्वितीयान्तादर्हणस्य कर्त्री
क्रियाया वतिरित्यर्थ । तेन तुल्यमिति—तृतीयान्तात्तुल्यमित्यर्थे वति स्याद् यत्तुल्य सा क्रिया चेदित्यर्थ ।
उपमानपदार्थ, उपमेयपदार्थश्च क्रियेति यावत् । तथाच 'ब्राह्मणवदधीते क्षत्रिय' इत्यनेन ब्राह्मणाध्ययनसदृश
क्षत्रियकर्तृकाध्ययनमिति बोध । ब्राह्मणपदञ्चात्र ब्राह्मणाध्ययने लाक्षणिकम्, तस्मात् क्रियाबोधकात् तृतीया-
न्ताद्वतिरिति फलितम् । 'ब्राह्मणसदृश क्षत्रिय' इत्यर्थे 'ब्राह्मणवत् क्षत्रिय' इत्यसाधुरेव । 'पर्वतो वह्निमान्,

दर्पणव्याख्या

'पञ्चकृत्वो भुङ्क्ते' इत्यादौ पञ्चादिशब्दा
❀ पुन पुनर्जन्मेति ❀ ॥ अत एव सकृत्प्रवृत्तो, द्वि पचतीति न । सूत्रस्वारस्याच्च तद्द्योत्यार्थस्य क्रियायामन्वय इति भाव । क्रियाऽन्वयिनामेव
सङ्ख्योत्पत्तिपरा । तस्या एव कृत्वसुजादिर्द्योतक । ❀ स्पष्टमिति ❀
संज्ञेत्यपादानादिमध्यम । क्वचित्तथैव पाठ । अत एव ब्राह्मणस्य पुत्र पन्थान
अन्ये तु—उत्तरभाष्ये करोति = क्रिया निर्वर्तयतीति व्युत्पत्तिप्रदर्शनात्कारकत्वम् । अत एव तेषा क्रियायामन्वय । क्रियाजनकमिति ज्ञाते
पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वम्, पुत्रेणाऽन्यथासिद्धत्वात् । अत एव "गतिकारकोपपदात्कृत्"
का सा क्रियेत्याकाङ्क्षोदयेन, क्रियाया अपि जनकाकाङ्क्षया च तत्रैवान्वयस्यौचित्यात् । 'कारके' इति ॥ प्रथमार्थे सप्तमीत्याहु ।
( पा० सू० ६ । २ । १३९ ) इत्यादौ कारकशब्दस्यापादानादिपरता सङ्गच्छते ।

वार्त्तिककाराणां मते परं न। वस्तुतस्तु 'एकतिङ्विशेष्यकं वाक्यम्' इति तदभिप्रायस्य हेलाराजीयादौ, वैयाकरणभूषणेऽस्माभिश्च प्रतिपादितत्वात्तन्मतेऽपि भवत्येवेत्यवधेयम्॥ कृत्वोऽर्थाः,

प्रभा

नियतलक्षणम्=विवक्षितैकत्वम्। ऋषीणां दर्शनं तात्त्विकं भवतीति मतभेदेन वाक्यत्वभेदो न न्याय्य इत्याह—वस्तुतस्त्विति—एकं तिङन्तं मुख्यविशेष्यीभूतार्थप्रतिपादकं यत्रेति व्युत्पत्त्या मुख्यविशेष्यताश्रयार्थबोधकैकतिङन्तघटितसमुदायत्वरूपं वाक्यत्वं फलितम्। नन्वेकतिङ्घटितस्य वाक्यत्वे 'त्वया शयितव्यम्' 'ब्रूहि ब्रूहि देवदत्त' इत्यस्य चैकवाक्यत्वानापत्तिः, आद्ये तिङन्तघटितत्वाभावात्, द्वितीये 'तिङन्तद्वयघटितत्वात्। किञ्च, 'त्वया शयितव्यमिति मैत्रो ब्रूते' इत्यस्यैकवाक्यत्वापत्तिश्च, इति चेन्न, 'मुख्यविशेष्यतायोग्यक्रियाप्रतिपादकत्वनिष्ठप्रकारतानिरूपिततात्पर्यीयविशेष्यतावत्, पदाघटकञ्च यत्पदद्वयं तदघटितत्वे सति परस्परनिरूप्यनिरूपकभावापन्नविषयत्वाप्रयोजकपदाघटितत्वमेकवाक्यत्वम् इति स्वीकारेणादोषात्। आद्ये मुख्यविशेष्यतायोग्यक्रियाप्रतिपादकत्वनिष्ठप्रकारतानिरूपिततात्पर्यीयविशेष्यतावद् एकमेव शयितव्यपदमिति तादृशपदद्वयाघटितत्वात्, द्वितीये 'नित्यवीप्सयोः' इति सूत्रेण 'सर्वस्य द्वे' इति द्विर्वचननिर्देशेन एतस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते। अतः स्थानिवद्भावेन समुदायस्य पदत्वम्, अवयवयोश्च स्वत एव, अत्रानन्तमितावयवभेदस्य समुदायस्याऽऽदेशत्वात्। एवञ्च 'वृक्षान् वृक्षान्' इत्यत्र णत्वनिषेधः, 'अद्यचेऽद्यचे' इत्यादौ पूर्वरूपादिकम्, 'अहनीतादनीत' इत्यादौ पररूपाभावादिकञ्च सिध्यति। तथाच यद्यपि 'ब्रूहि ब्रूहि' इति पदद्वयम्, तथापि समुदायरूपपदघटकतया पदाघटकपदद्वयाघटितत्वस्य सत्त्वाक्षतत्वात्। तृतीये वदनक्रियायां शयनस्य कर्मत्वेऽपि मुख्यविशेष्यतायोग्यक्रियावाचकपदद्वयघटितत्वाद् दोषाभावो बोध्यः। उदासीनपदमादायातिव्याप्तिवारणाय विशेष्यदलम्। यथा—'त्वया शयितव्यं देवदत्तस्य पक्षम्' इत्येतद्घटके 'त्वया शयितव्यं देवदत्तस्य' इत्यत्र। एतेन—'सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता'। इत्यमरकारोक्तं लौकिकवाक्यलक्षणमपि संगृहीतम्। 'क्रिया वा' इत्यत्र 'वा' शब्दश्चेदर्थे। 'सुप्तिङन्तचयः' इत्यत्र सुप् च तिङ् च सुप्तिङौ तावन्तौ ययोस्ते सुप्तिङन्ते, सुब्विशिष्टं तिङन्तं सुप्तिङन्तम्, सुप्तिङन्ते च सुप्तिङन्तञ्च सुप्तिङन्तानि तेषां चय इत्यर्थः। तथाच सुबन्तचयः—'देवदत्तेन शयितव्यम्' इत्यादिः, तिङन्तचयः—'पचति, भवति' इत्यादिः, सुबन्तविशिष्टतिङन्तचयः—'चैत्रः पचति' इत्यादिः, त्रयाणामपि वाक्यत्वम्।

'अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्'।

इति जैमिनिसूत्रमप्येतत्परमेव। हेलाराजीयेति—हेलाराजः=वाक्यपदीयटीकाकारः, तस्येदं व्याख्यानमित्यर्थे 'वा नामधेयस्य' इत्यनेन वृद्धत्वे 'वृद्धाच्छः' इत्यनेन छप्रत्यये हेलाराजीय इति शब्दः सिध्यति। कृत्वोऽर्थो इति—कृत्वसुच् सुच् च द्वावेव कृत्वोऽर्थौ प्रत्ययौ, बहुवचनन्तु लक्ष्यबहुत्वाभिप्रायेण। तत्रैकशब्दात् 'एकस्य सकृच्च' इति सुचि सकृदादेशे एकवारं पचतीत्यर्थे—'सकृत्पचति' इत्यस्य साधुत्वम्। गणनञ्च—कस्यचित्पदार्थस्य संख्यायत्तया बोधनम्। अभ्यावृत्तिश्चैकशब्देन बोधयितुं न शक्यते इति

दर्पणव्याख्या

इति [illegible] मुख्यतावाचोत्कलित उपादानम्। [illegible]—[illegible] वार्त्तिककाराणामिति [illegible] परम् [illegible]।
[illegible] वस्तुतस्त्विति [illegible]। [illegible] हेलाराजीय इति [illegible]

[illegible] तिङन्तेषु [illegible]।

[illegible] क्रियापदस्य [illegible]॥

इति वाक्यपदीयव्याख्याकारस्य इति शेषः। [illegible] तन्मतेऽपि भवत्येवेति [illegible] [illegible]
[illegible]।

"संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" ( पा० सू० ५ । ४ । १७ ) इति क्रियायोगे तत्साधु-
त्वोक्तेः, क्रियाया अभ्यावृत्तिः = पुनः पुनर्जन्म, तस्मिन् द्योत्ये इति तदर्थात् ।
कारकम्, 'कारके' इत्यधिकृत्य तेषां व्युत्पादनात् । कारकशब्दो हि क्रियापरः, करोति
कर्तृकर्म्मादिव्यपदेशानिति व्युत्पत्तेः । तथाचाग्रिमेष्वपादानादिसंज्ञाविधिषु क्रियाऽर्थककारकशब्दा-
नुवृत्त्या क्रियान्वयिनामेव संज्ञेति भाष्ये स्पष्टम् ।
प्रथमो वतिः, "तेन तुल्यं क्रिया चेद्वतिः" ( पा० सू० ५ । १ । ११५ ) इति विहितः,

प्रभा

अभ्यावृत्तिरत्र न सम्बध्यते । क्रियागणनायां सुजत्र, 'द्वित्रिचतुर्भ्यः सुच्' इति द्व्यादिभ्यः सुजेव, इति पञ्चा-
दिभ्य एव कृत्वसुच्प्रत्ययो बोध्यः । 'पञ्चकृत्वो भुङ्क्ते' इत्यादौ पञ्चादिशब्दास्तत्संख्योत्पत्तिपरास्तद्योतकाश्च
कृत्वसुजादयः । पुनः पुनर्जन्मैवाभ्यावृत्तिस्तस्याश्च साध्यार्थविषयतया क्रियायामेव सम्भवः, न द्रव्यगुणयोः,
तयोः सिद्धस्वभावत्वात् । पुनः पुनर्दण्डः, पुनः पुनः स्थूलः, इत्यादावपि भवनिक्रियाया एवाभ्यावृत्तिः,
एवञ्चाभ्यावृत्तेः क्रियायामेवान्वय आवश्यकः, तदन्वयिताऽवच्छेदकस्यान्यत्रासम्भवात् । नन्वेवं क्रियाग्रहणं
व्यर्थम्, 'एको देवदत्तः' इत्यत्र सुज्वारणायोत्तरसूत्रे क्रियाग्रहणस्यानुवृत्तेरावश्यकत्वात् । संख्यायामिनाम्-
ह्यायत्तया बोधरूपं यद्गणनं तत्रैव हेतुतया गणनलाभे गणनग्रहणं लोके गणनायां प्रसिद्धा ये तेषामेव
ग्रहणार्थमिति युगशरादिशब्दाश्च ते प्रत्ययाः । तथाच 'पञ्चकृत्वो भुङ्क्ते' इत्यादिना पञ्चादिसंख्यान्विका
वर्तमानादिकालिकी एकादिकर्तृका भुज्यादिक्रिया इति बोधः । क्रियापर इति—तथाच भाष्यम्—
'अथवा यावद् ब्रूयात् क्रियायामिति तावत्कारके इति' इति, कारकशब्दः क्रियापर्याय इति तदर्थः । 'एवञ्च
कृत्वा निर्देश उपपन्नो भवति—'कारके' इति । इतरथा हि कारकेष्विति ब्रूयात्' इति भाष्यात् 'कारके'
इति विषयसप्तमी, 'अन्वयी' इत्यध्याह्रियते, तथाच 'क्रियायामन्वयी कर्मादिसंज्ञो भवति' इति
कर्मादिसंज्ञाविधायकानामर्थः । एवञ्च 'कारके' इत्यस्य क्रियायामित्यर्थे कारकसंज्ञा एव नास्ति । 'गतिकारको-
पपदात्' इत्यादौ कारकपदे स्वरितत्वप्रतिज्ञया स्वरितेनाधिकः कार इत्यर्थमाश्रित्य कर्मादीनां ग्रहणम् । क्रियाऽ-
न्वयिनामिति—क्रियायामन्वयि कर्मसंज्ञं स्यात्, क्रियायामन्वयि कर्तृसंज्ञं स्यादित्येवं रूपेणेत्यर्थः । प्रथम
इति—इदमुपलक्षणम्—'तदर्हम्' इति विहितवतेरपि, तत्रापि क्रियाग्रहणानुवृत्तेः, द्वितीयान्तादर्हणस्य कर्त्री
क्रियायां वतिरित्यर्थः । तेन तुल्यमिति—तृतीयान्तात्तुल्यमित्यर्थे वतिः स्याद् यत्तुल्यं सा क्रिया चेदित्यर्थः ।
उपमानपदार्थः, उपमेयपदार्थश्च क्रियेति यावत् । तथाच 'ब्राह्मणवदधीते क्षत्रियः' इत्यनेन ब्राह्मणाध्ययनसदृशं
क्षत्रियकर्तृकाध्ययनमिति बोधः । ब्राह्मणपदञ्चात्र ब्राह्मणाध्ययने लाक्षणिकम्, तस्मात् क्रियाबोधकात् तृतीया-
न्ताद्वतिरिति फलितम् । 'ब्राह्मणसदृशः क्षत्रियः' इत्यर्थे 'ब्राह्मणवत् क्षत्रियः' इत्यसाधुरेव । 'पर्वतो वह्निमान्,

दर्पणव्याख्या

❀ पुनः पुनर्जन्मेति ❀ ॥ अत एव सकृत्प्रवृत्तौ, द्विः पचतीति न । 'पञ्चकृत्वो भुङ्क्ते' इत्यादौ पञ्चादिशब्दाः
संख्योत्पत्तिपराः । तस्या एव कृत्वसुजादिर्द्योतकः । सूत्रस्वारस्याच्च तद्द्योत्यार्थस्य क्रियायामन्वय इति भावः । क्रियाऽन्वयिनामेव
संज्ञेत्यपादानादिमध्यम । क्वचित्तथैव पाठः । ❀ स्पष्टमिति ❀
अन्ये तु—उत्तरभाष्ये करोति = क्रियां निर्वर्त्तयतीति व्युत्पत्तिप्रदर्शनात्कारकत्वम् । अत एव ब्राह्मणस्य पुत्रं पन्थानं
पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वम्, पुत्रेणाऽन्यथासिद्धत्वात् । अत एव तेषां क्रियायामन्वयः । क्रियाजनकत्विति ज्ञाते
का सा क्रियेत्याकाङ्क्षोदयेन, क्रियाया अपि जनकाकाङ्क्षया च तत्रैवान्वयसौचित्यात् । अत एव "गतिकारकोपपदात्कृत्"
( पा० सू० ६ । २ । १३९ ) इत्यादौ कारकशब्दस्यापादानादिपरता सङ्गच्छते । 'कारके' इति तु प्रथमार्थे सप्तमीत्याहुः ।

तत्र यत्तुल्यं सा क्रिया चेदित्युक्तत्वात्। धातुसम्बन्धाधिकारे, 'धातुसम्बन्धे प्रत्ययाः" (पा० सू० ३।४।१) इत्यधिकृत्य तेषां विधानात्।

असमस्तनञ्—समासायोग्यः प्रसज्यप्रतिषेधीयो नञित्यर्थः, उत्तरपदार्थान्वयेऽपि समास-

प्रभा

महानसवत्' इत्यपि महानससदृश पर्वत इत्यर्थेऽसाधुरेव। वह्निमत्त्वेन महानसकर्तृकभवनसदृश पर्वतकर्तृकभवनमित्यर्थे तु साधुरेव।

धातुसम्बन्ध इति—अत्र धातुपद धात्वर्थपरम, शब्दरूपाणा 'धातूनामाकाङ्क्षितसम्बन्धस्य दुरुपपादत्वात्। यदि त्वर्थद्वारको धातूना सम्बन्धो गृह्येत, तदा धातुद्वयादिसत्त्वे एवैतस्य प्रवृत्ति स्यात्तथाच 'गोमानासीत्' 'गोमान् भविता' इत्यादि न सिध्येदिति लक्षणया 'धात्वर्थाना सम्बन्धे प्रत्यया' इत्येवार्थो ग्राह्य। इदञ्च सूत्र ये प्रत्यया यत्र काले उक्तास्ते प्रत्यया धात्वर्थयोरेककालिकत्वादिरूपे सम्बन्धे विवक्षिते प्राधान्येन या क्रिया प्रतीयते तस्या यत्कालिकत्व तस्मिन्काले गुणभूतक्रियावाचिभ्य प्रत्यया भवन्तीति कालान्तरेऽपि प्रत्ययान् विदधाति। काल निमित्तीकृत्य विहिता ये प्रत्ययास्तेऽस्य विषया। तथाच गुणीभूतक्रियावाचकोत्तरप्रत्ययार्थस्य प्रधानीभूतक्रियायामेवान्वय इत्युक्त कारिकायाम्—धातुसम्बन्धाधिकारनिष्पन्नेति। यथा 'घसन् ददर्श' 'पश्यन् ययौ' इत्यत्र घासदर्शनयोर्दर्शनगमनयोश्च भूतकालिकत्वम्, तत्र वर्तमानकालिकलट्स्थाने शतृप्रत्ययो नोपपद्यते इति 'धातुसम्बन्धे' इत्यनेन प्रधानीभूताऽऽख्यातार्थक्रियाकालमादाय भूते लट्। अतीतघासकर्तृकर्तृक परोक्षभूतकालिक दर्शनमित्यादिरूपेण बोध।

समासायोग्य इति—प्रसज्यनञ क्रियायामेवान्वयेन सुबन्तार्थेन सह सामर्थ्याभावात् समासायोग्य इत्यर्थ। प्रसज्येति—प्रपूर्वकसञ्जधातो क्त्वो ल्यपि नलोपे साधु। प्रतिषिध्यतेऽसौ प्रतिषेध, कर्मणि घञिति। तथाच प्रसज्य=आपाद्य=वितर्क्य=तर्को नाम—'तर्कयामि' इत्यनुभवसाक्षिकमानसत्वव्याप्य जातिविशेषाश्रय तद्विषयीकृत्येति यावत्। प्रतिषेध=निषेधविषय प्रतियोगी यस्याभावस्य सोऽभाव प्रसज्यप्रतिषेध=अत्यन्ताभाव इत्यर्थ। 'सुपा' इति समास। प्रसज्यप्रतिषेधम्=अत्यन्ताभाव वाचकत्वे नार्हतीति यो नञ् 'तदर्हति' इति सूत्रेण छे प्रत्यये प्रसज्यप्रतिषेधीयो नञ् अत्यन्ताभावार्थक इति यावत्। अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वमिति मतेनेदम्। अन्ये तु प्रसज्येत्यस्य क्रियया सम्बध्येत्यर्थ। क्रियान्वय्यभावार्थकनञित्यर्थ। तथाचोक्तम्—

'प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्।
पर्युदास स विज्ञेयो यत्रोत्तरपदेन नञ्' ॥ इति ॥

नञ्समासेऽपि विभाषाधिकारात् समासाभावेऽपि उत्तरपदार्थेन घटादिनैव नञर्थस्य सम्बन्धात् 'न घट' इत्यनेनापि आरोपितघटत्ववान्, प्रतियोगितासम्बन्धेनाभावविशिष्टो घट इति वा बोधात् समासायोग्य इति विशेषणम्। तथाच 'न घट' इत्यत्र समासयोग्यत्वसत्त्वात् क्रियायामन्वयाभावेऽपि न दोष। समासयोग्यत्वञ्च नञ—उत्तरपदार्थनिष्ठविषयतानिरूपितविषयताप्रयोजकत्वम्। समासायोग्यस्यैव विवरणम्—प्रसज्यप्रतिषेधीयेति।

दर्पणव्याख्या

ॐ इत्युक्तत्वादिति ॐ तथाच ब्राह्मणवदिति सूत्रे ब्राह्मणशब्दस्य ब्राह्मणकर्तृकाध्ययनतुल्यमत्र कर्तृकमध्ययनमिति ब्राह्मणवदधीत' इत्यतो बोध। तत्र तस्यवति विहितवतेरंथ्यगुणादयिरुप्य भूते प्रथम इत्युक्तम्। ॐ विधानादिति ॐ तत्र धातुशब्दस्य धात्वर्थपरतया 'घसन् ददर्श' इत्यत्र अतीतघासकर्तृकर्तृक दर्शनमित्यादिरीत्या बोधादिति भाव॥

ॐ प्रसज्येति ॐ प्रतिषेधशब्द कर्मघञन्त, बाहुल्कात्। प्रसज्य=आपाद्य प्रतिषेध =प्रतियोगी यस्य तादृशा

विकल्पेन पक्षेऽसमस्तत्वाद् यथाश्रुतग्रहणायोगात् ।

नचासमस्तनञः क्रियान्वये मानाभावः, न त्वं पचसि, न युवां पचथः, चैत्रो न पचति, घटो न जायते इत्यादौ क्रियाया एव निषेधप्रतीतेः । अत एव विद्यमानेऽपि घटे तादृशप्रयोगः ।

प्रभा

ननु 'घटो नास्ति' इत्यत्र घटाभाव एव न तु क्रियाभाव इत्याशङ्कायामाह—नचासमस्तेति ।

असमस्तनञ इति—समासाघटकनञर्थस्यात्यन्ताभावरूपस्येत्यर्थः । न त्वमिति—यदि नञर्थाभावे प्रतियोगितया युष्मदाद्यर्थस्यान्वयः स्यात्तदा 'न त्वं पचसि' इत्यनेन त्वदभावकर्तृकः पाक' इति 'न युवां पचथ', इत्यनेन 'द्वित्वविशिष्टयुष्मदभावकर्तृकः पाकः' इति च बोधात् तिङा युष्मदर्थसामानाधिकरण्याभावान्मध्यमादिपुरुषानुपपत्तिः, अभावरूपकर्तुरैक्यात् 'न युवां पचथ' इत्यत्र द्विवचनासिद्धिः, अभावे पाकक्रियाकर्तृत्वबाधात्तज्जन्यबोधस्याप्रमात्वापत्तिः, अनुभवसिद्धस्य तत्क्रियाऽभावविशेष्यकबोधस्यापलापश्च स्यादिति तत्तत्क्रियाप्रतियोगिकाभावविशेष्यकबोध एव स्वीकर्तव्य इति भावः ॥

चैत्र इति—अभावे एकत्वविशिष्टचैत्रादेर्विशेषणत्वे एकवचनस्य सिद्धावपि प्रतियोगिनो द्वित्वादिविशिष्टत्वेऽपि एकवचनमेव स्यादिति भावः ॥

निषेधप्रतीतेरिति—'त्वत्कर्तृकपाकाभावः' इति धात्वर्थक्रियाया अभावबोधने तु युष्मदाद्यर्थसामानाधिकरण्यस्य तिङि सत्त्वात्पुरुषव्यवस्था सिध्यतीति भावः ।

यत्तु—'न त्वं पचसि' इत्यादौ युष्मच्छब्दस्य युष्मदर्थभिन्ने लक्षणया लक्ष्यार्थस्यापि युष्मदर्थतया तत्र तिङ्सामानाधिकरण्यसत्त्वान्न पुरुषव्यवस्थानुपपत्तिरिति तन्न, युष्मदर्थस्य, तद्भिन्नस्य च पाककर्तृत्वाभावदशायामिष्टस्य 'न त्वं पचसि' इत्यादिप्रयोगस्यासङ्गत्यापत्तेः, युष्मदर्थभिन्नस्य कर्तृत्वेऽपि युष्मच्छब्दार्थे द्वित्वविवक्षायाम् 'न युवां पचथ' इत्यादिप्रयोगानापत्तेश्च । अत एव—प्रसज्यप्रतिषेधीयनञ क्रियाप्रतियोगिकाभावस्य बोधकत्वादेव ।

विद्यमानेऽपीति—घटवत्तानिश्चये घटाभावबोधस्याशक्यतया तत्र घटकर्तृकोत्पत्त्यनुकूलव्यापाराभाव एव बोद्धव्य इति भावः । यद्यपि घटात्यन्ताभावस्य नित्यतया घटाभावजननबोधनं न सम्भवति इति 'विद्यमानेऽपि' इत्युक्तिर्निष्फला, तथापि उत्पादविनाशशाली कश्चनापरोऽप्यत्यन्ताभाव इति पक्षे घटाभावेऽपि जननाश्रयत्वसम्भवाद् घटस्य विद्यमानत्वोक्तिरित्याशयात् ।

तादृशेति—'घटो न जायते' इत्येतादृश इत्यर्थः । 'तथाप्रयोग' इत्येव लिखितपुस्तकेषु पाठः ।

दर्पणव्याख्या

ऽभावोऽर्थो यस्येति व्युत्पत्त्याऽभावार्थक इत्यर्थः । ॐ यथाश्रुतेति ॐ 'न ब्राह्मणमानय' इत्यादौ नञर्थारोपस्य ब्राह्मणादावन्वयेन व्यभिचारापत्तेरिति भावः । ॐ निषेधप्रतीतेरिति ॐ अत्यन्ताभावप्रतीतेरित्यर्थः । तथाच तादृशप्रतीतिरेवोक्तनञर्थस्य क्रियाऽन्वयित्वे मानमिति भावः ।

तस्य प्रतियोगितया युष्मदाद्यर्थान्वयित्वे तु युष्मदादौ लकारवाच्यकर्तृवाचकत्वरूपसामानाधिकरण्याभावान्मध्यमपुरुषाद्यनुपपत्तिर्युष्मदर्थप्रतियोगिकाभावस्यैकत्वेन द्विवचनाद्यनुपपत्तिश्चेति सूचयितुम्—ॐ न त्वं पचसि ॐ ॐ न युवां पचथः ॐ इत्युक्तम् । एवं चैत्रप्रतियोगिकाभावकर्तृत्वोपगमे पाके तत्कर्तृकत्वबाधः, पाकानुकूलकृत्यभावार्थकत्वे त्वन्मते पुरुषव्यवस्था पकाभावेन कदाचिन्मध्यमोत्तमयोरापत्तिश्चेति बोधयितुम्—ॐ चैत्रो न पचति ॐ इत्युक्तम् । ॐ अत एवेति ॐ नञ क्रियाप्रतियोगिकाभावबोधकत्वादेवेत्यर्थः ॥

ॐ तादृशप्र ... जायते' इत्याकारक इत्यर्थः । घटस्य विद्यमानताऽवस्थायां घटकर्तृकोत्पत्त्यनुकूल-

तथाच 'घटो नास्ति' इत्यत्राप्यस्तित्वाभाव एव बोध्यते। नहि घटो न जायते, नास्तीत्यनयो धात्वर्थभेदान्तरेणास्ति विशेषः। तथाच 'भूतले न घटः' इत्यत्राप्यस्तीत्यध्याहार्य्यम्,

प्रभा

तथाच = 'न त्वं पचसि' इत्यादौ क्रियानिषेधाऽवश्यकत्वे च।

यदि नञर्थस्य क्रियायामन्वयस्तदा घटकर्तृकोत्पत्त्यनुकूलव्यापारस्य प्रकृते सत्त्वेन 'घटो न जायते' इति वाक्यार्थस्याबाधिता प्रतीतिर्जायते। घटाभावस्य कर्तृत्वे तु जननप्रतीतिर्बाधिता स्यादिति भावः। नचैवमपि लडर्थवर्तमानत्वस्य धात्वर्थे एवान्वयात् प्रकृते घटकर्तृकोत्पत्त्यनुकूलवर्तमानकालाऽवच्छिन्नव्यापारासत्त्वेन प्रतियोगिनोऽप्रसिद्ध्या तादृशव्यापाराभावस्यापि बोधो न स्यादिति वाच्यम्, वैयाकरणनये बौद्धतादृशव्यापारस्य, नैयायिकनये देशान्तरीयस्य च तस्य प्रतियोगिनः प्रसिद्धेः। यथा 'वायौ रूपं नास्ति' इत्यत्र वायुनिरूपिताधेयतावद्रूपस्याप्रसिद्धावपि बौद्धतादृशरूपकर्तृकसत्ताभावस्य शाब्दिकनये प्रतीतिः। नैयायिकनये च स्पर्शगतवायुनिरूपिताऽधेयत्वस्य रूपे भ्रममादाय तज्जन्यो बोध उपपाद्यः।

अस्तित्वाभाव इति—घटकर्तृकसत्ताया अस्तित्वाभाव इत्यर्थः। ननु घटस्य विद्यमानत्वे घटाभावबोधस्य बाधात् क्रियानिषेधप्रतीतिस्वीकारेऽपि घटस्याविद्यमानत्वे घटाभावप्रतीतौ बाधकाभाव इत्याशङ्कायामाह—नहीति—तथाच कचित् क्रियाऽभावस्य कचित्तदन्याभावस्य प्रतीत्यभ्युपगमेऽर्धजरतीयं स्यात्तच्च न युक्तमिति भावः। तथाच = प्रसज्यप्रतिषेधार्थकनञः क्रियान्वयनियमे च। अध्याहार्यमिति—यत्र क्रियावाचकपदं न श्रूयते तत्रोक्तनियमात् 'अस्तिर्भवन्तीपरो( भवन्तीति 'लट्' इत्यस्य संज्ञा )ऽप्रयुज्यमानोऽप्यस्ति' इति भाष्याच्च नञर्थान्वययोग्यक्रियापदमध्याहार्यमिति भावः। नञाध्याहृतपदप्रतिपाद्यक्रियाया अनुयोगितासम्बन्धेन नञर्थाभावेऽन्वयः। एवञ्च 'घटकर्तृकसत्ताभावः' इत्येव बोधस्तत्रापि।

यत्तु—'भूतले न घटः' इति वाक्यात् 'भूतलनिरूपिताऽधेयत्वाभाववान् घटः' इत्येव बोध इति तन्न, कारकाणां क्रियैवान्वयनियमेन क्रियाऽतिरिक्ते नञर्थे भूतले इत्यधिकरणकारकस्यान्वयानौचित्यात्। अत एव 'सुडनपुंसकस्य' इति सूत्रे 'नपुंसकस्य सुटो न सर्वनामस्थानसंज्ञा' इत्यर्थे 'नहि नपुंसकेन सामर्थ्यम्, केन तर्हि, भवतिना' इति भाष्यं सङ्गच्छते।

शाब्दबोधस्थले द्विविधो हि कार्यकारणभावः—आत्मनिष्ठप्रत्यासत्त्या, विषयनिष्ठप्रत्यासत्त्या च। तत्र कार्यकारणयोः कार्यताऽवच्छेदककारणताऽवच्छेदकसम्बन्धाभ्यां सामानाधिकरण्यमपेक्ष्यते। तथाच आत्मरूपमधिकरणमादाय यदा कार्यकारणभावस्तदा शाब्दबोधरूपकार्यस्य, उपस्थितिरूपकारणस्य च आत्मनि समवायसम्बन्धेन सामानाधिकरण्यमिति आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभाव इत्युच्यते। तत्र समवायसम्बन्ध एव कार्यताऽवच्छेदकः, कारणताऽवच्छेदकश्च।

शाब्दबोधीयविषयताऽऽश्रयः, उपस्थितीयविषयताऽऽश्रयश्च यो घटादिस्तन्निष्ठविषयतामादाय विषयतासम्बन्धेन यदा शाब्दबोधोपस्थित्योः कार्यकारणभावस्तदा विषयनिष्ठप्रत्यासत्त्या कार्यकारणभाव इति व्यवह्रियते। तत्र विषयता एव कार्यतावच्छेदकसम्बन्धः, कारणताऽवच्छेदकसम्बन्धश्च। सा च नानाविधा—प्रकारता,

दर्पणव्याख्या

व्यापाराभावाऽबाधात्वन्मते तु घटाऽभावे उत्पत्त्यनुकूलव्यापारकर्तृत्वाऽभावात्तत्प्रयोगानुपपत्तिरिति भावः। उक्तरीत्या नञः क्रियाप्रतियोगिकाऽभावबोधकत्वध्रौव्ये घटो नास्तीत्यत्र घटाऽभावकर्तृकत्वस्य धात्वर्थे अबाधेऽपि तद्बोधमनादृत्य घटास्तित्वाभावबोधाभ्युपगम उचितः, वक्ष्यमाणकार्यकारणभावबलादित्याह ❀तथाच घट इति❀। तदेवोपपादयति❀ नहीत्यादिना❀।

ननु यत्र न क्रियावाचकसमभिव्याहारो भूतले न घट इत्यादौ तत्र नञा कथं क्रियाप्रतियोगिकाभावो बोधनीयोऽत आह—❀ तथाचेति ❀। ❀ अध्याहार्य्यमिति ❀। 'अस्तिर्भवन्तीपरः' इत्यादिभाष्ये क्रियान्तराभावेऽप्यस्तिक्रियामादाय

शेषं
प्रकारतासम्बन्धेन नञर्थविशेष्यकबोधे धातुजन्यभावनोपस्थितेर्हेतुत्वस्य क्लृप्तत्वात् ।

प्रभा

विशेष्यता,अवच्छेदकता, संसर्गताऽऽदिविषयतापदव्यवहार्य्यो । तत्र विषयनिष्ठप्रत्यासत्तिपक्षमादायाह—प्रका-
रतासम्बन्धेनेति—नञर्थात्यन्ताभावविशेष्यको बोधः कार्यम्, नञर्थाभावनिष्ठविशेष्यतानिरूपितशाब्दबोधीय-
प्रकारता च कार्यताऽवच्छेदकसम्बन्धः, धातुजन्यभावनोपस्थितिः कारणम्, उपस्थितीयविशेष्यता च कारणता-
ऽवच्छेदकसम्बन्धः । तथाच आत्मधारणानुकूलव्यापाररूपसत्ताया अस्तिना विशेष्यतयोपस्थितिसत्त्वात्तत्र
नञर्थाभावनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन घटकर्तृकसत्ताभाव इति बोधस्य च सत्त्वाल्लक्षणसमन्वयः।
एतेन 'भूतले न घटः' 'इत्यत्र भूतलनिरूपिताऽऽधेयत्वाभाववान् घटः' इत्येव बोध इत्यपास्तम्, उक्त-
नियमविरोधात्, भाष्याननुमतत्वाच्च ।
अत्र नैयायिकाः—'भूतले न घटः' इत्यत्र 'भूतलनिरूपिताऽधेयत्वाभाववान् घटः' इत्येव बोधः । 'अहं
नास्मि' 'त्वं नास्ति' इत्यादौ मदभावे त्वदभावे युष्मदस्मदोर्लक्षणया तिङा युष्मदस्मदर्थस्य लक्ष्यार्थस्य सामाना-
धिकरण्यसत्त्वान्न दोषः। नच 'युवां न स्थ' इत्यत्र युष्मदर्थाभावस्य युष्मदर्थद्वित्वेऽपि तस्यैकत्वाद् द्विवचनानुप-
पत्तिः, प्रतियोगिनो द्वित्वादिविशिष्टत्वे युष्मदर्थकर्तृकसत्तानिरूपिततिङर्थाऽश्रयत्वप्रतियोगिकाभावस्यैव द्वित्व-
विशिष्टयुष्मदाद्यर्थे, 'सत्तानिरूपिताऽश्रयत्वाभाववन्तौ' 'युवाम्' इति 'न युवां स्थः' इत्यादिना 'सत्तानिरू-
पिताश्रयत्वाभाववन्तौ घटौ' इति घटौ न स्तः, इत्यादिना च बोधाङ्गीकारात्पुरुषव्यवस्थोपपत्तेः । एवं 'घटो न
जायते' इत्यत्र 'उत्पत्त्यनुकूलव्यापाराऽश्रयत्वाभाववान् घटः' इत्येव बोधः । 'वायौ रूपं नास्ति' इत्यत्र वायु-
निरूपिताधेयत्वाभाववद् रूपम्' इत्येव बोध इत्याहुस्तन्निरासायाऽऽह—शेषमिति—यदा कश्चिदपि पाकं न
करोति तदाऽपि 'न त्वं पचसि' इत्यादिप्रयोगा इष्यन्ते, ते न सिद्ध्येयुः, युष्मद्भिन्नकर्तृकपाकस्याभावात् ।
नच देशान्तरे युष्मदाद्यर्थभिन्नकर्तृकपाकः सम्भवतीति वाच्यम्, एवमपि इह नगरे पाकसामान्याभावसत्त्वे
'इह नगरे त्वं न पचसि' इत्यादीनामसिद्धितादवस्थ्यात्, तादृशप्रतियोग्यप्रसिद्धेः। एवं सामान्यादिषु
'समवायसम्बन्धेन सत्ता नास्ति' इति वाक्येन शाब्दबोधानापत्तिः, समवायसम्बन्धेन सामान्यादिषु
कस्यापि पदार्थस्यावृत्तितया समवायसम्बन्धावच्छिन्नसामान्यादिवृत्तित्वस्याप्रसिद्धेः । 'सामान्यादिवृत्तित्व

दर्पणव्याख्या

❀ प्रकारतासम्बन्धेनेति ❀ नञर्थाभावनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन
वाक्यपरिपूर्तिबोधनादिति भावः । ❀ प्रकारतासम्बन्धेनेति ❀ नञर्थाभावनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन
शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन धातुजन्योपस्थितेर्हेतुत्वस्य 'न त्वं पचसि'इत्याद्यनुरोधेन क्लृप्तत्वाद्भावेऽपि
तद्बोधोपपत्तयेऽस्त्यध्याहार आवश्यक इति भावः । 
ननु नञर्थाभावस्य शाब्दबोधे प्राधान्योपगमे तदर्थभेदात्मकाभावस्यापि प्राधान्यमेवाभ्युपेयम्, अभावत्वाविशेषात्,
तथाच 'असर्वस्मै' इत्यादौ सर्वनामताप्रयुक्तस्मायादिकार्यानुपपत्तिः, 'अतिसर्वाय' इतिवत् । असर्वशब्दात् 'सर्वभिन्नः' इति
बोधेन भेदांशे सर्वपदार्थस्योपसर्जनत्वात् महासंज्ञाकरणेन संज्ञोपसर्जनार्थानां सर्वादिबहिर्भावात् । किञ्चानेकमन्यपदार्थे
इत्यादावनेकशब्दादेकवचनानुपपत्तिरत आह—शेषमिति—
नन्वत्वं पचसीत्यादावित्रापि नञः पर्युदासबोधकत्वाऽभ्युपगमाद् युष्मल्लक्ष्यार्थत्वद्भिन्ने सामानाधिकरण्यात्रा-
भावात् पुरुषव्यवस्थाऽनुपपत्तिः । तद्रूपस्यायास्तत्राबाधाच्च द्विवचनाऽनुपपत्तिरपीति । तादृशकार्य्यकारणभावस्यैवाप्रामाणि-
कतया कथं तदनुरोधोऽस्त्याध्याहारनियामकः । 'घटो न जायते' इत्यादौ प्रसज्यप्रतिषेधार्थकनञ्स्थले यथा नानुपप-
त्तिस्तथा वक्ष्यते । तथाच भूतले घटो नेत्यादौ भूतलवृत्तिघटाभाव इति बोधे बाधकाभावोऽत आह—❀ शेषमितिः❀ ।

नञर्थनिर्णये ( निरूपणे ) वक्ष्यते ॥ १६ ॥

तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम् ।
साधुत्वमष्टकस्यास्य क्रिययैवावधार्य्यताम् ॥ १७ ॥

"यस्य च भावेन भावलक्षणम्" ( पा० सू० २ । ३ । ३७ ) इत्यत्र भावनार्थकभावशब्देन तद्योगे साधुत्वाख्यानलाभात् । "षष्ठी चानादरे" ( पा० सू० २ । ३ । ३८ ) इति तदग्रिमसूत्रेऽपि चकाराद्यस्य च भावेनेत्यायातीत्यर्थः ।

प्रभा

समवायसम्बन्धावच्छिन्नत्वाभाववत्' इति बोधस्तु वक्तुमशक्यः, तादृशाभावतात्पर्येण 'पृथिव्यामपि सत्ता नास्ति' इति प्रयोगापत्तेः, पृथिवीनिरूपितघटवृत्तिवृत्तित्वे समवायसम्बन्धावच्छिन्नत्वाभावात् ॥ १६ ॥

**तथा यस्य चेति**—तथा = सम्बोधनाद्यर्थस्येव । 'यस्य च भावेन' इत्येकदेशेन सूत्रं लक्ष्यते । तथाच यस्य क्रियया क्रियान्तरं लक्ष्यते ततः = ज्ञापकक्रियाश्रयवाचकात् सप्तमीत्यर्थकेन 'यस्य च भावेन भावलक्षणम्' इति सूत्रेण विहिता सप्तमी । 'षष्ठी च' इत्यनेन 'षष्ठी चानादरे' इति सूत्रं लक्ष्यते । अनेनापि ज्ञापकक्रियाऽऽश्रयवाचकादनादरे गम्ये षष्ठी सप्तमी च, 'च' शब्देन पूर्वसूत्रात् सप्तम्यनुवृत्तेः । तत्र षष्ठीसप्तम्योः ज्ञापकत्वमर्थः 'गोपु दुह्यमानासु गतः' इत्यनेन दोहनकर्माभिन्नगोनिष्ठज्ञापकतानिरूपितज्ञाप्यतावदतीतकालिकगमनाश्रयो देवदत्तादिरिति बोधः । 'भावलक्षणम्' इत्युक्तेर्ज्ञाप्यतायाः क्रियायामेव सत्वात्र तत्रैवान्वयस्यौचित्यात् 'छात्रेष्वधीयानेषु गतः' इत्यनेनाप्यध्ययनकर्त्रभिन्नछात्रनिष्ठज्ञापकतानिरूपितज्ञाप्यतावदतीतकालिकगमनाश्रयाभिन्नश्चैत्रादिरिति बोधः । एवं 'रुदति रुदतो वा प्राव्राजीत्' इत्यत्र 'षष्ठी चानादरे' इति षष्ठी-सप्तम्यौ । तत्र रोदनकर्त्रभिन्नपुत्रादिविशिष्टमतीतकालिकं यद् व्रजनं तदाश्रयः पित्रादिरिति बोधः । व्रजने पुत्रादिवैशिष्ट्यञ्च—स्ववृत्तिरोदनकालिकत्वम् स्वविषयकानादरसामानाधिकरण्यमेतदुभयसम्बन्धेन । इमे षष्ठीसप्तम्यौ यत्र मानान्तरेण ज्ञातस्यार्थस्य कालविशेषादिज्ञापनाय शब्दप्रयोगस्तत्रैवेति 'राहूपरागे स्नायात्' इत्यादावधिकरणे एव सप्तमी, नानेन । उक्तोदाहरणेषु रुदतीत्यादिषु 'धातुसम्बन्धे' इत्यनेन भूते लट् ।

दर्पणव्याख्या

तथाच यदा युष्मदर्थाभिन्नकर्तृको न पाकस्तदा न त्वं पचसीति प्रयोगाऽनापत्तिः । पर्युदासद्योतकत्वादिमतेऽतस्तत्र प्रसज्यप्रतिषेधार्थकत्वमेवाङ्गीकरणीयमित्युक्तयुक्त्या कार्य्यकारणभावस्यावश्यकतेत्यादिशेषपदार्थः । नैयायिकमतमपि तत्रैव व्यक्तीभविष्यति । 'नञर्थनिरूपणे' इत्यस्य 'विशेषण विशेष्यो वा न्यायतस्त्ववधार्यताम्' इति कारिकाव्याख्यानावसरे इति शेषः । वक्ष्यते इति—'एतत्तदोः इति सूत्रे 'अनञ्'समासग्रहणेन नञ्समासान्तर्गतोपसर्जनीभूतार्थप्रतिपादकानामपि गणपठितानां सर्वादित्वज्ञापनाश्नोक्तानुपपत्तिः । तथा अनेकमन्य' इत्यत्र विशेष्यवाचकैकवचनान्त 'सुप्' शब्दानुरोधात्, 'सेव्यतेऽनेकया' इत्यादौ प्रत्येकं योषासु सेवनान्वयबोधानुरोधादेकवचनमिति न तदनुपपत्तिरपीति वक्ष्यते इत्यर्थः । तद्योग इति—क्रियान्वय इत्यर्थः ॥ १६ ॥

❀ साधुत्वाऽऽख्यानलाभादिति ❀ अयम्भावः—"यस्य च भावेन भावलक्षणम्" । ( पा० सू० २।३।३७ ) इति सूत्रेण क्रियाज्ञापकक्रियाश्रयवाचकपदात् सप्तमी विधीयते । 'भावलक्षणम्' इत्युपादानाज्ज्ञापकस्वरूपसप्तम्यर्थस्य क्रियायामेवान्वयः । अत एव 'गोषु दुह्यमानासु गतः' इत्यादौ दोहनक्रियाऽऽधारकालेन गमनपरिच्छेदकत्वं युज्यते इति ।

❀ आयातीति ❀ । समस्तसूत्रमेव तत्रानुवर्तते इत्यर्थः । तथाचाऽनादरे गम्यमाने यन्निष्ठक्रियायाः क्रियान्तरज्ञापकत्वं तद्वाचकत्वेनि मदर्थात् तद्विहितयोरपि तयोः षष्ठीसप्तम्योः क्रियायोगे एव साधुत्वं लभ्यत इत्यर्थः । ननूक्तानां क्रियान्वया

साधुत्वमिति—तत्स्वरूपं तु वक्ष्यते।
क्रिययैवेति—अयं भावः-भूवादिसूत्रादिषु प्रायशः क्रियाशब्देन भावनाव्यपदेशात् तत्र तस्य
साङ्केतिकी शक्तिः। फलांशे क्वाचित्कः—क्रियत इति यौगिकः प्रयोगः। तथाच संज्ञाशब्दस्या-
नपेक्ष्य प्रवृत्तत्वेन बलवत्त्वाद्भावनान्वय एव साधुता लभ्यते। अत एव संज्ञाशब्दप्राबल्यात् 'रथन्त-
रमुत्तराग्रन्थपठितऋक्ष्वेव गेयम्, नतु वेदे तदुत्तरपठ्यमानऋक्षु' इति नवमे निर्णीतम्।

प्रभा

साधुत्वमिति—'व्याकरणव्यङ्ग्यो जातिविशेषः साधुत्वम्' इति वक्ष्यते इत्यर्थः। तथाच क्रियान्वये एवैषां
साधुत्वं नान्यथेति भावः। नन्वस्तु क्रियान्वयेऽष्टानां साधुत्वम्, परन्तु क्रिया च धात्वर्थ एवेति फलमात्रं धात्वर्थ
इति मते फलान्वयेऽपि क्रियान्वयित्वमक्षतमेवेति न पाक इत्यादिस्थले एषामन्वयबलेन भावनाया धात्वर्थत्वं सिध्य-
तीत्याशङ्कायामाह—अयम्भाव इति। तस्य = क्रियाशब्दस्य। सङ्केतात् = शास्त्रकारीयव्यवहारात् आगता
शक्तिः साङ्केतिकी—अध्यात्मादित्वात् ठञ्, रूढिशक्तिरिति यावत्। यौगिक इति—योगात् = अवयवशक्तेः
आगतो यौगिकः। अनपेक्ष्येति—प्रकृतिप्रत्ययशक्तिमननुसन्धायेत्यर्थः। तथाच क्रियाशब्देन क्रियते या सा
क्रिया = फलम् इति प्रकृतिप्रत्ययतदर्थज्ञानपूर्वकमेव क्रियाशब्देन फलप्रतीतिः। व्यापारस्य तु शक्तिज्ञानमात्रे-
णोपस्थितिरिति शीघ्रोपस्थितिकतया क्रिययैवाबधार्यतामित्यत्र क्रियापदेन भावनाया एव ग्रहणम्, नतु फलस्य।
फलस्य तु क्वचित्प्रमाणान्तरसत्त्वे एव। यथा 'क्रियाविशेषणानां कर्मत्वम्' इत्यत्र फलस्य ग्रहणम्। अत एव—
रूढेर्बलवत्त्वादेव। प्राबल्यादिति प्रकृतिप्रत्ययाद्यनपेक्षतया शीघ्रोपस्थितिकत्वमेव बलवत्त्वे बीजमित्युक्तं
प्राबल्यादिति। अत एव = संज्ञाशब्दस्यानपेक्ष्यप्रवृत्तत्वादेव। संज्ञाशब्दानां प्राबल्ये मीमांसाभाष्यमपि प्रमाण-
यति—रथन्तरमिति—रथन्तरशब्दः सामवेदीयमन्त्रविशेषः। उत्तरेति—'रथन्तरमुत्तरयोर्गायति' इति श्रूयते।
अथेदानीमिदं सन्दिह्यते—रथन्तरयोन्यपेक्षया उत्तरत्वविशिष्टयोर्योन्योः 'रथन्तरमुत्तरयोर्गायति' इति श्रुतिघट-
केन 'उत्तरयोः' इति पदेन गृह्यते, उत उत्तरानामकग्रन्थपठितऋचोर्वा ग्रहणमिति। तत्र उत्तरत्वविशिष्टयो-
रित्यर्थे किन्निरूपितमुत्तरत्वमित्यवध्याकाङ्क्षा जायते। ग्रन्थस्य ग्रहणे तु अवध्याकाङ्क्षा न जायते इत्यनपेक्ष्य-
बोधकत्वेन बलवत्त्वादुत्तराग्रन्थपठितऋचोरेव ग्रहणमिति मीमांसाया नवमाध्याये निर्णीतम्, इति रूढेर्बल-

दर्पणव्याख्या

❀ तत्स्वरूपमिति ❀ साधुत्वस्वरूपमित्यर्थः। ❀ वक्ष्यत इति ❀
भावेऽपि शक्तत्वरूपसाधुत्वं सुलभमत आह—
साधुत्वनिर्वचनावसर इति शेषः।
साधुत्वं न शक्तत्वम्, अपशब्दादपि बोधोदयात्, किन्तु व्याकरणैर्व्यञ्जिका पुण्यजनकतावच्छेदकजातिरिति वक्ष्यत
इत्यर्थः। प्रकृते च व्याकरणेन क्रियान्वितत्वेव तद् व्यज्यत इति तदन्यस्यासाधुतैवेति भावः।
ननु 'क्रिययैवावधार्यताम्' इति मूलेन क्रियाऽन्वये एवोक्तानां साधुत्वं लभ्यते इति सत्यमेव, तथापि भाष्ये
क्रियापदस्य फलेऽपि प्रयोगात्साक्षात्परम्परया वा क्रियापदार्थफलान्वयेनापि तेषां साधुत्वोपपत्तौ लोकरीतिर्धातोर्व्यापारवाच-
कत्वमाधिकेत्याशङ्कयाऽऽशयं प्रकाशयति–❀ अयम्भाव इति ❀। ❀ प्रायशः क्रियाशब्देनेति ❀ तथाच प्रयोगबाहुल्यं
रूढिसद्भावे प्रयोजकमिति भावः।
❀ साङ्केतिकीति ❀ सङ्केताभिव्यङ्ग्या रूढिरित्यर्थः। तत्र हेतु—❀ क्वाचित्क इति ❀। तत्र नियामकमाह—
❀ यौगिक इति ❀ क्रियते = व्यापारेण निष्पाद्यते इति व्युत्पत्तेरिति भावः। ❀ अनपेक्ष्येति ❀ प्रकृतिप्रत्ययशक्तिमन-
नुसन्धायेत्यर्थः। ❀ अत एवेति ❀ संज्ञाशब्दस्यानपेक्ष्य प्रवृत्तिकत्वेन बलवत्त्वादेवेत्यर्थः।
❀ नवमे इति ❀ मीमांसानवमाध्याये इत्यर्थः। तथाहि—रथन्तरं हि "यद्योन्यां तदुत्तरयोर्गायति" इति श्रूयते।

किञ्च फलांशोऽपि भावनायां विशेषणम्, कारकाण्यपि क्वचित्तथाभूतानि, इति "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" ( जै० सू० ३ । १ । २२ ) इति न्यायेन सर्वे सेवका राजानमिव भावनायामेव परस्परनिरपेक्षाण्यन्वियन्ति । 'नहि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके' इति न्यायेनापि फलं त्यक्त्वा भावनायामेवान्वियन्तीति मीमांसका अपि

प्रभा

यत्त्वं स्पष्टमेवोपलभ्यते । एवञ्च वेदे रथन्तरयोन्युत्तरं बृहद्योनिः पठिता, तस्यां रथन्तरं न गीयते, किन्तूत्तराग्रन्थपठितमृक्ष्वेवेत्युक्तम् । ननु क्रियाशब्दः 'फले यौगिकः' 'भावनायां रूढः' इति निर्णीते एवोक्ताधिकरणानुरोधेन क्रियापदेन भावनाया ग्रहणमिति वक्तुं शक्यते, कर्मणि प्रत्यये फलपरत्वम्, करणे प्रत्यये भावनापरत्वमिति योगेनैव निर्वाहः । किञ्च फलस्यापि 'कर्मवत्कर्मणा' इति सूत्रे क्रियापदेन ग्रहणात्, साध्यत्वेन प्रतीयमानत्वादस्त्यादौ सत्तादेरेव क्रियात्वोपपादनाच्च सर्वत्र क्रियापदेन फलस्य ग्रहणेऽपि बाधकाभाव इत्यत आह—

किञ्चेति—'तण्डुलं पचति' इत्यादौ तिङन्ते, कृदन्ते—'पाचकः' 'पक्वः' इत्यादौ क्रियायाः कर्तृकर्मणोर्विशेषणीभूततया आह—क्वचिदिति । तथाभूतानि = क्रियायां विशेषणीभूतानि । गुणानाञ्चेति—अग्न्याधेये वारणवैकङ्कतनामानि पात्राणि श्रूयन्ते । तानि यज्ञपात्राणि यज्ञायधरयचनात् तत्र संदिह्यते—पवमानेष्टेरङ्गानि दर्शपूर्णमाससर्वयज्ञाङ्गानि वा । तत्र वारणस्य होमार्थत्वं श्रुत्या न बोध्यते, इति प्रधानेऽग्न्याधेयेऽसम्भवत् पदार्थः प्रधाने यो गुणीभूतस्तदङ्गं भवति । तथाच प्रधानेऽग्न्याधेयेऽसम्भवन्ति वारणपात्राणि अग्न्याधेये अङ्गभूता या पवमानेष्टिस्तदङ्गानि स्युरिति पूर्वपक्षे समाधीयते—यदि अग्न्याधेयस्य पवमानेष्टिरङ्गभूता तद् तदङ्गानि वारणपात्राणि स्युः । तदेव तु न, अग्न्याधानमग्नेः संस्कारकमिति स्वयमेव होमात्मकयज्ञस्याङ्गम् एवञ्च 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्' गुणानाम् = विशेषणानाम्, परार्थत्वात् = अन्योपकारकत्वात् समत्वात् = समानधर्मवत्त्वात् परस्परमसम्बन्धः स्यात् = परस्परं सम्बन्धः = गुणगुणिभावो न स्यादिति न्यायेनाग्न्याधेयोऽङ्गम् पवमानेष्टिरङ्गम्, इति परस्परमङ्गाङ्गीभावो न स्यादिति मीमांसकैः स्वीकृतम्, तथा प्रकृतेऽप्यनेनैव न्यायेन फलमपि भावनायामन्वितमिति भावनाङ्गभूते फले कारकाणामन्वयो न स्यात्, किन्तु प्रधानभूतायां भावनायामेवेत्याह—सर्वे सेवका इति—सेवका यथा राजोपकारकास्तथा फलमपि भावनोपकारकम् । फले विशेष्यभूतभावनोपकारकत्वञ्च इतरभेदसाधकत्वरूपम् । कारकाणाञ्च भावनानिष्पादकत्वमेवेति तस्यामेव फलस्य कारकाणाञ्चान्वयः, नतु फले कारकाणामन्वयः, निराकाङ्क्षत्वात् । अत्र लोकप्रसिद्धमपि दृष्टान्तमाह—नहीति ।

दर्पणव्याख्या

तत्र रथन्तरयोनेः परतो बृहद्योनेः पठितत्वाद्रथन्तरं तस्यां गेयम् ? उतोत्तराग्रन्थे, "न त्वा वां मन्यते" इत्यस्य पठितत्वात् तत्र गेयमिति संशयेऽविशेषादुभयत्रैव गेयमिति पूर्वपक्षे उत्तराग्रन्थे उत्तराशब्दस्य संज्ञारूपेण प्रसिद्धिः' बृहद्योनौ [illegible] तस्याः पूर्वग्रन्थापेक्षिकोत्तरत्वमत्तायौगिकी सेतिसंज्ञाशब्दस्यानपेक्ष्य प्रवृत्तिकत्वेन बलवत्त्वादुत्तराशब्दसङ्केतित—"न त्वा वां मन्यते" इत्याद्यृक्ष्वेव तद्गेयमिति नवमे निर्णीतम्, तद्वत्तत्रापीति भावः । ननु भावनायां क्रियापदस्य साङ्केतिकी शक्तिः, फले [illegible] यौगिकः प्रयोग इत्यत्रैव न इदतरं मानम्, येनोक्ताधिकरणावतारः सम्भाव्येत, प्रायेण तस्य तु यौगिकत्वेनाप्युपपत्तेरत आह—❀ किञ्चेति ❀ ।

❀ तथाभूतानीति ❀ विशेषणानीत्यर्थः । कर्त्राऽऽख्यातस्थले दृष्टत्वादिति भावः । ❀ गुणानामिति ❀ विशेषणानां परार्थत्वात् = अन्योपकारकत्वादत एव समत्वात् = समानधर्मत्वात्तेषां परस्परं सम्बन्धो न भवेदिति न्यायार्थः । तथाच यथा फलस्योपकारकत्वाद् विशेष्यभावनायामन्वयस्तथा कारकाणामपि साक्षात्परम्परया वा तत्रैवान्वयः, अन्यथा कारकत्वस्यैवाऽनुपपत्ते. । नतु फले, निराकाङ्क्षत्वादिति भावः । तदनुसारिलौकिकन्यायमप्युपन्यस्यति 'नहि भिक्षुक' इत्यादि ।

अन्वियन्तीति—वी गतौ अत्र प्रविष्टस्य रूपम् । ❀ मीमांसका अपीति ❀ उक्तन्यायेन कारकप्रकारकबोधं

मन्वते । एवञ्च 'विशेष्यतया कारकादिप्रकारकबोधं प्रति धातुजन्यभावनोपस्थितिर्हेतुः' इति कार्य-
कारणभावस्य क्लृप्तत्वात् । यत्रापि 'पक्ता' 'पाचकः' इत्यादौ भावना गुणभूता, तत्रापि क्लृप्तकार्य-
कारणभावानुरोधात् तस्यामेवान्वय इत्यवसीयते, इत्यादि भूषणे प्रपञ्चितम् । केचित्तु भूतले घटः,
देवदत्तो घटमित्यादावन्वयबोधाकाङ्क्षानिवृत्त्योरदर्शनात् तद्व्यतिरेकेण साधुत्वलाभ इत्याहुः ॥१७॥

प्रभा

मीमांसका इति—फलनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधम्प्रति आख्यातजन्यभावनो-
पस्थितेः कारणत्वमनेन न्यायेन तैः साधितमिति भावः । विशेष्यतया = विशेष्यतासम्बन्धेन । कारकादीति—
आदिना फल-कालयोः संग्रहः, तयोरपि धात्वर्थभावनायामेवान्वयात् । कार्यकारणभावस्य—कार्यम् = विशे-
ष्यतया कारकादिप्रकारकशाब्दबोधरूपम्, कारणम् = धात्वर्थभावनाविषयकोपस्थितिरूपं तस्यत्वेत्यर्थः । ननु
कृत्स्थले—'पक्ता' 'पाकः' इत्यादौ विक्लित्त्यनुकूलव्यापाराश्रयः, व्यापारजन्यफलाश्रयः, इति क्रमेण बोधात्
भावनाया अपि कर्तृकर्मादौ विशेषणत्वात् 'गुणानाञ्च' इति न्यायेन भावनायामपि कारकान्वयो न स्यादि-
त्याह—यत्रापीति । अनुरोधादिति—कार्यकारणभावान्तरकल्पने गौरवादिति भावः । अत एव 'नहि भिक्षुको
भिक्षुकान्तरम्' इति लौकिकन्याये 'सत्यन्यस्मिन्' इत्युक्तम् । क्लृप्तकार्येति—विशेष्यतासम्बन्धेन कारकादिप्रका-
रकशाब्दबुद्धित्वावच्छिन्नं प्रति भावनात्वसमानाधिकरणविशेष्यतासम्बन्धेनोपस्थितिः कारणमिति सिद्धकार्य-
कारणभावादित्यर्थः । तस्यामेव = भावनायामेव । अवसीयते = निश्चीयते । प्रपञ्चितमिति—फलांशे न
कारकाणामन्वयः, किन्तु भावनायामेवेति मीमांसकसम्मतत्वादित्यर्थः । अन्यथा तन्मते 'सोमेन यजेत'
इत्यादौ करणस्य फलरूपयागस्य भावनायामनन्वयापत्तेः, फलांशस्याख्यातार्थभावनां प्रति करणत्वेनान्वये फले
च कारकान्वये वाजपेयाधिकरणभङ्गापत्तेश्च । तस्मात् 'पाकः' इत्यादौ ओदनादिकारकान्वयसिद्धये भावनाया
धात्वर्थत्वमावश्यकमिति भावः ।

कारकाणां भावनायामन्वये प्रकारान्तरमाह—केचित्त्विति—अन्ये वैयाकरणास्त्वित्यर्थः । अन्वयबो-
धेति—अन्वयबोधस्य, आकाङ्क्षानिवृत्तेश्चादर्शनादित्यर्थः । क्रियावाचकपदाकाङ्क्षात्वेन निराकाङ्क्षबोधादर्श-
नादिति भावः । तद्व्यतिरेकेण—क्रियावाचकपदाभावेन । साधुत्वेति—'सर्वं हि वाक्यं क्रियया परि-
समाप्यते' इति न्यायात् 'निराकाङ्क्षान्वयबोधजनकत्वमेव साधुत्वम्' इति तदाशयात् । एतेन 'भूतले घटः'
इत्यनेन भूतलनिरूपिताधेयतावान् पदत्वविशिष्टो घट इति, 'देवदत्तः' 'घटम्' इत्यादावपि 'एकार्थवि-
शिष्टो देवदत्तः' 'घटनिष्ठं कर्मत्वम्' इति च बोधदर्शनादिदमसङ्गतमिति अपास्तम्, तथापि निराकाङ्क्षबोधासिद्धेः । तथ

आहुरिति—अनेनारुचिः सूचिता । तथाहि—साधुत्वं हि व्याकरणव्यङ्ग्यो जातिविशेषः । अत एव 'गाम्' इत्युक्ते 'कर्म निर्दिष्टम्, कर्ता
क्रियावाचकपदाभावेऽपि 'अग्ने तेजस्विन्' इत्यादावस्त्येव । अत एव
क्रिया चानिर्दिष्टे' इति भाष्यं सङ्गच्छते ॥ १७ ॥

दर्पणव्याख्या

मस्याख्यातजन्यभावनोपस्थितेर्हेतुतायास्तैः क्लृप्तत्वादिति भावः ॥ कारकादीत्यादिना सङ्ग्राह्यं कालपरिग्रहः । ☞ गुणभूतेति ☞
गुणाचार्यकर्त्तरि विशेषणीभूतेत्यर्थः । एतेन पूर्वोक्तन्यायस्य तत्रासम्भवो दर्शितः । ☞ तस्यामेवेति ☞ धात्वर्थभावनाया-
मेवेत्यर्थः । ☞ प्रपञ्चितमिति ☞ फलांशे तु न कारकाणामन्वयः, मीमांसकमतेऽपि सम्प्रत्युपपन्नत्वात्, अन्यथा कारकान्वि-
तस्य कारकत्वासम्भवेन यागरूपफलस्य करणतया क्रियायामनन्वयाऽऽपत्तेरिति हि तत्राशयः ।

☞ अदर्शनादिति ☞ 'सर्वं हि वाक्यं क्रियापरिसमाप्यते' इति न्यायेन सर्वत्रैव क्रियान्वये नान्वय-
बोध-निराकाङ्क्षत्वयोरदर्शनादित्यर्थः । तत्र 'चैत्रः सुन्दरः' इति क्रियाकाङ्क्षावाक्यस्यासाधुतापत्तिः । फलांशान्वयस्यैवैवो-
पपत्तौ भावनावाचकत्वलाभप्रतिपत्तेऽस्वरसः 'आहुः' इत्यनेन सूच्यते ॥ १७ ॥

स्वयमुपपत्तिमाह—यदि पक्षेऽपि वत्यर्थः कारकञ्च नञादिषु ।
अन्वेति त्यज्यतां तर्हि चतुर्थ्याः स्पृहिकल्पना ॥ १८॥

'पर्वतो वह्निमान्, धूमात्, महानसवत्', भूतले न घटः, 'भूतले घटः' इत्यादिपदात् । एवमादिष्वनुशासनविरोधेऽपि यदि साधुत्वमन्वयबोधश्चाभ्युपेयते तर्हि चतुर्थ्याः स्पृहिकल्पनाऽपि

प्रभा

स्वयमिति—कारिकाकृतेत्यर्थः । आत्मना कल्पितामुपपत्तिमाहेत्यर्थः । एतेन स्वयमित्यस्य 'आत्मना' इत्यर्थकत्वेन 'स्वयमाह' इत्यसङ्गतमित्यपास्तम्, आत्मपदार्थस्य कल्पितक्रियायामन्वयात् । यद्वा—'प्रकृत्यादिभ्यः' इत्यभेदे तृतीया, आत्माभिन्नो ग्रन्थकार आह इत्यर्थः । उपपत्तिम् = क्रियायामनन्वये बाधकप्रदर्शनरूपाम् ।

यत्तु, केनचिन्नैयायिकेनोक्तम् 'भूतले न घटः' इत्यनेन 'भूतलनिरूपिताधेयत्वाभाववान् घटः' इति बोधान्न क्रियाध्याहारापेक्षा, एवम् 'पर्वतो वह्निमान् धूमात्, महानसवत्' इति वेदान्तिकृतन्यायप्रयोगे प्रतिज्ञायां क्रियापदप्रयोगो वृथेति च तद्दूषयन्नाह—यदि पक्ष इति—पक्षे = पर्वतादौ, वत्यर्थः = सादृश्यम्, यदि सादृश्यमनुयोगितासम्बन्धेन पक्षे 'महानसप्रतियोगिकसादृश्यवान् पर्वतः' इत्येवंरूपेणान्वेतीत्यर्थः । वैयाकरणमते तु—महानसपदम्—महानसवृत्तिवह्निकर्तृकसत्तापरम्, पर्वतपदञ्च पर्वतवृत्तिवह्निपरम्, अस्तीत्यध्याह्रियते । तथाच महानसवृत्तिवह्निकर्तृकसत्तासदृशी पर्वतवृत्तिवह्निकर्तृका सत्तेति बोधः, इति वत्यर्थसादृश्यस्य सत्तारूपक्रियायामन्वयः । आदिपदादिति—कारिकास्थ 'नञादिषु' इति पदघटकादिपदात् 'भूतले न घटः' 'भूतले घटः' इत्यादि गृह्यते इत्यर्थः । अत्रापि सप्तम्यर्थाधिकरणत्वस्य, नञर्थस्य च सत्तारूपक्रियायामेवान्वयः । एवमादिषु—'भूतले न घटः' इत्यादिपूर्वोक्तविषयेष्वित्यर्थः । अनुशासनविरोधेऽपि—शास्त्रविरोधेऽपि उक्तस्थलस्य, वत्यर्थस्य च क्रियायामेवान्वय इति शास्त्रबोधितार्थविरोधेऽपीति यावत् । अन्वयश्चेत्—शास्त्रबोधितान्वयातिरिक्तान्वयश्चेत्यर्थः । चतुर्थ्याः = 'पुष्पेभ्यः स्पृहयति' इत्यर्थे चतुर्थ्यां श्रुतायां 'स्पृहयति' इतिपदमेवाध्याह्रियते, ननु पदान्तरमिति कल्पना त्यज्यताम्, 'स्पृहेरीप्सितः' इति सूत्रविरोधस्य त्वन्मतेऽकिञ्चित्करत्वादिति भावः ।

दर्पणव्याख्या

❀ उपपत्तिमिति ❀ उत्कटस्य भावनायामन्वये साधकोपन्यासरूपां तदनुपगमेऽन्वये बाधकोपन्यासरूपां चाहेत्यर्थः । 'स्वयमुपपत्तिम्' इति पाठे 'स्वयम्' इत्यनेन वक्ष्यमाणयुक्तेरनाकरत्वं सूच्यते । ननु सप्तम्यर्थनञर्थादीनां क्रियान्वय एव साधुत्वे, पर्वतो वह्निमान् महानसवदित्यादौ वत्यर्थसादृश्यस्य कथं पर्वतेऽन्वयः ? कथं वा भूतले न घट इत्यत्र सप्तम्यर्थभूतलाधेयत्वस्य नञर्थेऽभावे इत्यत आह मूले ❀ यदि पक्षेऽपीति ❀ पक्षे = प्रतिज्ञावाक्यजन्यबोधविशेष्ये सन्दिग्धसाध्यके धर्मिणि पर्वतादाविति यावत् ❀ कारकम् ❀ अधिकरणादि । ❀ नञादिषु ❀ नञर्थाभावे, इतरनामार्थे चेत्यर्थः । तदेव विशदयति मूले—❀ पर्वतो वह्निमानित्यादिना ❀ ❀ आदिपदादिति ❀ नञादिष्वित्यादिपदादित्यर्थः । तदेव विवृणोति ❀ एवमादिष्विति ❀ भूतले घट इत्यादावित्यर्थः ।

❀ अन्वयश्चेति ❀ महानससदृशः पर्वतः, भूतलवृत्तित्वाभाववान् घटः, भूतलवृत्तिर्घटाभाव इति वा बोधश्चेत्यर्थः । तेन तुल्यमित्यनुशासनेन क्रियायामेवान्वयबोधन एव बोधः, 'कारकं' इत्यभिप्रेत्य, सप्तम्यधिकरणे चेत्यनुशासनेन क्रियान्वय एव साधुत्वबोधनादुक्तम् ❀ यदीति ❀ । ❀ चतुर्थ्या इति ❀ पुष्पेभ्य इत्यत्र "स्पृहेरीप्सितः" ( पा० सू० १ । ४ । ३६ ) इति विहितचतुर्थ्याः स्पृहयत्युपादानार्थे एव क्रियान्वयबोधकत्वम्, न पदान्तरार्थेनान्वये, अध्याहारे वा, तदर्थेऽनुशासनविरोधादिति स्वसिद्धान्तरहस्यमित्यर्थः ।

त्यज्यतामित्यर्थः। अनुशासनानुरोधतौल्ये अर्द्धजरतीयमयुक्तमिति भावः ॥ १८ ॥

एवं कर्त्रादौ विहितानामिन्यादीनां क्रिययैवान्वय इत्याह—

प्रभा

सम-
चतुर्थ्या इति—हेतौ पञ्चमी। विषयतासम्बन्धावच्छिन्नेच्छानुकूलमनःसंयोगादिरूपो व्यापारः, सम-
वायसम्बन्धावच्छिन्नेच्छानुकूलेच्छासमानाधिकरणमनःसंयोगादिरूपो व्यापारश्च स्पृहेरर्थः। आधार्थे—विष-
यतारूपफलतावच्छेदकसम्बन्धेनेच्छारूपफलाश्रयत्वात् पुष्पाणां कर्मत्वम्। द्वितीयार्थे—फलतावच्छेदकसमवाय-
सम्बन्धेन पुष्पाणां फलाश्रयत्वाभावात् कर्मत्वाप्राप्त्या शेषषष्ठ्यां प्राप्तायां सम्प्रदानत्वविधानम्। अनुशासनेति—
'स्पृहेरीप्सित.' इति शास्त्रानुरोधेन तथा कल्प्यते इति चेत्तर्हि अन्यत्रापि शास्त्रानुरोधत्यागोऽनुचित इति भावः।
अर्धजरतीयमिति—जरत्या अर्धम् अर्धजरती, तत्सदृशम् अर्धजरतीयम्। 'समासाच्च तद्विषयात्'
इतीवार्थे छः। यद्वा गहादित्वाद् भवार्थे छः। भाष्यसम्मतोऽप्ययं न्यायः। तथाहि—'अणिञोः' (पा० सू०
४।१।७८) इति सूत्रे भाष्ये "ष्यङः प्रत्ययत्वम्, आदेशत्वं वा इति विकल्प्य प्रत्ययत्वेऽनुबन्धाकरणस्य सामर्थ्यं,
आदेशत्वेऽप्यनुबन्धो न कर्तव्यः, इत्याश्रित्य इञो यादेशे 'यङश्चाप्' इति चापोऽभावे 'वाराहा' इत्यत्र
'ञ्नित्यादिर्नित्यम्' इति प्राप्ताद्युदात्तत्वाभावाय इत्संज्ञामकृत्वैवादेश इत्युक्तम्। ततः प्रत्ययत्ववादिनाऽऽदेशत्वे
स्वरसिद्धावपि वृद्धिर्न स्यादित्यर्धजरतीयत्व स्यात्" इति दूषणमुक्तम्। प्रत्ययत्वाभिप्रायेण 'नचेदानीमर्धजर-
तीयं लभ्यम्, वृद्धिर्मम भविष्यति स्वरो नेति, तद्यथा अर्धं जरत्या कामयन्तेऽर्धन्नेति, इति प्रत्ययत्वपक्षे
अर्धजरतीयन्यायापत्तिः परिहृता। अत्र कैयटः—'मुखं न कामयन्तेऽङ्गान्तरन्तु कामयन्ते जरत्याः' इति, अस्य
कैयटस्य 'कामिनः' इति शेषः। तथाऽन्यत्रापि 'न जानीमो विषयसन्धायामियान्तरालेऽवस्थानेऽर्धजरतीय-
कौशलम्' (बृह० उप० भा०)। अत्रानन्दगिरिः—'यथा न जागर्ति, न स्वपिति...इति अन्तरालेऽवस्थानं दुर्घटम्,
यथा चार्धं कुक्कुट्याः पाकाय, अर्धञ्च प्रसवाय' इति कौशलन्नोपलभ्यते' इति। अर्धजरतीसदृशं शास्त्रस्य
त्यागोपादानम्, तत्सदृशञ्चौचित्यानौचित्यम्।

एकं सादृश्यं समासार्थः, द्वितीयञ्चेवार्थः। एवञ्च 'भूतले न घटः' इत्यादौ स्वसिद्धान्तानुसारेणान्वय-
बोधोत्पत्तये 'अस्ति' इत्यादिपदमध्याहार्यम्। 'पर्वतो वह्निमान् धूमात् महानसवत्' इत्यादावपि वत्यर्थसाद-
दृश्यस्य क्रियायामन्वयाय 'भवितुमर्हति' इति योजनीयम्। तत्रार्हणक्रियायां वत्यर्थसादृश्यस्यान्वयः, 'तेन तुल्यं
क्रिया चेत्' इत्यनुशासनानुरोधात्, वतिप्रकृतिमहानसादिशब्दानां महानसवर्तृकमयने लक्षणा, 'तेन तुल्यम्'
इति शास्त्रानुरोधेन क्रिययोरेव सादृश्ये वतेर्विधानात्। 'महानसवत्' इत्यत्र 'तत्र तस्येव' इति वतिस्तु न,
'महानसवत् पर्वते' पर्वतस्य वा इत्यापत्तेः ॥ १८ ॥

कर्त्रादाविति—आदिना भावार्थस्य संग्रहः। इन्यादीनामिति—आदिना क्त्वातुमुन्नादीनां संग्रहः।
तत्र कर्त्रादिकारकाणां क्रियायामेवान्वय इत्यत्र प्रमाणान्युक्तानि। क्त्वाद्यर्थस्य क्रियान्वये प्रमाणन्तु 'समानकर्तृ-
कयोः पूर्वकाले' इति, 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति च सूत्रे एव। ननु 'कृतपूर्वी कटम्' इत्यत्र

दर्पणव्याख्या

ॐ अर्द्धजरतीयमिति ॐ इदमर्थे, गहादित्वाच्छः। क्वचिदनुशासनानुरोधः, क्वचित्त्याग इत्यर्द्धजरतीसदृशमित्यर्थः।
तथाच स्वीयसिद्धान्तप्रच्युतिरूपबाधकभियाऽपि पर्वतो वह्निमान् भवितुमर्हतीत्येव प्रतिज्ञाऽङ्गीकरणीया, ननु क्रियावाचक-
पदशून्या सेति नोक्तनियमे व्यभिचारः। 'भूतले न घटः' इत्यादौ यद् वक्तव्यं तदुक्तम्। वक्ष्यते चाऽधिकमिति भावः ॥१८॥
ॐ एवमित्यादिना ॐ कर्त्रादावित्यादिना भावपरिग्रहः, इन्यादीनामित्यादिना क्त्वा-तुमुन्नादीनाम्।
कृतपूर्वीत्यत्र भावविहितक्तेन सिद्धाऽवस्थापन्नो भाव उच्यते। तद्विशेषणं च प्रकृत्यर्थक्रियेत्याशयेन मूलमवतारयति—

अविग्रहा गतादिस्था यथा ग्रामादिकर्म्मभिः ।
क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थिता ॥ १९ ॥

न विविच्य ग्रहः = ग्रहणं यस्याः सा अविग्रहा = गुणीभूतेति यावत् । यथाच 'ग्रामं गतः' इत्यत्र क्तप्रत्ययार्थगुणीभूतापि क्रिया ग्रामादिकर्म्मभिः सम्बध्यते, तथा 'कृतपूर्वी कटम्' इत्यत्रापि गुणभूता इन्यादिभिरित्यर्थः ।

प्रभा

भाष्यप्रामाण्यात् पूर्वं कर्मणोऽविवक्षया भावे क्ते पश्चात्कर्मणो विवक्षा, कृतं पूर्वमनेनेति विग्रहः । 'पूर्वादिनिः' इत्यतः पूर्वादित्यनुवृत्तेः 'सपूर्वाच्च' इत्यनेन कर्तरि इनिः । यद्वा 'नपुंसके भावे क्तः' इत्यनेनैवाकर्मकत्वाद् भावे क्तः ।

ननु 'कृतपूर्वी' इत्यत्र क्तार्थस्य भावस्य सिद्धावस्थापन्नस्य धात्वर्थो भावो विशेषणम् इति गुणीभूतक्रियायां कथं कर्मणोऽन्वय इत्याशङ्कां निराकुर्वन्नाह—अविग्रहेति । विविच्येति—पृथग्भूयेत्यर्थः, इतराविशेषणत्वेनेति यावत् । ग्रहणम् = ज्ञानम् । गुणीभूतेति—क्तप्रत्ययार्थकर्त्रादौ विशेषणीभूतेत्यर्थः । गुणभूतेति—सिद्धावस्थापन्नक्तार्थभावं प्रति विशेषणभूतेत्यर्थः । इन्यादिभिरिति—इन्याद्यर्थकर्त्रादिभिरित्यर्थः । यद्वा, कर्मणोऽविवक्षया भावे विहितस्य क्तस्य स्वातन्त्र्येण प्रयोगस्यादृष्टतया धात्वर्थानुवादकत्वमेवेति क्तार्थे गुणीभूतत्वाभावेऽपि इन्याद्यर्थकर्त्रादौ गुणीभूतत्वमेवेति गुणीभूतत्वेन दृष्टान्तदार्ष्टान्तिकयोः साम्यं बोध्यम् । नन्वेवमपि दृष्टान्ते गुणीभूतक्रियायां विशेषणतया कर्मणोऽन्वयः, इन्याद्यर्थकर्त्रादेस्तु न गुणीभूतक्रियायामन्वय इति चेन्न, विशेष्यत्वविशेषणत्वकृतभेदेऽपि परान्वयित्वमात्रेण दृष्टान्ततयोपादानात् । एकत्वविशिष्टकटाभिन्नाश्रयिका या उत्पत्तिस्तदनुकूलव्यापाराश्रयाभिन्नो देवदत्तादिरिति 'कृतपूर्वी कटम्' इत्यनेन बोधः ।

दर्पणव्याख्या

❀सम्बध्यते इति❀ कारकप्रकारकबोधं प्रति विशेष्यतया धातुजन्यभावनोपस्थितेर्हेतुतायाः पूर्वमुक्तत्वादिति भावः ।

❀ कृतपूर्वी कटमिति ❀ अत्र कर्मणि क्ते कटशब्दादनभिहिताधिकारीयद्वितीयाऽनुपपत्तिः, भावे क्तस्तु सकर्मकाद्गगनकुसुमायमान एव, तयोरेवेति नियमात् । अत एव नपुंसके भावेऽपि न सः । तथाच कथमुक्तदार्ष्टान्तिकवाक्योपपत्तिरिति चेदत्राहु:—कर्मणो विशेषरूपेण प्रागविवक्षया अकर्मकत्वाद्भावे प्रत्यये तदन्तस्य पूर्वशब्देन समासे 'सपूर्वाच्च' इतीनिः, पश्चात्तु कर्मणो विशेषरूपस्य विवक्षया तत्र द्वितीयेति । इदञ्च 'कर्तृकर्मणोः कृति' ( पा० सू० २।३।६५ ) इति भाष्ये स्पष्टम् । ईदृशविवक्षाऽविवक्षे च तद्भाष्यप्रामाण्यात् कृतपूर्वीत्यादिविषये एव, नान्यविषये इति बोध्यम् ।

❀ इन्यादिभिरिति ❀ तदर्थकर्त्रादिभिरित्यर्थः । वस्तुतस्तु दार्ष्टान्तिके स्ववाचकप्रकृतिकप्रत्ययार्थेऽन्यस्मिन् वा गुणीभूता क्रिया कटादिकर्मादिभिरिति व्याख्येयम् । नातः कृतपूर्वीति प्रयोगघटकेन्यर्थकर्तृविशेष्यत्वेन प्रकृतार्थासङ्गतिः, पूर्वकालिकक्रियाकर्त्तेति ततो बोधेन तादृशक्रियाया इन्यर्थकर्त्तरि गुणत्वात् । नाप्यत्र भावाधिकारीयः, स्वातन्त्र्येणाप्रयोगात् । नच 'पूर्वं कृतमनेन' इति विग्रहात् धात्वर्थक्रियाविशेष्यक एव ततो बोधः, तथा सति तस्या अविग्रहत्वाभावेन मूलविरोधप्रसङ्गात् । धात्वर्थानुवादकप्रत्ययान्ते प्रत्ययार्थाविशेषणीभूतधात्वर्थक्रियाया एव प्रतीत्या तद्विहितप्रत्ययार्थकर्तृविशेष्यताया एवौचित्यात्, अन्यथा 'पचतिकल्पम्' इतिवत् नपुंसकत्वापत्तेश्च । अत एव भोक्तुं गतमेतेनेत्यादिप्रयोगोपपत्तिः, भावानधिकारीयभावविहितप्रत्ययस्य धात्वर्थानुवादकत्वेन तत् प्रकृत्यर्थक्रियायाः साध्यमात्रस्वभावत्वात्, अगुणत्वाच्च । एवम् 'अव्ययकृतो भावे' इत्युक्ते 'पाकः' इत्यादिप्रयोगस्यघञर्थात्तुमुनाद्यर्थे वैलक्षण्यानुभवात् तुमुनादीनामपि साध्यमात्रस्वभावभावार्थकत्वमित्यन्यत्र विस्तरः ।

नच घृत्तिमात्रे समुदायशक्तेर्वक्ष्यमाणत्वात् तत्रान्तर्गता भावना पदार्थैकदेश इति कथं
तत्रान्वय इति वाच्यम्, नित्यसापेक्षेष्वेकदेशेऽपि 'देवदत्तस्य गुरुकुलम्,' 'चैत्रस्य नप्ता'

प्रभा

वक्ष्यमाणेति—'समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्' इत्यादिनेत्यादि ।
पदार्थैकदेश इति—पदार्थैकदेशत्वञ्च—पदजन्योपस्थितीयप्रकारताश्रयत्वम्, तथाच 'पदार्थः पदार्थे-
नान्वेति नतु पदार्थैकदेशेन' इति न्यायविरोधात् पदार्थैकदेशे न पदार्थान्तरस्यान्वय' ।
एवञ्च 'यत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधम्प्रति मुख्यविशेष्यतासम्बन्धेन
शक्तिज्ञानजन्योपस्थितिः कारणम्' इति कार्यकारणभाव एवात्र न्याये बीजं बोध्यम् । कथमिति—'गत'
इत्यादौ कृद्वृत्तिसत्त्वेन गमनकर्तृरूपगतपदार्थैकदेशक्रियाया कर्मान्वयासम्भवाद् दृष्टान्तासिद्धिरिति भाव ।
नच 'पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेन' इति न्यायस्वीकारे फलाभाव, नित्यपदार्थस्य गोत्वे, पशुत्वे
चान्वयाभिप्रायेण 'गौर्नित्या' इत्यादे पशुभेदस्य पशुत्वेऽन्वयतात्पर्येण 'पशुरपशु' इत्यादेश्च वारणरूप-
फलसत्त्वात् ।

नित्यसापेक्षेष्विति—नित्यसापेक्षत्वञ्च—स्वनिरूपकाकाङ्क्षाव्याप्यज्ञानविषयत्वम् । स्वम् = नित्यसाकाङ्क्षत्वेन
जिघृक्षितम् । एवञ्च यत्र यत्र गुरुत्वज्ञानं तत्र तत्र गुरुत्वस्य निरूपकं किमित्याकाङ्क्षाया सत्त्वेन आकाङ्क्षाया
व्यापकत्वम्, गुरुत्वज्ञानस्य च व्याप्यत्वमिति व्याप्यज्ञानविषयत्व गुरुत्वे इति गुरुत्व नित्यसाकाङ्क्षम् ।
देवदत्तस्येति–निरूपितत्व षष्ठ्यर्थ, तेनैव सम्बन्धेन गुरुपदार्थैकदेशगुरुत्वे देवदत्तपदार्थरूपनिरूपकस्यान्वय ।
नप्तेति—'जन्यजन्य पुमान् नप्ता', तदेकदेशभूतजन्यताया चैत्रस्य निरूपितत्वरूपषष्ठ्यर्थसम्बन्धेनान्वय ।
तथाच देवदत्तनिरूपितगुरुत्ववत् कुलमिति, चैत्रनिरूपितजन्यतावज्जन्य पुमानिति च बोध । नित्यसापेक्षस्थले
हि पक्षद्वयी, 'चैत्रस्य गुरुकुलम्' इत्यादौ विशेषणीभूतचैत्रादेर्गुर्वादिद्वारक'स्वनिरूपितगुरुत्ववत्कुलत्व'सम्बन्धेन
कुलादिरूपविशेष्ये एवान्वय इत्येक पक्ष ।

दर्पणव्याख्या

❀ घृत्तिमात्रे इति ❀ मात्रपदं कृत्स्नार्थकम् । ❀ वक्ष्यमाणत्वादिति ❀ 'समासे खलु भिन्नैव' इत्यनेन
इत्यादि, तत्र समासपदस्य वृत्तिसामान्यपरत्वेन व्याख्यास्यमानत्वादिति भाव । ❀ कथमिति ❀ गत इत्यादौ कृद्वृत्ति
सत्त्वेन गमनकर्तृरूपगतपदार्थैकदेशभावनाया कर्मान्वयासम्भवाद् दृष्टान्तासिद्धिरिति भाव । नित्यसापेक्षस्थले हि
पक्षद्वयम्—चैत्रस्य गुरुकुलमित्यत्र विशेषणस्य चैत्रादेर्गुर्वादिद्वारकसम्बन्धेन कुलादिरूपविशेष्य एवान्वय इति तत्रैक पक्ष ।
स चोक्तो हरिणा—

समुदायेन सम्बन्धो येषा गुरुकुलादिना ।
सस्पृश्यावयवाँस्ते तु युज्यन्ते तद्वता सह ॥ इति ।

उक्तस्थले समुदायनिरूपितसम्बन्धे षष्ठी अवयवद्वारकश्च समुदायेन सम्बन्ध इति सामर्थ्याद् अवयवमपीति विशेषण
स्पृशन्तीति तदर्थ । अपरस्तु गुर्वादिनिरूपितसम्बन्धे एव देवदत्तस्येति षष्ठी तत्रैव तदन्वय । उक्तञ्च—

सम्बन्धिशब्द सापेक्षो नित्य सर्वं समस्यते ।
वाक्यवत् सा व्यपेक्षा हि वृत्तावपि न हीयते ॥ इति ॥

नित्यमिति—साऽपेक्षपदाऽर्थान्वयि, हि = यतो देवदत्तस्य गुरो कुलमित्यादिव्यस्ते या व्यपेक्षा सा समासेऽपि न
हीयत इति कारिकार्थं । पदार्थ पदार्थेनाऽन्वेतीति व्युत्पत्तिस्तु नित्यसापेक्षातिरिक्तविषयेति तद्भाव । तथान्तिम पक्षम
भिप्रेत्य समाधत्ते—❀ नित्यसापेक्षेष्विति ❀

इत्यादावविवान्वयाभ्युपगमात् । एवं भोक्तुं पाकः, भुक्त्वा पाक इत्यत्रापि द्रष्टव्यम् ॥ १९ ॥

प्रभा

तदुक्तं हरिणा—

'समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह' ॥ इति ।

उक्तस्थले समुदायनिरूपितसम्बन्धे षष्ठी । अवयवद्वारकश्च समुदायेन सम्बन्ध इति सामर्थ्यादवयवमपि विशेषणं स्पृशतीति तदर्थः । अपरस्तु पक्षः—गुरुत्वादिनिरूपितसम्बन्ध एव षष्ठ्यर्थ इति गुरुत्वे एव देवदत्तादेरन्वय इति । उक्तञ्च—

'सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते ॥' इति ।

'देवदत्तस्य गुरोः कुलम्' इति वाक्ये या व्यपेक्षा सा समासेऽपि न हीयते इति कारिकार्थः । तत्रान्तिमपक्षमभिप्रेत्य समाधत्ते—नित्यसापेक्षेष्विति—तथाच गुरुत्वादेर्नियतान्यनिरूपितत्वेन तदुपस्थितौ नियमेन जायमानाया निरूपकाकाङ्क्षाया निवृत्तये देवदत्तादिपदार्थान्वयवत् प्रकृतेऽपि गमनरूपसाध्यस्य साधकं किमित्याकाङ्क्षानिवृत्तये ग्रामादिरूपकर्मादिकारकान्वयस्यावश्यकत्वान्न दृष्टान्तासङ्गतिरिति भावः । इत्यादावपीति—आदिना घटादन्यः, घटात्पृथक्, इत्यादेः संग्रहः । अत्र भेदे पृथक्त्वे चैकदेशे पञ्चम्यर्थावधित्वस्यान्वयः । विशेष्ये एव एकदेशघटितपरम्परासम्बन्धेनान्वय इति पक्षे तु "भावनायामेवान्वयः' इत्यस्य भावनायामेव साक्षात्सम्बन्ध इत्यर्थः । एवञ्च भावनाघटितसम्बन्धं विना अन्यत्रान्वय एव तादृशनियमेन व्यावर्त्यत इति भावः । कारिकायां 'गतादिस्था' इत्येतद्घटकादिपदग्राह्यमाह—भोक्तुमिति—अत्र घनर्थभावनायां विशेषणीभूतसाध्यत्वरूपपचिभावनायामेव तुमुन्क्त्वार्थभावनयोरन्वय इति भावः । अत्र भाष्यप्रदीपोद्योतकाराः—'एकस्य सकृच्च' ( पा० सू० ५।४।१९ ) इति सूत्रभाष्यात् 'भोक्तुं पाकः' इत्यादेरसाधुत्वं लभ्यते । तथाहि—"अथानु-

दर्पणव्याख्या

तथाच गुरुत्वादेर्नियतान्यनिरूप्यत्वेन तदुपस्थितौ नियमेन जायमानाया निरूपकाकाङ्क्षाया निवृत्तये देवदत्तादिपदार्थान्वयवत् प्रकृतेऽपि किं साधकं गमनरूपसाध्यमिति साधनाकाङ्क्षानिवृत्तये ग्रामादिरूपकर्मकारकान्वयस्याऽऽवश्यकत्वाद्दृष्टान्तासङ्गतिरिति भावः । आदिना 'हरेः जातितपत्रः' इत्यादेः सङ्ग्रहः । अनन्तरमिकास्थादि ।दमाह एवमपि—॥ एवं भोक्तुं पाक इत्यादावपीति ॥ अत्राऽऽदिपदग्राह्यम्—॥ भुक्त्वा पाक इति ॥ घञर्थभावगुणभूतायां पच्यर्थक्रियायां तुमुनाद्यन्तार्थभोजनादिक्रियान्वय इति बोध्यमित्यर्थः । घञाद्यन्तप्रयोगस्थले प्रकृतिप्रत्ययाभ्यामसत्त्वसत्त्वभावा विशेष्यविशेषणभावापन्ना क्रियाऽभिधीयते । तत्र प्रत्ययार्थत्वेन घञाद्यर्थक्रियायाः प्राधान्यम् । अत एव प्रकृत्यर्थसाध्यमानत्वभावां तामादाय कारकान्वयोपपत्तिः, उभयभागान्तर्नियोपपादकत्वेन तुमुन् सम्भवेऽपि 'पाचको गतः' इत्यादौ नामनभिधानमेवेति भावः ।

नव्यास्तु—तुमुन्क्रियायके क्रियार्थायां क्रियायामित्युक्त्या प्रत्यासत्त्या क्रिययोरेककालीयत्वलाभेन स्ववाचकप्रकृतिकप्रत्ययार्थं प्रत्यगुणीभूतायाः साध्यमानत्वभावाया एव क्रियायामित्यनेन ग्रहणाद्भोक्तुं गतम्, भोक्तुं पाक इत्यत्राप्येव, उभयत्रापि क्रिययोः साध्यमानत्वभावत्वाभावात्, प्रकृतिप्रत्ययार्थयोरन्योन्यविशेष्यविशेषणभावाच्च । ध्वनितं चैतदुक्तरूपमतिदिति सूत्रभाष्ये । तत्र तु क्रियामात्रार्थकस्य ग्रहणं तत्र क्रियामात्रविशेषणादर्शीति गमनपाकादियोगेऽपि तुमुन्नार्थमित्याहुः ।

तेषामयमाशयः—घञाद्यन्तस्थले प्रकृतिप्रत्ययाभ्यां विशेष्यविशेषणभावापन्नसाध्यासाध्यत्वभावक्रियाद्वयमुपस्थाप्यते । तत्र प्रत्ययार्थक्रियायाः प्राधान्यम् । एवञ्च धात्वर्थप्रकृतिक्रियायाः साध्यमानत्वभावत्वेऽपि तस्याः कर्मत्वं प्रति गुणत्वात् तत्र तुमुन्नार्दीति ।

अतिप्रसङ्गमाशङ्क्य समाधत्ते—

कृत्वोऽर्थाः क्त्वातुमुन्नवत्स्युरिति चेत् सन्ति हि क्वचित् ।
अतिप्रसङ्गो नोद्भाव्योऽभिधानस्य समाश्रयात् ॥ २० ॥

'भोक्तुं पाकः' भुक्त्वा पाक इत्यादौ, "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" ( पा० सू० ३ । ३ । १० ) "समानकर्तृकयोः पूर्वकाले" ( पा० सू० ३ । ४ । २१ ) इति क्रियावाचको-पपदे क्रिययोः पूर्वोत्तरकाले विधीयमाना अपि तुमुन्नादयो गुणभूतां तामादाय यथा जायन्ते, तथा कृत्वोऽर्था अपि स्युः । 'एकः पाकः' इत्यत्र, "एकस्य सकृच्च" ( पा० सू० ५ । ४ । १९ ) द्वौ पाकौ, त्रयः, चत्वार इत्यत्र "द्वित्रिचतुर्भ्यः सुच्" ( पा० सू० ५ । ४ । १८ ) । 'पञ्च' इत्यत्र कृत्वसुच् स्यात् । तथाच 'सकृत् पाकः' द्विस्त्रिश्चतुः पाका इत्याद्यापत्तिरिति चेदिष्टापत्तिः, "द्विर्वचनम्" इत्यादिदर्शनात् ।

प्रभा

वर्तमानेऽपि क्रियाग्रहणे इह कस्मान्न भवति । 'एकः पाकः' इति पूर्वयोश्चापि योगयोः कस्मान्न भवति 'द्वौ पाकौ' 'त्रयः पाकाः' 'चत्वारः पाकाः' 'पञ्च पाकाः' 'दश पाकाः' इति । नैतत्क्रियागणनम्, किन्तर्हि द्रव्यगणनमेतत्" । एतेन भावघञन्तपाकादिसमभिव्याहारे कृत्वोऽर्थानामसाधुत्वं स्पष्टमेव लभ्यते । 'तुमुन्ण्वुलौ' इति सूत्रे 'क्रियार्थायाम्' इति स्त्रीलिङ्गनिर्देशेनैव तत्फलक्रियाया लाभे क्रियाग्रहणसामर्थ्यात् प्रत्यासत्त्या च प्रत्ययार्थनिरू-पणतानापन्नसाध्यत्वमात्रापन्नक्रियावाचकपदोपपदे एव तुमुन्नादिविधानात् 'पाकः' इत्यत्र साध्यक्रियाया गुणी-भूतत्वान्न तुमुन्नादिरित्याहुः ॥ १९ ॥

ननु गुणीभूतक्रियाऽन्वयेऽपि यदि तुमुन्नादीनां साधुत्वं तदा 'सकृत्पाकः' 'द्विः पाकाः' इत्याद्यपि स्यादित्याशङ्क्येष्टापत्त्या परिहरन्नाह—एकः पाक इति । इत्याद्यापत्तिरिति—आदिना 'पञ्चकृत्वः पाकाः' इत्यादेः संग्रहः ।

दर्पणव्याख्या

तत्रेदं चिन्त्यम्, भावानधिकारीयधात्वर्थानुवादकप्रत्ययान्तयोगे तुमुनो दुर्वारत्वात् । किञ्च सुज्विधायकेऽप्युक्तनिरू-पणविशिष्टायास्तस्या ग्रहणमावश्यकम् । तत्तद्विशेषणीभूतक्रियायाः साध्यमात्रत्वमात्रत्वेन तज्जन्यगणने द्वौ पाकावित्या सुजापत्तेरवारणत्वात् । नच तत्रेष्टापत्तिः, क्रियाशब्दोपादानवैयर्थ्याद्व्याहृतिपदसामर्थ्येनैव क्रियाया लाभादि वक्ष्यमाणत्वात् ।

किञ्च 'साध्यत्वेन क्रिया तत्र' इति हरिपद्यव्याख्यावसरे, एकस्यैव सम्बन्धिभेदादाचार्यत्वमातुलत्वादिवदेकस्या एव क्रियायाः प्रकृतिप्रत्ययरूपवाचकसम्बन्धिभेदादुपस्थितिरिति स्वोक्तिविरोधः क्रियाद्वयावबोधाङ्गीकार इति ।

❀ अतिप्रसङ्गमिति ❀ स्वमते गुणीभूतक्रियामादाय कृत्वोऽर्थप्रत्ययापत्तिरूपं तमित्यर्थः । ❀ क्रिययोः पूर्वकाल इति ❀ क्रिययोर्मध्ये पूर्वकालवृत्तिक्रियार्थकाद् धातोरित्यर्थः । ❀ तुमुन्नादयः ❀ इत्यादिपदात् ण्वुलादिपरिग्रहः । ❀ विधीयमाना इति ❀ 'अव्ययकृतो भावे' इत्युक्तेर्भाव इति शेषः । पूर्वकालोद्देश्यत्वादीनां संसर्गविधया भानस्य वक्ष्यमाणत्वात् । ❀ द्विर्वचनम् ❀ इत्यादिपदात् द्विःप्रयोगद्विरागमनादिपरिग्रहः, तत्र ल्युडन्तार्थगुणीभूतक्रियामादाय सुचो दर्शनादिति भावः ।

अतिप्रसङ्गस्त्वनभिधानान्नेत्याह—अतीति । "नहि वचिरन्तिपरः प्रयुज्यते" इत्याद्यभियुक्तोक्तरीत्या समाधेयमिति भावः ।

केचित्तु—"सङ्ख्यायाः क्रियाभ्यावृत्तिगणने" इत्यत्र क्रियाग्रहणं व्यर्थम्, तस्या एवाभ्यावृत्ति-

प्रभा

अतिप्रसङ्ग इति—विशेषणीभूतक्रियामादाय कृत्वोऽर्थप्रत्ययानामापत्तिरूप इत्यर्थः । वस्तुतस्तु कृत्वोऽर्थविधायके क्रियाया एवाभ्यावृत्तिसम्भवेन अर्थतः क्रियालाभे क्रियाग्रहणस्योत्तरार्थताया उक्तत्वेन गुणभूतायामपि क्रियायां कृत्वोऽर्थप्रत्ययानां साधुत्वमेव । अत एव 'द्विर्वचनेऽचि' इति सूत्रम्, 'द्विःप्रयोगो द्विर्वचनं पाठ्यम्' इति भाष्यञ्च सङ्गच्छते ।

न च 'द्विर्वचने' इत्यत्र वचधातुना साध्यत्वेनोपस्थितायाः, ल्युटा सिद्धत्वेनोपस्थिताया भाषणक्रियायाः 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्' इति नियमात् परस्परमन्वय आवश्यकः । तत्र सिद्धसाध्यक्रिययोर्विरुद्धतयाऽभेदान्वयासम्भव इति वाच्यम्, स्ववृत्तिक्रियात्ववत्सम्बन्धेनान्वयस्य वक्तुं शक्यत्वात् । यद्यपि कृद्वृत्तावेकार्थीभावात्मकशक्तेः सत्त्वेन पृथगुपस्थितेरभावादन्वयासम्भवस्तथाप्येकोपस्थितिविषयीभूतयोरपि साध्यसिद्धक्रिययोः सम्बन्धोऽपेक्ष्यते इति सम्बन्धाकाङ्क्षायां स एव सम्बन्धो वक्तव्यः । तथाच स्ववृत्तिक्रियात्ववत्सम्बन्धेन 'साध्यभाषणविशिष्टं सिद्धभाषणम्' इति वचनशब्देन बोधः । एवमेव 'पाकः' इत्यादावपि बोध्यमिति पञ्चोलिनः ।

किञ्च तुमुन्नादीनां प्रधानक्रियान्वयित्वे साधुत्वस्वीकारेऽपि भावप्रत्ययस्थले

'साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना'

इति हर्युक्तरीत्या एकस्यैव चैत्रादेर्यथा सम्बन्धिभेदाद् आचार्यत्व-पितृत्वादिर्भेदस्तथैव एकस्या एव क्रियायाः धातुना साध्यत्वेन प्रतिपादने प्रत्ययस्य तात्पर्यग्राहकत्वम्, प्रत्ययेन सिद्धत्वेन प्रतिपादने धातोस्तात्पर्यग्राहकत्वमिति गुणीभूतत्वाभावे उक्तप्रयोगाणामिष्टापत्तिरुचितैव । अत एव भावप्रत्ययस्थले 'पाकः' इत्यादौ क्रियाया न द्विधा बोधानुभवः । यत्र 'गतः' इत्यादिस्थले गुणीभूतत्वं क्रियायास्तत्र तुमुन्प्रभृतीनान्तु असाधुत्वमेव, क्रियाप्राधान्ये एव तत्प्रवृत्तेरिति दिक् ।

यदि तु 'सकृत्पाकः' इत्यादीनां शिष्टाप्रयुक्तत्वं तदाऽनभिधानमेव तेषामित्याह-अनभिधानादिति । तादृशप्रयोगेण क्रियाजन्मगणनाऽप्रतीतेरित्यर्थः । तथाच भाष्यम्—'एकः पाकः' 'द्वौ पाकौ' 'त्रयः पाकाः' इह क्रियागणनसत्त्वात् कस्मान्न कृत्वोऽर्था भवन्तीत्याशङ्कायामुक्तम्—नैतत्क्रियागणनम्, किन्तर्हि, द्रव्यगणनमेतत् ? कथं कृदभिहितो भावो द्रव्यवद् भवतीति । 'सकृद्भुक्त्वा' 'सकृद्भोक्तुम्' 'द्विर्भुक्त्वा' 'द्विर्भोक्तुम्' इत्यादौ सुचोऽभावमाशङ्क्योक्तम्, नैष दोषः, क्रियागणनाद् भविष्यति, इति लिङ्गसंख्यान्वय्यर्थभावस्थले 'पाकः' इत्यादौ साध्यत्वेन सिद्धत्वेन च क्रियाया भानम् । लिङ्गसङ्ख्यानन्वयिभावस्थले एतद्भाष्यप्रामाण्यादेव साध्यत्वेनैव भानं, न सिद्धत्वेनेति भावः ।

अनभिधानमन्तरापि 'सकृत्पाकः' इत्यादिप्रयोगापत्तिं निराकुर्वतां मतमाह—केचिदिति—यत्र साध्यत्वेनैव प्रतीतिस्तत्रैव कृत्वोऽर्थप्रत्ययः । 'पाकः' इत्यादिस्थले तु सिद्धत्वेनापि प्रतीतिरिति न तत्र तादृशप्रयोगप्रसक्तिरिति भावः । तस्या एवेति—अभ्यावृत्तिः = पुनः पुनर्जन्म, सा च क्रियाया एव भवति । द्रव्यगुण-

दर्पणव्याख्या

① अतिप्रसङ्गस्त्विति ① 'सकृत्पाक' इत्यादिप्रयोगापत्तिरूपस्त्वित्यर्थः । ② अनभिधानादिति ② शिष्टाप्रयुक्तत्वादित्यर्थः । ③ तस्या एवेति ③ पूर्वापरीभूतावयवसमुदायरूपक्रियाया एवेत्यर्थः । एवकारेण द्रव्यगुणयोर्व्यवच्छेदः, तयो

मम्भवेन सामर्थ्यात्तल्लाभात्। तथाच साध्यमात्रस्वभावक्रियालाभाय तदिति वाच्यम्, नच 'पाकः',
इत्यादौ तादृशीति नातिप्रसङ्गः, द्विर्वचनमिति च 'द्विःप्रयोगो द्विर्वचनम्' इति व्युत्पत्त्या, "द्विर्व-
चनेऽचि" ( पा० सू० १ । १ । ५९ ) इति ज्ञापकं वा आश्रित्योपपादनीयमित्याहुः ॥२०॥

ननु सिद्धान्ते बोधकतारूपा शक्तिराख्यातशक्तिग्रहवतां बोधादावश्यकी, इति धातोरेव भावना
वाच्या, नाऽऽख्यातस्येति कथं निर्णय इत्याशङ्कां समाधत्ते—

मेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम् ।
साधुत्वं तदभावेऽपि बोधो नेह निवार्य्यते ॥ २१ ॥

प्रभा

योस्तु सिद्धस्वभावतया न पुनः पुनर्जन्म । 'पुनः पुनर्दण्डः' 'पुनः पुनः स्थूलः' इत्यादौ गम्यमानभयस्यादि-
क्रियाया एव पौनः पुन्यमिति न दोषः ।

वस्तुतस्तु 'एकस्य सकृच्च' इति सूत्रे अभ्यावृत्तिरिति न सम्बध्यते, एकपदेन हि एकैव क्रिया व्यक्तिः
प्रतीयते, तस्यास्त्वभ्यावृत्तेरसम्भवात् 'एको देवदत्तः' इत्यर्थे 'सकृद्देवदत्तः' इत्यादिवारणाय क्रियाग्रहणस्याना-
वश्यकत्वमित्यरुच्या केचिदित्युक्तम् । सामर्थ्यादिति—अभ्यावृत्तिपदसामर्थ्यादित्यर्थः । तत् = क्रियापदम् ।
तादृशी = साध्यमात्रस्वभावा । नच धातुना साध्यमात्रस्वभावैव प्रतीयते इति दोषतादवस्थ्यम्, प्रत्ययेन
सिद्धाया अपि प्रतीत्या तत्र तन्मात्रप्रतीतेरसम्भवात् । द्विर्वचनमिति चेति—द्विर्वचनमिति प्रयोगस्त्वित्यर्थः ।
व्युत्पत्त्येति—भाष्योक्तव्युत्पत्तिबलेनेत्यर्थः । ज्ञापकमिति—साध्यमात्रस्वभावत्वाभावेऽपि सुज्भवतीत्यर्थे
ज्ञापकमित्यर्थः । उपपादनीयमिति—अस्य 'द्विर्वचनम्' इति शब्दस्वरूपेणान्वयः । आहुरिति—अनेनारुचिः
सूचिता । क्रियाग्रहणस्योत्तरत्रानुवृत्त्या चरितार्थत्वाद् भाष्यानुक्तत्वेन 'इह किञ्चित् त्रयो' इति न्यायेन यथेच्छ-
कल्पनाया अन्याय्यत्वात् ॥२०॥

'सिंहावलोकन'न्यायेन पुनरपि भावनाया आख्यातवाच्यत्वमाशङ्क्य निराकर्तुमाह—नन्विति—
सिद्धान्ते = वैयाकरणसिद्धान्ते । बोधकतेति—'इन्द्रियाणां स्वविषये' इत्यनेन वक्ष्यमाणबोधजनकतारूपेत्यर्थः । बोधा-
दिति—'आख्यातं भावनाविषयकबोधजनकतावत्' इति शक्तिज्ञानवतां मीमांसकानामित्यर्थः । बोधा-
दिति—आख्यातेन भावनाया बोधादित्यर्थः । आवश्यकीति—बोधकतारूपा शक्तिराख्याते आवश्यकीति
भावः । भेद्यभेदकेति—भिद्यते = इतरस्माद् व्यावर्त्यते यत्तद् भेद्यम् = विशेष्यम्, विशेष्यताश्रय इति यावत् ।
कर्मणि ण्यत् । भिनत्ति = इतरस्माद् व्यावर्तयति यत्तद् भेदकम् = विशेषणम्, इतरव्यावर्तकमिति यावत् ।

दर्पणव्याख्या

सकृदेवोत्पत्तेः । क्रियायास्तु नैकस्या अपि निवृत्तिभेदाया धातुवाच्यबोधगमेन तज्जन्मनि पौनःपुन्यसम्भवादिति भावः ।
❀ सामर्थ्यादिति ❀ अभ्यावृत्तिपदोपादानसामर्थ्यादित्यर्थः । सामर्थ्यं च—तदाक्षेपार्थकत्वम् ।
❀ साध्यमात्रेति ❀ यद्यपि धात्पस्थाप्यायां तस्यां तत्त्वमक्षतम्, प्रागुक्तयुक्तेस्तथापि साध्यमात्रस्वभावपद-
स्योक्तप्रत्ययार्थगुणीभूतसाध्यस्वभावमात्रपरत्वान्न दोषः । ❀ तादृशीति ❀ धातूपस्थाप्योक्तरूपेत्यर्थः । ❀ व्युत्पत्त्येति ❀
विवरणपरभाष्यकारप्रयोगादित्यर्थः ❀ ज्ञापकमिति ❀ तादृशसूत्रकृत्प्रयोगरूपमित्यर्थः । 'इतशायिकाः शय्यन्ते' इतिवदिति
भावः । ❀ आहुरिति ❀ सारग्राहिण इति शेषः, आहुरिति—आहुरित्यस्वरसः सूचितः । तद्बीजन्तु क्रियापदस्योक्तार्थपर-
त्वेऽपि उक्तातिप्रसङ्गस्यापरिहारेण तस्य स्पष्टप्रतिपत्त्यर्थतयोचिता । अनभिधानाश्रयणेनैवोक्तापत्तिवारणे द्विर्वचनमित्यादि-
प्रयोगाणां लोकसिद्धानां ज्ञापकानुसरणेनोपपत्तिरनुचितेति ॥ २० ॥
❀ सिद्धान्त इति ❀ वैयाकरणसिद्धान्ते । 'इन्द्रियाणां स्वविषयेषु' इत्यादिना प्रतिपादिता

अतिप्रसङ्गस्त्वनभिधानान्नेत्याह–अतीति। "नहि वचिरन्तिपरः प्रयुज्यते" इत्याद्यभियुक्तोक्तरीत्या समाधेयमिति भावः।

केचित्तु–"सङ्ख्यायाः क्रियाभ्यावृत्तिगणने" इत्यत्र क्रियाग्रहणं व्यर्थम्, तस्या एवाभ्यावृत्ति-

प्रभा

अतिप्रसङ्ग इति—विशेषणीभूतक्रियामादाय कृत्वोऽर्थप्रत्ययानामापत्तिरूप इत्यर्थः। वस्तुतस्तु कृत्वोऽर्थविधायके क्रियाया एवाभ्यावृत्तिसम्भवेन अर्थतः क्रियालाभे क्रियाग्रहणस्योत्तरार्थताया उक्तत्वेन गुणभूतायामपि क्रियायां कृत्वोऽर्थप्रत्ययानां साधुत्वमेव। अत एव 'द्विर्वचनेऽचि' इति सूत्रम्, 'द्विःप्रयोगो द्विर्वचनं पाठ्यम्' इति भाष्यञ्च सङ्गच्छते।

नच 'द्विर्वचने' इत्यत्र वचधातुना साध्यत्वेनोपस्थितायाः, ल्युटा सिद्धत्वेनोपस्थिताया भाषणक्रियायाः 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्' इति नियमात् परस्परमन्वय आवश्यकः। तत्र सिद्धसाध्यक्रिययोर्विरुद्धतयाऽभेदान्वयासम्भव इति वाच्यम्, स्ववृत्तिक्रियात्ववत्सम्बन्धेनान्वयस्य वक्तुं शक्यत्वात्। यद्यपि कृद्वृत्तावेकार्थीभावात्मकशक्तेः सत्त्वेन पृथगुपस्थितेरभावादन्वयासम्भवस्तथाप्येकोपस्थितिविषयीभूतयोरपि साध्यसिद्धक्रिययोः सम्बन्धोऽपेक्ष्यते इति सम्बन्धाकाङ्क्षायां स एव सम्बन्धो वक्तव्यः। तथा स्ववृत्तिक्रियात्ववत्सम्बन्धेन 'साध्यभाषणविशिष्टं सिद्धभाषणम्' इति वचनशब्देन बोधः। एवमेव 'पा' इत्यादावपि बोध्यमिति पञ्चोलिनः।

किञ्च तुमुन्नादीनां प्रधानक्रियान्वयित्वे साधुत्वस्वीकारेऽपि भावप्रत्ययस्थले

सम्भवेन सामर्थ्याचल्लाभात्। तथाच साध्यमात्रस्वभावक्रियालाभाय तदिति वाच्यम्, नच 'पाकः',
इत्यादौ तादृशीति नातिप्रसङ्गः, द्विर्वचनमिति च 'द्विःप्रयोगो द्विर्वचनम्' इति व्युत्पत्त्या, "द्विर्व-
चनेऽचि" ( पा० सू० १ । १ । ५९ ) इति ज्ञापकं वा आश्रित्योपपादनीयमित्याहुः ॥२०॥
ननु सिद्धान्ते बोधकतारूपा शक्तिराख्यातशक्तिग्रहवतां बोधादावश्यकी, इति धातोरेव भावना
वाच्या, नाऽऽख्यातस्येति कथं निर्णय इत्याशङ्कां समाधत्ते—

भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम् ।
साधुत्वं तदभावेऽपि बोधो नेह निवार्यते ॥ २१ ॥

प्रभा

योस्तु सिद्धस्वभावतया न पुन पुनर्जन्म। 'पुन पुनर्दण्ड' 'पुन पुन स्थूल' इत्यादौ तु गम्यमानभवत्यादि-
क्रियाया एव पौन पुन्यमिति न दोष ।
वस्तुतस्तु 'एकस्य सकृच्च' इति सूत्रे अभ्यावृत्तिरिति न सम्बध्यते, एकपदेन हि एकैव क्रिया व्यक्ति
प्रतीयते, तस्यास्त्वभ्यावृत्तेरसम्भवात् 'एको देवदत्त' इत्यर्थे 'सकृद्देवदत्त' इत्यादिवारणाय क्रियाग्रहणम्याना-
वश्यकत्वमित्यरुच्या केचिदित्युक्तम। सामर्थ्यादिति—अभ्यावृत्तिपदसामर्थ्यादित्यर्थ । तत् = क्रियापदम्।
तादृशी = साध्यमात्रस्वभावा । नच धातुना साध्यमात्रस्वभावैव प्रतीयते इति दोषतादवस्थ्यम्, प्रत्ययेन
सिद्धाया अपि प्रतीत्या तत्र तन्मात्रप्रतीतेरसम्भवात्। द्विर्वचनमिति चेति—द्विर्वचनमिति प्रयोगस्त्वित्यर्थ ।
व्युत्पत्त्येति—भाष्योक्तव्युत्पत्तिबलेनेत्यर्थ । ज्ञापकमिति—साध्यमात्रस्वभावत्वाभावेऽपि मुभयतीत्यर्थे
ज्ञापकमित्यर्थ । उपपादनीयमिति—अस्य 'द्विर्वचनम्' इति शब्दस्वरूपेणान्वय । आहुरिति—अनेनारुचि
सूचिता। क्रियाग्रहणस्योत्तरत्रानुवृत्त्या चरितार्थत्वाद् भाष्यानुक्तत्वेन 'इह किञ्चित् त्रपो' इति न्यायेन यथेन्उ-
कल्पनाया अन्याय्यत्वात् ॥२०॥
'सिंहावलोकन'न्यायेन पुनरपि भावनाया आख्यातवाच्यत्वमाशङ्क्य निराकर्तुमाह—नन्विति—
सिद्धान्ते = वैयाकरणसिद्धान्ते। बोधकतेति—'इन्द्रियाणा स्वविषये' इत्यनेन वक्ष्यमाणबोधजनकतारूपेत्यर्थ ।
आख्यातेति— आख्यात भावनाविषयकबोधजनकतावत्' इति शक्तिज्ञानवता मीमांसकानामित्यर्थ । बोधा
दिति—आख्यातेन भावनाया बोधादित्यर्थ । आवश्यकीति—बोधकतारूपा शक्तिराख्याते आवश्यकीति
भाव । भेद्यभेदकेति—भिद्यते = इतरस्माद् व्यावर्त्यते यत्तद् भेद्यम् = विशेष्यम्, विशेष्यताश्रय इति यावत्।
कर्मणि ण्यत्। भिनत्ति = इतरस्माद् व्यावर्तयति यत्तद् भेदकम् = विशेषणम्, इतरव्यावर्तकमिति यावत्।

दर्पणव्याख्या

सकृद्देवोपत्ते । क्रियायास्तु नैकस्या अपि निवृत्तिभेदाया धातुवाच्यत्वोपगमेन तज्जन्मनि पौन पुन्यसम्भवादिति भाव ।
❀ सामर्थ्यादिति ❀ अभ्यावृत्तिपदापादानसामर्थ्यादित्यर्थः । सामर्थ्यञ्च—तदाक्षेपार्थकत्वम् ।
❀ साध्यमात्रेति ❀ यद्यपि धातूपस्थाप्याया तस्यां सत्त्वमक्षतम्, प्रागुक्तयुक्तेस्तथापि साध्यमात्रस्वभावपर
स्योक्तप्रत्ययार्थगुणीभूतसाध्यस्वभावमात्रपरत्वान्न दोष । ❀ तादृशीति ❀ धातूपस्थाप्योक्तरूपेत्यर्थः । ❀ व्युत्पत्त्येति ❀
विवरणपरभाष्यकारप्रयोगादित्यर्थः ❀ ज्ञापकमिति ❀ तादृशसूत्रप्रयोगरूपमित्यर्थः । 'हतशायिका शय्यन्ते' इतिवदिति
भाव । ❀ आहुरिति ❀ सारग्राहिण इति शेष, आहुरिति—आहुरित्यस्वरस सूचित । वस्तुतस्तु क्रियापदस्योक्तार्थपर
त्वेऽपि उक्तातिप्रसङ्गस्यापरिहारेण तस्य स्पष्टप्रतिपत्त्यर्थत्वोचिता । अनभिधानाश्रयणेनैवोक्तापत्तिवारणे द्विर्वचनमित्यादि
प्रयोगाणा लोकसिद्धाना ज्ञापकानुसरणेनोपपत्तिश्चानुचितेति ॥ २० ॥
❀ सिद्धान्त इति ❀ वैयाकरणसिद्धान्ते । 'इन्द्रियाणा स्वविषयेषु' इत्यादिना प्रतिपादिता बोधकतारूप

भेद्यम् = विशेष्यम्, भेदकम् = विशेषणं तयोर्यः सम्बन्धस्तस्य यो भेदस्तन्निबन्धनं साधुत्वम्। अयमर्थः-व्याकरणस्मृतिः शब्दसाधुत्वपरा तत्रैवावच्छेदकतया कल्प्यमानधर्मस्य शक्तित्वं वदतां मीमांसकानां पुनः शक्तत्वं साधुत्वमित्येकमेवेति तद्रीत्या विचारे साधुत्वनिर्णये एव शक्तिनिर्णय उच्यते।

प्रभा

कर्तरि ण्वुल्। भेद्यश्च भेदकश्चेति भेद्यभेदके तयोर्यः सम्बन्धः = विशेष्यविशेषणभावरूपस्तद्रूपो य उपाधिः = इतरव्यावर्तको धर्मस्तस्य यो भेदः = विशेषः = सम्बन्धविशेषसमवायादिरिति यावत्। सः = सम्बन्धविशेष एव निबन्धनम् = निमित्तं यस्य = साधुत्वस्य तादृशं साधुत्वमित्यर्थः।

अयम्भावः—घटादिशब्दानां घटत्वादिप्रवृत्तिनिमित्तं तदेव भेदकमित्युच्यते। यच्च तदाश्रयीभूतं घटादि तदेव भेद्यम् = विशेष्यम्, तयोः = घटत्वघटयोर्यो विशेष्यविशेषणभावः स एव सम्बन्धोपाधिः = इतरव्यावर्तकः = समवायसम्बन्धेन घटत्वविशिष्टघटनिरूपितबोधकत्वमेव घटशब्दे, नतु घटविशिष्टघटत्वबोधकत्वम्, पटत्वविशिष्टपटबोधकत्वं चेत्येवं घटादिशब्दानामन्यतो बोधकत्वं वारयति। तथाच यस्मिन् विशेष्ये = विशेष्यतया भासमाने घटादौ यादृशविशेषणा( घटत्वादि )न्विते यादृशा ( घटत्वादिरूप ) नुपूर्व्याः सूत्रवार्तिकभाष्यकाराद्यन्यतमेन साधुत्वमुक्तं स शब्दस्तत्र साधुरन्यत्रासाधुरेव, अर्थविशिष्टशब्दानामेव तैः साधुत्वबोधनात्। अत एव दन्त्यसकारमध्योऽश्वशब्दो दरिद्रे साधुः, नतु घोटके। एवं तालव्यशकारमध्योऽश्वशब्दो दरिद्रेऽसाधुर्घोटके च साधुरित्यादि व्यवतिष्ठते। एवञ्च सूत्रकारादिभिः 'धातुर्भावनाविषयकबोधजनकतावान्' इति बोधिते भावनारूपार्थे आख्यातमसाधु, धातुश्च साधुरिति लब्धम्। ननु व्याकरणस्य शब्दसाधुत्वान्वाख्यायकत्वमेव, नतु शक्तिग्राहकत्वम्, अत एव 'अथ शब्दानुशासनम्' इति 'लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः' इति, 'वृद्धिरादैच्' इति सूत्रे, मृजेरचि हल्सु भल्यदेषु 'मृजिप्रसङ्गे मार्जिः साधुर्भवति' इति च भाष्यम्—

'साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः'

इति वाक्यपदीयञ्च सङ्गच्छते।

नन्वेवमप्यस्तु धातोरेव भावनायां साधुत्वम्, तथापि भावनाबोधकमाख्यातमिति भावनाशक्तत्वमाख्यातस्य नायातमित्याशङ्कां निरसितुमाह—अयमर्थ इति। तत्र = साधुशब्दे। अवच्छेदकतयेति—'धात्वादिपदं भावनाविषयकबोधजनकतावत्' इत्याकारकं यच्छाब्दिकानां शास्त्रज्ञानीया या बोधजनकत्वनिष्ठकारणतानिरूपितधात्वादिनिष्ठा विशेष्यताऽऽख्या विषयता तदवच्छेदकीभूतो धर्मविशेष शक्तिः। यद्वा—धात्वादिनिष्ठा या भावनाविषयकबोधजनकता तदवच्छेदकतयेत्यर्थः। जनकताया अवच्छिन्नत्वनियमेनावच्छेदकधर्मकल्पनावश्यकत्वात् तयाऽवच्छेदकत्वेन कल्पितधर्मस्यैव शक्तित्वमुचितम्। तथाचावच्छेदकीभूतधर्मस्य, साधुत्वस्य च साधुशब्दे समनियततया समनियतयोरैक्यान्मीमांसकानां मते साधुत्वस्यैव शक्तित्वमाह—शक्तत्वं ( शक्तिः ) साधुत्वमिति। तद्रीत्या = मीमांसकरीत्या। साधुत्वनिर्णय इति—तथाच व्याकरणस्य साधुत्वनिर्णायकत्वेऽपि शक्तिनिर्णायकत्वस्यापि निर्बाधतया 'लः कर्मणि' इति सूत्रादिविरोधाद् भावनाबोधकत्वेन आख्यातमसाधुरेवेति भावः।

अतिरिक्तशक्तिवादेऽप्याख्यातानामसाधुता भावनायां स्यादेव। एवञ्च चतुर्थ्यर्थे तृतीयाप्रयोग-वद्धात्वर्थभावनायामाख्यातप्रयोगे, याज्ञे कर्मण्यसाधुशब्दप्रयोगात् 'नानृतं वदेत्' इति निषेधोल्लङ्घन-प्रयुक्तं प्रायश्चित्तं

प्रभा

ननु साधुत्वातिरिक्तमेव शक्तत्वम्, न साधुत्वरूपम्, अन्यथा असाधुशब्दाद् बोधानापत्तिरित्याह—अतिरिक्तशक्तिवाद इति—साधुत्वापेक्षयाऽतिरिक्ते शक्तिवादे इत्यर्थः। तत्र साधुत्वम्=व्याकरण-शिष्ट-प्रयुक्तत्वान्यतरव्यङ्ग्यो जातिविशेषः, पदार्थान्तरं वा। अत एव 'अत्राय शक्त' 'अत्राय साधु' इति वाक्य-द्वयजन्यप्रतीतिभेद उपपद्यते। स्यादेवेति—व्याकरणस्मृते साधुत्वज्ञापनार्थकत्वेऽपि साधुत्वस्यार्थविशेषविशिष्टे शब्दविशेषे एव नियतत्वेनार्थापेक्षतया शक्तिनिर्णायकत्वमपि सिद्धमेव। तदुक्तम्—

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः'॥ इति।

आख्यातेन भावनाया बोधेऽपि सूत्रकाराद्यन्यतमेनाऽऽख्यातस्य भावनाया शक्तेरबोधनादसाधुता स्यादेवे-त्यर्थः। अत एव भाष्ये 'समानश्च खेदविगमो गम्यायाञ्चागम्यायाञ्च' इति दृष्टान्तेन 'समानायामर्थावगतौ शब्देन चापशब्देन च, तत्र धर्मनियमः क्रियते, शब्देनैवार्थोऽभिधेयो नापशब्देन' इत्युक्तं सङ्गच्छते। ननु धर्मनिर्णायकजैमिनिसूत्रविरोधे पाणिनिस्मृतिर्बाध्येतेति चेन्न, 'यत्परः शब्दः स शब्दार्थः' इति न्यायेन साधु-त्वानुशासनार्थमेव पाणिनेः प्रवृत्तत्वाद् व्याकरणस्य स्वबोध्यसाधुत्वार्थविषये दर्शनान्तरापेक्षया बलीयस्त्वात्। वस्तुतस्तु जैमिनिवचनव्याख्यातृविरोधेऽपि तत्सूत्रविरोधो नास्त्येव। तथाहि—भावार्थाधिकरणे जैमिनि सूत्रम्—'भावार्थाः कर्मशब्दाः (धातवः) तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते' इति। 'दद्यात्' 'जुहुयात्' इत्याद्य कर्मशब्दा भावार्थाः'=क्रियार्थकाः, 'भावप्रधानमाख्यातम्' इति निरुक्तात्। अतस्तेभ्यः क्रिया प्रतीयेत=भावा-न्वयेन प्रतीयेत। हि=यतः=प्राधान्यात्, एष एव=क्रियारूप एवार्थो विधीयते, नतु द्रव्यरूपः, क्रियायाश्चाशु-विनाशित्वात्, कालान्तरभाविस्वर्गादिरूपेष्टजनकता तत्र न सम्भवतीति द्वारभूतमपूर्वं (पुण्यम्) कल्पनीयमिति जैमिनिसूत्रार्थः। शेषं स्पष्टम्। पूर्वोक्तसूत्राद् भावनाया धात्वर्थत्वमेव लभ्यते, नत्वाख्यातार्थत्वम्। अत एवोक्त ग्रन्थकृता—'जैमिनीयवचनव्याख्यातृभिर्दूषितान्' इति। चतुर्थ्यर्थे इति—इदमुपलक्षणम्—यत्रार्थे यस्य शास्त्रेण विधानं तत्रार्थे शास्त्राबोधितस्य। प्रयोगे इति—सती सप्तमीयम्। नानृतमिति—अनृतं द्वेधा—शब्दानृतम्, अर्थानृतञ्च। शब्दानृतम्—'गावी' 'गोणी' 'गोता' इत्यादि। अर्थानृतम्—'अश्वे' 'अश्व'शब्दः। निषेधेति—निषेधोल्लङ्घनञ्च निषिद्धार्थानुष्ठानम्। प्रायश्चित्तमिति—पापविशोधनमित्यर्थः।

'प्रायः पापं विजानीयात् चित्तं तस्य विशोधनम्'। इत्युक्ते।

दर्पणव्याख्या

किन्तु बोधकत्वमिति वक्ष्यमाणसिद्धान्तिमतेऽपीत्यर्थः।

❀अतिरिक्तशक्तिवादेऽपीति❀ साधुत्वं न शक्तत्वम् असाधोरपि बोधात्। आख्याताच्छक्तिभ्रमेण भावनाबोधेऽपि तत्र तस्यासाधुता स्यादेवेत्यर्थः।

❀ असाधुता भावनाया स्यादेवेति ❀ इत्यत्र "समानायामर्थावगतौ साधुभिर्भाषितव्यं नासाधुभि तथाच भाष्यकृता—"सिद्धे शब्दार्थसम्बन्धे' (म० भा० आ० १) रिति गम्या गम्येतिवन्नियमः क्रियते इति पस्पशायामुक्तम्। एवञ्च यादृशविशेषणान्वितयादृशविशेष्यबोधे यादृशानुपूर्व्या सूत्रकृदाद्यन्यतमसम्मतः तादृशबोधे तादृशानुपूर्वीकः शब्दः साधुर्नान्यत्र। अत एवाश्वशब्दोऽश्वे न साधुः, किन्तु नि स्वे। अश्वशब्दो निस्वे न साधुः, किन्तु तुरग इति सङ्गच्छते। नन्वस्तु असाधुतेत्यत आह ❀ एवञ्चेति ❀ याज्ञे कर्मणीत्यनेन "नानृतं वदेन्नापशब्दितं वा" इत्यादिश्रुतेः क्रतुप्रकरणे पाठादितरत्र तत्प्रयोगे प्रत्यवायाभावं सूचयति।

दर्शनान्तरीयव्युत्पत्तिमतां स्यादेवेति ।

ननु त्वन्मते 'नानृतम्' इति निषेधः क्रत्वर्थ एव न सिद्ध्येत्, आख्यातेन कर्तुरुक्तत्वाच्छ्रुत्या पुरुषार्थतैव स्यात्, प्रकरणाद्धि क्रत्वर्थता, तच्च श्रुतिविरोधे बाध्यते, इति चेन्न,

प्रभा

दर्शनान्तरीयेति—व्युत्पत्तिः=शास्त्रजन्यं यत् पदार्थज्ञानं तत्सम्पाद्यः संस्कारविशेषः, शास्त्रीयार्थबोधकशक्तिर्वा । तथाच मीमांसादर्शनजन्यो यः संस्कारः—'आख्यातं भावनाबोधकम्' इत्येतद्विषयकस्तादृशसंस्कारवतामित्यर्थः । त्वन्मते=वैयाकरणमते । क्रत्वर्थ एवेति—अत्रेदं बोध्यम्-सूत्रादिप्रमाणैः कर्तुराख्यातार्थत्वे साधितेऽपि दर्शपूर्णमासप्रकरणपठितस्य 'नानृतं वदेत्' इति निषेधवाक्यस्य क्रत्वर्थत्वं (क्रतूपकारकत्वम्) न सिध्येत्, अनृतभाषणे जाते याज्ञिकैः क्रतुवैगुण्यनिवारणार्थं प्रायश्चित्तमनुष्ठीयते, तदसङ्गतं स्यात् । तथाहि—नानृतमित्यस्य दर्शपूर्णमासक्रतुप्रकरणे पठितत्वात्क्रत्वर्थत्वम्, आख्यातेन कर्तुरुपस्थितत्वात् श्रुत्यादीनामेकत्र समवाये=एकत्र समवधाने परस्य=एतत्सूत्रपठितेषु परस्य दौर्बल्यम्, वैयाकरणनये श्रुत्या=आख्यातरूपशब्देन कर्तुरुपस्थितत्वात् पुरुषार्थत्वम्, तत्र 'श्रुति लिङ्ग-वाक्य प्रकरण-स्थान समाख्यानां समवाये पारदौर्बल्यम्, अर्थविप्रकर्षात्' इति न्यायात् श्रुतेर्बलवत्त्वात्पुरुषार्थत्वमेव स्यात्, न प्रकरणप्राप्तक्रत्वर्थत्वम् ।

मीमांसकमते तु आख्यातरूपश्रुत्या उपस्थिता भावना, कर्ता च भावनया आक्षिप्यते इति श्रुत्या क्रियारूपा या क्रतुस्तदर्थत्वमनृतवदनस्य सिध्यति । तथाच क्रतुवैगुण्यनिवारणाय सकलयाज्ञिकमीमांसकप्रायश्चित्ताऽऽचाररूपाऽऽचारविरोधाद् भावनावाचकत्वमेव तिङादीनामभ्युपेयम् । न च 'ल कर्मणि' इति शास्त्रादिविरोधः—यथा वृद्धिगुणशब्दौ लोकवेदयोरर्थद्वयबोधकत्वेनादृष्टावपि वैयाकरणैः स्वशास्त्रे परिभाषितौ यथा वा प्रयोगेऽसत्त्वेव लकारः उत्प्रेक्षितस्तथैव कर्त्रादिवाचकत्वस्यापि प्रक्रियानिर्वाहाय कल्पितत्वसम्भवात् । नचैतावता व्याकरणस्मृतेरप्रामाण्यम्, अर्थवादवत्तात्पर्यविषयीभूतार्थे प्रामाण्याभ्युपगमात् । बाध्यत इति—श्रुतिलिङ्गेति न्यायादित्यर्थः । तत्र निरपेक्षरवः श्रुतिः । स्वार्थाभिधाने पदान्तरानाकाङ्क्षितो यो रवः=शब्दः सा श्रुतिः । यथा 'व्रीहीनवहन्ति' इत्यत्र द्वितीयया श्रुत्या अवहननस्य व्रीह्यङ्गत्वम्, अवहननसंस्कार-

दर्पणव्याख्या

प्रभा

लिङ्गम् = पदानामर्थप्रतिपादनसामर्थ्यम् । यथा—'बर्हिर्देवसदनं
विशिष्टो व्रीहिर्हविः सम्पादनद्वारा यागाङ्गम् । दामीत्यस्य लवनार्थकदाधातुनिष्पन्नतया देवगृहभूत-
दामि' अस्य मन्त्रस्य कुत्र विनियोग इत्याकाङ्क्षायां वाक्यम् = समभिव्याहारः । समभि-
कुशच्छेदने विनियोगः, दापदे छेदनार्थप्रकाशनसामर्थ्यरूपाल्लिङ्गात् । समानाधिकरणविशेष्यविशेषणभाव इति यावत् ।
व्याहारो नाम—साध्यसाधनत्ववाचकद्वितीयादिराहित्यम्, यथा 'पर्णमयी जुहूर्भवति' अत्र जुह्वा पर्णमयत्वम् अङ्गम्, समभि-
शेषशेषिणो ( अङ्गाङ्गिनो ) सहोच्चारणम् । तस्यैव जुहूः कर्तव्या, नान्यकाष्ठस्येति सामानाधिकरण्येन सहोच्चारणरूप-
व्याहारात् । पर्णम् = पलाशकाष्ठम्, यज्ञविश्वरूपं तस्य धारणपात्रम् । पर्णपदेनात्र पत्रस्य
समभिहारान्निर्णयः । जुहूर्नाम = चरुपात्रादुत्थापितं
न ग्रहणम्, तत्र चरुधारणासम्भवात् । तदुक्तम्—

वैकङ्कती ध्रुवा प्रोक्ता आश्वत्थी चोपभृन्मता ।
जुहूः पलाशकाष्ठस्य खादिरस्य स्रुवो मतः' ॥ इति ।

तत्र श्रुतिः—'दर्शपौर्णमासाभ्यां स्वर्गकामो
प्रकरणम् = उभयाकाङ्क्षा । यथा दर्शपौर्णमासौ प्रधानयागौ । कथं भावयेदिति इतिकर्तव्यताकाङ्क्षा जायते ।
यजेत' इत्यस्य दर्शपौर्णमासाभ्यां स्वर्गं भावयेदित्यर्थः । तत्र उपकार्य ( फल ) स्याकाङ्क्षा प्रतीयते, इत्युभयोः
'समिधो यजेत्' इत्यस्य समिद्यागेन भावयेदित्यर्थः ।

दर्पणव्याख्या

तत्र विरुद्धयोरेकत्रोपनिपाते समुच्चयदौर्लभ्यादेकेनापरस्य बाधो
तथाहि—श्रुत्यादयः षडिह विनियोजकाः । पारदौर्बल्यप्रतिपादकम्—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमा
वश्यः । स च कस्यतो दुर्बलस्येति कस्य दौर्बल्यमित्याकाङ्क्षायां महर्षिजैमिनिः । श्रुत्यादीनां षण्णां समवाये एकत्रोप
ख्यानां समवाये पारदौर्बल्यम्, अर्थविप्रकर्षात्' इति सूत्रं प्रणिनाय तथा चैषां मध्ये यदपेक्षया यत्परं तद्दुर्बलमित्यर्थः । तत्र
निपाते पारदौर्बल्यमिति । परमेव पारम् = उत्तरपठितम् । विप्रकर्षात् = उत्तरवर्तित्वात्, लिङ्गादेर्विलम्बेन पूर्वापेक्षया
हेतुमाह – अर्थविप्रकर्षादिति—अर्थस्य = विनियोजकस्य लिङ्गादितो
विनियोजकत्वावगतेरिति यावत् ।

निरपेक्षो रवः श्रुतिः । इतरप्रामाण्यानधीनप्रामाण्यकत्वञ्च निरपेक्षत्वम्—यथा
तत्र श्रुत्यादीनामुदाहरणानि—द्वितीया श्रुतिरितरनिरपेक्षैव व्रीहीणामवघातशेषित्व
'व्रीहीनवहन्ति' इति । अत्र क्रियाजन्यफलभागित्वं कर्मत्वं बोधयन्ती
प्रतिपादयति । १ ।

यथा 'बर्हिर्देवसदनं दामि' इति । अत्र लवनार्थप्रकाशकतया लवने अस्य
अर्थविशेषप्रकाशनसामर्थ्यं लिङ्गम् ।
विनियोगः । २ ।

यथा 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां
परस्पराकाङ्क्षावशादेकस्मिन्नर्थे पर्यवसन्नानि पदानि वाक्यम् । अत्र मन्त्रलिङ्गेन निर्वापे प्रयुज्यमानस्य समवेतार्थभागस्यैकवाक्यता
पूष्णो हस्ताभ्याम् 'अग्नये त्वा जुष्टं निर्वपामि' इति ।
वशेन देवस्य त्वेत्यादिभागस्यापि तत्रैव विनियोगः । ३ ।

सम्बन्ध आकाङ्क्षापर्यवसन्नं प्रकरणम् । यथा—
लब्धवाक्यभावानां पदानां कार्यान्तरापेक्षावशाद्वाक्यान्तरेण
प्रकरणपाठवशाच्छेषत्वम् । ४ ।
'समिधो यजति' इति । अस्य हि दर्शपूर्णमासे कथम्भावाकाङ्क्षायां

यथा—दधिरसीत्यत्राग्नेयो पाश्चाग्नीषोमीययागाः
स्थानम् = क्रमः । [illegible] चानेकस्याम्नातस्य सन्निधिविशेषाम्नानम् । तत्राग्नेयाग्नीषोमयोर्द्वयोर्लिङ्गेनैव विनियोगसिद्धिः । दधि
क्रमेण पठिताः एवं मन्त्रभागेऽपि क्रमेणानुमन्त्रणत्रयं पठितम् । किन्तु यस्मिन् प्रदेशे ब्राह्मणे उपांशुयागविधानं तस्मिन् प्रदेशे मन्त्रेऽप्यस्य पाठ इति
रसीत्यत्र तु न लिङ्गादिविनियोजकम् ।
क्रमादुपांशुयागानुमन्त्रेण तस्य विनियोगः । ५ ।

समाख्या = योगबलम् । यथा 'हौत्रं' 'उद्गात्रम्' इत्यादि । तत्र हि—होतुरिदं हौत्रमित्यादियोगबलेन हौत्रादिसमा
ख्यातानि कर्माणि होत्रादिभिरनुष्ठेयानीति । ६ ।

प्रभा

साकाङ्क्षतया दर्शपौर्णमासयोरितिकर्तव्यतया समभिव्याहारः सम्बध्यते । स्थानम्=देशसामान्यम् । तच्च द्विविधम्=पाठसादेश्यम्, अनुष्ठानसादेश्यञ्च । मन्त्राणां क्रमः पौर्वापर्यमिति यावत्, कर्मणाञ्च बाहुल्ये केन मन्त्रेण किं कर्मेति विचारे यथासङ्ख्यं सम्बन्धो मन्त्रकर्मणोः पाठसादेश्येन । एवं प्रथमपठितस्य मन्त्रस्य कैमर्थ्याकाङ्क्षायां प्रथमविहितकर्मणा सम्बन्धोऽपि पाठसादेश्येन । सन्निधिपाठोऽपि पाठसादेश्यमेव । यथा यागो द्विविधः—प्रकृतिरूपः, विकृतिरूपश्चेति । तत्र यस्मिन् यागे इतिकर्तव्यता उपदिष्टा, यागान्तरेण उपजीव्यते सा प्रकृतिः । येनोपजीव्यते सा विकृतिः । एवञ्च ये विकृतियागाङ्गभूताः प्रकृत्यङ्गानुवादेन विहितास्तेषां विकृत्यङ्गत्वम्, सन्निधिपाठात् । अनुष्ठानसादेश्यम्-यथा—'ज्योतिष्टोमे त्रयः पशवः समाम्नाता'—'अग्निषोमीयः, सवनीयः, आनुबन्ध्यश्च' इति । तत्र पशुधर्मा उपाकरणादयः सप्त औपवसथ्येऽहनि श्रूयन्ते । अग्निष्टोमीयस्यापि तदेव स्थानमिति समानानुष्ठानदेशत्वात्पशुधर्मा अग्निषोमीयाङ्गभूता न ज्योतिष्टोमाङ्गभूताः, विभिन्नदेशत्वात् । समाख्या=यौगिकः शब्दः । प्रकृतिप्रत्ययरूपयोगात्=अवयवार्थप्रकाशकः । अत एव योगबलम्=अवयवबलं समाख्या इत्यप्युच्यते । ज्योतिष्टोमयागे सोमरसो भक्षणीयो नवेति संशयः, तत्र 'प्रैतुहोतुश्चमसः' 'प्रब्रह्मणः' 'प्रोद्गातॄणाम्' 'प्रयजमानस्य प्रयन्तु सदस्यान्' इति श्रुत्या होत्रादिना सह चमसस्य सम्बन्धमात्रं प्रतीयते, नतु सोमभक्षणमिति पूर्वपक्षे सिद्धान्तसूत्रम्—'चमसेषु समाख्यानात् संयोगस्य तन्निमित्तत्वात्' इति । होत्रादेः चमसे यः सम्बन्धः स भक्षणनिमित्तक एव, कुतः, समाख्यानात्=चमसो यज्ञपात्रम्, यौगिकत्वात् । तथाहि—चमधातुर्भक्षणार्थः, 'चमु अदने' इत्युक्तेः । तस्मात् चमति=भक्षयत्यस्मिन्निति अधिकरणे औणादिकोऽसच्प्रत्ययः । एवञ्च सोमस्य भक्षणाभावे होतुश्चमस इति सम्बन्धो नोपपद्येतेति समाख्यया सोमस्य भक्षणमावश्यकमिति निर्णीतम् । एवञ्च श्रुत्यादिषु कयोश्चित् केषाञ्चिद्वा समवाये पूर्वस्य बलीयस्त्वमुत्तरस्य दुर्बलत्वमिति बलीयसा निर्णयः ।

दर्पणव्याख्या

विरोधोदाहरणादि यथा—श्रुतिलिङ्गयोर्विरोधे श्रुतिर्बलीयसी, लिङ्गं तु दुर्बलम्, अर्थविप्रकर्षात् । यथा, कदाचन-स्तरीरसीत्यादिकाया ऋचो विनियोजिका श्रुतिः 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति इन्द्रप्रकाशनसामर्थ्याल्लिङ्गादिन्द्रोपस्थापने विनियोगोऽस्याः प्रतिभाति, अन्यप्रकाशकस्यान्यत्र विनियोगायोगात् । श्रुत्या गार्हपत्योपस्थापने स प्रतीयते । गार्हपत्य-मिति द्वितीया हि कर्मविभक्तितया कार्यापि क्रियामपेक्ष्य प्रकृत्यर्थस्य शेषित्वं बोधयति, क्रियाजन्येष्टफलभागित्वस्य तदर्थत्वात् । एवमैन्द्र्येति तृतीयाप्रकृत्यर्थस्य शेषत्वम्, क्रियां प्रति साधकतमत्वरूपकरणत्वस्य तदर्थत्वात्, तदनयोर्विरोधः ।

तत्रायं पूर्वपक्षः—सामर्थ्यज्ञानमपेक्ष्य श्रुतिर्विनियोजिका । नह्यसमर्थं श्रुतिसहस्रमपि विनियोक्तुमलम्, अतो लिङ्गस्य बलवत्त्वादिन्द्रोपस्थापनेऽस्या विनियोगः । तदनुरोधितया द्वितीया सप्तम्यर्थतया व्याख्येया । गार्हपत्यसमीपे 'इन्द्रोऽनया उपस्थातव्य' इत्यर्थः पर्यवस्यतीति ।

सिद्धान्तस्तु—श्रुतिः स्वरूपसत्सामर्थ्यमपेक्षते, ननु तज्ज्ञानमपि, येन लिङ्गं बलवद्भवेत् । तस्य च पूर्वं सत एव विनियोगोऽन्यथानुपपत्त्या ज्ञानं पश्चादुपजायते । लिङ्गं तु विनियोजने श्रुतिमपेक्षते । नह्यनयेन्द्र उपस्थातव्य इति लिङ्गात् प्रतीयते, किन्त्विन्द्र एतादृगित्येतावन्मात्रम् । तथाच प्रकरणाज्ज्ञानसामर्थ्यादिन्द्रप्रकाशनसमर्थाया ऋचोऽन्यथास्वरसत. अनुपपत्त्या लिङ्गेनानयेन्द्र उपस्थातव्य इति श्रुतिः कल्पनीया, यया विनियोगो भवेत् । ततो यावल्लिङ्गं श्रुतिकल्पनायै प्रमाणान्तरव्यापारं तावत् प्रत्यक्षश्रुत्या विनियोग सिद्ध इति प्रकरणे निराकाङ्क्षे कयाऽनुपपत्त्या श्रुतिः कल्पनीया । तस्माच्छ्रुतेर्बलवत्तया-तदनुगुणतया सामर्थ्ये नीयमाने इन्द्रपदं परमैश्वर्याश्रयवाचकतया गार्हपत्यतात्पर्यकमित्यवधार्यत इति । श्रुतिप्रकरणयो-र्विरोधोदाहरणन्तु यथा प्रतिष्ठाकामदर्शपूर्णमासयागे एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्येति श्रुत्या एकविंशति सामिधेन्यनुवचनानां सदङ्गत्वावगतौ नैराकाङ्क्ष्यात्पञ्चदशसामिधेन्यनुवचनाङ्गत्वावगमकप्रकरणस्य बाधः ।

'तिङर्थस्तु विशेषणम्' इत्यनेन परिहृतत्वात्। नहि गुणभूतः कर्ता निषेधं स्वाङ्गत्वेन ग्रहीतुमलम्। भावना तु प्रधानं तं ग्रहीतुं समर्थेति प्रकरणात् क्रत्वर्थतैव। अस्तु वा क्रतुयुक्तपुरुषधर्मः, अनुष्ठाने विशेषाभावात्।

प्रभा

ननु तिङर्थस्य कर्तुर्भावनायां विशेषणत्वेऽपि श्रुत्यर्थत्वस्य सत्त्वात् कथं न निषेधस्य पुरुषार्थत्वमित्या-
शङ्कां निराकरोति—गुणभूत इति—'प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः' इति न्यायेन विशेष्येऽङ्गित्वस्य
न्याय्यत्वाद् विशेषणेऽङ्गिसम्बन्धे प्राधान्याप्राधान्यस्य विरुद्धस्याऽऽपत्तिः, एकत्र विशेषणतयाऽन्वितस्यापरत्र
विशेषणत्वायोगाद् भावनायामन्वितस्य निषेधेऽन्वयानौचित्यम्। प्रधानमिति—इदं प्रथमान्तं भावनाविशे-
षणम्, प्रधानशब्दस्य श्रेष्ठेऽर्थे त्रिलिङ्गत्वात् 'प्रधाना' इति सूचितम्। तम् = निषेधम्। ग्रहीतुम् = प्रतियो-
गितया सम्बद्धुम्। एवञ्च निषेधस्य, प्रतियोगिभूतभावनायाश्च कैमर्थ्याकाङ्क्षायां क्रतुप्रकरणात् क्रत्वर्थतैव।
नन्वेवम् 'न कलञ्जं भक्षयेत्' इति निषेधस्यापि पुरुषार्थत्वं न स्यात्, कर्तुः पुरुषस्य भक्षणरूपभावनायां
विशेषणत्वात्। यदि तु भावनायाः प्राधान्यान्नञर्थान्वये तद्द्वारा कर्तुरपि निषेधेऽन्वय इति बुद्ध्या पुरुषार्थत्व-
मुच्यते तदा प्रकृतेऽपि तथैवास्त्वित्याह— अस्तु वेति—क्रतुयुक्तपुरुषसंस्कारद्वारा क्रतुयुक्तपुरुषधर्मः। नच
क्रतुयुक्तः प्रधानीभूतो यजमानस्तेनैव प्रधानतयाऽनृतं वर्जनीयं स्यान्नान्यैः क्रतुयुक्तैः पुरुषैः, इष्यते तु सर्वैः।
भावनाया आख्यातवाच्यत्वे तु यजमानस्याप्यप्राधान्यात् प्रधानन्यायाप्रवृत्तौ सर्वैरेव क्रतुयुक्तैरनृतं वर्जनीयमिति
लभ्यत इति वाच्यम्, श्रुत्या, प्रकरणेन च क्रतुसम्बद्धा ये ये पुरुषास्तत्कर्तृकानृतवदनाभावबोध एवानेन
लभ्यते, नतु क्रतोः कर्ता यो यजमानस्तत्कर्तृकानृतवदनाभाव एवेत्याशयात्। अनुष्ठान इति—क्रतुकर्ता यज-
मानः क्रत्वङ्गक्रियाकर्तारश्चान्ये इति क्रियाऽनुष्ठाने विशेषाभावात् = भेदाभावात् श्रुतिप्रकरणाभ्यां सर्वै-
रेवानृतं वर्जनीयमिति सिध्यतीति भावः। क्रतुयुक्तपुरुषधर्मत्वे च क्रत्वर्थत्वे फलतीति भावः।

दर्पणव्याख्या

विरोधोदाहरणान्तराणि त्वन्यतोऽवधार्याणि, गौरवभयान्नेह प्रपञ्चितानि। तदयं निर्गलितोऽर्थः—श्रुतिर्निरपेक्षत्वात्
सर्वतो बलवती, लिङ्गं तु विनियोगे एकान्तरितत्वाद् द्व्यन्तरितवाक्याद् बलवत्। एवं वाक्यादप्यूह्यम्। समाख्या तु
पञ्चान्तरितत्वात्सर्वतो दुर्बलेति प्रकृते आकाङ्क्षापर्यवसन्नप्रकरणेन वाक्यं कल्पनीयम्। तेन च लिङ्गम्, लिङ्गेन श्रुतिस्तया अनृ-
तवदननिषेधस्य क्रतौ विनियोगः। यावच्च प्रकरणं वाक्यकल्पनायै प्रमाणान्तरव्यापारं तावत्प्रत्यक्षया कर्त्रर्थैकाख्यातश्रुत्या तस्य
पुरुषार्थत्वेन विनियोगे सिद्धे बलवदपि वाक्याद्यकिञ्चित्करमिति श्रुतिविरोधे बाध्यत इत्यस्यार्थः, लिङ्गादीनामुक्तप्रकारेण
श्रुत्यपेक्षया दुर्बलत्वादिति भाव।
समाधत्ते—❀ तिङर्थस्तु विशेषणमिति ❀ तथाचाख्यातश्रुत्या कर्तुरुपस्थापनेऽपि न भावनावत् तस्य प्राधान्येन
मानम्, येन निषेधस्य पुरुषार्थता शङ्क्येत, किन्तु विशेषणतयैव, तथोपस्थितस्य च विशेषणान्तरनैराकाङ्क्ष्येण कर्तुः श्रौतमनर्थ-
सम्बन्धाभावान्नात्र श्रुत्या प्रकरणबाध इत्याशयं विशदयति—❀ स्वाङ्गत्वेनेति ❀ स्वविशेषणतयेत्यर्थः।
नन्वेवं निषेधस्य क्वापि श्रौतपुरुषार्थता न स्यात्, 'न कलञ्जं भक्षयेत्' इत्यत्राप्युक्तरीत्या कर्तरि नञर्थासम्बन्धेन
श्रौतत्वात्। यदि च कर्तुरप्राधान्येऽपि कर्तृवृत्तिभावनाया प्राधान्यात्तस्या नञर्थान्वये तद्द्वाराऽऽख्यातार्थकर्तुरप्यन्वयाच्च
तस्य श्रौतपुरुषार्थत्वानुपपत्तिरिति विभाव्यते, तदा प्रकृतेऽपि तुल्यमत आह—❀ अस्तु वेति ❀।
❀ अनुष्ठान इति ❀ नच नानृतं वदेदिति निषेधस्य क्रतुयुक्तपुरुषधर्मत्वे यजमानस्य प्राधान्यात्प्रधानीभूतकर्त्रे-
वानृतवदनं वर्ज्यं स्यात् क्रत्वर्थत्वे च कर्मनपेक्षत्वेन यज्ञप्रवृत्तेन यजमानेनत्विग्भिश्च वर्जनं सिध्यतीति विशेषात् कथमेतदिति
वाच्यम्, श्रुतिप्रकरणाभ्यां क्रतुसम्बन्धपुरुषकर्तृकानृतवदनाभाव इति बोधेन क्रतुकर्तृकेतिबोधे मानाभाव इति क्रतुयुक्तेति
पदतोऽभिप्रेतत्वादिति।

"जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू" इति वाक्योक्तमन्त्रविधिवदित्यादि भूषणे प्रपञ्चितम्।

प्रभा

तत्र दृष्टान्तमाह-मयि दक्षेति—दर्शपूर्णमासप्रकरणे एतच्छ्रूयते –'जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू' इति, जञ्जभ्यमानः=जृम्भां कुर्वाणः, 'मयि दक्षक्रतू' इति शब्दघटितं मन्त्रमनुब्रूयादित्यर्थः। तत्र सन्दिह्यते—अस्य मन्त्रोच्चारणस्य शुद्ध ( केवल ) पुरुषसंस्कारकतया पुरुषार्थत्वम्, उत क्रतुसम्बद्धपुरुषसंस्कारकतया क्रत्वर्थत्वमिति, तत्र कृत्प्रत्ययेन शानचा कर्तुरुपस्थितत्वात् प्रकृतवाक्येन पुरुषसंस्कारकत्वं प्राप्नोति। क्रतुप्रकरणे पठितत्वात् प्रकरणेन क्रतूपकारकत्वस्य प्राप्तावपि प्रकरणापेक्षया वाक्यस्य बलीयस्त्वात् क्रतुधर्मत्वं न युक्तमिति पूर्वपक्षे उत्तरितम्—यत्र श्रुतिप्रकरणयोर्विरोधस्तत्र श्रुत्या प्रकरणस्य बाधः। यत्र तु विरोधाभावसम्भवस्तत्रोभयो समावेश एव, न तु बाध्यबाधकभावः। तथाच वाक्येन ( शानचा श्रुत्या ) कर्तुरुपस्थितत्वेऽपि क्रतुसम्बद्धपुरुषसंस्कारमुखेन क्रतुसंस्कारकत्वमपि सिध्यतीति श्रुतिप्रकरणयोर्विरोधाभावाद् बाध्यबाधकभावाभावः, तथा प्रकृतेऽपि अनृतवदननिषेधस्य क्रतुयुक्तपुरुषधर्मतया क्रतूपकारकत्वमुपलभ्यते इति वाक्यप्रकरणयो. समावेश एव उचितः। तदुक्तं कुमारीलभट्टैः—

'स्त्र्युपायमांसभक्षादिपुरुषार्थत्वमपि स्थितः।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात्' ॥ इति।

स्त्र्युपायः=स्त्र्युपगमनम्। आदिना अनृतवदनस्य संग्रहः। प्रतिषेधः='न स्त्रियमुपेयात्' 'न मांसमश्नीयात्' 'नानृतं वदेत्' इति प्रतिषेधः। मन्त्रविधिवदिति—यथा क्रतुयुक्तजञ्जभ्यमानपुरुषधर्मतया क्रत्वर्थत्वं 'मयि दक्षक्रतू' इति मन्त्रपाठस्य, तथा अनृतवदननिषेधस्यापि क्रतुयुक्तपुरुषधर्मतया क्रत्वर्थत्वमपि।

किञ्च दर्शपूर्णमासप्रकरणपठितस्य 'नानृतं वदेत्' इति निषेधस्य शब्दानृतमर्थानृतमुभयमपि विनिगमनाविषय इत्यवधेयम्। न च निर्मूलत्वाद् व्याकरणानुरोधो नाऽऽदरणीय', 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति श्रुतेः,—

'पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन' ॥

इति पराशरोपपुराणोक्तेश्च व्याकरणस्य प्रामाण्याश्रुतेः। तस्माद्धातो फलव्यापारोभयार्थकत्वम्, तिङ कर्तृकर्मोभयार्थकत्वं स्वीकार्यमिति दिक्।

दर्पणव्याख्या

तत्र दृष्टान्तमाह—॥ जञ्जभ्यमान इत्यादि ॥ दर्शपूर्णमासप्रकरण एवैतन्मन्त्रवचनं श्रूयते-"जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू" इति। तत्र किमेतन्मन्त्रवचनं शुद्धपुरुषधर्मः, उत क्रतुयुक्तपुरुषसंस्कारकतया क्रत्वङ्गमिति सन्देहे, वाक्येन तावज्जञ्जभ्यमानपुरुषधर्मत्वमेवास्य प्रतीयते, कृत्प्रत्ययस्य शानच कर्तृवाचकत्वात्। प्रकरणेन तु क्रत्वङ्गतया प्रकरण च वाक्यापेक्षया दुर्बलमिति पुरुषधर्मतैव युक्ता। तस्या च फलाकाङ्क्षायाम् "प्राणापानावेवात्मन धत्ते" इति वाक्यशेषे श्रुतस्य फलस्य रात्रिसत्रन्यायेन कल्पनादिति पूर्वपक्षे सिद्धान्त—वाक्य-प्रकरणयोर्विरोधे बाध्यबाधकभावो नत्वत्रास्ति विरोध। जञ्जभ्यमानपदस्य कर्तृवाचकतया तादृशपुरुषस्य क्रतावपि सत्त्वात् तत्संस्कारमुखेन क्रत्वङ्गतासम्भवात्। एवञ्चार्थवादोपस्थित फलकल्पनागौरवमपि नेति। तथाच बलाबलचिन्तायामेव विरोध एवौचित्येन जञ्जभ्यमानवाक्यानुवचनस्य वाक्यप्रकरणाभ्यां क्रतुयुक्तपुरुषधर्मतावत् प्रकृतेऽप्यनृतवदननिषेधस्य श्रुतिप्रकरणाभ्यां क्रतुसम्बद्धपुरुषधर्मतैवोचिता। उक्तञ्च भट्टपादै—

स्त्र्युपायमांसभक्षादिपुरुषार्थमपि स्थित।
प्रतिषेध क्रतोरङ्गमिष्ट प्रकरणाश्रयात् ॥ इति भाव।

॥ प्रपञ्चितमिति ॥ प्रपञ्चस्तु उक्त।

नन्वाख्यातस्य भावनायामसाधुत्वे ततस्तद्बोधो न स्यात्, साधुत्वज्ञानस्य शाब्दबोधहेतुत्वात्, इत्यत आह–बोध इति—असाधुत्वेऽपि साधुत्वभ्रमाद् बोधोऽस्तु नाम, अपभ्रंशवत्। असाधुत्वन्तु स्यादेवेति भावः।

वस्तुतः साधुत्वज्ञानं न हेतुः, तद्व्यतिरेकनिर्णयोऽपि न प्रतिबन्धक इति 'असाधुरनुमानेन' इत्यत्र वक्ष्यामः ॥ २१ ॥

रङ्गोजिभट्टपुत्रेण कौण्डभट्टेन निर्मिते।
पूर्णो भूषणसारेऽस्मिन् धात्वाख्यातार्थनिर्णयः ॥ १ ॥

इति श्रीकौण्डभट्टविरचिते वैयाकरणभूषणसारे धात्वर्थाऽऽख्यातसामान्यार्थयोर्निरूपणम् ॥ १ ॥

———•••———

प्रभा

शाब्दबोधेति—साधुशब्दा एव बोधका। 'बोधकत्व शक्ति' इति मते साधुत्व शक्तिश्चेत्यनर्थान्तरम्। अपभ्रंशवदिति—यथा 'घडा' इत्याद्यपभ्रंशाना साधुत्वभ्रमाद् बोधकत्वेऽप्यसाधुत्वम्, तथा भावनाबोधकत्वेऽपि तस्या तिबादेर- साधुत्वभ्रमादिति—तिबादि भावनाविषयकबोधजनकताऽवच्छेदकधर्मवदिति भ्रमादित्यर्थ। अन्यथा सिद्धिशून्यत्वे साधुत्व दुर्निवारम्। न हेतुरिति—हालिकाना साधुत्वज्ञानाभावेऽपि बोधदर्शनात्, कार्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वरूपकारणत्वस्याभावान सति कार्याव्यवहितप्राक्क्षणावच्छेदेन हेतुत्वाभावेऽपि असाधुत्वज्ञानसत्त्वे शाब्दबोधादर्शनात् हेतुरित्यर्थ। नच साधुत्वज्ञानस्य शाब्दबोधम्प्रति हेतुत्वाभावेऽपि असाधुत्वज्ञानसत्त्वे शाब्दबोधादर्शनात् तस्य त प्रति प्रतिबन्धकत्वम्, इति भावनाया तिबादिरसाधुरिति ज्ञानदशाया कथ तद्बोध इति वाच्यम्, असाधुत्वज्ञानसत्त्वेऽपि बोधस्यानुभवसिद्धत्वादित्याह—तद्व्यतिरेकेति—य प्रति यस्य कारणत्व तद्व्यतिरेक- (अभाव) निश्चय एव प्रतिबन्धको भवति। प्रकृते साधुत्वज्ञानस्य शाब्दबोध प्रति कारणत्वाभावे तद्व्यति- रेकस्य प्रतिबन्धकत्व न स्यादिति भाव। वक्ष्याम इति—साधुत्वज्ञानरहिताना असाधुत्वज्ञानवतामपि शाब्दबोधस्यापभ्रंशेभ्योऽपि सर्वानुभवसिद्धतया तत्र साधुत्वज्ञानस्य न हेतुत्वम्, नापि असाधुत्वज्ञानस्य प्रतिबन्धकत्वमिति वक्ष्याम इत्यर्थं ॥

दिवालीं जननीं तातं नीलकण्ठं नमस्यतः।
प्रभायां बालकृष्णस्य पूर्णो धात्वर्थनिर्णयः ॥ १ ॥

॥ शुभम् ॥

———•••———

दर्पणव्याख्या

ननु साधुत्वज्ञान विनाऽपि शाब्दबोधोदयेन व्यभिचारात् कथमेतत्, साधुत्वस्य शक्यत्वरूपताया निराकरिष्यमाण त्वाच्चेत आह–❀ वस्तुत इति ❀ तद्व्यतिरेकनिर्णय इति ❀ असाधुत्वनिश्चय इत्यर्थं। तन्निश्चयेऽप्यपभ्रंशाद् बोधदर्शनात्। तथाचाऽऽख्याताज्ञायनाबोधे बाधकाभाव इति भाव ॥ २१ ॥

इति वैयाकरणभूषणसारदर्पणे धात्वाख्यातार्थनिरूपणम् ॥ १ ॥

———❀❀❀———

# ॥ अथ लकारार्थनिर्णयः ॥

प्रत्येकं दशलकाराणामर्थं निरूपयति—

वर्त्तमाने परोऽक्षे श्वो भाविन्यर्थे भविष्यति ।
विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लडादयः ॥ २२ ॥

लडादयः इतः षट् क्रमेणैष्वर्थेषु द्रष्टव्याः । तथाहि—वर्त्तमानेऽर्थे लट्, "वर्त्तमाने लट्" ( पा० सू० ३ । २ । १२३ ) इति सूत्रात् । प्रारब्धापरिसमाप्तत्वम्,

प्रभा

## ॥ अथ लकारार्थनिर्णयः ॥

यद्यदनन्तरं निरूपणीयं तस्य तत्सङ्गतेन भवितव्यमिति व्याप्तिः, 'नासङ्गतं प्रयुञ्जीत' इत्यभियुक्तोक्तेः । सङ्गतिनिरूपकज्ञानप्रयोज्यं यद् अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानं तद्विषयस्मरणानुकूलसम्बन्धः सङ्गतिः । प्रकृते लकारार्थसामान्यनिरूपणानन्तरम् 'लकाराणां विशेषार्थज्ञानं मे जायताम्' इत्याकारिका जिज्ञासा जायते, तादृशजिज्ञासाजनकं ज्ञानञ्च—लकाराणां विशेषार्थज्ञानं मदिष्टसाधनमिति, तद्विषयो लकाराणां विशेषार्थः तत्सम्बन्धश्च स्मार्य्यस्मारकभाव इति स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गसङ्गत्याऽऽह—प्रत्येकमिति—वीप्सायामव्ययीभावादेकैकस्येत्यर्थः । दशलकाराणामिति—'दिक्संख्ये संज्ञायाम्' इति कर्मधारयः । 'दशलकाराः' इति लकाराणां संज्ञा । लकाराणामिति—घटकत्वं षष्ठ्यर्थः, तस्य प्रत्येकमित्यत्रान्वयः । निरूपयतीति—विशेषज्ञानञ्च सामान्यज्ञानपूर्वकमिति सामान्यज्ञाने जाते लकारविशेषार्थजिज्ञासोदयः ।

वर्तमाने इति—१–'वर्तमाने लट्', २–'परोक्षे लिट्' ३–श्वो भाविन्यर्थे=अनद्यतने भाविन्यर्थे लुट्, ४–भविष्यति=भविष्यत्सामान्ये लृट्, ५–विध्यादौ लेट्, ६–प्रार्थनादौ लोट् इत्याह—लडादय इति । षडिति—ननु यदि जातिपक्षस्तदा एकत्वमेव लकारस्य, यदि व्यक्तिपक्षस्तदाऽऽनन्त्यमिति इदमसङ्गतमिति चेन्न, इत्संज्ञककाकारादिविशिष्टटित्त्यादिरूपोपाधिगतषट्त्वारोपेण षट्त्वसम्भवात् । प्रारब्धेति—इद क्रियागतं वर्तमानत्वम्, प्रारब्धत्वादेस्तत्रैव सम्भवात् । प्रारब्धः=तत्तत्फलानुकूलव्यापारध्वंससमानाधिकरणस्तत्तत्फलानुकूलकृतिविषयः । अपरिसमाप्तः=तत्तत्फलानुकूलचरमक्रियाध्वंसप्रागभावाधिकरणकालवृत्ति, ध्वंसानधिकरणकालवृत्तिर्वा यः क्रियाऽऽत्मको अर्थस्तत्त्व वर्तमानक्रियात्वम् । तादृशक्रियाधिकरणत्वोपलक्षितकालस्य वर्तमानकालत्वम् । इदं लक्षण क्रियात्मककालस्याभिप्रायेण ।

अत्र केचित्—'कालं क्रियाऽऽत्मकमाहुः', अपरे—क्षणसमूहम्, अन्ये—अखण्डमतिरिक्तं काल वदन्ति । अखिलनयेऽपि वर्तमानकालस्य प्रत्यक्षेण निश्चेतुमशक्यत्वादनुमानगम्यत्वमेव । कालसामान्यलक्षणञ्च—

दर्पणव्याख्या

## ॥ अथ लकारार्थनिर्णयः ॥

लकारसामान्यार्थे निरूपिते तद्विषयकजिज्ञासानिवृत्तावश्यवक्तव्यत्वज्ञानाद्विशेषार्थनिरूपणेऽवसरस्य सङ्गतिरवं सूचयइ—❀ प्रत्येकमिति ❀ । दशलकाराणामिति ❀ लट्–लिट् इत्यादिक्रमेण पठितानामित्यर्थः । आदेशानां वाचकमेति पक्षेऽपि तिङाद्यादेशनिष्ठां बोधकतारूपां शक्तिं लडादिष्वारोप्य तद्विधानात् तदर्थकत्वं तेषामक्षतमिति भाव ।

❀ प्रारब्धापरिसमाप्तत्वमिति ❀ विवक्षितावयवप्रागभावकत्वे सत्यनुत्पन्नध्वंसान्यावयवकत्वमित्यर्थः । ...

प्रभा

कालिकसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितमधिकरणतया निमित्तकारणत्वम्। कालिकसम्बन्धेति निवेशाद्दिशि, अधिकरणतयेति निवेशाददृष्टेश्वरयोश्च नातिव्याप्तिः ।

यदि तु काललक्षणे संसर्गविधया कालस्य निवेशात् 'आत्माश्रयदोषः' इत्युच्यते तदा कार्यतायां कालिकसम्बन्धावच्छिन्नत्वमपहाय दैशिकातिरिक्तसर्वाधारतानियामकसम्बन्धावच्छिन्नत्वं देयम्। यद्वा, 'अयं ज्येष्ठः' 'अयं कनिष्ठः' इति व्यवहारोपपत्तये दैशिकातिरिक्तपरत्वापरत्वरूपज्येष्ठत्व—कनिष्ठत्वयोरसमवायिकारणताश्रयत्वं काललक्षणं बोध्यमिति पञ्चोलिनः ।

वर्तमानत्वस्य कालधर्मतया इदमेव युक्तम्। अत एव 'क्रियाभेदाय कालस्तु' इति भाष्ये उक्तम्। अत एव 'आख्यातार्थः कालः' इत्यपि संगच्छते। भाष्येऽपि 'न्याय्या त्वेषा वर्तमानकालना ऽऽरम्भानपवर्गपर्यन्तं भुञ्जानो हसति, जल्पति, पिबति, निमिषति च' इत्युक्तम्, तावतीषु क्रियासु सतीष्वपि नान्तरीयकत्वात्। 'भुङ्क्ते' इति व्यवहारदर्शनाद् भुजिक्रियाया हासादिक्रिया विच्छेदिका न भवन्ति। एवं बहुदिनसाध्यपुस्तकाध्ययनसमये स्नानभोजनगमनादिक्रियाया अध्ययनविच्छेदकत्वाभावात् 'देवदत्तोऽधीते' इति व्यवहारः। यद्वा, हासादीनामपि गलबिलाधःसंयोगरूपफलानुकूलत्वाद् भुज्यादिधात्वर्थत्वविवक्षेति कैयटः। परन्तु भोजनस्नानादीनाम् अधीङ्धात्वर्थत्वकल्पनायां गौरवात् ज्ञानजनककण्ठताल्वादिव्यापारस्यैव धातोः शक्तिरुचिता। हासादिक्रियान्तरसत्त्वेऽपि 'भुङ्क्ते' इत्यादिप्रयोगस्तूक्तरीत्योपपाद्यः। अध्ययनारम्भक्षणतत्समाप्तिक्षणाऽन्तरालिकसमये उक्तवर्तमानत्वस्य सत्त्वाच्च नानुपपत्तिः ।

यत्तु वर्तमानत्वम्—'शब्दप्रयोगाधिकरणकालवृत्तित्वम्' इति तन्न, दिनादिरूपं तादृशकालमादाय विनष्टेऽपि पाके 'पचति' इति प्रयोगापत्तेः। नापि 'शब्दप्रयोगाधिकरणक्षणवृत्तित्वरूपम्', दिनादिकालमादाय दोषाभावेऽपि पूर्वापरीभूतावयवात्मकक्रियायास्तादृशैकक्षणवृत्तित्वासम्भवात्। प्रारब्धापरिसमाप्तत्वञ्चात्र विशेषणम्, 'ननु अविद्यमानं सदपि व्यावर्तकस्वरूपमुपलक्षणम्', तेनातीतादिक्रियामादाय तत्तत्कालावच्छेदेन प्रारब्धापरिसमाप्तत्वेऽपि न 'पचति' इति प्रयोगापत्तिः। लिडादिना बाधान्न तदापत्तिरिति तु न युक्तम्, भूतत्वाद्यविवक्षायां तदप्राप्तेः। प्रारब्धेत्याद्युक्तरूपं वर्तमानत्वं कालत्वेनैव शाब्दबोधे भासते, नतु तत्तद्रूपेण, गौरवादिति केचित्, तन्न, वर्तमानकालिको भूतानद्यतनकालिकी च पचिक्रियेत्यादिबोधस्य सर्वानुभवसिद्धत्वेन लडादिना वर्तमानत्वादिरूपेणैव कालस्य वाच्यत्वात्। वस्तुतस्तु 'वत्रादि'न्यायेन वक्तृबुद्धिविषयताऽवच्छेदकत्वोपलक्षिततत्तत्काले एव लडादीनां शक्तिरिति न गौरवम्।

परिष्कृतं वर्तमानत्वन्तु धातुविशिष्टत्वम्, वैशिष्ट्यञ्च—स्वाधिकरणत्वम्, स्वजन्यबोधविषयत्वेन तात्पर्यविषयीभूतक्रियाधिकरणत्वम्, स्वजन्यबोधविषययावद्व्यापारप्रतियोगिकध्वंसानधिकरणत्वम्, स्वजन्यबोधविषययावद्व्यापारप्रतियोगिकप्रागभावानधिकरणत्वमेतच्चतुष्टयसम्बन्धेन। लक्षणसमन्वयश्चेत्थम्—तत्तद्धातुवाच्यावयवक्रियामादाय चरमक्रियापर्यन्ताधिकरणीभूतः कालो वर्तमानत्वेन व्यवह्रियते, तत्रैव 'पचति' 'गच्छति' इत्यादिप्रयोगदर्शनात्। तथाच तादृशकाले पच्यादिधातुविशिष्टत्वमस्ति। तथाहि—स्वम् = पच्यादिधातुस्तदधिकरणत्वं 'पचति' इत्यादिप्रयोगमादाय पच्यादिधातुजन्यबोधविषयत्वेन तात्पर्यविषयीभूता क्रिया पाकादिस्तदधिकरणत्वमपि तत्र काले, पच्यादिधातुजन्यबोधविषयसकलव्यापारप्रतियोगिकध्वंसस्योक्तकालेऽसत्त्वेन तृतीयसम्बन्धोऽप्युपपद्यते। अत्र यत्किञ्चित् क्रियाप्रतियोगिकध्वंसस्य सत्त्वेनाव्याप्तिवारणाय ध्वंसे यावत्क्रियाप्रतियोगिकत्वनिवेशः।

पच्यादिधातुजन्यबोधविषयसकलव्यापारप्रतियोगिकप्रागभावाधिकरणत्वस्य तादृशकालपूर्वकाले एव सत्त्वेन तादृशप्रागभावानधिकरणत्वमपि तत्र सुलभम्।

भूतभविष्यद्भिन्नत्वं वा वर्त्तमानत्वम्। 'पचति' इत्यादावधिश्रयणाद्यधःश्रयणान्ते मध्ये तदस्तीति भवति लट्प्रयोगः।

प्रभा

अत्रापि यत्किञ्चित्क्रियाप्रतियोगिकप्रागभावाधिकरणत्वस्य तत्र काले सत्त्वेनाव्याप्तिपरिहाराय प्रागभावे यावत्क्रियाप्रतियोगिकत्वनिवेश इति।

प्रथमसम्बन्धेन द्वितीयदिनमारभ्य चतुर्थदिनपर्यन्तं जातपाकाधिकरणकालमादाय न दोषः, तदानीमुपरितधात्वधिकरणत्वाभावात्। धातूच्चारणाधिकरणे, तद्बोधकप्रयोगानधिकरणे च काले 'पचति' इति प्रयोगवारणाय द्वितीयः सम्बन्धः। भूतपाकक्रियामादाय उच्चारणाधिकरणकालपर्यन्तकालस्याधिकरणतात्पर्येण पचतीतिप्रयोगवारणाय तृतीयः सम्बन्धः। एवं भविष्यत्पाकाधिकरणकालमपर्यालोच्य उच्चारणकालं यावत् कालमादाय तादृशप्रयोगो मा भूदिति चतुर्थः सम्बन्धः।

किञ्च वर्तमानसामीप्यमपि लडर्थः, तत्र—धातुविशिष्टत्वम्, वैशिष्ट्यञ्च—स्वविशिष्टत्वम्,

आत्माऽस्ति पर्वताः सन्तीत्यादौ तत्तत्कालिकानां राज्ञां क्रियाया अनित्यत्वात्तद्विशिष्टस्योत्पत्त्या- दिकमादाय वर्त्तमानत्वमूह्यम्। उक्तं हि भाष्ये—"इह भूतभविष्यद्वर्त्तमानानां राज्ञां क्रियास्तिष्ठते- रधिकरणम्" इति,

प्रभा

ननु व्यापारसमुदाय क्रिया। 'आत्माऽस्ति' 'पर्वता सन्ति इत्यादौ च सत्तारूपा क्रिया एकविधा। यथा पच्यादावयवभूतव्यापाराणा वैलक्षण्याद् व्यापारसमूहरूपक्रियात्वम्। अत्र तु अवयववैलक्षण्याभावेन तदसम्भव इत्यत आह—आत्माऽस्तीति।

राज्ञामिति—इदमुपलक्षणम्—यस्य कस्यचित् क्रियाया। प्राधान्यात्तु राज्ञामित्युक्ति। तथाच राजादिक्रियाया वर्तमानत्वस्यानुभूयमानत्वेन साहचर्य्यात् आत्मपर्वतादिस्थितिक्रियायामपि तद्वैशिष्ट्येन वर्तमानत्वमुपपादनीयम्। यथा जीवस्य नित्यत्वेऽपि शरीरादेरनित्यत्वेन तदवच्छिन्नजीवस्यानित्यत्वम्। तथा आत्मसत्तादेरपीति भाव। राजादिक्रियाया प्रागभावप्रतियोगित्वस्य, ध्वंसप्रतियोगित्वस्य च सत्त्वादनित्यत्वेन तद्विशिष्टसत्ताया अपि अनित्यत्वमिति भाव। भूतत्वादिभेदेन भिन्ना राजस्थितिरात्मा- दिस्थितेर्भेदिका, इत्यत आत्मसत्ताया अपि क्रियात्वम्, कालत्रययोगश्चोपपद्यते। तिष्ठतेरिति—कालस्य कालिकसम्बन्धेनाधिकरण- त्यारूपत्वाभिप्रायेण क्रिया =राजादिक्रिया, तिष्ठते =आत्मादिसत्ताया क्रियापरिच्छेदककालस्यात्मस्थितौ आधेयता- सम्बन्धेनारोपाद् वर्तमानादिकालावच्छिन्नत्वव्यवहार। इत्यर्थ। तन्मात्रपरिणाम काल इति मते तु 'क्रिया' इति पदेन

दर्पणव्याख्या

क्रियातिरिक्तकालस्यैव वर्तमानत्वादिक प्रतीयते, तथापि निरुपाधिकस्य तस्य वर्तमानत्वादिना प्रत्येतुमशक्यत्वादुपाधिभूत क्रियामादायैव तत्र तत्त्वस्य वक्तव्यतयाऽऽवश्यकत्वात् क्रियायामेव तदयुक्तमित्यवधेयम्।

वस्तुतस्तु दण्डमुहूर्त्ताद्यात्मक खण्डकाल एव वर्तमानत्वादिना लडादिवाच्य। तद्गत वर्तमानत्व च तत्तच्छब्दप्र योगाधिकरणत्वमेव। 'तदादि'न्यायेन शब्दप्रयोगाधिकरणत्वनानुगमाच्च न शक्यानन्त्यम्।

यद्येवमपि तत्तत्कालत्वेन तत्तत्कालयोधस्यानुभवसिद्धानुपपत्तिरिति विभाव्यते तदा तु शब्दप्रयोगाधिकरणवृत्तिकालत्व व्याप्यधर्मत्वेनोपलक्षिततत्तत्कालत्वावच्छिन्ना एव लट शक्ति। क्रियारम्भात् पूर्वं समाप्त्युत्तर चाधीते पचतीत्यादिप्रयोगा पत्तिस्तु स्ववृत्तिप्रागभावाप्रतियोगिवृत्ति च स्ववृत्तिध्वंसाप्रतियोगिप्रवृत्तक्रियानुयोगिकत्वाभ्या विशेषितेन आधेयतासम्बन्धेनान्व यनियमापगमेन वारणीया।

यत्र तु अखण्डक्रियैव धात्वर्थस्तत्र शुद्धाधेयतासम्बन्धेनैव तदन्वयान्नाऽऽत्माऽस्तीत्यादौ दोष इति। ❀ भूतभविष्यद्व- र्त्तमाना ❀ इत्यत्र वाकारोऽनास्थायाम, पूर्वलक्षणापेक्षयाऽस्य गुरुत्वाद्भविष्यत्त्वस्यापि वर्तमानत्वघटितत्वेन तद्ग्रह, भविष्यत्त्वग्रह, भविष्यत्त्वग्रहे च तदवच्छिन्नभिन्नत्वरूपवर्त्तमानत्वग्रह इत्यन्योऽन्याश्रयाच्च। एव भूतत्वमादायाप्यन्योन्याश्रयो द्रष्टव्य।

ननु यत्र सत्ताश्रयत्वादीनां धात्वर्थत्व तत्रागति, तेपामखण्डत्वेनावयवघटितोक्तलक्षणवर्त्तमानत्वासम्भवादत आह— ❀ आत्माऽस्तीति ❀। ❀ अनित्यत्वादिति ❀ सावयवत्वेन प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वादित्यर्थ। ❀ तद्विशिष्टस्य ❀ अनित्यराजक्रियादिविशिष्टसत्तादिरूपार्थस्येत्यर्थ। तथाच केवलसत्तादिरूपार्थे तदसत्त्वेऽप्युक्तविशेषण विशिष्टे तस्मिन् विशेषणांशमादाय तत्सत्त्व नानुपपन्नमिति भाव।

यद्वा तद्विशिष्टेत्यत्र तदा अव्यवहितत्वादनित्यत्वस्यैव परामर्शात् तादृशक्रियागत वर्त्तमानत्वमारोप्य सत्ताद्यर्थको लडित्यर्थ। तत्र स्वोत्प्रेक्षितत्व निरस्यति—❀ उक्त हीति ❀। तिष्ठतेरधिकरणमिति ❀ आधेयतासम्बन्धेन तादृश क्रियात्मककालविशिष्टत्वात् (तस्य)तासामिति भाव। अनेन भाष्येण, वस्तुतस्त्वित्यादिना उक्तकल्पस्यैव साधुत्व लभ्यते। तस्मिन्नुक्तलक्षणलक्षितकालस्यैव सर्वत्र क्रियायामाधेयतयान्वयलाभात्।

परतो भिद्यते सर्वमात्मा तु न विकल्पते ।
पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते ॥

इति वाक्यपदीये च । एवम्, "तम आसीत्" "तुच्छेनाभ्वपिहितं यदासीत्" "अहमेकः प्रथममासम्, वर्त्तामि च, भविष्यामि च" इत्यादिश्रुतयोऽपि योज्याः ।

तत्र वर्तमानत्वादि लडादिभिर्द्योत्यते, क्रियासामान्यवाचकस्य तद्विशिष्टे लक्षणायां लडादे-

प्रभा

तथाचोक्तं हरिणा—परत इति । सर्वम्—सर्वभावजातं पच्यादिरूपम् । परतः = वर्तमानत्वादिकालधर्मतः । भिद्यते—वर्तमानकालिकी भूतकालिकी भविष्यत्कालिकी सत्ता इत्येवं रूपेण भिन्नतया प्रतीयते । आत्मा = आत्मसत्ता तु न विकल्पते = परतः = वर्तमानत्वादिना न भिद्यते, आत्मादिवर्गस्य सत्ताया नित्यत्वात्, व्यापारसमूहरूपक्रियात्वाभावाच्च । तस्मात् = स्वतो वर्तमानत्वादिना भेदाभावात् ।

पर्वतादिस्थितिः—आदिना आत्मस्थितेर्ग्रहणम् ।

पररूपेण = परस्य राजादेर्यत्क्रियारूपम्, तेन = तद्गतवर्तमानत्वादिना आत्मादिवर्गस्य सत्ताऽपि भिद्यत इत्यर्थः । तमः = अविद्या = अज्ञानमिति यावत् । विरुद्धार्थोऽत्र नञ् विद्याविरुद्धेत्यर्थः । अविद्याया अनादित्वात् सर्वदा सत्त्वेन भूतत्वासम्भवः । तुच्छेन = अज्ञानेन, अभ्वपिहितम् = आवृतम् । एकः = अद्वितीयः । 'आसम्'—इत्यत्र भूतत्वम्, 'वर्त्तामि' अत्र वर्तमानत्वम्, 'भविष्यामि च' अत्र भविष्यत्वमत्र राजादिक्रियागतं भूतत्वादि आरोप्य राजादिक्रियामादाय पर्यायेण वर्तमानत्वादिकमुपपादनीयम् । यदुक्तं पूर्वं 'दशलकारगतार्थः' इति तत्रार्थशब्दो द्योत्यार्थपर इत्याह—वर्तमानत्वादीति—वर्तमानत्वादीत्यर्थः ।

ननु लडादीनां शक्यत्वम् = स्वसमभिव्याहृतधातुनिष्ठवाच्यतानिरूपकत्वम् । तथा च पच्यादिषु वर्तमानत्वादिनिरूपिता शक्तिः स्वीकार्येति स्वतन्त्राणां पच्यादिनिखिलानुपूर्वीणां शक्यतावच्छेदकत्वे गौरवम् । अत एव निरुपपत्तिकानां लिङादीनां वाचकत्वमेव युक्तमित्याशङ्कायामाह—क्रियासामान्येति । चिन्त्यमिदम्, लडादीनां वर्तमानत्वाद्यवाचकत्वेन क्रियासामान्यवाचकस्य दुर्लभत्वात् । धातुनैव क्रियासामान्यवाचकत्वेऽपि क्रियासामान्ये वर्तमानत्वादेरनन्वयात् । यत्र क्रियासामान्यस्यापि वर्तमानत्वमित्यर्थः । भावप्रत्यये ।—भाव धातोरिति शेषः । तद्विशिष्टे = वर्तमानत्वादिविशिष्टक्रियायाम् ।

स्तात्पर्यग्राहकत्वेनोपयोगात् । अन्वयव्यतिरेकाभ्यां तद्रूपं लडादिवाच्यमेव । अन्यथा प्रत्ययानां
वाचकत्वविलोपापत्तिरित्यपि पक्षान्तरम् ।
लिडर्थमाह—परोक्षे इति—"परोक्षे लिट्" (पा० सू० ३।२।११५) इति सूत्रात् । कालस्ता-

प्रभा

तात्पर्यग्राहकत्वेनेति—'स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वमेव द्योतकत्वम्' इति भावः । तेन धातुषु
वर्तमानत्वादिनिरूपितशक्तिस्वीकारप्रयुक्तं गौरवमपि निरस्तम् ।
ननु 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति' इति न्यायविरोधाद् युगपद्वृत्तिद्वयेन बोधानुपपत्तिरिति चेन्न,
विशिष्टे लक्षणास्वीकारे तन्न्यायाविषयत्वात्, 'गङ्गायां मीनघोषौ स्तः' इत्यत्र गङ्गापदेन युगपत् तटमीनयोर्बोधस्य
सर्वानुभवसिद्धत्वेन युगपद्वृत्तिद्वयजन्यबोधयोर्विरोधे मानाभावाच्च । 'लडादयो वर्तमानत्वादिवाचका एव'
इतिवादिनां मतमाह—अन्वयेति—नच वाचकत्वपक्षे 'येन नाप्राप्ते' इति न्यायेन सामान्यस्य=कर्त्रर्थस्य
विशेषेण=वर्तमानत्वाद्यर्थेन बाधः, 'लः कर्मणि' इति सूत्रेण कर्तरि लकारविधानवैयर्थ्यापत्तेः, शक्यताव-
च्छेदकभेदाच्च, लत्वेन कर्त्रादिवाचकताया लट्त्वादिना वर्तमानत्वादिवाचकतायाः स्वीकारात् । अन्यथा
विध्याद्यर्थैरपि लिङादिस्थले बाधापत्तिः । अन्यथा=शक्तिग्राहकयोरन्वयव्यतिरेकयोरसतोरपि द्योतकत्वस्वीकारे ।
वस्तुतस्तु वर्तमानत्वस्य लडादेर्वाच्यत्वे 'लः कर्मणि च' इति सूत्रेण कर्तरि लकारविधानसामर्थ्यात् 'तक्र'
न्यायस्य विधेयविषय एव प्रवृत्तेर्भाष्यादिसम्मतत्वाच्च वर्तमानत्वाद्यर्थेन कर्त्राद्यर्थस्य बाधाभावेऽपि वाचकतापक्षे
वर्तमानत्वादेः प्रत्ययार्थतया प्राधान्यापत्तिः, तद्वारणाय 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति नियमे तदतिरिक्त-
त्वेन सङ्कोचकल्पने गौरवाद् द्योतकतापक्ष एव ज्यायान् । अत एवाग्रे अपिघटितया 'इत्यपि पक्षान्तरम्'
इत्युक्त्या ग्रन्थकृताऽरुचिः सूचिता । द्योतकत्वपक्षे 'प्रकृतिप्रत्ययौ' इति नियमे संकोचस्तु न, 'हेतुमति च'
'स्त्रियाम्' इत्यादिसूत्रस्थभाष्यप्रामाण्यात्, लोके द्योत्यार्थस्य विशेषणत्वदर्शनाच्च तादृशनियमस्य वाच्यार्थ-
विषयत्वस्यावश्यकत्वात् । तद्रूपम्=वर्तमानत्वादिरूपम् । लडादीति—तिबादीनामपि आरोपितलट्त्वलि-
ट्त्वादिनैव वर्तमानत्वादिवाचकत्वम् । अत एव 'यजेत' इत्यत्रास्ति अंशद्वयम्—आख्यातत्वम्, लिङ्त्वञ्च ।
आख्यातत्वेन दशलकारस्थेनार्थी भावना=क्रियारूपा तिङा उच्यते, लिङ्त्वेन च पुरुषप्रवृत्त्यनुकूलव्यापार-
विशेषरूपा शाब्दी भावना उच्यते, इति मीमांसकोक्तिः संगच्छते ।
वस्तुतस्तु तिबादिवृत्त्यानुपूर्वी एव वाचकताऽवच्छेदिका, लट्त्वादिना अज्ञानेऽपि बोधस्य सर्वानुभव-
सिद्धत्वात् । शबादिसमभिव्याहारश्च बोधविशेषनियामक इति न दोषः ।
परोक्षे लिडिति—गतरात्रेर्निशीथादूर्ध्वम् आगामिरात्रेर्निशीथात्पूर्वो यावान् कालः सोऽद्यतनपदेनोच्यते ।
तद्भिन्नभूतकालवृत्तिः परोऽक्षा या क्रिया तद्वाचकाद्धातोर्लिडित्यर्थकात् 'परोक्षे लिट्' इति सूत्रादित्यर्थः । द्योत-
कत्वपक्षे इदम् । वाचकत्वपक्षे तु तादृशकाले वाच्ये लिडित्याद्यर्थः ।

दर्पणव्याख्या

॥ उपयोगादिति ॥ स च प्राक् प्रतिपादितः । तथाच लडाद्यादेशत्वेन तिबादीनां वर्तमानत्वादिद्योतकत्वाद्व-
'अपाक्षीत्' इत्यादौ वर्तमानक्रियाप्रतीतिः, क्रियासामान्यशक्यधातोस्तत्तद्विशिष्टे लक्षणयैव तत्तद्विशिष्टक्रियाबोधोपपत्तौ पृथ-
ग्वर्तमानत्वादौ तेषां शक्तिकल्पने गौरवादिति भावः । वाचकत्वपक्षमवलम्ब्याऽऽह ॥ अन्वयव्यतिरेकाभ्यामित्यादि ॥ ।
नच 'तक्रकौण्डिन्य'न्यायात् कर्त्राद्यर्थबाधः, शक्यताऽवच्छेदकभेदात् । किञ्चैवं "लः कर्मणि" इति सूत्रं निरवकाशं
स्यात्, स्थलान्तरेऽपि विध्याद्यर्थैर्बाधसम्भवादिति भावः । ॥ अन्यथा ॥ अन्वयव्यतिरेकयोः तात्पर्यग्राहकत्वे । ॥ विलोपा-
पत्तिरिति ॥ सर्वत्र प्रकृत्यैव तत्तत्प्रत्ययार्थत्वाभिमतबोधसम्भवादिति भावः । अधिकं सुबर्थनिर्णये वक्ष्यते ।

चद्यतनानद्यतनभेदेन द्विविधः। द्विविधोऽपि भूतभविष्यद्रूपः। तत्रानद्यतने भूते परोक्षे लिडि-स्यर्थः। तेनाद्यतने भूते, अनद्यतने भविष्यति, भूतेऽप्यपरोक्षे च न लिट्प्रयोगः। परोक्षत्वञ्च-'साक्षात्करोमि' इत्येतादृशविषयताशालिज्ञानाविषयत्वम्।

नच "क्रिया नामेयमत्यन्तापर(रि)दृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्" इति भाष्यात् तस्या अतीन्द्रियत्वेन 'परोक्षे' इत्यव्यावर्त्तकमिति शङ्क्यम्,

प्रभा

अनद्यतन इति 'विशेषणत्रिकस्य क्रमेण फलमाह—अनद्यतन इति—अनेनाद्यतनस्य, भूते इत्युक्तेर्भवि-ष्यतः, परोक्षे इत्युक्त्या अपरोक्षस्य च व्यावृत्तिः। ननु परोक्षत्वं यदि 'प्रत्यक्षप्रमाणान्यप्रमाणजन्यज्ञानविष-यत्वम्' तदा प्रत्यक्षक्रियाया अपि शाब्दज्ञानविषयत्वे, अनुमितिविषयत्वे वा 'पपाच' इत्यादिप्रयोगापत्तिरत आह—परोक्षत्वञ्चेति। एतादृशेति—विषयताया एतादृशत्वासम्भवादेतादृशशब्दवैयर्थ्यमित्यर्थः।

नन्वेवमपि यत्र कस्यापि 'पाकं साक्षात्करोमि' इति ज्ञानं जातं तत्र 'पपाच' इति प्रयोगानुपपत्तिः, उक्तज्ञानविषयत्वादिति चेन्न, लिडाद्यन्तशब्दप्रयोक्तृसमवेत (साक्षात्करोमि) इत्येतादृशविषयताशालिज्ञाना-विषयत्वस्यैव परोक्षत्वात्, वक्तुस्तादृशज्ञानाविषयत्वस्यैव लिडादिप्रयोजकत्वात्। इयमिति—पचतीतिव्यव-हारविषयीभूतेत्यर्थः। अनुमानगम्येति शेषः। अत्यन्तेति—परेण = चक्षुरादिरूपप्रत्यक्षप्रमाणेनात्यन्तमदृष्टा। 'अपरिदृष्टा' इति पाठे प्रत्यक्षाविषय इत्यर्थः। तत्र हेतुगर्भितविशेषणमाह—पूर्वेति—पूर्वापरीभूतावयवा = अवयवानामा-क्रमिकव्यापारसमूहात्मिका। नन्वेवमपि प्रत्यक्षे बाधाभाव इत्याशङ्कायामाह—न शक्येति—अवयवानामा-शुविनाशित्वात् पिण्डीभाव (समूहीभाव) स्यैवाभावादिति भावः। ननु तर्हि तादृशक्रियायाः सत्त्वे किं मानमिति चेन्न, विक्लित्त्यादिरूपकार्य्यानुमेयत्वात्। अव्यावर्त्तकमिति—क्रियायां परोक्षत्वस्य व्यभिचारा-भावेन 'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' इति न्यायविरोधादिति भावः। शङ्क्यमिति—नच शङ्क्यमित्यर्थः।

दर्पणव्याख्या

❀ अनद्यतने भूते इति ❀ "भूते" (पा० सू० ३।२।८४) इति, "अनद्यतने लङ्" (पा० सू० ३।२।१११) इति सूत्राभ्यां तत्तत्पदानुवृत्तेरिति भावः। ❀ न लिट्प्रयोग इति ❀ उक्तार्थस्य बाधात् पपाचेत्यादिजबोधानन्तरमनद्य-तनत्वादिसन्देहानुदयाद् भूतत्वादिवत्तयोरपि तद्वाक्यजबोधे क्रियांशे विशेषणतया भानमभ्युपेयम्। तच्च वाचकतां द्योतकतां वा विनाऽनुपपन्नमिति लिटस्तदभ्युपगम आवश्यक इति भावः।

ननु परोक्षत्वं प्रत्यक्षान्यज्ञानविषयत्वम्। तथाच प्रत्यक्षक्रियायामपि श्रुतानुमितत्वयोः सत्त्वात् पपाचेत्यादिप्रयोगा-पत्तिरत आह— ❀ परोक्षत्वञ्चेति ❀ यथाश्रुतप्रत्यक्षाविषयत्वस्योपनीतक्रियायामभावेन तत्र पपाचेत्यादिप्रयोगानुपपत्तिरत आह—❀ साक्षात्करोमीति ❀ साक्षात्करोमीत्येतत्प्रतीतिसाक्षिकलौकिकविषयत्वाभाववत्त्वमित्यर्थः।

उक्तस्थले प्रत्यक्षविषयतासत्त्वेऽपि तादृशविलक्षणविषयताभाववत्त्वमक्षुण्णमिति न तदनुपपत्तिः। प्रत्यक्षं तादृशशब्द-प्रयोक्तुर्ग्राह्यम्। ननु 'दशमस्त्वमसि' इत्यादौ शब्दादप्यपरोक्षज्ञानस्य दृष्टत्वेन शब्दजन्यतादृशज्ञानविषयेन्द्रियासम्बन्ध-क्रियायां लिडनुपपत्तिरिति चेन्न, तत्रापि शाब्दज्ञानमहत्तमनसैव दशमसाक्षात्कारः, नतु शब्दात्, लौकिकविषयतानियाम-केन्द्रियसंयोगादेरभावेन शाब्दे तद्भावासम्भवात्। अत एव 'तत्त्वमसि' इत्याद्याचार्योपदेशाच्छमदमादिसंस्कृतं मन आत्मदर्शने कारणमिति गीताभाष्ये उक्तमिति सर्वं समञ्जसम्।

"क्रिया नामेयम्" इति भाष्ये साऽस्माकमनुमानगम्येति शेषः। ❀ क्रिया ❀ भाष्यत्वेन प्रतीयमाना। ❀ इयम् ❀

व्यापाराविष्टानां क्रियानुकूलसाधनानामेवात्र पारोक्ष्यं विवक्षितमतो नोक्तदोषः। 'अयं पपाच' इत्याद्यनुरोधाद् व्यापाराविष्टानामित्यपि वदन्ति।

कथं तर्हि "व्यातेने किरणावलीमुदयनः" इति, स्वक्रियायाः स्वप्रत्यक्षत्वादिति चेत्, असङ्गतमेव, व्यासङ्गादिना स्वव्यापारस्य परोक्षत्वोपपादनेऽपि ( बहुतरमनःप्रणिधानसाध्यशास्त्रार्थ-

प्रभा

मतान्तरमाह—व्यापाराविष्टानामिति—इन्द्रियागोचरसाधनसाधितानद्यतनक्रियावाचिनस्तु धातोर्लिडित्यर्थाद् व्यापारकाले कर्तुरदृष्टत्वे लिटः साधुत्वमिति भावः। अयं पपाचेति—'पपाच' इति प्रयोगकाले पाककर्तुः प्रत्यक्षत्वेऽपि पाककालविशिष्टकर्तुः परोक्षत्वमबाधितमेवेति भावः। तथाच व्यापाराविष्टानामिति विशेषणस्य फलमिदमेव। यद्यपि समूहतोऽवयवतश्च क्रियाया अप्रत्यक्षत्वे तद्विशिष्टसाधनानां प्रत्यक्षत्वं दुरुपपादम्, तथापि व्यापारवैशिष्ट्यसमये साधनपरोक्षत्वस्य विवक्षितत्वान्न दोषः। कथमिति—स्वकर्तृकक्रियायाः परोक्षत्वासम्भवात् लिडनुपपत्तिरिति भावः। व्यासङ्गेति—मनसो विषयान्तरसंचारो व्यासङ्गः। आदिपदेन मद्यादिजन्यविकारस्य संग्रहः। साध्येति—अस्य निर्णयेऽन्वयो रचनायां वा। बहुतरेत्यारभ्य ग्रन्थ इत्यन्तभागो लिखितपुस्तके नोपलभ्यते। तादृशपाठे व्यासङ्गो वक्तुमशक्य इति 'परोक्षत्वोपपादनेऽपि' इति ग्रन्थासङ्गतिरिति पञ्चोलिनः।

दर्पणव्याख्या

धावतिर्वा फलपर इति न कश्चिद्दोषः। किञ्च अवयवस्य प्रत्यक्षत्वे प्रकृतः कटमित्याद्यवयवातीतत्वेन समुदायातीतत्वमादाय काद्युपपादनवदवयवप्रत्यक्षत्वेन समुदायप्रत्यक्षत्वमादाय 'परोक्षे' इत्यस्य चारितार्थ्ये भाष्यस्थपूर्वपक्षस्य निर्दलत्वापत्तिरित्यपरितोषान्मतान्तरमाह—❀ व्यापाराविष्टानामिति ❀ पृथग्भूतातीतानद्यतनव्यापाराविष्टपरोक्षकर्तृकक्रियावृत्तेर्धातोर्लिडिति "परोक्षे लिट्" ( पा० सू० ३।२।११५ ) इति सूत्रार्थः।

❀ अयं पपाचेति ❀ तदानीं कर्तुरपारोक्ष्येऽपि व्यापारदशायां पारोक्ष्यसत्त्वादुक्तप्रयोगोपपत्तिरिति भावः। ❀ इत्यपि वदन्तीति ❀ मतान्तरानादरे अत्रापिः, पूर्वोक्तार्थस्याऽऽपातरमणीयत्वं मन्वाना भाष्याऽनुसारिण इति शेषः।

अत्राहुर्नैयायिकाः—पूर्वाऽपरीभूताऽवयवसमुदायात्मकपारिभाषिकक्रियाया अप्रत्यक्षत्वं युक्तमेव, समूहस्यैवाभावात्, पिण्डीभूतेति भाष्यस्वारस्येन समूहस्यैव तत्त्वावगतेश्च। तदवयवानामपि पारोक्ष्यं तु सर्वानुभवविरुद्धम्, तत्र प्रत्यक्षकारणचक्षुःसंयुक्तसमवायादेः सत्त्वात्। अन्यथा घटपुस्तकादेरप्यप्रत्यक्षत्वाऽपत्तिरिति वह्निव्याकोपः। अधिश्रयणं साक्षात्करोमीति सार्वजनीनप्रतीतेश्च। प्रतीतेः पदार्थसाधकत्वे व्यवहारमात्रोच्छेदाऽऽपत्तिश्च। "क्रिया नामेयम्" इति भाष्यस्यापि इयम् = सावयवपरस्यार्थरूपेत्यर्थान्न तद्विरोधः। सदसतां तेषामित्यस्य विद्यमानाविद्यमानावयवरूपाणामित्यर्थात् समूहात्मकक्रियायाः पारोक्ष्यप्रतिपादनपरत्वान्न हरिवाक्यविरोधोऽपि। अन्यथा 'क्रिया सदसद्रूपा' इति वदतो व्याघातः स्पष्ट एव।

कालस्य प्रत्यक्षत्वाभावेन तदनुवादकभाष्योपष्टम्भन्यासोऽपि नावयवानां पारोक्ष्योपपादकः। प्रकृतः कटमित्यत्राप्यवयवातीतत्वमादायैव प्रयोगोपपत्तौ समुदायातीतत्वारोपे मानाभावेन तद्दृष्टान्तासङ्गतिश्च। दार्ष्टान्तिकेऽवयवप्रत्यक्षत्वेन समुदायप्रत्यक्षत्वमारोप्य पूर्वपक्षस्य निर्दलत्वापादानमपि स्वाग्रहमूलकमेव। अत एव भाष्ये पश्य मृगो धावतीत्यनेन लौकिकविषयतावच्छेदकदैशिकमेव धावतेः प्रतिपादितम्। कथमन्यथा आगारान्तरस्थितस्य न तादृशप्रयोगः। मृगवृत्तिधावने ज्ञानविषयत्वरूपज्ञानकर्मत्वाऽबाधात्। धावतेः संयोगरूपफलार्थकत्वे व्यापारवाचकत्वाभावादधातुत्वप्रसङ्गश्च। स्वज्ञानकत्वापारगतपौर्वापर्यारोपेण क्रियात्वोपपादने चाप्रत्यक्षत्वापत्तिस्तदवस्थैवेति न किञ्चिदेतत्। तस्मात् पूर्वोक्तमतमेव निराबाधम्। अत एव ग्रन्थकृताऽपि 'अपि-वदन्तिभ्यां तत्रास्वरस एव सूचित इति। ❀ व्यासङ्गादिनेति ❀ यथा "मत्तोऽहं किल विललाप" इत्यत्र मदादिना मनोऽसन्निधानात् क्रियापारोक्ष्यं तद्वदित्यर्थः।

निर्णयजनकशब्दरचनात्मके ग्रन्थे) अनद्यतनत्वातीतत्वयोर्विस्तारक्रियायामसत्त्वेन अनद्यतनातीतत्वयोरभावेन तदर्थकलिडसम्भवात्।

लुडर्थमाह—श्वो भाविनीति। अनद्यतने भाविनीत्यर्थः, "अनद्यतने लुट्" (पा० सू० ३।३।१५) इति सूत्रात्। यथा "श्वो भविता" इत्यादौ।

प्रभा

अनद्यतनेति—किरणावलीग्रन्थकर्मकविस्तारानुकूलव्यापारावच्छिन्नकाले अद्यतनभिन्नत्वस्यातीतत्वस्य (भूतत्वस्य) चासम्भवादिति भावः।

वस्तुतस्तु क्रियावयवानामपि सावयवत्वात् सर्वोऽपि क्रिया परोक्षैव। अवयवसमुदायरूपक्रियाया सद्वस्तुत्वासम्भवेन प्रत्यक्षत्वस्य च सद्वस्तुत्वनियतत्वात्। तदुक्तं हरिणा—

'क्रमात् सद्सतां तेषामात्मना न समूहिन।
सद्वस्तुविपर्ययैर्यान्ति सम्बन्धं चक्षुरादिभिः' ॥ इति ॥

अत एव 'अत्यन्तापरदृष्टा' इति भाष्येऽत्यन्तेतिपदस्वारस्यम्। तात्त्विकं परोक्षत्वन्तु न लिडादेः प्रयोजकम्, किन्तु विवक्षैव तत्तत्प्रयोगप्रयोजिका। 'अध्यास्त सर्वर्तुसुखामयोध्याम्' इत्यादिभट्टिप्रयोगकाले परोक्षत्वादेः सत्त्वेऽपि न लिट्, किन्तु लङेव। एवञ्च 'व्यातेने किरणावलीमुदयनः' इति प्रयोगोऽप्युपपद्यते। अत्र शीघ्रतया, अनायासेन च रचितत्वप्रतीतये भूतानद्यतनत्वविवक्षाया 'एतावता सूक्ष्मकालेन निर्मास्यामि यत्र मयापि साक्षात्कर्तुमशक्यम्' इति ज्ञानफलकपारोक्ष्यविवक्षायाश्च तात्पर्यविषयत्वसम्भवात् सङ्गतत्वमेव तस्य प्रयोगस्य। एवमत्यन्तापह्नवेऽपि लिट्, 'अत्यन्तापह्नवे लिड्वक्तव्यः' इति वचनात्। अत्रापह्नवश्च—'प्रष्टव्यविषयकनिश्चयोत्पत्तिप्रतिबन्धकज्ञानजनकशब्दप्रयोगः'। तत्रात्यन्तत्वञ्च—प्रष्टव्यविषयविपरीतकथनाभावेऽपि प्रष्टव्यविषयोपपादकाद्विपरीतार्थकथनम्। तथाच कलिङ्गेषु—

'जगन्नाथात्पूर्वभागे कृष्णातीरान्तरं शिवे। कलिङ्गदेशः सम्प्रोक्तः',

इत्युक्तदेशेषु त्वमवात्सीः, इति प्रश्ने प्रष्टव्यविषयस्य वासस्य निषेधाभावेऽपि वासोपपादकगमननिषेधाभिप्रायेण 'नाहं कलिङ्गान् जगाम' इत्युक्तिः।

श्वो भाविनीति—अत्र श्व पदमनद्यतनपरम्, लक्षणया। तथाचानद्यतने भविष्यति काल इत्यर्थः। अनद्यतनत्वञ्च—'अद्यतनभिन्नकालवृत्तित्वम्'। अद्यतनभविष्यत्वञ्च—'वर्तमानप्रागभावप्रतियोगित्वम्'। अद्यतनकालश्च—'अतीताया रात्रेः पश्चार्द्धेन, आगामिन्या रात्रेः पूर्वार्द्धेन च सहितो दिवस एव।

दर्पणव्याख्या

❀ लिडसम्भवादिति ❀। अत्रेदं चिन्त्यम्—न वास्तवं पारोक्ष्यादि लिडादिनियामकम्, 'अध्यास्त सर्वर्तुसुखामयोध्याम्' इत्यत्र लङोऽसाधुतापत्तेः। किन्तु वैवक्षिकं तत्, तथा वक्ष्यति च स्वयमेव सारकृत्—'अनद्यतनभूतत्वेन विवक्षिते लङ्, तत्रैव पारोक्ष्यविवक्षायां लिट्' इति। प्रकृते चाऽनायासनिष्पन्नत्व-शीघ्रनिष्पन्नत्व-प्रतीतिफलकभूतानद्यतनत्वविवक्षाया, एवं सूक्ष्मकालेन करिष्यामि यत्र काले मयाऽपि साक्षात्कर्तुमशक्यमिति प्रतीतिफलकपारोक्ष्यविवक्षायाश्च सत्त्वात् लिडुपपत्तिसम्भवादिति।

❀ अनद्यतन इति ❀ अतीताव्यवहितरात्रिपश्चार्द्धविशिष्टाऽऽगामिरात्रिपूर्वार्द्धोपेतं दिनमद्यतनम्, एतद्भिन्नकालत्वमनद्यतनत्वमिति वृत्तिकारादयः। कैयटस्तु-लुङ्सूत्रेऽतीतरात्रेरन्त्ययामेनाऽऽगामिरात्रेराद्ययामेन सहितो दिवसोऽद्यतन इत्यूचे।

अत्रेदमवधेयम्—अनद्यतनभूते यदा भूतत्वमात्रविवक्षा तदा लुङेव। तेन ह्योऽपाक्षीदित्यादौ भूतत्वमात्रविवक्षया लुङि, पश्चाद् ह्यः पदेन सम्बन्धे नाद्यतनत्वप्रतीतिरिति न लुङोऽसाधुता। एवमनद्यतनभविष्यति भविष्यत्वमात्रविवक्षया लृट्। श्वो वक्ष्यमाणे—'देवता वक्ष्यति' इत्यत्र पश्चाद्ध्यनद्यतनत्वप्रतीतिरिति ॥

लडर्थमाह—भविष्यतीति । भविष्यत्सामान्ये इत्यर्थः, "लृट् शेषे च" ( पा० सू० ३ । ३ । १३ ) इति सूत्रात् । यथा "घटो भविष्यति" इत्यादौ । तत्त्वञ्च—वर्त्तमानप्रागभावप्रतियोगिसमयोत्पत्तिमत्त्वम् ।

प्रभा

भविष्यत्सामान्य इति—तत्त्वञ्च—'अद्यतनत्वानद्यतनत्वप्रकारकप्रतीत्यविषयभविष्यत्त्वम् । एवं भूतसामान्यत्वमपि अद्यतनत्वानद्यतनत्वप्रकारकप्रतीत्यविषयभूतत्वरूपं बोध्यम् । लृट् शेषे चेति—उक्तादन्यः शेषः, प्राक् 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्युक्तम् । तथाच शेषे = क्रियार्थायां क्रियायामसत्याम्, चशब्दात् तादृशक्रियायां सत्याञ्च भविष्यति लडित्यर्थात् । घटो भविष्यतीति—'घटाभिन्नाश्रयवृत्तिर्वर्तमानप्रागभावप्रतियोगिसमयावच्छिन्न उत्पत्त्यनुकूलो व्यापारः' इति बोधः । क्रियागतं भविष्यत्वमाह—वर्तमानेति—वर्तमानो यो ध्वंसः तत्प्रतियोगी यः समयस्तदधिकरणकोत्पत्तिमत्क्रियात्वमित्यर्थः ।

ननु कियत्यामधिश्रयणादिक्रियायां जातायामवशिष्टफूत्कारादिव्यापाराभिप्रायेण पचतीति प्रयोगो यथा भवति, तथा यत्किञ्चित् क्रियाया भविष्यत्त्वमादाय 'पक्ष्यति' इति प्रयोगापत्तिः । नच पाकत्वावच्छेदेन भविष्यत्वान्वयस्य विवक्षितत्वान्न दोषः, अतीतपाकस्यापि पाकत्वावच्छिन्नत्वेन पाकत्वावच्छेदेन तदन्वयासम्भवात् । नच तत्पाकत्वावच्छेदेन भविष्यत्त्वान्वयविवक्षेति वाच्यम्, पचतिना तत्पाकत्वावच्छिन्ने शक्त्यभावेन तत्पाकत्वेनानुपस्थितेः । नच तादृशपाके लक्षणा, गौरवापत्तेरिति चेन्न, तत्तत्क्रियाबोधजनकत्वप्रकारकतात्पर्यविषयीभूतधातुसमभिव्याहृतलडादिना भविष्यत्त्वप्रकारकबोधम्प्रति तत्तत्क्रियाघटकव्यापारविशेष्यकवर्तमानप्रागभावप्रतियोगित्वप्रकारकज्ञानस्य सहकारिकारणत्वस्वीकारेणादोषात्, कियत्क्रियायां जातायाम् 'पाकक्रियाया आद्यो व्यापारः वर्तमानप्रागभावप्रतियोगी', इति ज्ञानासम्भवेन तादृशप्रयोगानापत्तेः । भ्रमात्मकज्ञानसत्त्वे चेष्टापत्तेः ।

दर्पणव्याख्या

परे तु साद्यपारस्य ह्यहात्मककालसाध्यत्वात्तदधिकरणद्व्यहात्मककालस्यानद्यतनत्वाभावेन लुडोऽप्यसंगत्युपपत्तिः । 'अद्य प्रभृति मे दारा ! ब्रह्मचर्यं भविष्यति' इतिवदित्याहुः ।

ननु 'अहमेकः प्रथममासं वर्त्तामि भविष्यामि च' इत्यत्र धात्वर्थसत्तायां वर्त्तमानप्रागभावप्रतियोगित्वस्य भविष्यत्वस्य बाधात् तदर्थकाद्भविष्यदर्थकप्रत्ययाप्रसक्तिरत आह ॐ तत्त्वञ्चेति ॐ वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकसमयपरमिति पाठः । तथाच तदर्थव्यापाराधिकरणस्य कालस्यानित्यत्वात्क्रियाऽऽरम्भस्य वर्त्तमानप्रागभावप्रतियोगित्वरूपभविष्यत्त्वसत्त्वात् तद्द्वारापैव तदुपपत्तिरिति यथाश्रुतार्थानुसारिणः ।

अन्ये तु—ननु येषां मते नश्यत्यादिधातूनां नाशमात्रमर्थस्तेषां भविष्यत्वस्य वर्त्तमानप्रागभावप्रतियोगित्वरूपत्वे, श्वो भाविनाशके परश्वो नङ्क्ष्यतीति प्रयोगापत्तिः, वर्त्तमानप्रागभावप्रतियोगिनि तस्मिन् परश्वस्तनकालवृत्तित्वसत्त्वात् ।

न च परश्वस्तनकालस्य भविष्यत्वघटकप्रागभावेऽन्वयाभ्युपगमात् तस्य च तत्प्रागभावे बाधात्तेन प्रयोगापत्तिरिति वाच्यम्, तथा सति श्वो भाविनाशेऽपि 'श्वो नष्टा' इति प्रयोगानुपपत्तिः । तथाच प्रागभावे श्वस्तनकालस्यान्वयाबाधात् अत आह—ॐ तत्त्वञ्चेति ॐ अत्र समयपदोपादानं कालो लडाद्यर्थ इत्यभिप्रेत्य, ननु तस्य लक्षणे निवेशः, प्रयोजनाभावात् विद्यमानप्रागभावप्रतियोग्युत्पत्तिकत्वस्यैव सम्यक्त्वात् । अत्र मूलोत्पत्तिरेव धात्वर्थस्तत्र तदुत्पत्तिमेव तत्रिष्ठं लक्ष्यम्, अन्यथोत्पत्तेर्बोधाभावप्रसङ्गात् । एवञ्चोक्तस्थले भविष्यत्वघटकोत्पत्तौ परश्वस्तनकालवृत्तित्वबाधान्न प्रयोगापत्तिरिति ध्येयमिति । अस्य व्यापारोत्पत्त्यर्थकत्वादिना तु व्यापारे वर्त्तमानप्रागभावप्रतियोगित्वबाधानुपपत्तिरिति भावोऽयम् ।

लेडर्थमाह—विध्यादाविति, "लिङर्थे लेट्" [ पा० सू० ३ । ४ । ७ ] इति सूत्रात् । लिङर्थश्च विध्यादिरिति वक्ष्यते ।

लोडर्थमाह—प्रार्थनेति । आदिना विध्याद्याशिषो गृह्यन्ते, "आशिषि लिङ्लोटौ" [ पा० सू० ३ । ३ । १७३ ] "लोट् च" इति [ पा० सू० ३ । ३ । १६२ ] सूत्राभ्यां तथाऽवगमात् । यथा—'भवतु ते शिवप्रसादः' इत्यादौ । एतयोरर्थो लिङर्थ एव, त्रयाणां समानार्थत्वादिति तन्निर्णयेनैव निर्णयः ॥२२॥

लङादिक्रमेण ङितामर्थमाह—

ह्यो भूते प्रेरणादौ च भूतमात्रे लङादयः ।

प्रभा

विध्यादाविति—आदिना निमन्त्रणादीनां सङ्ग्रहः । विध्याद्याशिष इति—विधिर्वक्ष्यते । आशीश्च—'प्रयोक्तृसमवेतहितप्राप्तिविषयकेच्छारूपैव' । हितञ्च—स्वस्य, परस्य वा । इच्छायाश्च विषयतासम्बन्धेन लोडादिप्रकृतिभूतधात्वर्थेऽन्वयः । तथाच 'भवतु ते शिवप्रसादः' इत्यनेन वक्तृसमवेतहितप्राप्तिविषयकेच्छाविषयत्वसम्बन्धिशिवप्रसादकर्तृकं भवनमिति बोधः । एतयोः = लेड्लोटोः । त्रयाणाम् = लेड्लोड्लिङाम् । तन्निर्णयेन = लिङर्थनिर्णयेन । निर्णय इति—अस्य लेडाद्यर्थस्येति शेषः । ङितामिति—लकाराणामिति शेषः ॥ २२ ॥

ह्यो भूत इति—ह्यः पदमनद्यतनपरम् । तथाच ह्यो भूते = अनद्यतनभूते लङ् इत्यर्थः । अनद्यतनत्वम् = अद्यतनभिन्नत्वम् । अद्यतनत्वञ्च—'वर्तमानध्वंसप्रतियोगिरात्रिपूर्वार्द्धविशिष्टत्वे सति वर्तमानप्रागभावप्रतियोगिरात्रिपरार्द्धविशिष्टदिनत्वम्' । आद्ये वैशिष्ट्यम्—स्वाव्यवहितोत्तरत्वसम्बन्धेन, द्वितीये वै० स्वाव्यवहितपूर्वत्वसम्बन्धेन । प्रेरणादौ = विध्यादौ लिङ् । भूतमात्रे = भूतसामान्ये लुङ् । लङादय इति—आदिना लिङ्-

दर्पणव्याख्या

अत्रेदमवधेयम्—इहाद्य घटो भविष्यतीत्यादौ देशकालविशेषादेरधिकरणत्वेन धात्वर्थोत्पत्तावेवाऽन्वयः । ननु भविष्यत्त्वघटकप्रागभावे उत्पत्तिमति वा, तथा सति कपालनाशजन्यघटनाशस्थले, इह कपाले घटध्वंसो भविष्यतीति प्रयोगाऽऽपत्तेः घटरूपप्रतियोग्यात्मकघटध्वंसप्रागभावस्य कपाले सत्त्वादेवं श्वो भाविन्यद्य भविष्यतीति प्रयोगप्रसङ्गश्च, अद्यतनकालवृत्तित्वस्य प्रागभावे सत्त्वात् । तथा भवने श्वः समुत्पद्य प्राङ्गणे परश्वो गमिष्यति मैत्रे प्राङ्गणे परश्वो भविष्यतीति प्रयोगाऽऽपत्तिः, उत्पत्तिमतो मैत्रस्य प्राङ्गणवृत्तित्वात्, परश्वस्तनकालवृत्तित्वाच्च । यथोक्ते [illegible] तस्य परश्वस्तनकालवृत्तित्वेऽप्युत्पत्तेस्तत्कालवृत्तित्वाभावात् लाघवात्, उत्पत्त्यघटिते कश्चन दोषः । 'घटो भविष्यति' इत्यादौ उत्पत्त्यर्थकधातुयोगे उत्पत्त्यघटितभविष्यत्त्वस्यान्वयो लाघवात्, उत्पत्त्यघटिते तस्मिन्नेव शृदादेः शक्त्यभ्युपगमात्, उत्पत्तिघटितलक्ष्यार्थस्य तु 'नङ्क्ष्यति' इत्यादौ नाशेऽन्वयादन्यमतेऽपि नानुपपत्तिः । एवञ्च 'भविष्यति' इत्यादौ उत्पत्तेर्द्वैधाभानप्रसङ्गशङ्कापि न । शाब्दबोधस्त्वत्र वर्तमानप्रागभावप्रतियोग्युत्पत्त्यनुकूलो घटाश्रयको व्यापार इति वैयाकरणमते बोधः ।

❀ विध्याद्याशिष इति ❀ आशीस्तु सम्बोध्यहितविषयकलोडाद्यन्तशब्दप्रयोक्त्रिच्छा । ❀ भवतु ते इति ❀ हितविषयकमदिच्छाविषयत्वसम्बन्धिशिवप्रसादकर्तृकं भवनमिति बोधः । ❀ एतयोरिति ❀ लेट्लोटोरित्यर्थः ❀ त्रयाणाम् ❀ लेट्लोट्लिङामित्यर्थः । ❀ तन्निर्णयेनैवेति ❀ वक्ष्यमाणलिङर्थनिर्णयेनैवेत्यर्थः ॥ २२ ॥

सत्यां क्रियातिपत्तौ च भूते भाविनि लृङ् स्मृतः ॥२३॥

लङर्थमाह—ह्यो भूत इति । अनद्यतने भूत इत्यर्थः, "अनद्यतने लङ्" [ पा० सू० ३ । २ । १११ ] इति सूत्रात् । यथा—'अस्य पुत्रोऽभवत्' इत्यादि ।

लिङर्थमाह—प्रेरणादाविति, "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" ( पा० सू० ३ । ३ । १६१ ) इति सूत्रात् । तत्र विधिः = प्रेरणम् , भृत्यादेर्निकृष्टस्य प्रवर्त्तनम् । निमन्त्रणम् = नियोगकरणम् ,

प्रभा

लृङोऽर्थमाह—सत्यामिति । क्रियातिपत्तौ = क्रियाया अतिपत्तौ = असिद्धौ सत्याम् = गम्यमानायाम् । भूते भाविनि = भविष्यति च लृङ् स्मृतः । अस्य पूर्वाचार्यैरिति शेषः । 'स्मृताः' इति विभक्तिविपरिणामेन लङादय इत्यनेनान्वयः । इति कारिकार्थः । अस्य पुत्र इति—'इदं सम्बन्धि पुत्रकर्तृकम् अनद्यतनभूतकालिकं भवनम्' इति बोधोऽनेन ।

ननु 'विधिनिमन्त्रण' इति सूत्राद् विध्यादीनां लिङर्थत्वं लभ्यते इति 'प्रेरणादौ' इत्यसङ्गतमित्यत आह—तत्र विधिरिति—घटकत्वं सप्तम्यर्थः । प्रेरणादिघटको विधिः प्रेरणारूप एवेत्यर्थः । निकृष्टस्य = प्रेरकापेक्षया अपकर्षविशिष्टस्य । प्रवर्तनम् = चिकीर्षाकृतिसाध्यताज्ञानाधीनो यः प्रयत्नः तत्प्रयोजको व्यापारः । निकृष्टस्येत्युक्त्या स्वसमानोत्तमयोः प्रवर्तनायां न व्यभिचारो लक्षणस्य । अपकर्षश्चाधिकारजात्यादिकृतः, तेनाधिकवयस्कभृत्यादिप्रेरणायां नाव्याप्तिः । प्रवर्त्यभिलषिताज्ञातोपायोपदेशः प्रवर्तनमिति फलितम् । नियोगकरणमिति—'ब्राह्मणान् निमन्त्रयते' इत्यादिना ब्राह्मणाद्याश्रयवृत्तिप्रवृत्तिजनकव्यापारबोधदर्शनात् । नियोगः = प्रवृत्तिः तत्करणञ्च तदनुकूलो व्यापार इत्यर्थः ।

दर्पणव्याख्या

ह्यःपदस्याव्यवहितातीतदिवसे रूढतया तदात्मककालस्य लङर्थत्वेनैकदिनान्तरितभूते लङनुपपत्तिरत आह ॐ अनद्यतन इति ॐ तथाच ह्यःपदं लक्षणयाऽनद्यतनत्वेनानद्यतनमात्रबोधकमिति नोक्तदोषावकाशः । एवं श्वो भाविनीत्यत्रापि बोध्यम् ।

ॐ अस्य पुत्र इति ॐ वर्तमानध्वंसप्रतियोग्यनद्यतनकालवृत्तिरेतत्सम्बन्धिपुत्रकर्तृकोत्पत्त्यनुकूलो व्यापार इति बोधः । अभ्यास्तेत्यादौ तु भूताऽनद्यतनत्वमात्रविवक्षया लुङुपपत्तिः । सूत्राद् विध्यादीनां लिङर्थत्वप्रतीतेः कथं प्रेरणादेर्लिङर्थत्वमत आह ॐ तत्रेति ॐ तेषु मध्ये इत्यर्थः । ॐ विधिः = प्रेरणमिति ॐ प्रेरणापर्यायो विधिशब्द इत्यर्थः । प्रेरणाया लिङादिशब्दस्वरूपतां वदतां मतं निराकर्तुं प्रेरणायाः स्वरूपं दर्शयति ॐ भृत्यादेरित्यादि ॐ ।

अयम्भावः—यद्विषयकत्वेन ज्ञानस्य प्रवृत्तिजनकत्वं सैव प्रवर्तना । तादृशविषयतानिरूपकत्वं चेष्टसाधनताया एव तद्विषयकत्वेनैव स्वपरज्ञानात्प्रवृत्तेः सर्वसम्मतत्वात् । ननु लिङादीनाम्, तद्विषयकज्ञानात् प्रवृत्त्यनुदयात् । सा यदि परपेक्षयाऽपकृष्टोद्देश्यकप्रवर्तकज्ञानविषयीभूता तदा प्रेरणेत्युच्यते । [अन्यादृक् तु निमन्त्रणादिपदव्यपदेश्या । तथाच स्वाभिप्रेतोपायाज्ञानादप्रवृत्तापकृष्टप्रयोज्यस्योपायविषयकप्रवृत्त्यनुकूलो व्यापारः प्रेरणेति पर्यवस्यतीति । अधिकमग्रे वक्ष्यते ।

तत्र वैदिकमुदाहरणम्—'स्वर्गकामो यजेत'इत्यादि । स्वर्गकामाभिन्नकर्तृकयागभावना स्वर्गादीष्टसाधनमिति वैयाकरणमते बोधः । भावनायामिष्टसाधनत्वं तु प्रत्यासत्त्या स्वर्गकामस्यैव । तादृशमाहमिति अभिसन्धाय यागादौ नियोज्यस्य प्रवृत्तिर्निर्वहति । लौकिकं तु 'अन्नमाहर' इत्यादि । बोधः स्वयमूह्यः ।

निमन्त्रणादि स्वमतेन व्याचष्टे—ॐ नियोगकरणमिति ॐ 'विप्रं निमन्त्रयते' इत्यादितो विप्राश्रयप्रवृत्तिजनकभावनाबोधेन प्रकृते नियोगपदार्थः = प्रवृत्तिस्तत्करणम् = तदनुकूलो व्यापार इत्यर्थः ।

आवश्यके ( श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् ) प्रेरणेत्यर्थः । आमन्त्रणम् = कामचारानुज्ञा । अधीष्टम् = सत्कारपूर्वको व्यापारः । सम्प्रश्नः = सम्प्रधारणम् ।

एतच्चतुष्टयानुगतप्रवर्त्तनात्वेन वाच्यता, लाघवात् । उक्तञ्च—

प्रभा

आवश्यक इति—श्राद्धभोजनादाविति शेषः । कामचारेति—कामः = इच्छा तेन चरति = प्रवर्तते इति कामचारः = स्वेच्छया चरणप्रवृत्तिशीलः, तस्य अनुज्ञा = प्रवृत्तिविघाताकरणेनानुमितिः । यद्वा—कामचारः = इच्छयाऽऽचरणम् । कामचारश्च प्रवर्तनीयस्यैव, तेन अनुज्ञेत्यर्थः । अधीष्टमिति— अधिपूर्वकादिष्यतेर्भावे क्ते अधीष्टमिति । 'अधीष्टः' इति स्वपपाठः, भावे निष्ठाप्रत्ययान्तस्य 'निष्ठा' इति लिङ्गानुशासनसूत्रेण नपुंसकत्वविधानात् । अत एव 'अधीष्टन्नाम सत्कारपूर्विका व्यापारणा' इति भाष्ये उक्तमिति पश्चोलिनः ।

अधीष्टमेवाभ्यर्थनाऽप्युच्यते । सम्प्रश्नश्च सम्प्रधारणम् = 'तद्वा कर्त्तव्यमिदं वा कर्त्तव्यम्' इत्येवं विचाररूपम् । स्वाभिलषितार्थदानादिविषयकेच्छा प्रार्थनम् । तच्च न प्रवृत्तिजनकम्, अन्यथासिद्धत्वादित्यत उक्तम्—चतुष्टयेति । यदि तु स्वाभिलषितवस्तुदानादिप्रवर्तिकोक्तिः प्रार्थनम्, तदा चतुष्टयेत्यस्य प्रार्थनसहितचतुष्टयेत्यर्थः । एवं कारिकायामपि प्रार्थनसहितानां चतुर्णामित्यर्थः । एतच्चतुष्टयेति—विध्यादिचतुष्टये अनुगतम् = एकरूपेण स्थितं यत्प्रवर्तनात्वं तदेव विध्याद्यर्थनिष्ठशक्यताऽवच्छेदकम्, नतु विधित्वादिकम्, तेषामनेकत्वेन

दर्पणव्याख्या

ॐ आवश्यक इति ॐ श्राद्धभोजनादिश्च तथा ॐ प्रेरणेति ॐ प्रवर्त्तनेत्यर्थः । अस्य दौहित्रादेरित्यादिः । तत्राप्रवृत्तस्य प्रवृत्त्यनुकूलव्यापार इति यावत् । यथा 'इह भुञ्जीत भवान्' इत्यादि । ॐ कामचारानुज्ञेति ॐ स्वेच्छया प्रवृत्तस्येतरस्य प्रवृत्तिप्रतिबन्धकत्वस्वाभिलषितविषयकप्रवृत्त्यनुकूलो व्यापार इत्यर्थः । यथा 'इहासीताऽऽरब्धं कुरुत तत्कुरुष्व यथा हितम्' इत्यादि । उपदेशनादिव्यापार इष्टसाधनताज्ञानात् प्रवृत्तावितरत्राप्रवृत्तिरर्थस्य फलति । ॐ सत्कारपूर्वको व्यापार इति ॐ अध्यापनादिव्यापारे सम्मानपूर्वकप्रवृत्त्यनुकूलो व्यापारोऽधीष्टपदार्थ इत्यर्थः । अ (इ)यमेवाऽभ्यर्थनेत्युच्यते । यथा 'माणवकमध्यापयेद् भवान्' इति । उक्तेष्विष्टसाधनत्वे अनुकूलत्वञ्च प्रवृत्तिजनकताऽवच्छेदककोटिप्रविष्टतया बोध्यम् ।

ॐ सम्प्रधारणमिति ॐ उपस्थितक्रिययोर्मध्ये एकतरक्रियाधर्मिकेष्टसाधनत्वनिर्णयेच्छेत्यर्थः । यथा किं भो वेदमधीयीयोत तर्कमिति । स्वोद्देश्यकत्वसम्बन्धेन सम्बोध्यविशिष्टा जिज्ञासा च वेदाध्ययन-तर्काध्ययनान्यतरभावनेष्टसाधनत्वप्रकारकनिर्णयेच्छाविषय इति बोधः । एवमग्रेऽपि । ॐ विधिः प्रेरणमिति ॐ प्रेरणम् = प्रवर्त्तनमित्यर्थः । अप्रवृत्तप्रयोज्यस्याज्ञातस्वाभिलषितोपाय इष्टसाधनताबोधनमिति यावत् । अपकृष्टोद्देश्यकतादृशेष्टसाधनत्वबोधविषयाप्रयुक्तं लिङादिघटितं वाक्यमेवाऽऽज्ञोपदेशपदाभ्यां व्यपदिश्यते । तदेवाऽऽह—ॐ भृत्यादेरिति ॐ आदिना शिष्यादिपरिग्रहः । तत्र लौकिकमुदाहरणम्—भवाञ्जलमानयेदित्यादि । वैदिकम्— स्वर्गकामो यजेतेत्यादि । ॐ नियोगकरणमिति ॐ निमन्त्र्यते = नियुज्यतेऽनेनेति व्युत्पत्त्या नियोगानुकूलो व्यापारो निमन्त्रणपदार्थ इत्यर्थः ।

[ ॐ आवश्यक इति ॐ श्राद्धभोजनादावित्यर्थः । प्रेरणेत्यस्य दौहित्रादेरित्यादि । तथाचावश्यके श्राद्धभोजनादौ दौहित्रादेरिष्टसाधनताबोधनं निमन्त्रणमिति फलितम् । यथेह भुञ्जीत भवानिति । ॐ कामचारेति ॐ स्वाभिलषिते कामचारेण प्रवृत्तस्येष्टसाधनताबोधनमित्यर्थः । ॐ यथेहासीतेति ॐ अनुज्ञातुः प्रवृत्तिप्रयोजनस्येतरप्रवृत्तिप्रतिबन्धेनैतत्प्रवृत्तिविषय इष्टसाधनताबोधनम् । यथारब्धं कुरुत, तत्कुरुष्व यथा हितमिति च । एतदादि सर्वोपलक्षणम् ।

ॐ सत्कारपूर्वको व्यापार इति ॐ सम्मानपूर्वकमध्यापनादिव्यापार इष्टसाधनताबोधनमित्यर्थः । अयमेव चाऽभ्यर्थनेति व्यवह्रियते । उदाहरणम्—माणवकमध्यापयेद्भवानिति । ] सम्प्रश्नः = सम्प्रधारणम् । प्रार्थना तु स्वाभिलषितवस्तुदानादौ स्वीयेच्छाबोधनम् । यथा—भोजनं लभेयेति । ॐ एतच्चतुष्टयेति ॐ विध्यादिचतुष्टयेत्यर्थः । ॐ लाघवादिति ॐ तस्य

तच्चेष्टसाधनत्वस्यास्तीति तदेव विध्यर्थः।

प्रभा

तच्च = उक्तविधप्रवर्तनात्वञ्च।

इष्टसाधनत्वस्येति—प्रवृत्तित्वावच्छिन्नम्प्रति इष्टसाधनताज्ञानस्य प्रयोजकत्वेन तद्विषयताऽवच्छेदकत्व-मिष्टसाधनत्वेऽक्षतमिति भावः। तदेव = इष्टसाधनत्वमेव। एवकारेण कृतिसाध्यत्वव्यवच्छेदः। विध्यर्थ इति—विधिबोधकप्रत्ययार्थ इत्यर्थः। तत्रेष्टत्वञ्च इच्छाविषयत्वम्, प्रकृते लिडादिसमभिव्याहृतपदोपस्थापित-कामनाविषयत्वं वा। नच इष्टत्वावच्छिन्नसाधनताज्ञानमात्रेण प्रवृत्तिर्नहि सम्भवति, किन्तु इष्टत्वव्याप्यस्वर्ग-त्वादिधर्मावच्छिन्नविषयकज्ञानत्वेनैव प्रवर्तकत्वमिति व्याप्यधर्मस्य स्वर्गत्व-पुत्रत्वादेर्नानात्वाल्लिङादेर्नानार्थ-त्वापत्तिरिति वाच्यम्, इष्टत्वावच्छेदकत्वोपलक्षितस्वर्गत्वाद्यवच्छिन्ने विधेः शक्तिस्वीकारेण 'तदादि'न्यायेनो-पलक्षणीभूतधर्मस्यैकत्वेन शक्तेरैक्यात्, स्वर्गत्वादिरूपेण प्रवर्तकज्ञानस्य सिद्धेश्च।

एवञ्च इष्टसाधनत्वस्येत्यस्येष्टत्वोपलक्षितस्वर्गत्वाद्यवच्छिन्नसाधनत्वस्येत्यर्थो बोध्यः। यत्र तु 'अहरहः सन्ध्यामुपासीत' 'अहरहः श्राद्धमुपासीत' इत्यादौ फलविशेषाश्रुतिः, तत्रार्थवादवाक्योक्तफलसाधनताज्ञानेनैव प्रवर्तकत्वं लिडादेः कल्प्यम्। नच नित्यकर्मणः फलकल्पने नित्यत्वहानिः, ग्रहणश्राद्धादौ नित्यत्व-काम्यत्वयोः सर्वसम्मतत्वेन सन्ध्यादिष्वपि नित्यकर्मसु फलकल्पने विरोधाभावात्। अर्थवादवाक्यञ्च—

दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्।
सन्ध्यामुपासते ये तु सततं संशितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्॥

इत्यादिवाक्यात् श्राद्ध-पितृतृप्त्योः, सन्ध्या-ब्रह्मलोकावाप्त्योश्च कार्यकारणभावकल्पनात्। नच श्राद्ध-कर्मणः पुत्रादिस्थत्वात्, तृप्तेश्च पित्रादिस्थत्वादिति वैयधिकरण्यात् कथं कार्यकारणभाव इति वाच्यम्, उद्देश्य-त्वसम्बन्धस्यैव कारणताऽवच्छेदकत्वेन पितॄणामुद्देश्यत्वेन तेन सम्बन्धेन श्राद्धादेरपि पित्रादिस्थत्वात् सामाना-धिकरण्याक्षतेः। पितॄणां मुक्तत्वे तु श्राद्धकर्तुरेव तत्फलम्। 'असति वचनान्तरे शास्त्राऽऽदेशितं फलं कर्तरि'

दर्पणव्याख्या

❀ तच्चेति ❀ निरुक्ताऽवच्छेदकत्वञ्चेत्यर्थः।

❀ तदेवेति ❀ इष्टसाधनत्वमेवेत्यर्थः। एवकारेण कृतिसाध्यत्वादिव्यवच्छेदः। इष्टत्वञ्च समभिव्याहृतपदोप-स्थापितकामनाविषयत्वम्। स्वर्गकामो यजेतेत्यत्र स्वर्गकामपदोपस्थापितकामनाविषयत्वस्य स्वर्गे सत्त्वादिष्टत्वं तस्याक्षतम्। तेनैव च स्वर्गादीनामनुगमः। यदि च सामान्यत इष्टसाधनताज्ञाने प्रवृत्त्यनुदयात् तत्तद्रूपेण स्वर्गत्वादिना स्वर्गसाधनता-ज्ञानं तथा वाच्यम्, तथाच तेन रूपेणेष्टसाधनत्वस्य श्रुतेरनवगमाद्विधिवाक्यात् कथं प्रवर्तकज्ञाननिर्वाह इति विभाव्यते तर्हीष्टताऽवच्छेदकत्वेन स्वर्गत्वादीनुगमस्य तदवच्छिन्नसाधनत्वे विधेः शक्तिरुपगन्तव्या, एवञ्च न विधेर्नानार्थत्वमपि, तदा-दिवत्। इष्टताऽवच्छेदकत्वस्योपलक्षणत्वोपगमाच्च न स्वर्गत्वादीनां तद्रूपेण भानाऽऽपत्तिः।

अथ 'स्वर्गकामो ज्योतिष्टोमेन यजेत' इत्यत्र श्रुत्या स्वर्गसाधनत्वं ज्योतिष्टोमे बोधनीयम्, तच्च न सम्भवति, वाज-पेयादपि स्वर्गोत्पत्तेर्व्यभिचारात्, वैजात्यस्य चोत्तरकालकल्प्यत्वेन पूर्वमनुपस्थितत्वादिति चेन्न, 'घटं द्रव्यत्वेनैव जानाति' इत्यादौ घटत्वोपलक्षितसद्व्यक्तिविशेष्यकद्रव्यत्वप्रकारकज्ञानावगमवत् स्वर्गत्वाश्रयकिञ्चिद्व्यक्तिसमानाधिकरणाभावाप्रति-योगित्वमेव श्रुत्या यागेऽवगम्यते। अथवा यागानुत्तरकालावृत्तित्वमेव स्वर्गत्वसामानाधिकरण्येनेति न कश्चिद्दोषः। अत एव साध्येष्टकत्वस्य विध्यर्थत्वमामनन्ति। तत्र अन्यथासिद्धत्वं तु विधेः प्रवृत्तितात्पर्यकत्वावधारणादुत्तरकालकल्प्यम्।

प्रभा

इति वृद्धोक्तेः। नन्विष्टसाधनत्वस्य लिङर्थत्वे आख्यातेनोक्तत्वात् 'अग्निष्टोमेन यजेत' इत्यत्र तृतीयाया अनुपपत्तिः, स्वर्गादिरूपेष्टसाधनत्वस्याऽऽख्यातेनोक्तत्वेऽपि लिङ्निष्ठशाब्दभावनाभाव्या या पुरुषनिष्ठा यज्यर्थकृतिरूपा आर्थी भावना तन्निर्वर्तकस्वरूपपारिभाषिककरणत्वस्यानभिधानेन तत्र तृतीयासिद्धेः।

अयम्भावः—'अग्निष्टोमेन यजेत' इत्यादिस्थले देवतोद्देशेन द्रव्यत्यागरूपं फलम्, पुरुषनिष्ठा कृतिश्च यज्यर्थः। तत्र कृतौ त्यागरूपफलस्य करणतया इष्टसाधनत्वरूपलिङर्थस्य च स्वरूपसम्बन्धेनान्वयः। तथाच देवतोद्देशेन द्रव्यत्यागकरणिका लिङर्थेष्टसाधनत्वविशिष्टा या पुरुषनिष्ठा कृतिरूपा भावना तयाऽदृष्टं भावयेदिति बोधः। अत्र लिङा यज्यर्थकृतिरूपा भावनानिष्ठस्वर्गादीष्टसाधनत्वरूपकरणत्वस्योक्तत्वेऽपि पुरुषनिष्ठयज्यर्थकृतिरूपभावनानिरूपितद्रव्यत्यागरूपफलनिष्ठस्य लिङर्थभावनाभाव्यपुरुषनिष्ठकृतिरूपभावनानिर्वर्तकत्वरूपपारिभाषिककरणत्वस्यानुक्तत्वेन तत्समानाधिकरणार्थवाचकाद् ज्योतिःष्टोमशब्दात् तृतीया सिद्ध्यतीति।

नन्विष्टसाधनत्वस्य लिङर्थत्वे नञ्समभिव्याहारे 'न कलञ्जं (विषाक्तशरविद्धमृगमांसम्) भक्षयेत्', 'नागम्यां गच्छेत्' इत्यादाविष्टसाधनत्वस्यानुपपत्तिः, धात्वर्थव्यापारे इष्टसाधनत्वस्य बाधादिति चेन्न, तत्र लक्षणया अनिष्टसाधनत्वस्यैव लिङर्थत्वात्। तथाच 'कलञ्जकर्मकं भक्षणमनिष्टसाधनम्' इति बोधः। नन्विष्टसाधनताज्ञानस्येव कृतिसाध्यत्वज्ञानस्यापि प्रवृत्तिप्रयोजकत्वम्, सुमेरुशिखरानयनं मदिष्टसाधनमिति

दर्पणव्याख्या

इत्थञ्च ग्रहणश्राद्धादौ नित्यत्व—नैमित्तिकत्वयोरिव नित्यश्राद्धसन्ध्यादौ नित्यत्वकाम्यत्वयोरप्यविरोधात्संयोगपृथक्त्वन्यायेन—

दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्।
सन्ध्यामुपासते ये तु सततं संशितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्॥

इत्याद्यर्थवादोपस्थितपितृतृप्तिब्रह्मलोकाऽवाप्त्यादिकमेव फलं कल्प्यते। यद्यप्यन्यत्र समवायघटितसामानाधिकरण्येनैव याग-स्वर्गयोः कार्यकारणभावः कल्पितस्तथाप्युक्तवाक्यप्रामाण्याच्छ्राद्धपितृतृप्त्योरदृष्टसमवायघटितसामानाधिकरण्येन स कल्पनीयः। कर्तृनिष्ठादृष्टस्य तु न पितृतृप्तिजनकत्वम्, व्यधिकरणत्वात्, श्राद्धानन्तरकृतकर्मनाशाजलस्पर्शादिना तन्नाशेन पित्रादिस्वर्गानापत्तेश्च। पितॄणां मुक्तत्वे तु अनुष्ठातर्य्येव तत्कल्प्यताम्। अत एव शास्त्राऽऽदेशितं फलमनुष्ठातरीत्युत्सर्ग इति वृद्धाः।

एवतः पुरुषार्थो दुःखप्रागभावः, प्रत्यवायानुत्पादो वा तथा कल्पनीय। तत्साधनत्वञ्च योगक्षेमसाधारणम्। नित्ये कृते प्रत्यवायानुत्पादनियमात्, तत्सत्त्वे दुःखप्रागभावावश्यम्भावाच्च। तथाच सर्वेषां प्रवृत्तिः स्यात् तथा मूलोपदेशादिति सर्वदात्वधिकरणपूर्वपक्षसूत्रे पुरुषार्थस्य भाव्यस्योभयत्र तौल्येन यथा काम्यं फलाय अतः तथा नित्यमपीति व्याख्यातं भाट्टैः।

नन्विष्टसाधनत्वस्य विध्यर्थत्वे साधनत्वस्याऽऽख्यातेनाऽभिधानाज्ज्योतिष्टोमेनेत्यत्र तृतीयाऽनुपपत्तिरिति चेन्न, 'द्रव्यं कारकम्' इति पक्षे शङ्काऽनवकाशात्। 'शक्तिः कारकम्' इति पक्षेऽपि यज्यर्थव्यापारनिष्ठभावनाभाव्यनिर्वर्तकत्वरूपकरणत्वस्याभिधानेऽपि यागनिष्ठस्य तस्यानभिधानेन तत्समानाधिकरणज्योतिष्टोमपदात्तदुपपत्तेः। 'न कलञ्जं भक्षयेत्' इत्यादौ निषेधविधिनोपपत्तये नञ्समभिव्याहारे विधेरनिष्टसाधनत्वे शक्तिरूपगन्तव्या। तस्यापि धात्वर्थेऽन्वयः। नञ् तात्पर्यग्राहकः। कलञ्जकर्मकभक्षणमनिष्टसाधनमिति बोधः।

यद्वा नञर्थाभावविशेष्यक एव बोधः, नञा विधेर्निवृत्तितात्पर्यकत्वावधारणात्। तेन च स्वप्रतियोगिन्यनिष्टसाधनत्वाक्षेपात्ततो निवृत्त्युपपत्तिरिति भावः। बलवदनिष्टाजनके इष्टसाधने चन्द्रमण्डलानयने बलवदनिष्टानुबन्धिनि श्राद्धे निष्फले, तृप्तिरूपेष्टसाधने इ निष्मात्वमधुविषसम्पृक्ताऽन्नभोजने च प्रवृत्त्यदर्शनात् प्रवर्तकज्ञाने विषयताऽवच्छेदककोटौ तेषां निवेशस्याव-

यद्यप्येतत् कृतिसाध्यत्वस्यापि अस्ति, तज्ज्ञानस्यापि प्रवर्त्तकत्वात् , तथाऽपि यागादौ सर्वत्र
तल्लोकत एव लभ्यत इत्यनन्यलभ्यत्वान्न तल्लक्ष्यम् ।

प्रभा

ज्ञानसत्त्वेऽपि प्रवृत्तेरदर्शनादिति तस्यापि लिङर्थत्वमस्त्वित्याशङ्क्य निरसितुमाह—यद्यपीति—'अनन्यलभ्यो
( प्रमाणान्तरालभ्यः ) हि शब्दार्थः' इति न्यायेन कृतिसाध्यत्वस्य लोकतः = अनुमानतो लभ्यत्वान्न लिङ-
र्थत्वं तस्य । अनुमानप्रयोगश्च—'यागो मत्कृतिसाध्यः, मत्कृतिसाध्यत्वविरोधिधर्मानधिकरणत्वात्, मदीय-
ग्रामादिगमनवत्' इत्यनुमानरूपलोकप्रमाणादिति भावः । यद्वा विधिवाक्यजन्यशाब्दबोधानन्तरम् 'यागो
मत्कृतिसाध्यः, मत्कृतिं विनाऽनुपपद्यमानत्वे सति मदिष्टसाधनत्वात्' । स्वर्गाद्यिष्टसाधनत्वं तु न लोकतः
सिद्धम् , लिङादिरूपशब्दैकगम्यत्वादिति तस्य लिङ्वाच्यत्वमावश्यकम् ।

परे तु कृतिसाध्यत्वं न प्रवृत्तिप्रयोजकम्, कृत्यसाध्यत्वज्ञाने सति इष्टत्वाभावेन वृथा श्रमजनकतया
द्वेषात् । द्वेषस्य च प्रवृत्तिप्रतिबन्धकतायाः सर्वसम्मतत्वात् । तदिति—कृतिसाध्यत्वमित्यर्थः । मधुविषसम्पृ-
क्तान्नभक्षणे, लोभादिना कस्मैचिद् विषादिद्वारा मारणादिषु च प्रवृत्तिवारणाय बलवदनिष्टाजनकत्वमपि प्रवृत्ति-

दर्पणव्याख्या

नैयायिकमतं निराकर्तुमाशङ्कते—❀ यद्यपीति ❀ ।
प्रवर्त्तकत्वनिर्वाहार्थमावश्यकमिति
इयकतया विधिवाच्यत्वं श्रुतेः प्रवर्तकज्ञानविषयताऽवच्छेदकत्वम् । तत्सत्त्वे युक्तिमाह ❀ तज्ज्ञानस्येति ❀ कृत्यसाध्येऽपि तज्ज्ञानात्
❀ एतत् ❀
प्रवृत्तिदर्शनादिति भावः । निराचष्टे—❀ तथापीति ❀ ।

❀ लोकत एवेति ❀ लौकिकप्रमाणादेवेत्यर्थः । ❀ न तल्लक्ष्यमिति ❀ 'अनन्यलभ्यो हि शब्दार्थः, इति न्याया-
दिति भावः । वस्तुतस्तु उक्तन्यायस्य पदान्तरलभ्यैव शक्तिः, अन्यथा कस्यापि पदस्य शक्तिर्न सिध्येत्, सर्वस्यापि शब्दातिरि-
क्तप्रमाणगम्यत्वात् । किञ्च, इष्टसाधनत्वादीनां स्वातन्त्र्येण यदि शक्यत्वं स्यात् तदा स्याद्प्युक्तरीतिर्निराकरणक्षमा, किन्तु
प्रवर्तकज्ञानविषयताऽवच्छेदकत्वोपलक्षणानुगतीकृतेषु तेषु सा । उपलक्षणस्य च कृतिसाध्यत्वसाधारणतया तत्रापि सिध्यन्ती
शक्तिः केन प्रतिषेध्येति सन्त एवाऽधारयन्तु ।
यत्तु कृतिसाध्यत्वे वेदादवगतेऽप्यदांशस्य यागादौ प्रवृत्त्यनुदयात् मदंशविशिष्टतज्ज्ञानस्यैव प्रवृत्तिहेतुत्वं वाच्यम् ।
तस्य च 'यागो मत्कृतिसाध्यः', मत्कृतिसाध्यत्वविरोधिधर्मानधिकरणत्वात्, मत्कृतिसाध्यपाकवत्, इत्यनुमानेनैवावगमा-
त्तस्य शक्यत्वमित्याशय इति तन्न, इष्टसाधनताज्ञानस्याऽपि मदंशविषयकस्यैव प्रवर्त्तकतया तस्य विधिवाक्यादलाभेनेष्टसा-
धनत्वे शक्त्यभ्युपगमेऽपि प्रवर्त्तकत्वानुपपत्तेरपरिहारात् ।
नानुमानावश्यकत्वमिति
यदि तु प्रतिपुरुषं विधेरावृत्त्या बोधकत्वात्तेनैव तत्पुरुषीयेष्टसाधनबोधकत्वात्प्रवर्तकत्वोपपत्ती "न कलञ्जं भक्षयेत्" इत्यत्र
विभाव्यते तथा कृतिसाध्यत्वेऽपि तुल्यमिति बलवदनिष्टाननुबन्धित्वस्य विध्यशक्यत्वे, तत्रापि विधिशक्तिरभ्युपेया । अभिप्रेते बलवत्त्वं
भक्षयेदित्यस्य भक्षणेऽनिष्टसाधनत्वाबोधकतया निषेधविधित्वानुपपत्तिरिति 'कष्टं कर्म' इति न्यायेन सुखमात्र-
चेष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तत्वम् । तेन नाऽऽयाससाध्ये कर्मणि प्रवृत्त्यनुपपत्तिः । तद्वाच्यम् ।
जनककर्मासम्भवाच्च नोक्तार्थस्य सिद्धिः । यदि च कदाचित्तत्सम्भवस्तदेष्टोत्पत्त्यनान्तरीयकत्वमेव प्रवृत्त्यनापत्तेः, वस्तुतस्तु तस्य
एतेन बलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवर्त्तकत्वमते (मेव) बह्वायाससाध्ये कर्मणि
जायमानत्वादल्पदुःखस्यापि कुतश्चिद् बलवत्त्वेनानुगतबलवत्त्वस्य निर्वक्तुमशक्यत्वाच्चेति न (क) तस्य विधिवाक्यत्वमप्रमा-
णमिति केषाञ्चित् प्रलपितं प्रत्युक्तम् । किन्तु 'अगम्यां न गच्छेत्' 'शार्ङ्गं न
अथोक्तयुक्त्याऽनिष्टत्वेनानिष्टसाधनत्वाभावज्ञानस्य न प्रवर्त्तकत्वम्,

बलवदनिष्टाननुबन्धित्वज्ञानञ्च न हेतुः,द्वेषाभावेनान्यथासिद्धत्वात् ,

प्रभा

कारणम् इति प्राचीननैयायिकैः स्वीकृतं तन्निराकुर्वन्नाह—बलवदनिष्टेति—अनिष्टे बलवत्त्वञ्च—इष्टोत्पत्तावाव-श्यकदुःखातिरिक्तत्वम् । तेन व्यापारमात्रे किञ्चिद्दुःखजनकत्वेऽपि न प्रवृत्त्यनुपपत्तिः । अत्रापि अनिष्टत्व-ज्ञानस्य नरकत्व-रोगादित्वविशेषविषयकत्वेनैव प्रवृत्तिप्रतिबन्धकतया तादृशानिष्टाजनकत्वस्य लिङर्थत्वे शक्ते-रानन्त्येन गौरवात् 'द्वेषविषयताऽवच्छेदकत्वोपलक्षितनरकत्वाद्यवच्छिन्नसाधनतात्वावच्छिन्नप्रतियोगिताका-भावकूटस्यैव प्राचीननैयायिकैः लिङर्थत्वं स्वीकृतम्', इति न गौरवमित्यपि तन्मतेन द्रष्टव्यम् । न हेतुरिति—कार्य्यमात्रम्प्रति प्रतिबन्धकाभावस्य कारणतया द्वेषस्य च प्रवृत्तिम्प्रति प्रतिबन्धकत्वस्य सर्वसम्मतत्वेन प्रतिब-न्धकाभावविधयैव अवश्यक्लृप्तनियतपूर्ववर्तितावद् द्वेषाभावरूपकारणेनैव तादृशस्थले प्रवृत्तिवारणसम्भवे बलवदनिष्टाजनकत्वज्ञानस्य न प्रवृत्तौ कारणत्वम् । प्रवृत्तिजनकतावच्छेदकस्यैव लिङर्थतयेति न तस्य लिङर्थत्वमिति भावः । बलवदनिष्टाननुबन्धित्वज्ञानाभावेऽपि 'अगम्यागमनं नरकादिसाधनम्' इति ज्ञानस्य सत्त्वेऽपि आस्तिक ( शास्त्रबोधितार्थं प्रामाणिकत्वेन मन्यमान ) कामुकस्य प्रवृत्तिदर्शनात् कार्यसमानाधिक-रणात्यन्ताभावीयप्रतियोगिताऽनवच्छेदकधर्मवत्त्वस्यैव कारणत्वेन अगम्यागमनस्थले प्रवृत्तिरूपकार्यसमानाधि-करणोऽभावो बलवदनिष्टानुबन्धित्वज्ञानरूपो बलवदनिष्टाननुबन्धित्वज्ञानाभावः तत्प्रतियोगित्वमेव बलवद-निष्टाननुबन्धित्वज्ञाने इत्यकारणत्वमेव तस्य । अन्यथासिद्धत्वादिति—कारणत्वस्यान्यथासिद्धिशून्यत्वघटित-तयाऽस्य चान्यथासिद्धिविशिष्टत्वेन कारणत्वासम्भव इति भावः । अन्यथासिद्धत्वञ्च लघुनियतपूर्ववर्तिभिन्न-त्वम् । लघुत्वञ्च स्वरूपकृतम् , उपस्थितिकृतम् , सम्बन्धकृतञ्चेति त्रिविधम् । तत्र स्वरूपकृतम्—प्रत्यक्षम्प्रति महत्त्वस्य कारणत्वम् , अनेकद्रव्यत्वस्य वेति विचारे महत्त्वापेक्षया अनेकद्रव्यत्वस्यानेकपदार्थघटितत्वेन

दर्पणव्याख्या

भुञ्जीत' इत्यादिवाक्यानां प्रामाण्योपपत्तये विशिष्य नरकत्वादिरूपेण तदसाधनत्वस्य ज्ञानस्य तथात्वं वाच्यम् । तथाच शक्त्याऽऽनन्त्यम् , शक्तिग्रहाऽनुपपत्तिश्चेति चेन्न, द्वेषविषयताऽवच्छेदकत्वोपलक्षितनरकत्वाद्यवच्छिन्नसाधनतात्वावच्छिन्नाऽभाव-कूटे तादृशाऽभावत्वेनानुगते एवैव विधिप्रत्ययस्य शक्तिः । उपलक्षणत्वादेव च द्वेषविषयताऽवच्छेदकत्वं परित्यज्य नरकत्वाद्यवच्छिन्नाऽसाधनत्वमात्रं प्रतीयते । क्वचिच्च नरकासाधनत्वम् , क्वचिद्रोगाऽसाधनत्वं प्रतीयते इत्यत्र तात्पर्यमेव नियामकम् ।

नचातिप्रसक्तस्योपलक्षणत्वानुपपत्तेः प्रमेयत्वस्यैव तथात्वमस्तु, लाघवादिति वाच्यम्, सुखाद्यसाधनत्वस्य विध्यर्थ-त्वाविरहेण तत्साधारणप्रमेयत्वस्योपलक्षणत्वासम्भवात् । अत्यन्ताजनकसाधारणरूपस्य कारणतावच्छेदकत्ववद् (अ) द्विष्टसा-धारणरूपस्यापि द्विष्टोपलक्षणताकल्पनानौचित्यात् । तात्पर्याभावादेव सुखाद्यसाधनताबोधानापत्तौ तस्य विध्यर्थत्वेऽपि क्षतिरिति तु न युक्तम् , तथा सति तत्तात्पर्येणाऽऽधुनिकानां न भुञ्जीतेति प्रयोगापत्तेः ।

तस्माद् द्वेषविषयतावच्छेदकत्वोपलक्षितनरकत्वाद्यवच्छिन्नसाधनतात्वावच्छिन्नप्रतियोगिताकाभावत्वेनानुगते तादृशाभावे विधिप्रत्ययस्य शक्तिरिति परिष्कृतं प्राचीननैयायिकमतं नव्यरीतिमवलम्ब्य दूषयति— ❀ बलवदनिष्टेति ❀ निरुक्तबल-वदनिष्टाजनकत्वाज्ञानमित्यर्थः । ❀ न हेतुः ❀ = न प्रवृत्तिहेतुः । क्वचित् तथैव पाठः । तथाच न तद्विषयस्य विधिवाच्य-त्वमिति भावः । तस्य प्रवृत्त्यजनकत्वे हेतुमाह—❀ द्वेषाभावेनेति ❀ मधुविषसंपृक्तान्नभोजने द्विष्टसाधनताज्ञानात् द्वेष-विषये प्रवृत्तिवारणाय तद्विषयकप्रवृत्तिम्प्रति तद्विषयकद्वेषस्य क्लृप्तप्रतिबन्धकतया प्रतिबन्धकाभावविधयाऽवश्यक्लृप्तनियतपूर्व-वर्तिनाऽद्वेषाभावेनैवोपपत्तौ बलवदनिष्टासाधनत्वज्ञानस्य न हेतुत्वम् , तेनान्यथासिद्धेरित्यर्थः ।

आस्तिककामुकस्य नरकसाधनताज्ञानदशायामप्युत्कटेच्छाया द्वेषाभावदशायां प्रवृत्तेर्व्यभिचाराच्च । तस्मादिष्टसाधनत्वमेव प्रवर्त्तना । उक्तञ्च मण्डनमिश्रैः—

पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः ।
प्रवृत्तिहेतुं धर्म्मञ्च प्रवदन्ति प्रवर्त्तनाम् ॥ इति ।

प्रभा

गुरुतया अन्यथासिद्धत्वम् । उपस्थितिकृतं लघुत्वञ्च—गन्धं प्रति गन्धप्रागभावस्य कारणत्वम्, रूपप्रागभावस्य वेति संशये कार्यविधया गन्धस्योपस्थितत्वेन गन्धप्रागभावस्य शीघ्रोपस्थितिकतया रूपस्य चानुपस्थितत्वेन रूपप्रागभावस्य ज्ञाने रूपस्य, प्रागभावस्य च ज्ञानमपूर्वमेव कर्तव्यमिति गुरुत्वं रूपप्रागभावे । सम्बन्धकृतं लघुत्वञ्च दण्डादौ । घटं प्रति दण्डस्य कारणत्वम्, नतु दण्डत्वस्य । दण्डत्वस्य कारणत्वे स्वाश्रयजन्यभ्रमिमत्त्वसम्बन्धो वाच्यः, दण्डस्य हेतुत्वे च स्वजन्यभ्रमिमत्त्वमिति आश्रयस्यानिवेशेन सम्बन्धकृतं लाघवं दण्डे इत्यन्यत्र विस्तरः । प्रकृते बलवदनिष्टाननुबन्धित्वज्ञाने स्वरूपकृतगौरवरूपान्यथासिद्धिः ।

तस्मादिति—कृतिसाध्यत्वस्य लोकतोऽवगतत्वाद् बलवदनिष्टाननुबन्धित्वस्य च प्रवृत्त्यजनकत्वादित्यर्थः । इष्टसाधनत्वमेवेति—नन्विदमसङ्गतम्, कृतिसाध्यत्वस्य लोकतोऽवगतत्वेऽपि तत्र प्रवृत्तिकारणत्वस्य सर्वसम्मतत्वेन 'इष्टसाधनत्वमेव प्रवर्तना' इत्यसङ्गतमिति चेन्न, इष्टसाधनत्वमेव प्रवर्तनात्वेन लिङ्वाच्यमिति तदर्थात् । एवञ्च कृतिसाध्यत्वस्य प्रवृत्तिप्रयोजकत्वेऽपि लिङ्वाच्यत्वं नास्तीति भावः ।

पुंसामिति—स्त्रिया अपि प्रवृत्तिदर्शनात् 'पुंसाम्' इत्युपलक्षणम्-प्राणिमात्रस्य । इष्टाभ्युपायत्वात्=इष्टसाधनत्वाद् । इष्टसाधनत्वात् अन्यः = कृतिसाध्यत्वादिः क्रियासु प्रवर्तको न । चो हेतौ, यतः प्रवृत्तिहेतुं धर्मं प्रवर्तनां प्रवदन्ति आचार्याः । एतन्मते कृतिसाध्यत्वस्य प्रवर्तकत्वमेव नास्तीति प्रतीयते । नच सुमेरुशिखरानयनादौ प्रवृत्त्यापत्तिः, कृत्यसाध्यत्वेन निश्चिते वृथाश्रमजनकत्वाद् द्वेषेण द्वेषाभावरूपकारणान्तरस्याभावात् । प्रवृत्तीति—प्रपूर्वकाद् हेतुमण्ण्यन्तवृणातेर्भावे युचि निष्पन्नप्रवर्तनापदं प्रवृत्तिप्रयोजकव्यापारपरम् । करणे

दर्पणव्याख्या

मन्वन्वयव्यतिरेकसहचारज्ञानस्य कारणत्वस्योभयत्र साम्यात् तेनैवास्यान्यथासिद्धिर्दुर्वारेत्यत आह ॐ आस्तिकेति ॐ स च परलोकाङ्गीकारवान् । तदनङ्गीकर्तुर्नरकसाधनताज्ञानासम्भवात्तद्विशेषणमुपात्तम् । आस्तिकस्य नरकसाधनताज्ञानेन तत्र द्वेषावश्यम्भावेन प्रवृत्त्यसम्भवादाह—ॐ कामुकेति ॐ । तत्वञ्चोत्कटरागवत्वम् । रागे उत्कटत्वं जातिविशेषः, विषयिताविशेषो वा । प्रवृत्तेरित्यस्यागम्यागमने इत्यादिः । द्वेषाभावदशायामित्यनेन द्वेषसामग्रीविरहस्यं दर्शितम् । तद्विषयतया द्वेषम्प्रति उत्कटेच्छासामग्रीविरहविशिष्टद्विष्टसाधनताज्ञानस्य हेतुतया तादृशसामग्र्याः स्वातन्त्र्येण प्रतिबन्धकतया बोध्यम् ।

ॐ व्यभिचाराच्चेति ॐ न हेतुरिति पूर्वेणान्वितम् । अत एव "श्येनेनाभिचरन् यजेत" इत्यत्र न विध्यर्थबाधः, बलवदनिष्टाननुबन्धित्वज्ञानस्याप्रवर्तकत्वेन तद्विषयस्य तस्य विध्यर्थत्वस्यैवाभावादिति भावः । उपसंहरति—ॐ तस्मादिति ॐ । ॐ इष्टसाधनत्वमेव ॐ इत्येवकारेण कृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वयोर्व्यवच्छेदः । आद्यस्य लौकिकप्रमाणेनैवावगमादन्यस्य प्रवर्तकज्ञानाविषयत्वादिति भावः ।

ॐ प्रवर्त्तनेति ॐ लिङाद्यर्थं इत्यर्थः । ॐ इष्टाभ्युपायत्वादित्यादि ॐ इष्टसाधनत्वात् । ॐ अन्यः ॐ कृतिसाध्यत्वादिः । ॐ क्रियासु ॐ यागादिरूपासु । ॐ पुंसां प्रवर्त्तको न ॐ ज्ञाननिष्ठप्रवृत्तिजनकतायां विषयतयाऽवच्छेदको नेत्यर्थः । यजेतेत्यादिवाक्यान्तर्गतलिङादिशक्यो नेति यावत् । चो हेतौ । यतः प्रवृत्तिहेतुं तद्धेतुताबच्छेदकमेव प्रवर्त्तनापदेन

प्रपञ्चितं चैतद् वैयाकरणभूषणे ।

प्रभा

युचि च इष्टसाधनत्वादिपरम् । नच 'राज्ञा प्रवर्तितोऽहं करोमि' इति व्यवहारात् प्रवर्तना प्रवर्तकपुरुषनिष्ठा सैव विधिपदेनोच्यते । अत एव 'विधिर्नियोगः' इति यास्कः । इष्टसाधनत्वन्तु प्रवर्तनीयपुरुषनिष्ठमिति न तल्लिङादिशक्यमिति वाच्यम्, इष्टसाधनत्वस्यापि स्वज्ञापनवत्त्वसम्बन्धेन प्रवर्तकनिष्ठत्वात् । प्रवर्तनीयस्येष्टसाधनत्वं ज्ञात्वैव प्रवर्तकवाक्यप्रयोगकरणात्, इष्टसाधनताज्ञानस्यापि प्रवर्तकनिष्ठत्वात्, वेदे पुरुषाभावाच्च प्रवृत्त्यनुकूलधर्मस्यैव प्रवर्तनापदार्थत्वम्, न तु प्रवर्तकनिष्ठत्वस्य तत्रान्तर्भाव इत्यस्यापि वक्तुं शक्यत्वाच्च ।

नचैवं लिङादीनां णिचश्च पर्यायताऽऽपत्तिः, ततश्च 'पृच्छतु भवान्' इति वक्तव्ये 'प्रच्छयति भवान्' इति णिच् स्यादिति वाच्यम्, सक्रियस्य प्रेरणायामेव णिचो विधानात्, निष्क्रियस्य प्रेरणायां लिङादिरिति भेदात् । अत एव 'हेतुमति च' इति भाष्ये 'इह कश्चित् कञ्चिदाह—'पृच्छतु मा (माम्) भवान्' 'अनुयुङ्क्तां मा (माम्) भवान्' इति । अत्र णिच् कस्मान्न भवति, अकर्तृत्वात्' इति उक्तम् । अयमाशयः— प्रश्नस्थले त्वं प्रश्नक्रियायाः कर्ता भव इति कर्तृत्वमेवाधीयते, न तु कर्तृत्वं तत्रास्ति । यथा 'राजा भव' इत्यनेन

दर्पणव्याख्या

व्यपदिशन्तीत्यर्थः ।

परे तु—बलवदनिष्टाननुबन्धित्वज्ञानस्य द्वेषाभावेनान्यथासिद्धतयाऽप्रवर्तकत्वेऽपि कृतिसाध्यताज्ञानस्य प्रवर्तकतायाः सर्वसिद्धत्वेन तद्विषयस्य तस्य विध्यर्थत्वमावश्यकम् । नच तद्धेतुतायामेव मानाभावः, कृत्यसाध्ये प्रवृत्तिस्तु कृत्यसाध्यताज्ञानस्य प्रतिबन्धकतया तत्र तदभावादेव नेति वाच्यम्, कृत्यसाध्यताज्ञानस्य प्रतिबन्धकत्वे कृतिसाध्यत्वाऽभाववद्व्याप्यवदवच्छेदकधर्मदर्शनादीनां प्रतिबन्धकत्वस्य वक्तव्यतया तावदभावानां प्रवृत्तिं प्रति हेतुता कल्पनाऽपेक्षया कृतिसाध्यताज्ञानत्वेन हेतुतायां लाघवस्य स्फुटतरत्वात्, कृतिसाध्यताज्ञानाभावस्य सर्वदा सत्वेन प्रवृत्त्यापत्तेश्च ।

अपिच कृतिसाध्यताज्ञानस्य प्रवर्तकत्वे कृतिसाध्यत्वप्रकारकपाकविशेष्यकज्ञानत्वावच्छिन्नाभावमानसं प्रति पाकादिगोचरप्रवृत्तिसामग्र्याः प्रतिबन्धकत्वं न कल्प्यते इति लाघवम्, तादृशप्रवृत्तिसामग्रीकाले पाकविशेष्यककृतिसाध्यत्वप्रकारकनिर्णयस्याऽऽवश्यकत्वेन, तस्य च स्वरूपसत एवोक्तज्ञानाभावमानसे बलवत्प्रतिबन्धकतयैवोपपत्तेः ।

भवन्मते तादृशमानसे तादृशप्रवृत्तिसामग्र्याः, प्रतिबन्धकत्वकल्पनेन गौरवं स्पष्टमेव । एवमप्रामाण्यविशिष्टपाकविशेष्यककृतिसाध्यत्वप्रकारकज्ञानवानहमिति मानसे पाकगोचरप्रवृत्तिसामग्र्याः प्रतिबन्धकत्वाऽकल्पनेनापि लाघवम् । तादृशविशिष्टविषयितासाक्षिमानससामग्रीकाले अप्रामाण्यज्ञानास्कन्दितोक्तज्ञानस्याऽऽवश्यकत्वेनाप्रामाण्यज्ञानानास्कन्दितपाकादिविशेष्यककृतिसाध्यत्वप्रकारकज्ञानघटिततादृशप्रवृत्तिसामग्रीतादृशमानससामग्र्योर्मेलनस्यैवाभावात् ।

भवन्मते कृतिसाध्यत्वप्रकारकपाकादिविशेष्यकज्ञानाभावघटिततादृशप्रवृत्तिसामग्रीतादृशमानससामग्र्योर्मेलने बाधकाभावेन तादृशमानसे तादृशप्रवृत्तिसामग्र्याः प्रतिबन्धकत्वस्यावश्यकल्पनीयत्वेन गौरवस्यापरिहार्यत्वादनयैव दिशाऽनिष्टसाधनत्वज्ञानाभावादीनामपि हेतुता निरसनीयेत्याहुः ।

गुरवस्तु—नेष्टसाधनत्वं विध्यर्थः, क्षणिकत्वपाकयागे यागे तस्य बोधयितुमशक्यत्वादेवं परम्परासाधनत्वमपि तथा द्वाराऽनुपस्थितौ शाब्दबोधप्रयोजकान्वयप्रयोजकत्वकल्पस्य परस्परयोग्यतायाश्चाप्रमाणात् । साधनतासामान्यबोधस्यापेक्षविशेषबोधे तद्विषयप्रकारकत्वनियमादप्रमाणवदुचितः । किञ्च यागो न कर्तव्यतया प्रतीयते साक्षात्पूर्ववर्तितासाधनमेव कार्यं कर्तव्यतयाऽवगतिविषयतया बहुसाधनम् । तस्माद् द्वारीभूतं कार्यमव्यवहितपूर्ववर्तिसाधनमपूर्वमेव कार्यत्वेन वाच्यम् ।

## दर्पणव्याख्या

परे तु—लिङादिश्रवणे 'अयं मां प्रेरयति' इति नियमेन प्रतीतेरभिधानात्मकः प्रेरणापरपर्यायो व्यापारो लिङादिवाच्यः । सा च लिङ्गसङ्ख्यानन्वयित्वाद् व्यापारपदेन प्रवर्तकनिष्ठत्वात् प्रवर्तनापदेन च व्यवह्रियते । प्रेरणात्वेन तस्याः सविषयत्वमपि शक्यताऽवच्छेदकं च प्रेर्यादिधात्वर्थतावच्छेदकतया सिद्धं प्रेरणात्वमखण्डोपाधिः ।

स च व्यापारः सम्भवाल्लोके प्रवर्तकपुरुषनिष्ठोऽभिप्रायविशेष एव । तत्प्रवर्तकत्वे च लिङाद्युच्चारयितृत्वम् । वेदे तु प्रयोक्तुरसम्भवाल्लिङाद्यन्तशब्दस्वरूप एव, प्रवर्तकत्वञ्च लिङाद्युच्चारयितृत्वे सति स्वतन्त्रत्वम् । राजादिप्रेरितपदातेर्लिङाद्युच्चारयितृत्वेऽपि प्रवर्तकत्वेनाव्यवह्रियमाणत्वात् । ❀ स्वतन्त्रेति ❀ अद्विष्टयाऽऽप्तोक्त्या च तथा स्वविषय इष्टसाधनत्वानुमानम् । ततश्च प्रयोज्यप्रवृत्तिः । शत्रूक्ताद्विषं भुङ्क्ष्वेत्यतो विषभोजने इष्टसाधनत्वानवगते ❀ आप्तोक्त्येति ❀ आप्तोक्त्यापि 'विषं भुङ्क्ष्व' 'मा चास्य गृहे भुङ्क्थाः' इत्यादिवाक्यापि तस्मिन्निष्टसाधनत्वानुमानात् ❀ अद्विष्टेति ❀ तत्र विषभोजनविषयकाभिप्रायस्य तदीयद्वेषविशिष्टत्वान्न व्यभिचारः ।

भवतु वा लिङादिसमभिव्याहारे व्यापारान्तरस्याननुभवात् सर्वत्र लिङाद्यन्तशब्दस्वरूपैव सा । अत एव "हेतुमति च" इति ( पा० सू० ३ । १ । २६ ) सूत्रे भाष्ये लिङादिशब्दप्रयोगरूपप्रयोजककर्तृव्यापारस्य सत्त्वादित्याशयेन 'पृच्छतु मां भवान्' इत्यत्र णिच् कस्मान्न भवतीति प्रश्ने, अकर्तृत्वादित्युत्तरम् । सक्रियप्रेरणायां णिच् , निष्क्रियप्रेरणायां लोडादि । 'तत्प्रयोजकः' इत्यत्र तत्पदेन व्यापाराविष्टः कर्तोच्यते इति तद्भावः ।

यद्यपि कथञ्चित् कर्ता स्यात् , एवमपि न दोषः, लोटोक्तत्वात् प्रेषणस्य णिज् न भविष्यतीत्युत्तरम् । तत आहत्यैव प्रेरणाया विध्यर्थत्वं लभ्यते । विधिनिमन्त्रेति सूत्रभाष्येऽपि विधिः = प्रेरणमित्युक्तेश्च । तस्मान्नेष्टसाधनत्वादि विध्यर्थः ।

किञ्चेदं ते इष्टसाधनम् , तस्मात् त्वं कुर्विति व्यावहारिकव्यवहारादपि न तस्य विध्यर्थत्वम्, पौनरुक्त्यापत्तेः, पौनरुक्त्यस्य सर्वथेष्टसाधनत्वबोधनतात्पर्यकत्वेऽपि तस्मादित्यस्यानन्वयापत्तेश्चेत्याहुः । स च प्रायशो भट्टमतानुवाद एव । यतो भट्टमते लिङर्थोऽभिधाख्यो व्यापारः । स च लोके प्रयोक्तृपुरुषनिष्ठोऽभिप्रायविशेष एवेत्यादि प्राग्वत् । वेदे त्वन्यस्याऽसम्भवाल्लिङाद्यन्तशब्दनिष्ठ एव सः, समवेतश्चात एव सा 'शाब्दी भावना' इति व्यवह्रियते ।

भावनायाः शब्दार्थभेदेन द्वैविध्याच्छाब्द्याख्यायाऽऽर्थीति व्यवह्रियते । भावनात्वेन लिङर्थशाब्दभावनायाः सविषयत्वमपि भावनायाः भाव्यकरणेतिकर्तव्यतारूपांशत्रयविशिष्टत्वादभिधाभावनायाः सविषयकत्वेनावगतायाः किं भावयेदिति भाव्याकाङ्क्षायां समानप्रत्ययोपात्तत्वप्रत्यासत्त्याऽंशत्रयविशिष्टा स्वविषयप्रवृत्तिरूपाऽऽख्यातवाच्यार्थी भावना विषयत्वेनोपतिष्ठते । इयमेव साध्याकाङ्क्षेति व्यवह्रियते, भाव्यतात्वविषयतयैव तस्याः सविषयत्वात् ।

*एवञ्च तस्याः साध्यत्वेनान्वये* केनेति करणाकाङ्क्षायां लिङादिपदज्ञानं करणत्वेनाऽन्वेति । करणत्वञ्च भावनाभाव्यनिर्वर्तकत्वमेव, कुठारादेरपि पुरुषव्यापारनिर्वर्त्यच्छिदा निर्वर्तकत्वेनैव करणत्वात् । इयमेव भावना करणाकाङ्क्षेत्युच्यते ।

'कथं भवेत्' इति न्यायादुपाये द्वेषेणाऽऽलस्यादिना वा अप्रवर्तमानं पुरुषं प्रति प्रशस्तफलप्रबोधनेन द्वेषादपसारणे नार्थवादवाक्यजन्या प्राशस्त्यरूपा स्तुतिः सहकारिकारणमितीयमितिकर्तव्यतेत्युच्यते । एवमार्थीभावनाया अप्यंशत्रयवैशिष्ट्येन तदुपगतौ किं भावयेदित्याकाङ्क्षायां स्वर्गकामादिपदसन्निधानात् स्वर्गो भाव्यतयाऽन्वेति स्वर्गं भावयेदिति । यद्यपि स व्यापारस्य यागविषयोऽपि तथाऽपि तस्याऽसुखरूपतयाऽपुरुषार्थत्वेन करणत्वेनैवोपस्थित्या च न भाव्यत्वम् ।

अत एव तत्समानाधिकरणज्योतिष्टोमादिपदार्थानां । केनेत्याकाङ्क्षायां यागः करणत्वेनाऽन्वेति । करणत्वं तूक्तमेव । सहकार्याकाङ्क्षारूपे कथं भावाकाङ्क्षायां च "समिधो यजति" इत्यादिवाक्यावगतप्रयाजादियागानामितिकर्तव्यतयाऽन्वयेऽप्यधिकमन्यतोऽवगन्तव्यम् । तदुक्तम्—

अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः ॥

आदिना "हेतुहेतुमतोर्लिङ्" ( पा० सू० ३ । ३ । १५६ ) "आशिषि लिङ्लोटौ" ( पा० सू० ३ । ३ । १७३ ) इति सूत्रोक्ता हेतुहेतुमद्भावादयो गृह्यन्ते । "यो ब्राह्मणायावगुरेत्तं शतेन यातयेत्" इति यथा ।

लुङर्थमाह—भूतमात्र इति—भूतसामान्ये इत्यर्थः, भूते लुङ् ( भूते इत्यधिकृत्य "लुङ्" (पा०

प्रभा

नच सक्रियस्य प्रेरणा व्यर्था, आलस्यादिना विरामाऽऽशङ्कया तत्सार्थक्यात्। प्रेरणादौ चेति कारिकास्थाऽऽदिपदग्राह्यमाह—आदिनेति । हेतुहेतुमद्भावादयः—हेतुः = कारणम् , हेतुमत् = कार्यम् । तथाच कार्यकारणभावादयः । हेतुहेतुमद्भावस्योदाहरणमाह—ब्राह्मणायेति—अवगोरणम् = हननार्थं दण्डाद्युत्थापनम्, अक्षिविकासो वा, 'गुरौ उद्यमने' इत्युक्तेः । 'पत्ये शेते' इतिवत् सम्प्रदाने चतुर्थी । एवञ्च यत्कर्तृकं ब्राह्मणोद्देश्यकं दण्डाद्युत्थापनं तद्धेतुकतादृशपुरुषकर्मकयमदूतकर्तृकशतवर्षयातना ( तीव्रवेदना ) इति वाक्यार्थबोधः । अत्र दण्डाद्युद्यमनक्रियाया यातनक्रियायाश्च हेतुहेतुमद्भावसम्बन्धेनान्वय इत्यत्रैव तात्पर्यको लिङ्, नतु तत्र शक्तिः, गौरवात् । वाच्यत्वाभिप्रायेण तु मूलम् ।

भूतमात्र इति—मात्रपदं कार्त्स्न्यपरम् । तथाच भूतत्वमात्रविवक्षायां लुङ्, नतु तद्विशेषविवक्षायाम् ।

दर्पणव्याख्या

वस्तुतस्तु भाष्ये बहुषु स्थलेषु प्रेरणाया विध्यर्थत्वकथनात् तत्प्रामाण्याल्लिङाद्यन्तशब्दप्रयोगरूपाया एव तस्या विध्यर्थत्वमुचितम् । श्रुतेस्तु "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे" "धाता यथापूर्वमकल्पयत्" इत्यादिश्रुतिबलात् पौरुषेयत्वमभ्युपेत्यैकरूपेणैव लोकवेदयोस्तद्विषये इष्टसाधनत्वाऽनुमानेन विधेः प्रवर्तकत्वं निर्वाह्यमिति सर्वं चतुरस्रमिति ॥

आचार्यास्तु—आत्माऽभिप्रायो विध्यर्थः, पाकं कुर्याः, पाकं कुर्यामिति मध्यमोत्तमपुरुषयोर्लिङि इच्छाविशेषात्मकाऽऽज्ञ्येषणानुज्ञाप्रश्नप्रार्थनार्थकतया प्रथमपुरुषेऽपीच्छायामेव शक्तेरुचितत्वात् । तत्र भयजनिकेच्छा आज्ञा । अध्येषणीये प्रयोक्तृमहद्द्योतिका साऽध्येषणा । निषेधाभावव्यञ्जिकेच्छाऽनुज्ञा । उत्तरप्रयोजिका ॥ प्रश्नः । प्राप्तीच्छा प्रार्थनेति विवेकः । इति बोधः ।

तथाच 'स्वर्गकामो यजेत' इत्यत्र यागः स्वर्गकामनिष्ठयागेच्छाविषय इति बोधः ।

यद्वा कर्तव्यत्वेनेच्छैव विध्यर्थः । तथाचेष्टसाधनत्वाऽनुमानम् । तद्यथा स्वर्गकामस्य मम यागः इष्टसाधनम्, कर्तव्यत्वेनाऽऽप्तोक्तलिङ्बोध्येच्छाविषयत्वात् , मत्प्रियभोजनवत् । विषभोजनादेरपि कस्यचित्कृतिमात्वतया कर्तव्यत्वेनेश्वररूपाप्तेच्छाविषयत्वेन तत्रेष्टसाधनत्वरूपसाध्याभावात् व्यभिचारवारणाय लिङ्पदबोध्येति । आप्तस्तु वैदिकस्थले ईश्वर एव । तस्मिन् विधिरेव तावत्, कुमार्यां गर्भं इव पुंयोगे मानमित्याहुः ।

तदपि न, कृत्यसाध्यनिष्फलाऽनिष्टे प्रवृत्तिवारणायेष्टसाधनतादिज्ञानहेतुताया आवश्यकत्वेन तद्विषयेष्टसाधनत्वादीनां विध्यर्थत्वोपगमेनैव प्रवृत्तिनिर्वाहे आप्ताभिप्रायस्य विध्यर्थत्वे मानाभावात् । नहीष्टसाधनत्वज्ञानमन्तरेणाप्तेच्छाविषयत्वज्ञानमात्रात् प्रवृत्तिः कस्याऽपि दृश्यते । स्वतन्त्रप्रवृत्तौ व्यभिचारेणाप्ताऽभिप्रायज्ञानस्य प्रवर्तकत्वाऽसम्भवाच्चेत्यलम् । प्रकृतमनुसरामः । ✽ प्रपञ्चितप्रायमिति ✽ बलवदनिष्टाऽननुबन्धित्वज्ञानस्य प्रवर्तकतानिराकरणमिष्टसाधनताज्ञानस्य प्रवर्तकत्वाऽवधारणं चेत्यर्थः । प्रपञ्चप्रायः ।

✽ आदिनेति ✽ प्रेरणादौ चेत्यत्रोपात्तादिशब्देनेत्यर्थः । ✽ यो ब्राह्मणायाऽवगुरेदिति ✽ यत्कर्तृको ब्राह्मणोद्देश्यको वधोद्यमस्तज्जनिका यातनासंवत्सरयातनेति बोधः, "हेतुहेतुमतोर्लिङ्" (पा० सू० ३ । ३ । १५६) इत्यनेन महत्यर्थेऽपि लिङो विधानात् । प्रवर्तकत्वेन निवर्तकत्वेन वा वेदस्य प्रामाण्यायेन वधोद्यमनिवृत्तिपरत्वमपि तस्मात् तावद्गुरितव्यमिति विधिः कल्प्यत इति भावः । मात्रपदं कृत्स्नार्थकमित्यभिप्रायवानाह—✽ भूतसामान्य इति ✽ तेन

सू० ३। २। ११०) इति सूत्रात्.)। अत्र 'विद्यमानध्वंसप्रतियोगित्वं भूतत्वम्'। तच्च क्रियायां निर्बाधमिति विद्यमानेऽपि घटे. घटोऽभूदिति प्रयोगः। विद्यमानध्वंसप्रतियोगी घटाभिन्नाश्रयक उत्पत्त्याद्यनुकूलो व्यापार इति बोधः।

अयमत्र संग्रहः—कालो द्विविधः, अद्यतनोऽनद्यतनश्च। आद्यस्त्रिविधः, भूतभविष्यद्वर्त्तमानभेदात्। अन्त्यो द्विविधः—भूतो भविष्य(ष्यँ)श्च। तत्र वर्त्तमानत्वे लट्। भूतत्वमात्रे लुङ्। भविष्यत्त्वमात्रे लृट्। हेतुहेतुमद्भावाद्यधिकार्थविवक्षायामनयोर्लृङ्। अनद्यतने भूतत्वेन विवक्षिते लङ्। तत्रैव परोक्षत्वविवक्षायां लिट्। तादृशे भविष्यति लुट्, इति द्रष्टव्यः।

प्रभा

भूतत्वम् = 'विद्यमानध्वंसप्रतियोग्युत्पत्ति-
ननु नाशस्य विद्यमानत्वेऽपि 'नष्टो घटः' इत्यादिप्रयोगानुरोधेन
इत्युत्पत्त्यघटितं लक्षणमाह—अत्रेति—
कत्वम्' वाच्यम् इत्युत्पत्त्यर्थकधातुसमभिव्याहारे उत्पत्तेर्द्विधाभानप्रसङ्ग
ध्वंसप्रतियोगितया नोक्त-
तथाच ध्वंसप्रतियोगित्वस्य व्यापारेऽन्वयेन नाशादिस्थलेऽपि नाशानुकूलव्यापारस्य
अत्र 'भूते लुङ्'
दोष इति भावः। भूतविशेषविवक्षायां लङादेः सावकाशत्वात् न बाध्यबाधकभावः।
विद्यमान इति—'अभून्' इति
इत्येव मूले पाठ इत्यनुमीयते, दर्पणे तथा व्याख्यानादिति पञ्चोलिनः।
सत्त्वाद् 'अपाक्षीत्'
प्रयोगाधिकरणक्षणे विद्यमान इत्यर्थः। न च यत्किञ्चित्क्रियाध्वंसमादाय उक्तभूतत्वस्य
इति चरमक्रिया-
इत्यादिप्रयोगापत्तिरिति वाच्यम्, 'तद्भिन्नक्रियानुकूलचरमक्रिया विद्यमानध्वंसप्रतियोगिनी'
क्रियायामिति—इदमुप-
विशेष्यकस्य तादृशातीतत्वज्ञानस्य तादृशप्रयोगं प्रति कारणत्वकल्पनेनादोषात्।
घटस्य ध्वंसाप्रति-
लक्षणम्—क्रियाधिकरणसमयस्यापि, घटे तु नान्वयः, कालस्य क्रियापरिच्छेदकत्वात्,
द्विविध इत्यर्थः।
योगित्वेन तादृशप्रयोगानापत्तेः। द्विविध इति—अद्यतनभिन्नकालस्य वर्तमानत्वासम्भवाद्
भविष्यश्चेति—पृषोदरादित्वात्तलोपः।
भेदादिति—भूताद्यतनः, वर्तमानाद्यतनः, भविष्यदद्यतनभेदादित्यर्थः।
'भविष्यति मर्यादावचनेऽवरस्मिन्'
तथाच प्रयोगः 'यद्भविष्यो विनश्यति' इति, 'भविष्यति गम्यादयः'
इत्यादिनिर्देशात् वैकल्पिकस्तलोपः।
पाणिनिना कुत्रापि अदन्तस्याप्रयुक्तत्वादिति पञ्चोलिनः।
वस्तुतस्तु 'भविष्यँश्च' इत्येव पाठो युक्तः,
तत्रैव = अनद्यतने
अनयोः = भूतभविष्यतोः, उभयत्रापि लृट्।
भविष्यत्सामात्रे = भविष्यत्सामान्ये।
एव। तादृशे = अनद्यतने।

दर्पणव्याख्या

'भूते' इत्यधिकृत्य, "लुङ्" इति सूत्रादित्यर्थः। ननु
विशेषविवक्षायां लङादीनामवकाशं सूचयति—❀ भूते लुङिति ❀।
विनष्टो घट इति प्रयोगः, तदुत्पत्तेर्वर्त-
मानध्वंसप्रतियोग्युत्पत्तिकत्व भूतत्वम्। अत एव घटनाशस्य विद्यमानतादशायामपि,
❀ अत्रेति ❀ भूत इति सूत्रे इत्यर्थः।
मानघटनाशप्रतियोगित्वात्। तथाच यत्रोत्पत्तिरेव धात्वर्थस्तत्रोत्पत्तेर्द्विधाभानप्रसङ्गोऽत आह
व्यापार एव
❀ वर्त्तमान इत्यादि ❀। नचोक्तदोष, अस्मन्मते नश्यत्यादेर्नाशानुकूलव्यापारार्थकतया कालान्वयस्यापि
इति प्रयोगोपपत्तये भविष्यत्ववद्
समर्थितत्वेन च तदप्रसक्तेरुत्पत्त्यघटितत्वेन द्वेधाभानाऽसम्भवाच्च। वस्तुतस्तु 'आत्मा आसीत्'
❀ विद्य-
भूतत्वस्यापि उत्पत्तिघटितस्य स्वेऽर्थव्यमानश्यकमिति बोध्यम्। ❀ क्रियायामिति ❀ फलानुकूलायां तस्यामित्यर्थः।
उक्तप्रयोगानुपपत्तिः सूचयते।
मानेऽपि ❀ इत्यपिना समानप्रत्ययोपात्तावस्यामत्याऽऽत्यानार्थकारके कालान्वयोपगम
परन्तु नश्यत्यादौ नाशातिरिक्तस्य व्यापा-
नैयायिकास्तु—उत्पत्त्यघटितत्वेन लाघवादुक्तार्थ एव भूतपदस्य शक्तिः।
रान्तरस्याननुभवात्तत्रोत्पत्तिघटिते प्रत्ययस्य लक्षणाऽऽवश्यकीत्याहुः।

लृङर्थमाह—सत्यामिति—क्रियाया अतिपत्तिः=अनिष्पत्तिस्तस्यां गम्यमानायाम्, भूते भाविनि हेतुहेतुमद्भावे सति लृङित्यर्थः। "लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ" (पा० सू० ३। ३। १३९) इति सूत्रात्। लिङो निमित्तं हेतुहेतुमद्भावादि। यथा—'सुवृष्टिश्चेदभविष्यत् सुभिक्षमभविष्यत्'। 'वह्निश्चेत् प्राज्वलिष्यद् ओदनमपक्ष्यत्' इत्यादौ। अत्र वह्न्यभिन्नाऽऽश्रयकप्रज्वलनानुकूलव्यापाराभावप्रयोज्य-ओदनाभिन्नाश्रयकविक्लित्यनुकूलव्यापाराभाव इति शाब्दबोधः।

प्रभा

अनिष्पत्तिरिति—असम्भावनमित्यर्थः। पद्यतेरत्र सम्भावनमर्थः। यद्वा—अतिपत्तिः=अनुपपत्तिरेव। हेतुहेतुमद्भावादीति—आदिना 'विभाषा कथमि लिङ् च' इत्यादीनां लिङो निमित्तानां ग्रहणम्। तत्र 'उताप्योः समर्थयोः' इत्यतः प्राग् यानि लिङ्निमित्तानि तेषु भविष्यति क्रियातिपत्तौ सत्यां नित्यं लृङ्। भूते तु क्रियातिपत्त्यभावेऽपि, क्रियातिपत्तावित्यस्याननुवृत्तेः विकल्पेन लृङ्, 'भूते' इत्यधिकृत्य 'वोताप्योः' इत्युक्तेः। भविष्यति—'कथं नाम भवान् धर्ममत्यक्ष्यत्, भूते—त्यजेत् त्यजति, अत्यक्ष्यत्, अत्याक्षीद्वा इति चतुर्णां प्रयोगः। 'उताप्योः' इत्यत आरभ्य परेषु लिङ्निमित्तेषु भूते भविष्यति च क्रियातिपत्तौ सत्यां नित्यं लृङ्। यथा 'कामो मेऽभोक्ष्यत भवान् यदहमजीविष्यम्' इति। हेतुहेतुमद्भावादि स्वरूपसन्निमित्तम्, नतु लृङः शक्यम्। एवं क्रियातिपत्तिरपि यथाकथञ्चिद्गम्या अपेक्ष्यते, नतु वाच्या। सुवृष्टिश्चेदिति—ननु सुवृष्टिभवनसुभिक्षभवनयोः सामग्रीवैकल्यान्नियमेनानुत्पत्तिः, अनुत्पत्तिं स्वयमवगम्य यत्र प्रतिपाद्यते तत्र भविष्यत्त्वादेवानुत्पत्तिक्रियायाः। उत्पन्ने एव भूत इत्युच्यते। सामग्रीसमवधाने सम्भावितोत्पत्तिकञ्च भविष्यदित्युच्यते। अत्र च साधनाभावात् सम्भाविताऽपि न क्रियोत्पत्तिरिति भूतत्वभविष्यत्त्वयोरसम्भवात् कथं लृङिति चेन्न, अभूतेऽपि भूतत्वम्, अभविष्यत्यपि भविष्यत्त्वमारोप्य क्रियाया अनुत्पत्तेः समर्थनीयत्वात्, सुभिक्षभवने सुवृष्टिभवनं हेतु सम्भावयत एव तादृशोक्तेः। एवमेव क्रियातिपत्तिः समर्थनीया। अत्र भूतत्वभविष्यत्त्वयोरभावनिश्चयसत्त्वेऽपि भूतत्वादिप्रकारकबाध आहार्यारोपात्मक एव बोध्यः।

वस्तुतस्तु शाब्दबोधम्प्रति बाधनिश्चयस्य प्रतिबन्धकत्वाभाव एव। अत एव 'एष वन्ध्यासुतो याति' इत्यादितो बोधः। 'वह्निना सिञ्चति' इत्यतो बोधाभावे 'अद्रवेण वह्निना कथं सेक ब्रवीषि' इति उपहासानुपपत्तिश्च स्यात्। तथाच लृङाद्यन्तेनानाहार्यारोपात्मक एव बोधः। बाधज्ञानं ज्ञाने अप्रमात्वं बोध्यते, नतु शाब्दबोधस्य प्रतिबन्धकम्। लृङ्समभिव्याहारे धातोर्लृङो वा अभावोऽप्यर्थः। तथाच सुवृष्ट्यभिन्नाश्रयकोत्पत्त्यनुकूलव्यापाराभावप्रयोज्यसुभिक्षाभिन्नाश्रयकोत्पत्त्यनुकूलव्यापाराभाव इति सुवृष्टिश्चेदित्यादिना बोधः। अभावार्थकत्वमेव विशदयन्नाह—वह्न्यभिन्नाश्रयकेति।

दर्पणव्याख्या

ॐ भूते भाविनीति ॐ। कार्यकारणभावापन्नपदार्थयोर्भूतत्वे भविष्यत्त्वे वा गम्यमान इत्यर्थः। ॐ हेतुहेतुमद्भावादीति ॐ आदिना शकधादिपरिग्रहः। तत्र भविष्यदर्थे उदाहरणमाह—ॐ सुवृष्टिश्चेदिति ॐ अत्रैकस्यैव धात्वर्थस्य कर्तृरूपोपाधिभेदेन कार्यकारणभावावगतिः, उत्तरत्र तु स्वरूपतो भिन्नयोस्तयोरिति विशेषः। ॐ व्यापाराभाव इति ॐ धात्वर्थयोर्भिन्नत्वप्रदर्शनार्थं परमभावविशेष्यकबोधोत्कीर्तनम्। वह्न्यभिन्नाश्रयकभाविप्रज्वलनजन्यौदनाऽऽश्रयकविक्लित्यनुकूलव्यापार इति शाब्दबोधस्सूचितः। ॐ प्रयोज्य इति ॐ व्यापाराभावान्वयि प्रयोज्यत्वोत्कीर्तनं वह्निप्रज्वलनौदनपाकयोः कार्यकारणभावप्रदर्शनाय, 'यदभावो यदभावप्रयोज्यः स तज्जन्य' इति नियमात्। तथाच प्रकृते ओदनपाकाभावे वह्निप्रज्वलनाभावप्रयोज्यत्वेऽवगते तत्प्रतियोगिनोस्तयोः कार्यकारणभावः सुबोधो भवतीति भावः। पूर्वं भूते—

एवंरीत्या द्रष्टव्यम् । अयञ्च अर्थनिर्देश उपलक्षणम्, अर्थान्तरेऽपि बहुशो विधानदर्शनात् । प्रसिद्धत्वादेष्वेवार्थेषु शक्तिरन्यत्र लक्षणेति मतान्तररीत्या वोक्तम् । एतेषां क्रमनियामकश्चानुबन्धक्रम एव । अत एव पञ्चमो लकार इत्यनेन मीमांसकैर्लेट् व्यवह्रियत इति दिक् ॥ २३ ॥

इति वैयाकरणभूषणसारे लकारविशेषार्थनिरूपणं समाप्तम् ॥ २ ॥

---

प्रभा

अर्थान्तरेऽपीति—अर्हे प्रशंसाप्राप्तकालादिष्वित्यर्थः । एष्वेवेति—वर्तमानत्वादिष्वेवेत्यर्थः । शक्तिः = सङ्केतरूपा = 'इदं पदमेतदर्थविषयकबोधजनकं भवतु' इति पदविशेष्यिका, 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्यर्थविशेष्यिका वा इच्छैव संकेतस्तद्रूपा, पदार्थान्तररूपा वा । अन्यत्र = गर्हादिष्वर्थेषु । मतान्तररीत्या = नैयायिकमीमांसकादिरीत्या । बोधकत्वं शक्तिरिति वादिनः शाब्दिकस्य मते तु येष्वर्थेषु बोधोऽनुभवसिद्धस्तत्र शक्तिरेव, नो चेत्प्रयोगोपाधिस्त्वम्, (प्रकरणादिना यथाकथञ्चिद्गम्यमानत्वमेव) अन्यथा गम्यमानस्यार्थस्य शाब्दत्वेन प्रतीतिविषयत्वमिति यावत्, यथा—स्फटिके लौहित्यम् । कारिकायां 'क्रमाज् ज्ञेया लडादयः' इत्युक्तम् । तत्र क्रमनियामकः क इत्यपेक्षायामाह—क्रमनियामक इति—अष्टाध्याय्यां लिट एव 'छन्दसि लिट्' (३।२।१०५) इत्यनेन प्रथमं विहितत्वाल्लिडादय इति वक्तुमुचितमित्याशङ्कायामाह—अनुबन्धक्रम एवेति—तथाच वर्णसमाम्नायक्रमेणोक्ता अकारादयोऽनुबन्धा एव क्रमनियामकाः । अत एव कौमुद्यामपि प्रथमं 'वर्तमाने लट्' (३।२।१२३) इत्यनेन लडेवोक्त । अत्र मीमांसकव्यवहारमपि प्रमाणयति—अत एवेति—अकाराद्यनुबन्धानां क्रमनियामकत्वादेवेत्यर्थः ।

नन्वेवमपि लङादय इत्येव वक्तुम् पाणिनिना प्रथमम् 'अनद्यतने लङ् (३।२।१११) इत्यस्यैवोपादानादिति चेन्न, वर्तमानकालस्योपस्थितत्वेन तदनुरोधाल्लडादय इत्युक्तेः । दिगिति—दिगर्थस्तु उच्चारितस्यैव शब्दस्य द्योतकत्ववाचकत्वयोर्वक्तुं शक्यतया यत्र 'इयान्' 'व्यतिषे' इत्यादौ प्रत्ययमात्रस्य दर्शनं तत्र प्रकृतेः, यत्र 'गर्गाः' 'भव' इत्यादौ प्रकृतिमात्रस्योपलब्धिस्तत्र प्रत्ययस्य च द्योतकत्व-वाचकत्वयोरुभयोरप्यसम्भव इति पदस्फोटस्य, वाक्यस्फोटस्य वा वाचकत्वं स्वीकरणीयम् । तथाच पदवाक्ययोः स्वरूपप्रत्यायनायैव प्रकृति-प्रत्ययादीनां कल्पनया पदवाक्ययोः शक्तिबोधने एव तात्पर्यम् । अतो वाक्यैकदेशन्यायेन, 'यः शिष्यते स

---

दर्पणव्याख्या

परस्परेण स्पृहणीयशोभं नचेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत् ॥

'मम ऊर्जा वेरयवदयत्' यणाद्यान्यतर्तयिष्यदित्यादि बोध्यम् । यदि देवदत्तो नाभविष्यदित्यादि बोध्यमित्याह ❀ एवंरीत्येति ❀ । ❀ अयञ्चेति ❀ वर्तमाने लडित्यादिनोपात्त इत्यर्थः ❀ अर्थान्तरेऽपि ❀ अर्हे प्रशंसाप्राप्तकाला-द्यर्थेऽपीत्यर्थः । एषु वर्तमानत्वादिषु शक्तिः सङ्केतरूपा, पदार्थान्तररूपा वा ❀ अन्यत्र ❀ अर्हाद्यर्थे । ❀ मतान्तररीत्या चेति ❀ बोधकत्वमेव शक्तिरिति वदतामस्माकं तु केषाञ्चित् प्रयोगोपाधित्वमितरेषां शक्यत्वमेवेति भावः ❀ अनुबन्धक्रम इति ❀ अकाराद्यनुबन्धक्रम इत्यर्थः । ननु यत्र प्रत्ययस्य, तिबादेर्दर्शनं तत्र द्योतकत्वं वाचकत्वं वेति पक्षद्वयेऽप्यनुपपत्तिः, वाचकस्य द्योतकस्य वाऽसत्त्वेन वर्तमानत्वादिबोधस्योपपादयितुमशक्यत्वादत आह ❀ दिगिति ❀ तदर्थस्तु 'पदं वाचकम्' इति पक्षे प्रकृतिप्रत्ययविभागकल्पनया वाचकत्वं तत्रारोप्य पदशक्तिरेव व्युत्पाद्यते । यत्र प्रकृतेर्वा प्रत्ययस्य अश्रूयमाणत्वं

## अथ सुबर्थनिर्णयः

सुबर्थमाह—

आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा ।
यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः ॥ २४ ॥

प्रभा

लुप्यमानार्थाभिधायी' इति न्यायेन च पदसंज्ञकस्य प्रकृतिरूपस्य, प्रत्ययरूपस्य वा लुप्यमानार्थबोधकत्वमङ्गीकरणीयमिति ।

व्याख्या भूषणसारस्य कृता पञ्चोलिना प्रभा ।
समाप्तिमगमत्तत्र लकारार्थस्य निर्णयः ॥

॥ शुभम्भूयात् ॥

'सर्वं नाम च धातुजमाह' इति निरुक्ताम्नातो मूलभूतधातोस्तत्प्रकृतिप्रत्ययानाञ्चार्थनिर्णयानन्तरं धात्वर्थरूपावसरसङ्गत्या तिङः पदत्वप्रयोजकतया, क्रियया कारकस्याकाङ्क्षितत्वेन च स्मृतत्वात्सुबर्थं निरूपयन्नाह—आश्रय इति—कर्मद्वितीयायाः, कर्तृकरणतृतीयायाः, अधिकरणसप्तम्याश्च आश्रयोऽर्थः । अवधिः पञ्चम्यर्थः । उद्देश्यः सम्प्रदानचतुर्थ्यर्थः । सम्बन्धः शेषषष्ठ्यर्थः । एतेन उपपदद्वितीयादिविभक्तीनाम्, कारकषष्ठ्याश्च आश्रयादिनोऽर्थ इत्यपास्तम् । शक्तिरेवेति—आश्रयत्वम्, अवधित्वम्, उद्देश्यत्वम्, सम्बन्धत्वम् एव वा उक्तविभक्त्यर्थ इति पक्षान्तरम् । यथायथम्—तत्तद्विभक्तीनां यद्यदात्मीयमर्थस्वरूपं तद्यथायथं विभक्त्यर्थ इत्यर्थः । 'यथास्वे यथायथम्' इत्युक्तेः ।

सुपां कर्मेति—

सुपां कर्मादयोऽप्यर्थाः सङ्ख्या चैव तथा तिङाम् ।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ॥ १ ॥

अयं भावः—'कर्मणि द्वितीया' इत्यादेः प्रकरणस्य, 'बहुषु बहुवचनम्' इत्यादेश्च सुबादिविधायकसूत्रेण सहैकवाक्यता । तथाच प्रातिपदिकार्थैकत्वविशिष्टे कर्मणि द्वितीयैकवचनमित्येवं रूपेण प्रत्ययविधाने सङ्ख्याकर्मादयश्च सुपामर्था भवन्ति, तथैव तिङामपि सङ्ख्याकर्मादिर्वाच्यार्थः, तत्रार्थनियमः प्रसिद्ध इत्यर्थः । नियमः प्रकृतेषु वेति—प्रकृतेषु अर्थेषु वा नियमः, तुल्यजातीयस्यार्थस्य तुल्यजातीयेन नियमेन व्यावृत्तिः क्रियते, इत्यव्ययानां सङ्ख्याद्यर्थकत्वाभावान्नियमसजातीयत्वाभावेन तेभ्य स्वादयः सिद्ध्यन्तीति 'स्पष्टं 'बहुषु बहुवचनम्' ( १।४।२१ ) इति सूत्रे भाष्ये ।

दर्पणव्याख्या

तत्र श्रूयमाणस्यैव तदर्थकत्वं कल्प्यते । तदाहु· "शिष्यमाण लुप्यमानाऽर्थाभिधायि" इति । अत एव, 'व्यतिसे' इत्यानिस्यादौ प्रत्ययमात्रात्प्रकृत्यर्थविषयको बोध इत्यादि· ॥ २३ ॥

॥ इति भूषणसारदर्पणे लकारार्थनिर्णय· ॥ २ ॥

अवसरसङ्गत्या सुबन्तार्थे निरूपणीये प्रातिपदिकार्थविशेष्यत्वात् क्रियाकाङ्क्षितत्वाच्चादौ (कारक) विभक्त्यर्थनिरूपणमित्यभिप्रायवानाह ॐ सुबर्थमिति ॐ ।

द्वितीया-तृतीया-सप्तमीनामाश्रयोऽर्थः। तथाहि—"कर्मणि द्वितीया" (पा० सू० २।३।२)। तच्च कर्तुरीप्सिततमम्—क्रियाजन्यफलाश्रय इत्यर्थः, क्रियाजन्यफलवत्त्वेन कर्मण एव कर्तुरीप्सिततमत्वात्।

प्रभा

आश्रयोऽर्थ इति—आश्रयतावानित्यर्थः, आश्रयनिष्ठा वाच्यता न किञ्चिद्धर्मावच्छिन्ना, आश्रयत्वस्य फलादिनिरूपितत्वविशिष्टमाश्रयत्व-
भूतलाद्यापि सत्त्वेनातिप्रसक्ततया द्वितीयादिवाच्यतानवच्छेदकत्वात्। तच्च = कर्म च।
मपि नावच्छेदकम्, गौरवात्, 'वैकुण्ठमध्यास्ते' इत्यादौ तदभावेन न्यूनवृत्तित्वाच्च। इत्याश्रयार्थत्वमसङ्गतमित्याशङ्कायामाह—
ननु कर्तृनिष्ठा या प्राप्तीच्छा तद्विशेष्यं कर्मेत्येव सूत्राल्लभ्यते। सा चाऽऽश्रयमात्रबोधिका।
क्रियाजन्येति—कर्तुरित्यत्र 'क्तस्य च वर्तमाने' इत्यनेन कर्तरि षष्ठी। तस्य चाभेदसम्बन्धेन षष्ठ्य-
षष्ठीप्रकृतिकर्तृपदार्थश्च प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयरूपस्वतन्त्रपदार्थः। 'नीलघटो घटः' इत्यत्र विधेयांशेऽधिकावगाहि-
र्थाश्रयेऽन्वय इति न 'घटो घटः' इतिवदभेदान्वयबाधः, विशिष्टाऽऽश्रयस्याभेदेनाऽऽश्रयान्वये बाधकाभावात्। सङ्केतसम्बन्धेन
ज्ञानस्य दर्शनेन विधेयीभूतस्य 'सार्थाद्धीयते' इत्यत्र सार्थपदार्थस्यापादानतया सङ्केतसम्बन्धेन कर्तृ-
कर्तृपदवाँस्तु न प्रकृते कर्तृपदार्थः, 'हीयते' इत्यत्र कर्मणि लकारानापत्तेः। नच कर्तृसंज्ञया
पदघटत्वाभावेन चैत्रादेः कर्मत्वानुपपत्त्या 'अपादाने चाहीयरुहोः' इति ज्ञापकेन कर्तृसंज्ञया अपादानसंज्ञाया बाधाभाव-
तपादानसंज्ञाया बाधः, सन्नन्तात्कर्मणि क्ते सम्बन्धविषयकेच्छाविषय ईप्सितपदार्थः। 'केन
कल्पनात्। आप्तिश्चात्र सम्बन्धः। सम्बन्धश्चोपस्थितत्वात् स्वज-
सम्बन्धुमिष्ट.' इत्याकाङ्क्षायामुपस्थितत्वात्कर्तृपदार्थविशेषणीभूतव्यापारेण। तथाच 'प्रकृतधात्वर्थप्रधानीभूतव्या-
न्यफलाश्रयत्वरूप एव। फलाश्रयत्वञ्च—फलतावच्छेदकसम्बन्धेन। फलतावच्छेदकसम्बन्धावच्छिन्नाऽऽधेयतावत्फलाश्रयः कर्मसंज्ञकः' इति सूत्रतो
पाराश्रयाभिन्नाश्रयनिरूपितफलतावच्छेदकसम्बन्धावच्छिन्नाऽऽधेयतावत्फलाश्रयः आश्रयमात्रस्य शक्यत्वं शेषस्योपलक्षण-
लाभात् अनुभवानुरोधात् कर्तृनिष्ठेत्यादीनां सूत्रार्थबोधविषयत्वेऽपि
त्वमिति क्रियाजन्यफलाश्रयः कर्म इत्युक्तिर्नासङ्गता।

दर्पणव्याख्या

ॐ आश्रयोऽर्थ इति ॐ किञ्चिद्धर्मानवच्छिन्नाश्रयतावानित्यर्थः। तेन चतुर्थी-पञ्चम्योरर्थयोरुद्देश्यावध्योराश्रयात्म-
कत्वेऽपि न क्षतिः। तत्र द्वितीयाया आश्रयार्थकत्वे मानमाह—ॐ तथाहीत्यादिना ॐ।
ननु यथाश्रुते 'कर्तुरीप्सिततमम्' इत्यनेन कर्तृसम्बन्धिप्राप्तीच्छाविशेष्यस्यैव कर्मत्वं प्रतिपाद्यते, नतु क्रियाजन्यफलाश्रय-
स्येत्यत आह ॐ क्रियाजन्यफलवत्त्वेनेति ॐ अयं भावः—सूत्रे 'ईप्सिततम'शब्द आप्नोतेरिच्छासन्नन्तात् कर्मक्तान्तात्
प्रकृत्यर्थातिशयद्योतके तमपि निष्पन्नः। तद्योगाच्च कर्तृशब्दात्, "क्तस्य च वर्तमाने" (पा० सू० २।३।६७) इति
कर्तरि षष्ठी। तथाच कर्त्रोपस्थितत्वात् स्वीयव्यापारेण व्याप्तुमिष्यमाणतमं व्यापारजन्यफलसम्बन्धित्वप्रकारककर्तृनिष्ठेच्छ-
विषयः कर्मेति पर्यवसानात् क्रियाजन्यफलाश्रयस्य कर्मतालाभ इति। नचेच्छाकर्मीभूतार्थधातोरेव "धातोः कर्मणः"
इति सूत्रेणेच्छायां सनो विधानाद् व्याप्तीच्छार्थकसन्नन्तधातुना व्याप्तिरूपकर्मोपसंग्रहाज्जीवत्यादिवदकर्मकतया ततः कथं कर्म-
क्तोपपत्तिरिति वाच्यम्, धात्वर्थोपसङ्गृहीतकर्मत्वमित्यत्र कर्मणा तद्धात्वर्थीयकर्मान्तरानाकाङ्क्षत्वविशेषेण सन्प्रकृतिधात्वर्थकर्मणः
कर्मान्तरसाकाङ्क्षत्वेनोक्ताकर्मकत्वस्य सन्नन्ते असम्भवात्। एवं सन्नन्तस्य वृत्तितया तद्घटककर्माऽऽदाय कर्मसंज्ञका-
न्वयार्थकत्वरूपमकर्मकत्वाभावेऽपि तद्बहिर्भूतकर्मान्वयित्वमादायैव सकर्मकत्वं बोध्यम्। एवं फलतावच्छेदकसम्बन्धेन
तद्धात्वर्थफलव्यधिकरणव्यापारवाचकत्वरूपं तदपीति नेप्सत्यादितः कर्मप्रत्ययानुपपत्तिः। जिघ्रतेरपि स्वार्थान्तरभूतकर्मणस्त-
दीयपुष्पादिकर्मान्तरसाकाङ्क्षत्वमस्त्येव। गन्धनिरूपितलौकिकविषयितायां पुष्पादेः स्वनिष्ठाधेयत्वीयसांसर्गिकविषयतानिरूपि-
तप्रकारतानिरूपकत्वेनान्वयेनाकर्मत्वात्।

"तथायुक्तञ्चानीप्सितम्" ( पा० सू० १ । ४ । ५० ) इत्यादिसंग्रहाच्चैवमेव युक्तम् । ईप्सितानीप्सितत्वयोः शाब्दबोधे भानाभावेन संज्ञायामेव तदुपयोगः, नतु वाच्यकोटौ तत्प्रवेशः ।

प्रभा

ननु इच्छाकर्मीभूतार्थकधातोरिच्छायां सनो विधानात्पृथग्धात्वर्थसम्बन्धरूपकर्मणो धात्वर्थेऽन्तर्भावाद् कर्मकत्वापत्तिरिति कथं सन्नन्तात्कर्मणि क्त इति चेन्न, तादृशकर्मणः सन्नन्तधात्वर्थेनोपसङ्ग्रहेऽपि बहिर्भूतकर्मादाय जिघ्रतेर्गन्धरूपकर्मणो धात्वर्थकुक्षिगतत्वेऽपि पुष्पादिकर्मणा सकर्मकत्ववत्सन्नन्ते सकर्मकत्वस्य वक्तुं शक्यत्वात्, सन्प्रकृतेः सकर्मकतया कर्मणि प्रत्ययस्य सुलभत्वाच्च ।

ननु सना इच्छायाः प्रतीतेः फलाश्रयत्वेनेच्छोद्देश्यस्यैव 'कर्तुरीप्सिततमम्' इति सूत्रेण लाभात् क्रियाजन्यफलाश्रयस्य कर्मत्वोक्तिरसङ्गतेत्याशङ्कायामाह—तथायुक्तञ्चेति—तादृशफलाश्रयत्वेनेच्छोद्देश्यत्वं कर्मसंज्ञायामेवोपयोगि, नतु तावतो वाच्यकोटौ निवेशः । 'तथायुक्तञ्चानीप्सितम्' इति सूत्रारम्भेण कर्मपदघटिते 'कर्मणि द्वितीया' इत्यादिशास्त्रे सर्वविधकर्मणो ग्रहणस्यावश्यकतया फलाश्रयत्वेनैव कर्मणो द्वितीयादिवाच्यत्वम् ।

वस्तुतस्तु—'अधिशीङ्स्थासां कर्म' 'दिवः कर्म च' इत्यादिसूत्रबोधितकर्मणः सङ्ग्रहाय कारिकायामाश्रयपदेन 'कर्मणि द्वितीया' इत्यादौ कर्मपदेन च कर्मत्वशक्त्याऽऽश्रय इत्यर्थ एवोचितः । कर्मत्वशक्तिश्च यस्य यस्य कर्मसंज्ञा तत्र तत्र बोध्या, संज्ञाया एव तद्द्योतकत्वात् । क्रियाजन्यफलाश्रयस्यैव कर्मपदेन ग्रहणे तु 'वैकुण्ठमधिशेते' इत्याद्यसिद्ध्यापत्तिरिति पश्चोलिनः ।

इत्यादीति—आदिना 'गतिबुद्धि' इत्यादेः परिग्रहः । एवमेव = इच्छया अघटितमेव । नन्वेवं 'हरिं भजति' इत्यादौ कर्मण ईप्सितत्वेन भानं न स्यादित्यत आह—ईप्सितानीप्सितत्वयोरिति । नन्वेवमपि क्रियाजन्यफलाश्रये एव शक्तिर्नतु आश्रयमात्रे इत्यत आह—

दर्पणव्याख्या

'कृष्णाय राध्यति' इत्यस्य 'कृष्णस्य शुभाशुभं पर्यालोचयति' इत्यर्थाद्धात्वर्थान्तर्भूतशुभाशुभकर्मण कर्मान्तरसाराहित्यमिति न तत्रातिप्रसङ्गः । शुभूपत्यादीनां तु भवनाऽऽदिकर्मणः कर्मान्तरसाकाङ्क्षस्य धात्वर्थतावच्छेदककोटिप्रविष्टत्वादकर्मकत्वं व्यक्तमेव । एवं 'स्वर्यते' इति भाष्यप्रयोगस्यस्वरवद्रूपविकृतिकर्मणः सन्निहितशब्दरूपप्रकृतिकर्मसाकाङ्क्षतया करोत्यर्थणिजन्तात् कर्मप्रत्ययोपपत्तिरिति बोध्यम् । केचित्तु—सनाद्यन्तस्य धात्वर्थोपसङ्गृहीतत्वेनाकर्मकत्वेऽपि तत्प्रकृतेः सकर्मकत्वमादाय तस्मात् कर्मप्रत्ययोपपत्तिमाहुः ।

ननु तथापीष्टाघटितस्य भवदुक्तस्य कथं कर्मलक्षणत्वमत आह—॥ तथायुक्तमिति ॥ कर्मव्यवहारस्य द्वेष्योदासीनयोरप्यविशिष्टत्वात्साधारणस्यैव लक्षणत्वमुचितम् । इच्छाघटितस्यैव तस्य लक्षणत्वे तु द्वेष्यादिकर्मण्यव्याप्तिः स्यात् । तथाच तत्साधारण्यायेदमेवाश्रयितुं युक्तमिति भावः । ॥ एवमेवेति ॥ इत्यमेवेत्यर्थः । ननु द्वितीयाया उक्तकर्मार्थकत्वे 'हरिं भजति' इत्यादौ हर्यादेरीप्सितत्वादिना शाब्दबोधे भानानुपपत्तिरत आह—॥ ईप्सितानीप्सितत्वयोरिति ॥ । ॥ भानाभावेनेति ॥ सार्वजनीनतयाऽनुभवाभावेनेत्यर्थः । ननु तर्हि क्रियाजन्यफलाश्रयः कर्मत्वेन सूच्यतामत आह—॥ संज्ञायामेवेति ॥

अयमाशय—क्रियाजन्यफलाश्रय कर्मेति सूत्रप्रणयने यद्यप्यीप्सितानीप्सितयोरविशेषेण सत्ता सिध्यति, तथाप्यजां ग्रामं नयतीत्यादौ क्रियाजन्यफलभागित्वेनेष्टस्य माणवकस्यापि विशेषविहितेन "वारणार्थानाम्" ( पा० सू० १ । ४ । २७ ) इत्यनेनापादानसंज्ञा प्रसज्येत । सूत्रन्तु 'हरिं भजति' इत्यादौ चरितार्थम् । तत्परिहारार्थमिततममप्यस्य संज्ञाकोटौ निवेशे अप्रसक्तद्वेष्योदासीनसंज्ञाविधानार्थमुत्तरसूत्रमिति तथा नोक्तमिति । ननु तथापि पञ्चम्या इव न द्वितीयाया अप्याश्रयमात्रार्थकता, किन्तु विशिष्टार्थकतेत्यत आह—

तथाच क्रियायाः, फलस्य च धातुनैव लाभादनन्यलभ्य आश्रय एवार्थः। तत्त्वञ्चाखण्डशक्तिरूपम-
वच्छेदकम्। 'ओदनं पचति' इत्यत्र विक्लित्त्याश्रयत्वात् कर्म्मता।

प्रभा

तथाचेति—क्रियाजन्यफलाश्रयस्य कर्मत्वे चेत्यर्थः। ननु आश्रयत्वस्य निरूपकादिभेदेन भेदात् शक्त्या-
नन्त्यमित्यत आह—तत्त्वञ्चेति—आश्रयत्वञ्चेत्यर्थः। अखण्डशक्तिरूपम् = अखण्डोपाधिरूपम्। उपाधित्वञ्च—
'विशेषणत्वे सति जातिभिन्नत्वम्'। तत्राखण्डत्वञ्च—'इतरपदार्थघटितस्वरूपकधर्मभिन्नत्वम्'। तथाच
फलाश्रयत्वरूपस्य सखण्डस्योपाधित्वेऽपि शक्त्यानन्त्यतादवस्थ्यमित्यपास्तम्। अखण्डत्वे घटत्वादिवदेकत्वमेव
तस्येति भावः। अत एवैकस्य तस्य शक्यतावच्छेदकत्वे लाघवम्। अर्थस्वरूपभेदेऽपि 'आश्रयः' 'आश्रय.'
इत्यनुगतव्यवहारनियामकत्वादपि एकमेवाऽऽश्रयत्वम्।

नचैवं विभुषु आकाशादिषु 'विभुः' विभुरित्यनुगतप्रतीत्या एकं विभुत्वं सिध्येदिति वाच्यम्, इष्टापत्तेः।
'ग्रामं गच्छति' इत्यादौ ग्रामस्याभेदेन द्वितीयार्थाश्रयेऽन्वयः, तस्य 'स्वनिष्ठाऽऽश्रयतानिरूपकत्व' सम्बन्धेन संयो-
गादिरूपे फलेऽन्वयः। नचाऽऽश्रयत्वस्य निरूपकभेदेन भेदान्नानात्वापत्तिः, समवायस्य प्रतियोग्यनुयोगिभेदेऽपि
एकत्ववन्निरूपकभेदेऽपि तद्भेदाकल्पनात्। नच 'स्वनिष्ठाश्रयतानिरूपकत्व'स्य वृत्त्यनियामकतया तन्य प्रतियो-
गिताऽनवच्छेदकत्वेन 'विहगो भूमिं गच्छति न महीरुहम्' इत्यादौ संयोगे आश्रयाभावबोधानापत्तिः, वृत्त्य-
नियामकस्यापि प्रतियोगिताऽवच्छेदकत्वोपगमात्। नचातिरिक्ताभावस्वीकारे गौरवम्, मन्मते तु तादृशाभा-
वप्रसिद्धिरेवेति वाच्यम्, 'स्वनिष्ठाश्रयतानिरूपकत्वसम्बन्धस्य स्वरूपसम्बन्धेन योऽभावः स च नैयायिक-
सम्मत इति तस्य स्वनिष्ठाश्रयतानिरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य च समनियततया समनि-
यततयोरैक्यादभावान्तरस्वीकारकृतगौरवाभावात्। वृत्त्यनियामकसम्बन्धावच्छिन्ना प्रतियोगिताऽतिरिच्यते
इति गौरवमित्यपि न, वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वे बहुविधलाघवस्य सत्त्वेनैतादृशगौरव-
स्याकिञ्चित्करत्वात्। कर्मतेति—कर्मसंज्ञेत्यर्थः।

दर्पणव्याख्या

ॐ तथाचेति ॐ। ॐ आश्रय एव ॐ इत्येवकारेण विशिष्टार्थस्य शक्यत्वव्यवच्छेदः। नन्वाश्रयस्य तत्तत्स्व-
रूपात्मकस्य तत्तदाश्रयभिन्नत्वात् कथं तस्य शक्यतावच्छेदकत्वम्, अनुगतधर्मस्यैव तत्त्वादत आह—ॐ तत्त्वञ्चेति ॐ
आश्रयत्वं चेत्यर्थः। ॐ अखण्डशक्तिरूपमिति ॐ शक्तिः = धर्मः; इतरपदार्थाघटितमूर्त्तिकधर्मरूपमिति यावत्। आश्रय
इत्यनुगतव्यवहारादाश्रयपदं शक्यतावच्छेदकत्वाच्च तत्सिद्धिर्द्रव्यत्वादिवदिति भावः।

नैयायिकास्तु—आश्रयताया नियतान्यनिरूपितस्वरूपाया अनुगमकत्वाऽसम्भवः। शक्यतावच्छेदकत्वस्यापि विभुत्वा-
न्यतरत्वादौ व्यभिचारेण नाखण्डत्वसाधकत्वमिति न द्वितीयाया आश्रयोऽर्थः, तस्य प्रकृत्यैव लाभात्, प्रकृत्यर्थभिन्नत्वेन
तत आश्रयस्याननुभवाच्च। किन्तु फलान्वयिनी वृत्तिरेव तदर्थः। कर्मणि द्वितीयेत्यस्य फलनिष्ठाऽऽधेयतान्वये प्रकृतिता-
त्पर्ये सद्युत्तर द्वितीयेत्यर्थात् न तद्विरोधोऽपि। अनादितात्पर्यग्राहकत्वेन परम्परया शक्तिग्राहकत्वाच्च न तद्वैयर्थ्यम्। आश्र-
यत्वन्तु न तच्छक्यम्, तस्य निरूपकतासम्बन्धेनैव फलान्वयित्वस्याभ्युपगन्तव्यतया निरूपकत्वस्य च वृत्त्यनियामकतयाऽ-
भावप्रतियोगिताऽनवच्छेदकत्वेन 'विहगो भूमिं गच्छति, न महीरुहम्' इत्यादौ धात्वर्थफले संयोगे महीरुहनिष्ठाश्रयतायास्तेन
सम्बन्धेनाभावस्याप्रसिद्धतया तत्राबोधस्यासम्भवात्। नच सूत्रस्वारस्यभङ्गः, 'शक्तिः कारकम्' इति पक्षे तद्योगात्।
आधेयताया अपि निरूपकतया कारकधर्मत्वादित्याहुः।

ॐ विक्लित्त्याश्रयत्वात् कर्मतेति ॐ कर्मसंज्ञेत्यर्थः। एतेन कर्तृगतप्रकृतधात्वर्थव्यापारप्रयोज्यतद्व्यधिकरणप्रकृत-
धात्वर्थफलाश्रयत्वं कर्मत्वमुक्तं भवति। यद् वक्ष्यति 'उक्ताश्रयत्वात्' इति। 'अग्नेर्माणवकं वारयति' इत्यादावव्याप्तावति-

प्रभा

एतेन स्वतन्त्रनिष्ठप्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यतादृशव्यापारानधिकरणवृत्तिप्रकृतधात्वर्थफलाश्रयत्वं कर्मसंज्ञाप्रयोजकमिति सूचितम्। 'अग्नेर्माणवकं वारयति' इत्यत्र वारयतेः संयोगानुकूलव्यापाराभावानुकूलव्यापारवाचकतया अग्निवृत्तिसंयोगस्य प्रधानीभूतव्यापारप्रतिबन्ध्यत्वेन कर्मत्वाप्राप्त्या तत्र 'वारणार्थानाम्' इत्यस्य चारितार्थ्येन न माणवकस्य अपादानत्वम्, किन्तु परत्वात्कर्मत्वमेव। अग्निसंयोगे माणवकव्यापारप्रयोज्यत्वसत्त्वेन कर्मत्ववारणाय व्यापारे प्रधानत्वविशेषणम्। 'ग्रामं गच्छति' इत्यादौ संयोगस्य व्यापाराधिकरणभिन्नग्रामवृत्तितया नाव्याप्तिः, कर्त्रादौ प्राप्तापि कर्मसंज्ञा कर्तृसंज्ञया बाध्यते। 'चैत्रः शेते' इत्यादौ निद्रारूपफलस्य व्यापारानधिकरणावृत्तितया नातिव्याप्तिः।

निद्रा तु—

"यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः।
विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः" ॥ १ ॥

इत्युक्तेर्विषयेभ्यः कर्मेन्द्रियाणां व्यापारविरमरूपा।

योगसूत्रे तु "अभावप्रत्ययालम्बना वृत्तिर्निद्रा", जाग्रत्स्वप्नवृत्तीनामभावस्य प्रत्ययः=कारणं बुद्धि
सत्त्वाच्छादकं तम एवाऽऽलम्बनम्=विषयो यस्याः सा तथोक्ता वृत्तिर्निद्रा। सा च निद्रा प्रत्ययविशेष ए
नतु निरोधकैवल्ययोरिव वृत्त्यभावः। अत एव 'सुखमहमस्वाप्सम्' इति प्रत्ययोपपत्तिः।

'माषेष्वश्वं बध्नाति' इत्यत्र माषस्य प्रकृत (उच्चरितवाक्यघटक) धात्वर्थप्रधानीभूतबन्धनप्रयोज्यभक्षण
(गलबिलाधःसंयोग) रूपफलाश्रयत्वसत्त्वेन कर्मत्ववारणाय फले प्रकृतधात्वर्थत्वविशेषणम्। भक्षणस्य प्रकृत
धात्वर्थत्वाभावान्न दोषः। फलताऽवच्छेदकसम्बन्धेन फलाऽऽश्रयत्वनिवेशात् 'तण्डुलं पचति' इत्यादौ कालस्य
कालिकसम्बन्धेन विक्लित्त्याश्रयत्वेऽपि न कर्मत्वम्।

फलतावच्छेदकसम्बन्धश्च न फलनिष्ठकार्यताऽवच्छेदकः। कालिकसम्बन्धेन फलोत्पत्तिं प्रति तादात्म्येन
कालस्य कारणतया तण्डुलं पचति देवदत्ते 'काष्ठं पचति' इत्यादेरप्यापत्तेः। समवायेन संयोगविभागौ प्रति
तादात्म्येन द्रव्यस्य कारणतया फलतावच्छेदकसम्बन्धेन व्यापारानधिकरणवृत्तिफलवाचकत्वेन सकर्मकत्वम्
फलतावच्छेदकसम्बन्धेन व्यापारानधिकरणवृत्तिफलवाचकत्वेनाकर्मकत्व वोभयोरपि विभाग-संयोगरूपफल
वाचकयोस्त्यजति-विभजत्योः स्यात्। अतस्तत्तद्धातुनिष्ठशक्तिविषयत्वं स्वरूपसम्बन्धविशेषरूपेऽनुकूलत्वे
स्वेच्छाधीनेच्छाविषयत्वे च स्वीकर्तव्यम्। प्रयोगानुसारादनुकूलत्वम्, स्वेच्छाधीनेच्छाविषयत्वञ्च व्यापारे
भासते। स्वः=कर्ता। तथा च कर्तृनिष्ठेच्छीयफलनिष्ठाऽऽधेयतावच्छेदको यः सम्बन्धः स एव फलतावच्छे
दकस्तेन सम्बन्धेन फलाश्रयस्य कर्मत्वं वाच्यम्। एवञ्च 'तण्डुलं पचति' इत्यादौ समवायेन 'विक्लित्त्याश्रय-
स्तण्डुलो भवतु' इति कर्तृनिष्ठेच्छीयफलनिष्ठाऽऽधेयताया अवच्छेदकः सम्बन्धः समवाय इति तेन सम्बन्धेन
फलाऽऽश्रयस्य तण्डुलादेरेव कर्मत्वम्, नतु कालिकादिसम्बन्धेन फलाश्रयत्वमादाय कालादेः, पाषाणादेर्वा।

एवं विपूर्वकभज्धातुसमभिव्याहारे 'अनुयोगित्वेन विभागाश्रयोऽहं भवेयम्' इतीच्छाया एव कर्तृनिष्ठत्वेनात्रेच्छीयफलनिष्ठाऽऽधेयताऽऽख्यविषयताया अनुयोगित्वसम्बन्ध एव फलताऽवच्छेदक इति तेन सम्बन्धेन तत्प्रतियोगिभूतग्रामादौ विभागस्यासत्त्वेन न तस्य कर्मत्वम्, सम्बन्धानुयोगित्वस्य तत्सम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतारूपतया तादृशविशेष्यतायाश्चास्मदर्थे एव सत्त्वात्। नचास्मदर्थस्य कर्मत्वापत्तिः, कर्तृसंज्ञया परत्वाद्बाधादिति 'ग्रामाद्विभजते' इत्यादौ न दोषः। एवमेव 'वृक्षं त्यजति खगः' इत्यादौ 'प्रतियोगित्वेन विभागाश्रयो वृक्षो भवतु' इतीच्छाया एव खगे सत्त्वेन तत्र प्रतियोगित्वरूपफलतावच्छेदकसम्बन्धेन विभागरूपफलवत्त्वस्य वृक्षे सत्त्वात्कर्मत्वम्। खगस्य तादृशेच्छायां बीजन्तु सर्वाभिमत उक्तप्रयोग एव।

'घटं करोति' इत्यत्र उत्पत्त्याश्रयत्वात् , उत्पत्ते-

प्रभा

'व्यापारानधिकरणनिरूपितफलताऽवच्छेदकसम्बन्धावच्छिन्नाधेयतावत्फलवाचकत्वं सकर्मकत्वम्' ।
एवञ्च 'व्यापारानधिकरणनिरूपितफलताऽवच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभाववत्फलवाचकत्वमकर्म-
त्यजतेः व्यापाराधिकरणाभिन्ननिरूपितफलतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभाववत्फलवाचकत्वमकर्म-
कत्वञ्च विभजतेः सिद्ध्यति ।

नन्वेवमपि प्रतियोग्यनुयोग्युभयकर्मजविभागस्थले उभयत्रापि प्रतियोगित्वस्य, अनुयोगित्वस्य च सत्त्वेन
'चैत्रान्मैत्रो विभजते' इत्यादौ चैत्रे, मैत्रे चानुयोगितासम्बन्धेन विभागरूपफलवत्त्वात्कर्मत्वापत्तिरिति चेन्न,
अत्र 'अनुयोगित्वेन विभागाश्रयो मैत्रो भवतु' इतीच्छाया एव कर्तृनिष्ठत्वेन चैत्रस्य कर्तृवृत्तीच्छोद्देश्यत्वा-
भावेन कर्मसंज्ञाया अप्राप्तेः । नच फलताऽवच्छेदकसम्बन्धेन फलाश्रयत्वमात्रेण 'तथायुक्तम्' इत्यनेन कर्मत्वा-
पत्तिः, अत्रेच्छोद्देश्यत्वस्यानपेक्षणादिति वाच्यम् , अनेन सूत्रेण फलनिष्ठविशेष्यतानिरूपितफलतावच्छेदक-
सम्बन्धावच्छिन्नबोधीयप्रकारताऽऽश्रयत्वप्रकारकतात्पर्यविषयस्य कर्मसंज्ञाविधानात् । तादृशतात्पर्यविषयश्च
कर्तैव नतु चैत्रः । नन्वेवमपि 'स्तोकं पचति' इत्यादौ विक्लित्त्यादेः फलस्य फलताऽवच्छेदकसमवायादिसम्ब-
न्धेन फलाश्रयत्वाभावात्कर्मत्वानापत्तिः, 'क्रियाविशेषणानां कर्मत्वम्' इत्यभियुक्तोक्त्या व्यपदेशिवद्भावेन
फलाऽऽश्रयत्वकल्पनात् , फलाऽऽश्रयस्येव फलताऽवच्छेदकतावच्छेदकसम्बन्धेन फलताऽवच्छेदकधर्माश्रय-
स्यापि कर्मसंज्ञाविधानाच्चेति दिक् ।

ननु 'काशीमगच्छन् काशी गतः' इत्यत्र काश्याः फलाऽऽश्रयत्वेनेच्छोद्देश्यत्वाभावात् कर्मत्वानापत्ति-
रिति चेन्न, क्वचित्प्रसिद्धस्य काश्यभिन्नकर्मोद्देश्यकगमनकर्तृत्वस्याभावबोधनेन काश्यभिन्नकर्मोद्देश्यकगमनक-
र्तृत्वाभाववान् काशीकर्मकगमनकर्तेति बोधेनाऽऽद्यस्य कर्तुरिति, द्वितीयस्य 'तथायुक्तम्' इति कर्मत्वेनादोषात् ।

एवम् 'ग्रामं न गच्छति चैत्रः' इत्यत्र बाह्यसंयोगानुकूलव्यापारस्यासत्त्वेऽपि "शब्दज्ञानानुपाती वस्तु-
शून्यो विकल्पः" इति पतञ्जल्युक्तरीत्या बोद्धव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यत्वमादाय ग्रामस्य
कर्मत्वं बोध्यम् ।

यद्वा 'मातुः स्मरति' इत्यादौ मातुः फलाश्रयत्वेऽपि कर्मत्वशक्तिमत्त्वेनाविवक्षायां कर्मत्वादर्शनात्
'विवक्षात' कारकाणि भवन्ति' इत्यस्यावश्य स्वीकरणीयतया कर्तृ ( स्वतन्त्र ) वृत्तिप्रकृतधात्वर्थप्रधानीभूत-
व्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वप्रकारकेच्छोद्देश्यत्वनिष्ठविशेष्यतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नप्रकार-
ताश्रयत्वेन विवक्षितं कारकं कर्मसंज्ञकमिति 'कर्तुः' इत्यनेन विवक्षितत्वात् तादृशफलाश्रयत्वप्रकारक-
ग्रामनिष्ठोद्देश्यत्वाभाववद्गमनस्य, तादृशोद्देश्यत्ववद्गमनाभावस्य वा विवक्षितत्वेनोद्देश्यत्वनिष्ठविशेष्यता-
निरूपितप्रकारताश्रयत्वस्य ग्रामे सत्त्वात् कर्मत्व सिध्यतीत्यन्यत्र विस्तरः ।

उत्पत्त्याश्रयत्वादिति—अस्य कर्मतेति शेषः । उत्पत्तेरिति—उत्पत्त्यनुकूलव्यापारस्येत्यर्थः, धातुमात्रस्य

दर्पणव्याख्या

व्याप्तिनिरासाय व्यापारे कर्तृगतत्वमुपात्तम् । वारयतेश्च संयोगानुकूलव्यापाराभावानुकूलव्यापारोऽर्थः । 'चैत्रो ग्रामं गच्छति'
इत्यादौ चैत्रादेर्वारणाय व्यधिकरणेति । वैयधिकरण्यञ्च—तदनधिकरणवृत्तित्वम्, नतु तदधिकरणावृत्तित्वम्, तस्य
संयोगे असत्त्वेन ग्रामादावव्याप्तेः । तादृशवैयधिकरण्यविशिष्टाधिकरणतायाश्चैत्रादावसत्त्वान्नातिप्रसङ्गसम्भावनाऽपि । 'माषेष्वश्वं
बध्नाति' इत्यादौ बन्धनप्रयोज्यभक्षणाऽऽश्रयमाषाणां तत्त्ववारणाय प्रकृतधात्वर्थत्वं फलविशेषणम् । प्रकृतत्वञ्च—तत्र तत्र
विशिष्योपादेयम् । 'पयसौदनं भुङ्क्ते' इत्यादौ तु कर्मत्वाविवक्षणाच्च द्वितीया, कृतभोजनस्य पयोलोभेन प्रवृत्तावीप्सिततमत्व-
स्यापि पयसि सम्भवादिति ।

ननु परैः कृञो यत्नमात्रार्थकत्वाभ्युपगमात् कथमुत्पत्तेः प्रकृतधात्वर्थत्वमत आह—❀ उत्पत्तेरिति ❀ तथाच, कृञ

धात्वर्थत्वात्। 'जानाति' इत्यत्र आवरणभङ्गरूपधात्वर्थफलाऽऽश्रयत्वात्। अतीतानागतादिपरोक्षस्थलेऽपि ज्ञानजन्यस्य तस्याऽऽवश्यकत्वात्। अन्यथा 'यथापूर्वं न जानामि' इत्यापत्तेः।

प्रभा

फल-व्यापारोभयार्थकत्वस्य पूर्वोक्तप्रमाणैः साधनात्। एवञ्च नैयायिकोक्तं जानातेर्ज्ञानमात्रार्थकत्वमसङ्गतमिति ध्वनयन्नाह—जानातीत्यत्रेति। आवरणम्=अज्ञानम्, तस्य भङ्गः=नाशः, तदनुकूलो व्यापारः=विषयाकारान्तःकरणवृत्तिरूपः। तथाच अभावरूपस्यावरणभङ्गरूपफलस्य फलताऽवच्छेदकस्वरूपसम्बन्धेन घटादौ सत्त्वात्कर्मत्वोपपत्तिः। नचाज्ञानस्य ज्ञानात्यन्ताभावरूपतया नित्यत्वेन तद्भङ्गासम्भव इति वाच्यम्, अज्ञानस्य मायापरिणामरूपत्वेन ज्ञानविरोधिभावरूपत्वात्। आवरणभङ्गानुकूलव्यापारार्थकत्वोक्तिः प्राचां मतेन। ज्ञानानुकूलव्यापार एवार्थः। ज्ञानमेव फलम्, विषयता च फलताऽवच्छेदकः सम्बन्धः, तेन सम्बन्धेन घटादेर्ज्ञानरूपफलाश्रयत्वात्कर्मत्वम्। ननु भूतभविष्यद्घटस्थले आश्रयाभावात् 'अतीतं घटं जानामि' 'भविष्यन्तं घटं जानामि' इति प्रयोगानुपपत्तिरित्यत आह—अतीतानागतादीति—अतीतम्=भूतम्। अनागतम्=भविष्यत्। अतीतानागतयोरावरणभङ्गरूपफलाश्रयत्वानुपपत्तिः, असत आश्रयत्वायोगात्।

ननु ज्ञानकाले ज्ञानजन्यावरणभङ्गरूपफलस्यातीतादिघटेऽसत्त्वेऽपि तद्घटादिकालावच्छेदेन आवरणभङ्गरूपफलाश्रयत्वमक्षतमेवेति चेन्न, व्यापारस्य स्वशून्योत्तरकालिकफलाऽऽरम्भकत्वस्य स्वशून्यपूर्वकालिकफलारम्भकत्वस्य च क्वाप्यदृष्टत्वेन व्यापारशून्यपूर्वोत्तरकालिकघटकालावच्छेदेन आवरणभङ्गरूपफलाश्रयत्वासम्भवादित्यत आह—तस्येति—वृत्तिरूपज्ञानजन्यस्य तस्य=आवरणभङ्गरूपफलस्य। आवश्यकतामेव दर्शयति—यथापूर्वमिति—अयम्भावः—अतीतानागतस्थले जानातेर्ज्ञानमात्रार्थकत्वस्वीकारे ज्ञानकाले घटस्य विद्यमानतायां ज्ञानेनावरणभङ्ग उत्पद्यत इति तस्मिन्काले आवरणभङ्गविशिष्टं ज्ञानं जातम्। घटस्यातीतादिदशायां जानातिना उत्पन्नज्ञानेन घटादिरूपाऽऽश्रयाभावादावरणभङ्गो नोत्पद्यते इति घटकालोत्पन्नं ज्ञानमिदं ज्ञानमतिक्रामति। तथाच पूर्वकालादभूतज्ञानकर्मकातिक्रमणस्य ज्ञाने सत्त्वेनाव्ययीभावेन प्रतीयमानस्यानतिक्रमणस्याभावाक्षततया पूर्वकालिकज्ञानमनतिक्रम्य ज्ञानाभावाश्रयोऽहमिति तव (नैयायिकस्य) मते प्रयोगापत्तिर्दुर्वारा।

मन्मते तु पूर्वकालिकज्ञानस्यैतत्कालिकज्ञानस्य चावरणभङ्गविशिष्टतया अनतिक्रमसद्भावात् 'यथापूर्वं जानामि' इत्येव व्यवहारः। ननु शाब्दिकनयेऽपि असतो घटस्य फलाश्रयत्वाभावात्कथं कर्मत्वमिति चेन्न, यथा नैयायिकनये घटस्यासत्त्वेऽपि विषयतासम्बन्धेन ज्ञानाश्रयत्वमादाय कर्मत्वं तथाऽस्मन्नयेऽपि वक्तुं शक्यत्वात्। व्यवहारानुरोधेन विषयतासम्बन्धेनावरणभङ्गातिरिक्तफलं प्रत्येव सत आश्रयस्य कर्मत्वप्रयोज-

दर्पणव्याख्या

त्पत्तिरूपफलार्थकत्वस्य प्रागुपपादनाद्यार्थासङ्गतिरिति भावः। ❀ धात्वर्थत्वात् ❀ इत्युक्त्या ज्ञः केवलपदार्थकत्वे घटादीनां कर्मत्वानुपपत्तिरपि दोषत्वेन ध्वन्यते। ❀ आवरणभङ्गेति ❀ प्राचीनमतानुसारेणेदम्। निष्कृष्टमते तु ज्ञानरूपफलस्य विषयतया घटादौ सत्त्वात्कर्मतेति बोध्यम्। नचाकर्मकताऽऽपत्तिः, फलतावच्छेदकसम्बन्धेन सामानाधिकरण्याभावात्। नैयायिकमते रेवाद्यस्थले यथा घटादीनां कर्मत्वं तथोपपादितं धात्वर्थनिरूपणावसरे।

ननु विद्यमानघटे ज्ञानजन्यावरणभङ्गस्य सम्भवेऽपि भाविविनष्टघटे निराश्रयस्य तस्यासम्भवेन तस्य कर्मत्वानुपपत्तिरत आह—❀ अतीतानागतेति ❀। तथाऽऽश्रयताङ्गीकारे युक्तिमाह—❀ अन्यथेति ❀ तथावरणभङ्गास्वीकारे इत्यर्थः। ❀ यथापूर्वमिति ❀ जानातिक्रियाविशेषणम्। पदार्थानतिवृत्तावव्ययीभावः। पूर्वमनतिक्रम्येत्यर्थः। पूर्वज्ञानानतिक्रमो यस्मिंस्तदिति यावत्। घटस्य विद्यमानतादशायां तत्कालिकज्ञानस्य तद्घटे आवरणभङ्गजनकत्वेऽप्यतीतदशायामानुभविकज्ञानस्य

अतीतादेराश्रयता च विषयतया ज्ञानाश्रयतया नैयायिकानामिव सत्कार्य्यवादसिद्धान्ताद्वोपपद्यते इति । उक्तञ्च—

तिरोभावाभ्युपगमे भावानां सैव नास्तिता ।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते ॥ इति ।

प्रभा

कत्वात् । शास्त्रपुराणादिजन्यज्ञानानन्तरम् 'अतीतं रामं भविष्यन्तं कल्किनञ्च जानामि' इत्यनुव्यवसायानुरोधेन समानकालिकयोरेवाधाराधेय इति नियमे विषयतासम्बन्धस्य यत्राधारतावच्छेदकत्वं तद्विषयातिरिक्तत्वेन सङ्कोच इत्याह—अतीतादेराश्रयता चेति । तथाचानुभवानुरोधाद्विभिन्नकालिकस्यापि घटादेरावरणभङ्गाश्रयत्वं कल्प्यते इति भावः । साङ्ख्यमतानुसारेणाह—सत्कार्येति—कारणे सूक्ष्मरूपेण स्थितस्य सत एव घटादेर्दण्डचक्रादिसामग्रीसमवधानेन स्थूलरूपेणाभिव्यज्यते । सर्वथा असत एवोत्पत्तौ तु सर्वत्र सर्वमुत्पद्येतेति भावः । स्थूलरूपेण स्थितस्य स्वकारणे सूक्ष्मरूपेण स्थितिरेव विनाश साङ्ख्यानामिति सत्कार्यवादः ।

ननु नाशस्यासत्त्वात्मकतया कथं सत्कार्यवाद इति चेत्ाह—तिरोभावेति—अयम्भावः—अभावो नाम न भावाद्व्यतिरिच्यते, किन्तु सत्तैव तिरोभूय स्वकारणेषु शक्तिरूपतया स्थिता वस्तूनां नाश इत्युच्यते । 'सैव तिरोभावावस्था साधनसम्पर्कात् क्रमवत्त्वेन प्रतीयमाना नश्यती' इति व्यवह्रियत इति । तथाच सूक्ष्मरूपेण स्थितस्य घटस्य भूतभविष्यत्काले आवरणभङ्गरूपफलस्याऽऽश्रयतेति न दोषः । अत एव 'घटो जायते' 'घटं करोमि' इत्याद्युत्पत्तिम्प्रति घटस्य कर्तृत्वादिकारकत्वञ्चोपपद्यते । अन्यथाऽसतस्तदनुपपत्तिरेव । साङ्ख्यमते इत्युक्तमपि प्रमाणयति—तिरोभावेति—दण्डाभिघातादिरूपतिरोभावकसामग्रीसमवधाने भावानाम्=पदार्थानां सैव=तिरोभाव एव नास्तितेति—विधेयानुरोधेन स्त्रीलिङ्गनिर्देशः । नास्तिता='नष्ट' इतिव्यवहारविषयता । तिरोभावकसामग्र्याः क्रमेण समवधानकाले 'नश्यति' इति व्यवहारः । अभिव्यक्तेः प्राक् सूक्ष्मरूपेण स्थितौ 'नङ्क्ष्यति' इति भविष्यत्त्वेन व्यवहारः । वस्तुतस्तु बौद्धपक्षमादाय आश्रयत्वादि सर्वमुपपन्नमेव । सूक्ष्मावस्थातः प्रच्युतोऽपि अभिव्यक्तिमप्राप्तो 'जायते' इत्युच्यते । यदा तु सम्यगभिव्यक्तिस्तदा 'अस्ति' इतिव्यवहारः ।

दर्पणव्याख्या

तदजनकत्वेन पूर्वातिक्रमस्य सत्त्वात् पूर्वानतिक्रान्तज्ञानाभावस्य विषयस्याबाधात्तादृशप्रयोगस्य प्रामाण्यापत्तेरित्यर्थः । अतीतघटे आधुनिकज्ञानेनावरणभङ्गोत्पादाभ्युपगमे तु तेन पूर्वज्ञानानतिक्रमात् तदभावस्य बाधाद्भवति तस्याप्रामाण्यमिति भावः ।

ननु विनष्टे घटे वास्तवतदाश्रयतैव कथमत आह—❀ अतीतादेरिति ❀ आदिना भाविपरिग्रहः । ❀ नैयायिकानामिवेति ❀ यथाऽनुभवानुरोधेन तस्मिन् विषयतया ज्ञानाश्रयताङ्गीकारस्तेषां तथास्माकमपीति भावः । नन्वतीतो घटो ज्ञानविषय इति प्रतीतेरस्तु नाम तादृशघटस्य विषयतया ज्ञानाश्रयता, आवरणभङ्गाश्रयतायान्तु न तथा साधकोपलब्धिरत आह—❀ सत्कार्य्येति ❀ । तमेव दर्शयति—❀ उक्तञ्चेति ❀ "सदेव सोम्येदमग्र आसीत्" इति श्रुतेः कार्य्यजातं सूक्ष्मरूपेण प्रागवस्थितमेव । परमतेः जनकत्वेनाभिमतसामग्रीसमवधानात्तु तदभिव्यक्तिर्भवति । कारणे सूक्ष्मरूपेणावस्थानमेव तत्प्रागभावः । तस्यामेवावस्थायां स भविष्यतीति व्यवह्रियते । तत प्रच्युतमभिव्यक्तिलक्षणं धर्ममप्राप्तं जायत इति प्राप्ताभिव्यक्तिस्त्वस्तीति ।

ननु सर्वदैव सति तस्मिन् कथं नास्ति नश्यतीति व्यवहारोऽत आह—❀ तिरोभावाभ्युपगम इति ❀ तिरोभावाभिव्यञ्जकसामग्र्या तिरोभावेऽभिव्यञ्जिते सति, 'नास्ति' 'नष्टः' 'इति व्यवहारः । लब्धक्रमायान्तु तस्यां नश्यतीति सत्कार्यवादसिद्धान्तः । प्रकृते घटस्य तिरोधानेऽपि सूक्ष्मरूपेण सत्त्वात्तत्रावरणभङ्गरूपफलाश्रयत्वं सुलभमिति भावः । उक्तनिष्कृष्ट

ननु 'चैत्रो ग्रामं गच्छति' इत्यत्र ग्रामस्येव चैत्रस्यापि क्रियाजन्यग्रामसंयोगरूपफलाश्रयत्वात् कर्मताऽऽपत्तौ 'चैत्रश्चैत्रं गच्छति' इत्यापत्तिः, प्रयागतः काशीं गच्छति चैत्रे 'प्रयागं गच्छति' इत्यापत्तिश्च, क्रियाजन्यसंयोगस्य काश्यामिव विभागस्य प्रयागेऽपि सत्त्वात्, इति चेन्न, ग्रामस्येव चैत्रस्यापि फलाऽऽश्रयत्वेऽपि तदीयकर्तृसंज्ञया कर्मसंज्ञाया बाधेन 'चैत्रश्चैत्रम्' इति प्रयोगासम्भवात्, द्वितीयोत्पत्तौ संज्ञाया एव नियामकत्वात्। अन्यथा 'गमयति कृष्णं गोकुलम्' इत्यत्रेव 'पाचयति कृष्णेन' इत्यत्रापि कृष्णपदाद् द्वितीयाऽऽपत्तेः।

शाब्दबोधः 'चैत्रश्चैत्रम्' इत्यत्र स्यादिति चेन्न, तथाव्युत्पन्नानामिष्टाऽऽपत्तेः। उच्यतां वा 'प्रकारता·

प्रभा

चैत्रश्चैत्रमिति—चैत्रकर्तृकश्चैत्रनिष्ठसंयोगानुकूलो वर्तमानो व्यापार इत्येकस्मादेव चैत्रपदात् स्यात्। 'चैत्रश्चैत्रम्' इति बोधकारः। यद्वा कर्तृसंज्ञया कर्मसंज्ञाया बाध इति अजानन्नाह—चैत्रश्चैत्रमिति। अत एव वक्ष्यमाणप्रयोगापत्तिरित्युक्तिः सङ्गच्छते। गच्छति चैत्र इति—गच्छतिपदं सप्तम्यन्तम्। संयोगस्येति—एकस्या एव गमिक्रियायाः संयोगो विभागश्च फलमित्यर्थः। प्रयागेऽपीति—फले धात्वर्थविशेषणानिवेशाभिप्रायेणेदम्। विभागरूपफलाश्रयत्वात्प्रयागस्य कर्मत्वापत्तिरिति भावः। बाधेनेति—अस्य परत्वादिति शेषः। ननु कर्तृसंज्ञया कर्मसंज्ञाया बाधेऽपि वस्तुतः कर्मत्वलक्षणाक्रान्तत्वाद् द्वितीया स्यादत आह—द्वितीयोत्पत्तावियिति। अन्यथा = संज्ञाया अभावेऽपि कर्मत्वलक्षणसत्तामात्रेण द्वितीयोत्पत्तौ। द्वितीयापत्तेरिति—णिजर्थव्यापारे विशेषणीभूतविक्लित्त्यनुकूलव्यापाररूपफलस्य कृष्णे सत्त्वादिति भावः। द्वितीयाया. संज्ञया नियम्यत्वे तु 'गतिबुद्धि' इति सूत्रस्य नियमार्थतया पचत्यादियोगे फलाश्रयत्वेऽपि कर्मसंज्ञाया अभावेन न द्वितीयापत्तिरिति भावः। ननु णिजन्तभिन्नधात्वर्थव्यापारप्रयोज्यफलाश्रयस्यैव द्वितीयोत्पत्तौ नियामकत्वाभ्युपगमान्नैयमापत्तिरित्यत आह—शाब्दबोध इति—चैत्रकर्तृकं चैत्रकर्मकं गमनमित्याकारकशाब्दबोध इत्यर्थः। इत्यत्रेति—'चैत्रश्चैत्रं गच्छति' इत्यत्रेत्यर्थः। ननु कर्तृसंज्ञया कर्मसंज्ञाबाधे इदं वाक्यमसङ्गतमिति चेन्न, अत्र कर्तुः तादृशफलशालित्वपक्षे चैत्रश्चैत्रमित्याकारकः शाब्दबोध इत्यर्थात्।

ननु विषयाबाधसत्त्वात् चैत्रनिष्ठसंयोगानुकूलश्चैत्रनिष्ठो वर्तमानकालावच्छिन्नो व्यापार इति बोधः स्यादत आह—तथाव्युत्पन्नानामिति—व्युत्पत्तिः = कार्यकारणभावज्ञानम्; 'समवायसम्बन्धेन धात्वर्थफलनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोधम्प्रति आश्रयोपस्थितिः कारणम्' इति ज्ञानवतामित्यर्थः। तादृशव्युत्पत्त्याद्युक्तशाब्दबोधस्याननुभवादिष्टापत्तेरयुक्तत्वादाह—उच्यतां वेति। प्रकारतेति—'चैत्रनिष्ठसंयोगानुकूलो

दर्पणव्याख्या

कर्मत्वं विदादीकर्तुमाशङ्कते—ॐ नन्विति ॐ। ॐ विभागस्य ॐ इत्यस्य क्रियाजन्येत्यादि। ननु कर्मसंज्ञायाः परया कर्तृसंज्ञया बाधनेऽपि वास्तवकर्मत्वस्य तत्राबाधात् स्यादेव तादृशप्रयोगोऽत आह—ॐ द्वितीयोत्पत्ताविति ॐ इदञ्च प्रकृताभिप्रायेण। कारकविभक्त्युत्पत्तिमात्रस्यैव तन्नियम्यत्वात्। ॐ अन्यथेति ॐ संज्ञाया अनियामकत्वे इत्यर्थः।

ॐ द्वितीयाऽऽपत्तेरिति ॐ 'गमयति कृष्णं गोकुलम्' इत्यत्र णिजर्थव्यापारजन्यसंयोगानुकूलव्यापाररूपधात्वर्थफलाश्रयत्वस्येव, 'पाचयति कृष्णेनौदनम्' इत्यत्रापि तादृशव्यापारजन्यविक्लित्त्यनुकूलव्यापाराश्रयत्वस्य तत्र सत्त्वादिति भावः। ॐ शाब्दबोध इति ॐ चैत्रनिष्ठसंयोगानुकूलश्चैत्रकर्तृको वर्तमानो व्यापार इति शाब्दबोध इत्यर्थः, तद्विषयस्याबाधादिति भावः। ॐ तथाव्युत्पन्नानामिति ॐ सामान्यतो धात्वर्थफलविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोधे आश्रयोपस्थितेर्हेतुत्ववादिनामित्यर्थः। बोधस्य स्वस्वव्युत्पत्त्यनुसारित्वादिति भावः।

चैत्रकर्मकचैत्रकर्तृकव्यापारशाब्दबोधस्य 'चैत्रो ग्रामं गच्छति' इत्यादावननुभवादाह—ॐ उच्यतां वेति ॐ

द्वितीयदोषवारणाय धात्वर्थताऽवच्छेदकत्वं फले विशेषणं द्वितीयावाच्यमित्युपाददते। परसमवेतत्वं धात्वर्थक्रियायामन्वेति, तथैव कार्यकारणभावान्तरकल्पनात्। परत्वञ्च द्वितीयया स्वप्रकृत्यर्थापेक्षया बोध्यते।

प्रभा

त्वात्तत्समवेतव्यापारजन्यसंयोगरूपफलाश्रयस्य न कर्मत्वम्। ग्रामप्रतियोगिकभेदवच्चैत्रसमवेतव्यापारजन्यफलाश्रयत्वाद् ग्रामस्य कर्मत्वं सिध्यति। द्वितीयेति—'प्रयागात्काशीं गच्छति' इत्यत्रेत्यर्थः।

धात्वर्थताऽवच्छेदकेति—धात्वर्थता = धातुजन्योपस्थितीयविशेष्यता तदवच्छेदकेत्यर्थः। धात्वर्थविशेष्यविशेषणमिति यावत्। तथाच संयोगानुकूलव्यापारस्य गम्यर्थत्वाद् व्यापारनिष्ठविशेष्यताया अवच्छेदकत्वं विशेषणीभूतसंयोगे एवास्ति, नतु विभागे, विभागस्य धातुवाच्यत्वाभावात्। द्वितीयावाच्यमिति—परसमवेतत्वम्, धात्वर्थताऽवच्छेदकत्वञ्च द्वितीयार्थ इत्यर्थः। तन्मते द्वितीयायाः कर्मत्वे विधानाद् धात्वर्थतावच्छेदकफलशालित्वस्यैव कर्मतया फलस्य धातुलभ्यत्वेन 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायेनाऽऽधेयत्वमात्रं द्वितीयार्थः। तथाच संयोगरूपे धात्वर्थताऽवच्छेदके 'प्रयाग'निरूपिताऽऽधेयत्वाभावान्न द्वितीयावाच्यत्वं तदाधेयत्वस्येति भावः। तत्र परसमवेतत्वस्य स्वरूपसम्बन्धेन धात्वर्थव्यापारेऽन्वयः। धात्वर्थतावच्छेदकत्वस्य च स्वरूपसम्बन्धेनैव धात्वर्थफलेऽन्वयः।

ननु परसमवेतत्वस्य विनिगमनाविरहात् फलेऽन्वये चैत्रभिन्नग्रामसमवेतफलाश्रयत्वाद्दोषतादवस्थ्यमत आह—धात्वर्थक्रियायामिति। कार्यकारणभावेति—'स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन परसमवेतत्वप्रकारकबोधम्प्रति भावनात्वावच्छिन्नविशेष्यतासम्बन्धेन धातुजन्यभावनोपस्थितिः कारणम्' इति कार्यकारणभावान्तरमित्यर्थः। ननु परसमवेतत्वम् = भेदाश्रयसमवेतत्वम्। तच्च यत्किञ्चिद्भेदस्य सर्वत्रैव सत्त्वात् केवलान्वयि। तथा 'मैत्रात्परश्चैत्रः' इति चैत्ररूपपरसमवेता या क्रिया तज्जन्यधात्वर्थतावच्छेदकसंयोगरूपफलाश्रयत्वाच्चैत्रस्य कर्मत्वापत्तिस्तदवस्थैवेत्यत आह—परत्वमिति—द्वितीयया स्वप्रकृत्यर्थापेक्षया यत्परत्वं तदेव बोध्यत इत्यर्थः। द्वितीययेति—इदमुपलक्षणं कर्मार्थकप्रत्ययस्य। तेन 'चैत्रश्चैत्राय गच्छति' 'चैत्रेण चैत्रस्य गमनम्' इत्याद्यापत्तेः परिहारः। स्वप्रकृत्यर्थापेक्षया—स्वप्रकृतित्वेन विवक्षितार्थापेक्षयेत्यर्थः। तेन नान्योन्याश्रयः।

दर्पणव्याख्या

प्रयोगापत्तिरूपेत्यर्थः। ❀ द्वितीयेति ❀ प्रयागात् काशीं गच्छति चैत्रे 'प्रयागं गच्छति' इति प्रयोगापत्तिरूपेत्यर्थः। ❀ धात्वर्थताऽवच्छेदकत्वमिति ❀ फलावच्छिन्नव्यापारस्य धात्वर्थत्वमितिवादिनां मतेनेदम्। तथाच तन्मते धात्वर्थताऽवच्छेदकफलशालित्वं कर्मत्वं द्वितीयार्थः पर्यवस्यति। ❀ कार्य्यकारणभावेति ❀ द्वितीयार्थपरसमवेतत्वस्य स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति भावनात्वावच्छिन्नविशेष्यतासम्बन्धेन धातुजन्योपस्थितेर्हेतुत्वान्तरकल्पनादित्यर्थः।

ननु भेदस्य केवलान्वयितया सर्वस्यैव परत्वेन चैत्रक्रियाया अपि मैत्रान्यसमवेतत्वात् तद्वाच्यताङ्गीकारेऽप्युक्तदोषतादवस्थ्यमत आह—❀ परत्वञ्चेति ❀ व्युत्पत्तिवैचित्र्यात्तु पदार्थैकदेशेऽपि परत्वे प्रतियोगितया प्रकृत्यर्थान्वयः, प्रकृते चैत्रसंयोगजनकक्रियायां चैत्रभिन्नसमवेतत्वबाधाच्च 'चैत्रश्चैत्रं गच्छति' इति प्रयोगः। यत्र चोभयकर्मभ्यां मल्लयोः संयोगस्तत्र मल्लान्तरक्रियाया स्वनिष्ठसंयोगजनिकायाः स्वभिन्नसमवेतत्वेऽपि तादृशक्रियायाः स्वस्मिन् बाधात् 'मल्लः स्वं गच्छति' इति प्रयोगः, स्वनिष्ठसंयोगजनकस्वक्रियायां स्वभिन्नसमवेतत्वस्यायोग्यत्वेनाभानेऽप्यबाधितसंयोगजनकत्वं विपरीकृत्य 'अभिचरन्

## प्रभा

यद्वा—भेदः, आधेयत्वञ्च कर्मप्रत्ययार्थः। तत्र भेदे प्रकृत्यर्थस्य पूर्ववदेवान्वयः। भेदस्य सामानाधिकरण्यसम्बन्धेन व्यापारेऽन्वयः। आधेयत्वे च निरूपितत्वसम्बन्धेन प्रकृत्यर्थस्य, आधेयत्वस्य च स्वरूपसम्बन्धेन संयोगेऽन्वयः। तथाच 'ग्रामं गच्छति चैत्रः' इत्यतः ग्रामवृत्तिसंयोगजनको ग्रामप्रतियोगिकभेदसमानाधिकरणो यो व्यापारस्तज्जनककृतिमांश्चैत्र इति बोधः। नचैवमपि 'चैत्रश्चैत्रं न गच्छति' इत्यस्याप्रामाण्यापत्तिः; चैत्रनिष्ठः चैत्रभिन्नसमवेतक्रियाजन्यसंयोगजनको यो व्यापारस्तस्याप्रसिद्धत्वादिति वाच्यम्, नञ्समभिव्याहारे धात्वर्थव्यापारे चैत्रवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य भानोपगमेनादोषात्। चैत्रवृत्तिभेदप्रतियोगितावच्छेदकत्वञ्च मैत्रत्वादौ प्रसिद्धमेव। तथाच 'चैत्रश्चैत्रं न गच्छति' इत्यतः चैत्रवृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववान् यः चैत्रवृत्तिसंयोगानुकूलो व्यापारस्तज्जनककृतिमांश्चैत्र इति बोध इत्यन्यत्र विस्तरः।

## दर्पणव्याख्या

एवञ्च 'चैत्रो ग्रामं गच्छति' इत्यत्र ग्रामवृत्तिसंयोगजनिका ग्रामवृत्तिभेदप्रतियोगितावच्छेदिका च या क्रिया तदनुकूलकृतिमांश्चैत्र इति नैयायिकमतपरिष्कारः।

अत्र प्रत्यवतिष्ठन्ते— नञर्थप्रसज्यप्रतिषेधस्य प्रतियोगितया क्रियाऽन्वयित्वमिति व्यवस्थापनात् कथं 'चैत्रो ग्रामं न गच्छति' इत्यादौ नञः संयोगजनकत्वाभावबोधकत्वम्। उक्तञ्च—

पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्।
प्रसज्यप्रतिषेधस्तु क्रियया सह यत्र नञ्॥ इति।

यत्र नञर्थाभावः क्रियया = धात्वर्थव्यापारेण प्रतियोगितया सम्बद्धो भवतीत्युत्तरार्द्धार्थः। तस्मात् तिङन्ते नञ्समभिव्याहारे क्रियाप्रतियोगिकाभावबोध एव न्याय्यः, न तु क्रियायां फलाभावस्य विभक्त्यर्थाभावस्य वा प्रथमान्तार्थे वा तिङर्थाभावस्य, फलस्य कारणविरहादिति।

अत्र वदन्ति— यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नस्य येन संसर्गेण नञ्समभिव्याहारे प्रतीयते तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नस्य तत्संसर्गावच्छिन्नप्रतियोगिताकाभावो नञ्समभिव्याहारे बुध्यते इति सकललोकानुभवसिद्धोऽयमर्थः। 'प्रतियोग्यभावान्वयी तुल्ययोगक्षेमौ' इति वदता दीधितिकृतोपनिबद्धः। एवञ्च चैत्रो ग्रामं गच्छतीत्यत्र नञ्समभिव्याहारे क्रियायां द्वितीयाऽर्थवृत्तित्वविशिष्टसंयोगजनकत्वस्य बोधात् तत्समभिव्याहारे तत्र तदभावस्य बोधो जायमानः केन वारणीयः। न च कारणाभावः, नञर्थाभावप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे प्रतियोग्यन्वययोग्यार्थोपस्थितेर्हेतुतया तस्याश्च क्रियायां सत्त्वात्। ननु नञर्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन बोधे धातुजन्यभावनोपस्थितेर्हेतुता, 'चैत्रश्चैत्रं न गच्छति' इत्यादिवाक्याप्रामाण्यापत्तेः, चैत्रकर्मकचैत्रकर्तृकगमनक्रियारूपप्रतियोगिनोऽप्रसिद्ध्या नञा तदभावस्य बोधयितुमशक्यत्वात्।

मन्मते तु चैत्रकर्तृकक्रियायां चैत्रवृत्तिसंयोगजनकत्वेऽपि चैत्रवृत्तिभेदप्रतियोगितावच्छेदकत्वस्य तस्यामसत्त्वेन नञा तदभावस्य प्रत्यायनात् प्रामाण्योपपत्तेः। अत एव परसमवेतत्वस्य द्वितीयार्थत्वमप्यावश्यकम्। न च त्वन्मतेऽपि चैत्रस्याकर्मत्वात् कथं तद्वाचकाद् द्वितीयोपपत्तिस्तत्स्थले इति वाच्यम्, मैत्रो गच्छति चैत्रम् न चैत्र इत्यत्र मैत्रक्रियाऽवच्छिन्नप्रतियोगिताकभेदवत्त्वतदीयसंयोगाश्रयत्वयोरुभयोर्द्वितीयार्थयोर्बाधेन तदुपपत्तेः। अधिकमग्रे वक्ष्यते।

तस्माच्चैत्रो गच्छतीत्यादौ चैत्रो न कर्मेति व्यवहाराच्च, सर्वथा कर्तृव्यापृतधात्वर्थव्यापारप्रयोज्यतद्व्यधिकरणधात्वर्थकफलाऽऽश्रयत्वं कर्मत्वं निर्वाच्यम्। तत्र फलव्यापारयोर्धातुलभ्यत्वेऽपि वृत्तित्वे भेदप्रतियोगितावच्छेदकत्वपर्यवसिते वैयधिकरण्ये च द्वितीयादेः शक्तिरनन्यलभ्यत्वात् स्वीकरणीयेति; प्रकृतमनुसरामः।

तथाच 'चैत्रस्तण्डुलं पचति' इत्यादौ तण्डुलान्यसमवेतव्यापारजन्यधात्वर्थताऽवच्छेदकविक्लित्ति-
शालित्वात् तण्डुलस्य कर्म्मता । शाब्दबोधस्तु तण्डुलसमवेतधात्वर्थतावच्छेदकविक्लित्त्यनुकूलतण्डु-
लान्यसमवेतक्रियाजनककृतिमांश्चैत्र इत्याहुः,

तन्न रोचयामहे, परसमवेतत्वादेर्गौरवेणावाच्यत्वात् । अतिप्रसङ्गः किम् द्वितीयायाः, शाब्दबो-
धस्य वा ? नाद्यः, तावद्वाच्यकथनेऽपि तत्तादवस्थ्यात्, 'गमयति कृष्णं गोकुलम्' इतिवत् 'पाचयति
कृष्णं गोपः' इति द्वितीयाऽऽपत्तेः, 'तण्डुलं पचति चैत्रः' इतिवत् 'तण्डुलं पच्यते स्वयमेव' इत्यापत्तेश्च,

प्रभा

'चैत्रेण ग्रामो गम्यते' इत्यतश्च चैत्राऽऽश्रयको ग्रामप्रतियोगिकभेदसमानाधिकरणो यो व्यापारस्तत्प्रयो-
ज्यसंयोगाश्रयो ग्राम इति बोधः । इत्थञ्च न 'चैत्रश्चैत्रं गच्छति' इत्यापत्तिः । नापि 'मल्लो मल्लं गच्छति'
'चैत्रो द्रव्यं गच्छति' इत्यादेरसिद्धिः । तथाच 'द्वितीयाप्रकृतित्वेन विवक्षितं यत्पदं तदर्थप्रतियोगिकभेदा-
धिकरणवृत्तिक्रियाजन्यधात्वर्थतावच्छेदकफलाश्रयत्वं कर्मत्वम्' नैयायिकमते फलितम् इत्याशयेनाह—तथाच
चैत्र इति । शाब्दबोध इति—अत्र धात्वर्थतावच्छेदकेत्युक्तिर्विक्लित्तेर्धातुशक्यत्वद्योतनाय, ननु तेन रूपेण
शाब्दबोधे भानम्, अननुभवाद् गौरवाच्च । तन्नेति—तत् = परसमवेतत्वादेर्द्वितीयावाच्यत्वम् । रोचयामह
इति—अस्य तार्किकेभ्य इति, वयमिति च शेषः । तावद्वाच्येति—तावान् = परसमवेतत्वादिघटितो यो
वाच्यः = शक्योऽर्थः तस्य कथनेऽपि = कर्मपदेनोक्तावपि । तदिति—तस्य = अतिप्रसङ्गादेस्तादवस्थ्यात् =
तथैव स्थितेः । पूर्वोक्तातिप्रसङ्गस्योक्तरीत्या वारितत्वादतिप्रसङ्गान्तरमाह—पाचयति कृष्णमिति—प्रयोज्ये
कृष्णे स्वभिन्न ( कृष्णभिन्न ) प्रयोजक (गोप) समवेता या संयोगानुकूलव्यापारानुकूला प्रयतनारूपा णिजन्त-
धात्वर्थक्रिया तज्जन्यधात्वर्थताऽवच्छेदकीभूतं यद् गम्यर्थव्यापाररूपं फलं तच्छालित्वरूपकर्मत्वसत्त्वाद्
द्वितीयाऽऽपत्तिरित्यर्थः ।

ननु 'गतिबुद्धि' इत्यादिसूत्रोपात्तातिरिक्तधातुप्रकृतिकणिज्विषये प्रयोज्यस्य कर्मत्वाविवक्षाया बोधना-
द्वायमतिप्रसङ्ग इत्यत आह—तण्डुलं पच्यत इति—'तण्डुलम्' इत्यापाद्यमानद्वितीयान्तपदघटितयादृच्छिक-
वाक्यमेतत्, ननु तादृशं पदं साधु, वैयाकरणनये कर्मणः कर्तृत्वविवक्षया धात्वर्थव्यापाराश्रयत्वेन परत्वात्
कर्तरि लटः सत्त्वेऽपि भवत्येव, यगादिकन्तु कर्मणः कर्तृत्वविवक्षयाऽत्र
कर्तृसंज्ञया कर्मसंज्ञाया बाधात् ।

दर्पणव्याख्या

❀ विक्लित्त्यनुकूलेति ❀ इदं तण्डुलान्यसमवेतक्रियाऽन्वयि ।
यथाश्रुतं दूषयति—❀ तन्न रोचयामहे ❀ इत्यादिना । ननु परसमवेतत्वस्य द्वितीयार्थत्वं विनाऽतिप्रसङ्गानिरासाद्
गौरवं न दोषायेत्यत आह—❀ अतिप्रसङ्ग- किमिति ❀ । ❀ तावदिति ❀ परसमवेतक्रियाजन्यधात्वर्थताऽवच्छेदकफल-
शालित्वरूपकर्मत्वस्य द्वितीयार्थत्वस्वीकारेऽपि द्वितीयाऽतिप्रसङ्गस्य तादवस्थ्यादित्यर्थः । तमेवाह—❀ गमयति कृष्णमित्या-
दिना ❀ । ❀ द्वितीयापत्तेरिति ❀ 'गमयति गोकुलं कृष्णम्' इत्यत्र णिजर्थनि-
रूपितनिरुक्तकर्मत्वस्यैव द्वितीयोत्पत्त्यनुकूलकर्मत्वस्य तन्मते, पचिप्रकृतिकणिजर्थकर्मत्वस्य कृष्णे सत्त्वेन पाचयत्यादिप्रयोगेऽपि प्रयोज्यकर्तृवाचकाद् द्वितीयास्तेन द्वितीयापादकत्वेनेति भावः ।
संज्ञाया एव द्वितीयोत्पत्तौ प्रयोजकताऽङ्गीकरणीया । एवञ्च तत एवातिप्रसङ्गभङ्गे कृत तत्र गम्यर्थकातिरिक्तणिजन्तधातुयोगे
ननु तादृशकर्मत्वमेव द्वितीयानियामकम् । निरुक्तस्यैव कृष्णे तत्सत्त्वेऽप्युपात्त विवक्षाया एव विभक्त्युत्पत्तौ नियामकताया वक्ष्यमाणत्वादत आह—
"गतिबुद्धि" इति सूत्रेण तदविवक्षाबोधनाच्चोक्तापत्तिः, तण्डुले भवदुक्तद्वितीयानियामककर्मत्वस्य सत्त्वात्तदापत्तिः, मन्मते तु कर्तृसंज्ञया कर्मसंज्ञाया
❀ तण्डुलं पच्यत इति ❀

विक्लित्त्यनुकूलतण्डुलान्यसमवेताग्निसंयोगरूपधात्वर्थाऽऽश्रयत्वात्। शाब्दबोधातिप्रसङ्गोऽप्युक्तरीत्यैव निरस्तः, परसमवेतत्वस्य शक्यत्वेऽपि परत्वस्य, परसमवेतत्वस्य च इष्टान्वयलाभायानेकशः

## प्रभा

"कर्मवत्कर्मणा तुल्यक्रियः" इत्यतिदेशेन कर्मप्रत्ययप्रयोज्यकार्यस्यातिदेशात्। नचातिदेशबलाद् द्वितीयाऽपि स्यादिति वाच्यम्, एकगतानेकशक्त्योर्मध्ये एकया उक्तत्वे उभयोरप्युक्तत्वमिति सिद्धान्तात्। तदुक्तम्—

"प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥ १॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते"॥ २॥ इति।

नच तण्डुले परसमवेतक्रियाजन्यफलाभावान्न द्वितीयेति वाच्यम्, अग्निसंयोगस्यापि धात्वर्थतया तण्डुलभिन्नकाष्ठादस्याग्निसंयोगरूपक्रियाजन्यफलाश्रयतया द्वितीयापत्तेः सुवचत्वात्। धात्वर्थाश्रयत्वादिति—णिजन्तधात्वर्थक्रियाजन्यपच्धात्वर्थविक्लित्त्यनुकूलव्यापाररूपफलाश्रयत्वादित्यर्थः। धात्वर्थाश्रयत्वादित्युक्त्या कर्तृसंज्ञाया अवस्थितिः सूचिता। 'अग्निसंयोगो धात्वर्थतया विवक्ष्यते' इति वक्ष्यमाणाभिप्रायेणेदं दूषणम्। कर्मकर्तरि फलमात्रस्य; विक्लित्त्यनुकूलकर्ममात्रवृत्तिव्यापारस्य वा धात्वर्थत्वमिति मते नेदं दूषणम्, तार्किकमते उभयत्रापि तण्डुलनिष्ठस्य फलमात्रार्थस्य, तज्जनकतण्डुलमात्रवृत्तिव्यापारस्य वा धात्वर्थतावच्छेदकफलत्वाभावात्।

तण्डुलान्यसमवेतेति—तण्डुलान्यकाष्ठसमवेतेत्यर्थः। उक्तरीत्यैवेति—विपरीतव्युत्पत्तिमता तथा बोधस्येष्टापत्तिरीत्येत्यर्थः। यदि तु नेष्यते शाब्दबोधस्तदा 'द्वितीयाप्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधम्प्रति विशेष्यतासम्बन्धेन धात्वर्थव्यापारानधिकरणाश्रयोपस्थितिः सहकारिकारणमिति रीत्येत्यर्थः। प्रकृते तण्डुलस्य कर्तृत्वापपत्तये धात्वर्थव्यापाराश्रयत्वस्यावश्यकतयोक्तापत्तिर्निरसनीया। ननु कर्मकर्तृप्रत्ययस्थले कर्मण एव कर्तृत्वेन फलव्यधिकरणव्यापारस्याविवक्षा, फलसमानाधिकरणव्यापारस्य च विवक्षाऽभिप्रेता "फलव्यापारयोर्धातुः" इत्युक्त्या फलं व्यापारश्च पृथगेव धात्वर्थस्तथापि फलस्य धात्वर्थतावच्छेदकत्वाभावान्नोक्तदोष इत्यत आह—परसमवेतत्वस्येति। परत्वम्—'द्वितीयाप्रकृत्यर्थप्रतियोगिकमेव नान्यप्रतियोगिकम्'।

इष्टान्वयेति—धात्वर्थताऽवच्छेदकस्य फले, परसमवेतत्वस्य धात्वर्थक्रियायाम्, द्वितीयाप्रकृत्यर्थस्याऽऽधेयत्वे परत्वे चेष्टान्वयलाभायेत्यर्थः।

## दर्पणव्याख्या

धात्वर्थाश्रयत्वाभावात् तदापत्तिरिति भावः। तण्डुलान्यसमवेतेत्यनेन परसमवेतक्रियाजन्यत्वं विक्लित्तावस्तीति बोधितम्। धात्वर्थाश्रयत्वादित्यनेन कर्तृसंज्ञासत्त्वमावेद्यते। ❀ उक्तरीत्यैवेति ❀ तथाव्युत्पत्तिमानाभिप्रायानुसारेणैवेत्यर्थः। धात्वर्थव्यापारानधिकरणाश्रयोपस्थितिरूपहेत्वभावादिति भावः। ननु आत्मनेपदेऽप्युक्तप्रयोगापत्तिः, तत्र व्यापारत्वेनैव, फलस्य मानाधिकरणत्वेन तण्डुलस्य धात्वर्थतावच्छेदकफलशालित्वाभावात्, निष्कृष्टमयमन्नेऽपि व्यापारगतार्थोपस्थितिरीत्या फलस्य व्यापारतया स्वीकाराच्चेत्यतो दूषणान्तरमाह—❀ परसमवेतत्वस्येति ❀। ❀ इष्टान्वयेति ❀ इष्टस्य = प्रकृत्यर्थस्य प्रतियोगितासम्बन्धेन परसमवेतत्वस्यैकदेशे परत्वे परसमवेतत्वस्य चाभावन्वयानामन्वयस्य लाभाय = भानायेत्यर्थः। ❀ अनेकश इति ❀ प्रकृत्यर्थप्रकारकानेकशाब्दबुद्धिं प्रति द्वितीयार्थतया क्रियायामन्वयस्य लाभाय = भानायेत्यर्थः।

कार्य्यकारणभावाभ्युपगमे गौरवान्तरत्वादिति स्पष्टं भूषणे ।

एतच्च सप्तविधम्—

निर्वर्त्त्यञ्च विकार्य्यञ्च प्राप्यञ्चेति त्रिधा मतम् ।
तच्चेप्सिततमं कर्म्म चतुर्द्धाऽन्यत्तु कल्पितम् ॥
औदासीन्येन यत् प्राप्यं यच्च कर्त्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥

इति वाक्यपदीयात् ।

### प्रभा

कार्यकारणभावेति—'द्वितीयार्थधात्वर्थतावच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्द-
बुद्धित्वावच्छिन्नम्प्रति धातुजन्यफलोपस्थितिः कारणम्'; परसमवेतत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन
शाब्दबुद्धित्वावच्छिन्नम्प्रति क्रियात्वावच्छिन्नविशेष्यतासम्बन्धेन धातुजन्योपस्थितिः कारणम्'; द्वितीयाप्रकृत्य-
र्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति द्वितीयार्थाऽऽधेयत्वोपस्थितिः, द्वितीया-
र्थपरत्वोपस्थितिश्च कारणम्' इत्येव कार्यकारणभावकल्पने गौरवान्तरत्वादिति भावः ।

ननु शाब्दिकनयेऽपि द्वितीयार्थाऽऽश्रयस्य फले, फलस्य च व्यापारांशे प्रकारतया कार्यकारणभावत्रैविध्य
स्यावश्यकतया साम्यमेवेति चेन्न, भवन्मते ( नैयायिकमते )ऽपि द्वितीयार्थाऽऽधेयत्वस्य फले, तस्य च व्यापारे
प्रकारत्वमादाय कार्यकारणभावकल्पनया साम्येन पूर्वोक्तकार्यकारणभावाधिक्याक्षतेः ।

'विशेषज्ञानञ्च सामान्यज्ञानपूर्वकम्' इतिनियमेन सामान्यप्रकारकज्ञानस्य विशेषरूपेण जिज्ञासाहेतुत्वाद्वि-
शेषरूपेण ज्ञानेच्छायां प्रसङ्गसङ्गत्या कर्म विभजते—एतच्चेति—ईप्सितं कर्म निर्वर्त्यादिभेदेन त्रिधा । तदाह—
निर्वर्त्यमिति । तत् = क्रियाजन्यफलशालिकर्म द्विविधम्—ईप्सिततम् , अनीप्सिततमञ्च । ईप्सिततमं कर्म
निर्वर्त्यम् , विकार्यम् , प्राप्यञ्चेति त्रिधामतम् । अन्यत्तु = अनीप्सिततमम् कर्म । चातुर्विध्यमाह—
औदासीन्येनेति—औदासीन्येन प्राप्यम् = तृणादि । अनीप्सितम् = विषादि । संज्ञान्तरैः = अपादानादिभिः,
अनाख्यातम् = 'अकथितञ्च' इति सूत्रविहितम् । अन्यपूर्वकम् = 'अधिशीङ्' 'क्रुधद्रुहोः' इत्यादिसूत्रविहितम् ।

### दर्पणव्याख्या

नाधेयत्वोपस्थितेरिव तदधीनपरसमवेतत्वोपस्थितेः प्रकारतासम्बन्धेन, एवं परसमवेतत्वप्रकारकबुद्धिं प्रति धातुजन्योपस्थिते-
र्व्यापारत्वावच्छिन्नविशेष्यतासम्बन्धेन हेतुत्वकल्पने चातिगौरवादित्यर्थः । मन्मते तु फलप्रकारकशाब्दबोधहेतुनाऽव्या-
पारोपस्थितिविषयव्यापारांशे द्वितीयाप्रकृत्यर्थावृत्तित्ववैशिष्ट्यनिवेशेनैव नातिप्रसङ्ग इति भावः ।

ननु 'चैत्रो मैत्रश्च परस्परं गच्छतः' इत्यादौ धात्वर्थव्यापारस्य द्वितीयाप्रकृत्यर्थवृत्तित्वात् तत्र फलानन्वय प्रसङ्गोऽत
आह—❀ स्पष्टमिति ❀ तथाच द्वितीयाप्रकृत्यर्थावृत्तीत्यनेन द्वितीयाप्रकृत्यर्थवृत्तिभेदप्रतियोगितावच्छेदकत्वस्याविवक्षणात्
'परस्परं गच्छतः' इत्यादौ क्रियायाः परस्परावृत्तित्वबाधेऽपि परस्परनिष्ठभेदप्रतियोगितावच्छेदकत्वस्याबाधात् फलान्वयानुप
पत्तिरित्यादि तत्रोक्तमिति ।

इ[illegible] कर्मविभागमाह—❀ तच्चेति ❀ क्रियाजन्यफलाऽऽश्रयरूपं कर्मेत्यर्थः ।

यदसज्जायते सद्वा जन्मना यत्प्रकाशते ।
तन्निर्वर्त्यं विकार्यं तु द्वेधा कर्म्म व्यवस्थितम् ॥

प्रभा

निर्वर्त्यादीप्सितकर्मणो लक्षणमाह—यदसदिति—इदं नैयायिकमतेन, तैरसतः कार्य्यस्योत्पत्तिस्वीकारात् । सद्वेति—साङ्ख्यमतेनेदम्, तैः सत एव आविर्भाव-तिरोभावस्वीकारात् । जन्मना=आविर्भावकसामग्र्या । प्रकाशते=आविर्भवति । निर्वर्त्यमिति—निर्वर्त्यते=निष्पाद्यते यत्तन्निर्वर्त्यम् । एवञ्च 'यत्र विशेषप्रयोज्योत्पत्तिमत्त्वम्' निर्वर्त्यत्वं लब्धम् । यथा 'तण्डुलं पचति' इत्यत्र तण्डुलरूपं कर्म । नच 'तण्डुलान् ओदनं पचति' इत्यत्रौदनरूपविकार्येऽतिव्याप्तिः, प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति यत्रविशेषप्रयोज्योत्पत्तिमत्त्वस्य तल्लक्षणत्वात् । प्रकृते च ओदनस्य प्रकृतिवाचकतण्डुलपदसमभिव्याहृतौदनपदोपस्थाप्यत्वात् । तदुक्तं वाक्यपदीये—

"सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाऽऽश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते" ॥ इति ॥

'घटं करोति' इत्यत्र यस्य=घटस्य कर्मणो मृद्रूपा प्रकृतिः सत्यपि परिणामिनी नाश्रीयते=परिणामित्वेन यदा न विवक्ष्यते तदा घटस्य निर्वर्त्यत्वं प्रचक्षते । 'भस्म करोति' इत्यत्र यस्य भस्मरूपस्य कर्मणः प्रकृतिः काष्ठरूपा भस्मदशायामविद्यमाना एव यस्य=भस्मरूपस्य कर्मणः परिणामित्वेन नाश्रीयते=न विवक्ष्यते तदा अस्य निर्वर्त्यत्वमेव । एवञ्च प्रकृतेः परिणामित्वेनाविवक्षायां निर्वर्त्यत्वम्, परिणामित्वेन विवक्षायाञ्च विकार्य्यत्वम् इत्येकस्यापि कर्मणो विवक्षाभेदेनोभयं वक्तुं शक्यमिति भाव. । विकार्य्यमिति—कार्यकाले विद्यमानाऽविद्यमाना वा प्रकृतिः परिणामित्वेन विवक्ष्यते तदा कर्मणो विकार्य्यत्वम् ।

दर्पणव्याख्या

❀ यदसज्जायत इति ❀ असत्कार्य्यवादमवलम्ब्य । सद्वेत्यादि ॥ साङ्ख्यमतेन । प्रकाशत इत्यनन्तरम्—

"प्रकृतेस्तु विवक्षायां विकार्य्यं कैश्चिदन्यथा ।

तन्निर्वर्त्यम्" इत्येव वाक्यपदीयपाठः, अन्यथा सामान्यधर्मेण अलक्षितस्य विकार्य्यस्य विशेष्यरूपेण प्रदर्शनेऽर्थान्तरतापत्तेः । तदर्थस्तु कैश्चिद् प्रसिद्धैराचार्य्यैः प्रकृतिविवक्षायां निष्पाद्यं विकार्य्यमित्युच्यते । अन्यथा तदविवक्षायां तन्निष्पाद्यं निर्वर्त्यमिति तदर्थः । तत्र घटं करोतीत्यादौ सत्या अपि मृदादिप्रकृतेः परिणामित्वेनाविवक्षा । भस्म करोतीत्यादौ त्वसत्या एव तस्यास्तत्त्वेन सा ।

यद्यपि निर्वर्त्यते=निष्पाद्यते इति व्युत्पत्त्या निर्वर्त्यत्वं तण्डुलानोदनं पचतीत्यादावोदनादौ विकार्य्यकर्मण्यप्यस्ति तथापि प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति निष्पाद्यत्वरूपपारिभाषिकनिर्वर्त्यत्वस्य विवक्षणान्न दोषः ॥ तदुक्तम्—

सती वा विद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाऽऽश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥ इति ।

यस्य=विकृतिकर्मणः, नाश्रीयते=न प्रयुज्यते, न विवक्ष्यत इति यावत् । अन्यत्=उक्तार्थम् । ❀ विकार्य्यन्त्विति ❀ तल्लक्षणं तु प्रतीयमानप्रकृतिविकृतिभावकत्वे सति क्रियानिर्वाह्यविशिष्टासत्त्वोत्पत्त्यन्यतरफलवत्त्वम् । घटं करोतीत्यादिनिर्वर्त्ये क्रियानिर्वाह्योत्पत्तिमत्त्वपि प्रकृतिविकृतिभावाभानान्नातिप्रसङ्गः । प्रकृतिकर्मणस्तादृशाविशिष्टासत्त्वाद् विकृतिकर्मणश्च तादृशोत्पत्त्याश्रयत्वाल्लक्षणसङ्गतिः । ईदृशस्थले फलद्वयप्रयोजकव्यापारार्थकत्वं धातोरावश्यकम् । उक्तञ्च भाष्ये—'द्व्यर्थः पचिः' इति, अन्यथैकफलैकव्यापारार्थकत्व                                    द्वानानर्थक्यप्रसङ्गात् ।

किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥

प्रभा

किञ्चिद्गुणान्तरोत्पत्त्येति—'प्रतीयमानप्रकृतिविकृतिभावकत्वे सति पूर्वकालिकावयवसंस्थानविजातीयावयवसंस्थानविशिष्टत्वम्, विलक्षणोत्पत्तिमत्त्वञ्चैतदन्यतरत्वरूपं विकार्यकर्मत्वम्'। 'काष्ठम्' सुवर्णञ्च प्रकृतिः, भस्म कुण्डलञ्च विकार इति प्रकृति-विकृतिभावः भस्मनि, कुण्डले च वर्तते। एवं सुवर्णे यादृशं विकारात्पूर्वमवयवसंस्थानमासीत् ततो विजातीयमवयवसंस्थानवैशिष्ट्यं कुण्डले जातम्, तथा प्रकृत्युच्छेदपूर्वकविलक्षणोत्पत्तिमत्त्वञ्च भस्मनि सम्पन्नमित्यन्यतररूपवत्त्वादुक्तलक्षणमुपपन्नम्। एतादृशस्थले कृञर्थश्च विकारपूर्वकोत्पत्त्यनुकूलव्यापाररूपः।

काशिकाकारास्तु—काष्ठसुवर्णयोरेव विकार्यकर्मत्वम्। भस्मकुण्डलयोस्तु निर्वर्त्यत्वमेवाहुः। तन्मते 'काष्ठं भस्म करोति' इत्यतः 'काष्ठं विकुर्वन् भस्म उत्पादयति' इति बोधः। एवं 'सुवर्णं कुण्डलं करोति' इत्यतोऽपि 'सुवर्णं विकुर्वन् कुण्डलमुत्पादयति' इति च बोधः। इयान् विशेषः पूर्वत्र उच्छेदरूपो विकारः। द्वितीये आकारविशेषात्मकः।

दर्पणव्याख्या

तीयायाश्चोत्पादकत्वम्। तण्डुलाद्यन्वितं नाशकत्वं च पाकेऽन्वेति। ओदनान्वितोत्पादकत्वस्य नाशकत्वविशिष्टे पाकेऽन्वयः। नाशे चोत्पत्तेः प्रयोजकत्वमुद्देश्यविधेयभावमहिम्ना भासते। तेन पाकस्य तण्डुलारम्भकसंयोगनाशकत्वेऽपि 'संयोगमोदनं पचति' इति न प्रयोगः, तण्डुलारम्भकसंयोगनाशस्यौदनोत्पत्तौ तण्डुलनाशेनान्यथासिद्धतया अप्रयोजकत्वात्।

वस्तुतस्तु विकृतिकर्मासमभिव्याहृते 'तण्डुलं पचति' इतिवत् 'संयोगं पचति' इति प्रयोगवारणाय नाशद्वारा नाशकत्वमेव द्वितीयार्थो वाच्य इति प्रकृते प्रयोज्यप्रयोजकभावाभानेऽपि न क्षतिः। तथा च तण्डुलनाशक ओदनोत्पादको यो व्यापारस्तदनुकूलकृतिमानिति बोधः। ईदृशस्थले च कर्माख्यातेन प्रकृतेः कर्मत्वमेवाभिधीयते। अत एव 'काष्ठानि भस्मराशिः क्रियन्ते' इत्यादौ काष्ठपदसमानवचनत्वमाख्यातस्य, न तु भस्मादिविकारवाचकपदसमानवचनत्वम्, आख्यातान्वयिनि सङ्ख्यान्वयनियमात्।

ननु प्रधानाप्रधानकर्मवाचककर्मपदसमभिव्याहृतयोः—वहादि ( दुहादि ) प्रकृतिककर्माख्यातस्यैवाप्रधाने दुहादीनाम् 'प्रधाने नीहृकृष्वहाम्' इत्यनुशासनात् कर्मत्वद्वयानभिधायकत्वानियमेन प्रकृते कर्मत्वद्वयस्यैव तुल्यतया विकृतिगतकर्मत्वस्यापि एकारेणाभिधाने बाधकाभावः। आख्यातस्य विकृतिसमानवचनत्वप्रसङ्गस्तु—

"गृह्णाति वाचकः सङ्ख्यां प्रकृतेर्विकृतेर्न हि"।

इत्यनुशासनसिद्धविकृतिसङ्ख्यान्वयबुद्धिं प्रति प्रकृतिसङ्ख्यान्वयपरत्वेनागृह्यमाणाख्यातजन्योपस्थितेर्हेतुत्वकल्पनया निरसनीयः। कथमन्यथा "भस्मीभवन्ति काष्ठानि" इत्यादिप्रयोगा इति चेत्, 'घटपटौ दृश्येते' इत्यत्र द्वित्वस्यैवोभयसाधारणविशेष्यतावच्छेदकापरिचयेन विकारविकारिणोर्द्वयोरेवाख्यातार्थविशेष्यत्वे वा वाक्यभेदापत्तेः। न्यूनेष्टापत्तिः, तथा सति 'काष्ठं नाश्यते = भस्म क्रियते' इति वाक्यजबोधस्येव 'काष्ठं भस्म क्रियते' इति वाक्यजबोधस्यापि भस्म काष्ठविकृतिरन्यविकृतिर्वेति संशयनिवर्तकत्वानुपपत्तेः, समूहालम्बनबोधजनकस्यापि विशेषेण काष्ठभस्मनोः प्रकृतिविकृतिभावस्योक्तवाक्यादलाभात्। तथा चैकवाक्यतायां कर्तृप्रत्यये प्रयोज्यप्रयोजकभावस्य विशिष्टान्वयविवक्षानियमेन लाभ इव कर्मप्रत्ययस्थलेऽपि तथा विवक्षाया नियमवत्त्वादेव कर्माख्यातेनैव भस्मनि काष्ठोच्छेदप्रयोज्योत्पत्तिकत्वरूपकाष्ठविकृतित्वस्य लाभात्।

न च विकृतिवाचकाद् द्वितीयापत्तिः, त्वदीयेन विकृतिकर्मत्वस्यानभिधानेऽपि कर्मत्वान्तरविशेषणतापन्नक्रियायां तस्य विकृत्यर्थसंसर्गेणाभ्युपगमेनैव द्वितीयाप्रसक्त्यसम्भवात्, प्रातिपदिकार्थविशेष्यतया कर्मत्वादिविवक्षायामेव द्वितीयाप्रसरात्।

क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।

प्रभा

प्राप्यलक्षणमाह—क्रियाकृतेति—'क्रियाप्रयोज्यो योऽसाधारणो धर्मस्तत्प्रकारकप्रतीतिविषयतानाश्रयत्वे सति फलाश्रयत्वं प्राप्यकर्मत्वम्'। यथा 'रूपं पश्यति' इति। अत्र चक्षुरिन्द्रियजन्यज्ञानानुकूलो व्यापारो

दर्पणव्याख्या

नचैवम् 'घटः करोति' इत्यापत्तिः, कर्मत्वान्तरविशेषणतानापन्नक्रियायां क्रियान्तरकर्तृत्वविशेष्यतापन्नार्थकस्यैव कर्मता-संसर्गेण भानाभ्युपगमात्। अत एव 'काष्ठं भस्मराशिः करोति' इति न प्रयोगः, भस्मराशेः क्रियान्तरकर्तृत्वविशेष्यतानापन्नत्वात्। उपपद्यते च 'पश्य मृगो धावति' इत्यादिः।

प्रकृते च 'नीलो घटो भवति' इत्याद्यसाधारणधर्मरूपभवने नीलादेराधेयत्वरूपकर्तृतासम्बन्धेनान्वयवद्व्युत्पत्तिवैचित्र्येण प्रकृतिकर्मत्वविशेषणतापन्नायां कृधात्वर्थकृतौ भस्मादिरूपविकृतिकर्मणः कर्मतासम्बन्धेनान्वयोपगमेन एकवाक्यत्वोपपत्त्योक्तसंशयनिरासकत्वोपपत्तेः। तथाचोत्पादकत्वेन भस्मसम्बन्धिकृतिप्रयोज्यनाशप्रतियोगीनि काष्ठानीति 'काष्ठं भस्मराशिः क्रियते' इति वाक्यजो बोधः। सम्बन्धस्य प्रातिपदिकार्थविशेष्यतया अविवक्षणादेव न तत्र षष्ठ्यपि।

एवं "मृदो न घटो न" इत्यत्रापि प्रकृतिविकृतिभावस्थले कर्मत्वान्तरविशेषणतानापन्नधात्वर्थान्वयधर्मबोधने द्वितीयायाः साधुत्वमिति नियमोपगमे नोक्तस्थले द्वितीयाप्रसङ्गः, नापि 'दुह्यते गोः क्षीरम्' इत्यादौ तदनुपपत्तिः। एवमेकत्वावच्छिन्ने द्वित्वावच्छिन्नारोपस्थलेऽपि 'एको द्वौ जायते' इत्यादौ आरोप्यविशेष्यवाचकसमानवचनत्वमाख्यातस्य। प्रयुञ्जते च कवयः—"एकोऽपि त्रय इव भाति कन्दुकोऽयम्" इति। नच तत्रापि 'भाति' इत्येव पाठः, कथमन्यथा—

"भ्रमाणि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम्" ।

इत्यत्रारोप्यनिजायशोयुगसमानवचनम् 'भ्रमाणि' इत्याख्यातं प्रयुक्तं श्रीहर्षेणेति वाच्यम्, तत्रापि पूर्वार्द्धसमर्थितायशोयुगस्य वासनत्वेन तस्मिन् कालद्वयपक्वचिकुराणामेव राज्ञ आरोप्यत्वेन कवेरभिप्रेतत्वात्। अत एव न तत्राविमृष्टविधेयांशसादोषावकाश इत्याहुः।

अत्र केचित्—"पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाऽऽकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः" इति महाभाष्यप्रयोगादाख्यातस्य विकृतिसमानवचनत्वमेव।

गृह्णाति वाचकः सङ्ख्यां प्रकृतेर्विकृतेर्न हि।

इति तु ध्वनिप्रत्ययमात्रविषयकम्। एवञ्च 'काष्ठानि भस्म राशिः क्रियन्ते' इत्यादिप्रयोगाणामसाधुत्वमेवेति।

अपरे तु—'खदिराङ्गारसवर्णे' इति विशेषणेन तत्र कुण्डलयोः प्रकृतित्वं गम्यते, सिद्धाया विकृतेः पाकानपेक्षणात्। 'पुनरपरयाऽऽकृत्या युक्तः' इति विशेषणेन तु सुवर्णपिण्डस्य विकृतित्वम्, आकृत्यन्तरयोगस्य प्रकृतित्वाप्रयोजकत्वात्। युज्यते चैतत्। "मृत्तिरेवैव सत्यम्" इतिवत् संहतिमुखेन 'पुनरावृत्तः' इति विशेषणेनापि सुवर्णपिण्डस्य विकृतित्वं गम्यते।

तथाहि—पूर्वोपक्रान्ताऽऽकृतिपरम्परायास्तत्पर्यवसायित्वेन सिषाधयिषितसुवर्णनित्यत्वस्य सिद्धेः, तस्मात् पूर्वनिर्दिष्टाकृतिविशिष्टसुवर्णस्य कुण्डलादिप्रकृतेरप्यनिर्दिष्टाऽपराकृतिविशिष्टस्य तस्य विकृतित्वमेव भाष्यकृत्तात्पर्यविषय इत्यस्यापि वक्तुं शक्यतया न तन्निर्देश आख्यातस्य विकृतिसमानवचनत्वे उपष्टम्भक इति।

अत्रेदमाभाति—वैयाकरणमते प्रकृते प्रकृतिविकृत्योर्द्वयोरपि कर्तृत्वेनाख्यातेन कर्तृद्वयमेव अभिधानीयम्। एवं सद्गतसंख्याऽपि तत्रैकेनाख्यातेन विरुद्धसंख्यावतोस्तयोः संख्यायाः अभिधानुमशक्यतया भगवता कुण्डले भवत इति विकृतिसङ्ख्यैवोक्ता। नतु प्रकृतिगता नाख्यातप्रतिपाद्येति मुनित्रयस्याऽऽशय इति। एवञ्च प्रयोगवशेन पर्यायेणान्यतरसमानवचनत्वमाख्यातस्य निराबाधमिति।

❀ क्रियाकृतेति ❀ क्रियाप्रयोज्यासाधारणधर्मप्रकारकप्रतीतिविषयतानाश्रयत्वे सति फलाऽऽश्रयत्वम्। निर्वर्त्या-

दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥

इति च तत्रैवोक्तम् ।

'घटं करोति' इत्याद्यम् । 'काष्ठं भस्म करोति' इति, 'सुवर्णं कुण्डलं करोति' इति च द्वितीयम् । 'घटं पश्यति' इति तृतीयम् । 'तृणं स्पृशति' इत्युदासीनम् । 'विषं भुङ्क्ते' इति द्वेष्यम् । 'गां दोग्धि' इति संज्ञान्तरैरनाख्यातम् ।

प्रभा

दृशेरर्थः । तथा चासाधारणधर्माश्रयत्वप्रकारकप्रतीत्यविषयत्वेन, फलाश्रयत्वेन च प्राप्यकर्मत्वमुपपन्नम् । न च दृशेः चक्षुरिन्द्रियजन्यावरणभङ्गानुकूलव्यापारार्थकत्वादावरणभङ्गाश्रयो रूपमिति प्रतीत्या रूपस्यावरणभङ्गरूपासाधारणधर्मप्रकारकप्रतीतिविषयतयोक्तप्राप्यलक्षणाव्याप्तिरिति वाच्यम्, तादृशावरणभङ्गरूपफलस्य ज्ञानकर्तृभिन्नावेद्यतयोक्तापत्तेरभावात्, 'क्रियाकृतविशेषाणाम्' इति कारिकया तथैव बोधनात् । दर्शनात् = चक्षुरादिरूपप्रत्यक्षप्रमाणाद् गम्यते । अनुमानात् = अनुमितिकरणात् । यथा 'सुखमनुभवति देवदत्त' इति मुखप्रसादादिना सुखमनुमीयते ।

क्रमेणोदाहरणमाह—घटमिति । आद्यम = निर्वर्त्यम् । द्वितीयम् विकार्य्यम् । अत्र काष्ठ-सुवर्णयोरेव विकार्य्यकर्मत्वम् ।' भस्मकुण्डलयोस्तु निर्वर्त्यत्वमेव । वाक्यपदीयकारस्तु—यत्र प्रकृतिः परिणामित्वेन न विवक्ष्यते तत्र निर्वर्त्यत्वम् । यथा 'घटं करोति' इति 'भस्म करोति' इति च । 'मृदं घटं करोति' 'काष्ठं भस्म करोति' 'सुवर्णं कुण्डलं करोति' इत्यादौ परिणामित्वविवक्षया उभयोर्विकार्य्यत्वमेव । विकार्य्यकर्मस्थले विकारानुकूलव्यापारपूर्वकोत्पत्त्यनुकूलो व्यापारः करोतेरर्थ इति विकारः, उत्पत्तिश्च फलद्वयं धात्वर्थस्तदाश्रयत्वादुभयोः कर्मत्वम् । विकारश्च उच्छेदरूपः, आकारविशेषरूपश्च । उच्छेदस्थले भस्मादिदशायामविद्यमाना प्रकृतिः, आकारविशेषदशायां विद्यमाना प्रकृतिरिति च विशेषः । तृतीयम् = प्राप्यम् । निर्वर्त्य-विकार्य्ये च स्वरूपाभावात्मको गुणान्तरात्मको वा विशेषः । कर्तुरनीप्सितमित्यस्योदाहरणमाह—विषमिति—फलाश्रयत्वे सति फलाश्रयत्वोद्देश्यत्वेनाविवक्षितम्, कर्तुरनीप्सितमित्यर्थः । संज्ञान्तरैः = अपादानादिभिः । अनाख्यातम् = अविवक्षितम् ।

दर्पणव्याख्या

द्यावतिव्याप्तिवारणाय सत्यन्तम् । तत्रापि विषयतानाश्रयत्वस्य धर्मप्रकारकप्रतीतिविषयतानाश्रयत्वस्यासाधारणधर्मवदितस्य वा तस्य 'घटं जानाति' इत्यादौ घटादावसम्भव इति प्रयोज्यान्त धर्मविशेषणम् । तत्रैव क्रियाप्रयोज्यासाधारणधर्मसंयोगप्रतीतिविषये ग्रामादिकर्मण्यव्याप्तिनिरासाय असाधारणेति । क्रियाजन्यफलानाश्रये अतिप्रसक्तिनिरासाय विशेष्यम् ।

न च 'घट जानाति' इत्यादौ क्रियाजन्यफलाभावात् सामान्यलक्षणस्याव्याप्ति, तद्वारणाय तत्राऽऽवरणभङ्गाभ्युपगमे तु तस्यैव क्रियाप्रयोज्यासाधारणधर्मतया 'अयं घट एतेन ज्ञात, एतद्व्यवहारविषयत्वात्' इति - अनुमानजन्यप्रमाविषयत्वेन सत्यन्ताभावाद्विशेषलक्षणाव्याप्तिरिति वाच्यम्, कर्तृभिन्नत्वे सति कर्तृकर्मोभयसाधारणक्रियाजन्यफलाश्रयत्वे उक्तलक्षणवाक्यतात्पर्याद्विषयतया ज्ञानरूपफलाश्रयत्वाच्च न सामान्यलक्षणाऽव्याप्तिः, आवरणभङ्गफलमादाय जानात्यादिकर्मणि लक्षणसङ्गमनेऽपीच्छत्यादिकर्मण्यव्याप्तिवारणायोक्तरीतेरेवानुसर्तव्यत्वादिति । निर्देशक्रमेणोदाहरणान्याह—꙳ घटमिति ꙳ । ꙳ आद्यमिति ꙳ निर्वर्त्यमित्यर्थः । एवमग्रेऽपि ।

꙳ संज्ञान्तरैरनाख्यातमिति ꙳ अपादानत्वादितत्तद्रूपविशेषैरविवक्षितमित्यर्थः । अकथितत्वेऽयमकथितशब्दोऽविवक्षितपर, नत्वप्रधानपरः । तथा सति 'पाणिना कांस्यपात्र्यां दोग्धि' इत्यत्र करणाधिकरणयो कर्मसंज्ञा प्रसज्येतेति दुहा

'क्रूरमभिक्रुद्ध्यति' इत्यन्यपूर्वकम् ।

प्रभा

अन्यपूर्वकम् = शास्त्रान्तरप्राप्तसंज्ञान्तरबाधकशास्त्रप्रयोज्यकर्मसंज्ञकमित्यर्थः । यथा 'क्रूरमभिक्रुध्यति'
इति । अत्र 'क्रुधद्रुहोरुपसृष्टयोः' इत्यनेन सम्प्रदानसंज्ञा प्राप्ता बाध्यते । एवं 'वैकुण्ठमधिशेते' अत्रापि आधार-
संज्ञा प्राप्ता 'अधिशीङ्' इत्यनेन कर्मसंज्ञया बाध्यते ॥

दर्पणव्याख्या

तयाच पूर्वविधिप्रसक्तिपूर्वकं तदविवक्षायां सर्वथा
दीनां परिगणनात् तत्संज्ञयोः करोत्यादियोगे सावकाशत्वादिति भावः । कर्तुरीप्सिततम
पूर्वविधेरप्रसक्तौ च तत्प्रवृत्तिरिति बोध्यम् । यद्यपि विभागानुकूलव्यापारानुकूलव्यापारस्यापि दुह्यर्थत्वेन पयोनिष्ठ-
मित्यनेनैव कर्मसंज्ञा सिध्यति, कर्तृनिष्ठव्यापारविशेषणफलाश्रयतया गोः प्रधानकर्मतया न तत्र काप्यनुपपत्तिः, तथापि विभागा-
विभागानुकूलगोनिष्ठव्यापारानुकूलव्यापारस्य शब्दतः प्राधान्यादन्यथासिद्धप्रयोजनकमेतत् सूत्रमित्याभाति, एतस्मिन्पक्षेऽप्रधाने
नुकूलव्यापार एव यदि धात्वर्थस्तदाऽपादानत्वाद्यविवक्षायामन्यसूत्राप्राप्तकर्मत्वार्थमित्यावश्यकम् ।
दुहादीनामित्यनुशासनाद् गवादावेव स्यादत ।

अप्रधानकर्मत्वं बोध्यकर्मभिन्नत्वम् । तद्योगार्थे गवादीनामकर्मत्वम्, धात्वर्थफलानाश्रयत्वात् । तथाचैतत्कल्पे स्थितः
द्रवद्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थः । तत्र गोरपादानत्वाविवक्षायामनेन कर्मत्वम् तद्विवक्षायां पञ्चमी । गोः पय
इत्यन्वये तु षष्ठी । एवञ्च गोकर्मकपयोनिष्ठविभागानुकूल एककर्तृको व्यापार इति बोधः । विभागावधित्वमेव गोः कर्मत्वम् ।
भाष्यकल्पे तु पयोनिष्ठविभागानुकूलगोनिष्ठव्यापारानुकूल एककर्तृको वर्तमानो व्यापार इति । तत्र विभागाश्रयत्वात् पयसः
कर्मता । तदनुकूलव्यापाराश्रयत्वात्तु गोः, न तु विभागाश्रयत्वेन, पयोनिष्ठविभागेऽयम्सम्बन्धस्यैव फलतावच्छेदकत्वात् ।
एवमन्यत्राप्यूह्यम् ।

❀ अन्यपूर्वकमिति ❀ अन्यसंज्ञाया उनपूर्वं शास्त्रबोधितमित्यर्थः । 'क्रूरमभिक्रुध्यति' इत्यत्र क्रुधद्रुहेर्व्यर्तिप्रसक्त-
सम्प्रदानसंज्ञायाः "क्रुधद्रुहोरुपसृष्टयोः कर्म" (पा० सू० १ । ४ । ३८) इति बाधनात् । एवं 'वैकुण्ठमधिशेते' इत्यादावपि
बोध्यम् । 'अजां ग्रामं गमयति' 'शिष्यं शास्त्रं बोधयति' 'ब्राह्मणमन्नं भोजयति' 'यजमानं मन्त्रं पाठयति' 'घटं जनयति
नाशयति' इत्यादौ गतिबुद्धीति सूत्रेण गम्यादिधात्वर्थकर्तुः कर्मसंज्ञाविधानाद् गम्यादिप्रकृतिकणिजन्तधातुसमभिव्याहृत-
द्वितीयाया अप्याश्रयोऽर्थः । यद्यपि णिजन्तधात्वर्थप्रेरणाजन्यव्यापाररूपफलाश्रयत्वादजादीनामपि कर्मत्वं कर्तुरीप्सिततम
मित्यनेनैव सिद्धम् तथापि णिजन्तेन आख्यायमानस्य चेद्भवति गत्याद्यर्थव्यापाराश्रयस्यैवेति नियमार्थं सूत्रम् । तेन 'पाचय-
त्योदनं देवदत्तेन' इत्यादौ न । तदुक्तम् —

गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः ।
नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ॥ इति ।

वाचकतासम्बन्धेन स्वनिष्ठया तृतीययेत्यर्थः । यद्यपि कर्तृसंज्ञायाः परत्वाद्धेतुमति चेत्यनुशासनात् स्वकारकविशिष्ट
क्रियाया णिजर्थसम्बन्धावगतेरन्तरङ्गत्वाच्च कर्मसंज्ञायास्तया बाध एवोचितस्तथाप्यन्यानधीनत्वलक्षणार्थप्राधान्य—शाब्द
प्राधान्ययोः प्रयोजकव्यापारे सत्त्वेन प्रधानकार्यस्य च सर्वतो बलवत्त्वस्याऽऽकडार (पा० सू० १ । ४ । १) सूत्रे कैयटे
नोक्तत्वात् 'हेतुमति च' इति सूत्रस्थभाष्यप्रामाण्याच्च तदनुरोधिकर्मत्वस्यान्तरङ्गादपि कर्तृत्वाद् बलवत्त्वानियमत्वमेव साम्प्रतम् ।

परे तु—'हेतुमति च' इत्यनुशासनादन्यनिष्ठकर्तृत्वनिर्वाहकव्यापाररूपा स्वतन्त्रप्रेरणा णिजर्थः । कर्तृत्वं च क्वचित्
प्रयत्नः, क्वचिदाश्रयत्वादि । यादृशधातूत्तराख्याते यादृशं कर्तृत्वमभिधीयते तादृशधातूत्तरणिच्प्रत्ययेन तादृशकर्तृत्वनिर्वाहको
व्यापारोऽभिधीयते । निर्वाहकत्वं च स्वरूपसम्बन्धविशेषः, नातो 'नाशयति' इत्यादावन्वयानुपपत्तिः ।

कर्तृतृतीयाया आश्रयोऽर्थः। तथाहि—"स्वतन्त्रः कर्त्ता"। (पा० सू० १।४।५४) स्वातन्त्र्यञ्च—

प्रभा

कारकद्वितीयार्थं निरूप्य कारकतृतीयार्थमाह—कर्तृतृतीयाया इति—करणतृतीयाया व्यापारोऽप्यर्थ इत्युक्तम्—कर्तृतृतीयाया इति। आश्रयार्थे प्रमाणमाह—तथाहीति। ननु स्वतन्त्रस्यैव कर्तृसंज्ञाविधानेन 'स्वतन्त्रस्तृतीयाऽर्थः' इति वक्तुमुचितमित्याशङ्कायामाह—स्वातन्त्र्यमिति।

दर्पणव्याख्या

एवञ्च पाकादिकर्तुस्तत्कर्मत्वविरहेऽपि ण्यन्तधात्वर्थप्रतिपाद्यतावच्छेदककर्तृत्वस्य सत्त्वेन तदाश्रयत्वात् पाकादिकर्तुः कर्तृत्वं तादृशकर्तृत्वविशेषणतया सहायादिरूपस्वतन्त्रकर्तृवृत्तित्वविवक्षायां 'पाचयत्योदनं सहायम्' इत्यपि प्रयोगः साध्वेव। अत एव "भिक्षामहत्सज्जनको मनुष्यत्" इति भट्टिप्रयोगः स्वरसतः सङ्गच्छते। महेश्वरलक्षणमिति तथा मनुप्रणयनं स्वगतिश्चनातिः। यदा तु णिच्प्रकृत्यर्थव्यापारे स्वतन्त्रकर्तृवृत्तित्वस्य विशेषणतया विवक्षा तदा सहायेनेत्येव। 'गतिबुद्धि' इति सूत्रं तु गत्याद्यर्थकधातुयोगे तादृशकर्तृत्वविशेषणतया स्वतन्त्रकर्तृवृत्तित्वविवक्षा नियता नान्यत्रेत्यर्थबोधनद्वारा तत्र कर्तृप्रत्ययासाधुत्वज्ञापकम्। तेन 'पाचयत्योदनं सहायेन' इतिवत् 'अजया ग्रामं गमयति' इति न।

एवञ्च 'अजां ग्रामं गमयति' इत्यत्र ग्रामनिष्ठसंयोगानुकूलव्यापारस्य यदजानिष्ठकर्तृत्वं निर्वाहकत्वसम्बन्धेन तद्विशिष्टो यो व्यापारस्तदनुकूलः क्रियामानिति बोधः। 'पाचयत्योदनं सहायेन' इत्यत्र सहायकर्तृको यो विक्लित्यनुकूलो व्यापारो निर्वाहकत्वसम्बन्धेन सत् कर्तृत्वसम्बन्धेन तत्कर्तृत्वविशिष्टव्यापारानुकूलक्रियामानिति बोधः।

'चैत्रेण ग्रामं गम्यते अजा' इत्यत्र कर्माख्याते तु तादृशव्यापारनिर्वाहकर्तृतानिरूपकस्तादृशधात्वर्थः कर्मात्मनेपदोपस्थितकर्तृत्वेऽन्वेति, संयोगफले च द्वितीयार्थग्रामवृत्तित्वान्वयः। एवञ्च चैत्रकर्तृकव्यापारनिर्वाहकर्तृत्वनिरूपकं यद् ग्रामवृत्तिसंयोगानुकूलं गमनं तत्कर्मजेति बोधः। 'सहायेन पाच्यते तण्डुलश्चैत्रेण' इत्यत्र तु चैत्रकर्तृकप्रेरणानिर्वाहकर्तृत्वनिरूपको यः सहायरूपस्वतन्त्रकर्तृवृत्तिव्यापारस्तज्जन्यविक्लित्याश्रयस्तण्डुल इति बोधः। अर्थविवेक स्वयमूह्यः।

ये त्वनुकूलव्यापार एव णिजर्थस्तदन्वयिनी गमनादिक्रियैव धात्वर्थतावच्छेदक फलं, तच्छालितयाऽजादीनां प्राप्तमेव कर्मत्वं "गतिबुद्धि" (पा० सू० १।४।५२) इति सूत्रेण नियम्यते इति वदन्ति। तेषां मते 'पाचयत्योदनं सहायेन' इत्यादौ द्वितीयातृतीययोर्नियामकालाभः। अधिकमन्यत्रानुसन्धेयमित्याहुः।

'वैकुण्ठमधितिष्ठति' इत्यादावपि द्वितीयाया आधार एवार्थः, अध्याद्युपसृष्टशीङादियोगे "अधिशीङ्" (पा० सू० १।४।४६) इत्यादिसूत्रैराधारस्य कर्मसंज्ञाविधानात्। यद्यपि कृतार्थव्यापारान्तर्भावेणाध्याद्युपसृष्टशीङादीनां लक्षणामुपगम्य 'कर्तुरीप्सिततमम्' इत्यनेनैव कर्मसंज्ञा सुसाधा, तथापि मुख्यार्थकतयोगेऽपि कर्मत्वप्रयोगसाधुत्वबोधनार्थम् 'अधिशीङ्स्थासाम्' इत्यादिसूत्राणामप्यावश्यकतेति। कर्मप्रवचनीययोगविहितविभक्तेस्तु यथायथं लक्ष्यलक्षणभावादिः सम्बन्धो बोध्य इति वक्ष्यते।

उपपदविभक्तीनां तु षष्ठ्यपवादकत्वात् सम्बन्ध एवार्थः। "कालाध्वनोरत्यन्तसंयोगे" (पा० सू० २।३।५) इति विहितद्वितीयाया व्यापकत्वमर्थः, 'मासमधीते' इत्यादौ मासव्यापकाध्ययनमिति बोधात्, द्वितीयादीनामाश्रयोऽर्थ इत्यत्र विभक्तिपदस्य कारकविभक्तिपरत्वेन तदविरोधादित्यन्यत्र विस्तरः।

क्रमप्राप्तं तृतीयार्थं निरूपयति—❀ कर्तृतृतीयाया इति ❀ करणतृतीयाया व्यापारार्थत्वस्यापि वक्ष्यमाणत्वादुक्तम्—❀ कर्त्रिति ❀। ❀ आश्रय इति ❀ आश्रयमात्रमित्यर्थः। आश्रयार्थकत्वे मानमुपन्यस्यति ❀ तथाहीत्यादिना ❀। ननु स्वातन्त्र्यमितरव्यापारानधीनव्यापारवत्त्वम्, तच्च 'काष्ठं पचति' इत्यादौ काष्ठादावप्रसक्तम्, तद्व्यापारस्य चेतनव्यापाराधीनत्वादत आह—❀ स्वातन्त्र्यञ्चेति ❀ व्यापाराश्रयत्वस्य करणे, धात्वर्थाश्रयत्वस्य कर्मण्यतिप्रसक्तत्वात् तद्व्यावृत्तये

धात्वर्थव्यापाराऽऽश्रयत्वम् ।

धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ।

प्रभा

धात्वर्थेति—प्रधानधात्वर्थव्यापाराश्रयत्वमित्यर्थः । अत्र प्राधान्यञ्च—कारकान्तराप्रयोज्यत्वेनाविव-
क्षितत्वम् । तेन 'काष्ठं पचति' इत्यादौ काष्ठस्य कर्तृत्वविवक्षायां काष्ठव्यापारस्यान्यप्रयोज्यत्वेऽपि नाव्याप्तिः ।
एवञ्च स्वतन्त्रपदमत्र पारिभाषिकमिति भावः ।

अत्रार्थे प्रमाणमाह—धातुनोक्तेति—प्रकृतधातूपात्तेत्यर्थः, यत्किञ्चिद्धातूक्तत्वस्याव्यभिचरितत्वात् ।
व्यापारश्च—धात्वर्थनिष्ठविशेष्यतानिरूपितशाब्दबोधीयानुकूलत्वसम्बन्धावच्छिन्नप्रकारतानाश्रयो माह्यः । तेन
'ग्राममजां नयति' इत्यादौ संयोगानुकूलव्यापारस्याऽऽश्रयत्वेऽपि अजाया न कर्तृत्वम्, तद्व्यापारस्य द्वितीयनय-
स्यर्थव्यापारे प्रकारीभूतत्वात् । 'पक्वस्तण्डुलो देवदत्तेन' इत्यत्रापि न दोषः, व्यापारस्य धात्वर्थफले प्रकारत्वेऽप्यनु-
कूलत्वसम्बन्धावच्छिन्नप्रकारस्यानाश्रयत्वात्, तत्र जन्यत्वसम्बन्धावच्छिन्नप्रकारताया एव सत्त्वात् । नचैवमपि
'चैत्रेण पाचयति मैत्रः' इत्यादौ चैत्रीयव्यापारस्य प्रयोजकव्यापारप्रयोज्यत्वेन कारकान्तराप्रयोज्यत्वेनाविवक्षि-
तत्वाभावात् कर्तृत्वं न स्यादिति वाच्यम्, तद्धात्वर्थव्यापाराप्रयोज्यत्वस्य विवक्षितत्वेन पच्धात्वर्थव्यापारा-
प्रयोज्यत्वस्याक्षतेः, णिजन्तधात्वर्थव्यापारप्रयोज्यत्वस्याकिञ्चित्करत्वात् ।

निर्दुष्टकर्तृत्वञ्च—धातुनिष्ठशक्तिविशिष्टार्थाऽऽश्रयत्वम्, अर्थे शक्तिवैशिष्ट्यञ्च—स्वज्ञानप्रयोज्यशाब्द-
बोधीयानुकूलत्वसम्बन्धावच्छिन्नप्रकारतात्वावच्छिन्नप्रतियोगिताकाभाववत्त्व-स्वज्ञानीयविषयताश्रयत्वैतदुभय-
सम्बन्धेन । प्रतियोगिता च—स्वाश्रयत्व—स्वावच्छेदकताऽऽश्रयत्वान्यतरसम्बन्धावच्छिन्ना ग्राह्या । यथा—
'घटं करोति चैत्रः' इत्यत्र 'कृञ्पदम् उत्पत्त्यनुकूलव्यापारत्वावच्छिन्नविषयकबोधजनकतावत्' इतिशक्तिज्ञानम्।
तत्र व्यापाररूपोऽर्थः शक्तिविशिष्टस्तथाहि—स्व—(शक्ति) ज्ञानप्रयोज्यानुकूलत्वसम्बन्धावच्छिन्ना प्रकारता
उत्पत्तौ तादृशप्रकारतात्वावच्छिन्नप्रतियोगिताभावश्च व्यापारे, स्व (शक्ति) ज्ञानीयविषयताश्रयत्वमपि
व्यापारे, व्यापारस्य शक्तिज्ञानीयविषयत्वात् । उक्ता प्रकारता चाऽऽश्रयत्वसम्बन्धेनोत्पत्तौ, अवच्छेदकत्व-
सम्बन्धेनोत्पत्तित्वे चास्ति, व्यापारे च नास्ति, इत्यन्यतरसम्बन्धावच्छिन्ना प्रकारतानिष्ठा प्रतियोगिता जातेति
तादृशव्यापाराश्रयत्वेन चैत्रस्य कर्तृत्वं सिद्धम् ।

दर्पणव्याख्या

धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयतद्धात्व-
क्रमेणोभयम् ।

अन्ये तु—कर्तृप्रत्ययसमभिव्याहारे व्यापारतावच्छेदकसम्बन्धेन धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयतद्धात्व-
र्थाश्रयत्वं स्वातन्त्र्यम् । तदेव च कर्तृत्वम् । कालिकसम्बन्धेन व्यापाराश्रयेऽतिप्रसङ्गवारणाय व्यापारतावच्छेदकसम्बन्धेनेति ।
'ग्रामं गच्छति' इत्यादावुत्तरसंयोगात्मके फले तादृशधात्वर्थत्वाभावान्न तदाश्रयेऽतिप्रसङ्गः । 'पक्वस्तण्डुलो देवदत्तेन' इत्यादौ
फलस्य विशेष्यत्वेन देवदत्तेऽव्याप्तिपरिहाराय कर्तृप्रत्ययसमभिव्याहार इति । सामग्रीसाध्यायां क्रियाया सर्वेषां स्वस्वव्यापारे
स्वातन्त्र्येऽप्युक्तस्वातन्त्र्यस्य युगपत्सर्वेष्वभावात्र सूत्रानर्थक्यमिति । तत्तु कर्मप्रत्ययसमभिव्याहृतकर्तृव्यावृत्तत्वाद् धात्वर्थ-
व्यापाराश्रयत्वस्यैव सम्यक्त्वे गुरुविशेषणस्यानतिप्रयोजनकत्वाच्चोपेक्ष्यम् । कर्मकर्तरि तु नव्यमते फले व्यापारत्वाऽऽरोपान्नाऽ-
व्याप्तिः । व्यापारत्वेन कृतेरपि सङ्ग्रहाय तदनाश्रयेऽचेतने स्वरसतः कर्तृव्यवहारः । तदतिरिक्तव्यापारस्य धातुना विवक्षायां
[illegible] क्वचित् कर्तृत्वव्यवहारोऽपि । वक्ष्यति च—'यदा यदीयो व्यापारः' इत्यादि । एवमेव 'मत्तो मूतं न तु मया कृतम्' इत्या-
सुपपाद्यमिति भाव । तत्र हरिवाक्यं प्रमाणयति ॐ धातुनेति ॐ । ॐ उक्तक्रिय इति ॐ विशेषणादस्मदुक्तमेव स्वातन्त्र्यं
हरिसम्मतमिति सूचयति ॐ ।

इति वाक्यपदीयात् । अत एव 'यदा यदीयो व्यापारो धातुनाऽभिधीयते तदा स कर्ता' इति 'स्थाली पचति' 'अग्निः पचति' 'एधांसि पचन्ति' 'तण्डुलः पच्यते स्वयमेव' इत्यादि सङ्गच्छते ।

नन्वेवम् "कर्म्मकर्तृव्यपदेशाच्च" ( ब्र० सू० १ । २ । ४ ) इति सूत्रे "मनोमयः प्राणशरीरः" इति वाक्यस्थमनोमयस्य जीवत्वे वाक्यशेषे तस्य "एतमितः

प्रभा

प्रतियोगितायाम् अवच्छेदकत्वसम्बन्धानिवेशे 'अग्नेर्माणवकं वारयति' इत्यत्र माणवकनिष्ठसंयोगानुकूलव्यापारस्यापि वारिधातुनिष्ठशक्तिविशिष्टतया माणवकस्य, 'विप्राय गां ददाति' इत्यत्र स्वस्वत्वध्वंससमानाधिकरणपरस्वत्वोत्पत्तीच्छाभावानुकूलव्यापारनिरूपितदाधातुनिष्ठशक्तेर्विशिष्टयोत्पत्तौ सत्त्वेन तदाश्रयस्य गवादेश्च कर्तृत्वापत्तिः, इति तद्वारणाय प्रतियोगितायामवच्छेदकत्वसम्बन्धावच्छिन्नत्वनिवेश आवश्यक इति दिक् ।

नन्वेवमपि 'चैत्रः पचति' इत्यादौ कर्तृत्वानापत्तिः, फूत्कारादिव्यापारस्य पच्यर्थतावच्छेदकत्वेन विवक्षितत्वादिति चेन्न, चैत्रीयपच्धात्वर्थतावच्छेदकत्वस्य विवक्षितत्वेऽपि कारकान्तरव्यापाराप्रयोज्यत्वविवक्षायाः सत्त्वात् । अत एव=कर्तृत्वस्योक्तस्वातन्त्र्यरूपत्वादेव । अवान्तरनानाभेदानां व्यापाराणां समूहः फलजनिकत्वैकत्वबुद्ध्या प्रकल्पितः, स च समूहः स्वभावतो गुणभूतैरवयवैर्युतः । एवञ्च सर्वेषां कारकाणां व्यापारा धातुवाच्याः । यदा यो व्यापारो यस्य बुद्धिविषयस्तदा स धातुनाऽभिधीयते, तदैव तदाश्रयः कर्ता । तदाह—यदा यदीयेति—एवञ्च 'काष्ठेन पचति' इत्यादि नानुपपन्नम्, तदा तद्व्यापारस्य धात्वर्थत्वेनाविवक्षणात् ।

विवक्षायाः प्रयोगनियामकत्वमिति द्रढयितुं प्रदर्शयति—नन्वेवमिति । एवम्—विवक्षाया एव प्रयोगनियामकत्वे । इति सूत्रे इति—अत्र 'निर्णीतम्' इत्यनेनान्वयः । तथाच 'इति सूत्रे' निर्णीतं कथं सङ्गच्छतामित्यन्वयः । वेदे प्रकरणानि द्विविधानि वाक्यानि, ब्रह्मपराणि, जीवपराणि च । तत्र ब्रह्मप्रकरणेषु 'मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः' इत्यादिश्रुतौ श्रूयते । अस्यान्ते 'एष म आत्मान्तर्हृदय एतद् ब्रह्म एतमितः प्रेत्याभिसम्भवितास्मि' ( छा० ३-१४-१-२-३ ) इति । भाष्यार्थः—नायं शरीरादिरिव [illegible], किन्तु मनसैव ग्राह्यः । [illegible] इत्युक्तं । विशुद्धमनोग्राह्य इति यावत् । प्राणशरीरः=प्राणोऽस्य वायुः शरीरं यस्य सः । भारूपः=भा=दीप्तिरेव रूपम्=आकारः स्वभावो यस्य सः । दीप्तिमद्रूपः । सत्यसङ्कल्प इत्यादेरर्थः स्पष्ट एव ।

अत्र शङ्करो—किमिह मनोमयत्वादिधर्मैर्जीव उपास्य उपदिश्यते आहोस्वित् परं ब्रह्मेति ? [illegible] मन आदिभिः सम्बन्धः, प्रसिद्धो न ब्रह्मणः इति जीव एवोपास्य इति पूर्वपक्षे, समाधानम् 'अप्राणो ह्यमनाः शुभ्रः' इति [illegible] जीवस्यैवोपास्यत्वे प्राप्ते । ( जीव. [illegible] , किन्तु ब्रह्मैव ।

प्रेत्याभिसम्भविताऽस्मि" इति प्राप्तिकर्म्मत्वकर्तृत्वव्यपदेशो विरुद्ध इति भगवता व्यासेन
निर्णीतं कथं सङ्गच्छताम् ? उच्यते—जीवस्यैव ज्ञेयत्वे प्राप्तिकर्म्मत्वमपि वाच्यम्, कर्तृत्वञ्च तस्य
आख्यातेनोक्तम्। नचैकस्यैकदा संज्ञाद्वयं युक्तम्, कर्तृसंज्ञया कर्म्मसंज्ञाया बाधात्। तथाच 'एतम्'
इति द्वितीया न स्यात्। कर्म्मकर्तृतायाञ्च यगाद्यापत्तिरिति शब्दविरोधद्वारा भवति स भेदहेतुः।

प्रभा

अत्र 'मनोमयः प्राणशरीरः' इत्यादिषु द्वितीयार्थे प्रथमा। तथाच मनोमयत्वादिगुणविशिष्टं हृदये ध्यात्वा,
एतम् = मनोमयत्वादिगुणविशिष्टम्। अभिसम्भविताऽस्मि = प्राप्तास्मि। प्राप्त्यर्थकाऽऽत्मनेपदिनो भवतेर्व्य-
त्ययेन परस्मैपदम्।

एवञ्च 'एतम्' इत्यनेन जीवः कर्मत्वेनोच्यते। 'अभिसम्भविताऽस्मि' इति तिङा स एव कर्तृत्वे-
नोच्यते। नच सत्यां गतावेकस्य कर्मकर्तृव्यपदेशो (व्यवहारो) युक्तः, कर्मकर्तृव्यपदेशाच्च न मनोमयत्वा-
दिगुणविशिष्टो जीव इत्याह—मनोमय इति। मनोमयस्य = मनोमयपदस्य। जीवत्वे = जीवपरत्वे। वाक्य-
शेषे = 'मनोमयः प्राणशरीरः' इत्यादिपदसमुदायात्मकवाक्यस्यान्ते। तस्य = जीवस्य। अस्य कर्मकर्तृव्यपदेश
इत्यत्रान्वयः। इतीति—इतिवाक्यबोधितकर्मकर्तृव्यपदेश इत्यर्थः। विरुद्ध इति—युगपज्जीवस्य कर्मत्वकर्तृत्व-
व्यपदेशो विरुद्ध इत्यर्थः। एतेन समयभेदेन संज्ञाद्वये न विरोध इत्यपास्तम्। तथाच जीव एवोपासकः,
जीव एवोपास्यश्चेत्येकस्य कर्तृत्वम्, कर्मत्वञ्च विरुद्धमापद्येतेति भाष्योक्तिविरोध इति भावः। कथमिति—
शाब्दिकनये कर्तृत्व-कर्मत्वयोः वैवक्षिकतया एकस्मिन्नेककालेऽपि तयोः सत्त्वे विरोधाभावादिति भावः।
एकस्मिन् कर्तृत्वकर्मत्वयोः सत्त्वे विरोधाभिप्रायकं न शाङ्करभाष्यम्, किन्तु युगपत्संज्ञाद्वयविरोधपरं
तदित्याशयेन समाधत्ते—उच्यत इति। ज्ञेयत्वे = उपास्यत्वेन ज्ञानविषयत्वे। प्राप्तिकर्मत्वमिति—उपास्यत्वेन
ज्ञानविषयस्यैव प्राप्तिकर्मत्वादिति भावः। आख्यातेनेति—'अभिसम्भवितास्मि' इत्येतद्घटकाख्यातेनेत्यर्थः।
बाधादिति—कर्तृकर्मसंज्ञयोराकडारीयत्वेन 'आकडारादेका संज्ञा' इत्युक्तेः परत्वादिति भावः। तथाच =
परत्वात्कर्तृसंज्ञया कर्मसंज्ञाया बाधे च। कर्मकर्तृतायामिति—'एतं ध्यात्वा ध्यायेद् वा' इत्यत्र कर्मत्वेन
निर्दिष्टस्य 'एषोऽहमभिसम्भविताऽस्मि' इत्यत्र कर्तृत्वविवक्षया न युगपद्विषयकबाध्यबाधकभाव इति भावः।
यगाद्यापत्तिरिति—अभ्युपगमवादेन (वादिबलनिरीक्षणार्थं निर्दिष्टस्य स्वीकरणवादेन) इयमुक्तिः, यगादेस्ता-
सिना बाधात्, प्राप्ये कर्मणि कर्मवद्भावाभावाच्च। तथाच कर्मकर्तृतायामपि भाष्यविरोध एव दोषो बोध्यः।
शब्दविरोधद्वारा = संज्ञाद्वयप्रयुक्तकर्त्रर्थकतिङ्कर्मार्थकद्वितीयारूपशब्दविरोधद्वारा। सः = कर्मकर्तृव्यपदेशः।
भेदहेतुः = उपास्योपासकयोः कर्मकर्त्रोर्भिन्नत्वे कारणम्। एकदा संज्ञाद्वयाभावे विभक्तिद्वयाभावेन विभक्ति-
द्वयदर्शनं विरुध्येतेति भावः।

दर्पणव्याख्या

ॐ अभिसम्भवितास्मि ॐ प्राप्तास्मीत्यर्थः। ॐ कथं सङ्गच्छतामिति ॐ भवन्मते वैवक्षिकयोः कर्तृत्व-
कर्मत्वयोरेकस्मिन्नपि सम्भवादिति भावः।
संज्ञानिबन्धनविरोधं समर्थयन् कर्तृत्वकर्मत्वयोर्वास्तवाविरोधं दर्शयति—ॐ उच्यत इत्यादिना ॐ। ॐ जीवस्यैव
ज्ञेयत्व इति ॐ 'स क्रतुं कुर्वीत' इत्यनेन जीवस्यैवोपास्यत्वबोधने इत्यर्थः। ॐ प्राप्तिकर्मत्वमिति ॐ अन्योपासनाया अपर-
प्राप्यफलकत्वादिति भावः। ॐ आख्यातेनेति ॐ अभिसम्भविताऽस्मीत्येतद्घटकेनेत्यर्थः। ॐ बाधादिति ॐ संज्ञयो-
राकडारीयतया समावेशासम्भवेन परया कर्तृसंज्ञया बाधादित्यर्थः। ॐ यगाद्याऽऽपत्तिरिति ॐ। अभ्युच्चयवादः, प्राप्ये
कर्मणि कर्मवद्भावाप्रसक्तेः। ॐ शब्दविरोधद्वारा ॐ = एकदा संज्ञाद्वयप्रयुक्तकार्यानुपपत्तिद्वारा, ॐ सः ॐ = संज्ञाकृत-
विरोधस्तत्र कर्तृकर्मत्वव्यवहारहेतुरित्यर्थः। ननु कर्तृत्वकर्मत्वयोः पारमार्थिकं भेदमादायेति भावः।

एवञ्च व्यापारांशस्य धातुलभ्यत्वादाश्रयमात्रं तृतीयार्थः। कारकचक्रप्रयोक्तृत्वम्, कृत्याश्रयत्वं वा 'दण्डः करोति' इत्यत्राव्याप्तम्।

प्रभा

एवञ्च = धातूपात्तव्यापाराश्रयत्वेन विवक्षितस्य कर्तृत्वे च। नैयायिकाभिमतं कर्तृत्वं दूषयति—कारकचक्रेति—कर्मादिकारकाणां चक्रम् = समुदायस्तत्प्रयोक्तृत्वम् = प्रवर्तकत्वम्। तच्च 'चैत्रः काष्ठैस्तण्डुलान् स्थाल्यां पचति' इत्यादौ चैत्रे एव न काष्ठादौ। लाघवादाह—कृत्याश्रयत्वमिति—प्रकृतधात्वर्थव्यापारानुकूलकृत्याश्रयत्वं तद्धात्वर्थकर्तृत्वमित्यर्थः। तेन यत्किञ्चित्कृतिमादाय नातिप्रसङ्गः। कृत्याश्रयत्वञ्च समवायेन ग्राह्यम्, तेन कालिकादिना कृत्याश्रयत्वमादाय 'घटः पचति' इति न प्रयोगः। अव्याप्तमिति—प्रवर्तनायाः, कृतेश्च चेतनधर्मत्वेनाचेतने तद्बाधादिति भावः। 'कृत्याश्रयत्वं कर्तृत्वम्' इति मतेऽपि कृतेर्धातुनैव लाभादाश्रयत्वमात्रं कर्तृतृतीयार्थ इति शाब्दिकमतसाम्यमेवेति चेन्न, फलानुकूलकृतेर्धातुलभ्यत्वेऽपि फलानुकूलव्यापारानुकूलकृतेर्धात्ववाच्यत्वेन तत्र विभक्तिवाच्यत्वसम्भवात्। यद्वा फलप्रयोजककृतेर्धातुवाच्यत्वाभिप्रायेण तत्कृतेरपि धातुलभ्यत्वादाह—दण्डः करोतीति।

परे तु 'कारकचक्रप्रयोक्तृत्वमेव स्वातन्त्र्यम्' भाष्यसम्मतम्। तच्च चेतने वास्तविकम्, अचेतने चारोपितम् इति 'दण्डः करोति' इत्यादौ नाव्याप्तिः। अत एव 'भिक्षा वासयति' इत्यादिप्रयोगनिर्वाहः। अत एव "प्रधानेन समवाये स्थाली परतन्त्रा, किं पुनः प्रधानम्? कर्ता। कथं ज्ञायते कर्ता प्रधानमिति? यत्सर्वेषु साधनेषु सन्निहितेषु कर्ता प्रवर्तयिता भवति इति" इति 'कारके' इति सूत्रस्थं भाष्यं सङ्गच्छते।

एवं स्वेच्छाधीनप्रवृत्तिनिवृत्तिकत्वमपि स्वतन्त्रत्वम्। चेतनेऽनारोपितम्, अचेतने चारोपितमिति 'स्वतन्त्रः कर्ता' इति सूत्रे भाष्ये उक्तम्। 'प्रधानधात्वर्थव्यापाराश्रयत्वं स्वातन्त्र्यम्' इति तु न भाष्यसम्मतम्, क्वचिदपि तादृशस्वातन्त्र्यस्यापरिभाषणात्, लोके पूर्वोक्तार्थे एव तत्पदप्रवृत्तेः प्रसिद्धत्वाच्च। अत एव प्रयोज्यस्य कर्तृत्वानुपपत्तिशङ्कायां स्वेच्छाधीनप्रवृत्तिनिवृत्तिकत्वरूपं स्वातन्त्र्यं साधितं भाष्ये। एतादृशस्वातन्त्र्याश्रयनिष्ठो व्यापारो धातुवाच्यः। तदभिप्रायेणैव 'धातुनोक्तक्रिये नित्यम्' इति हर्युक्तिः। अत एव—

प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि।
तदधीनप्रवृत्तत्वात् प्रवृत्तानां निवर्तनात्॥
अदृष्टत्वात्प्रतिनिधेः प्रविवेके च दर्शनात्।
आरादप्युपकारित्वात् स्वातन्त्र्यं कर्तुरुच्यते॥

इति वाक्यपदीये उक्तम्। अस्यायमर्थः—करणादिकारकात्प्रागेवान्यतः = अर्थित्वादेरेव निमित्तात् शक्तिलाभात् = कर्तृत्वशक्तिलाभात् कर्ता प्रवर्तते। करणादिकन्तु तदधीनप्रवृत्तिनिवृत्तिकम्। तदाह—न्यग्भावापादनादिति—अन्येषां कारकाणां स्वाधीनप्रवृत्तिनिवृत्तिकत्वापादनादित्यर्थः। किञ्च करणादेरभावे प्रतिनिधिर्दृश्यते, व्रीह्यभावे यववत्। कर्तुरभावे प्रतिनिधिर्न दृश्यते। कर्तृभेदे क्रियान्तरत्वमेव। प्रविवेके च = कारकान्तराणामभावे च कर्तुर्दर्शनात्। आरादप्युपकारित्वात् = आरात् = दूरत उपकारित्वात् = कारकान्तरव्यापारे परम्परया उपकारित्वात्। कर्तुः स्वातन्त्र्यमुच्यते वृद्धैरिति।

दर्पणव्याख्या

ननु विशिष्टाश्रयस्य तावता तृतीयाऽर्थत्वमायातमत आह—❀ एवञ्चेति ❀ धातूपात्तव्यापाराश्रयस्य कर्तृत्वे चेत्यर्थः ❀ आश्रयमात्रमिति ❀ अनन्यलभ्यत्वादिति भावः। मतान्तरं दूषयति—❀ कृत्याश्रयत्वमित्यादिना ❀। ❀ अव्याप्तमिति ❀ अचेतने तस्मिंस्तद्बाधादिति भावः।

दर्पणव्याख्या

अत्र वदन्ति—दण्डादिनिष्ठव्यापारस्य धात्वर्थत्वविवक्षया भवदुक्तस्वातन्त्र्यवद् धात्वर्थव्यापाराश्रयत्वेन दण्डा-
दावभावेऽपि तदारोपात् कर्तृत्वव्यवहारस्तस्मिन् सूपपादः । अत एव हरिणा—

प्रागन्यतः शक्तिलाभान्न्यग्भावाऽऽपादनादपि ।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्तनात् ॥
अदृष्टत्वात्प्रतिनिधेर्व्यतिरेके च दर्शनात् ।
आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुरिष्यते ॥

इत्यनेन करणादिव्यापारात् पूर्वं करणादिसम्पादकशक्तिमत्त्वेन करणादीनामात्माधीनत्वसम्पादनेन च तदायत्त-
व्यापारत्वेनातिप्रवृत्तानां निवर्तनेन कर्तुः फलप्राप्तौ स्वत एव निवृत्त्या प्रतिनिध्यभावेन कारकान्तराभावेऽप्यस्यादौ कर्तु-
र्दर्शनेन च आरा (दूरा)दप्युपकारित्वे स्वातन्त्र्यमित्यर्थेनेन कारकचक्रप्रयोक्तृत्वमेव स्वातन्त्र्यमभिहितम् ।

वस्तुत एषां धर्माणामभावेऽपि शब्देन यस्यैते प्रतिपाद्यन्ते स कर्तेति तदाशय । 'पाचयति चैत्रेण मैत्र.' इत्यादौ
प्रयोज्यस्य प्रयोजकव्यापाराधीनत्वेऽपि णिच्प्रकृत्यर्थसाधनान्तरविषये उक्तस्वातन्त्र्यस्य सत्त्वात् कर्तृत्वोपपत्ति, धातुवाच्य-
क्रियाकृतस्वातन्त्र्यस्यैव विवक्षणात्, परतन्त्रस्य रथादेर्न स्वव्यापारमादाय कर्तृत्वम्; प्रयोज्यस्य स्वार्थेऽप्यर्थमपि प्रवृत्त्या
करणादीनां कर्त्रधीनत्ववत् प्रयोज्यस्य प्रयोजकाधीनत्वाच । नहि फलोद्देशार्थीना करणादीना व्यापारसत्ता । प्रयोज्यस्य तु
तादृशप्रवृत्तौ "सर्वे इमे स्वभूत्यर्थं प्रवर्तन्ते" इति, हेतुमति चेति सूत्रस्थं भाष्यमनुभवश्च सार्वजनीन' प्रमाणमित्याहुः ।

कृत्याश्रयत्वं दण्डादावसत्त्वमित्युक्त्या नैयायिकोक्तकर्तृत्वस्योपेक्षणीयत्वमावेदितम् । तेषा त्वयमाशय.—कर्तृत्वं
मुख्यं पूर्वोक्तमेव, आश्रयप्रतियोगित्वादिरूप तु गौणम्, उभयमपि कर्तृतृतीयया प्रतिपाद्यते । अचेतन-

तथाहि—'चैत्रेण पच्यते' इत्यादौ कृतिमदभेदेन तदन्यत्व वा क्रियाविशेषणतया तृतीययाऽभिधीयते । अचेतन-
काष्ठादेरपि कर्तृत्वविवक्षायां तु 'काष्ठ पचति' इतिवत् 'काष्ठेन पच्यते तण्डुल.' इत्यपि प्रयोगाद् व्यापाररूपे कर्तृत्वे तदन्य-
स्वरूपे सकर्तृकत्वे वा तस्य लक्षणा । एव 'चैत्रेण ज्ञायते' इत्यादावाश्रयत्वरूपे कर्तृत्वे आधेयत्वरूपे कर्तृमत्त्वे वा, नश्यते
घटेनेत्यादौ प्रतियोगित्वात्मककर्तृत्वेऽनुयोगित्वरूपकर्तृमत्त्वे वा लक्षणा । चैत्र पचतीत्यादावाख्याते कर्तृत्वमेव मुख्य गौणं वा
क्रियाविशेष्यतयाऽऽख्यातेन बोध्यते । अचेतने स्वरसतः कर्तृव्यवहाराभावेन तत्र कर्तृपदमपि भाक्तमेव ।

नच यत्नवत एव मुख्यकर्तृत्वे तदादायैव "कर्तृकरणयो." ( पा० सू० २।३।१८ ) इत्यादेश्चारितार्थ्ये गौणकर्तृत्वे
तृतीयाद्यनुपपत्तिरिति वाच्यम्, तत्सूत्रस्थकर्तृपदस्य पारिभाषिककर्तृपरत्वात्, तत्सूत्रप्रणयनस्यैव तस्य तत्परत्वे मानत्वात् ।
एवं स्वातन्त्र्यञ्च—समभिव्याहृतकारकान्तरानधीनत्वे सति कारकत्वम् । पुरुषव्यापाराधीनक्रियानुकूलव्यापारवत्त्वेनैव
काष्ठादीनामन्यानधीनत्वविवक्षया काष्ठं पचतीत्यादौ कर्तृत्वम् । अनधीनत्वान्तविशेषणं च, चैत्र. काष्ठैः स्थाल्यां पचतीत्यत्र
चैत्र. काष्ठानि स्थाली पचन्तीति प्रयोगवारणाय । चैत्र. पचति, स्थाली पचतीत्यादौ यत्र कारकान्तरसमभिव्याहारो नास्ति तत्र
भान्तविशेषणं न प्रतीयत एव, तन्निर्वाहश्च स्वतन्त्रशक्तिकल्पनात् । विशिष्टशक्तेर्विशेष्यविषयकत्वनियमो नास्तीति वचनात्,
विशिष्टशक्त्या निर्वाहात् । चैत्रेण पाचयतीत्यादौ हेतुकर्तृसमभिव्याहारे प्रयोज्यस्य हेतुकर्त्रधीनत्वेऽपि ण्यन्तप्रकृत्यर्थवाचना-
दिक्रियायामेव प्रयोजकस्य कारकतया प्रयोज्यस्य प्रकृत्यर्थक्रियाकारकानधीनतया अनधीनत्वेन न तद्वाचकपदोत्तर तृतीया-
नुपपत्तिः, स्वतन्त्रकर्तृप्रयोजकव्यापारस्य तण्डुलकर्मणादिवत् पाकादावन्वयासिद्धत्वादकारकत्वेन तस्य पाकादिप्रयोजक-
व्यापारवत्त्वेऽपि तत्क्रियाकारकत्वाभावाच । अत एव चैत्रेण मैत्रः पाचयतीत्यत्र, मैत्र पचतीति न ।

नन्वस्तूपदर्शितरीत्या चैत्रादेः स्वतन्त्रकर्तृतानिर्वाहस्तथापि तद्वाचकपदोत्तरं तृतीयाऽनुपपत्तिः, कर्तृत्वनिर्वाहकव्या-
पारस्य णिजर्थत्वेन स्वतन्त्रनिष्ठस्य तस्य णिचाऽभिधानादिति चेत्, कर्तृत्वनिर्वाहकत्वसम्बन्धेन पाकाद्यन्वितहेतुकर्तृव्यापारस्य
णिजर्थतापक्षेऽदोषात् । कर्तृत्वस्वरूपफलावच्छिन्नव्यापारस्य णिजर्थतामतेऽपि तदुपरञ्जकस्याख्यातेनानभिधानात्
नत्वाक्षेपात्, अबोधनस्यैव तत्रानभिधानपदार्थत्वादभिधानस्य "तिङ्कृत्तद्धितसमासै." इति परिगणनाच ।

अयञ्च त्रिविधः—शुद्धः, प्रयोजको हेतुः, कर्म्मकर्त्ता च। 'मया हरिः सेव्यते' 'कार्य्यते हरिणा' 'गमयति कृष्णं गोकुलम्'

प्रभा

कर्तारं विभजते—अयमिति—धातूपात्तप्रधानव्यापाराश्रय इत्यर्थः। व्यापारे प्राधान्यञ्च—'तद्धात्वर्थनिष्ठविशेष्यतानिरूपितानुकूलत्वसम्बन्धावच्छिन्नप्रकारत्वानाश्रयत्वरूपम्'। त्रिविध इति—त्रैविध्यञ्च धर्मगतत्रित्वस्य कर्तरि आरोपाद् बोध्यम्। एतेन व्यक्तिपक्षे व्यक्तीनामानन्त्यात् जातिपक्षे च जातेरैक्यात् त्रिविधत्वमनुपपन्नमित्यपास्तम्। शुद्ध इति—शुद्धत्वञ्च—'हेतुत्वानाश्रयत्वे सति सामानाधिकरण्येन कर्मत्वविशिष्टकर्तृत्वानधिकरणत्वरूपम्'। मयेति—अत्र मदर्थः शुद्धकर्ता। कार्य्यत इति—अत्र हरिर्हेतुकर्ता। गमयतीति—अत्राणौ कर्तुः कृष्णस्य 'गतिबुद्धि' इत्यादिकर्मसंज्ञाविधानात् कर्तृसंज्ञाया बाधेऽपि प्रकृतधातूपात्तप्रधानव्यापाराश्रयत्वरूपकर्तृत्वलक्षणस्य सत्त्वात् कृष्णः कर्मकर्ता। नचैकत्र कर्मत्वकर्तृत्वसत्त्वे—

'कर्ता कर्म च करणं सम्प्रदानं तथैव च।
अपादानाधिकरणमित्याहुः कारकाणि षट्'॥

इति विभागानुपपत्तिः, 'स्वसमभिव्याहृतपदार्थत्वावच्छेदकीभूतधर्मव्याप्यमिथोविरुद्धयावद्धर्मप्रकारकबोधानुकूलव्यापारस्यैव विभागपदार्थत्वादिति वाच्यम्, सङ्केतसम्बन्धेन कर्मपदवत्त्वादीनामेव कारकविभाजकोपाधित्वादेकदा संज्ञाद्वयासत्त्वेन तत्त्वाक्षतेः। नच 'दिवः कर्म च' इत्यनेनैकदा कर्मकरणसंज्ञयोर्वि-

दर्पणव्याख्या

आख्यातस्य धर्म्यंशवाचकत्वेऽपि कृत्यादिविशिष्टकर्तृबोधकत्वरूपाभिधानस्य तत्र सत्त्वात्र चैत्रः पचतीत्यादौ तृतीयाऽऽपत्तिः। 'चैत्रः पचति भवति' इत्यादौ मुख्यविशेष्यतया तद्विवक्षायां चैत्रेण पचतीत्यादिप्रयोगापत्तिरित्यपि न, आश्रयातिरिक्ते विशेषणतया कृतिबोधनस्यैवानभिधानपदार्थत्वात्। तथाभिधानं च 'तिङ्कृत्तद्धितसमासैरेव' इति न पुनाभिधायकतया वृत्तिकृतोपात्ताः।

यद्यपि स्वतन्त्रव्यापार एव तृतीयादेरनुशासनम्, तथापि कृतिरूपकर्तृत्व एव लाघवाच्छक्तिः, व्यापारादौ तु एतयोरनुपमनुशासनस्यानादितात्पर्यमात्रग्राहकत्वालाघवसहकृतस्यैव तस्य शक्तिकल्पकत्वात्, व्यापारे तत्सत्त्वेऽपि गौरवेण तदसिद्धेः।

एवञ्च कृतिरूपकर्तृत्वबोधस्थले कारकान्तरव्यापारानधीनत्वं न प्रतीयत एवेति न तदन्तर्भावेण शक्तिः, प्रमाणाभावात्, व्यापारलाक्षणिककर्तृप्रत्ययेन लक्षणया तदन्तर्भावेण व्यापारबोधनादेव पूर्वोक्तातिप्रसङ्गस्य वारणात्। अन्यथा तदन्तर्भावेण कृतौ शक्तावपि पूर्वोक्तातिप्रसङ्गस्य दुष्परिहरत्वात्। 'घटो जायते' 'ओदनः सिध्यति' इत्यादौ घटादेः कारकत्वं कर्तृत्वं च सत्कार्यवादमवलम्ब्यैवोपपादनीयम्।

मुख्यं क्रियाकर्तृत्वं च न तदनुकूलकृतिमात्रम्, एकक्रियाविषयककृतेर्यत्र नान्तरीयकक्रियानिर्वाहस्तत्र तत्क्रियाकर्तृत्वाव्यपदेशात्। किन्तु तत्क्रियाविषयकत्वे सति तदनुकूलकृतिस्तत्कर्तृत्वम्। गुरुतरभारोत्तोलनादौ तु यत्र क्रियाया अनिष्पत्तिस्तत्र गतिरुक्तैव। अन्योद्देशेन नाराचक्षेपाद् यत्र ब्राह्मणवधस्तत्र मरणानुकूलनाराचक्षेपरूपव्यापारस्य कृतिविषयत्वेऽपि हिंसालक्षणस्योद्देश्यताघटिततया तस्य विप्रमरणानुकूलव्यापारत्वेनानभिसंहितत्वात्तेन रूपेण कृतिविषयत्वस्य तादृशव्यापारे असत्त्वेन न ब्राह्मणत्वविशिष्टवधकर्तृत्वं तादृशव्यापारकर्तुरिति न सम्पूर्णं प्रायश्चित्तं तस्येति।

कर्तृविभागमाह—❀ अयञ्चेति ❀ अनुपद तृतीयार्थत्वेन निरुक्तः, कर्तेत्यर्थः। ❀ शुद्ध इति ❀ हेतुत्वकर्मकर्तृत्वानधिकरणमित्यर्थः। प्रेरणार्थकणिच्प्रकृतिधातूपात्तव्यापाराश्रय इति यावत्। ❀ हेतुरिति ❀ णिजर्थप्रेरणाश्रय इत्यर्थः। ❀ कर्मकर्तेति ❀ धातूपात्तव्यापाराऽऽश्रयत्वे सति णिजर्थव्यापारेणाऽऽप्यमानत्वेन विवक्षित इत्यर्थः। क्रमेणोदाहरणान्याह—❀ मया हरिः सेव्यत इत्यादिना ❀ अत्र व्यापारविशेषकबोधोत्कार्थेनं तु कैयटानुसारेण। तदं तु मागे-

मदभिन्नाश्रयको हरिकर्म्मकसेवनानुकूलो व्यापारः, हर्य्यभिन्नाश्रयक उत्पादनानुकूलो व्यापारः, गोकुलकर्मकगमनानुकूलकृष्णाश्रयकतादृशव्यापारानुकूलो व्यापार इति शाब्दबोधाः। करणतृतीयायास्त्वाश्रयव्यापारौ वाच्यौ। तथाहि—"साधकतमं करणम्" (पा० सू० १।४।४९)। तमबर्थः प्रकर्षः। स चाव्यवधानेन फलजनकव्यापारवत्ता।

प्रभा

धानाद्दोषतादवस्थ्यम्, तथाच कर्मत्वत्वादीन् धर्मानादाय विभागपदार्थोपपत्तेः, उपधेयसाङ्कर्येऽपि उपाधीनामसाङ्कर्यात्। मदभिन्नेति—आश्रयस्तृतीयार्थस्तत्राभेदेन मदर्थस्यान्वयः। आश्रयस्य च निष्ठत्वसम्बन्धेन धात्वर्थव्यापारेऽन्वयः। कर्मप्रत्ययार्थोऽप्याश्रयस्तत्र हरेरभेदेनान्वयः, आश्रयस्य च वृत्तित्वसम्बन्धेन सेवायाम्, सेवायाश्चानुकूलत्वसम्बन्धेन व्यापारेऽन्वय इत्याह—मदभिन्नेति। एवमग्रेऽप्यूह्यम्। कर्मणि प्रत्यये फलमुख्यविशेष्यक एव बोध इति नव्यमते मदभिन्नाश्रयनिष्ठव्यापारजन्या हर्यभिन्नाश्रयनिष्ठा च सेवेत्यादिरूपेण बोधः। सेवा = पादसंवाहनादिरूपा, प्रीतिरूपा वा।

ननु करणतृतीयाया आश्रयव्यापारयोर्वाच्यत्वे मानाभाव, साधकतमस्यैव करणसंज्ञाविधानादित्याशङ्कायामाह—तथाहीति। प्रकर्ष इति—प्रकर्षश्च कारकान्तरापेक्षया, नतु करणान्तरापेक्षया, कारकसामान्यवाचकसाधकशब्दात्तमपो विधानात्। तेन 'देवदत्तोऽश्वेन दीपिकया पथा गच्छति' इति प्रयोगः सिध्यति। करणान्तरापेक्षया प्रकृष्टस्य करणत्वे तु युगपदेकस्यैव करणत्वं स्यात्, एकस्यैव कस्यचित्प्रकृष्टत्वात्। स च = प्रकर्षश्च। अव्यवधानेनेति—अव्यवधानेन फलजनको यो व्यापारस्तद्वत्तेत्यर्थः। ननु सर्वेषां कारकाणां विवक्षया करणत्वमिति 'करणम्' इत्येव सूत्रमस्तु कारकपदानुवृत्त्या कारकं करणसंज्ञं स्यादित्यर्थेनैव साधकत्वे लब्धे साधकग्रहणमेव प्रकर्षपरं भविष्यतीति तमब्ग्रहणं व्यर्थमिति चेन्न, तेनैव व्यर्थेन सता 'कारकाधिकारे शब्दसामर्थ्यलभ्यः प्रकर्षो नाश्रीयते' इति ज्ञापनात्। तेन गौणाधारस्यापि अधिकरणसंज्ञा सिध्यति। एवञ्च यद्व्यापाराव्यवधानेन फलनिष्पत्तिस्तस्य करणत्वं फलति। तथाच सर्वाण्यपि कारकाणि विवक्षया करणानि। तदुक्तं हरिणा—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥
वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः॥ इति॥

दर्पणव्याख्या

वावोचामः। ❀ आश्रयव्यापाराविति ❀ आश्रयविशिष्टव्यापारशक्तौ तु एकदेशान्वयप्रसङ्ग इति भावः।

ननु व्यापारस्य धातुत्वेनैव लाभात् तत्र शक्तिकल्पनमपार्थमित्याशङ्क्यैकस्य कर्तृनिष्ठव्यापारस्य धातोर्लाभेऽप्यनुभूयमानकरणनिष्ठव्यापारस्य पदार्थत्वमन्तरेण शाब्दविषयतानुपपत्त्या शक्तिरावश्यकी। आख्यातान्निवृत्तिभेदाया एव क्रियाया अवगमाद् व्यापारद्वयस्य धात्वर्थत्वासम्भवाच्चेत्यभिप्रेत्य स्वोक्तार्थस्य सप्रमाणतां दर्शयितुं करणसंज्ञाप्रतिपादकं सूत्रमुपन्यस्यति —❀ तथाहीत्यादिना ❀। साधकतममिति सूत्रस्य कारकाधिकारीयत्वात् सूत्रोपात्तसाधकशब्दादेव प्रकर्षलाभेऽपि गौणाधारे अधिकरणसंज्ञाफलकस्य 'कारकप्रकरणे शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते' इत्यर्थस्य बोधनाय तमबुपादानमिति सूचयन्नाह ❀ तमबर्थः प्रकर्ष इति ❀ प्रकर्षश्च—कारकान्तरापेक्षः, नतु करणान्तरापेक्षः, कारकसामान्यवाचिसाधकशब्दादुपपन्नेन तमपा तदवधिकप्रकर्षस्यैव द्योतनात्। तेनाश्वेन दीपिकया व्रजतीति प्रयोगोपपत्तिः, अन्यथा करणान्तरापेक्षिकप्रकर्षस्य करणान्तरे अभावेन तदनुपपत्तेः।

तादृशव्यापारवत्कारणञ्च करणम् । उक्तञ्च वाक्यपदीये—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ।
वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥ इति ॥

'विवक्ष्यते' इत्यनेन सकृदनेकेषां तदभावाद् द्वितीयासप्तम्यादेरवकाशं सूचयति ।

प्रभा

नच व्यापारस्यापि करणतृतीयार्थत्वे कारिकायामाश्रयमात्रकथनमसङ्गतमिति वाच्यम्, आश्रयपदस्य व्यापारोपलक्षणत्वात् । तादृशेति—अव्यवधानेन फलजनकेत्यर्थः । अव्यवधानेनेत्यस्य फलन्तु यत्र राजा चक्षुषा चारपुरुषान् शत्रुसैनिकान् द्रष्टुं प्रवर्तयति तत्र 'राजा चक्षुषा शत्रुसैनिकान् पश्यति' इति प्रयोगवारणम्, चक्षुर्व्यापाराव्यवधानेन दर्शनरूपफलाभावात् । किन्तु 'राजा चारैश्शत्रुसैनिकान् पश्यति' इत्येव प्रयोगः । क्रियाया इति—फलस्येत्यर्थः । धात्वर्थफलस्य साध्यत्वेन प्रतीयमानत्वात्, क्रियते या सा क्रियेति व्युत्पत्त्या क्रियात्वेन व्यवहारः । तथाच 'रामेण बाणेन हतो वाली' इत्यत्र 'रामाभिन्नाश्रयवृत्तिव्यापारजन्यो बाणाभिन्नाश्रयवृत्तिव्यापारजन्यश्च यः प्राणवियोगस्तदाश्रयो वालीति बोधः । बाणस्याभेदेन तृतीयार्थाश्रये तस्याधेयतया तृतीयार्थव्यापारे तस्य जन्यत्वसम्बन्धेन प्राणवियोगे फले तस्याश्रयतया वालिन्यन्वयः । रामस्याभेदेन तृतीयार्थाश्रये तस्याधेयतया धात्वर्थव्यापारे तस्य जन्यतया फले तस्याश्रयतया वालिन्यन्वयः । परे तु करणतृतीयाया अपि आश्रय एवार्थः । आश्रयस्य च स्ववृत्तिव्यापारजन्यत्वसंसर्गेण फलेऽन्वय माहुः । करणत्वशक्तिमानस्यार्थ इति नव्याः । यत्र स्थले यदा यद्व्यापारानन्तरं फलनिष्पत्तिर्विवक्ष्यते तदा तत्=करणत्वादिपदकं करणं स्मृतम् आचार्यैः । सर्वाणि कारकाणि तादृशविवक्षया करणानि भवन्तीति भावः । वस्तुत इति—वस्तुतः=वस्तुविशेषे, सप्तम्यन्तात्तसि । अनिर्देश्यम्=स्वरूपतो निर्देष्टुमशक्यम् । तत्र हेतुमाह—नहीति—हि=यस्माद्धेतोस्तत्करणत्वं वस्तु व्यवस्थितं न=गोत्वादिवद् व्यक्तिविशेषे नियमेन विद्यमानं न । वस्तुविशेषमात्रे वृत्तित्वाभावे हेतुमाह—स्थाल्येति—अधिकरणत्वेन निश्चितापि स्थाली सन्तुतराधयवतया झटिति तप्तत्वेन स्वव्यापाराव्यवहितोत्तरपाकनिष्पादकतया विवक्षितत्वेन वैवक्षिकं करणत्वं तत्र जायते । सकृदिति—एककालमित्यर्थः । तदिति—करणत्वविवक्षाया अभावादित्यर्थः । अवकाशमिति—यदा काष्ठानामेव करणत्वविवक्षा न स्थाल्यास्तदा 'चैत्रः काष्ठैः स्थाल्यां पचति' इत्यादावधिकरणादिसंज्ञा

दर्पणव्याख्या

❀ तादृशेति ❀ फलेऽपरस्यव्यवहितपूर्ववर्तीत्यर्थः । परे तु—फलायोगव्यवच्छिन्नकारणत्वम् करणत्वम् । इत्थञ्चायेतरयावत्कारणसमवधाने सति यदव्यवहितोत्तरक्षणे फलनिष्पत्तिस्तत्त्वमिति यावत् । स एव तृतीयार्थः । सत्यन्तनिवेशाच्च क्षुपोऽन्धकारे फलायोगेऽपि न तत्राप्रसङ्गः । प्रयोजकेऽतिप्रसङ्गनिरासायाव्यवहितेति वदन्ति ।

तत्र हरिसम्मतिमप्याह ❀ उक्तञ्चेति ❀ । अत्र क्रियापदं फलपरम् । 'बाणेन हतः' इत्यत्र बाणव्यापाराव्यवहितोत्तरक्षणे प्राणवियोगरूपफलावश्यम्भावात्लक्षणसमन्वयः । ❀ विवक्ष्यते ❀ इत्यनेन विवक्षैव विभक्तौ प्रयोजिका, न वास्तवकरणत्वादिसत्तेत्युक्तम् । अत एव दात्रानादरेण बलस्य तत्त्वविवक्षायां बलेन लुनातीति प्रयोगः । ❀ वस्तुत इति ❀ यत इदमेव वस्तु करणमिति न नियमोऽत एव निश्चिताधिकरणत्वापि स्थाली सन्तुतरकपालत्वाद्वैवक्षिककरणत्ववतीत्यर्थः । ❀ अवकाशमिति ❀ तण्डुलं स्थाल्या पचतीत्यादौ करणत्वाविवक्षायां तत्तत्संज्ञाप्रवृत्तिर्द्वितीयादेरवकाशमित्यर्थः । तथाच काष्ठैः पचतीत्यादौ प्रकृत्यर्थकाष्ठादेरभेदेनाश्रयरूपतृतीयार्थेऽन्वयः । तस्य च स्वोत्पत्तिरैविध्यग समानप्रत्ययोपात्त

नचैवम् "कर्त्ता शास्त्रार्थवत्त्वात्" ( ब्र० सू० २ । ३ । ३३ ) इत्युत्तरमीमांसाधिकरणे

प्रभा

लब्धावकाशेति भावः । उक्तरीत्या सर्वेषां करणत्वेऽपि कारकान्तरविवक्षाकाले करणत्वविवक्षाया अभावेन
न सर्वेभ्यस्तृतीयापत्तिः ।

सर्वकारकाणां विवक्षया करणत्वे मीमांसाधिकरणविरोधमुद्भाव्य परिहरति—नचैवमिति । एवम्=
विवक्षाया एव नियामकत्वे । कर्त्तेति—तत्र हि कर्मणि कर्तृत्वं जीवस्य, बुद्ध्यात्मकविज्ञानस्य वेति सन्देहे
जीवस्यैव कर्तृत्वमित्युत्तरपक्षसाधकमिदं सूत्रम्—'कर्ता शास्त्रार्थवत्त्वात्' इति । अस्यायमर्थः—प्रवृत्ति-निवृ-
त्यात्मककर्मणो जीव एव कर्त्ता । शास्त्रार्थवत्त्वात्=शास्त्रस्य=विधिनिषेधात्मकस्यार्थवत्त्वात्=उपपन्नत्वात् ।
जीवस्य कर्तृत्वे हि विधिनिषेधात्मकं शास्त्रमुपपन्नं भवति ।

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसो येनोपदिश्येत शास्त्रं शास्त्रविदो विदुः ॥

इति शास्त्रलक्षणम् । नित्येन=वेदात्मकेन । कृतकेन=स्मृत्यात्मकेन । जीव एव विहितं कर्म कर्तुम्,
निषिद्धं कर्म च हातुं प्रभवेत् । उत्तरमीमांसेति— मीमांसाशास्त्रस्य कर्मकाण्डात्मको भागः पूर्वमीमांसाशब्दे-
न, ज्ञानकाण्डात्मको भाग उत्तरमीमांसा ( वेदान्त ) शब्देनोच्यते । अधिकरण इति—पूर्वोत्तरमीमांसाप्र-
सिद्ध एकार्थप्रतिपादको न्यायसमुदायः । अधिक्रियते निर्णयार्थो विचारोऽस्मिन्नित्यधिकरणम् । तत्र विषय-
संशय-पूर्वपक्ष-सिद्धान्त-निर्णयात्मकपञ्चाङ्गबोधकवाक्यसमुदायात्मकम् । तत्र विचारार्हं वाक्यं विषयः । १ ।
तदर्थविषये अयमर्थोऽस्य न वेति विकल्पः संशयः । २ । सन्दिह्यमानयोः पक्षयोरसत्पक्षे युक्तिप्रदर्शकं वाक्यं
पूर्वपक्ष । ३ । पूर्वपक्षोक्तयुक्तिं खण्डयित्वा सत्पक्षे युक्तिप्रदर्शकं वाक्यं सिद्धान्तः । ४ । ततश्चेत्यादिहेतु-
प्रदर्शकशब्देन सिद्धान्तसिद्धार्थोपसंहारकं वाक्यं निर्णयः । ५ । यद्यपि वाक्यात्मकमेव पञ्चाङ्गम्, तथापि

दर्पणव्याख्या

स्वप्रत्यासत्त्या व्यापाररूपतदर्थान्तरे आधेयतासम्बन्धेन फलोपहिततादृशव्यापारस्य च अनुकूलतासम्बन्धेन विक्लित्त्यनुकूल-
व्यापारे । एवञ्च काष्ठाभिन्नाश्रयको यः फलोपहितव्यापारस्तद्विशिष्टो विक्लित्त्यनुकूल एकाश्रयको वर्तमानो व्यापार इति
बोधः । वैशिष्ट्यं च धात्वर्थव्यापारे जन्यजनकभावसम्बन्धेन बोध्यम् । अत्र च 'सत्सन्निहितेषु सर्वेषु कारकेषु कर्त्ता प्रवर्त-
यिता भवति" इति सकलकारकव्यापारस्य कर्त्रधीनत्वप्रतिपादकम् "कारके" इति सूत्रस्थं भाष्यं प्रमाणम् ।
अपरे तु–'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्' इति वाक्यस्थानन्तरपदस्वारस्यात् तृतीयार्थव्यापारस्य
जन्यतासम्बन्धेन फलेऽन्वयः । तथाच जन्यतासम्बन्धेन काष्ठाश्रयकव्यापारविशिष्टविक्लित्त्यनुकूलो व्यापार इति बोधमाहुः ।
तृतीयार्थकरणत्वस्य व्यापार एवान्वय, शब्दशक्तिस्वभावात् फलांशे । अत एव मत्वर्थलक्षणया सोमादिपदस्य नामधेयत्वं
सिद्धान्तितम् । अन्यथा व्यापारं प्रति करणत्वेनान्विते फलांशे करणत्वेनान्वयोपपत्तौ लक्षणाया अप्रसङ्ग एव । अत एव
सोमेन यजेतेत्यत्र सोमपदस्य मत्वर्थे लक्षणेति मीमांसका इत्यन्ये । प्रकृत्यर्थान्वितस्य तस्य
वस्तुतस्त्वाश्रयोऽवधिरुद्देश्य इति मूलस्वारस्यात् करणतृतीयाया अप्याश्रयमात्रमर्थः ।
स्वनिष्ठव्यापारजन्यत्वसम्बन्धेन धात्वर्थव्यापारेऽन्वय इत्येव ज्यायः ।
नैयायिकास्त्वसाधारणं कारणं करणम् । कारणे असाधारण्यं च व्यापारवत्त्वमेव, ननु फलायोगव्यवच्छिन्नत्वम्,
तस्य यावत्कारणघटिततया गौरवेण तद्धर्मावच्छिन्ने शक्त्यसिद्धेः । स एव च प्रकर्षस्साधकतममिति तमपा बोध्यते ।
व्यापारश्च तज्जन्यत्वे सति तज्जन्यजनकत्वरूपः । एवञ्च जनकत्वस्याव्यवधानाघटितत्वेन लाभस्यान्तरीयकत्वान्न तत्र पृथक्श-
क्तिरिति व्यापारमात्रं करणतृतीयार्थस्तस्मिन् प्रकृत्यर्थस्याधेयतासम्बन्धेनान्वयः । शेषं पूर्ववदित्याहुः ।
कर्तृकरणशब्दयोरविरोध इति यावत् ।
एकस्मिन्नपि धर्मिणि कर्तृत्व-करणत्वयोरङ्गीकार इत्यर्थः ।
❀ एवमिति ❀

"शक्तिविपर्ययात्" इति सूत्रेणान्तःकरणस्य कर्तृत्वे करणशक्तिविपर्ययापत्तिरुक्ता न युज्येतेति वाच्यम्, "तदेवैतेषां प्राणानां विज्ञानेन विज्ञानमादाय" इति श्रुत्यन्तरे करणतया क्लृप्तस्य कर्तृतां प्रकल्प्य शक्तिविपर्ययापत्तिर्निष्प्रमाणा कल्प्येतेत्यभिप्रायात्।

प्रभा

तदर्थोऽपि तत्तच्छब्देन व्यवह्रियते, इत्यलं प्रासङ्गिकेन।

जीवस्य कर्तृत्वं प्रसाध्य विज्ञानस्य कर्तृत्वाभावसाधिकां युक्तिमाह—शक्तिविपर्ययादिति—'इतश्च विज्ञानव्यतिरिक्तो जीवः कर्ता भवितुमर्हति। यदि पुनर्विज्ञानपदवाच्या बुद्धिरेव कर्त्री स्यात्ततः शक्तिविपर्ययः स्यात्। करणशक्तिर्बुद्धेर्हीयेत। सत्याञ्च बुद्धेः कर्तृत्वशक्तौ तस्या एवाहम्प्रत्ययविषयत्वमभ्युपगन्तव्यम्' इति शाङ्करभाष्यम्। योऽहं धीगम्यः स कर्ता। अन्तःकरणस्येति—ननु बुद्धेरेव कर्तृत्वं भाष्ये आशङ्कितमित्यन्तःकरणस्येत्यसङ्गतमिति चेन्न, अन्तःकरणं बुद्धिपरिणामः, 'परिणामपरिणामिनोरभेदाद् बुद्धेरप्यन्तःकरणत्वा-दित्युक्तमन्तःकरणस्येति। शक्तिविपर्ययेति—विज्ञानस्य कर्तृत्वे करणत्वशक्तेर्विपर्ययः=व्यतिक्रमः स्यात् करणस्य कर्तृत्वात्। न युज्येतेति—भवन्मते करणस्यापि काष्ठस्य यथा 'काष्ठं पचति' इति कर्तृत्वं भवति इति न करणत्व—कर्तृत्वशक्तेर्विरोधस्तथेहापि बुद्धौ कर्तृत्व—करणत्वयोरविरोधे भाष्या- सङ्गतिः स्पष्टैव।

तदेतेषामिति—'यत्रैषः सुप्तोऽभूद्य एषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाश-स्तस्मिञ्छेते' इति। (बृ० अ० २ ब्रा० १ मा० १७) य एष पुरुषो विज्ञानमयो यत्र काले सुप्तोऽभूत् तदा (स्वापकाले) एषां प्राणानाम्=चक्षुरादीन्द्रियाणां विज्ञानम्=विज्ञानजननशक्तिं विज्ञानेन=मनसा=तज्जन्य-बुद्ध्यात्मकवृत्त्या आदाय य एषोऽन्तर्हृदय आकाशः=परमात्मा तस्मिञ्छेते इत्यर्थः। अत्र श्रुतौ करणतया क्लृप्तस्य विज्ञानस्य कर्तृत्वे शक्तिविपर्ययः स्यादिति भावः। तथाच क्लृप्तायाः करणत्वशक्तेस्त्यागः, कर्तृत्वशक्तेः कल्पनञ्चायुक्ते निष्प्रमाणके च स्यातामित्याशयः, नत्वेकत्रोभयशक्तेरसम्भवाभिप्रायेण सदुक्तिरिति तत्त्वम्।

एकत्र श्रुतौ करणतया क्लृप्तत्वेऽप्यन्यत्र श्रुतौ तत्कर्तृत्वविवक्षायां न किञ्चिद् बाधकमित्याशङ्कायामाह—

दर्पणव्याख्या

❀ शक्तिविपर्ययादिति ❀ "कर्ता शास्त्रार्थवत्त्वात्" इति सूत्रेण 'एष हि द्रष्टा श्रोताऽनुमन्ता बोद्धा विज्ञानात्मा पुरुषः' इत्यादीनां तथा कर्तुः कर्तव्यविशेषप्रतिपादकानाम् 'यजेत' 'जुहुयात्' इत्यादीनां च सार्थक्याय जीवस्य कर्तृत्वबोधिते बुद्धिप्रत्ययहार्यं विज्ञानमेवास्तु कर्त्रित्याशङ्कायां विज्ञानशब्दवाच्यबुद्धेः कर्तृत्वाभ्युपगमे लोके समर्थस्यापि कर्तुः सर्वार्थकारिकरणान्तरसापेक्षस्यैव कार्यकारित्वदर्शनेन विज्ञानपदव्यपदेश्यबुद्धेः करणशक्तिहान्यापत्तिरतस्तदतिरिक्तजीवस्यैव कर्तृत्वमुचितमित्यर्थप्रतिपादकेन "शक्तिविपर्ययात्" इति सूत्रेणेत्यर्थः।

❀ न युज्येतेति ❀ कर्तृकरणशक्त्योरविरोधस्यैव भवद्भिरभिधानादिति भावः। समाधत्ते—❀ तदेवैतेषामिति ❀। ❀ प्राणानाम् ❀ इन्द्रियाणाम्। ❀ विज्ञानम् ❀ ग्रहणशक्तिम्। ❀ विज्ञानेन ❀ विज्ञानशब्दवाच्येन मनसा तज्जन्यबुद्ध्यात्मकवृत्त्येति यावत्। ❀ आदाय ❀ गृहीत्वा हृदय स्वापे गच्छतीति श्रुत्यर्थः।

❀ करणतयेति ❀ विज्ञानेनेत्यत्र करणतया क्लृप्तस्येत्यर्थः। निष्प्रमाणेत्यादे कर्तरि करणत्वानिर्वाकारेऽपि द्वयोः शक्त्योरेकदा विवक्षायामसम्भवेन "विज्ञानं यज्ञं तनुते" इत्यादौ कर्तृत्वविवक्षायां करणे शक्तिविवक्षाप्रयुक्तविज्ञानेनेति तृतीयान्तनिर्देशादुपादानासम्भवेन शक्तिविपर्ययप्रसङ्गाभावादित्याशयादित्यर्थः।

नन्विदमयुक्तम्, आपादकप्रतिपादकग्रन्थस्यैवापत्त्यापाद्यप्रतिपादकत्वासम्भवात्, आपत्तेः प्रातिकपुरुषारम्भकात्-

वस्तुतस्तु अभ्युच्चयमात्रमेतदिति "यथा च तक्षोभयथा" ( ब्र० सू० २ । ३ । ४० ) इत्य-
धिकरणे भाष्य एव स्पष्टमित्यादि प्रपञ्चितं भूषणे ॥

प्रभा

वस्तुतस्त्विति। अभ्युच्चयमात्रमिति—प्राधान्येन तात्पर्य्यविषयीभूतार्थप्रसङ्गाद्यत्रार्थान्तरस्यापि सम्बन्धप्रतीतिः
सोऽभ्युच्चयोऽन्वाचयो वा। प्रकृते जीवस्य कर्तृत्वं साधितम्, तत्स्वाभाविकम्, उपाधिनिमित्तं वेति विचा-
र्य्यते—न स्वाभाविकं कर्तृत्वमात्मनः सम्भवति, अनिर्मोक्षप्रसङ्गात्। कर्तृत्वस्वभावत्वे ह्यात्मनो न कर्तृत्वा-
न्निर्मोक्षः सम्भवति, अग्नेरिवौष्ण्यात्। तस्मादुपाधिधर्माध्यासेनैवात्मनः कर्तृत्वं न स्वाभाविकम्। तथाच
श्रुतिः—'ध्यायतीव लेलायतीव' इति।

आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः। इति।

'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्'
एभिर्वैदिकवाक्यैः सोपाधिकस्यैव कर्तृत्वं लभ्यते।

अत्र दृष्टान्तमाह—यथेति—'यथा च तक्षा' इति सूत्रं दृष्टान्तपरम्। चशब्दस्त्वर्थे। यथा तु तक्षा
लोके वास्या ( वसिला ) दिकरणहस्तः कर्ता दुःखीभवति; स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थः
निर्वृत्तो निर्व्यापारः सुखीभवति। एवमद्वैतप्रत्युपस्थापितद्वैतसम्पृक्त आत्मा स्वप्नजागरितावस्थयोः कर्ता =
दुःखीभवति। स तच्छ्रमापनुत्तये स्वमात्मानं परं ब्रह्म प्रविश्य विमुक्तकार्यकरणसंघातोऽकर्ता = सुखीभवति
सम्प्रसादावस्थायाम्। तथा मुक्त्यवस्थायामविद्याध्वान्तं विद्याप्रदीपेन विधूयात्मैव केवलो निर्वृत्तः सुखी
भवति। तक्षदृष्टान्तश्चैतावतांशेन द्रष्टव्यः। तक्षा हि—तक्षणादिव्यापारेषु अपेक्ष्यैव प्रतिनियतानि करणानि
वास्यादीनि कर्ता भवति, स्वशरीरेण त्वकर्तैव। एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मन आदीनि करणानि
कर्ता भवति, स्वात्मना त्वकर्तैव। एवञ्च शक्तिहान्यापत्तिरूपदूषणम्। 'बटो! भिक्षामट गाञ्चानय' इत्यत्र
प्राधान्येन तात्पर्यविषयगवानयनवत्तादृशतात्पर्याविषय एव शक्तिहान्यापत्तिरूप दूषणम् इति तद्विरोधोऽ-
किञ्चित्कर एव। प्रकृते जीवस्यौपाधिकं कर्तृत्व नतु स्वाभाविकमित्येव प्राधान्येन तात्पर्यविषयीभूतं नतु
शक्तिविपर्य्ययापत्तिरूपं दूषणमिति तस्यान्वाचयशिष्टत्व स्पष्टमेवेति भावः। यद्वा बुद्धेः करणत्वशक्तिविपर्यासे
न भाष्यतात्पर्यम्, किन्तु पराभ्युपगतबुद्धिकर्तृत्वनिरास एवेति दिक्।

दर्पणव्याख्या

❀ वस्तुतस्त्विति ❀। ❀ अभ्युच्चयमात्रमेतदिति❀ एतत् = शक्तिहान्यापत्तिरूपं दूषणम्। मात्रपदेन
त्वाच्चेत्यत आह—❀ वस्तुतस्त्विति ❀। अभ्युच्चयत्वञ्च तात्पर्यज्ञानविषयार्थसन्निहितत्वम्, उपेक्षाविषयत्व वा। तथ बुद्धेः करणशक्ति-
तात्पर्यविषयत्वस्य व्यवच्छेदः। अभ्युच्चयत्वञ्च तात्पर्यज्ञानविषयार्थसन्निहितत्वम्, उपेक्षाविषयत्व वा। तथ बुद्धेः करणशक्ति-
तात्पर्यविषयत्वस्य व्यवच्छेदः। अभ्युच्चयत्वञ्च तात्पर्यज्ञानविषयार्थसन्निहितत्वम्। दृष्टान्तप्रतिपादकसूत्राद् बुद्धेः कर्तृत्वनिरासस्यैव मुख्यत्वावगतेरिति भावः।
विपर्ययेऽस्ति। दृष्टान्तप्रतिपादकसूत्राद् बुद्धेः कर्तृत्वनिरासस्यैव मुख्यत्वावगतेरिति भावः। नन्वेवं कर्तृत्वादिर्न युज्येतेति चेत् सत्यम्,
भूषणे तु तदेवैतेषामित्याद्यभिप्रायादित्यन्त. पाठो नास्त्येव। नन्वेवं कर्तृत्वादिर्न युज्येतेति चेत् सत्यम्, नतु निर्भर-
"अन्वाचयमात्रमेतद्" इति पाठः। अन्वाचयेनि विज्ञानशब्दार्थस्य जीवत्वे शक्तिविपर्य्ययापत्तिः सम्भाव्यते, नतु निर्भर-
स्तत्रेत्यर्थः। उपाधिवशेन परमात्मन्येव तत्सम्भवादिति भावः। तदेव विशदयति—❀ यथा चेति ❀ सूत्रे चशब्द-
स्त्वर्थे, पराभिमतबुद्धिकर्तृत्वनिरासार्थः। नहि परमात्मनोऽन्यो जीवो नाम कर्ता भोक्ता वा सम्भवति, विज्ञानशब्द-
मुक्तात्मनः कर्तृत्वाद्यसम्भवात्, अनिर्मोक्षप्रसङ्गाच्च।
किन्तु "ध्यायतीव लेलायतीव" इति श्रुतेरध्यस्तं तत्र वाच्यम्, अविद्योपस्थापितं तु तत् परस्यापि सम्भवति,
"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" इति श्रुतेः। विद्यावस्थायां तु तदभावः "यत्र त्वस्य सर्वमात्मैव स्यात्
किं केन पश्येत्" इति श्रुतेः। यथा तक्षा वास्यादिकरणहस्तः कर्ता दुःखीभवति, स एव गृहस्थो विमुक्तवास्यादिनि-

सप्तम्या अप्याश्रयोऽर्थः। "सप्तम्यधिकरणे च" ( पा० सू०२ । ३ । ३६ ) इत्यधिकरणे सप्तमी। तच्च "आधारोऽधिकरणम्" ( पा० सू० १ । ४ । ४५ ) इति सूत्रादाधारः। तत्त्वञ्चाश्रयत्वम्। तत्राश्रयांशः शक्यः, तत्त्वमवच्छेदकम्। नचाश्रयत्वमात्रेण कर्मकर्तृकरणानामाधारसंज्ञा स्यात्, स्यादेव, यदि ताभिरस्या न बाधः स्यात्। "कारके" ( पा० सू० १ । ४ । २३ ) इत्यधिकृत्य विहितसप्तम्याः क्रियाश्रय इत्येव यद्यपि तात्पर्य्यम्, तथाप्यत्र कर्तृकर्मद्वारा तदाश्रयत्वम-

प्रभा

सप्तमीति—यतोऽधिकरणे सप्तमी अत आश्रयोऽर्थ इत्यध्याहारेणान्वय उपपाद्यः। अन्यथा अनन्वयापत्तिः। तच्च = अधिकरणञ्चाधारः, 'आधारोऽधिकरणम्' इति सूत्ररूपप्रमाणात्। नन्वेवमपि सप्तम्या आधार एव शक्यो नत्वाश्रय आधारत्वाश्रयत्वयोर्भेदादित्यत आह—तत्त्वञ्चेति। तत्त्वञ्च = आधारत्वञ्च। आधारत्वमाश्रयत्वञ्चैकमेव, नतु तयोर्भेद इति भावः। आश्रयस्याधेये साकाङ्क्षतया 'कारके' इत्यधिकृतपदेनोपस्थितक्रिया एवाधेयतया सम्बध्यते। सा च धातुलभ्येति अनन्यलभ्य आश्रय एव शक्य इत्याह—आश्रयांशः शक्य इति। तत्त्वम् = आश्रयत्वम्। अवच्छेदकम् = शक्यतावच्छेदकम्। ननु क्रियाधारमात्रस्याधिकरणसंज्ञायां फलरूपक्रियाया आधारत्वेन कर्मणः, व्यापाररूपक्रियाया आधारत्वेन करणस्य कर्तुश्चाधिकरणसंज्ञा स्यादित्यत आह—नचेति। आधारसंज्ञेति—नचाधारसंज्ञायाः केनाप्यविहितत्वादिदमसङ्गतमिति वाच्यम्, आधारस्य विधीयमाना या अधिकरणसंज्ञा सा स्यादित्यर्थकत्वेनादोषात्। ताभिः = कर्म-कर्तृ-करणसंज्ञाभिः।

तथाच निरवकाशाभिस्ताभिरधिकरणसंज्ञाया बाधान्न तेषामधिकरणसंज्ञा। अत एव 'गृहं प्रविशति' 'मोक्षमिच्छति' इत्यादौ नाधिकरणसंज्ञा। 'ग्रामं गच्छति' इत्यादौ संयोगरूपक्रियायाः 'स्वाश्रयाश्रयत्व'सम्बन्धेन ग्रामवृत्तित्वेऽपि नाधिकरणत्वम्, ग्रामस्य संयोगरूपफलाधारत्वं विना चैत्रादिरूपकर्तृद्वारा क्रियाश्रयत्वासम्भवादन्तरङ्गत्वात्कर्मत्वेन बाधात्। नचाधिकरणसंज्ञयैव तासां बाधोऽस्त्विति वाच्यम्, अनेकशास्त्रबाधकल्पने गौरवात्, कर्म-कर्तृसंज्ञयोः परत्वेन विप्रतिषेधशास्त्रस्यापि बाधकल्पनायामतिगौरवाच्च। क्रियाश्रय इति—साक्षात् क्रियाश्रय इत्यर्थः। एवेन कर्तृकर्मद्वारा क्रियाश्रयकटादेर्व्यावृत्तिः। तथाच साक्षात्क्रियाश्रययोः कर्तृकर्मणोरेवाधिकरणसंज्ञा स्यान्न तु कटादेरिति तात्पर्य्यम्। साक्षात्क्रियाश्रययोः कर्तृकर्मसंज्ञाभ्यां बाधाद् अधिकरणसंज्ञाविधानसामर्थ्यात् परिशेषात् साक्षात् क्रियाश्रयौ ये कर्तृकर्मणी तयोराश्रयस्य कट-स्थाल्यादेरेवाधिकरणसंज्ञा अनेन विधीयते इत्याह—तथापीति। तदाश्रयत्वमिति—कर्तृकर्मवृत्तिव्यापारफलान्यतराश्रयत्वमि-

दर्पणव्याख्या

[illegible] तदर्थः। तथाच [illegible] तात्पर्यम्, ननु बुद्धेः [illegible] करणशक्तिपरित्याग इति न तद्विरोध इति भावः।

सप्तम्यर्थं निरूपयति—सप्तम्या अपीति। ननु तावता सूत्रादाधारस्य वाच्यत्वं लभ्यते, नाश्रयस्येत्यत आह—तत्त्वञ्चेति आधारत्वञ्चेत्यर्थः। आश्रयत्वमिति आश्रयत्वविशिष्टमित्यर्थः। [illegible] मेऽप्याश्रयांशो एव सा, ननु [illegible]। [illegible] आश्रयांशः शक्य इति। यद्वा—ननु तावता [illegible] क्रियाऽऽश्रयस्य [illegible] आह—आश्रयांश इति [illegible] एव शक्य इत्यर्थः। तत्त्वमिति आश्रयत्वमित्यर्थः। आश्रयत्वमात्रेणेति [illegible] भावः। कर्तृकर्मद्वारेति [illegible]।

स्त्वेन । ( नचैवमपि साङ्कर्यमेव स्यादिति वाच्यम् , निरूपकभेदेन भेदात् । फलनिरूपिताधारो द्वितीयार्थः, व्यापारनिरूपितस्तु तृतीयार्थः, कर्तृकर्मव्यापारफलनिरूपितः सप्तम्यर्थः ) । स्थाल्यादेर्भूतलकटादेश्चेति, 'स्थाल्यां पचति' 'भूतले वसति' 'कटे शेते' इत्याद्युपपद्यते । उक्तञ्च वाक्यपदीये—

कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।
उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥ इति ।

एतच्च त्रिविधम् औपश्लेषिकम् ,

प्रभा

त्यर्थ । उक्तार्थे हरिं प्रमाणयति—'कटे शेते' इत्यत्र कर्तृनिष्ठशयनरूपक्रियाया साक्षादधिकरणं कर्ता । एवम् 'स्थाल्या तण्डुलान् पचति' इत्यत्र विक्लित्त्यात्मकफलरूपक्रियाया साक्षादधिकरण कर्म एव । परन्तु कर्तृद्वारा अधिकरण कट , कर्मद्वारा अधिकरणञ्च स्थाली चाधार इति तयोरेवाधिकरणसंज्ञा, ननु साक्षात् क्रियाऽऽधारयो कर्तृकर्मणो , उक्तरीत्या ताभ्यामधिकरणसंज्ञाया बाधात्, तदाह—कर्तृकर्मव्यवहितामिति— कर्तृकर्मद्वारा क्रियाधारभूतामित्यर्थ । असाक्षादिति—स्वा ( क्रिया ) श्रयाश्रयत्वसम्बन्धेनेत्यर्थ । उपकुर्व दिति—परम्परया स्वस्मिन् वर्तमानक्रियया कर्तृनिष्ठप्रधानक्रियासिद्धौ उपकुर्वत् = सहायकमित्यर्थ । शास्त्रे = व्याकरणशास्त्रे । स्मृतमिति—इर्यादिभिरिति शेष ।

ननु कालस्य साक्षात्क्रियाधारत्वेन 'समये तण्डुलान् पचति चैत्र' इति न स्यादिति चेन्न, अत्र सूत्रे स्वरितत्वप्रतिज्ञया कालस्यापि परम्परया क्रियाश्रयत्वविवक्षायामेवाधिकरणत्वात् । साक्षादाधारत्वविवक्षाया 'समय पचति' इत्येवेष्टम् , 'भूतानि काल पचति' इतिवत् ।

अत्र कैयटदीक्षितादिप्राचीनमते अधिकरणकारकस्य परम्परासम्बन्धेन ( स्ववृत्तिवृत्तित्वसम्बन्धेन ) साक्षात्क्रियायामन्वय । नव्यमते अधिकरणस्य साक्षात् कर्तृकर्मणोरेवान्वय ,तद्द्वारा क्रियायामन्वय नतु साक्षात् क्रियायामिति विशेष । तथाच प्राचीनमते 'अक्षेषु शौण्ड ' इत्यत्र अक्षपदार्थस्य शौण्डेऽन्वयाभावात् समासो न स्यादिति शौण्डपदस्य आसक्तशौण्डे लक्षणा कृत्वा आसक्तिक्रियारूपे लक्ष्यार्थे शौण्डपदार्थैकदेशे साक्षादन्वयमादाय समास उपपाद्य । नवीनमते अक्षस्य शौण्डरूपे कर्तरि अन्वय , शौण्डस्य चासक्त्यादिक्रियायामन्वय इति न दोष इत्यन्यत्र विस्तर । एतच्च = अधिकरणञ्च । औपश्लेषिकमिति—उपगत श्लेष उपश्लेष = सयोग इति यावत् । अत्र 'उप' इत्यविवक्षितम् । यद्वा—उप = समीपे श्लेष – सयोग उपश्लेषस्तत आगत मौपश्लेषिकम् । 'तत आगत ' इत्यर्थेऽध्यात्मादित्वाट्ठञ् । यद्यपि उपश्लेषादागतमधिकरणत्व न त्वधिकरण तथापि धर्मधर्मिणोरभेदमादायाधिकरणेऽपि तथात्वम् । उपश्लेष = सयोग इति मते 'घटे गाव शेरते' 'गुरौ वसति' इति न स्यात् सयोगाभावादिति चेन्न, गोसयुक्तदेशसयोगस्य सयोगरूपतया तस्य च घटादौ सत्त्वेना-

दर्पणव्याख्या

तथाहि—कारकाधिकारीयेणैतेन क्रियाऽन्वय्याधारस्याधिकरणसंज्ञा विधीयते । क्रिया च धात्वर्थ । साक्षात्तदाधारयो परम्पया कर्तृकर्मसंज्ञाभ्यामाभा तवाद्दिद सूत्रमनवकाश सत् परम्परया धात्वर्थाश्रयस्याधिकरणसंज्ञाविधानेन चरितार्थम्, परम्पराघटके च कर्तृकर्मणी एवेति भाव । परया कर्मसंज्ञया बाधादेव 'मोक्षे इच्छास्ति' इतिवन्मोक्षे इच्छति भवतीति न प्रयोग ।

❀ औपश्लेषिकमिति ❀ सयोगसम्बन्धनिबन्धनमित्यर्थ । सामीप्यस्यापि सयुक्तसयोगरूपतया सयोगपदेन तस्यापि सङ्ग्रहात् आधेयव्याप्यताऽवच्छेदकयत्किञ्चिदवयवकमित्यर्थ ।

वैषयिकम्, अभिव्यापकञ्च। 'कटे शेते' 'गुरौ वसति' 'मोक्षे इच्छास्ति' 'तिलेषु तैलम्' इति। एतच्च "संहितायाम्" (पा० सू० ६। १। ७२) इति सूत्रे भाष्ये स्पष्टम्।

प्रभा

दीयात्। समीपे श्लेष इति पक्षेऽपि सामीप्यस्य संयुक्तसंयोगरूपतया तदवच्छेदेन संयोगस्य सत्त्वाद् गुर्वादावधिकरणत्वोपपत्तिः। 'इको यणचि' इत्यादावपि इङ्निरूपितकालिकसामीप्यावच्छेदेन संयोगस्याचि सत्त्वादौपश्लेषिकाधिकरणत्वम्। शब्दस्य गुणत्वपक्षे तु श्लेषपदेन सम्बन्धमात्रस्य ग्रहणात् 'स्वाव्यवहितोत्तरत्व' सम्बन्धेनौपश्लेषिकाधिकरणत्वं बोध्यम्। एकदेशावच्छेदेन श्लेषेऽप्यौपश्लेषिकम्। तत्र श्लेषस्य समीपमुपश्लेषम्। आरोपितश्लेष इत्यर्थः। तत आगतमौपश्लेषिकम्। एकदेशावच्छेदेन सम्बन्धस्यावयविनि आरोपः। यथा 'कटे शेते' इत्यत्रावयववृत्तिसंयोगस्य अवयविनि कटे आरोपः। तत्कृत कटात्मकमौपश्लेषिकमधिकरणम्।

वैषयिकमिति—विषयात्=विषयत्वसम्बन्धादागतं वैषयिकम्। औपश्लेषिकाभिव्यापकभिन्नाधिकरणमात्रं वैषयिकपदेन गृह्यते। अत एव तत्र तत्र घटपत्य समम्यर्थ इत्यादि सङ्गच्छते। अस्योदाहरणम्—'मोक्षे इच्छास्ति' इत्यादि।

अभिव्यापकमिति—सर्वावयवावच्छेदेनाधेयसम्बन्धाश्रय इत्यर्थः। 'अवच्छेदकत्वसम्बन्धावच्छिन्नाधेयत्वनिष्ठव्याप्यतानिरूपितसमवायसम्बन्धावच्छिन्नव्यापकताशालित्वम् अभिव्यापकत्वम्'। अवच्छेदकता यावदवयवनिष्ठा ग्राह्या, यथा 'तिलेषु तैलम्' इत्यत्र यावदवयवावच्छेदेन तिले तैलस्य सत्त्वात्। तैलनिष्ठाऽऽधेयता अवच्छेदकतासम्बन्धेन यावदवयवेषु, तत्रैव समवायसम्बन्धेन तिलस्यापि सत्ता अवयवावयविनो समवायनियमात्। तिल समवायसम्बन्धावच्छिन्नव्यापकताशालीत्यभिव्यापकत्व तस्मिन्। संयोगसम्बन्धेनौपश्लेषिकस्योदाहरणम्—'कटे शेते' इति। संयुक्तसंयोगेनोदाहरणम् 'गुरौ वसति' इति। छात्रसंयुक्तदेशसंयोगो गुरौ। वैषयिकस्य 'मोक्षे इच्छास्ति' इति। अभिव्यापकस्य 'तिलेषु तैलम्' इति 'दधि सर्पि' इति च। यावत्तिल-दध्यवयवावच्छेदेन तैल-सर्पि सम्बन्धस्य सत्त्वेनाभिव्यापकत्वोपपत्तिः। इदमेव मुख्यमधिकरणम्। एतद्भिन्नं सर्वं गौणम्। तदुक्तम् 'स्वरितेनाधिकारः' (१।३।११) इति सूत्रे भाष्ये—अधिकरणमाचार्यः किं न्याय्यं मन्यते, यत्र कृत्स्न आधारात्मा व्याप्तो भवति, तेनैव स्यात्—'तिलेषु तैलम्' दध्नि सर्पिः इति। 'गङ्गायां गावः' 'कूपे गर्गकुलम्' इत्यत्र न स्यात्। स्वरितेनाधिकं कार्यं भवतीत्यत्रापि सिध्यति' इति। भाष्ये स्पष्टमिति—तत्र हि अयं योगः शक्योऽवक्तुम्, कथम् 'अधिकरणं नाम त्रिप्रकारकम्, व्यापकमौपश्लेषिकं वैषयिकमिति। शब्दस्य च शब्देन कोऽन्यः सम्बन्धो भवितुमर्हति अन्यदतः उपश्लेषात्। 'इको यणचि' 'अचि उपश्लिष्टस्येति' इति।

दर्पणव्याख्या

※ वैषयिकमिति ※ विषयतासम्बन्धनिबन्धनमित्यर्थः। ※ अभिव्यापकमिति ※ आधेयव्याप्यतावच्छेदकयावदवयवकमित्यर्थः। तत्राद्यस्य कटे शेते, गुरौ वसतीत्युदाहरणे। द्वितीयस्य मोक्षे इच्छास्तीति अन्त्यस्यान्यम्। 'कटे शेते' इत्यत्र परम्परया कटाभिन्नाश्रयक शयनानुकूलो व्यापार इति बोधः। एवमन्यत्राप्यूह्यम्।

※ भाष्ये स्पष्टमिति ※ तत्र हि संहिताधिकारखण्डनाय 'अयं योगः शक्योऽवक्तुम्। अधिकरणं नाम त्रिप्रकारम्-व्यापकमौपश्लेषिकं वैषयिकमिति। इक्शब्दस्य अच्शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हत्यन्यदतः उपश्लेषात्। 'इको यणचि' उपश्लिष्टस्येति तमन्तरेण संहिताग्रहणं संहितायामेव भविष्यति' इत्युक्तम्। अत्रोपश्लिष्टपदाध्याहारेण सप्तम्यर्थे इदमेव भाष्यं मानम्। संहितायामित्युपलक्षणम्—'तत्र च दीयते कार्यं भववत्' इत्यादिसूत्रस्थभाष्यस्या

अवधिः पञ्चम्यर्थः, "अपादाने पञ्चमी" ( पा० सू० २ । ३ । २९ ) ( इति ) । सूत्रात् । तच्च "ध्रुवमपायेऽपादानम्" ( पा० सू० १ । ४ । २४ ) इति सूत्रात्। अपायः = विश्लेषस्तज्जनकक्रिया, तत्रावधिभूतमपादानमित्यर्थकादवधिभूतमिति भावः । उक्तञ्च वाक्यपदीये—

अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।

प्रभा

अपादाने पञ्चमीति—अस्य 'सूत्रात्' इति शेषः । तथाच अपादाने कारके पञ्चमी भवतीत्यर्थकात्
'अपादाने पञ्चमी' इति सूत्रादित्यर्थः । ननु सूत्रेण अपादानस्य पञ्चम्यर्थत्वलाभेऽप्यवधेः कथं तदर्थत्वलाभ
इत्यत आह—तच्चेति—अपादानञ्चेत्यर्थः । अस्य 'अवधिभूतम्' इति वक्ष्यमाणेनान्वयः । अपाय इति—
अत्र सूत्रे अपायपदं विश्लेषजनकक्रियापरम् । तदाह—अपायः = विश्लेषः = विभागः । तज्जनकक्रिया =
विभागजनकक्रिया । तत्र = विभागजनकक्रियायाम् 'अवधिभूतमपादानम्' इत्यर्थकादपादाने पञ्चमीति सूत्रा-
दवधिभूतम् । अनाश्रयः = विभागजनकधात्वर्थक्रियानाश्रयः । चलम् = जङ्गममश्वादि । अचलम् = स्थावरं
मामादि । एतेन ध्रुवपदं नात्र निश्चलार्थकम्, किन्तु अवधिभूतपरमिति सूचितम् । भूषणकारमते 'प्रकृतधा-
त्वर्थप्रधानीभूतव्यापारानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वं ध्रुवत्वम्' इष्टम् । नागेशमते च अपाये = गति-
विशेषे सति यद् ध्रुवम् = अवधिभावोपगमाश्रयत्वे सति तदतिरिक्तावधित्वोपयोगिव्यापारानाश्रयत्वं ध्रुव-

दर्पणव्याख्या

तत्राधिकरणत्रैविध्यप्रतिपादनादिति । संयोगादिरूपं
नैयायिकास्तु—'संयोगेनाऽऽधारः' समवायेनाऽऽधारः' इत्याद्यनुगतप्रतीतिबलादाधारत्वमखण्डोपाधि ।
तु न तत्, कुण्डसंयोगिनो बदरादेरपि कुण्डाऽऽधारतापत्तेः । कुण्डाधारताव्यवहारनियामकत्वानुपगमाच्चोक्तदोषः, न वा कुण्डे
ननु बदरप्रतियोगिकत्वविशिष्टसंयोगानुयोगितायाः कुण्डप्रतियोगिकत्वविशिष्टसंयोगानुयोगितायाश्चात्र
कुण्डसंयोगानुयोगितासत्त्वेऽपि कुण्डे कुण्डमिति प्रतीत्यापत्तिः, व्यवहारापत्तेरकाल्पवारणत्वेनोप-
विरहादिति चेदेवमपि मल्ले मल्लान्तरसंयोगसत्त्वे उक्तानुयोगिताश्रयत्वान्मल्ले मल्ल इति व्यवहारापत्तिः, नियामकनिरूपितस्य
प्रकारस्यैवानुसर्तव्यत्वात् । तथाच तादृशमाधारत्वम्, आधेयत्वं वा सप्तम्यर्थः । कस्याधारत्व इत्याकाङ्क्षायां
तस्य धात्वनुपस्थितत्वात् कर्तृकर्मणोराधार एव सेति तयोरेव तदन्वयः । ईदृशस्थले
एवञ्च 'भूतले घटः' इत्यादौ न यत्र क्रियाश्रवणं तत्रापि कारकत्वनिर्वाहाय तदध्याहारस्याऽऽवश्यकता । इत्यादौ सामर्थ्योपपत्तिः ।
परम्परासम्बन्धस्यापि क्रियाऽन्वयित्वरूपकारकत्वघटकता, शास्त्रप्रामाण्यात् । अत एव 'अक्षशौण्डः' इत्यादौ
एवञ्च भूतले घटोऽस्तीत्यत्र भूतलवृत्तिर्घटो वर्तमानसत्ताऽऽश्रय इति बोधः । नञ्समभिव्याहारे तु नारदाससम्बन्धाभावो
घटांशे भासते इत्याहुः ।

पञ्चम्यर्थं निरूपयति—* अवधिः पञ्चम्यर्थ इति * । * विश्लेष इति * विभाग इत्यर्थः । अवधित्वञ्च
प्रकृतधात्वर्थविभागजनकक्रियानाश्रयत्वे सति प्रकृतधात्वर्थजन्यविभागाश्रयत्वम् । वरणादिकारकेऽतिव्याप्तिवारणाय
विशेष्यम् । यत्किञ्चित्क्रियाजन्यविभागस्य तत्रापि सत्त्वादतिप्रसङ्गनादवश्यमतस्तद्विशेषणम् * तत्रेति * । एवञ्च
वृक्षात् पततीत्यादौ विभागजनकक्रिया पततत्यर्थः । यद्वक्ष्यति—यत्र धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयमिति । अधिकं
हरिपद्यव्याख्याऽवसरे ग्रन्थकृतैव स्फुटीकरिष्यते । यदहं निम्यमाह—* चलमित्यादि * । चलः = अश्वादिः,

* उदासीनम् * = विभागजनकक्रियानाश्रय ।

अचलः = ग्रामादिः ।

ध्रुवमेवातदावेशाचदपादानमुच्यते ॥
पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते ॥
उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे (के) ।
विभागे प्रविभक्ते तु क्रिये तत्र विवक्षिते (व्यवस्थिते) ॥
मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक् पृथक् ॥ इति ।

अस्यार्थः—अपाये = विश्लेषहेतुक्रियायाम्; उदासीनम् = अनाश्रयः, अतदावेशात् = तत्क्रियानाश्रयत्वात् । एवञ्च 'विश्लेषहेतुक्रियानाश्रयत्वे सति विश्लेषाश्रयत्वम्' फलितम् । 'वृक्षात् पर्णं पतति' इत्यत्र पर्णस्य तद्वारणाय सत्यन्तम् ।

प्रभा

त्वम् । अतएव "गतियुक्तेष्वपादानसंज्ञा नोपपद्यते—'रथात् प्रवीतात् ( प्रचलितात् ) पतित ' 'अश्वात् त्रस्तात् पतित ' 'सार्थाद् गच्छतो हीन ' इति । किं कारणम् ? अध्रुवत्वात् । नवा ध्रौव्यस्याविवक्षितत्वात् । नैष दोष, किं कारणम्, अध्रौव्यस्याविवक्षितत्वात्, नात्राध्रौ य विवक्षितम्, किन्तर्हि ध्रौव्यम्" इति भाष्य सङ्गच्छते । धात्वर्थव्यापारानाश्रयत्वस्य ध्रुवत्वे तु तदसङ्गत स्यात्, धात्वर्थव्यापाराश्रयत्वरूपस्य त्वदभिमताध्रुवत्वस्य रथादिष्वभावेन 'सतोऽध्रौव्यस्याविवक्षा' इति भाष्यस्यासङ्गत्यापत्तेरिति दिक् ।

अतदावेशात् = तत्क्रियानाश्रयत्वात् = तद्धात्वर्थक्रियानाश्रयत्वात् । शेखरमते तु 'अतदावेशात्' इत्य स्यावधित्वोपयोगिव्यापारस्याविवक्षितत्वादित्यर्थ । तदपादानमिति—तत् = ध्रुवम् = अवधिभूतमपादान मुच्यत इत्यर्थ । एवञ्चेति—अपाये ध्रुवमित्यनेन विश्लेषजनकक्रियानाश्रयत्वविवक्षणे चेत्यर्थ । विश्लेषा श्रयत्वमिति—धात्वर्थविभागाश्रयत्वमित्यर्थ । अपादानसमभिव्याहारे विभागोऽपि धात्वर्थो बोध्य । करणादिकारकेऽतिव्याप्तिवारणाय विश्लेषाश्रयत्वमिति विशेष्यदलम् । नच परत्वात्करणसंज्ञया बाध, अपादानात् करणसंज्ञाया पूर्वत्वात् । करणस्यापि यत्किञ्चिद्विभागाश्रयत्वेऽतिव्याप्तिवारणाय विश्लेषे प्रकृतधात्वर्थक्रियाजन्यत्व विशेषण देयम् । तथाच यत्किञ्चित्क्रियाजन्यविभागाश्रयत्वेऽपि करणस्य प्रकृतधात्वर्थक्रियाजन्यविभागाश्रयत्वाभावान्न दोष ।

यत्तु 'प्रयागत काशीं गच्छति' इत्यत्र काश्या अपादानत्ववारणाय धात्वर्थविभागाश्रयत्वमिति विभाग स्य गम्यर्थत्वाभावान्न दोष इति तन्न, परत्वात्कर्मसंज्ञया बाधात् । यद्वा धात्वर्थविभागसमानाधिकरणापादा नत्वशक्तिरिति बोधनायैव तदुपादानम् । नच विभागस्यापादानविषये धात्वर्थत्वस्वीकारे धात्वर्थफलशालि त्वात् प्रयागादे कर्मत्वापत्ति, तत्रानुयोगिताया एव फलतावच्छेदकत्वेन प्रयागस्य प्रतियोगित्वेन फलतावच्छे दकसम्बन्धेन फलाश्रयत्वाभावात् । अनुयोगितया कर्तु फलाश्रयत्वेऽपि कर्तृसंज्ञया परत्वाद् बाधान्न दोष । तद्वारणाय = अपादानत्ववारणाय । सत्यन्तमिति—तथाच पर्णस्य विभागानुकूलव्यापाराश्रयत्वात् नाति प्रसङ्ग । यद्यपि परत्वात्कर्तृसंज्ञया बाधान्नातिप्रसङ्गस्तथापि विभागसमानाधिकरणापादानत्वशक्तिरिति बोधन तात्पर्येणैव तन्निवेश । यद्वा सत्यन्तविशेषणाभावे कर्तृसंज्ञाया अपवाद एवेय स्यात्, अपायविषये यत्कारक

दर्पणव्याख्या

❀ तत्क्रियानाश्रयत्वादिति ❀ तद्विभागजनकतत्क्रियाऽनाविष्टत्वादित्यर्थ । ❀ क्रियाश्रयत्वादिति ❀ तथा भाष्यासिद्धिरिति भाव ।

'धावतोऽश्वात् पतति'इत्यत्राश्वस्य क्रियाश्रयत्वाद्विश्लेषहेतुरिति । 'कुड्यात् पततोऽश्वात् पतति' इत्यत्राश्वस्य विश्लेषजनकक्रियाश्रयत्वेऽपि तन्न विरुद्धमित्याह—यस्मादश्वादिति । तद्विश्लेषहेतुक्रियानाश्रयत्वे सतीति विशेषणीयमिति भावः । एवमश्वनिष्ठक्रियानाश्रयत्वात् कुड्यादेरपि ध्रुवत्वमित्याह—तस्यापीति ।

उभयकर्मजविभागस्थले विभागस्यैक्यात् तद्विश्लेषजनकक्रियानाश्रयत्वाभावात् 'परस्परान्मेषा-

प्रभा

…चरितार्था । ननु अपायशब्दो मुक्तापायरूपक्रियाश्रय तदपादानमित्यर्थात् । कर्तृसंज्ञा तु पचत्यादियोगे चरितार्था । ननु अपायशब्दो विभागार्थक एवास्तु, नतु तज्जनकक्रियापर । 'अपाये' इति च सती सप्तमी । तथाच प्रकृतधात्वर्थविभागाश्रयत्वे सति यत्कारक तदपादानमित्यर्थेनैव संज्ञा कर्तृसंज्ञाया अपवादिका न स्यात्, प्रयागादौ चरितार्थत्वात् । एवञ्च परया कर्तृसंज्ञया बाधाच्च कर्तव्येति व्याप्तिरिति चेन्न, विभागसमानाधिकरणापादानत्वशक्तिरिति तात्पर्यबोधनद्वारा तस्य स्पष्टार्थत्वात् ।

विश्लेषहेतुत्वनिवेशस्य फलमाह—धावत इति—क्रियानाश्रयत्वमात्रस्य लक्षणे निवेशेऽश्वस्य धावनक्रियाश्रयत्वेनापादानत्वं न स्यात् । क्रियायाम् 'विश्लेषहेतु' इति विशेषणे तु पतधात्वर्थक्रियाया एव विश्लेषहेतुत्वात्, तस्याश्च चैत्रादौ सत्त्वाद् धावनक्रियाश्रयत्वसत्त्वेऽप्यश्वस्यापादानत्वसिद्धि । धावनन्तु न विभागे हेतु, तदभावेऽपि विभागदर्शनादन्यथासिद्धत्वाच्च । ध्रुवपदस्य तात्पर्यार्थतात्पर्यग्राहकत्वार्थमेव सूत्रे 'अपाये' इत्यस्योपादानम् । अन्यथा ध्रुवपदेन स्थिरस्यैव ग्रहणापत्त्या तदुभयोः । नच विश्लेषहेतुगानुपपत्ति । कुड्यात् पततो यस्मादश्वादसौ चैत्रादि पतति सोऽश्वो ध्रुव एव । नच विश्लेषहेतुचैत्रादिनिष्ठपतनक्रियाजन्य पतनक्रियाश्रयत्वादपादानत्वानापत्ति, विश्लेषस्य तद्व्यक्तित्वेनैव लक्षणे निवेशेन चैत्रादिनिष्ठपतनक्रियाजन्य विश्लेषजनकव्यापारस्य चैत्रादावेव सत्त्वेन तत्क्रियानाश्रयत्वस्याश्वे सत्त्वेनापादानत्वोपपत्ते । एवमश्वनिष्ठपतनक्रियाजन्यविभागस्य, तज्जनकक्रियानाश्रयत्वस्य च कुड्ये सत्त्वेन कुड्यस्याप्यपादानत्वसिद्धि । तद्वि तत्=अपादानत्वम् । न विरुद्धम्=पतत्यश्वे न बाधितम्, विश्लेषसामान्यस्य लक्षणेऽप्रवेशात् । तद्विश्लेषेति—यद्विश्लेषावधित्व तद्विश्लेषव्यक्तिरित्यर्थ । अश्वनिष्ठेति—अश्व-कुड्यनिष्ठविभागजनिका क्रियाऽश्वनिष्ठेति तद्विभागजनकक्रियानाश्रयत्वात्कुड्यस्यापादानत्वम् । अश्वचैत्रनिष्ठविभागजनकक्रियाया चैत्रवृत्तित्वेनाश्वस्य तदनाश्रयतयाऽपादानत्वम् ।

उभयकर्मजेति—मेषद्वयनिष्ठक्रियाद्वयजन्यो विभागो यत्र एक एव तत्र मेषद्वयस्यापि एवविश्लेषव्यक्तिहेतुक्रियाया उभयत्र मेषे सत्त्वेनापादानत्वानापत्तिरित्याशङ्क्य परिहरति—उभावपीति । उभयकर्मजे=उभयनिष्ठक्रियाजन्ये । विभागे=एकस्मिन् विभागे । उभावपि मेषावध्रुवौ—तद्विश्लेषजनकक्रियानाश्रयत्वाभाववन्तौ=तादृशक्रियाश्रयत्ववन्तावेवेत्यपादानत्वानापत्तिरित्याशङ्का । प्रविभक्ते तु क्रिये तत्र विवक्षिते—तत्र=एकस्मिन् विभागे सति । क्रिये तु प्रविभक्ते=पृथग्भूते एव विवक्षिते । वाक्यपदीये

दर्पणव्याख्या

* विशेषणीयमिति * तथाच विभागस्तत्तद्व्यक्तित्वेन निवेशनीय इति भाव । समाधत्ते—* प्रविभक्ते त्वित्यादिना * तत्त मेषवृत्तित्वविशिष्टत्वेन भिन्नतयाऽवगते इत्यर्थं । * व्यवस्थिते इति * तत्तन्मेषवृत्तित्व विशिष्टविभागजनकक्रिये तत्तन्मेषानाश्रिते भवत एवेत्यर्थं । तदेवाऽऽह * मेषान्तरक्रियापेक्षमित्यादीति * । * अवधित्वम् * तद्विभागजनकतत्क्रियानाश्रयमित्यर्थं । परस्परपदोपात्तयोरुपादानत्वम् तत्तत्क्रियाश्रयत्वान्मेषयोरेवास्तो

वपसरतः' इति न स्यादित्याशङ्क्य समाधत्ते—उभावपीति । मेषान्तरेति—यथा निश्चलमेषादपसरद्द्वितीयमेषस्थले निश्चलमेषस्यापसरन्मेषक्रियामादाय ध्रुवत्वम्, तथात्रापि विभागैक्येऽपि क्रियाभेदादेकक्रियामादाय परस्य ध्रुवत्वमिति । तथाच 'विश्लेषाश्रयत्वे सति तज्जनकतत्क्रियानाश्रयत्वं तत्क्रियायामपादानत्वम्' वाच्यम् । क्रिया चात्र धात्वर्थः, नतु स्पन्दः । तेन वृक्षकर्मजविभागवति वस्त्रे, 'वृक्षाद् वस्त्रं पतति' इति सङ्गच्छते ।

प्रभा

भूषणे च 'विवक्षिते' इत्येव पाठः । 'व्यवस्थिते' इति पाठे तु प्रविभक्ते=तत्तन्मेषवृत्तित्वविशिष्टत्वेन भिन्नतया प्रतीते । एकमेव ब्राह्मणत्वं यथा चैत्रवृत्तित्वविशिष्टत्वेन चैत्रे एव । एवमेकाऽपि क्रिया तत्तद्वृत्तित्वविशिष्टत्वेन व्यवस्थिता एव तत्तदनाश्रितैव । एतन्मेषवृत्तित्वविशिष्टक्रियाया मेषान्तरेऽभावेनापादानत्वसूपपादमेवेति भावः । निश्चलमेषादिति—यत्र एको मेषो निश्चलः=विश्लेषजनकक्रियाया अनाश्रयस्तस्मान्मेषात् अपसरन्=विभागजनकक्रियाश्रयो यो मेषस्तत्क्रियामादाय निश्चलमेषस्य ध्रुवत्वम् । तथा तत्तन्मेषवृत्तिक्रियाया व्यक्ते' तद्व्यक्तित्वेन भिन्नतयोभयोस्तत्क्रियानाश्रयत्वेनापादानत्वम् । तद्विश्लेषजनकक्रियात्वावच्छिन्नप्रतियोगिताकाभावस्यासत्त्वेऽपि तद्विश्लेषजनकक्रियानिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावस्य 'तत्क्रिया नास्ति'इत्याकारकस्य तत्तन्मेषे सत्त्वान्न कश्चिद्दोष इति भावः । तथाच=तत्तत्क्रियायास्तद्व्यक्तित्वेन लक्षणे निवेशो च । तज्जनक=विश्लेषजनक । तत्क्रिया=सा चासौ क्रिया च तद्व्यक्तिरूपा या क्रिया तदनाश्रयत्वम् ।। तथाच तद्विश्लेषजनकक्रियाव्यक्तिं तद्व्यक्तित्वेनादाय तदनाश्रयत्वनिवेशादेकमेषस्य तद्विश्लेषजनकमेषान्तरसमवेतक्रियाव्यक्त्यनाश्रयत्वान्नानुपपत्तिरपादानत्वस्येति बोध्यम् ।

वस्तुतस्त्वाश्रयभेदेन क्रियाभेदसत्त्वेऽपि न तद्व्यक्तित्वेन क्रियायाः प्रतीतिः । अत एव सरूपसूत्रे भाष्ये 'न वै तिङन्तानि एकशेषारम्भं प्रयोजयन्ति' इत्युक्तम् । तथाच तिङन्ते निवृत्तिभेदाया एव क्रियाया धातुनोपस्थापनान्नोक्तरीत्या 'परस्परान्मेषावपसरतः' इत्यत्र दोषपरिहारसम्भवः । तस्मात् शब्दभेदेनार्थभेदमाश्रित्य मेषशब्दविशिष्टयोरर्थयोर्विभागानुकूलधात्वर्थव्यापाराश्रयत्वेन विवक्षितत्वात्कर्तृत्वम् । परस्परपदविशिष्टमेषार्थस्य विश्लेषजनकक्रियानाश्रयत्वेन विवक्षितत्वादपादानत्वमित्येव न्याय्यम् । अन्तःकरणादिरूपोपाधिभेदेनाऽऽत्मभेदवत् शब्दभेदेनापि भेदस्य वक्तुं शक्यत्वादित्यलम् । ननु वृक्षकर्मणैव विभागोत्पत्तिस्थले 'वृक्षाद् वस्त्रं पतति' इत्यस्यानुपपत्तिः, वृक्षस्य विभागजनकक्रियाश्रयत्वादत आह—क्रिया चात्रेति । धात्वर्थ इति—प्रकृतधातुवाच्यैव क्रिया अत्र गृह्यते, नतु स्पन्दः=यथाकथञ्चित् प्रतीयमानव्यापारमात्रम् । तथाच वृक्षक्रियाया विभागजनकत्वेऽपि धात्ववाच्यत्वाद् धातुवाच्यक्रियानाश्रयत्वादपादानत्वोपपत्तिः ।

अत्रेदमप्यवधेयम्—वृक्षमजहत्यपि पर्णे यत्र फलभारेण शाखाया न्युब्जत्वेन पर्णभूमिसंयोगस्तत्र 'वृक्षस्य पर्णं भूमिं पतति' इति प्रयोग इष्यतेऽतः पतधात्वर्थोऽधःसंयोगानुकूलक्रियामात्रम्, नतु विभागोऽपि

दर्पणव्याख्या

कर्तृत्वञ्चोपपद्यत इत्यर्थः । तत्तद्व्यक्तित्वेनापि धात्वर्थक्रियाविशेषणीयेत्याह—❀ क्रिया चेति ❀ । ❀ धात्वर्थ इति ❀ प्रकृतधात्वर्थ इत्यर्थः । ❀ नतु स्पन्द इति ❀ यथाकथञ्चित्प्रतीयमानक्रियाऽर्थेत्यर्थः । वृक्षकर्मजविभागवति वस्त्रे इत्युक्त्या वस्त्रद्वारकसम्बन्धेन क्रियाऽन्वयित्वं वृक्षस्य सूच्यते । 'क्रियाजनकत्वं कारकत्वम्' इति मते । तत्र वृक्षस्याऽपादानत्वं दुरुपपादमेव । ❀ सङ्गच्छत इति ❀ तादृशवृक्षनिष्ठक्रियायाः प्रकृतपतधात्वर्थत्वाभावेन तद्वति वृक्षे नात्याप्तिरिति भाव.।

वस्तुतो नैतावत् पञ्चम्या वाच्यम्,

प्रभा

पतत्यर्थः । 'वृक्षात् पर्णं पतति' इत्यत्र विभागप्रतीतिस्तु पञ्चम्या विभागे, आश्रये च शक्तिकल्पनयैव । अत एव त्यजति-पतत्योर्न पर्यायत्वम् । अधोदेशस्य धात्वर्थान्तर्गतत्वाज्जीवत्यादिवदकर्मकत्वन्तु न, अधोदेशस्योपलक्षणत्वेन धातुवाच्यत्वात् । पञ्चमीप्रकृत्यर्थस्याश्रयेऽभेदेनाश्रयस्य च विभागे आधेयत्वेनान्वयः । एकपदोपात्तत्वेऽपि परमते कृतीष्टसाधनत्वयोर्लिङर्थयोरिव व्युत्पत्तिवैचित्र्येणान्वयोऽनुभवबलादेव । विभागस्य

दर्पणव्याख्या

अत्र वदन्ति—पञ्चम्या आश्रय इव विभागोऽप्यर्थोऽविभागार्थकपतत्यादिसमभिव्याहारे करणतृतीयाया व्यापारवद् अनेकधातूनां विभागे शक्तिकल्पनापेक्षया एकस्याः पञ्चम्यास्तत्र शक्तिकल्पनायां लाघवात् । विभागस्य धात्वर्थत्वे द्वितीयादिस्थले इव विभागस्य धातुना लाभादाश्रयमात्रं पञ्चम्यर्थं इत्येव ब्रूयात्, अवधेराश्रयात् पृथगुपादानवैयर्थ्यात्, त्यजिपत्योः पर्यायतापत्तेश्च । प्रकृतेऽधोदेशसंयोगानुकूलक्रियैव पतत्यर्थः । अधोदेशश्च—संयोगांशे उपलक्षणम्, गम्युपात्तसंयोगफल उत्तरदेशवत्, विभागाधीनपूर्वदेशसंयोगनाशमन्तरेण क्रियायाः संयोगजनकत्वासम्भवात् । तस्याविभागजनकत्वमक्षुण्णमेव । समानप्रत्ययोपात्तत्वप्रत्यासत्त्या व्युत्पत्तिवैचित्र्येणाश्रयरूपपञ्चम्यर्थस्य विभागरूपापरतदर्थे आधेयतयाऽन्वय, तस्य चानुकूलतासम्बन्धेन पतत्यर्थक्रियायाम् । एवञ्च विभागस्य धात्वर्थत्वाभावाच्च कर्मताप्रसङ्गदोषोऽपि ।

यद्वा—अवधिरित्यनुगतव्यवहारादवधित्वमाश्रयत्वव्याप्यमखण्डोपाधिस्तदवच्छिन्न एव पञ्चम्यर्थः । अत एवावधेराश्रयात् पृथगुपादानम् । तस्य च स्वनिष्ठावधित्वनिरूपकविभागजनकत्वसम्बन्धेन क्रियायामन्वयः । एवञ्च पूर्वकल्पे 'वृक्षात् पर्णं पतति' इत्यत्र वृक्षाभिन्नाश्रयकविभागजनकपर्णाऽऽश्रयकसंयोगानुकूलव्यापार इति बोधः । द्वितीये तु वृक्षाभिन्नावधिविशिष्टा तादृक् क्रियेति । विभागजन्यसंयोगो विभागजनकक्रियाया न पतत्यर्थः, 'पत्लृ गतौ' इत्यनुशासनाद् गतिशब्दस्य गम्लृ गतावित्यादौ संयोगानुकूलव्यापार एव प्रसिद्धेः, त्यजार्थे गतिव्यवहाराभावाच्च, फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले च धातोः शक्तिमङ्गीकुर्वतः स्वोक्तफलत्वानाक्रान्तविभागस्य धात्वर्थव्यापारावच्छेदकत्वासम्भवाच्च ।

पततेः संयोगरूपफलार्थकत्वे ग्रामं गच्छतीतिवद् ग्रामं पततीत्यापत्तिरिति तु न, शाब्दशक्तिस्वाभाव्येन तदुपस्थितसंयोगस्याधोदेश एवान्वयात् । ग्रामस्य तत्त्वे तु 'विहगो ग्रामं पतति' इति स्विष्टमेव । अत एव 'नरकं पतितः' इति विग्रहे 'द्वितीया श्रित' इति पतितशब्दयोगे द्वितीयासमासविधानं सङ्गच्छते । न च वृक्षमनाहत्यापि पर्णं भूमिं स्पृशति, वृक्षात् पर्णं पततीत्यापत्तिः, तदुपस्थाप्यक्रियाजन्यदेशान्तरविभागे वृक्षावधिकत्वानुपगमात् । अन्यथा क्रियाजन्यसंयोगमात्रस्यैव विभागजन्यत्वेन भूमिपर्णसंयोगस्यापि तथात्वात् त्वन्मतेऽपि तादृशप्रयोगस्य दुर्वारतापत्तेः । अत एव

गतिर्विना त्ववधिना नापाय इति कथ्यते ।
वृक्षस्य पर्णं पततीत्येवं भाष्ये निदर्शितम् ॥

इत्यवध्यन्वययोग्यविभागानुकूलत्वं विना संयोगजनिका क्रिया नापायः । अत एव पर्णविशेषणतया वृक्षविवक्षायामपायस्याविवक्षणाद् वृक्षस्य पर्णं पततीत्यत्र भाष्ये षष्ठ्युक्तेत्येतदर्थकं हरिणोक्तम् । ( विभागजन्यसंयोगस्य पूर्वापरीभूतानवयवत्वेन च व्यापारत्वाभावेन विभागस्य तदुक्तफललक्षणानाक्रान्तत्वेन तदुभयार्थकस्य पततेर्धातुत्वानापत्तेश्च )।

यत्र च गृहादपसरतीत्यादौ विभाग एव धात्वर्थस्तत्राश्रय, अवधिमात्रं वा पञ्चम्यर्थः । तस्याधेयतया स्वनिष्ठावधित्वनिरूपकत्वेन वा यथायथं विभागेऽन्वयः । परस्परस्मान्मेषावपसरत इत्यादौ तु मेषपदवाच्यत्वावच्छेदेनैव कर्तृत्वविवक्षा, न परस्परवाच्यत्वावच्छेदेनेति न पञ्चम्यनुपपत्तिरिति ।

उक्तापादानत्वस्य पञ्चमीवाच्यतावच्छेदकत्वे गौरवं मनस्याधायाऽऽह—❀ वस्तुत इति ❀ ।

किन्तु अवधेर्लक्षणमात्रम्, द्वितीयार्थोक्तरीत्या प्रयोगातिप्रसङ्गस्यासम्भवेन वाच्यकोटौ प्रवेशस्य गौरवेणासम्भवाद् इति तु प्रतिभाति। नचैवमपि 'वृक्षात् स्यन्दते' इति स्यादिति शङ्क्यम्, 'आसनाच्चलितः' 'राज्याच्चलितः' इतिवद् इष्टत्वात्। एतेन पञ्चमीजन्यापादानत्वबोधे सकर्मकधातुजन्योपस्थितेर्हेतुत्वमिति समाधानाभासोऽप्यपास्तः।

## प्रभा

जनकत्वसम्बन्धेन धात्वर्थक्रियायामन्वयः। लक्षणमात्रमिति—अवधित्वस्य परिचायको धर्मः। किन्तु अवधिमात्रं पञ्चम्यर्थः, नतु तद्विश्लेषहेतुरित्यादि, गौरवात्। अवधित्वञ्चाखण्डोपाधिरूपम्। प्रकृत्यर्थस्यावधौ अभेदेनान्वयः, अवधेश्च 'स्वनिष्ठावधितानिरूपकत्व' सम्बन्धेन क्रियायामन्वयः। ग्रामस्याधोदेशत्वे तु 'ग्रामं पतति पतङ्गः' इतीष्टमेव, 'द्वितीया श्रित' इति भाष्ये 'नरकं पतितः' इतिवत्। ननु विभागाश्रययोः पञ्चम्यर्थत्वे पर्णस्यापि विभागाश्रयत्वात्पञ्चम्यापत्तिरित्यत आह—द्वितीयार्थोक्तरीत्येति—कर्मादिसंज्ञया बाधात् तदापत्तिः परिहरणीयेति भावः। एवम् = विभागाश्रयत्वस्यापादानसंज्ञानियामकत्वे 'वृक्षात् स्यन्दते' इति वृक्षस्य विश्लेषहेतुक्रियानाश्रयत्वे सति विश्लेषाश्रयत्वस्य सत्त्वादिति भावः।

*स्यन्दते* = स्रवति। अस्य जलमिति शेषः। इष्टापत्त्या दोषं परिहरति—*आसनाच्चलित इत्यादिदृष्टान्तेन*। चलधातोर्विभागानुकूलव्यापारार्थकत्वोपगमेन यथाऽवधित्वादपादानत्वं तथा स्यन्देरपि विभागानुकूलव्यापारार्थकत्वेनापादानत्वस्येष्टत्वमेवेति भावः। 'स्यन्दते' इति पाठे 'जलम्' इति शेषो बोध्यः। एतेन = इष्टत्वाङ्गीकारेण। अपादानत्वप्रकारकेति 'अपादानत्वनिष्ठप्रकारतानिरूपितविशेष्यता' सम्बन्धेन शाब्दबोधे इत्यर्थः। हेतुत्वमिति—विशेष्यतासम्बन्धेनेत्यर्थः। तथाच शाब्दबोधोपस्थित्योः सामानाधिकरण्यमुपपद्यत इति भावः। नच तादृशसमाधानाभासवादिनये 'वृक्षात् पर्णं पतति' इत्यस्यानुपपत्तिः, अकर्मकत्वादिति वाच्यम्, अधोदेशानुयोगिकसंयोगानुकूलव्यापारार्थकत्वेन पतेरपि सकर्मकत्वात्। अत एव 'कूपपतितः' इत्यादि 'द्वितीया श्रित' इति सूत्रे भाष्योक्तोदाहरणमुपपद्यते। विशेष्यतासम्बन्धेन धातुजन्योपस्थितेः कारणत्वम्, फलविशिष्टव्यापारवाचकत्वं धातूनामिति मतेन। फल-व्यापारयोः पृथक्शक्तिरिति नये तु भावनात्वविषयतासम्बन्धेनोपस्थितेः कारणत्वं बोध्यम्। अपास्त इति—'वृक्षात् स्यन्दते' इति प्रयोगवारणाय तादृशहेतुहेतुमद्भाव-

## दर्पणव्याख्या

लक्षणमात्रमिति ❀ मात्रपदेन वाच्यतावच्छेदकत्वव्यवच्छेदः। तथाच व्यावृत्त्यादिफलकं निरुक्तावधित्वमेव। पञ्चम्यर्थस्तु विभागाश्रयमात्रमेवेति भावः। ❀ द्वितीयार्थोक्तरीत्येति ❀ चैत्रो ग्रामं गच्छतीतिवच्चैत्रः स्वं गच्छतीति वारणाय परया कर्तृसंज्ञया बाधादित्युक्तरीत्येत्यर्थः। नन्वेवं वृक्षात् पर्णं पततीत्यत्र पर्णेऽपि विभागाश्रयत्वस्यावैकल्यात् तदुत्तरं पञ्चम्यापत्तिरत आह ❀ अतिप्रसङ्गस्येति ❀ स्यन्दस्य प्रस्रवणजन्यविभागाश्रयत्वस्य वृक्षे सत्त्वादतिप्रसङ्गमाशङ्क्य निषेधति—❀ नचेति ❀। एवमिति ❀ विभागाश्रयत्वमात्रस्यापादानसंज्ञानियामकत्वे इत्यर्थः।

❀ स्यादिति ❀ प्रस्रवणस्याधोदेशसंयोगानुकूलद्रवद्रव्यक्रियारूपतया विभागस्य व्यापार्याभावेन परमते आपादानसम्भवादित्याशयः। ❀ इष्टत्वादिति ❀ चलत्यर्थक्रियाजन्यविभागाश्रयत्वस्येवैतदर्थक्रियाजन्यविभागाश्रयत्वस्यापि पञ्चमीनियामकत्वे क्षतिविरहादित्यर्थः। चलतेर्गत्यर्थकत्वेऽपि 'राज्याच्चलितः' इति प्रयोगे विभागानुकूलव्यापारवाचकत्वम् स्यन्देरपि तदर्थकत्वमुपगम्याऽऽपत्तेरिष्टत्वमिति भावः। अन्यत्र कर्तुः, वृक्षस्यैव कर्तृत्वविवक्षायान्तु परया कर्तृसंज्ञया बाधेनोपापत्ते-रसम्भवादिति भावः।

पञ्चम्यस-
नचैवमपि 'वृक्षात् त्यजति' इति दुर्वारम्, कर्मसंज्ञया अपादानसंज्ञायाः बाधेन
म्भवात्। भ्रमात् कृते तथा प्रयोगे यदि बोधाभावोऽनुभवसिद्धस्तर्हि पञ्चमीजन्यापादानत्वबोधे
त्यजादिभिन्नधातुजन्यबुद्धेर्हेतुत्वं वाच्यम्। 'बलाहकाद् विद्योतते' इत्यादौ निःसृत्येत्यध्याहार्य्यम्।
'रूपं रसात् पृथक्' इत्यत्र तु

प्रभा

नाभ्युपेय इति भावः। परे
स्वीकारे इष्टस्य 'आसनाच्चलितः' इत्यादिप्रयोगस्यासिद्धिरित्युक्तसमाधानाभासो इत्यनिष्टमेवेत्याहुः।
तु स्पन्देः कम्पनमात्रार्थकतया विभागानुकूलव्यापाराबाचकत्वेन 'वृक्षात् स्पन्दते' इति प्रयोगे इष्टत्वं ग्रन्थकाराभिमतमिति गुरुच इत्याहुः।
पञ्चोलिनस्तु—प्रस्रवणार्थकस्य 'स्यन्दते' इत्यस्यान्वयः।
एवमिति—उक्तप्रयोगस्येष्टत्वमित्यर्थः। दुर्वारमिति—अस्य वाच्यमिति शेषः; तत्रैव 'नच'
नच वाच्यमित्यर्थः। कर्मतयेति—त्यजेर्विभागानुकूलव्यापारार्थकत्वेन प्रतियोगितारूपफलतावच्छेदक-
सम्बन्धेन विभागरूपफलाश्रयत्वेन कर्मतयेत्यर्थः। 'ग्रामादागच्छति' इत्यादौ तु न ग्रामादेः कर्मत्वम्,
अनुयोगित्वस्य, अनुयोगित्वसमानाधिकरणसमवायस्य वा फलतावच्छेदकत्वेन फलतावच्छेदकसम्बन्धेन
लाश्रयत्वाभावात्। कर्मसंज्ञया बाधेन पञ्चम्यास्तत्र साधुत्वाभावेऽपि अपादानत्वभ्रमेण तत्र तादृशप्रयोगा-
वधित्वप्रकारकशाब्दबोधापत्तिरित्याशङ्कां परिहरति—भ्रमादित्यादिना। बुद्धेः=उपस्थितेः। हेतुत्वं वाच्य-
न्ति—नचैवं त्यजि-पत्योः पर्यायत्वभ्रमदशायां तादृशप्रयोगादपादानत्वबोधानुपपत्तिरिति वाच्यम्, इष्टा-
त्तेरिति तदाशयात्, पतत्यादिपर्यायत्वेनागृहीतत्यजिजन्योपस्थितित्वेन हेतुत्वमित्यत्र वा ग्रन्थतात्पर्य्यात्।
यजेः पतत्यर्थे शक्तिभ्रमे, लक्षणाग्रहे वा 'वृक्षात् त्यजति' इत्यतस्तादृशबोधस्य सर्वसम्मतत्वेनेष्टत्वमेवेति
यदि' इत्यनेन सूचितम्।
ननु 'बलाहकाद् विद्योतते' इति न स्यात्, विभागस्यानुपस्थितत्वादत आह—बलाहकादिति।
अध्याहार्य्यमिति—अत्राध्याहारः—निःसरणपूर्वकविद्योतने धातोर्वृत्तिरूप एव। बलाहको नाम—धूमज्योतिः-
सलिलमरुतां सन्निपातः। तादृशसमुदायात्मकमेघादवयवभूतज्योतीरूपविद्युतो भेदविवक्षया निःसरणा-
वधित्वं मेघस्य। यदा तु विद्युत आश्रयत्वेन मेघो विवक्ष्यते तदाधिकरणे सप्तमी—'बलाहके विद्योतते विद्युत्'
इति। 'रूपं रसात् पृथक्' इत्यत्र रूपे विभागपूर्वकसंयोगानुकूलव्यापाररूपनिःसरणस्य बाधमाशङ्क्य
निराकरोति—रूपमिति—अत्र बौद्धसंश्लेषपूर्वको बौद्धो यो विश्लेषस्तज्जनको रूपाश्रयको बौद्धव्यापारः

दर्पणव्याख्या

❀ नचैवमपीति ❀ एवमपि=धात्वर्थविभागाऽऽश्रयत्वस्यापादानसंज्ञानियामकत्वेऽपीत्यर्थः। ❀ दुर्वारमिति ❀
वृक्षस्य त्यज्यर्थक्रियाजन्यविभागाश्रयत्वादिति भावः। ❀ कर्मसंज्ञयेति ❀ वृक्षस्य त्यजर्थव्यापारजन्यविभागाश्रयत्वा-
दिति भावः। पूर्वमतिप्रसङ्गः कर्तृसंज्ञामादायैवोक्त.। इदानीं तु कर्मसंज्ञामादाय प्राप्तः स निवारित इति बोध्यम्।
❀अनुभवसिद्ध इति❀वस्तुतो विभागावधित्वस्य वृक्षे अबाधात्तज्जन्यबोधस्य प्रमात्वमिष्टमेव, धात्वर्थव्यापारजन्यविभागाश्र-
यस्यैव पूर्वंग्रन्थेनावधित्वोक्तेः। त्यजतेः पतत्यर्थे शक्तिभ्रमदशायां लक्षणाग्रहदशायां वा 'वृक्षात् पर्णं त्यजति' इति प्रयोगस्य
प्रामाणिकत्वेन कारणतावच्छेदककोटौ त्यजादिभिन्नत्वस्य धात्वंशे निवेशयितुमशक्यत्वादित्यभिप्रेत्योक्तम्—❀ यदीति ❀।
❀ बलाहकादिति ❀ धूमसमरुज्ज्योतिःसमूहो बलाहकः। ततोऽवयवभूतज्योतिषामेव विभागविवक्षणात् सोऽवधिः।
श्रुतिश्च लक्षणया निःसरणपूर्वकविद्योतनबोधकः। तथाच बलाहकावधिकनिःसरणोत्तरकालिकं विद्युत्कर्तृकं विद्योतनमिति
बोधः। ❀ निःसृत्येति ❀ निःसरणपूर्वके विद्योतने धातोर्वृत्तिमुपगम्य एवमुपपादितेत्यर्थः। अत एवोपात्तविशेष्यत्वान्स-
र्मातो वक्ष्यमाणः सङ्गच्छते।

बुद्धिपरिकल्पितमपादानत्वं द्रष्टव्यम्, पृथग्विनेति पञ्चमी वा। इदञ्च—

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा।
अपेक्षितक्रियञ्चेति त्रिधाऽपादानमुच्यते ॥

इति वाक्यपदीयात् त्रिविधम्। 'यत्र साक्षाद्धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयम्'। यथा 'अश्वात् पतति'। 'यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्तविषयम्'। यथा—'बलाहकाद् विद्योतते'। निःसरणाङ्गे विद्योतने द्युतिर्वर्त्तते। अपेक्षिता क्रिया यत्र तदन्त्यम्। यथा—'कुतो भवान्' 'पाटलिपुत्रात्'। अत्रागमनमर्थमध्याहृत्यान्वयः कार्य्यः।

प्रभा

कल्पनीयः। एवं कल्पनायां भवत्येतादृशस्थलेऽपादानत्वम्। परिकल्पितमिति—अयम्भावः—'ध्रुवमपाये' इति सूत्रेऽपायशब्देन भेदस्यापि ग्रहणम्, 'पञ्चमी विभक्ते' इति सूत्रे विभागार्थकविभक्तशब्देन भेदस्यापि ग्रहणात्। 'भिदिर् विदारणे' इत्यत्र भेदज्ञानविषयत्वमपि विदारणम्, एकत्वेन ज्ञातस्य तथाबोधे बुद्धिविदारणस्य सत्त्वात्। अत एव 'घटाद् भेदः' इत्यत्रापादानत्वम्। एवञ्च पृथक्पदार्थोऽपि भेद एव, नतु गुणान्तरम्, उक्तप्रयोगदर्शनात्। 'घटाद् भिन्नः' इत्यत्रापि 'ध्रुवमपाये' इत्यनेनैवापादानत्वम्। नच 'अन्याराद् इतरर्ते' इत्यनेनात्र पञ्चमी, अर्थग्रहणे प्रमाणाभावेनान्यशब्दमात्रयोगे पञ्चमीविधानात्। अत एव 'इतर' ग्रहणं चरितार्थम्। नच पृथक्शब्दस्य क्रियावाचित्वाभावात्कारकत्वानुपपत्तिः, 'भवति' इत्यध्याहारेण भेदात्मकपृथग्भावस्य भवत्यर्थेनादोषात्। बुद्धिपरिकल्पनगौरवमपेक्ष्य लाघवादाह—पृथग्विनेति। इदञ्चेति—अपादानत्वञ्चेत्यर्थः।

निर्दिष्टः = साक्षाद् धातुना बोधितो विषयो निरूपकोऽर्थो यस्य तत् 'निर्दिष्टविषयम्'। उपात्तः = धातुना धात्वन्तरार्थगर्भितः विषयोऽर्थो यस्य तत् 'उपात्तविषयम्'। अपेक्षिता = धातोरनुपादानेनाऽऽकाङ्क्षिता गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका यस्य तत् 'अपेक्षितक्रियम्' इति भावः। कुतो भवानिति—'कुतो भवान्' इति 'पाटलिपुत्रात्' इति च द्वेऽपि प्रश्नोत्तरवाक्ये अपेक्षितक्रिये। अर्थमध्याहृत्येति—उच्चरितं वाक्यैकदेशरूपमेव तदर्थपरमित्यर्थः। पदाध्याहारवादे तु अनुपात्तसाकाङ्क्षक्रियावाचकपदकम्। अनुपात्ता साकाङ्क्षा या क्रिया तद्वाचकं पदं यत्र तदित्यर्थः। 'क्रियार्थोपपदस्य' इति सूत्रबलादर्थाध्याहारः, तत्र स्थानिनः (अप्रयुज्यमानस्य) इत्युक्तेः। 'स्पृहेरीप्सितः' इत्यादिसूत्रबलात् शब्दाध्याहारः।

दर्पणव्याख्या

ꕥ बुद्धिपरिकल्पितमिति ꕥ बौद्ध (आरोपित) विभागावधित्वमाश्रित्येत्यर्थः। तादृगपादानत्वाश्रयणे प्रमाणवैफल्यं मत्वाऽऽह—ꕥ पृथगिति ꕥ। ꕥ साक्षादिति ꕥ मुख्यवृत्त्येत्यर्थः। धातुनेत्यस्य समभिव्याहृतेत्यादिः। ꕥ गतिरिति ꕥ विभागजनकक्रियेत्यर्थः। ꕥ उपात्तविषयमिति ꕥ समभिव्याहृतधातुनोपात्तः लक्षितो गतिरूपो विषयो यत्रेत्यर्थः। ꕥ अपेक्षितक्रियमिति ꕥ अनुपात्तधात्वर्थक्रियासाकाङ्क्षमित्यर्थः।

ꕥ अध्याहृत्येति ꕥ अर्थाध्याहाराभिप्रायेण। पदाध्याहारवादे तु आकाङ्क्षितक्रियावाचकपदानुसन्धानेऽप्यनुपात्तस्वरूपविशेषणघटितलक्षणावैकल्यं बोध्यम्। प्रमाणं तत्र शब्दाध्याहारवादे 'पुष्पेभ्यः स्पृहयति' इत्यादौ स्पृहयत्यादियोगे सम्प्रदानादिसंज्ञाविधायकानि "स्पृहेरीप्सितः" (पा० सू० १।४।३६) इत्यादिसूत्राणि, तैस्तच्छब्दानुयोग एव तद्बोधनात्। अर्थाध्याहारे तु 'क्रियार्थोपपदस्य' इत्यादिसूत्रम् "ल्यब्लोपे" इत्यादिवार्त्तिकानि च।

अन्ये त्विनमित्थं व्याचक्षते—यत्र विभागस्तज्जनकक्रिया चोभयं धातुनाऽभिधीयते तदाद्यम्। यत्र विभागोऽध्याहृत-

उद्देश्यश्चतुर्थ्यर्थः । तथाहि—'सम्प्रदाने चतुर्थी'। तच्च "कर्मणा यमभिप्रैति स सम्प्रदानम्"
( पा० सू० १ । ४ । ३२ ) इति सूत्रात् कर्मणा = करणभूतेन यमभिप्रैति = ईप्सति तत् कारकं
सम्प्रदानमित्यर्थकादुद्देश्यम् ।

प्रभा

उद्देश्य इति—प्रकृते उद्देश्यत्वञ्च—'तत्तद्धात्वर्थकर्मनिष्ठफलनिरूपकत्वेनेच्छाविषयत्वम्' । चतुर्थ्यर्थं
इति—कारकचतुर्थ्यर्थ इत्यर्थः। तेन उपपदचतुर्थ्यर्थस्य भिन्नार्थत्वेऽपि न दोषः । चतुर्थीति—इतिसूत्रादिति
शेषः। 'सम्प्रदाने' इत्यत्र वाचकत्वं सप्तम्यर्थः । तथाच सम्प्रदानवाचिका चतुर्थी इत्यर्थबोधकसूत्रप्रमाणा-
दित्यर्थः। तच्च = सम्प्रदानञ्च। अस्य वक्ष्यमाणेन 'उद्देश्यम्' इत्यनेनान्वयः। कर्मणेति—करणे तृतीया। तथाच
'क्रियाया यत् कर्म तत्सम्बन्धजन्यफलाश्रयत्वेनेच्छाविषयत्वम्' उद्देश्यत्वम । 'विप्राय गां ददाति' इत्यत्र क्रिया
स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूलेच्छारूपा, तत्कर्म स्वस्वत्वध्वंसविशिष्टपरस्वत्वरूपफलाश्रयः गौः । कर्मणः
करणत्वञ्च अभिसम्बन्धक्रियाम्प्रति, करणस्य च व्यापारवत्त्वनियमात् कर्मत्वप्रयोजकत्वेनोपस्थितस्य फलस्यैव
व्यापारत्वं कल्प्यते। गोपदोत्तरद्वितीयाया आश्रयोऽर्थः। तथाच विप्रस्याभेदेनोद्देश्ये तस्य (उद्देश्यस्य) स्वनिष्ठो-
द्देश्यतानिरूपकत्वसम्बन्धेन 'दा' धात्वर्थेच्छायामन्वयः। गोपदार्थस्य द्वितीयार्थाश्रयेऽभेदेन तस्याधेयतासम्ब-
न्धेन स्व ( फलस्य ) स्वत्वध्वंससमानाधिकरणपरस्वत्वरूपफले तस्य ( फलस्य ) विषयितारूपानुकूलत्वसम्बन्धेन-
च्छायामन्वयः । एवञ्च विप्रोद्देश्यिका गवाभिन्नाश्रयनिष्ठस्वस्वत्वध्वंससमानाधिकरणपरस्वत्वानुकूला राजा-
भिन्नाश्रयनिष्ठा वर्तमानकालावच्छिन्नेच्छा इति 'राज्ञा विप्राय गा ददाति' इत्यनेन बोधः। कामनाविषयत्वन्तु
नोद्देश्यत्वम्, तस्य कर्मण्यतिव्याप्तेः, कर्मणोऽपि इच्छाविषयत्वात् ।

नन्वेवमपि 'चैत्रो ग्रामं गच्छति' इत्यत्रापि 'ग्रामसम्बन्धजन्यं सुखं मे जायताम्' इति यदि
चैत्रस्येच्छा, तदा चैत्रस्य गमनक्रियाकर्मग्रामसम्बन्धजन्यसुखरूपफलाश्रयतया सम्प्रदानत्वापत्तिरिति चेन्न,
ग्रामसंयोगस्य चैत्रीयसुखं प्रति अन्यथासिद्धत्वेनाजनकत्वात्, उद्देश्यवृत्तिफलस्य सुखादेर्धात्वर्थफलद्वारैव
कर्मरूपकरणजन्यत्वस्यापेक्षणात् । क्रियाकर्मसम्बन्धजन्यं फल नानाविधम् । तथाहि—'शिष्याय चपेटां
ददाति' इत्यत्र दुःखं फलम्। ददातिरत्र संयोगविशेषानुकूलव्यापारार्थकः । तथाच 'चपेटासंयोगजन्य-
दुःखाश्रयः शिष्यो भवतु' इतीच्छया दुःखरूपफलाश्रयत्वेन शिष्यस्य सम्प्रदानत्वम् । 'रजकाय वस्त्रं ददाति'
इत्यत्र दाधातोरधीनीकरणमर्थः। अधीनीकरणत्वञ्चात्र मलनाशानुकूलं स्थापनम् । 'वस्त्रनिष्ठमलनाशरूप-
फलसम्बन्धेन भृतिमान् रजको भवतु' इतीच्छया भृतिरूपफलाश्रयत्वेन सम्प्रदानत्वं रजकस्येत्येवं सर्वत्रोह्यम्।
ईप्सति = सम्बन्धुमिच्छति । अभिप्रैतिरत्र सम्बन्धविषयकेच्छापरः ।

दर्पणव्याख्या

धातुना तथा तद्द्वितीयम् । यत्र तूभयमप्यध्याहृतधात्वभिधेयं तत्तृतीयमिति । अधिकमन्यतोऽवधार्यम् ।

चतुर्थ्यर्थं निरूपयति—॥ उद्देश्य इति ॥ ननूद्देश्यत्वं कामनाविषयत्वम्, तच्च 'विप्राय गां ददाति' इत्यत्र
क्रियाजन्यफलभागितया कामनाविषये गवादावतिप्रसक्तमतस्तद्व्यावृत्तम्, तत्सूत्रप्रामाण्येन दर्शयति—॥ तच्च कर्मणे-
त्यादि ॥ कर्मणेत्यनन्तरं सम्बन्धुमिति शेषः। कर्म चात्र पारिभाषिकम्, "कर्मणा यमभिप्रैति" (पा० सू० १ । ४ । ३२)
इति क्रियाव्याप्यमानस्य सम्प्रदानसंज्ञाविधानात्। अत एव तत्कर्मैकविषयम् ।

ननु 'ग्रामं गच्छति' इत्यत्र ग्रामरूपकर्मजन्यसुखादिफलभागितयोद्देश्ये कर्तरि अतिप्रसङ्गोऽस्त आह—॥ करणभूतेनेति ॥
करणत्वञ्च सम्बन्धक्रियाऽपेक्षम्, क्रियाव्यवहितव्यापारवत एव करणतया व्यापारे कर्मवृत्तित्वलाभेन तद्वृत्तित्वस्य धात्वर्थ-

दर्पणव्याख्या

तावच्छेदकफलत्व एव सम्भवात् । कर्मवृत्तितज्जन्यस्वत्वस्य त्यागजन्यसुखे असत्त्वाच्चोक्तातिप्रसङ्ग इति भावः । यमित्यस्यानुपादाने योऽभिप्रेतोऽस्यार्थस्यापि लाभात् प्रथमान्तार्थकर्त्तर्यतिप्रसङ्गः स्यादतस्तदुपात्तम् ।

यद्यपि 'गौर्ब्राह्मणस्य भवतु' इतीच्छाविशेष्यतया नामैवावगाहते तथापि सूत्रस्य फलितार्थपरत्वान्न दोषः । तथाच कर्मजन्यतद्वृत्तिफलभागित्वप्रकारको यद्विशेष्यकोऽभिप्रायः स सम्प्रदानमिति सूत्रार्थः । तादृशफलसम्बन्धित्वप्रकारतानिरूपितविशेष्यताश्रय इति यावत् ।

'विप्राय गां ददाति' इत्यादौ परस्वत्वजनकस्वस्वत्वध्वंसावच्छिन्नेच्छात्मकस्त्यागो दाधात्वर्थः । उद्देश्यत्वं चतुर्थ्यर्थः । (निरुक्तविशेष्यताश्रयरूपस्य तस्य स्ववृत्तिविशेष्यतानिरूपकत्वसम्बन्धेन त्यागेऽन्वयः) गोरूपकर्मणश्चाऽऽश्रयत्वेन स्वत्वरूपफले । तथाच गोवृत्तिस्वत्वजनकस्वस्वत्वध्वंसानुकूलो विप्राभिन्नोद्देश्यकस्त्याग इति वैयाकरणमते बोधः । उद्देश्यत्वं च विप्रे गोजन्यस्वत्वभागित्वेच्छाविषयत्वमेव, एवं वृक्षायोदकमासिञ्चतीत्यत्राप्युदकनिष्ठक्रियाजन्यसंयोगफलभागित्वेच्छाविषयत्वात् सम्प्रदानत्वमूह्यम् ।

नैयायिकास्तु—परस्वत्वेच्छाधीनस्वस्वत्वध्वंसेच्छा त्याग इति मते स्वस्वत्वध्वंसावच्छिन्नत्यागो ददात्यर्थः । विशेष्यत्वं चतुर्थ्यर्थः । तस्य स्वनिरूपकनिरुक्तेच्छाजन्यत्वसम्बन्धेन ददात्यर्थत्यागे गोरूपकर्मणस्त्वाधेयतया स्वत्वध्वंसरूपफले । तथाच गोवृत्तिस्वत्वध्वंसजनको निरुक्तसम्बन्धेन विप्रनिष्ठविशेष्यताविशिष्टो यस्त्यागस्तदाश्रयश्चैत्र इति 'विप्राय गां ददाति चैत्रः' वाक्याद् बोधः ।

यदि तु गौर्विप्रस्य भवतु न ममेतीच्छैव त्यागः, स च यदि स्वस्वत्वध्वंसमिव परस्वत्वमपि अवगाहते तदा स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागो दाधात्वर्थः । एवञ्च उक्तस्थले निरूपितत्वेनेच्छाविषयत्वं चतुर्थ्यर्थः । तस्य च स्वस्वत्वध्वंसेऽन्वयात् विप्रनिरूपितत्वेन इच्छाविषयगोवृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागाऽऽश्रय इति बोधः । जन्यस्वत्वस्य गोवृत्तित्वेऽवगतेऽर्थात्तस्मिंस्तज्जन्यत्वं लभ्यते एवेति गोजन्यस्वत्वनिरूपकत्वेनेच्छाविषयत्वरूपमुद्देश्यत्वं विप्रस्याक्षतम् । वृक्षायोदकमासिञ्चतीत्यत्र तु संयोगावच्छिन्नद्रवद्रव्यक्रियावच्छिन्नव्यापारो धात्वर्थः । वृत्तित्वेनेच्छाविषयत्वं चतुर्थ्यर्थः । स च धात्वर्थतावच्छेदकसंयोगान्वयी । द्वितीयार्थवृत्तित्वं तु द्रवद्रव्यक्रियान्वयि । तथाच वृक्षवृत्तित्वेनेच्छाविषयो यः संयोगस्तदवच्छिन्ना या उदकाभिन्नद्रव्यवृत्तिक्रिया तदवच्छिन्नव्यापारानुकूलकृतिमानिति बोधः ।

न चैवं सिचधात्वर्थतावच्छेदकद्रवद्रव्यक्रियाया द्वितीयार्थवृत्तित्वान्वये पयसा वृक्षं सिञ्चतीति न स्यात्, तादृशक्रियाया वृक्षावृत्तित्वादिति वाच्यम्, तत्र संयोगावच्छिन्नद्रव्यक्रियाया एव धात्वर्थतया तदवच्छेदकीभूतसंयोग एव वृक्षवृत्तित्वान्वयान्नानुपपत्तिरित्याहुः ।

अपरे तु—विजातीयत्यागजन्यफलभागितयोद्देश्यत्वं सम्प्रदानत्वं चतुर्थ्यर्थः । एवञ्च विप्राय गां ददातीत्यादौ त्यागजन्यफलभागित्वप्रकारकब्राह्मणवृत्त्युद्देश्यताकगोविषयकत्यागाश्रय इति बोधः । रुद्राय गां ददातीत्यत्र रुद्रस्य त्यागजन्यफलभागितयोद्देश्यत्वमस्त्येव । स्वत्वं तु तस्य जायते न वेत्यन्यत् । त्यागजन्यं फलं स्वत्वरूपं ग्राह्यम् । तेन पितृस्वर्गमुद्दिश्य दत्तायां गवि ब्राह्मणस्य सम्प्रदानत्वोपपत्तिः । पितुः स्वत्वरूपं फलं नोद्देश्यम्, किन्तु स्वर्गः ।

पितृभ्यो दद्यादित्यादौ रुद्राय गां ददातीतिवत् सम्प्रदानत्वमस्त्येव । त्यागे वैजात्यविशेषाच्च न क्षतिः सम्प्रदानत्वम् । वृक्षायोदकमासिञ्चतीत्यादौ तु चतुर्थ्यर्थे गौणसम्प्रदानत्वम् । तत्र सिचेर्द्रव्यवृत्तिसंयोगानुकूला क्रिया । उदकादिपदसमभिव्याहारे च संयोगानुकूलक्रियामात्रमर्थः । चतुर्थ्यर्थस्तु वृत्तित्वम् । इत्थञ्च वृक्षवृत्त्युदकीयसंयोगावच्छिन्नक्रियेत्यादिबोधः ।

अत्र चतुर्थीद्वितीयाभ्यां तुल्यबोधजननात्तत्र द्वितीया मा भूदिति सम्प्रदानसंज्ञानुशिष्यते । वृक्षं पयसा सिञ्चतीत्यादौ वृक्षशब्दात् द्वितीया भवत्येव । तत्र तृतीयार्थोऽभेदस्तस्य द्रवद्रव्येऽन्वयः । द्वितीयार्थवृत्तित्वस्य संयोगेऽन्वयः ।

[illegible] बोधः ।

इदमेव शेषित्वम् । तदुद्देश्यकेच्छाविषयत्वं च शेषत्वमित्येव पूर्वतन्त्रे निरूपितम् । अत एव "प्रासनवन्मैत्रावरुणाय दण्डप्रदानम्" ( अ० ४ पा० २ अ० ६ ) इत्यधिकरणे क्रीते सोमे मैत्रावरुणाय 'दण्डं प्रयच्छति' इति विहितं दण्डदानं न प्रतिपत्तिः,

प्रभा

इदमेवेति—धात्वर्थक्रियाया यत्कर्म तद्वृत्ति यद्धात्वर्थफलं तत्सम्बन्धजन्यफलाश्रयत्वप्रकारकेच्छाविशेष्यत्वमेवेत्यर्थः। 'दानकर्मगोवृत्तितादृशस्वत्वसम्बन्धजन्यसुखाश्रयो विप्रो भवतु' इत्याकारिका या इच्छा तादृशेच्छाविशेष्यत्वरूपं शेषित्वं विप्रस्य । तादृशेच्छाप्रकारताश्रयत्वरूपं शेषत्वं गोः, गवि इच्छीयप्रकारतायाः सत्त्वात् । विषयत्वञ्चात्र प्रकारत्वरूपं ग्राह्यम्, नातो तदाह—तदुद्देश्यकेति—विप्राद्युद्देश्यकेच्छाविषयत्वमित्यर्थः । चतुर्थाध्यायस्य द्वितीयपादे षष्ठाधिकरणे निरूपितम् । विप्रादावतिव्याप्तिः । पूर्वतन्त्रे = पूर्वमीमांसायाम् । अयमर्थः— प्रासनवदिति—अग्निष्टोमप्रकरणे 'नीतासु दक्षिणासु कृष्णविषाणां चात्वाले प्रास्यति' इति श्रुतिः । यदा यजमानेन दत्ता दक्षिणा ऋत्विग्भिर्नीता तदा यजमानो यज्ञे गात्रकण्डूयनाय स्वहस्ते धृतं कृष्णमृगशृङ्गं चात्वालनामके यज्ञीयगर्ते प्रास्येत् = प्रक्षिपेत् इति । तत्र सन्दिह्यते—चात्वाले कृष्णमृगशृङ्गप्रक्षेपणं प्रतिपत्तिकर्म स अर्थकर्म इति । प्रतिपत्तिकर्म च—प्रधानकर्मणि यज्ञादौ कृतोपयोगस्य वस्तुनः संस्कारकं कर्म उच्यते, यथा इडाभक्षणादि । इडा नाम दर्शपूर्णमासयोः पुरोडाशविशेषस्तद्भक्षणस्य 'यजमानपञ्चमा इडां भक्षयन्ति' इति श्रुत्या विधानात् । 'यजमानः पञ्चमो येषु ऋत्विक्षु ते यजमानपञ्चमाः । चत्वारः ऋत्विजः पञ्चमो यजमानः । नचोपयुक्तस्य संस्कारे फलाभावः, यज्ञीयभूमिसङ्कीर्णतानिवृत्तेरेव फलत्वकल्पनात् ।

दर्पणव्याख्या

'शत्रवेऽस्त्रं मुञ्चति' अत्र तु शत्रोरुद्देश्यत्वं चतुर्थ्यर्थः । मोचनं विभागावच्छिन्नक्रिया, क्रियानुकूलव्यापारो वा । प्रकृत्यर्थस्य वृत्तित्वेन चतुर्थ्यर्थैकदेशे तु खेऽन्वयः । एवं मित्राय दूतं प्रेषयतीत्यत्र वार्त्तादानोद्देश्यकत्वम् । पुत्राय धनं प्रेषयतीत्यत्र प्रीत्युद्देश्यकत्वं चतुर्थ्यर्थं इत्याद्यूह्यमित्याहुः ।

तन्न सम्यक्, सम्प्रदाने हि चतुर्थी । नच भवदुक्तसम्प्रदानत्वे किञ्चिन्मानम्, येन युक्तमेतस्य चतुर्थी स्यात् । किञ्च संयोगरूपधात्वर्थान्वयित्वाविशेषादुदकपदादपि चतुर्थ्यापत्तिः । बाधकं कर्मत्वं तु युक्तेऽप्यक्षतमिति न किञ्चिदेतत् । ❀ इदमेवेति ❀ निरुक्तोद्देश्यत्वमेवेत्यर्थः । ❀ पूर्वतन्त्रे ❀ मीमांसायाम् । ❀ अत एवेति ❀ शेषित्वस्यार्थकर्मप्रयोजकत्वादेवेत्यर्थः ।

❀ प्रासनवदिति ❀ "प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात्" इत्यधिकरणे इत्यर्थः । प्रासनदृष्टान्तस्त्वेवम् ज्योतिष्टोमे श्रूयते "नीतासु दक्षिणासु चात्वाले कृष्णविषाणं प्रास्यति" इति । यदा यजमानेन दत्ता दक्षिणा ऋत्विग्भिर्नीतास्तदा यजमानः स्वहस्ते धृतं कृष्णमृगशृङ्गं चात्वालनामकगर्ते प्रक्षिपेदिति तदर्थः । तत्रैवं सन्दिह्यते—किमेतत् प्रासनमर्थकर्म, प्रतिपत्तिकर्मेति वा ? अर्थकर्मैव भवितुमर्हति, सप्रयोजनत्वात् । प्रतिपत्तितायां तु अपूर्वाभावे निरर्थकमेव स्यादिति पूर्वपक्षे—"कृष्णविषाणया कण्डूयति" इति श्रुत्या कृतार्थस्य प्रतिपत्त्यपेक्षत्वात् प्रतिपत्तिकर्मतैव युक्ता । नचानर्थक्यम्, प्रासनक्रियाप्रयुक्तापूर्वाभावेऽपि चात्वाल एवेति नियमापूर्वसद्भावादिति सिद्धान्तितम् । तद्वद्दण्डदानं न प्रतिपत्तिरिति योजना। ❀ इत्यधिकरण इति ❀ चतुर्थाध्याय इति शेषः ।

ज्योतिष्टोमं प्रकृत्यैव सोमे दीक्षिताय दण्डं प्रयच्छतीति दण्डस्य दीक्षाभिव्यञ्जकत्वं विधायक्रीते सोमे "मैत्रावरुणाय दण्डं प्रयच्छति" इति श्रूयते । तत्र दण्डदानस्यार्थप्रतिपत्तिकर्मभावसन्देहेऽध्वर्युणा दीक्षासिद्ध्यै दत्तदण्डस्यासोमक्रयाद्यजमानधारणेन कृतार्थत्वादुपयुक्तस्य तस्य दानं प्रतिपत्तिकर्मैवेति पूर्वपक्षे, "दण्डी प्रैषानन्वाह" इति श्रवणान्मैत्रावरुणस्य

किन्तु चतुर्थीश्रुत्यार्थकर्मेति तत्र निर्णीतम्। 'रजकाय वस्त्रं ददाति' इत्यपि 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' इति भाष्योदाहरणादिष्टमेव।

## प्रभा

अर्थकर्म = उपयोक्ष्यमाणस्य संस्कारः, यथा—उपयोक्ष्यमाणस्य व्रीह्यादेरुपयोगात्पूर्वमेव प्रोक्षणादिसंस्कारः। अत्र संस्कृतेन द्रव्येण यज्ञस्वरूपसिद्धिस्तद्द्वारा अदृष्टञ्च फलम्। प्रतिपत्तौ संस्कारजन्यं न किञ्चित्फलमित्युपयुक्तस्य संस्कारापेक्षया उपयोक्ष्यस्य संस्क्रिया गरीयसी, इत्यर्थकर्मत्वं यथा प्राशनस्य न प्रतिपत्तिकर्मत्वम्। एवं यज्ञे 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति श्रुत्या विहितसोमक्रयणाय, गोनयनार्थं दीक्षासिद्धये च दीक्षिताय यजमानाय दण्डो दीयते। 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इति विहितं दण्डदानं प्रतिपत्तिकर्म (उपयुक्तस्य वस्तुनः अदृष्टाजनकः संस्कारविशेषः) अर्थकर्म (करिष्यमाणोपयोगस्य वस्तुनः उपयोगात्पूर्वं क्रियमाणोऽदृष्टजनकः संस्कारविशेषः) वेति सन्दिह्य गोनयनोपयुक्तस्य दण्डस्य दानरूपं कर्म प्रतिपत्तिकर्मैव भवितुमर्हति, प्रतिपत्तिकर्मण उपयुक्तस्य संस्कारकत्वरूपत्वादिति पूर्वपक्षे मैत्रावरुणायेति चतुर्थीश्रुत्या अर्थकर्मैव स्यात् चतुर्थ्यर्थयोरुद्देश्यत्वादुद्देश्यस्य सफलत्वात् उपयुक्तापेक्षया उपयोक्ष्यमाणेऽत्यादरात्। उपयोक्ष्यमाणस्य संस्काराभावेऽसंस्कृतद्रव्येण यज्ञस्यानिष्पत्तिः। उपयुक्तसंस्काराभावे तु अङ्गविशेषस्यानिष्पत्तिरित्यादरबीजम्। अत एव 'दण्डी प्रैषा नन्वाह' इति श्रुतेः प्रैषानुवादेऽवलम्बनाय मैत्रावरुणस्य दण्डोऽपेक्ष्यत इति सफलत्वादर्थकर्मैव, नतु प्रतिपत्तिः, निष्फलत्वादिति निर्णीतम्। स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूलव्यापारवाचकधातुसमभिव्याहारे एव सम्प्रदानत्वमिति न नियमः, किन्तु अर्थान्तरवाचकदाधातुसमभिव्याहारेऽपीत्याशयेनाह—रजकायेति—अत्र दाधात्वर्थमलापकर्षणाय कियत्कालिकस्वत्वेच्छा। अत्र स्वत्वनिरूपकत्वसम्बन्धजन्यभूतिमान् रजको भवत्वितीच्छया रजकस्योद्देश्यत्वम्। खण्डिकोपाध्यायः = क्रुद्धोपाध्यायः, बालकोपाध्याय इति वा। चपेटा = करतलम्। ददातिरत्र संयोगविशेषानुकूलेच्छा। तथाच क्रियाकर्म (चपेटा) संयोगसम्बन्धजन्यदुःखाश्रयः शिष्यो भवतु इतीच्छया शिष्यस्य सम्प्रदानत्वम्। 'न शूद्राय मतिं दद्यात्' इत्यादौ उपदेशो धात्वर्थः। मतिपदञ्च ज्ञानजनकवेदपरम्। सम्यक् प्रदीयते इति—यदुक्तम्—

## दर्पणव्याख्या

प्रैषानुवादेऽवलम्बनाय दण्डोऽपेक्षितः। एवञ्च भविष्यदुपयोगसत्त्वात् दानस्याप्यमानदृष्टत्वाच्च मानत्वेन मैत्रावरुणस्य प्राधान्याच्च दण्डदानस्य प्रतिपत्तिकर्मण उपयुक्तसंस्काररूपादर्थकर्मैवोपयोक्ष्यमाणसंस्काररूपत्वेन प्राशस्त्यादर्थकर्मत्वे बोधिता, उपयोक्ष्यमाणस्यैव सर्वत्र संस्कारप्रवृत्तेः। उपयुक्ते तु प्रतिपत्तिरूपसंस्कारस्य स्वाश्रयमात्रपर्यवसायित्वेन कार्यपर्यवसानाभावात् ... मैत्रावरुणसंस्काराय तद्दानमर्थकर्म। तथा सति निष्क्रयणे अदृष्टस्यापि बोधिते दण्डस्योपादानरूपतद् दानमर्थकर्मेति सिद्धान्तितम्।

अर्थकर्मत्वे च दीक्षितं प्रयोजकम्। तच्च चतुर्थीश्रुत्या मैत्रावरुणस्य बोध्यत इत्याह—चतुर्थीश्रुत्येति। ननु अत्र चतुर्थीनिर्णयार्थकत्वाधीनतादिरूपपर निरुक्तत्वेऽपि विपक्षे परसम्प्रदानत्वस्य रजकादावपि सत्त्वात् "रजकाय वस्त्रं ददाति" "होत्रे दण्डं ददाति" इत्यादिप्रयोगा प्रकाश्येरन्नित्याशङ्कामेतादृश्या परिहरति—रजकायेति। अत्र प्रमाणमुपन्यस्यति—खण्डिकोपाध्याय इति। ददातीति दाधात्वर्थसंयोगसम्बन्धि ... कर्मोद्देश्यत्वात्तत्र ... । अस्मिन् प्रयोगे ददातिः संयोगानुकूलव्यापारार्थः। चपेटापदार्थश्च प्रकृतकरतलम्। "न शूद्राय मतिं दद्यात्" इत्यत्र ददातिरुपदेशार्थः। मतिपदार्थश्च तज्जनकवेदादिज्ञानमिति बोध्यम्।

वृत्तिकारास्तु—सम्यक् प्रदीयते यस्मै तत् सम्प्रदानमित्यन्वर्थसंज्ञया स्वस्वत्वनिवृत्तिपर्यन्तमर्थं वर्णयन्तः 'रजकस्य वस्त्रम्' इत्येवाहुः ।

### प्रभा

दददाति दण्डं पुरुषो महीपतेर्नचातिभक्त्या नच दानकाम्यया ।
यद्दीयते दानतया सुपात्रे तत्सम्प्रदानं कथितं मुनीन्द्रैः ॥ इति ।

ईदृशार्थस्तु दानेन न परस्वत्वो-
निवृत्तिपर्यन्तमिति—स्वस्वत्वध्वंसानुकूलव्यापारपर्यन्तमित्यर्थः । यदि दानमेव परस्वत्वोत्पादकं तदा परस्वत्वोत्पत्ति-
त्पत्तिः, किन्तु प्रतिग्रहेण ( स्वीकारेण ) इत्यभिप्रायेण । व्यापारश्चात्र सङ्कल्पादिरूपः । संसृष्टिधने=सम्मिलितधने
विशिष्टस्वस्वत्वध्वंसानुकूलव्यापार एव दानम् । तथाचोभयस्वत्वसत्त्वे ददातीति
दातुः प्रतिग्रहीतुश्च 'ददाति' इत्यप्रयोगाद् धात्वर्थे परमात्रेति निवेशनीयम् । स्वस्वत्वध्वंसाभावादिति वाच्यम्, परस्वत्वोत्पत्तौ
न प्रयोगः । नच तत्र परमात्रेति निवेशाभावेऽपि न दोषः, अर्थमिति—'कर्मणा यमभिप्रैति' इति सूत्र-
स्वस्वत्वध्वंसस्यावश्यकत्वेन स्वस्वत्वध्वंसस्य तत्र सत्त्वात् । तद्बीजन्तु भाष्यप्रयोग ( खण्डिकोपाध्यायः शिष्याय चपेटां
स्थार्थमित्यर्थः । 'आहुः' इत्यनेनारुचिः सूचिता । तथाच 'सम्प्रदानम्' इति महासंज्ञाकरणं नान्वर्थत्वाय, किन्तु सर्वनामस्थानादि-
ददाति ) विरोध एव ।
संज्ञावत् प्राचामनुरोधात् ।

### दर्पणव्याख्या

ॐ अर्थम् ॐ दाधात्वर्थमित्यर्थः ।
ॐ स्वस्वत्वनिवृत्तीति ॐ परस्वत्वोत्पत्त्यवच्छिन्नस्वस्वत्वध्वंसेच्छारूपं व्यापारम् । अन्वर्थमहासंज्ञाकरणसामर्थ्यादुक्तस्थले च
समाचोक्तार्थकदाधात्वर्थकर्मनिष्ठफलभागितयेच्छाविषयत्वमेव सम्प्रदानत्वम् । उक्तभाष्यप्रामाण्यादन्वर्थत्वमेवासिद्धम् । महासंज्ञाकरणं
ददातेस्तदर्थकत्वाभावेन रजकस्य वस्त्रं ददातीत्येवेति तेषामाशयः । ॐ आहुरिति ॐ ।
तु प्राचामनुरोधादेव, सर्वनामस्थानसंज्ञावदित्यस्वरसादाह
मनुजो ग्रामं नयतीत्यत्राजायां निरुक्तसम्प्रदानस्य सत्त्वात्तद्वाचकाच्चतुर्थ्युत्पत्तिरिति चेत् स्यादेव यदि परया कर्म-
संज्ञया सम्प्रदानत्वस्य न बाध इति । 'यूपाय दारु' इत्यादौ न सम्प्रदानचतुर्थी, अपि तु तादर्थ्ये । तादर्थ्यञ्च—स एवार्थः
प्रयोजनमस्य तत्त्वम् । समभिव्याहृतार्थे तादर्थ्यविवक्षायां तद्वाचकाच्चतुर्थीति 'तादर्थ्ये चतुर्थी वाच्या' इति वार्त्तिकार्थः ।
प्रयोजनत्वञ्च न जन्यत्वम्, दुःखाय पापमित्यस्याप्यापत्तेः । नापि अन्यतयेच्छाविषयत्वम्, स्वर्गादेः पुण्यादिजन्य-
तयेच्छाविषयत्वेन स्वर्गाय पुण्यमित्यापत्तेः । नचेष्टापत्तिः, तथा सति पक्तुं व्रजतीत्यर्थे 'पाकाय व्रजति' इति प्रयोगनिर्वाहाय
"तुमर्थाच्च" ( पा० सू० २ । ३ । १५ ) इतिसूत्रप्रणयनवैयर्थ्यापत्तेः, पाकादेर्निरुक्तव्रजनाद्यर्थतयैव तद्वाचकाद्वार्त्तिकेन
चतुर्थ्युपपत्तेः । अपि तु समभिव्याहृतपदार्थनिष्ठव्यापारेच्छानुकूलेच्छाविषयत्वम् । तत्प्रयोजनकत्वरूपं तादर्थ्यं तु तदिच्छाधी-
नेच्छाविषयव्यापाराश्रयत्वम् । दारुणो यूपेच्छाधीनेच्छाविषयतक्षणादिरूपव्यापारवत्त्वय यूपार्थत्वात्तद्विवक्षया यूपपदाच्चतुर्थी ।
तदर्थश्चेच्छाधीनेच्छाविषयव्यापाराश्रयत्वम् । प्रथमेच्छायां यूपादेः प्रकृत्यर्थस्य विषयित्वेनान्वयः । तस्याऽऽश्रयतया दार्वादौ,
एवं रन्धनाय स्थालीत्यादावप्यूह्यमिति केचित्,
तन्न मनोरमम्, तादर्थ्यस्योक्तरूपत्वे मुक्तये हरिं भजतीत्यत्र चतुर्थ्यनुपपत्तेः । न हि भजनस्य मुक्तीच्छाधीनेच्छा-
विषयव्यापारवत्ता नापि मुक्तेः सम्प्रदानता, कर्मजन्यफलभागितयानुद्देश्यत्वात् । तस्मात्तदिच्छाधीनेच्छाविषयत्वमेव
तत्तादर्थ्यम् । स्वर्गाय पुण्यमित्यादयस्त्विष्यन्त एव । वार्त्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेर्न "तुमर्थात्" इतिसूत्रानुपपत्तिरपीति ।
नमःस्वस्त्यादिशब्दयोगेऽपि तदर्थविशेषणवाचकात् "नमः स्वस्ति" ( पा० सू० २ । ३ । १६ ) इति सूत्रेण चतुर्थी
विधीयते । तत्र नमःपदार्थस्त्यागो नतिश्च । तत्र नतिः स्वापकर्षबोधनानुकूलो व्यापारः । 'हरये नमः' एषोऽर्थः

इदञ्च—

अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम् ॥

प्रभा

इदञ्चेति—सम्प्रदानञ्चेत्यर्थः । अनिराकरणादिति—उद्देश्ये सूर्यादौ प्रवृत्तिनिवृत्त्यन्यतरानुकूलव्यापाराभावादित्यर्थः । कर्तुरिति—अत्र कर्मणि षष्ठी । कर्मत्वञ्च निराकरणक्रियानिरूपितम् । त्यागाङ्गम् = दानपदार्थघटकीभूतं क्रियाकर्मसम्बन्धजन्यफलाश्रयत्वेनेच्छोद्देश्यम् । प्रेरणा = प्रवर्तना = दानेऽप्रवृत्तस्येष्टसाधनत्वादिबोधनम् । अनुमतिः = स्वाभिलषिते स्वयं प्रवृत्तस्येष्टसाधनताबोधनम् । तथाच कर्तुरनिराकरणात् = अप्रत्याख्यानात्, 'प्रेरणानुमतिभ्याञ्च त्यागाङ्गं कर्मणेप्सितं सम्प्रदानतां लभते' इत्यन्वयः । अथवा सम्प्रदानतायामेव हेतुत्रयम् ।

दर्पणव्याख्या

शिवाय नमः' इत्यादौ त्यागः । चतुर्थ्या च तत्रोद्देश्यत्वं प्रत्याय्यते । त्यागश्च यदि शिवस्यायं भवत्विति फलेच्छाधीनो न ममेत्याकारकः स्वस्वत्वेच्छाभावरूपस्तदा तदुद्देश्यत्वं त्यागजनकेच्छायाः स्वत्वभागितया विषयत्वम् । यदि त्यागरूपेच्छैवान्यदीयत्वेन त्यज्यमानगतं स्वत्वमपि विषयीकरोति तदा स्वत्वभागितया विषयत्वमेव तदुद्देश्यत्वम्, ननु स्वीकाराश्रयत्वम्, शिवादेर्विग्रहवतोऽपि स्वीकाराभावात्तदाश्रयकतया ध्यातस्य मन्त्रस्य त्यागोद्देश्यतामते तदभावाच्च ।

त्यज्यमानोपचारादौ शिवादिनिरूपितस्वत्वाभावेऽपि तदीयत्वेन तत्र द्रव्ये स्वत्वावगाहिनीच्छाविसंवादिरूपैव । अस्मदीयत्वत्वे बाधितं शिवादिनिरूपितत्वं शिवादिनिरूपितप्रसिद्धस्वत्वान्तरे वा बाधितं तद्द्रव्यसम्बन्धमवगाहते ।

तत्र प्रथमे स्वत्वप्रकारकेच्छाजन्यत्वं जन्यतासम्बन्धेन तादृशेच्छावत्त्वं वा चतुर्थ्यर्थः । तत्र प्रकृत्यर्थस्य शिवादेर्विषयताविशेषसम्बन्धेनान्वयः । द्वितीये विषयताविशेष एव सः । तत्र च प्रकृत्यर्थशिवादेर्निरूपितत्वसम्बन्धेनान्वयः । नमःपदार्थत्यागस्य विषयताविशेषसम्बन्धेनार्घादिद्रव्येऽन्वयः । द्रव्यस्यैव वा विशेष्यतया भासमानत्यागेऽन्वयः । शिवायोत्सृजतीत्यादाविव मात्रानिराकर्तृसम्प्रदानता, नमःपदस्याधातुत्वात् ।

नमःपदेन च स्वप्रमोक्तृपुरुषकर्तृकत्वोपरागेणैव त्यागो बोध्यते, अन्योच्चरितनमःपदेनान्यदीयत्यागाबोधनात्, तत्पुरुषोच्चारितनमःपदात्यागबोधे त्यागे त्यज्यमानद्रव्ये च तदीयत्वसंशयानुदयात् । अत एव तदीयाश्वयोषनकार्थं ददे इतिवत्, 'अहं नमः' इत्यादि न प्रयुज्यते । ऋत्विजा च यजमानरूपपुरुषान्तरीयद्रव्यत्यागे स्वीयत्वारोप्यैव पूजायां नमःपदं प्रयुज्यते । स चारोपस्तस्मिन् विशेषदर्शनदशायामाहार्यतयोपपद्यते । प्रतिनिधिप्रयुक्तदानवाक्यस्येव पूजायां नमःपदघटितवाक्यस्य बाधितार्थकत्वेऽप्यदृष्टजनकत्वं न विरुद्धम्, शास्त्रप्रामाण्यादित्यादन्यत्र विस्तरः ।

तद् विभजते ❀ इदमिति ❀ "कर्मणा यमभिप्रैति" (पा० सू० १ । ४ । ३२) इति सङ्केतितं सम्प्रदानं चेत्यर्थः । त्रिविधमित्यनेनान्वितम् । त्यागाङ्गं कर्मणेप्सितं कर्तुरनिराकरणादित्रिभ्यः सम्प्रदानव्यपदेशं लभत इति योजना । त्यागोद्देश्यतानिरूपकतासम्बन्धेन त्यागे समभिव्याहृतधात्वर्थे विशेषणतया प्रतीयमानत्वं तदङ्गत्वम् । तेन वृक्षायोदकमासिञ्चतीत्यादौ न वृक्षादेराधिक्यम् । वस्तुतस्तु वृत्तिकृन्मते नायं विभागः । तेन वृक्षादेरसंग्रहेऽपि न क्षतिः । तथाच समभिव्याहृतधात्वर्थो इति न व्याख्येयम् ।

इद च विशेष्यं तत्रैदनियामकमाह—❀ अनिराकरणादिति ❀ प्रवृत्तिनिवृत्त्यन्यतरानुकूलव्यापाराभावादित्यर्थः । ❀ कर्मणेप्सितमिति ❀ कर्मजन्यफलभागितयेच्छाविषयः । ❀ प्रेरणेति ❀ अप्रवृत्तस्य कर्तुर्व्यापारविशेषसाधनताबोधनं प्रेरणा, आत्मेष्टसाधनताबोधे अप्रामाण्यशङ्का निवृत्तिस्य कर्तुर्व्यापारानुकूलप्रवृत्तिरूपसामर्थ्येन प्रवर्तनं कर्तृनिष्ठस्वाभिमतादिबोधात्मकत्वमनुमत्यानुकूलव्यापारवत्त्वं वानुमतिरित्यर्थः । एवञ्च 'प्रकृतधात्वर्थकर्मसम्बन्ध-

**विभक्तीनां धर्मिवाचकत्वात्, धर्ममात्रवाचकत्वे "कर्मणि द्वितीया" (पा० सू० २ । ३ ।२) इति सूत्रस्वरसभङ्गापत्तेः, कर्मार्थककृत्तद्धितादौ तथादर्शनाच, द्वितीयाद्यर्थकबहुव्रीहौ 'प्राप्तोदकः' इत्यादौ धर्मिवाचकत्वलाभाच ।**

## प्रभा

विभक्तीनाम् = कारकविभक्तीनाम् । धर्मिवाचकत्वादिति—कर्मादिवाचकत्वादित्यर्थः, ननु कर्मत्वादिरूपधर्मवाचकत्वम् । कारकविभक्तिद्वितीयादीनां कर्मत्वादिधर्ममात्रमर्थस्तत्र स्वरूपसम्बन्धेन प्रकृत्यर्थस्यान्वयः । तस्य च निरूपकतासम्बन्धेन धात्वर्थफले व्यापारे वा यथार्हमन्वय इति मतं निराकर्तुमाह—धर्ममात्रेति । कर्मणि द्वितीयेति—वाचकस्य सप्तम्यर्थः । तथाच कर्मवाचिका द्वितीयेत्यर्थकसूत्रस्य स्वः = स्वकीयो यो रसः = अभिप्रायः = तात्पर्यमिति यावत् तस्य भङ्गापत्तेरित्यर्थः । कृदिति—'कृतः कटः' इत्यादौ । तद्धितेति—'शत्योऽश्वः' इत्यादौ । धर्ममात्रवाचकत्वे 'नामार्थयोरभेदान्वयः' इति व्युत्पत्तिविरोधाद् भेदसम्बन्धेन कर्मत्वादेः कटादावनन्वयापत्तिरिति भावः । तथेति—अभेदेनान्वयदर्शनादित्यर्थः । ननु कृत्तद्धितादौ कटादिना सामानाधिकरण्यदर्शनाद् धर्मिवाचकत्वमस्तु 'कर्मणि द्वितीया' इत्यस्य च कर्मणि बोधनीये सति लाघवात्कर्मत्वे द्वितीयेत्येवार्थ इत्यत आह—द्वितीयाद्यर्थकेति—'प्राप्तोदकः' इत्यादौ उदककर्तृकप्राप्तिकर्माभिन्नो ग्राम इति शाब्दबोधदर्शनाद् द्वितीयायाः कर्मणि शक्तिरावश्यकी । अन्यथा द्वितीयाद्यर्थे विहितसमासस्यापि कर्मत्वादिबोधकत्वापत्त्या ग्रामादावनन्वयापत्ता-

## दर्पणव्याख्या

सम्बन्धस्यैवाङ्गीकृतम् ।

वस्तुतस्तु प्रकृते विशेष्यविशेषणभावस्य सम्बन्धतानुपपत्तेव, सम्बन्धस्य सम्बन्धिभेदनियतत्वादिति त्वदुक्तेः । विशेष्यविशेषणयोर्भाव इति व्युत्पत्त्या तस्य विशेष्यत्वविशेषणत्वमात्रपर्यवसायितया प्रत्येकं तयोरद्विष्ठत्वादनुयोगित्वप्रतियोगित्वाभ्यां द्विष्ठत्वोपपादनेऽप्येकस्यैव सा स्यात्र समुदितयोर्द्वयोः । स्वत्वामिभावरत् शब्दानुगममात्रस्यार्थापरिच्छेदकत्वात् सम्बन्धान्तरे षष्ठी, न विशेष्यविशेषणभावसम्बन्धे इत्यत्र मानाभावाच । तस्माद्यथोक्तमेव रमणीयमिति ।

ननु विभक्तीनां धर्मवाचकत्वस्य तन्त्रान्तरसिद्धतया कथं तत्र प्रकृत्यर्थस्याभेदेनान्वयः, अयोग्यत्वादत आह ❀ विभक्तीनामिति ❀ कारकविभक्तीनामित्यर्थः । ❀ धर्मिवाचकत्वात् ❀ = [illegible]त्वादित्यर्थः ।

मन्वस्तु [illegible] आह ❀ धर्मवाचकत्व इति ❀ । ❀ सूत्रस्वरसभङ्गापत्तेरिति ❀ तद्घटककर्मादिपदानां धर्मवत्तो [illegible] एवेत्यर्थः । तथार्थस्य सूत्रकारसम्मतत्वे, कर्मत्वे द्वितीयेत्यादेव

[illegible] भाव ।

ननु कर्मणीत्यादौ विषयसप्तमीयोऽयमित्यर्थः । तथाच विभक्तीनां धर्मवाचकत्वेऽपि तस्याश्रयतया प्रकृत्यर्थेऽन्वयेन कर्मबोधात् तत्फलान्वयिनी वृत्तिरेव द्वितीयार्थं इतिमतेऽपि तुल्यविधित्वेनतया तन्दुलादीनां [illegible] कर्मत्वादिना भानाय सूत्रस्वरसभङ्गोऽत आह—❀ कर्मार्थकेति ❀ । ❀ कृति ❀ = 'पक्वतण्डुलः' इत्यादौ । ❀ तद्धिते ❀ = 'शत्योऽश्वः' इत्यादौ । आदिपदात् 'पच्यमानस्तण्डुलः' इत्यादौ [illegible] ।

❀ तथादर्शनादिति ❀ धर्मिवाचकत्वादर्शनादित्यर्थः । तथाच कर्मत्वाद्यर्थकत्वघटितयोः [illegible] सूत्रविहितानां धर्मिवाचकत्वादर्शनादपि तद्वाचकत्वमेव न्याय्यमिति भावः । ननु तत्र [illegible] तथाप्यत्र [illegible] धर्मवाचकत्वमेवेत्यत आह ❀ द्वितीयाद्यर्थकेति ❀ द्वितीयादिविभक्तीनां धर्मवाचकत्वे तदर्थविहितसमासस्यापि धर्मवाचकत्वापत्त्या "प्राप्तोदकः" इत्यादौ उदककर्तृकप्राप्तिकर्माभिन्नस्य समासार्थस्य समानविभक्ति-

आश्रयस्यापि प्रकृत्यैव लाभान्न विभक्तिवाच्यता, किन्त्वाश्रयत्वमात्रं वाच्यम्। तदेव च तादात्म्येनावच्छेदकम्। करणतृतीयायाश्च व्यापारोऽपि, पञ्चम्या विभागमात्रम्, चतुर्थ्या उद्देश्यत्वमात्रम्।

प्रभा

स्यात्। किन्तु आश्रयत्वरूपधर्ममात्रे शक्तिः। धर्मधर्मिणोरभेदात् 'कर्मणि द्वितीया' इत्यादिसूत्रविरोधोऽपि न। शक्तिमदभेदापन्नाया एव शक्तेर्विभक्तिवाच्यतया प्रातिपदिकादिवद्बुद्धावपि न दोषः। तिङ्कृदादिषु पचति, पक्ता, पक्वः, इत्यादौ सामानाधिकरण्यदर्शनात्, 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इति सूत्रप्रामाण्याच्च अस्त्याश्रयवाचकत्वम्। अत्राश्रयवाचकत्वे प्रमाणाभाव इत्यत आह—आश्रयस्यापीति। विभक्तिवाच्यतेति—'अनन्यलभ्यो हि शब्दार्थः' इति न्यायान्न द्वितीयादिविभक्तिवाच्यतेत्यर्थः। नन्वाश्रयत्वस्य वाच्यत्वे आश्रयत्वत्वस्य शक्यतावच्छेदकत्वं वाच्यम्, तस्य च तदाश्रयातिरिक्तावृत्तित्वे सति सकलतदाश्रयवृत्तित्वरूपत्वाद् गौरवमत आह—तदेवेति—आश्रयत्वमेवेत्यर्थः। एवेनाश्रयत्वत्वस्य शक्यतावच्छेदकत्वव्यवच्छेदः।

ननु शक्यतासमानाधिकरणधर्मस्यैवावच्छेदकतया आश्रयत्वस्य शक्यतासामानाधिकरण्येनावच्छेदकत्वानुपपत्तिरत आह—तादात्म्येनेति—तथाचाश्रयत्वस्य तादात्म्येन शक्यतासामानाधिकरण्यमिति भावः। तादात्म्यस्य वृत्त्यनियामकत्वेऽपि तादात्म्येनाश्रयत्वसम्बन्धित्वमाश्रयत्वस्यास्तीति तादात्म्येन स्वसम्बन्धितया न स्वनिष्ठशक्यतावच्छेदकत्वानुपपत्तिः। यद्यप्याश्रयतात्वस्याखण्डोपाधित्वं स्वीकृत्य शक्यतावच्छेदकत्वस्वीकारे न गौरवम्, तथापि फलाश्रयत्वव्यापाराश्रयत्वादेरेव विभक्तिवाच्यतया आश्रयतात्वस्याश्रयत्वमात्रवृत्तित्वेन नावच्छेदकत्वसम्भवः। नापि फलाश्रयतात्वस्यावच्छेदकत्वम्, अनेकपदघटितत्वेन गौरवतादवस्थ्यात्, आश्रयतात्वविशिष्टे शक्तिस्वीकारे धर्मधर्मिणोरुभयत्र शक्तिकल्पनायां लाघवाभावाच्च। व्यापारोऽपीति—'व्यापारवत्कारणं करणम्' इति करणपदार्थघटकव्यापारोऽपीत्यर्थः। अपिना आश्रयस्य संग्रहः, आश्रयत्वस्य वा। 'विभागमात्रम्' 'उद्देश्यत्वमात्रम्' उभयत्र मात्रशब्देनाश्रयस्य विभक्त्यर्थत्वव्यवच्छेदः।

वस्तुतस्तु अवधित्वमेव पञ्चम्यर्थः। विभागस्य तदर्थत्वे धातुनापि विभागस्योपस्थित्या विभागस्य द्विधाभानप्रसङ्गात्। अवधित्वस्य च निरूपकतया धात्वर्थे विभागेऽन्वयः।

दर्पणव्याख्या

शक्तिवादपक्षमवलम्ब्याह— ❀ आश्रयस्यापीति ❀ आश्रयत्वेन भानं स्वसिद्धमेवेति भावः। ❀ आश्रयत्वमात्रमिति ❀ द्वितीयातृतीयासप्तमीनामिति शेषः। मात्रपदेनाश्रयव्यवच्छेदः।

नन्वाश्रयत्वस्य शक्यत्वे आश्रयत्वत्वं शक्यतावच्छेदकं वाच्यम्, तच्चाश्रयत्वेतरावृत्तित्वघटितत्वाद् गुर्विति शक्यतावच्छेदकगौरवमेवैतस्मिन् कल्पे दोष इत्यत आह ❀ तदेवेति ❀ आश्रयत्वमेवेत्यर्थः। 'एव'कारेण निरस्ताश्रयत्वत्वव्युदासः। तस्याखण्डत्वस्योपपादितत्वाच्चानात्यन्तिविशेष्यकशक्तिग्रह एव स्वेतरधर्मस्यावच्छेदकत्वापेक्षणादिति भावः। कर्तृतृतीयाया आश्रय(त्व)मात्रार्थकत्वादाह—❀ करणेति ❀। व्यापारोऽपीत्यपिनाश्रय(त्व)समुच्चयः।

वस्तुतस्तु अत्रापि 'व्यापारमात्रमर्थः' इत्येव वक्तुमुचितम्, अपिशब्दस्यावधारणार्थकत्वात्।

❀ विभागमात्रमिति ❀ मात्रपदेनाश्रयत्वव्यवच्छेदः, विभागस्याश्रयतयान्वयादेव वृक्षादादवधित्वलाभादिति भावः। वस्तुतस्तु वृक्षादेरवधित्वरूपत्वस्वरूपसम्बन्धेन पञ्चम्यर्थविभागेऽन्वय इत्युक्तम्। उद्देश्यत्वमात्रमित्यनेनाप्याश्रयत्वव्य

अत एवाकृत्यधिकरणमपि न विरुद्ध्यत इत्यभिप्रेत्याह—शक्तिरेव चेति। षण्णामपीति शेषः। "शेषे षष्ठी" ( पा० सू० २ । ३ । ५० ) इति सूत्रात् तस्याः सम्बन्धमात्रं वाच्यम्।

प्रभा

अत एव = कर्मत्वादिधर्ममात्रस्य वाच्यत्वादेव। न विरुद्ध्यते—शक्तिग्रहे जातिव्यक्त्योरुभयोर्भानेऽपि न व्यक्तौ शक्तिः, आनन्त्याद् व्यभिचाराच्च, 'नागृहीतविशेषणा बुद्धिर्विशेष्यमवगाहते' इति न्यायात्,

'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे'

इति न्यायाच्च। किन्तु विशेषणीभूते धर्मे एव शक्तिरिति तत्र निर्णीतम्।

षण्णामिति—षण्णां कारकविभक्तीनामित्यर्थः। कारकाणां षट्त्वेन तद्विभक्तीनामपि षट्त्वाभिप्रायेणेयमुक्तिः। एतेन षष्ठीवर्जितविभक्तीनां षट्त्वेऽपि कारकषष्ठ्या अपि सत्त्वेन तदसङ्ग्रहापत्तिः। सप्तानामित्युक्तौ सम्बन्धषष्ठ्या अपि ग्रहणापत्तिरित्यपास्तम्। सम्बन्धमात्रमिति—अत्र न धर्म-धर्मिवाच्यत्वप्रयुक्तमतभेद इति मात्रपदेन सूचितम्।

अत्रायं विवेकः—शेषषष्ठ्या क्वचित् सम्बन्धसामान्यरूपेण सम्बन्धवाचकता। यथा—'मातुः स्मरति' इत्यादौ। क्वचिद्विशेष्यरूपेण स्वस्वाम्यादिना। यथा 'राज्ञः पुरुषः' इत्यादौ। सर्वत्र सम्बन्धसामान्येनैव बोधकत्वे तु चैत्रेण रक्षिते मैत्रीयद्रव्यादौ 'नेदं चैत्रस्य धनम्' इति प्रयोगो न सङ्गच्छते। अन्यथा चैत्रसम्बन्धस्यापि तत्र द्रव्यादौ सत्त्वेन निषेधानुपपत्तिः। स्वत्वत्वेन स्वत्वस्य भाने तु चैत्रीयस्य पाल्य-पालकभावसम्बन्धस्य सत्त्वेऽपि तदीयस्वत्वस्याभावान्निषेधोपपत्तिः। सम्बन्धश्च सर्वोऽपि क्रियाकारकभावमूलक एव। तदुक्तम्—

सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।
श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते॥

भाष्येऽपि "नहि कर्मादिभ्योऽन्ये अर्थाः सन्ति। इह तावद् राज्ञः पुरुष इति, राजा कर्ता पुरुषः सम्प्रदानम्, राजा पुरुषाय सम्प्रददाति इत्यर्थसम्प्रत्ययाद्, 'वृक्षस्य शाखा' इति वृक्षः शाखाया अधिकरणम् ( वृक्षे शाखेति लोकप्रसिद्धेः ) यदेतत्स्वन्नाम ( स्वस्वाम ) चतुर्भिरेतत्प्रकारैर्भवति—क्रयणात्, अपहरणात्, याच्ञायाः, विनिमयात्, इति। अत्र सर्वत्र कर्मादयः सन्ति। एवन्तर्हि कर्मादीनामविवक्षा शेषः, कथन्नाम सतो नाम अविवक्षा स्यात्, सतोऽप्यविवक्षा भवति—तद् यथा—'अलोमिका एडका' 'अनुदरा कन्या' इति। असतश्च विवक्षा भवति, तद्यथा—'समुद्रः कुण्डिका' 'विन्ध्यो वर्धितकम्' इति" अनेन भाष्येण क्रियाकारकभावसम्बन्धस्य तदितरसम्बन्धस्थले सर्वत्र सत्त्वेऽपि क्रियाकारकभावमूलकस्वस्वामिभावादेः सम्बन्धत्वेन विवक्षायां क्रियाकारकभावसम्बन्धस्याविवक्षा। तदुक्तम् भाष्यकृता—कर्मादीनामविवक्षा शेष इति। यदा राज्ञः स्वत्वविवक्षा तदा राजपदादेव, यदा तु पुरुषस्य स्वत्वविवक्षा तदा पुरुषपदात्

दर्पणव्याख्या

सः। ❁ अत एवेति ❁ कर्मत्वादिशक्तेस्तद्धर्मिकवाच्यत्वकथनादित्यर्थः।

❁ न विरुद्ध्यत इति ❁ शक्तिग्रहे जातिव्यक्त्योरुभयोर्भानाविशेषेऽपि जातिरेव शक्या, 'नागृहीतविशेष' न्यायात्, 'विशेष्यं नाभिधा गच्छेत्' इति न्यायाच्च। व्यक्तिशक्तौ व्यभिचारात् तासामानन्त्याच्चेति तत्र सिद्धान्तितमिति भावः। कारकविभक्त्यर्थं निरूप्य प्रसङ्गात् षष्ठ्यर्थं निरूपयति मूले—❁ सम्बन्ध इति ❁। "शेषे षष्ठी" ( पा० सू० २ । ३ । ५० ) इति सूत्रात् कारकप्रातिपदिकार्थभिन्नः स्वस्वामिभावादिसम्बन्धश्च तत्र शेषपदार्थः। तत्रान्यविभक्तीनां मतभेदेन धर्मिधर्मवाचकत्ववदेतस्यास्तथा भ्रमो मा भूदित्याशयेनाह सारे ❁ सम्बन्धमात्रमिति ❁ पक्षद्वयेऽपीति शेषः।

प्रभा

षष्ठी—'राज्ञः पुरुषः' 'पुरुषस्य राजा' इति। तदुक्तं हरिणा—

द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते।
तत्राभिधीयमानश्च प्रधानेऽप्युपचर्य्यते ॥ इति।

एतदर्थश्चायम्—यद्यप्यसौ सम्बन्धो द्विष्ठः=प्रतियोग्यनुयोग्युभयवृत्तिस्तथापि परार्थत्वात्=अन्यम्प्रति गुणानां विशेषणत्वाद् विशेषणत्वेन विवक्षितस्य सम्बन्धं विना विशेषणत्वासम्भवात् सम्बन्धो व्यतिरिच्यते= उद्भूततया प्रतीयते इति विशेषणवाचकादेव षष्ठी। विशेष्यस्य तु पदान्तरासमभिव्याहारस्थले स्वरूपत एव प्रतीत्या उद्भूतसम्बन्धो नास्ति इति न ततः षष्ठी, सम्बन्धस्य द्विष्ठत्वेऽपि तत्र=विशेषणे, अभिधीयमानः=षष्ठ्या प्रतीयमानः प्रधाने=विशेष्येऽपि उपचर्य्यते=पुरुषनिष्ठराजनिरूपितविशेष्यतायाः राजपदसन्निधाने प्रतीयमानाया उपकारको भवति इति।

ननु सम्बन्धस्योभयनिरूप्यत्वाद् विशेषणाद् यथा षष्ठी भवति तथा विशेष्यवाचकादपि राजनिरूपितस्वत्वयान्पुरुष इत्यर्थे षष्ठी स्यादिति चेन्न,. उक्तार्थे विशेष्यवाचकात् षष्ठ्युत्पत्तौ 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्' इति न्यायविरोधात्, उक्तार्थे प्रत्ययार्थस्य स्वत्वस्य पुरुषरूपप्रकृत्यर्थ-प्रत्ययप्रधानत्वात्। किञ्च यदपेक्षया यस्य लघुभूतसम्बन्धेन क्रियान्वयित्वं तद्वाचकप्रकृतिकविभक्तेः कारक-विभक्तित्वम्। गुरुभूतसम्बन्धेन क्रियान्वयिवाचकप्रकृतिकविभक्तेस्तदपेक्षयोपपदविभक्तित्वमिति सिद्धान्तात्, 'राज्ञः पुरुषः' इत्यत्र प्रथमायाः कारकविभक्तित्वात् 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायेन शेषषष्ठ्याः प्रथमया कारकविभक्त्या बाधात्। एतादृशकारकविभक्त्युपपदविभक्त्योर्मानन्तु 'सहयुक्तेऽप्रधाने' इति सूत्रस्थभाष्यमेव। तत्र हि-'पुत्रेण सहागतः पिता' इत्यादौ पितृशब्दात्तृतीयावारणाय कृतमप्रधान-ग्रहणमुपपदविभक्तेरिति न्यायेन प्रथमां प्रसाध्य 'अप्रधाने' ग्रहणं प्रत्याख्यातम्। नच तद्भाष्येण प्रथमाया एव कारकविभक्तित्वं कल्प्यते इति वाच्यम्, पुत्रेण सहागतस्य पितुर्धनमित्यादौ पित्रादिशब्दात् तृतीया-वारणायाप्रधानं ग्रहणस्यावश्यकतया प्रत्याख्यानपरभाष्यासङ्गत्यापत्तेः। उक्तकारकविभक्तित्वरूपणे तु न दोष, तृतीयापेक्षया षष्ठ्या अपि कारकविभक्तित्वेनोक्तन्यायेन तृतीयायाः षष्ठ्या बाधात्।

दर्पणव्याख्या

स च क्वचित् सम्बन्धत्वेन सामान्यधर्मेण वाच्यः, क्वचिच्च विशेषरूपेणैव। तत्र सामान्यरूपेण "मातुः स्मरति" इत्यादौ, "राज्ञः पुरुषः" इत्यादौ तु विशेषरूपेणैव। अनेकसम्बन्धसत्वेऽपि विशेषरूपेण विवक्षायां स्वस्वविषये तत्तद्विभक्तीनां प्रसरात्। सम्बन्धश्च सर्वत्र क्रियाकारकभावमूल एव। "षष्ठी शेषे" इति सूत्रे सम्बन्धविशेषविवक्षया 'नेदं कस्य' इति प्रयोगात्। 'राज्ञः पुरुषः' इत्यत्र राजा पुरुषाय ददातीति सम्प्रदानयत्राजा कर्त्ता पुरुषः सम्प्रदानम्, वृक्षस्य शाखेत्यत्र वृक्षे शाखेति लौकिकप्रसिद्धया वृक्षः शाखाया अधिकरणम्। "यदेतत् स्वं नाम चतुर्भिः प्रकारैरेतद्भवति—क्रयणादपहरणाद्याच्ञायाः परिवर्त-नरूपाद्विनिमयादित्यनेन यत्राश्रूयमाणा क्रिया तत्रापि तत्फलसम्बन्धानुमितकरणत्वादिनाशेषत्वेऽस्तु सत्त्वादिग्ग्रहणेन भाष्येण शेषपदार्थप्रसिद्धिमाशङ्क्यैवं तर्हि कर्मादीनामविवक्षा शेष इति शेषोक्ते"। क्रियाकारकसम्बन्धस्य वस्तुतः सर्वत्र सत्त्वेऽपि शेषपदार्थमौल्यमिति तद्भावः।

तदिदमित्थं स्वस्वामिभावादेः सम्बन्धत्वेन विवक्षणे कर्माद्यविवक्षणात् शेषपदार्थमौल्यमिति तद्भावः।

नच सम्बन्धस्योभयनिरूप्यत्वात् 'राज्ञः पुरुषः' इत्यत्र राजपदोत्तरमिव पुरुषपदोत्तरं षष्ठ्यापत्तिरिति चेन्न, यदा राज्ञः उपकारकत्वविवक्षा तदा राजपदादेव। यदा तु पुरुषस्य तद्विवक्षा तदा पुरुषपदादपि, पुरुषस्य राजेति। सर्वेऽत्र भवत्येवेति नोक्तातिप्रसङ्गः। तदुक्तं हरिणा—

द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते।
तत्राभिधीयमानश्च प्रधानेऽप्युपचर्य्यते ॥ इति।

प्रभा

द्व्यनिरूपितं मध्यत्वं न स्यादिति वार्तिकप्रत्याख्यानं विरुद्ध्येत। शक्तेः कारकत्वे तु कर्तृत्वशक्तिनिरूपक-भुजिक्रियाया भेदात् कर्तृत्वशक्तेरपि भेदेन अद्यतनभुजिनिरूपितकर्तृत्वशक्तेः द्व्यहोत्तरभुजिनिरूपितकर्तृत्व-शक्तेर्भेदात् तयोः शक्त्योर्मध्ये द्व्यहरूपः कालो मध्यः सम्पद्यते इति सूत्रेणैव कारकमध्यत्वमादायैव लक्ष्यं सिध्यतीति 'क्रियामध्य इति वक्तव्यम्' इति वार्तिकप्रत्याख्यानं सङ्गच्छते।

*'अनभिहिते'* ( २–३–१ ) इति सूत्रभाष्यादपि *'शक्तिः कारकम्'* इति पक्षः प्रतीयते। तथाहि— *'द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहिते विभक्त्यभावप्रसङ्गः। द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहिते विभक्तिर्न प्राप्नोति। क्व? 'प्रासादे आस्ते' 'शयने आस्ते' इति। किं कारणम्? सदिप्रत्ययेनाभिहितमधिकरणमिति कृत्वा सप्तमी न प्राप्नोति, नवाऽन्यतरेणानभिधानात्। नवा एष दोषः। किं कारणम्? अन्यतरेणानभिधानात्। अन्यतरेणात्रानभिधानम्। सदिप्रत्ययेना ( घञा ) भिधानम्। आसिप्रत्ययेना ( लटा ) नभिधानम्। यतोऽनभिधानं तदाश्रया सप्तमी भविष्यति।'* कुतो नु खल्वेतत् सत्यभिधाने चानभिधाने चानभिहिताश्रया सप्तमी भविष्यति, न पुनरभिहिताश्रयः प्रतिषेध इति *'अनभिहिते'* हि विधानम्। अनभिहिते सप्तमी विधीयते। नाभिहिते प्रतिषेधः।' इति। पर्युदासनञम्, 'शक्तिः कारकम्' इति पक्षञ्चाश्रित्य समाधत्ते भाष्यकारः—अत्राधिकरणत्वशक्तिद्वयम्—सदिनिरूपितम्, आसिनिरूपितञ्च। तत्राभिहितं यत् सदिनि-रूपितमधिकरणत्वं तद्भिन्नं यदासिनिरूपितमधिकरणत्वं तदाश्रया सप्तमी निर्बाधा। शक्तिमतोऽधिकरणत्वे पर्युदासे प्रसज्ये च दोष इति उक्तपरिहारो न सम्भवेदित्यभिप्रायेणाह भगवान्—'किं पुनर्द्रव्यं साधनम् ( कारकम् ), आहोस्विद् गुणः ( शक्तिः )? किञ्चातः। यदि द्रव्यं साधनं नैतदन्यद् भवत्यभिहितात्' इति पर्युदासपक्षेऽपि दोष एव। अथ हि गुणः साधनम्, भवत्येवदन्यदभिहितात्। अन्यो हि सदिगुणः ( शक्तिः ), अन्यश्चासिगुणः ( शक्तिः )। किं पुनः साधनं न्याय्यम्? गुण इत्याह—कथं ज्ञायते? एवं हि कश्चित् कञ्चित् पृच्छति—क्व देवदत्त इति। स तस्मा आचष्टेऽसौ वृक्ष इति। कतरस्मिन्? यस्तिष्ठति इति। स वृक्षोऽधिकरणं भूत्वाऽन्येन शब्देनाभिसम्बध्यमानः कर्ता सम्पद्यते। 'वृक्षे आस्ते' इत्यत्राधिकरणम्। 'यः ( वृक्षः ) तिष्ठति' इत्यत्र कर्ता इति भावः। 'द्रव्ये पुनः साधने सति यत्कर्म तत्कर्मैव स्यात्, यत्करणं करणमेव, यदधिकरणमधिकरणमेव' इति भाष्येण कण्ठत एव 'शक्तिः कारकम्' इति पक्षस्य न्याय्यत्वं समर्थितं भवति, इत्यन्यत्र विस्तरः।

दर्पणव्याख्या

तथाच देवदत्तादिरूपकर्तृद्रव्यस्यैक्येऽपि कालभेदभिन्नभुजिक्रियानुमितकारकपदार्थकर्तृत्वशक्त्योर्भेदात् तन्निमित्तम-ध्यत्वव्यपदेशाबाधाद्धयोक्तेऽनुपपत्त्यभावात् 'क्रियामध्ये' इति वार्तिकं नारम्भणीयमिति तद्भावः।

इदमुपलक्षणम्—अनभिहितसूत्रभाष्यस्य। तत्र 'संख्या विभक्त्यर्थः' इति पक्षेऽनभिहिताधिकारं समर्थ्य द्वयोः कारकयोरन्यतराभिधाने विभक्त्यभावप्रसङ्गः, क्व? 'प्रासादे आस्ते' 'शयने आस्ते', किं कारणम् यदि प्रत्ययेना-भिहितमधिकरणमिति कृत्वा सप्तमी न प्राप्नोतीत्याशङ्क्य, नवान्यतरेणाभिधानात्, 'अनभिहिते विधानम्' इत्यादिना प्रसज्यप्रतिषेधे, पर्युदासे वा नञर्थे दूषणं परिहृत्य यदि साधनं द्रव्यं स्यात् तदेकमेव, तच्चाभिहितमिति पूर्वोक्तपरिहारो न सम्भवति। अथ शक्तिः साधनं तदा तस्याभेदादनभिहितत्वसम्भवात्पूर्वोक्तपरिहार इत्यभिप्रेत्य किं पुनर्द्रव्यं साधनमा-होस्विद् गुण इत्याशङ्क्योक्तम्, किं पुनः साधनं न्याय्यम्? गुण इत्याह। कथं ज्ञायते, एवं हि कश्चित् कञ्चित् पृच्छति, क्व देवदत्त इति?। स तस्मायाचष्टेऽसौ वृक्षे इति, कतरस्मिन् यस्तिष्ठति स वृक्षोऽधिकरणं भूत्वाऽन्यशब्देनाभिसम्बध्यमानः कर्ता सम्पद्यते। द्रव्ये साधने यत् कर्म कर्मैव स्यात्, करणं करणमेव यदधिकरणमधिकरणमेव"इति।

एवञ्च 'देवदत्तस्य गौर्ब्राह्मणाय गेहाद् गङ्गायां हस्तेन मया दीयते'

प्रभा

एवञ्चेति—उक्तप्रकारेण धर्मिणो विभक्तिवाच्यत्वसिद्धौ चेत्यर्थः । देवदत्तस्य गौर्ब्राह्मणाय गेहाद् गङ्गायां हस्तेन मया दीयते इति—स्वस्वामिभावः षष्ठ्यर्थस्तत्र देवदत्तरूपप्रकृत्यर्थस्योक्तसम्बन्धेन गवि, गोश्चाभेदसम्बन्धेन 'दीयते' इत्येतद्घटकाख्यातार्थाश्रये, तस्य च स्वपरत्वध्वंससमानाधिकरणपरस्वत्वरूपफले स्वरूपसम्बन्धेन, फलस्य चानुकूलत्वसम्बन्धेन व्यापारेऽन्वयः । 'ब्राह्मणाय' इत्यत्रोद्देश्यः चतुर्थ्यर्थः, तत्राभेदेन ब्राह्मणस्य, तस्य निरूपकतासम्बन्धेन धात्वर्थव्यापारे, 'गेहात्' इत्यत्राधेयतासम्बन्धेन, गेहस्य पञ्चम्यर्थे विभागे, तस्य जनकतासम्बन्धेन, 'गङ्गायाम्' इत्यत्र प्रकृत्यर्थस्य सप्तम्यर्थाधिकरणेऽभेदेन, अधिकरणस्य निरूपकत्वेन, 'हस्तेन' इत्यत्र हस्तस्याभेदेन तृतीयार्थकरणे, तस्य निरूपकतया, 'मया' इत्यत्रास्मदर्थस्याभेदेन तृतीयार्थाश्रये, तस्य चाधेयतया व्यापारेऽन्वयः ।

दर्पणव्याख्या

कैयटेनापि "यदि द्रव्यं साधनं स्यात् तदा तस्यैकरूपत्वात् तन्निबन्धनाबाधितप्रत्ययमिश्रणाविषयात् नानार्थक्रियाकारणनिबन्धनः 'घटेन जलमाहर' 'घटं कुरु' 'घटोऽस्ति' इति व्यपदेशो न स्यात्, दृश्यते चासौ । तस्माच्छक्तिरेव साधनं सिद्धम्" इति तद्विवृतम् ।

एवञ्च शक्तिपक्षस्याऽऽकरसम्मततया द्वितीयादीनां कर्मत्वादौ शक्तिरिति वदतां मतमपि सम्यगेवेति भावः । प्रातिपदिकार्थेतिसूत्रविहितप्रथमाया यथायथं प्रातिपदिकार्थः, लिङ्गम्, परिमाणं चार्थः ।

कर्मादाधिक्ये प्रथमा मा भूदिति तत्र मात्रग्रहणम् । द्वन्द्वान्ते श्रूयमाणस्य तस्य प्रत्येकं द्वन्द्वघटकपदार्थेऽन्वयात् प्रातिपदिकार्थमात्रे प्रथमेत्यादिवाक्यार्थः । प्रातिपदिकार्थत्वञ्च—नामनिष्ठशक्त्यवच्छिन्नजनकतानिरूपितजन्यतावच्छेदकोपस्थितिविषयत्वव्यापकविषयताप्रतियोगित्वम् । उच्चैरित्याद्यर्थविषयितायास्तादृशोपस्थितित्वव्यापकत्वात् तत्र प्रथमोपपत्तिः ।

एवं कृष्ण इत्यादौ कृष्णादिविषयितायाः इव पुंस्त्वादिविषयिताया अपि तदुपस्थितित्वव्यापकत्वं ज्ञेयमेव । यद्यपि 'लिङ्गं प्रातिपदिकार्थः' इति पक्षे लिङ्गस्योपस्थितिविषयत्वं दुर्घटम्, तथाप्यनुभवानुरोधेन शक्यार्थोपस्थिते प्राग् लिङ्गोपस्थितेरवधानस्य नियमेन कल्पनात् तस्य तत्त्वं बोध्यम् । एवञ्चालिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणानि । तटादिशब्दजन्योपस्थितौ तु पुंस्त्वादिभानस्यानियतत्वात्तत्राप्राप्तप्रथमाविधानाय लिङ्गग्रहणम् ।

'सिंहो माणवकः' इत्यादौ सादृश्याद्यधिकार्थस्य प्रतीतावप्यन्तरङ्गत्वात् स्वार्थमात्रनिष्ठात् तस्मात् प्रथमा सुलभैव । तत्र प्रथमार्थलिङ्गस्य विशेषणतया प्रकृत्यर्थेऽन्वयः, योग्यताबलादनुभवाच्च, तथैव कार्यकारणभावकल्पनात् । एवं द्रोणो व्रीहिरित्यादौ द्रोणप्रातिपदिकार्थातिरिक्तद्रोणपदात् परिमाणस्याधिक्येन भानात्तत्र परिमाणग्रहणम् ।

न च व्रीह्यादिपदसमभिव्याहारात् तद्भानेऽप्यन्तरङ्गत्वात् प्रातिपदिकार्थमात्र एव साऽस्त्विति वाच्यम्, तथा सति द्रोणपदार्थस्य परिमाणस्य भेदसम्बन्धेनान्वयानुपपत्तेः । प्रथमार्थस्य तस्य तु भेदेनान्वये न किञ्चिद् बाधकमिति सम्प्रदायः ।

नव्यास्तु—प्रातिपदिकार्थः—तत्तत्पदप्रवृत्तिनिमित्तम्, तदाश्रयश्च । अत एव लिङ्गग्रहणं चरितार्थम्, अन्यथा "स्वमोर्नपुंसकात्" ( पा० सू० ७ । १ । २३ ) इति सूत्रप्रामाण्यात् तस्यापि प्रातिपदिकार्थतया तदुपादानवैयर्थ्यापत्तेः । आश्रयत्वं च वैज्ञानिकम्, शक्यतावच्छेदकारोप एव लक्षणेत्यन्यत्र व्यवस्थापितत्वात् । गोपीत्यादौ प्रकृत्यर्थस्य लाक्षणिकत्वेऽपि न क्षतिः । तटादिशब्दानां लिङ्गं वाच्यमेव । विसर्गादयस्तद्द्योतकाः ।

एवञ्च प्रातिपदिकार्थ इत्यस्यालिङ्गा- लिङ्गप्रवृत्तिनिमित्तमात्रवत्पुमादिशब्दाश्चोदाहरणम् । इतरे लिङ्गमात्राधि

इत्यत्र देवदत्तसम्बन्धिनी या गौस्तदभिन्नाश्रयकत्यागानुकूलो ब्राह्मणोद्देश्यको गेहनिष्ठविभागजनको गङ्गाधिकरणको हस्तकरणको मन्निष्ठो व्यापार इति बोधः। यथायथम् = उक्तप्रकारेण।

अत्र मानमुपदर्शयन् 'घटं जानाति' इत्यादौ द्वितीयाया विषयतायां लक्षणेति वह्वाकुलं वदतो नैयायिकादीन् प्रत्याह—सुपां कर्मेति।

प्रभा

तथाच देवदत्तत्वावच्छिन्नस्वस्वामिभावसम्बन्धावच्छिन्नप्रकारतानिरूपितगोत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना गोत्वावच्छिन्नाऽभेदसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिताऽऽश्रयत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना आश्रयत्वावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता स्वस्वत्वध्वंससमानाधिकरणपरस्वत्वत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्नोत्पादकत्वत्वावच्छिन्नाऽनुकूलत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता, (१) ब्राह्मणत्वावच्छिन्ना अभेदसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता उद्देश्यत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना उद्देश्यत्वावच्छिन्ना निरूपकत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता, (२) गेहत्वावच्छिन्नाऽऽधेयत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता विभागत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना विभागत्वावच्छिन्ना जनकत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता, (३) भगीरथखाताबच्छिन्नजलप्रवाहत्वावच्छिन्ना (गङ्गात्वावच्छिन्ना) अभेदसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता अधिकरणत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना अधिकरणत्वावच्छिन्ना निरूपकत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता, (४) हस्तत्वावच्छिन्नाभेदसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता करणत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना करणत्वावच्छिन्ना निरूपकत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता, (५) अस्मदर्थत्वावच्छिन्नाऽभेदसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिताऽऽश्रयत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्नाऽऽश्रयत्वावच्छिन्नाऽऽधेयत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता (६) च वर्तमानकालावच्छिन्नव्यापारत्वावच्छिन्नविशेष्यताशाली परिष्कृतो बोध इति पक्षोल्लिनः।

दर्पणव्याख्या

अयं भावः—

सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ॥

वार्त्तिकतद्व्याख्याभ्यां कर्मादेर्वाच्यतायास्तन्नियमस्य च लाभः ।

प्रभा

'सक्तून् जुहोति' इत्यत्र द्वितीयया करणत्वम्, 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यत्र च द्वितीयया साधनत्वम्, 'घटं जानाति' इत्यत्र तिङा आश्रयत्वम्, द्वितीयया विषयत्वम्, 'रथेन गम्यते' इत्यत्र तृतीयया व्यापारश्च लक्ष्यते, इत्येव सुपां तिङाञ्च नैयायिकमीमांसकाद्युक्तां लक्षणां निराचिकीर्षुः कर्मादयो विभक्त्यर्था इत्यत्र प्रमाणोपदर्शनव्याजेनाह—

सुपां कर्मादय इति—आदिना कर्त्रादीनां संग्रहः । अपिना कर्मत्वादीनाम् । तथेति—तिङामपि कर्मत्वादय', सङ्ख्या चार्थः । तत्र = सुप्तिङ्सु । सुपस्तिङश्चापेक्ष्य नियमः = 'कर्मणि द्वितीयैव' 'करणे तृतीयैव' 'अभिहिते कर्मादौ प्रथमैव' 'एकत्वे एकवचनमेव नान्यत्' इत्यर्थनियमः । येन नियमेन अर्थो नियम्यते सोऽर्थनियमः । उक्तनियमेन कर्मरूपार्थो द्वितीयामेव लभते नान्यां सुब्विभक्तिम् । द्वितीयादयः तु यद्यन्यत्रापि प्राप्नोति तर्हि तत्रापि स्याद्यथा—'स्वौजसमौट्' इत्यनेन कर्माद्यभावेऽप्यत्र पक्षे द्वितीयादयः सप्तविभक्तयोऽव्ययेभ्यो जायन्ते ।

अयम्भाव.—'स्वौजसमौट्' इति सूत्रेण सर्वेभ्य प्रातिपदिकेभ्य अर्थविशेषमनपेक्ष्य सर्वा विभक्तयो विधीयन्ते इति कर्मणि सर्वा विभक्तयस्तेन स्युरिति कर्मणि द्वितीयायास्तेन सिद्धतया 'कर्मणि द्वितीया' 'द्व्येकयोर्द्विवचनैकवचने' इत्यादीनि सूत्राणि नियामकानि स्यु' । तथाच कर्मणि द्वितीयैवेति नियमसामर्थ्यात् 'स्वौजस्' इति सूत्रेण कर्मणि विहितानां द्वितीयेतरविभक्तीना निवृत्ति' स्यात् । यत्र (अव्ययादौ) कर्मणि द्वितीयेत्यादिसूत्राणा विषयो नास्ति तत्र सामान्यसूत्रेण विहितानां विभक्तीना न निवृत्तिरित्यव्ययेभ्य सर्वा विभक्तयः स्युरेव । अत्र च नियमे द्वितीयादिविभक्तिमपेक्ष्यार्थो नियम्यते इत्यर्थनियमः । प्रकृतेषु = प्रकरणप्राप्तेषु कर्मादिषु वा नियम. । प्रत्ययनियमो यथा—'कर्मण्येव द्वितीया' एकत्वे एव एकवचनम्, अभिहिते एव प्रथमा' एवमादिः । अत्रार्थमपेक्ष्य विभक्तयो नियम्यन्ते यथा 'कर्मण्येव द्वितीया' 'प्रातिपदिकार्थे एव प्रथमा' इति नियमेन कर्मत्वसत्त्वे एव द्वितीया, न तु तदसत्त्वे; इत्यव्ययेभ्यो प्रथमाद्य. का अपि विभक्त्यो न स्युः । सामान्यसूत्रेण विहितानां सर्वासां निवृत्ति' स्यात्, इत्यव्ययेभ्य 'अव्ययादाप्सुपः' इत्यादिसूत्रसामर्थ्यादेव विभक्तिः साध्या स्यात्तु न्यायतः इत्ययम् 'प्रत्ययनियम.' इत्युच्यते, इत्याह—कर्मादेरिति । अय नियम' स्वातन्त्र्येण, नत्वेकवाक्यतया । एवमेव 'तिप्तस्झि' इत्यादिना कर्तरि,

दर्पणव्याख्या

यति—ꣳ अयं भाव इत्यादि ꣳ "स्वौजसमौ" (पा० सू० ४ । १ । २) इत्यत्र कारकविभक्तित्वादौ द्वितीयाद्या उपादानाद् वार्तिकेऽपि तदर्थकर्मण प्राड्निर्देश. । कर्मादीत्यादिना कारकान्तरसंग्रह' । अपिना शक्ति' कारकमिति पक्षोक्त-कर्मत्वादिशक्तीना समुच्चय ।

ꣳ तथा तिङामिति ꣳ तद्वत्तिङामपि सङ्ख्याकर्माद्यर्थं इत्यर्थं । ꣳ तत्र ꣳ सुप्तिङ्सु । ꣳ प्रकृतेषु ꣳ

ꣳ वार्तिकतद्व्याख्येति ꣳ लोकादेव बहुत्वादिषु बहुवचनादि भविष्यति, किमर्थम् "बहुषु बहुवचनम्" । (पा० सू० १ । ४ । २१) इत्यादिसूत्रमित्याक्षेपे सुप्तिङामविशेषेण विधानाद् दृष्टविप्रयोगत्वाच्च नियमार्थं वचनमिति समाधाय नियमाऽऽकारप्रदर्शकमिदं श्लोकवार्त्तिकम् । अर्थेष्वित्यर्थं ।

तथाहि—"स्वौजसमौट्" (पा० सू० ४ । १ । २) "कर्मणि द्वितीया" (पा० सू० २ । ३ । २) इति "द्व्येकयोर्द्विवचनैकवचने" (पा० सू० १ । ४ । २२) इत्यादेः; (तः कर्मणि च) "लस्य" (पा० सू० ३ । ४ । ७७) "तिप्तस्झि" (पा० सू० ३ । ४ । ७८) "तान्येकवचन-द्विवचन" (पा० सू० १ । ४ । १०१) इत्यादेरेकवाक्यतया कर्मादिस्तत्सङ्ख्याया वाच्यता लभ्यते । तथा तन्नियमश्च द्विविधो लभ्यते—द्वितीया कर्मण्येव, तृतीया करण एवेत्येवमादिः शब्दनियमः । कर्मणि द्वितीयैव, करणे तृतीयैवेत्येवमर्थनियमश्च । उभयथापि सिद्धनियमविरुद्धं

प्रभा

लक्षणादिकमसाधुत्वप्रयोजकमिति याज्ञे कर्मणि "नानृतं वदेत्" इति निषेधविषयो भवत्येवेति स्वेच्छया लक्षणाऽपि विभक्तावप्रयोजिकैव । अत एव 'विभक्तौ न लक्षणा' इत्यादिर्नैयायिकवृद्धानां व्यवहार इति दिक् ॥ २४ ॥

इति श्रीवैयाकरणभूषणसारे सुबर्थनिर्णयः ॥ ३ ॥

—***—

प्रभा

प्रयोगे याज्ञे कर्मणि अनृतवदनमनिष्टसाधनमिति निषेधविषयता स्यात् । विभक्तौ = विभक्तिविषये । अप्रयोजिका = नास्ति प्रयोजकम् = प्रमाणं यत्र सा, अप्रमाणिकेत्यर्थः । अत एव = स्वेच्छया लक्षणाया असाधुत्वप्रयोजकत्वादेव । नैयायिकवृद्धानामिति—एतेन नव्यनैयायिकानां केवलव्याकरणविरोध एव न, किन्तु स्वकीयवृद्धसिद्धान्तविरोधोऽपीति सूचितम् ॥ २४ ॥

पूर्णा भूषणसारस्य बालकृष्णकृता प्रभा ।
सुबर्थनिर्णये भागे महेशः प्रीयतां ततः ॥

॥ शुभम्भूयात् ॥

—***—

दर्पणव्याख्या

निरुक्तकर्मत्वानात्मकत्वेन तत्र द्वितीयादेः शास्त्रेणाविधानात् तदर्थतात्पर्येण तदुच्चारणस्यानृतत्वादित्यर्थः । ❀ अत एवेति ❀ विभक्तौ लक्षणाया अप्रयोजकत्वादेवेत्यर्थः ।

ननु व्याकरणस्य शक्तिनिरूढलक्षणान्यतरप्रतिपादकत्वेन यत्र मुख्यार्थबाधप्रतिसन्धानादि तत्र वाक्यसम्बन्धिनि लक्षणास्वीकारे बाधकाभावः । घटं जानातीत्यादितो घटादिविषयकज्ञानबोधस्य सर्वानुभवसिद्धस्य द्वितीयाया वृत्तिं विनानुपपद्यस्यैव लक्षणाकल्पकत्वाच्च "विभक्तौ न लक्षणा" इति प्रवादस्त्वेकविभक्तेरपरविभक्त्यर्थे न लक्षणेत्येतत्परोऽत एव न व्यत्ययानुशासनवैयर्थ्यम् । 'सुपां कर्मादयोऽप्यर्थाः' इत्यत्र कर्मादिपदस्य गौणमुख्यसाधारणकर्मत्वपरतयाऽप्युपपत्तेर्न तद्विरोधोऽपीत्यत आह—❀ दिगिति ❀ ।

तदर्थस्तु मुख्यार्थमादाय शास्त्रचारितार्थ्ये गौणे तद्व्यापारे मानाभावः । अत्र घटं जानातीति प्रसिद्धप्रयोगानुरोधेन गौणेऽपि तद्व्यापारकल्पनावश्यिकेति वाच्यम्, जानातेर्ज्ञानविषयत्वाप्त्युपसर्जनविषयत्वापादनार्थकतया मुख्यकर्मतयैवास्मन्मते प्रयोगोपपत्तिसम्भवात् । स्वानुभवैकगम्येऽर्थे लक्षणाभ्युपगमेऽर्थनिर्देशस्य वैयर्थ्यापत्तेश्चेत्यादिः ।

अत्र वदन्ति—शास्त्रस्य गौणे प्रवृत्त्यनभ्युपगमे त्यादीनां फलत्वेनाभिमते गत्यभावे धात्वर्थव्यापारजन्यत्वाभावेन तद्घटितमुख्याकर्मकत्वाभावात्ततो भावे कर्त्तरि च प्रत्ययानुपपत्तिः, एवं वारयतेः संयोगानुकूलव्यापाराभावानुकूलव्यापारार्थकतायाः सर्वसम्मततया तस्यापि मुख्यसकर्मकत्वाभावेन ततोऽपि कर्त्तरि कर्मणि च लकाराद्यनुपपत्तिस्ततो गौणेऽपि शास्त्रविषयतावश्यमभ्युपेतव्येति न घटं जानातीत्यादीनां विषयत्वलक्षणायामप्यसाधुता ।

वस्तुतस्तु शक्तिः कारकमिति पक्षस्य तन्मते तिङ्सुप्सु व्यवस्थितत्वेन द्वितीयाया विषयत्वान्वय्याधेयत्वबोधकत्वेऽपि न क्षतिः, तादृशस्थले विषयरूपफलस्य धात्वर्थपरतायाः प्रागुपपादनात् तन्मतेऽप्युक्तनियमविरोधस्य निषेधविषयतायाश्चासम्भवादित्यलम् ॥ २४ ॥

इति श्रीभूषणसारदर्पणे सुबर्थनिर्णयः ॥ ३ ॥



## ॥ अथ नामार्थनिर्णयः ॥

नामार्थमाह—

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा ।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥ २४ ॥

एकम् = जातिः, लाघवेन तस्या एव वाच्यत्वौचित्यात्, अनेकव्यक्तीनां वाच्यत्वे गौरवात् ।

## ॥ नामार्थनिर्णयः ॥

प्रभा

सुपां प्रातिपदिकप्रकृतिकत्वात् प्रत्ययेन प्रकृतिस्मरणात् प्रसङ्गसङ्गत्या नामार्थं निरूपयति—नामार्थमिति—नाम = प्रातिपदिकम्, तदर्थमित्यर्थः । एकशब्दस्य एकत्वगुणविशिष्टार्थकतया तस्य चानियतत्वादाह—एकं जातिरिति—जातिरुपलक्षणम्—तत्तत्प्रवृत्तिनिमित्तस्य । तेनाकाशत्वाभावत्वादीनां जातित्वाभावेऽपि न क्षतिः । प्रवृत्तिनिमित्तत्वञ्च—'वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारतावत्त्वरूपम्' । घटत्वरूपे घटशब्दस्य प्रवृत्तिनिमित्ते वाच्यत्वस्य, वाच्यो यो घटस्तद्वृत्तित्वस्य, समवायेन घटत्वविशिष्टघटोपस्थितौ उपस्थितीयप्रकारतावत्त्वस्य च सत्त्वेन लक्षणसमन्वय इति नैयायिकाः ।

नन्वेवमपि घटशब्देन पुंस्त्वत्वेन पुंस्त्वोपस्थितौ पुंस्त्वत्वेऽतिव्याप्तिरिति चेन्न, प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तत्वमिति परिष्कारेणादोषात् । वैशिष्ट्यञ्च स्ववाच्यत्व–स्ववाच्यवृत्तित्व–स्वजन्यशाब्दबोधीयमुख्यविशेष्यतासमानाधिकरणोपस्थितीयविशेष्यतानिरूपितप्रकारताश्रयत्वेतत्त्रितयसम्बन्धेन । निरूपितत्वञ्च साक्षात्परम्परासाधारणम् । पुंस्त्वत्वे तृतीयसम्बन्धाभावान्नातिव्याप्तिः, 'पुंस्त्वविशिष्टो घटः' इत्येव बोधात् । यद्यपि जातेर्नामार्थत्वे 'जात्याख्यायाम्' इति सूत्रम्, 'सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्' इति भाष्यञ्च मानमस्ति तथापि पराभिमतां युक्तिमाह—लाघवेनेति । लाघवस्य गौरवसापेक्षत्वादाह—गौरवादिति—अनन्तव्यक्तिषु शक्तिकल्पने, जातौ शक्तेः शक्यतावच्छेदकत्वस्य च कल्पनागौरवादिति भावः । नच जातिशक्तिवादेऽपि गोत्वस्य शक्यत्वे तन्निष्ठशक्यतावच्छेदकं गोत्वत्वं वाच्यम्, गोत्वत्वञ्च 'गवेतरासमवेतत्वे सति

दर्पणव्याख्या

क्रमप्राप्तं नामार्थनिरूपणमित्याशयेनाह—ॐ नामार्थमिति ॐ । ॐ जातिरिति ॐ तत्तत्पदार्थासाधारणो धर्म इत्यर्थः । तेनाभावत्वाकाशत्वादीनां नित्यानेकसमवेतत्वरूपजातित्वाभावेऽपि न क्षतिः । एतस्यैव शास्त्रे 'स्वार्थ' पदेन व्यवहारः । जातेः पदार्थत्वे मानन्तु—"जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" (पा० सू० १ । २ । ५९) इति सूत्रम्, "सवर्णेऽण्ग्रहणमपरिभाष्यम्, आकृतिग्रहणात् सिद्धम्" इति वार्त्तिकम्, "आकृतिं वाजप्यायन." इति सरूपसूत्रस्थ भाष्यञ्च । युक्तिमप्याह—ॐ लाघवेनेति ॐ एकाश्रयकशक्तेरेवम्या एव सम्भवादिति भावः ।

ननु शक्तिग्राहकशिरोमणिना व्यवहारेण व्यक्तावेव तत्परिच्छेदात् कथ जातौ तत्सिद्धिरत आह—ॐ अनेकव्यक्तीनामिति ॐ पूर्वं व्यवहारेण व्यक्तौ शक्तिग्रहेऽप्यानन्त्यात् तावतीषु शक्तिग्रहासम्भवात्तत्तदाश्रयभेदभिन्ननानाशक्तिकल्पने गौरवात् पश्चाज्जातावेव निर्द्धार्य्यते इत्यर्थः ।

एकव्यक्तिविषयकशक्तिज्ञानादपरव्यक्तिविषयकशाब्दबोधाभ्युपगमे गोव्यक्तिविषयकशक्तिज्ञानादश्वविषयकबोधापत्त्या तद्व्यक्तिविषयकशक्तिज्ञानस्य तद्व्यक्तिविषयकबोधे हेतुतायां अवश्यकल्प्यत्वयैकविषयकज्ञानादपर[illegible] सकलव्यक्तिभानार्थं तावद्व्यक्तिषु शक्तिकल्पनायां गौरवस्य स्फुटतया जातावेव शक्तिकल्पनौचिता ।

नच व्यक्तीनामपि प्रत्येकमेकत्वाद्विनिगमनाविरहः, एवं हि एकस्यामेव व्यक्तौ शक्त्यभ्युपगमे व्यक्त्यन्तरे लक्षणायां स्वसमवेताश्रयत्वं संसर्ग इति गौरवम्, जात्या तु सहाश्रयत्वमेव संसर्ग इति लाघवम्।

किञ्चैवं विशिष्टवाच्यत्वमपेक्ष्य नागृहीतविशेषणन्यायाज्जातिरेव वाच्येति युक्तम्,

प्रभा

सकलगोसमवेतस्वरूपम्। तथाच तस्य व्यक्त्याद्यनेकपदार्थघटितत्वया अतिगौरवमिति वाच्यम्, तादृत्येन गोत्वरूपाया जातेरेव शक्यतावच्छेदकत्वात्, शब्दार्थयोस्तादात्म्याङ्गीकारे शब्दगतजातेर्गोत्वस्याखण्डधर्मरूपत्वस्वीकारेण तस्यैवावच्छेदकत्वे गौरवाभावाच्च। किञ्च जातेः शक्यत्वे शक्तिनिरूपिकाया जातेरैक्येन शक्तेरैक्यत्वम्। ननु व्यक्तेः शक्यत्वेऽपि एकव्यक्तिनिरूपितैव शक्तिरस्तु। तथात्वेऽपि शक्तिनिरूपिकाया व्यक्तेरैक्येनैकैव शक्तिः सिद्ध्येदित्याह—नचेति—शक्तिनिरूपिकाया जातेः, प्रत्येकं व्यक्तेश्चैकत्वाद् विनिगमनाविरहात्=एकतरपक्षसाधिका युक्तिर्विनिगमना तस्या विरहात्=अभावाद् व्यक्तिरपि वाच्या स्यादिति भावः। ननु नात्र विनिगमनाविरहः, जातिशक्तिसाधकलाघवरूपविनिगमनायाः सत्त्वादित्याह—एवं हीति—यत्किञ्चिदेकव्यक्तिनिरूपितशक्तौ स्वीकृतायामपि व्यक्त्यन्तरस्य शाब्दबोधविषयतोपपत्तये लक्षणा स्वीकार्या। जातेः शक्यत्वेऽपि 'गामानय' इत्यादिव्यवहारस्य व्यक्तिविषयकतया व्यक्तिबोधाय लक्षणा स्वीकार्या इति लक्षणास्वीकारसाम्येऽपि जातिशक्तिवादे व्यक्तिबोधाय स्वा (जाति) श्रयत्वरूपः शक्यसम्बन्धः। व्यक्तिशक्तिवादे स्व (व्यक्ति) समवेता (जाति) श्रयत्वरूपः शक्यसम्बन्धः। 'शक्यसम्बन्ध एव लक्षणा' इति व्यक्तिशक्तिवादिनो लक्षणास्वरूपे गौरवम्, जातिशक्तिवादिनश्च लक्षणास्वरूपे लाघवरूपं विनिगमकमस्तीति भावः। 'शक्यसम्बन्धमूलिका लक्षणा' 'ननु शक्यसम्बन्धरूपा' इति मतेऽपि लक्षणाप्रयोजकसम्बन्धे लाघवं जातेः शक्यत्वे बोध्यम्।

नन्वेकव्यक्तिनिरूपिता शक्तिरिति मते एतद्व्यक्तिनिरूपिता शक्तिरुत व्यक्त्यन्तरनिरूपितेत्यत्र विनिगमनाविरहाद् जात्याश्रयत्वेन अनुगतीकृतासु सर्वासु व्यक्तिषु शक्तिरिति न लक्षणाऽवसरः, नाप्यानन्त्यादिदोष इत्यरुचेराह—किञ्चेति—जात्यानुगतीकृतासु व्यक्तिषु शक्तिरिति स्वीकारे जातिविशिष्टव्यक्तौ शक्तिरिति लभ्यते। तथाच विशिष्टज्ञानं प्रति विशेषणज्ञानस्य कारणत्वेनोपजीव्यत्वाद् विशेषणीभूतजातावेव शक्तिरुचिता। तदुक्तम्—'नागृहीतविशेषणा बुद्धिर्विशेष्यमवगाहते' इति,

'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे'। इति च।

दर्पणव्याख्या

यद्यपि 'गौर्गोपदवाच्यः' इति शक्तिग्रहो व्यक्तिविषयकोऽपि, तथापि 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्यबाधे' इति न्यायेन जातावेव सत्तां परिच्छिनत्ति। यद्वा जातिविशेष्यक एव शक्तिग्रहः 'गौर्गोपदशक्यः' इति जातिशक्तिवाद एवमेवाभिलापात्। व्यक्तिभानस्य त्वग्रे उपपादयिष्यमाणत्वाच्च तदनुपपत्तिरिति भावः। तथाचेयं व्यक्तिः शक्या, न जातिरित्येवं प्रत्येकव्यक्तिग्रहे

❀ विनिगमनेति ❀ एकतरपक्षपातियुक्तिरूपेत्यर्थः। विनिगमकाभावः। पूर्वत्र [illegible] व्यक्तिसमुदायस्यैव कोटितया गौरवज्ञानस्यैव बाधकस्य विनिगमकत्वाच्च तदभाव इति भावः। तत्पक्षेऽपि गौरवमेव बाधकमित्याह—❀ एवं हीत्यादि ❀।

ननु उक्तविनिगमनाविरहेण सर्वास्वपि व्यक्तिषु शक्तिसिद्धावशक्यव्यक्तेरभावेन न तद्भानाय व्यक्तिवृत्तिकल्पनेति व्यक्तिशक्तिवादपक्षो निर्दुष्टोऽत आह—❀ किञ्चैवमिति ❀। यद्वा ननु गोत्वादिजात्यनुगतीकृतयावद्व्यक्तिषु शक्तिस्वीकाराऽऽनन्त्यादिदोषोऽत आह—❀ किञ्चैवमिति ❀ एवम्=विशिष्टे शक्त्यभ्युपगमे। ❀ नागृहीतेति ❀ 'नागृहीतविशेषणा

व्यक्तिबोधस्तु लक्षणया। एवञ्च तत्र विभक्त्यर्थान्वयोऽप्युपपद्यते इति दिक्।

प्रभा

ननु जातिमात्रे शक्तौ व्यक्तिबोधो न स्यात्। न च 'दिवाऽभुञ्जानो देवदत्तः पीनः' इत्यत्र रात्रिभोजनवद् व्यक्तेराक्षेप इति वाच्यम्, प्रकृतिनिष्ठवृत्त्या अनुपस्थिततया 'गां ददाति' इत्यादौ व्यक्तौ प्रत्ययार्थकर्मत्वान्वयानुपपत्तेः, 'प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्' इति व्युत्पत्तेः। यथाकथञ्चिदुपस्थितार्थे प्रत्ययार्थान्वये 'घटं पश्यति' इत्यादौ शब्दाश्रयतया उपस्थिताकाशेऽपि दर्शनकर्मत्वान्वयापत्तेः। यदपि समानवित्तिवेद्यत्वमेवाक्षेप इति गुरवः। तथाचोक्तं तैरेव—"यावती हि जातिधीर्व्यक्तिं विषयीकरोति अतो जातिभासकसामग्र्या एव व्यक्तिभासकत्वम्।" इत्थञ्च जातिशक्तिज्ञानमेव जातिप्रकारकव्यक्तिविशेष्यकबोधं प्रति कारणमिति, तदपि न, 'गोत्वमस्ति' इत्यतो जातिविशिष्टव्यक्तिबोधापत्तेरित्यत आह— व्यक्तिबोधस्त्विति। लक्षणयेति—निरूढलक्षणयेत्यर्थः। एवञ्च 'गौरस्ति' इत्यादौ अन्वयानुपपत्त्यभावेऽपि न दोषः, निरूढलक्षणायां तदनपेक्षणात्। एवञ्च = लक्षणाङ्गीकारे च। विभक्त्यर्थान्वय इति—व्यक्तेः प्रकृतिनिष्ठलक्षणाऽऽख्यवृत्त्या उपस्थितत्वात् प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिविरोधाभाव।

ननु सर्वत्रैव गोपदाज्जातिव्यक्त्युभयविषयको बोधः सर्वसम्मतः। तदुपपत्तये युगपद्वृत्तिद्वयमङ्गीकार्यम्, तच्च न युक्तम्, युगपद्वृत्तिद्वयविरोधात्, इति चेन्न, 'गङ्गायां मीनघोषौ स्तः' इति वाक्यात् प्रवाहे मीनस्य, तटे घोषस्य चान्वयबोधस्य सर्वसम्मतत्वेन युगपद्वृत्तिद्वयविरोधे मानाभावात्, शक्तिः, तात्पर्याविषये लक्षणा च युगपन्नेत्येतत्तात्पर्यस्यैव तन्न्यायविषयत्वाच्च। प्रकृते तात्पर्यविषये एव लक्षणा इति न तन्न्यायविरोधः। 'गौरस्ति' इत्यत्र गोत्वस्यापि सत्तायामन्वयसम्भवेनान्वयानुपपत्तिरूपबीजाभावाल्लक्षणाया अभावेन व्यक्तिबोधानुपपत्तिरिति तु न युक्तम्, तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वात्। अन्यथा 'गङ्गायां घोषः' इत्यत्र घोषपदस्य मीने लक्षणाऽऽपत्तिः, तावताऽपि अन्वयानुपपत्तेः परिहारात्।

दर्पणव्याख्या

बुद्धिर्विशेष्यमधिगच्छति' इति न्यायशरीरम्। विशेषणाविषयकबुद्धिर्विशेष्यं नावगाहत इति तदर्थः, विशेष्यविषयकत्वस्य विशेषणविषयकत्वनियतत्वमिति यावत्। तथाच विशिष्टशक्तिवादे विशिष्टशक्तिग्रहस्य विशेषविषयकत्वावश्यकतया तदुभयविषयकान्यस्य पदार्थोपस्थित्यादिकारणतावच्छेदकत्वकल्पनापेक्षया विशेषणविषयकत्वमात्रस्यैव तदवच्छेदकत्वकल्पना लाघवानुचितेति जातावेव शक्तिः सिद्ध्यतीति भाव।

नन्वेवम् 'गां दद्यात्' 'गां नावहन्ति' इत्यादौ दानावहननकर्मत्वाद्यन्वयानुपपत्तिः, जातेस्तदन्वयायोग्यत्वादिति चेदत्र केचित्—जात्याऽऽक्षिप्तव्यक्तावेव दानादिकर्मत्वान्वय इति तन्न, 'प्रत्ययानाम्' इति व्युत्पत्तेरप्रकृत्यर्थव्यक्तौ तदन्वयासम्भवात्। तदुक्तम्—

'गम्यमानस्य चार्थस्य नैव दृष्टं विशेषणम्।
शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीतिवत्' ॥ इति।

किञ्चायमाक्षेपोऽर्थापत्तिः, समानसंवित्संवेद्यत्वं वा। नाद्यः, अनुपपत्तिमन्तरेणापि 'गौरस्ति' इत्यतो गोव्यक्तिबोधात्। नान्त्यः, जातिविषयकशक्तिग्रहस्य विशिष्टविषयकबोधहेतुत्वाभ्युपगमेन जातिविषयताया व्यक्तिविषयतानैयत्यस्य वाच्यत्वे, अन्यस्यासम्भवात्। स च 'गोत्वमस्ति' इत्यत्र गोत्वविशिष्टप्रत्ययाद् व्यभिचरित इत्युक्तानुपपत्तिर्दुर्वारैवेत्यत आह— ❀ व्यक्तिबोधस्त्विति ❀। ❀ लक्षणयेति ❀ [illegible] इत्यर्थः। तथाच पदवृत्तिजन्यबोधविषयत्वेनैव शाब्दबोधे हेतुतया [illegible] लक्षणयाप्युपस्थितायां तस्यां नावधानादिकर्मत्वान्वयानुपपत्तिरिति भाव। ❀ एवञ्चेति ❀ लक्षणाभ्युपगमे चेत्यर्थः। ❀ तत्र ❀ व्यक्तिलक्षणायाम्। ❀ उपपद्यत इति ❀ अन्यथा प्रत्ययानामिति व्युत्पत्तेः [illegible] बोधप्रत्ययेनेति भाव। ननु व्यक्तिलक्षणाभ्युपगमे युगपद्वृत्तिद्वयविरोध इति सिद्धान्तभङ्गः, 'गौरस्ति' इत्यत्र तदनुपपत्तेर्व्यक्तिबोधानुपपत्तिश्च, लक्षणाबीजस्यान्वयानुपपत्तेरत्राभावादत आह—❀ दिगिति ❀।

यद्वा, केवलव्यक्तिरेव एकशब्दार्थः,

प्रभा

नचैवमपि गोशब्दात् गोत्वमात्रस्य भानासम्भवेन प्रातिपदिकार्थमात्रे विद्यमानप्रातिपदिकाभावात् प्रथमाया असिद्धिः, प्रातिपदिकनिष्ठजनकतानिरूपितोपस्थितिनिष्ठा या जन्यता तद्व्यापिका या विषयिता तत्प्रतियोगिनोऽर्थस्यैव प्रातिपदिकार्थमात्रपदेन ग्रहणाद् व्यक्तेरपि तथात्वेनादोषात्। अथवा मास्तु व्यक्तौ लक्षणा, केवलाया जातावसम्भवन्ती आनयनादिक्रिया व्यक्तिसाहित्येन निष्पादिता स्यात्। तदुक्तम्—'तद्धितार्थोत्तरपद' (पा० सू० २।१।५१) इति सूत्रे भाष्ये—'आकृतावालम्भनादीना सम्भवो नास्तीति कृत्वा आकृतिसहचरिते द्रव्ये आरम्भणादीनि क्रियन्ते' इति, 'अव्यतिरेकाद् द्रव्याऽऽकृत्यो' इति च। लक्ष्य—लक्ष्यतावच्छेदकयोरेकस्या शक्यसम्बन्धरूपलक्षणाया असम्भवेन लक्ष्यतावच्छेदकज्ञानमपि लक्ष्यार्थोपस्थिति कारणमितिवत् 'शक्यतावच्छेदकज्ञान प्रति शक्यार्थोपस्थिति कारणम्' इति कार्यकारणभावेनैव जातिबोधसम्भवे न तत्र शक्तिरित्याशङ्कायामाह—यद्वेति।

केवलव्यक्तिरेवेति—एनेन जातिर्व्यावर्त्यते। केवलपदेनैव तद्व्यावृत्तिसिद्धौ 'एव' पद स्पष्टार्थम्। जातिविशिष्टव्यक्तौ शक्तिरिति मते 'तत्तज्जातिप्रकारकतदाश्रयविशेष्यकशाब्दबुद्धित्वावच्छिन्न प्रति तज्जा-

दर्पणव्याख्या

तदर्थस्तु सति तात्पर्ये 'गङ्गाया घोषमत्स्यौ स्त' इत्यत्र वृत्तिद्वयस्य सर्वैरेवाभ्युपगमात्तादृशान्याय, युगपद्वृत्तिरता-त्पर्यविषये लक्षणा च नेत्येवपर इति न तद्विरोध। तात्पर्यानुपपत्तिसत्वाच्च न व्यक्तिलक्षणाऽनुपपत्ति, तद्विरोधाभ्युपगमे तु जातिव्यक्त्योरभेदपक्षमुपगम्य विभक्त्यर्थान्वय उपपाद्य। तदुक्तम्—

'तेन तल्लक्षितव्यक्तौ क्रियासम्बन्धचोदनात्।

जातिव्यक्त्योरभेदो वा वाक्यार्थेषु व्यवस्थित' ॥ इति।

वस्तुतस्तु जातिधर्मिकशक्तिग्रहस्य जातिविशिष्टव्यक्तिशाब्दबोधे हेतुत्वकल्पनात्र व्यक्तिभानानुपपत्ति, भाष्यशाब्दभानाऽऽपत्ति, तस्य तद्वैशिष्ट्याभावादिति जातिशक्तिवादनिष्कर्ष। वक्ष्यते चाधिकमुपरिष्टात्।

अन्ये [illegible] जातिशक्तिवादमित्थमुपपादयामासु—मास्तु व्यक्तौ लक्षणा, आनयनादिक्रिया केवलाया जातावसम्भवन्ती व्यक्तिसाहित्येन निष्पाद्यते समाहारे पाणिपादसाहित्येन वादनक्रियावत्। तदुक्तम्—'तद्धितार्थे' (पा० सू० २।१।५१) इति सूत्रे भाष्ये—"आकृतावालम्भनादीनां सम्भवो नास्तीति कृत्वा तत्सहचरिते द्रव्ये भविष्यति यथा—'अग्निरानीयताम्' इत्युक्ते केवलस्याग्नेरानयनासम्भवाच्चोदितमपि पात्रमानीयते। एतदेवाग्नेरानयन यत्पात्रस्यानय। तथाऽऽकृतावालम्भनादीनि चोद्यमानानि सामर्थ्यात् साहचर्याद् द्रव्यमभिनिविशन्ते। तत्र एषाऽऽकृतेर्योगोऽन्तर्भावितद्रव्याया इति द्रव्यद्वारक सम्बन्ध सम्पद्यते" इति। साहचर्यम् = सम्बन्ध। सरूपसूत्रे भाष्येऽपि स्फुटोऽयमर्थः। हरिरप्याह—

व्यक्तौ कार्याणि संसृष्टा जातिस्तु प्रतिपद्यते। इति।

गोत्वादिपदानां [illegible] गोत्वादिधर्मिवृत्तिधर्म एव शक्तिरिति [illegible] तत्र गोविशेष्यको बोध। जातेराश्रयवियोगेऽपि केवलायास्तस्या शब्दवाच्यत्वं नानुपपन्नम्, जलादौ दृश्यमानस्य मुखस्य स्वस्थानावियोगेऽपि मुखादिपदबोध्यवत्। शक्यतावच्छेदकता तु जातिगतधर्मस्यैवेति।

इदमपि मत जात्या व्यक्त्याक्षेपे पर्यवस्यति। तच्च नचाखदार्थे प्रत्ययान्वय इति दूषणग्रस्तम्। विनापि सङ्केतविषयता सामान्येन सम्बन्धनियमादर्थाध्याहारन्यायेनोपस्थिता व्यक्ति पुनर्जातिर्विशिनष्टि, रूपादिज्ञानाविषयाणा चक्षुरादीनां चाक्षुषयामीति प्रतीत्या विपर्यासकरणवदित्यपि केचित्।

शक्यसम्बन्धरूपाया लक्षणाया एकस्या लक्ष्य लक्ष्यतावच्छेदकयोरसम्भवेऽपि लक्ष्यार्थप्रतीतौ लक्ष्यताऽवच्छेदकभानवच्छक्यतावच्छेदके शक्त्यभावेऽपि भासकार्यकारणभावबलादेव गोत्वादिभाननिर्वाहे कृत तत्र शक्तिकल्पनयेत्याशयेनैकपद न तत्र शक्ति—ॐ यद्वेति ॐ ॐ व्यक्तिरेवेति ॐ एवेन जातिव्यवच्छेद।

केवलव्यक्तिपक्षे एवाण्ग्रहणस्य, एकशेषस्य चारम्भेण तस्यापि शास्त्रसिद्धत्वात्। युक्तञ्चैतत्—व्यवहारेण व्यक्तावेव तद्ग्रहणात्। सम्बन्धितावच्छेदकस्य (सम्बन्धितावच्छेदिकायाः) जातेरैक्याच्छक्तिरप्येकैवेति न गौरवमपि।

नचैवं घटत्वमपि वाच्यं स्यात्, शक्यतावच्छेदकत्वात्, तथाच 'नागृहीतविशेषण'न्यायात्

प्रभा

त्यवच्छिन्नविशेष्यताकशक्तिज्ञानस्य कारणत्वेन 'अ' इत्यादिपदेनैव अत्वजात्यवच्छिन्नसकलव्यक्तिभानसम्भवेन 'अणुदित्सवर्णस्य' इति सूत्रेऽण्ग्रहणस्य वैयर्थ्यापत्तिः। केवलजातिशक्तिवादेऽपि जातिशक्तिज्ञानस्यैव विशिष्टबोधे कारणतया, लक्षणया, अव्यतिरेकेण (अविनाभावेन) वा व्यक्तिबोधसम्भवेऽण्ग्रहणवैयर्थ्यं तदवस्थमेवेत्याह—केवलव्यक्तिपक्ष एवेति—अण्ग्रहणस्य, सरूपसूत्रेणैकशेषस्य चारम्भेणेत्यर्थः। तस्यापीति—'व्यक्तिमात्रं शक्यार्थः' इति पक्षस्यापीत्यर्थः। अण्ग्रहणस्य भाष्यकृता प्रत्याख्यानात् सरूपसूत्रस्य च शास्त्रीयप्रक्रियामात्रोपयोगित्वस्याकरे सिद्धान्तितत्वात्तयोः प्रामाण्यासङ्गतिरित्यत आह—युक्तमिति—सयुक्तिकमित्यर्थः। एतदिति—व्यक्तिरेवैव शब्दार्थ इति मतमित्यर्थः। व्यवहारेणेति—'गामानय' इति वाक्यप्रयोगानन्तरं प्रयोज्यवृद्धस्य गवानयनेन प्रवृत्तिदर्शनात् व्यक्तावेव शक्तिर्गृह्यते इत्यर्थः।

ननु व्यक्तौ गृहीताऽपि शक्तिर्लाघवादग्रे बाधिता स्यादिति चेन्न, बाधो नाम—अप्रामाण्यज्ञानम्। चन्द्रमण्डलादिप्रमाणं पूर्वमिन्द्रियेण गृहीतमपि ज्योतिःशास्त्रेण बाध्यते, नतु लाघवेनेत्यदोषात्। पूर्वं जातस्य लाघवमात्रेण बाधायोगात्, 'निषादस्थपतिं याजयेत्' इत्यादौ पूर्वं जातस्यापि कर्मधारयनिश्चयस्यापूर्वविद्याकल्पनभिया बाधापत्तेश्च, व्यक्तौ शक्तिबाधे 'गां दद्यात्' इत्यत्रानुपपत्तिः, गोत्वादेर्दानाद्यसम्भवात्। लक्षणया तु न निर्वाहः, व्यक्त्यन्तरे शक्यसम्बन्धाग्रहात्। ननु व्यक्तीनामानन्त्यात् शक्त्यानन्त्यप्रसङ्ग इत्याशङ्कामपाकुर्वन्नाह—सम्बन्धितावच्छेदकस्येति—शक्यतावच्छेदकस्येत्यर्थः। विशेष्यभूताया जातेः स्त्रीत्वेऽपि 'इदं भक्तिः' इतिवत् 'सामान्ये नपुंसकम्' इति नपुंसकनिर्देशः। क्वचित् 'सम्बन्धितावच्छेदिकायाः' इत्येव पाठः। शक्तिरप्येकैवेति—शक्यतावच्छेदकभेदे एव शक्तेर्भेद इति भावः। ननु गोत्वादेः शक्यतावच्छेदकत्वे शक्यत्वे सति शक्यविशेषणस्यैव शक्यतावच्छेदकत्वनियमेन गोत्वादिकमपि शक्यं स्यादित्याशङ्कां निराकुर्वन्नाह—नचैवेति। एवम् = जातेः शक्यतावच्छेदकत्वे। तथाच = जातेः शक्यत्वे च। विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वेनोपजीव्यत्वात् 'नागृहीत' इति न्यायात्।

दर्पणव्याख्या

ननु 'सवर्णेऽण्ग्रहणम्' इत्यादिप्रामाण्यादस्तु कः पक्षः, 'व्यक्तिः पदार्थः' इत्यत्र [illegible] किम्मानमत आह—🙞 केवलव्यक्तीति 🙞। 🙞 एकशेषस्य चेति 🙞 जातिपक्षे एकेनैव शब्देन द्वयोर्बहूनां वा [illegible] तदनर्थकं सद् व्यक्तिपक्षज्ञापकमित्यर्थः। अण्ग्रहणस्य भाष्यकृता प्रत्याख्यानात् सरूपसूत्रस्य च शास्त्रीयप्रक्रियामात्रोपयोगित्वस्याऽऽकरे व्यवस्थापनात् कथमुक्तार्थे तयोः प्रामाण्यमत आह—🙞 युक्तञ्चैतदिति 🙞 सयुक्तिकमप्येतदित्यर्थः। अपिना 'द्रव्याभिधानं व्याडिः' इति महत्सूत्रस्थभाष्यप्रामाण्यं समुच्चीयते। युक्तिमेवाह—🙞 व्यवहारेणेति 🙞।

एतावता शक्तिवादे [illegible]। एतन्मते पूर्वोक्तं शक्त्याऽऽनन्त्यदोषं समुद्धरति—🙞 सम्बन्धितावच्छेदकस्येति 🙞 शक्तिग्रहे धर्मितावच्छेदकस्येत्यर्थः। सम्बन्धितावच्छेदकपदस्य [illegible] न तदनुपपत्तिः। तथाच सम्बन्धितावच्छेदकस्य [illegible] एकस्या एव [illegible] तत्र नास्ति गौरवमिति भावः।

🙞 एवमिति 🙞 विशिष्टे शक्तित्वस्वीकारे इत्यर्थः। [illegible]

प्रभा

स्तादयरध्यात्। तदुक्तं वाक्यपदीये—

गम्यमानस्य चार्थस्य नैव दृष्टं विशेषणम्।
शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीतिवत्॥ इति।

*यथा धूमेनाक्षिप्तवह्न्यभिप्रायेण 'वह्निर्ज्वलति' इत्यर्थे 'धूमोऽयं ज्वलति' इति न प्रयुज्यते। तथा गोत्वेनाक्षिप्तव्यक्तेर्दानादावन्वयो न स्यादिति भावः।*

किञ्चात्राक्षेपोऽर्थापत्तिरूपः, समानसंवित्संवेद्यत्वरूपो वा? नाद्यः, उपपाद्यज्ञानेनोपपादककल्पनारूपैवार्थापत्तिः। उपपाद्यत्वञ्च 'तदभावव्यापकीभूताभावप्रतियोगित्वरूपम्'। तदभावव्याप्यीभूताभावप्रतियोगित्वरूपञ्चोपपादकत्वम्। यथा पीनत्वम् उपपाद्यम्=साध्यमिति यावत्। रात्रिभोजनम् उपपादकम्=साधनमिति यावत्। यथा दिवाऽभुञ्जानत्वसमानाधिकरणरात्रिभोजनाभावव्यापकीभूत पीनत्वाभावस्तत्प्रतियोगित्वमुपपाद्ये पीनत्वे। एवं पीनत्वाभावव्याप्यीभूतो दिवाऽभुञ्जानत्वसमानाधिकरणरात्रिभोजनाभावस्तत्प्रतियोगित्वमुपपादके रात्रिभोजने। प्रकृते व्यक्तिज्ञानेन विना जातिज्ञानं नोपपद्यते इति जातिज्ञानमुपपाद्यम्, व्यक्तिज्ञानञ्चोपपादकं वाच्यम्। तथात्र नैयत्यं न सम्भवति, व्यक्तिज्ञानमन्तरेणापि 'गोत्वमस्ति' इति वाक्यतो जातिज्ञानसम्भवात्। जातिसत्ताया व्यक्तिसत्तासापेक्षत्वेऽपि जातिज्ञाने व्यक्तिज्ञानानपेक्षणात्।

नान्त्यः, जातेर्हि व्यक्तिसमानसंवित्संवेद्यता यदि स्यात्तदा जातिभासकजातिशक्तिग्रहरूपसामग्र्या व्यक्तिभानं स्यात्, जातिविषयताया व्यक्तिविषयतानियतत्वात्। तन्नियतत्वञ्च न सम्भवति, 'गोत्वमस्ति' इति वाक्यजन्यप्रत्यये जातिविषयतायाः सत्त्वेऽपि गोत्वविशिष्टव्यक्तेरबोधेन व्यभिचारात्। जातिविषयकशक्तिज्ञानस्य व्यक्तिविशेष्यकजातिप्रकारकशाब्दबोधाभाववति वृत्तित्वादिति यावत्। समानसंवित्संवेद्यत्वमित्यस्य जातिसम्बन्धिनी या व्यक्तिस्तस्याः समाना=एका संवित्-संविद्यतेऽनयेति करणे क्विपि संवेदन (ज्ञान) सामग्री। जातिभासकजातिशक्तिज्ञानरूपा तया जन्यं यज्ज्ञानं जातिविषयकशाब्दबोधरूपं तद्विषयत्वं व्यक्तेरपि, व्यक्तिविशेष्यकजातिप्रकारकबोधं प्रति जातिविषयकशक्तिज्ञानत्वेन हेतुत्वादिति तत्त्वम्। तच्च न उक्तस्थले, व्यभिचारादिति भावः।

दर्पणव्याख्या

शक्त्यवधारणादिति भावः। अधिकमग्रे वक्ष्यते।

व्यक्तिरेवात्र द्रव्यपदेन व्यवह्रियते, सर्वनामपरामर्शयोग्यत्वात्। उक्तञ्च—

'वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः'। इति।

स्वभावादेव बुद्धिविषयताऽवच्छेदकत्वोपलक्षिततद्धर्मावच्छिन्नबोधकं सर्वनाम यस्मिन् धर्मिणि तादृशधर्मं प्रवृत्तिनिमित्तीकृत्य प्रयुज्यते। 'इदम्' 'तत्' इति परामर्शयोग्यमिति यावत्। द्रव्यपदेन व्यवह्रियत इत्यर्थः। भेद्यत्वेन=विशेष्यत्वेनेत्यादि तु लक्षणान्तरपरम्, एतत्पक्षे ▪ जात्यादेरपि विशेष्यत्वविवक्षायां द्रव्यत्वमिष्टमेव। तिङन्तार्थक्रियायाः किमादिभिः परामर्शात् स्तोकाद्यर्थनिरूपितविशेष्यतावत्त्वाच्च द्रव्यत्वमस्त्येव। "विप्रतिषिद्धम्" (पा० सू० २।४।१३) इत्यादौ च सामर्थ्यात्तन्त्रान्तरप्रसिद्धद्रव्यग्रहणम्। "चादयोऽसत्त्वे" (पा० सू० १।४।५७) इत्यत्र प्रथमकल्पोक्तद्रव्यस्यैव पर्युदासो बोध्यः।

शक्यतावच्छेदकत्वञ्च—शक्यनिष्ठविशेष्यताऽवच्छेदकतया भासमानत्वम्। घटादिपदे शक्तिग्रहे च घटत्वादेरेव भानम्, न पृथिवीत्वादेरिति न तेभ्यः पृथिवीत्वादिबोधः। आकाशशब्दस्य शब्दाश्रयत्वे शक्त्यभावेऽपि ततस्तद्रूपेणैव बोधः, तद्विशिष्टशक्तिग्रहस्य तद्बोधहेतुत्वात्। यद्वाऽऽकाशत्वमखण्डोपाधिः। वृद्धिगुणोक्तरीत्या तत्पदं चाऽऽकाशशब्दशक्यतावच्छेदकमिति न 'आकाशः शब्दाश्रयः' इति प्रयोगानुपपत्तिरिति द्रव्यवादनिष्कर्षः।

प्रभा

किञ्च जातिशक्तिवादिनये गोशब्दवद् गोत्वादिशब्दाद् गोत्वविशिष्टबोधापत्तिः, विशिष्टबोधौपयिकस्य
जातिशक्तिग्रहस्य सत्त्वात्। नच निर्धर्मितावच्छेदकशक्तिग्रहः स्वरूपतो गोत्वविशिष्टबोधे हेतुः, गोत्वत्वध-
र्मितावच्छेदककशक्तिग्रहस्य गोत्वत्वेन गोत्वोपस्थितौ तत्त्वेन गोत्वविशिष्टशाब्दबोधे च कारणमिति न गोत्व-
पदात्स्वरूपतो गोत्वविशिष्टबोधापत्तिरिति वाच्यम्, 'गोत्वत्वेन गोत्वं न गोत्वपदशक्यम्' इति बाधग्रहकाले
गोत्वपदेऽपि निर्धर्मितावच्छेदककशक्तिग्रहसम्भवेन गोत्वपदात् तत्र स्वरूपतो विशिष्टबोधापत्त्या गोत्वपदेऽपि
गोत्वत्वधर्मितावच्छेदककशक्तिग्रहस्यापि स्वरूपतो गोत्वप्रकारकबोधं प्रति हेतुताया आवश्यकत्वात्। बाधग्रह-
काले च तादृशशक्तिग्रहाभावेन स्वरूपतो गोत्वविशिष्टबोधापत्तिः।

यदि च बाधग्रहकाले निर्धर्मितावच्छेदकक एव न शक्तिग्रहः, किन्तु शक्तिसम्बन्धेन गोत्वप्रकारकं गोपद-
स्वविशिष्टविषयकं यत् 'गौरित्याकारकं गोपदम्' इति शक्तिज्ञानं तद् स्वरूपतो गोत्वविशिष्टबोधे कारणम्
इति कार्यकारणभावस्वीकारे बाधग्रहकालिकस्य शक्तिसम्बन्धेन गोत्वप्रकारकस्य गोत्वपदत्वविशिष्ट-
विषयकस्य शक्तिग्रहस्य गोपदत्वविशिष्टविषयकत्वाभावेन न गोत्वपदाद्विशिष्टबोधापत्तिरित्युच्यते तदा
गोशब्दस्य गोत्वमात्रे शक्तिस्वीकारे ततः कदाचित्समवायेन गोत्वविशिष्टस्य, कदाचित्कालिकादिना गोत्व-
विशिष्टस्य बोध इति व्यवस्थानुपपत्तिः, उभयविधबोधकारणीभूतस्य गोत्वविषयकशक्तिज्ञानस्य सत्त्वात्।
गोत्वविशिष्टव्यक्तौ शक्तिरिति वादे तु समवायेन गोत्वविशिष्टविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति समवायेन
गोत्वविशिष्टविषयकशक्तिज्ञानम्, कालिकादिना गोत्वविशिष्टविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति कालिका-
दिना गोत्वविशिष्टविषयकशक्तिज्ञानं कारणमिति कार्यकारणभावग्रहस्य हेतुतया नोक्तव्यवस्थानुपपत्तिः।
'गोत्वपदं गोत्वम्' इत्याकारकशक्तिग्रहात् स्वरूपतो गोत्वप्रकारकबोधाननुभवाद् गोत्वादिपदानां गोत्वत्वे
शक्तिरित्यपि न, प्रकृतिजन्यबोधे प्रकारीभूतार्थे भावार्थकत्वतलादिविधानेन गोत्वशब्दाद्विहितस्य त्वप्रत्ययस्य
गवेतरासमवेतत्वसमानाधिकरणसकलगोसमवेतत्वरूपगोत्वत्वार्थकत्वे गौरवापत्त्या लाघवमूलकस्य जाति
शक्तिवादस्य सिद्धान्तस्य भङ्गापत्तेः।

एवं केवलव्यक्तिवादोऽपि न विचारसहः, सकलपदानां व्यक्तिमात्रबोधकतया 'गौश्चलो नीलः'
इत्यादौ पुनरुक्तिभिया सहप्रयोगानुपपत्तेरित्यन्यत्र विस्तरः।

दर्पणव्याख्या

ननूक्तपक्षद्वयमपि न विचारसहम्, तथाहि—जातिशक्तिवादे गोत्वादिपदात्तद्विशिष्टबोधापत्तिः, गोत्वशक्तिग्रहस्य
तद्विशिष्टबोधौपयिकस्य सत्त्वात्। नच निर्धर्मितावच्छेदकशक्तिग्रहो गोत्वविशिष्टबोधे हेतुर्गोत्वत्वधर्मितावच्छेदकशक्तिग्रहश्च
गोत्वत्वेन तदुपस्थितौ शाब्दबोधे च हेतुरिति वाच्यम्, गोत्वं न गोपदशक्यमिति गोत्वत्वधर्मितावच्छेदकबाधग्रहकाले
निर्धर्मितावच्छेदकशक्तिग्रहसम्भवेन गोत्वविशिष्टबोधापत्त्या गोत्वत्वधर्मितावच्छेदकशक्तिग्रहस्य तादृशबोधहेतुताया
आवश्यकत्वात्।

यदि च गोत्वे निरवच्छिन्नैव शक्तिः—गोपदं गौरित्याकारकं शक्तिसम्बन्धेन गोत्वप्रकारक गोपदत्वविशिष्टविषयकं
शक्तिज्ञानं गोत्वविशिष्टबोधहेतुरिति विभाव्यते, तथापि कदाचित् समवायेन गोत्वविशिष्टबोधः, कदाचित् कालिकादिसम्बन्धेनेति
व्यवस्थाऽनुपपत्तिः, गोत्वविषयकशक्तिज्ञानस्याविशिष्टत्वात्। त्वन्मते तु समवायेन गोत्वविशिष्टविषयकशाब्दबुद्धिं प्रति
तेन सम्बन्धेन गोत्वविशिष्टशक्तिग्रहस्य, एवमितरसम्बन्धेन तादृशविशिष्टविषयबोधे तेन सम्बन्धेन तादृशविशिष्टशक्तिज्ञानस्य
हेतुतया तन्नियमोपपत्तेः। गोपदं गौरित्याकारकशक्तिग्रहात्, तादृशबोधाननुभवाच्च गोत्वादिपदानां गोत्वत्वे शक्ति-
रित्यपि न, प्रकृतिजन्यबोधप्रकारे भावप्रत्ययविधानात्। गवेतरासमवेतत्वविशिष्टसकलगोसमवेतत्वरूपस्य गुरोः शक्यत्वाऽ-
भ्युपगमे, लाघवमूलकाकृतिवादस्य मूलशैथिल्यापत्तेश्च। व्यक्तिवादेऽपि पदमात्रस्यैव व्यक्तिबोधकत्वाविशेषात्। 'गौश्चलो

वस्तुतस्तु "नह्याकृतिपदार्थस्य द्रव्यं न पदार्थः" इति ।
भाष्याद् विशिष्टं वाच्यम् ।

प्रभा

विशिष्टशक्तिवादे तु समवायेन गोत्वविशिष्टविषयकं शक्तिज्ञानं समवायेन गोत्वप्रकारकबोधे, कालिकेन गोत्वविशिष्टविषयकशक्तिज्ञानं कालिकेन गोत्वविशिष्टबोधे च कारणमिति व्यवस्था सम्भवति । किञ्च केवलव्यक्तिवादोऽपि न युक्तः, 'गौः शुक्लः चलो डित्थः' इति सहप्रयोगानुपपत्तेः, चलशुक्लादिशब्देनैव व्यक्तेर्बोधात् । नच गोपदस्य गोत्वं शक्यतावच्छेदकं शुक्लपदस्य शुक्लत्वमिति शक्यतावच्छेदकभेदात् सहप्रयोगो नानुपपन्न इति वाच्यम् , अशक्यस्य शक्यतावच्छेदकत्वायोगात् , अन्यथा द्रव्यत्वादेरपि गोपदशक्यतावच्छेदकत्वापत्तेः । किञ्च यस्मिन् हस्तिपके हस्तिनः सम्बन्धो गृहीतस्तस्यैव हस्तिपकस्य हस्तिनि दृष्टे स्मरणं जायते, नतु हस्तिपकान्तरस्येति सर्वानुभवसिद्धम् । एवञ्च तद्व्यक्तिविषयकस्मृतौ तद्व्यक्तिविषयकसम्बन्धज्ञानं कारणमिति कार्य्यकारणभावो वाच्य इति यत्किञ्चिद्व्यक्तौ सम्बन्धग्रहाद् व्यक्त्यन्तरस्य बोधानापत्तिस्तत्र सम्बन्धग्रहाभावादतो विशिष्टशक्तिवादपक्ष एव ज्यायानित्याह—वस्तुतस्त्विति । विशिष्टमिति— जातिविशिष्टं द्रव्यम् , द्रव्यविशिष्टा जातिर्वा । मूले सामान्ये नपुंसकम् । यद्यपि सरूपसूत्रे भाष्ये 'नह्याकृतिः पदार्थस्य द्रव्यं न पदार्थः, द्रव्यपदार्थस्याकृतिर्न पदार्थ इत्युभयोरुभय पदार्थ इत्युक्त्या जातिव्यक्त्योः पृथगेव वाच्यता लभ्यते, तथापि कस्यचित् किञ्चिद्गुणभूतम् , किञ्चित्प्रधानमिति भाष्योक्त्या विशिष्टशक्तावेव भाष्यतात्पर्यं प्रतीयते । यदि विशकलितयोर्जातिव्यक्त्योः शक्यत्वं स्यात्तदा गोपदात् 'गोत्वम्' इत्याकारकनिर्विकल्पकस्मरणापत्तिस्स्यात्, अनुभव-स्मरणयोः समानविषयताकत्वनियमात् । तत्र यदि जातेः प्राधान्यविवक्षा तदा द्रव्यगते द्वित्व—

दर्पणव्याख्या

नीलः' इत्यादीनां सह प्रयोगानुपपत्तिः ।

किञ्च हस्तिपकव्यक्त्यन्तरे सम्बन्धग्रहे यत्र हस्तिपके सम्बन्धो न गृहीतस्तस्यापि हस्तिदर्शने स्मरणापत्त्या तद्व्यक्तिविषयकसम्बन्धग्रहस्य तदुपस्थितिनियामकत्वस्यावश्यकतया कथमेकविषयकशक्तिज्ञानादपरविषयकोपस्थितिः । सामान्यलक्षणा त्वापातरमणीयैवेत्यभिप्रायवानाह—❀ वस्तुतस्त्विति ❀ । ❀ विशिष्टमिति ❀ जातिविशिष्टा व्यक्तिः, व्यक्तिविशिष्टा जातिर्वेत्यर्थः ।

यद्यपि "आकृतिपदार्थकस्य द्रव्यं न पदार्थो द्रव्यपदार्थकस्य चाकृतिर्न पदार्थ इत्युभयोरुभयं पदार्थः" इति भाष्याद्विशकलितयोरेवाकृतिव्यक्त्योः शक्तिग्रहविषयता लभ्यते । तथापि "कस्यचित् किञ्चिद्गुणभूतं किञ्चित् प्रधानम्" इत्युत्तरभाष्यपर्यालोचनया तत एव विशिष्टे शक्त्यवधारणात् तथोपादानमविरुद्धम् , अन्यथा तृतीयोपात्तैकरज—करणत्वयोरिव विशेष्यविशेषणभावानापन्नजाति—व्यक्त्योः शक्यत्वे गौर्यद् गोत्वं व्यक्तिश्चेति समूहालम्बनबोधापत्तेः शक्तिज्ञानपदार्थोपस्थिति शाब्दबोधानां समानप्रकारत्वनियमात् ।

एवमेवावयवसंयोगरूपाकृतौ । तथाच सूत्रितं गौतमेन "जात्याकृतिव्यक्तयः पदार्थः" इति त्रिष्वेकैव शक्तिरिति बोधनाय च तत्रैकवचनम् , गुणभूतमिति भाष्यस्य च स्वारसिकतयेति शेषः । जातेः कदाचित् प्राधान्येन भानं तु तात्पर्यग्रहसापेक्षमिति तदाशयः । जातेः प्राधान्येऽपि द्रव्यसंख्यामादाय तत्र द्विवचनाद्युपपत्तिर्बोध्या । तदुक्तं कैयटेन—"यथा 'भवतः' इत्यादौ क्रियाप्राधान्येऽपि साधनकृतो वचनभेदः, एवमाकृतिप्राधान्येऽपि द्रव्यसङ्ख्याकृत इत्यदोषः" इति । द्रव्यप्राधान्येऽपि क्वचिज्जातिसङ्ख्यामादाय वचनम्, 'ब्राह्मणं न हन्यात्' इत्यादौ यथा । जातेः प्राधान्ये च निरवच्छिन्नाया एव व्यक्तेः प्रकारताविशेष्यीभूतजात्या च तदनुगमः 'नहि प्रकारीभूतमेवानुगमकमिति नियमः' इति तत्त्वपरिष्कारः ।

वस्तुतस्तु जातिविशिष्टव्यक्तिरेव शक्या, गवादिपदाद्गोत्वविशिष्टगोव्यक्तिबोधस्यानुभवेनोभयकल्पनाभावात् । अत एव

'एकम्' इत्यस्य चायमभिप्रायः—शक्तिज्ञाने च विषयतयाऽवच्छेदिका जातिरेकैव। तथाच घटत्वविशिष्टबोधे घटत्वांशेऽन्याप्रकारकघटत्वशक्तिज्ञानत्वेन

### प्रभा

नन्वेवम् 'एकं नामार्थः' इति पक्षो विरुध्येतात आह—एकमित्यस्य चेति—कारणदले एकस्या जातेरेव निवेशो नतु व्यक्तेः। तथाहि—'घटत्वविशिष्टघटविषयकबोधं प्रति घटत्वविषयकशक्तिज्ञानं कारणम्' इति घटत्वशक्तिज्ञानत्वेन कारणता, लाघवात्। नतु घटत्वविशिष्टशक्तिज्ञानत्वेन कारणता। तथा सति शक्तिज्ञाननिष्ठकारणताया अवच्छेदकत्वं वैशिष्ट्ये घटे च कल्पितं स्यात्, तादृशज्ञाने उभयोः प्रकारीभूतत्वात्। घटत्वशक्तिज्ञानत्वेन कारणत्वे तु घटत्वस्यैव ज्ञाने प्रकारतया तत्रैव कारणताऽवच्छेदकत्वं कल्प्यते इति 'एकम्' इतिपक्षस्य एकं घटत्वादिकमन्तर्भाव्य कार्य्यकारणभाव इत्येवाभिप्रायस्तदाह—शक्तिज्ञाने चेति। विषयतयेति—विषयतानिरूपकत्वसम्बन्धेन, प्रकारितासम्बन्धेन वा शक्तिज्ञाने प्रकारीभूता घटत्वादिजातिरेव शक्तिज्ञाननिष्ठकारणतावच्छेदिका, नतु वैशिष्ट्यं घटश्चेति भावः। एवञ्च 'एकम्' इत्यस्य केवला जातिरेव नामार्थस्तदोक्तकार्यकारणभावः। यदा तु 'एकम्' इत्यस्य केवलव्यक्तिरेवार्थस्तदा घटत्वविशिष्टघटबोधं प्रति केवलघटशक्तिज्ञानं कारणम्। अत्रापि एकं व्यक्तिरूपं कारणतावच्छेदकमिति न विरोधः।

यत्तु—इतिमतं तु न युक्तम्, जात्याश्रयत्वेनानुगमे द्रव्यत्वजात्याश्रयत्वेनाप्यनुगतत्वापत्तौ घटादिपदादपि द्रव्यत्वेन बोधापत्तेः। तत्तत्पदज्ञानत्वेन हेतुता तु न, पर्य्यायान्तरादपि तादृशबोधस्यावश्यकत्वात्तत्पदज्ञानाभावे बोधानापत्तेरिति तन्न, यत्किञ्चिज्जात्याश्रयत्वेनानुगमे उक्तदोषसत्त्वेऽपि गोत्वादिनानुगमे दोषाभावात्, तत्तत्पदज्ञानत्वेन हेतुत्वे दोषाभावाच्च। नच पर्य्यायान्तराद् बोधानापत्तिः, कार्यैक्येऽनेककारणस्थले तत्तत्कारणाव्यवहितोत्तरत्वस्य कार्यदले निवेशेनादोषादिति पञ्चोलिनः। नच व्यक्तीनामानन्त्याद्वच्छेदकैक्यानुपपत्तिः, जात्यानुगतीकृतत्वेनैक्याक्षतेः। तथा चेति—घटत्वविशिष्टघटस्य वाच्यत्वे चेत्यर्थः। उक्तकार्य्यकारणभावं दर्शयति—घटत्वविशिष्टेति—'घटत्वविशिष्टबोधे' इत्येव पाठः प्रामाणिकः, 'घटत्वप्रकारकविशिष्टबोधे' इति पाठे 'प्रकार'पदस्य वैयर्थ्यात्, विशिष्टपदेनैव तल्लाभात्। 'घटत्वप्रकारकघटत्वविशिष्टबोधे' इति पाठे प्रकारकान्तं व्यर्थम्। घटत्वांशेऽन्याप्रकारकेति—'घटो घटपदशक्यः' इत्याकारकमेव घटत्वांशेऽन्याप्रकारकघटत्वशक्तिज्ञानम्। अयमाशयः—'घटत्वविशिष्टो घटो घटपदशक्यः' इत्याकारकन्तु घटत्वांशेऽन्या-

### दर्पणव्याख्या

नन्वेवम् 'एकम्' इति पक्षस्य निरालम्बनतापत्तिरत आह—एकमित्यस्य चेति। 'बोधकत्वं शक्तिः' इति मते बोधकत्वज्ञानविषयबोधांशे प्रकारितावच्छेदकत्वं शक्तिरित्यर्थलाभात्तदाश्रयजातेरैक्यात्पदनिष्ठबोधकत्वस्यैव विनिगमनाविरहादर्थनिष्ठबोध्यत्वस्यापि शक्तित्वमिति मतेऽपि 'अस्मात् पदादेतदर्थबोधो भवतु' इति शक्तिज्ञाननिष्ठतादर्थीहेतुताया प्रकारितावच्छेदिकाया जातेरैक्याद्वा तत्पक्षोपपत्तिरित्यर्थः। तथाच तादृशप्रकारितावच्छेदकतारूपायाः शक्यजातिमात्रनिष्ठतया 'आकृतिरेव पदार्थः' इति पक्षः समर्थितो भवति। अवच्छेदकतायाः स्वरूपसम्बन्धरूपाया घटत्वाद्यात्मकत्वेऽप्यवच्छेद्यावच्छेदकभाव उपहितानुपहितभेदात् समर्थनीयः।

एवमेव 'एकं व्यक्तिः' इति पक्षोऽपि समर्थनीयः, तादृशज्ञाननिष्ठशाब्दबोधकारणताया बोधांशे विशेष्यतया व्यक्तेरवच्छेदकत्वात्। एतत्पक्षे घटत्वादीनामवच्छेदकमात्रत्वस्य नाम अन्येनोपपत्तिर्गोत्वादिजात्यानुगमात् तद्भानसम्भवमपि। शक्यतावच्छेदकप्रकारकव्यक्तिबोधे व्यक्तिशक्तिग्रहस्यैवावश्यके हेतुतया घटत्वादिना घटादिव्यक्तिबोधार्थं तावतोपपत्तेरप्युपपत्तिरेवेति बोध्यम्।

ननु 'घटो घटपदबोध्यः' इत्याकारकशक्तिज्ञानात् स्वरूपतो घटत्वप्रकारकविशिष्टबुद्धेरिव जातित्वेन घटत्वविशिष्टबुद्धेरप्यापत्तिः, तत्कार्यतावच्छेदकाननुगतत्वादत आह—तथाचेति। घटत्वविशिष्टबोधे इति। स्वरूपतः-

हेतुतेति कार्यकारणभाव इत्यादि प्रपञ्चितं भूषणे।

तदेतदभिप्रेत्याह— द्विकमिति—जाति-व्यक्ती इत्यर्थः। पूर्वपक्षाद् विरोधपरिहारः पूर्ववत्।

प्रभा

प्रकारकं शक्तिज्ञानन्तु न युक्तम्, घटत्वपदस्य घटत्वत्वावच्छिन्ने शक्तत्वात्। घटत्वांशेऽन्याप्रकारकत्वञ्च घटत्वे

यत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतानाश्रयत्वरूपम्। घटत्वांशेऽन्याप्रकारकत्वञ्च कार्यदले, कारणदले च

निवेशनीयम्। तेन 'घटत्वं घटपदशक्यम्' 'जातिर्घटपदशक्या' इत्याकारकघटत्वशक्तिज्ञानान्न घटत्वविशिष्ट-

घटविषयको बोधः। उक्तशक्तिज्ञाने घटत्वे घटत्वत्वं प्रकारः, जातौ जातित्वं प्रकार इत्यन्याप्रकारकघटत्व-

शक्तिज्ञानाभावान्न घटत्वविशिष्टघटविषयको बोधः। एवं घटो घटपदशक्य इत्याकारकशक्तिज्ञानान्न जातिमान्

घटः, घटत्वत्वेन घटत्वविशिष्टो घट इति च बोधः, कार्यदले घटत्वे घटत्वत्वस्य जातित्वस्य च प्रकारीभूत-

स्यात्। तदभिप्रेत्येति—अत एव 'प्रातिपदिकार्थ' इति सूत्रे 'प्रवृत्तिनिमित्तम्, तदाश्रयश्च प्रातिपदिकार्थः'

इति शेखरकाराः। जातिव्यक्ती इति—जातिर्व्यक्तिश्च पृथक्पदार्थ इति भावः। पूर्ववदाविति—'एकं

नामार्थः' इति पक्षादित्यर्थः। द्विकादिविषयकसर्वशक्तिज्ञानस्य जातिशक्तिज्ञानत्वेनैव कारणता लाघवादिति

शाब्दबोधीयकारणतावच्छेदकं जातिरूपमेकमेवेति सर्वपक्षे विरोधपरिहार इत्याह—पूर्ववदिति।

यद्वा 'जातिः पदार्थः' इति पक्षे विषयितया, व्यक्तिरिति पक्षेऽपि विषयितया, जातिविशिष्टव्यक्तिरिति

मते प्रकारितया, विशेष्यितया वा, त्रिकं पदार्थ इति पक्षे 'विषयितयाऽवच्छेदकत्व शक्तिः' इत्यभ्युपगमेन

विरोधपरिहारः, अवच्छेदकतात्वेनावच्छेदकत्वस्यैक्यात्। वस्तुतस्तु 'स्वमोर्नपुंसकात्' 'ह्रस्वो नपुंसके

प्रातिपदिकस्य' इत्यादिप्रामाण्येन 'वेधाः' 'वाग्' 'मधु' इत्यादौ प्रकृतिमात्रेण पुंस्त्वादेर्बोधेन च लिङ्गमपि

प्रातिपदिकार्थ इत्याशयेनाह—त्रिकमिति। ननु—

'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।

उभयोरन्तरं यच्च तदभावे नपुंसकम्॥'

दर्पणव्याख्या

❀ कार्य्यकारणभाव इति ❀ तथाच 'जातिमान् घटः' इति बोधस्य घटत्वांशे जातित्वप्रकारक-

त्वप्रकारकबोध इत्यर्थः। ❀ प्रपञ्चितमिति ❀ जातित्वप्रकारकघटत्वविशिष्टबुद्धिं प्रति तु तदंशे

त्वेनोक्तशक्तिज्ञानकार्य्यतावच्छेदकानाक्रान्तत्वेनोक्तापत्तेरसम्भवाद् घटत्वांशे जातित्वप्रकारकघटत्वविशिष्टबुद्धिं

जातित्वप्रकारकशक्तिज्ञानस्य हेतुत्वान्तर कल्पनीयमिति भावः।

ननु तदंशेऽन्याप्रकारकत्वघटितधर्मस्यार्थसमाजग्रस्ततया कथं कार्य्यतावच्छेदकत्वमत आह—❀ प्रपञ्चितमिति ❀

तथाच निरवच्छिन्नप्रकारताकतद्विशिष्टबुद्धिं प्रति निरवच्छिन्न(तत्)प्रकारताकशक्तिज्ञानस्य, सावच्छिन्नप्रकारताकतद्विशिष्टबुद्धिं

प्रति सावच्छिन्नतत्प्रकारकशक्तिज्ञानस्य हेतुत्वकल्पनान्नोक्तापत्तिरिति तत्रोक्तमित्यर्थः। ❀ तदभिप्रेत्येति ❀ उक्तरीत्या

विशिष्टस्य शक्यत्वमुपगम्येत्यर्थः। ❀ जातिव्यक्ती इति ❀ विशेष्यविशेषणभावापन्ने ते इत्यर्थः।

❀ पूर्वपक्षादिति ❀ 'एकम्' इति पक्षादित्यर्थः। तत्पक्षे हि शाब्दज्ञानकारणतायां बोधांशे प्रकारितयावच्छेदकत्वं

शक्तिरिति जातिरेव शक्या। 'विशेष्यितयाऽवच्छेदकत्वम्' इति मते केवलव्यक्तिरेव शक्येति सिद्धान्तितम्। अत्र तु विषयि-

तात्वेन प्रकारिताविशेष्यिते अनुगमय्य तत्र विषयितयाऽवच्छेदकत्वं शक्तिरित्युपगमाद् द्वयोरपि नामार्थत्वसिद्धिरिति न तयोः

परस्परविरोधशङ्केति भावः। एतेषां मतानामाकराकरत्वेऽपि 'व्यक्तिः पदार्थः' इति पक्ष एव क्षोदक्षमः। प्रत्येकपदशक्ति

निर्णयस्त्वन्यतोऽवधार्य्यः।

त्रिकमिति—जाति-व्यक्ति-लिङ्गानीत्यर्थः। सत्त्वरजस्तमोगुणानां साम्यावस्था नपुंसकत्वम्। आधिक्यं पुंस्त्वम्। अपचयः स्त्रीत्वम्। तत्तच्छब्दनिष्ठं तत्तच्छब्दवाच्यश्च,

प्रभा

इत्यादिनोक्तमवयवसंस्थानविशेषरूपं लिङ्गं न शास्त्रीयप्रक्रियानिर्वाहकम्, 'दारान्' 'स्वसा' इत्यादौ नत्व-टापोरभावप्रसङ्गात्। उक्तवचने केशपदं योनिपरम्, 'लोमशः' इतिपदं लिङ्गपरम्, केशादिपरत्वे गवादिष्वव्याप्तेः। नचाहार्यारोपेण तत्प्रतीत्या नत्वादिकार्योपपत्तिः, आरोपाभावेऽपि तादृशप्रयोगाणामिष्टत्वात्। आहार्यारोपश्च बाधसमकालिकेच्छाजन्यज्ञानरूपः। 'रक्तः स्फटिकः' इत्यत्र यथा 'स्फटिको रक्तत्वाभाववान्' इति बाधसत्त्वेऽपि 'रक्तत्ववान् स्फटिकः' इतीच्छाजन्यज्ञानं जायते। अत एव भाष्यकृता निर्णीतं लिङ्गमाह—सत्त्वरज इति—पदार्थमात्रस्य सत्त्वरजस्तमस्त्रितयात्मकप्रकृतेरेवोत्पत्तिः। तथाच सर्वेषु पदार्थेषु कस्यचिद्गुणस्याधिक्यम्, कस्यचिन्न्यूनत्वम्, स्थितिश्च। तत्राधिक्यं पुंस्त्वम्, न्यूनत्वं स्त्रीत्वम्, स्थितिमात्रं नपुंसकत्वम्। गुणानामुत्कर्षापकर्षसाम्यावस्थात्रयसाधारणस्थितिमात्रं नपुंसकत्वमिति यावत्। साम्यावस्थेति—साम्यावस्थायां सृष्टेरभावेन व्यवहाराभावाद् गुणत्रयस्य स्थितिमात्रमित्यर्थः। अपचय इति—न्यूनत्वमित्यर्थः। इदञ्च लिङ्गमर्थनिष्ठं केवलान्वयी=सर्वं लिङ्गं सर्वेष्वर्थेषु वर्तते। अत एव एकस्मिन्नपि 'अयं पदार्थः' 'इयं व्यक्तिः' 'इदं वस्तु' इति लिङ्गत्रयप्रतीतिः। ननु लिङ्गस्यार्थनिष्ठत्वे 'पुंलिङ्गः शब्दः' इत्यादिव्यवहारानुपपत्तिः, तादृशव्यवहारस्यारोपनिमित्तकत्वात्, पुंस्त्वादिकं लिङ्गं प्रतीयतेऽस्मादिति यौगिकत्वाद्वा।

अन्ये तु उपचयापचयादेर्विरुद्धस्य एकत्रार्थे आत्मा, ब्रह्म इत्यादिनिर्विकारिणि चासम्भवात् शब्दनिष्ठमेव तदित्याहुः, पुंस्त्वविशिष्टोऽयमर्थ इति स्वारोपात्। तस्मात्—

> तिस्रो जातय एवैताः केषाञ्चित् समवस्थिताः।
> अविरुद्धा विरुद्धाभिर्गोमनुष्यादिजातिभिः॥

इति वाक्यपदीयाज्जातिरेव लिङ्गमित्याहुः। ननु तस्य केवलान्वयित्वेनाव्यावर्तकतया लौकिकस्त्रीत्वविशिष्टया छाग्याऽपि 'पशुना यजेत' इति श्रुतिबोधितयागापत्तिरिति चेन्न, 'छागो वा मन्त्रवर्णनात्' इति मीमांसकोक्तेन मन्त्रेषु पुंस्त्वस्य वर्णनरूपलिङ्गेन लौकिकपुंस्त्वविशिष्टेनैव याग इति निर्णयसम्भवात्। किञ्च नियतपुंलिङ्गादिशब्दानां लौकिकलिङ्गविशिष्टे शास्त्रीये लिङ्गे शक्तिस्वीकारेणानतिप्रसङ्गाच्च। अर्थनिष्ठत्वे चाचेतनचेतनवाचकानां मध्वादिशब्दानां मक्षिकादौ पुंनपुंसकत्वे, वसन्ते च पुंस्त्वमिति व्यवस्थाया अनुपपत्तिः। नच 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्त्रियां धने' इत्यादिष्वप्यर्थनिष्ठत्वे नियमोच्छेदापत्तिः। शब्दनिष्ठत्वे च ह्रस्वत्वदीर्घत्वोदात्तत्वानुदात्तत्ववत् स्त्रीत्वपुंस्त्वविरुद्धधर्मवत्त्वात् शब्दा भिद्यन्ते। केषाञ्चिदनेकलिङ्गत्वव्यवहारस्तु समानानुपूर्वीकत्वेन तेषां तन्त्रेणानुकरणादुपपद्यते। एवञ्च समानानुपूर्वीकेषु तटादिषु लिङ्गत्रयम्, छागादिषु लिङ्गद्वयम्, पदार्थादिष्वेकमिति सर्वत्र मुख्य एव लिङ्गव्यवहारः। तत्तच्छब्देति—जात्यादिभेदेन भिन्ना ये शब्दास्तेषु शब्देषु स्थितं यल्लिङ्गं तत् स्वा ( लिङ्ग ) श्रयशब्दवाच्यम्।

दर्पणव्याख्या

ॐ लिङ्गानीति ॐ लिङ्गत्वं—प्राकृतगुणवतो धर्मविशेषः। तद्विशेषश्च नपुंसकत्वादीत्याह—ॐ सत्त्वेति ॐ। ॐ साम्यावस्थेति ॐ उपचयापचयराहित्येनावस्थानमित्यर्थः। उपचयः=वृद्धिः, अपचयः=न्यूनत्वम्। ॐ तत्तच्छब्दनिष्ठमिति ॐ जाति—गुण—क्रियादिभेदभिन्नशब्दनिष्ठम्। ॐ तत्तच्छब्दवाच्यश्चेति ॐ स्वाश्रयशब्दवाच्यपदार्थेऽप्यर्थः, 'पुंलिङ्गः शब्दः' इति व्यवहारात्, "स्वमज्ञातौ न" ( पा० सू० [illegible] ) "स्वमो-

तमेव विरुद्धधर्ममादाय तटादिशब्दा भिद्यन्ते ।

केषाञ्चिदनेकलिङ्गत्वव्यवहारस्तु समानानुपूर्वीकत्वेन शब्दानामभेदारोपात् ।

एवञ्च पदार्थपदे पुँस्त्वमेव । व्यक्तिपदे स्त्रीत्वमेव । वस्तुपदे नपुंसकत्वमेव इति सर्वत्रैव

'अयं पदार्थः' 'इयं व्यक्तिः' 'इदं वस्तु' इति व्यवहारः, 'तटः' 'तटी' 'तटम्' इति चोपपद्यते ।

प्रभा

तमेव = शब्दनिष्ठं पुंस्त्वादिकमेव । भिद्यन्त इति—'तटः' इति शब्द इतरेभ्यो भिद्यते पुंस्त्वादिति तटरूपशब्दे पक्षे पुंस्त्वादिलिङ्गेन हेतुना इतरभेदविधेयकानुमितेरुद्देश्यता सम्पद्यते । ननु लिङ्गभेदेन भेदे 'उभयलिङ्गकोऽयं शब्दः' 'त्रिलिङ्गकोऽयम्' इति व्यवस्थानुपपत्तिर्लिङ्गभेदेन भेदादित्याशङ्कायामाह—केषाञ्चिदिति । समानेति—हेतौ तृतीया । हेतुत्वञ्चारोपनिरूपितम् । समानानुपूर्वीकत्वेन हेतुना अभेदारोप इत्यर्थः ।

वस्तुतस्तु शब्दस्यार्थस्य च सत्त्वादिगुणत्रयात्मकतया तत्र कस्यचिद् गुणस्योपचयः कस्यचिदपचय इत्येवंरूपस्योपचयापचयस्यैकस्मिन्नेव कालावच्छेदेन सम्भवात् आत्मादिनिरवयवपदार्थेषु उपचयादेरभावेऽपि तद्वाचकगुणत्रयात्मकशब्दगतोपचयादिमादाय दोषाभावाच्च केषाञ्चिदनेकलिङ्गत्वव्यवहारस्तु समानानुपूर्वीकत्वेन शब्दानामभेदारोपादिति मूलोक्तिश्चिन्त्येति गुरवः । आरोपादिति—वस्तुतस्तु लिङ्गभेदेन भिन्न एव शब्दोऽभेदस्त्वारोपित एव । अन्ये तु सर्वेषामर्थानां त्रिगुणात्मकतया अवस्थाभेदेन भेदस्य सर्वसम्मतत्वेनार्थभेदेन शब्दानां भेदः । तदुच्यते—'अर्थभेदात् शब्दभेदः' इति । एवञ्चेति—शब्दनिष्ठस्य पारिभाषिकस्य गुणत्रयोपचयादिरूपस्य लिङ्गस्य व्यवहारोपयोगित्वे चेत्यर्थः । तथाच यः शब्द एकावस्थाविशिष्टः समर्थमभिधत्ते स नियतलिङ्गः । यश्चावस्थाद्वयविशिष्टः सन्नर्थमभिधत्ते स उभयलिङ्गकस्तदाह—पदार्थपद इति । लिङ्गस्य केवलान्वयित्वं दर्शयति—सर्वत्रेति ।

दर्पणव्याख्या

इत्यादिपूर्वप्रामाण्याच्चेति भावः । ❀ तमेवेति ❀ समानानुपूर्वीकत्वेऽप्युपचनपुंसकात्'' ( पा० सू० ७ । १ । २३ ) ❀ भिद्यन्ते इति ❀ पुँस्त्वादिलिङ्गकेतरव्यावृत्तिविधेयकानुमि याद्यवस्थारूपं परस्परसमानाधिकरणं लिङ्गमादायैवेत्यर्थः । त्युद्देश्या भवन्तीत्यर्थः ।

ननु लिङ्गस्योक्तावस्थारूपत्वे तासां परस्परविरुद्धानामेकत्रावस्थानासम्भवेन केषुचिच्छब्देष्वनेकलिङ्गत्वव्यवहारः किंनिबन्धनोऽत आह— ❀ केषाञ्चिदिति ❀ तटादिशब्दानामित्यर्थः ।

वस्तुतस्तेषां विरुद्धत्वेऽपि शब्दानां समानानुपूर्वीकत्वनिबन्धनाभेदाध्यासादनेकलिङ्गत्वव्यवहारोपपत्तिरित्यर्थः ।

अर्थनिष्ठम्— "स्तनकेशवती नारी लोमशः पुरुषः स्मृतः ।"

इत्यादिस्मृतिरक्षितं लिङ्गं तु नात्राश्रयितुं शक्यम्, 'दारान्' इत्यादौ शास्त्रकृत्यर्थे तदभावेन तद्वाचनापत्तेः । तथाच भाष्यम्—"एकार्थशब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वमवयवान्यत्वाच्च" इति । एकस्मिन्नर्थे पुष्यः, तारका, नक्षत्रम्' इति लिङ्गनानात्वदर्शनात्, 'कुटीरः' इत्यादौ रेफस्यावयवस्योपजनेऽपि लिङ्गभेददर्शनाच्चान्यदेव शब्दनिष्ठं लिङ्गमिति तदर्थः । अर्थनिष्ठत्वे तु 'पुंलिङ्गः शब्दः' इति सामानाधिकरण्यानुपपत्तिश्चेति भावः । ❀ व्यवहार इति ❀ अर्थनिष्ठस्य

❀ एवञ्चेति ❀ पारिभाषिकशब्दनिष्ठलिङ्गस्य व्यवहारोपयिकत्वे चेत्यर्थः । व्यवस्थादिशब्दैः स्तनकेशादिरूपस्य तन्नियामकत्वे स्त्रीत्वस्य वस्तुपदार्थपदाभ्यां न व्यक्तिविषये, नैव पुरुषादिरपि । ❀ तटस्तटीति ❀ अर्थे लौकिकलिङ्गाभावेऽपि लौकिकलिङ्गस्य खट्वादावभावेन तद्बाधकात् स्त्रीप्रत्ययाद्यनापत्तेश्चेति भावः ।

तच्च लिङ्गमर्थपरिच्छेदकत्वेन अन्वेति, इति पश्वादिशब्दोक्तम्—'पशुः स्त्रियां नास्ति' इति, 'पशुना' इत्यादिर्विधिर्न छाग्यादीनङ्गत्वेन प्रयोजयतीति विभावनीयम् । नच व्यक्त्यादिशब्दोक्त लिङ्गस्येव पश्वादिशब्दोक्तस्यापि साधारण्यं शङ्क्यम्, व्यक्तिशब्दस्य नित्यस्त्रीलिङ्गत्वेन तथा सम्भवेऽपि पशुशब्दस्य नित्यपुंल्लिङ्गत्वे प्रमाणाभावात् ।

प्रभा

ननु नियतलिङ्गकस्य पदार्थादिशब्दस्य लौकिकलिङ्गानादरेण लौकिकस्त्रीत्वादिविशिष्टेऽपि यथा प्रवृत्तिस्तथा पशुशब्दस्य शास्त्रीयपुंस्त्ववैशिष्ट्यमादाय लौकिकपुंस्त्वानादरेण लौकिकस्त्रीत्वविशिष्टपशावपि प्रवृत्तिः स्यादिति कथं नाभावदर्शनमात्रेण निर्णय इत्याशङ्कायामाह—तच्चेति—शब्दनिष्ठमित्यर्थः । अर्थपरिच्छेदकत्वेनेति—शब्दार्थयोस्तादात्म्यात् लिङ्गस्य जातिरूपत्वे तु समवायेन, भिन्नत्वे स्वरूपसम्बन्धेनार्थपरिच्छेदकत्वेनेत्यर्थः । शब्दार्थयोर्भेदे तु स्वाश्रयवाच्यत्वसम्बन्धेन परिच्छेदकत्वं बोध्यम् । पश्वादिशब्दोक्तमिति—पश्वादिशब्दोक्तं लिङ्गमर्थपरिच्छेदकत्वेनान्वेतीति पूर्वेणान्वयः । स्त्रियां नास्तीति—'पशुना यजेत' इति वाक्यान्तर्गतः पशुशब्दः नाभावेन पुंस्त्वबोधनात् स्त्रियां नास्ति-इति हेतोः 'पशुना यजेत' इति विधिर्न छाग्यादीनङ्गत्वेन = यज्ञाङ्गत्वेन प्रयोजयति = बोधयतीत्यर्थः । ननु पुंल्लिङ्गः पशुशब्दो यदि लौकिकपुंस्त्वविशिष्टव्यक्तेरेव वाचक इति नियमः स्यात्तदा छाग्यादेर्यज्ञाङ्गत्वं न स्यात् स नियम एव तु नास्तीत्याशङ्क्ते—नचेति—व्यक्त्यादिशब्दोक्तशास्त्रीयलिङ्गस्य यथा साधारण्येन स्ववाच्यत्वसम्बन्धेन पुंस्त्रीनपुंसकव्यक्तिसम्बद्धत्वेन बोध्यतया अव्यावर्तकत्वं तथा पशुशब्दोक्तशास्त्रीयलिङ्गस्यापि स्वाश्रयवाच्यत्वसम्बन्धेन पुंस्त्रीसम्बद्धतया अर्थपरिच्छेदकत्वेनान्वयेऽप्युक्तदोषतादवस्थ्यमित्याशङ्कां निराकरोति—

व्यक्तिशब्दस्येति—व्यक्तिशब्दस्य क्तिन्नन्तत्वेन नित्यस्त्रीलिङ्गत्वात् साधारण्येऽपि पशुशब्दस्य नित्यपुंल्लिङ्गत्वे प्रमाणाभावान्न साधारण्यम् । ननादेशस्य पुंल्लिङ्गत्वे प्रामाण्येऽपि नित्यपुंल्लिङ्गत्वे न प्रामाण्यमिति भावः ।

दर्पणव्याख्या

परस्परासमानाधिकरणपारिभाषिकलिङ्गवत्त्वेन विभिन्नानां तटादिशब्दानां तत्तत्कार्यभाक्त्वमुपपद्यते इत्यर्थः ।

ननु शब्दनिष्ठोक्तलिङ्गस्यैव स्त्रीपुंसादिरूपपदार्थापरिच्छेदकत्वे तस्य स्त्रीवाचकपशुशब्देऽपि सत्त्वात् 'पशुना यजेत' इत्यत्र ... स्यात्, तद्वद्व्यक्त्यादिशब्दोक्तलिङ्गवत् स्त्रीपुंसादिसाधारण्येनार्थापरिच्छेदक ... इत्यर्थः । अर्थेति अर्थमपि परिच्छिन्दत्तीत्यर्थः । तदेवाह— पश्वादि आह— तच्चेति शब्दनिष्ठमेवेत्यर्थः ।

मिति लिङ्गमिति शेषः । यदि स्त्रीपुंसयोरङ्गत्वेन विवक्षितोऽभविष्यत्तदा अर्थाविच्छिन्नाभावं विमृश्यन्ते न प्रायोऽभूत् । तदन्तपशुशब्दप्रयोगात् पुम्पशुरेव यागाङ्गमिति निर्णीयते इत्यर्थः ।

स्त्रीलिङ्गार्थकपशुशब्दात् 'आङो नाऽस्त्रियाम्" ( पा० सू० ७ । ३ । १२० ) इति विहितनाभावस्य तृतीयैकवचने सम्भवेन तदन्तपशुशब्दप्रयोगात् तदर्थस्य पुम्त्वावगतेरिति भावः । ननु "व्यक्त्यादिशब्दानामर्थनिष्ठलिङ्गानादरेण प्रवृत्ति वत्पशुशब्दस्य तथा प्रवृत्तौ नाभावादुक्तदोषो दुरपह्नव इत्याशङ्क्य निराकरोति— नचेति व्यक्त्यादिशब्दा पश्वादिशब्दसदृशः । साधारण्यं स्वाश्रयवाच्यत्वसम्बन्धेन, व्यक्तिशब्दस्य नित्यस्त्रीलिङ्गत्वेनेति, "स्त्रियां क्तिन्" ( पा० सू० ३ । ३ । ९४ ) इत्यनुशासनादिति भावः ।

'पश्या न तायुं गुहा चतन्तम्' ( ऋ० वे० म० १ अनु० १२ सू० ६५ ) ।

प्रभा

स्य वेदादपि नित्यपुंल्लिङ्गत्वाभाय एवोपलभ्यत इत्याह—पश्या न तायुमिति—'पश्वा न तायुं
गुहा चतन्तं नमो युजानं नमो वहन्तं सजोषा धीराः पदैरनुग्मन्नुप त्वा सीदन्विश्वे यजत्रा.' गुहाश्रि-
कारणादग्नेरप्सु, अश्वत्थे च प्रवेशः तैत्तिरीये श्रूयते—'स निलायत सोऽपः प्राविशत्' 'अग्निर्देवेभ्यो
निलायत अश्वो रूपं कृत्वा सोऽश्वत्थे संवत्सरमतिष्ठत्' तद्वृत्तमाश्रित्येयमृक् प्रवृत्ता । अस्या अर्थः—
हे अग्ने ! धीराः = मेधाविनो देवाः, सजोषा = समानं जुषन्ते इति सजोषाः, युजतेरसुनि 'सुपां सुलुक्'
इति जसः सुः, समानप्रीतयः सन्तस्त्वां पदैः = मार्गे पादकृतैश्चिह्नैः, अनुग्मन् = ( 'मन्त्रे घस' इति
लेर्लुक् ) अन्वगमन्, हे अग्ने ! यजत्रा = यजनशीलाः, ( यजेरौणादिके अत्रनि यजत्रा इति ) विश्वे = सर्वे देवाः,
गुहा चतन्तम् = अप्रूपगुहायां गच्छन्तम्, 'गुहा' इत्यत्र ( 'सुपां सु' इतिङेर्लुक् ) चततिर्गतिकर्मा, नमः =
हविर्लक्षणमन्नम्, युजानम् = आत्मना संयुजानम्, नमः = देवेभ्यः प्रत्तं हविः, वहन्तं त्वा = त्वाम्, उपसीदन् =
समीपं प्राप्नुवन्, 'छन्दस्यमाङ्योगेऽपि' इत्यडभावः । यथा धीरा = मेधाविनः, इतेन पशुना समं परमात्मानं
तायुम् = स्तेनम्, न = इव उपसीदन्ति । नशब्द इवार्थे ।

अथ भावः—यथा बुद्धिमन्तः पुरुषाः परकीयपश्वादिधनमपहृत्य गुहायैव गिरिगह्वरे गतं चौरं
मार्गे स्थितैस्तदीयपदचिह्नैरनुगम्य प्राप्नुवन्ति, तथा देवा अपि अग्निं यजमानेन दत्तं हविरादाय
अप्रूपगुहायाम्, अश्वरूपं धृत्वा पिप्पले च स्थितमपि प्राप्नुवन्, अश्वरूपस्याग्नेः स्थितत्वात् बोधितुरस्य
'अश्वत्थ' इति नाम प्रसिद्धम्, अनयैव ऋचा जलस्य विद्युन्मय' शक्तिमत्त्वं सूचितम् । एतन्मूलमा-
श्रित्यैवाऽऽधुनिकवैज्ञानिकैर्जलाद् विद्युच्छक्तिं प्रादुर्भाव्य प्रकाशादिकं सर्वं कार्यं विधीयते । एतामृचमाभि-
स्यैवाश्वत्थरूपस्याग्नेः प्रवेशात्समुद्रे 'वाडवानल' इति प्रसिद्धिरित्यपि अनुमातुं शक्यते । एवमेव सर्वं विज्ञानं
तत्र तत्र वेदे निहितम् । यच्च सम्प्रति 'परमाणुबम' ( ऐटम ) इति वैज्ञानिकैराविष्कृतम् , सोऽपि—

अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः ।
छायाऽऽतपतमःशब्दभावेन परिणामिनः ॥
( वाक्यप० का० १ कारि० १११ )

इति कारिकया हरिणा परमाणौ सर्वशक्तिमत्त्वं वदता तत्सिन्धोटस्पदार्थजनकत्वं सूचितमेव ।
एवमेव शब्दस्य नित्यत्वं सर्वदेशव्यापित्वं यद् वैयाकरणैरुद्घोषितं तत् विद्विद् यन्त्र दूरदूरदेशाग सम्भा-
पणादिकं कुर्वद्भिर्वैज्ञानिकैरङ्गीकृतमेव । एवमेव जलाकाशमहीधरेषु गमनशीला रथा—

वसिष्ठमन्त्रोक्षणजात्प्रभावादुदन्वदाकाशमहीधरेषु ।
मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने न हि तद्रथस्य ॥ रघु० स० ५ श्लो० २७ ।

इतिपद्येन कालीदासेन प्रदर्शिताः साम्प्रतं येन केनापि रूपेण प्रकाशं नीता दृश्यन्ते ।
आधुनिकवैज्ञानिकैर्यद् यदाविष्क्रियते तत्सर्वं वेदादिरूपे संस्कृतसाहित्ये येन केनापि रूपेण स्थितमेव
मूलमाश्रित्य रूपान्तरेण परिणतमुपलभ्य स्वकीयकौशलेन लोका आश्चर्ये निमज्जन्ते । संस्कृतविद्वद्वरेण्येषु
एते वाह्यप्रपञ्चकरा लोकविनाशकाः परस्परद्वेषादिना वैरभावप्रयोजका इति मत्वा उपेक्षन्ते, इत्याधुनिकानां
तेषु ज्ञानशून्यत्वाभिधानमुन्मत्तप्रलपितमेवेत्यलं पल्लवितेनेति पश्योलिनः ।

दर्पणव्याख्या

ननु 'पशुना यजेत' इति वैदिकप्रयोग एव तस्य नित्यपुंस्त्वे प्रमाणं स्यादत आह—पश्येति । तथा वेदे पशुः

तच्च लिङ्गमर्थपरिच्छेदकत्वेन अन्वेति, इति पश्वादिशब्दोक्तम्—'पशुः स्त्रियां नास्ति' इति, 'पशुना' इत्यादिविधिर्न छाग्यादीनङ्गत्वेन प्रयोजयतीति विभावनीयम् । नच व्यक्त्यादिशब्दोक्त-लिङ्गस्येव पश्वादिशब्दोक्तस्यापि साधारण्यं शङ्क्यम्, व्यक्तिशब्दस्य नित्यस्त्रीलिङ्गत्वेन तथा सम्भवेऽपि पशुशब्दस्य नित्यपुंल्लिङ्गत्वे प्रमाणाभावात् ।

प्रभा

ननु नियतलिङ्गकस्य पदार्थादिशब्दस्य लौकिकलिङ्गानादरेण लौकिकस्त्रीत्वादिविशिष्टेऽपि यथा प्रवृत्तिस्तथा पशुशब्दस्य शास्त्रीयपुंस्त्ववैशिष्ट्यमादाय लौकिकपुंस्त्वानादरेण लौकिकस्त्रीत्वविशिष्टपशावपि प्रवृत्तिः स्यादिति कथं नाभावदर्शनमात्रेण निर्णय इत्याशङ्कायामाह—तच्चेति—शब्दनिष्ठमित्यर्थः । अर्थप-रिच्छेदकत्वेनेति—शब्दार्थयोस्तादात्म्यात् लिङ्गस्य जातिरूपत्वे तु समवायेन, भिन्नत्वे स्वरूपसम्बन्धेनार्थ-परिच्छेदकत्वेनेत्यर्थः । शब्दार्थयोर्भेदे तु स्वाश्रयवाच्यत्वसम्बन्धेन परिच्छेदकत्वं बोध्यम् । पश्वादिशब्दोक्त-मिति—पश्वादिशब्दोक्त लिङ्गमर्थपरिच्छेदकत्वेनान्वेतीति पूर्वेणान्वय. । स्त्रियां नास्तीति—'पशुना यजेत' इति वाक्यान्तर्गतः पशुशब्दः नाभावेन पुंस्त्वबोधनात् स्त्रियां नास्ति-इति हेतो 'पशुना यजेत' इति विधि छाग्यादीनङ्गत्वेन = यज्ञाङ्गत्वेन प्रयोजयति = बोधयतीत्यर्थः । ननु पुल्लिङ्ग पशुशब्दो यदि लौकिकपुंस्त्वविशिष्ट-व्यक्तेरेव वाचक इति नियमः स्यात्तदा छाग्यादेर्यज्ञाङ्गत्वं न स्यात् स नियम एव तु नास्तीत्याशङ्कते—नचेति—व्यक्त्यादिशब्दोक्तशास्त्रीयलिङ्गस्य यथा साधारण्येन स्ववाच्यत्वसम्बन्धेन पुंस्त्रीनपुंसकव्यक्तिसम्बद्धत्वेन बोध्य-तया अव्यावर्तकत्व तथा पशुशब्दोक्तशास्त्रीयलिङ्गस्यापि स्वाश्रयवाच्यत्वसम्बन्धेन पुंस्त्रीसम्बद्धतया अर्थपरि-च्छेदकत्वेनान्वयेऽप्युक्तदोषतादवस्थ्यमित्याशङ्कां निराकरोति—

व्यक्तिशब्दस्येति—व्यक्तिशब्दस्य क्तिन्नन्तत्वेन नित्यस्त्रीलिङ्गत्वात् साधारण्येऽपि पशुशब्दस्य नित्यपुँल्लिङ्गत्वे प्रमाणाभावान्न साधारण्यम् । नादेशस्य पुँल्लिङ्गत्वे प्रामाण्येऽपि नित्यपुँल्लिङ्गत्वे न प्रामाण्यमिति भाव. ।

दर्पणव्याख्या

पशुपदसमानाधिकरणपारिभाषिकलिङ्गपरत्वेन विभिन्नाना छागादिशब्दाना तत्तत्कार्यभाक्त्वमुपपद्यते इत्यर्थः ।

ननु शब्दनिष्ठोक्तलिङ्गस्यैव स्त्रीपुंसादिव्यवहारौपयिकत्वे तस्य स्त्रीवाचकपशुशब्देऽपि सत्त्वात् 'पशुना यजेत' इत्यत्र पशुस्त्रीकरणकयागादप्यदृष्टसिद्धि स्यात्, तद्द्रव्यात्तल्लिङ्गस्य व्यक्त्यादिशब्दोक्तलिङ्गवत् स्त्रीपुंसादिसाधारण्येनार्थापरिच्छेदक-त्वादत आह—❀ तच्चेति ❀ शब्दनिष्ठमेवेत्यर्थः । ❀ अर्थेति ❀ अर्थमपि परिच्छिनत्तीत्यर्थः । तदेवाह—❀ पश्वादि-शब्दोक्तमिति ❀ लिङ्गमिति शेषः । यदि स्त्रीपशुर्यागाङ्गत्वेन विवक्षितोऽभविष्यत्तदा अस्त्रीविहितनाभाव निभस्यन्ते न प्रायोक्ष्यत् । तदन्तपशुशब्दप्रयोगात्तु पुम्पशुरेव यागाङ्गमिति निर्णीयते इत्यर्थः ।

स्त्रीलिङ्गार्थकपशुशब्दात् 'आङो नाऽस्त्रियाम्" ( पा० सू० ७ । ३ । १२० ) इति विहितनाभावस्य तृतीयैकवचनेऽसम्भवेन तदन्तपशुशब्दप्रयोगात् तदर्थस्य पुंस्त्वावगतेरिति भाव । ननु 'व्यक्त्यादिशब्दानामर्थनिष्ठलिङ्गानादरेण प्रवृत्ति-वत्पशुशब्दस्य तथा प्रवृत्तौ बाधकाभावादुक्तदोषो दुरपह्नव इत्याशङ्क्य निराचष्टे—❀ नचेति ❀ व्यक्त्यादीत्यादिना पश्वादिपदसङ्ग्रह । साधारण्यं स्वाश्रयवाच्यत्वसम्बन्धेन, स्त्रीपुंसादिसाधारण्येन नित्यस्त्रीलिङ्गत्वेनेति, "स्त्रियां क्तिन्" ( पा० सू० ३ । ३ । ९४ ) इत्यनुशासनादिति भाव ।

"पशवे नृभ्यो यथा गवे" ( ऋ० वे० अ० १ अ० ३ व० २६ ) इत्यादिवेदे दर्शनाच, मीमांसायां चतुर्थे "पशुना यजेत' इत्यत्रैकत्व— पुँस्त्वयोर्विवक्षितत्वान्नानेकपशुभिः, पशुस्त्रिया वा याग इति प्रतिपादितत्वाच ।

वस्तुतस्तु विशेषविध्यभावे उप्रत्ययान्तानां पुँस्त्वस्य व्याकरणेन निर्णीतत्वाद् वेदभाष्येऽपि 'जसादिषु छन्दसि वा वचनम्' इति नाभावाभाव इत्युक्तेः पशुशब्दस्य नित्यपुँस्त्वनिर्णयात् । प्रकृते

प्रभा

'पश्वा' आर्षीदं रूपम् । पुल्लिङ्गत्वे नाभावो दुर्वारः स्यादिति भाव. । पश्वे इति 'यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे यथा तोकाय रुद्रियम्' अस्यार्थः—अदितिः= भूमिः, यथा नः = अस्माकं रुद्रियम्= रुद्रसम्बन्धिभेषजम्, यथा = येन प्रकारेण सिद्ध्यति, करत्= तथा करोतु । किञ्च यथा पश्वे = अस्मदीयाश्व- महिषादिपशवे, नृभ्य. = अस्मदीयपुरुषेभ्यो गवे = विशेषेण गोजातये हितं रुद्रियं सिध्यति तथा करोतु । किञ्च तोकाय = अस्मदीयापत्याय रुद्रियं यथा सिध्यति तथा करोतु।इति, भेषजस्य रुद्रसम्बन्धित्वं तैत्तिरीये ( ४ । ५ । १० । १ ) ( १ । ८ । ६ । १ । उक्तम् । पशुशब्दस्य नित्यपुल्लिङ्गत्वे स्त्रीवाचकत्वाभावेन 'ङिति ह्रस्वश्च' इति नदीत्वाप्राप्तौ घित्वे 'घेर्ङिति' इति गुणापत्तिर्दुर्वारेति भावः । पशुशब्दस्य स्त्रीलिङ्गत्वस्यापि स्वीकारे तु नदीत्वेन घित्वाभावाद् गुणाभाव इति भावः । नच स्त्रीलिङ्गत्वास्वीकारेऽपि जसादिषु 'छन्दसि वा वचनं प्राङ् णौ चङ्युपधायाः' इति वार्तिकबलान्नाभावगुणादीनां वैकल्पिकत्वेन 'पश्वा' 'पश्वे' इत्यादीनां सिद्धिरिति वाच्यम्, वार्तिकेन 'आङो ना' 'घेर्ङिति' इत्यनयोर्बाधकल्पनापेक्षया स्त्रीलिङ्गत्वस्वीकारस्यैवौचित्यात् । नच नदीत्वे आडागमापत्तिः 'सागर तर्तुकामस्य' इत्यादिलक्ष्योपपत्तये आगमानित्यत्वस्यावश्यकत्वेनैव सिद्धे. । तथाच पशुशब्दस्यानियतलिङ्गतया शास्त्रीयपुंस्त्वलिङ्गविशिष्टलौकिकपुंस्त्वलिङ्गविशिष्टस्यैव ग्रहणेन न पशुस्त्रिया याग इति भावः । तत्र मीमांसकसम्मतिमप्याह—मीमांसायामिति—मी० द० अ० ४ पा० १ सू० १७ 'तथाच लिङ्गम्' संख्यावत् लिङ्गमपि विवक्षितमिति हि तदर्थ. । वेदभाष्येऽपीति—चिन्त्यमिदम्, वेदभाष्ये 'पश्वे' इत्यत्र 'संज्ञापूर्वको विधिरनित्य.' इति वचनमाश्रित्य गुणाभावस्योपपादितत्वात् । ननु 'पशुशब्दस्य नित्यपुल्लिङ्गत्वे प्रमाणाभावात्' इत्यसङ्गतम्, 'उकारान्तः' (५१) पुंसि उकारान्त इत्यर्थकेन शिक्षासूत्रेण नित्यपुंस्त्वस्य व्याकरणेनैव निर्णीतत्वादिति प्रकारान्तरेण पुंस्त्वविशिष्टस्यैव पशोर्ग्रहणमिति साधयति— प्रकृत इति । 'अग्नीषोमीयं पशुमालभते' इत्यनेन ज्योति.ष्टोमं प्रकृत्य पश्वालम्भन विधीयते । तत्र पशुपदो- पादानात् 'पशुचोदनायामनियमोऽविशेषात्' ( मी० अ० ६ पा० ८ सू० ३० ) इति सूत्रेण यस्य कस्यचित् पशोर्ग्रहणमाशङ्क्य 'छागो वा मन्त्रवर्णात्' ( मी० अ० ६ पा० ८ सू० ३१ ) इत्यनेन छागस्यैव ग्रहणं नान्य- पशोरिति निर्णीतम् । तत एव 'छागस्य' इति पुंस्त्वश्रवणात् पुंस्त्वविशिष्टस्यैव ग्रहणमिति निर्णयः । छागप्रकाशन-

दर्पणव्याख्या

ब्दस्य स्त्रीलिङ्गत्वस्यापि दर्शनेन न तस्य व्यक्त्यादिशब्दसाम्यमिति भाव । स्वोक्तेऽर्थे मीमांसकसम्मतिमाह- ❀ मीमांसायामिति ❀ ।

वक्ष्यमाणास्वरसादाह—❀ वस्तुतस्त्विति ❀ । ननु उप्रत्ययान्तानां नित्यपुंस्त्वे पश्वेत्यादिस्त्रीलिङ्गप्रयोगानुपपत्ति- रत आह—❀ वेदभाष्येऽपीति ❀ तथाच व्यक्त्यादिशब्दोक्तलिङ्गस्येव पशुशब्दोक्तलिङ्गस्यापि स्त्रीपुंससाधारण्यान्न तत्त्वा- र्थपरिच्छेदकत्वमिति भाव ।

"छागो वा मन्त्रवर्णात्" इति न्यायेनैव निर्णयः । मन्त्रवर्णे हि 'छागस्य वपाया मेदसः' इति श्रूयते । तत्र छागस्येति छाग्यामसम्भावितम्, इति भवति ततः पुंस्त्वनिर्णय इति विस्तरेण प्रपञ्चितं भूषणे ।

प्रभा

समर्थो वाक्यविशेषो मन्त्रवर्णः । स च 'छागस्य वपायाः' इत्येव । न्यायेनैवेति—न्यायोऽत्र युक्तिमूलक-
दृष्टान्तः । पशुविशेषनिर्णय इव पुंस्त्वस्यापि तेनैव निर्णय इत्यभिप्रायः । लिङ्गस्य प्रातिपदिकवाच्यत्वे मानन्तु
'स्वमोर्नपुंसकात्' 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्यादिशास्त्रमेव । नच ब्रह्मात्मादिशब्दार्थस्यात्मनो नित्यतया
तत्र सत्त्वादिगुणानामुपचयापचयोरभावाल्लिङ्गबोधानापत्तिरिति वाच्यम्, सर्वस्यैव प्रपञ्चस्य ब्रह्मण्यध्यस्तत्वेन
लिङ्गस्याप्यध्यासेनोपपत्तेः । अध्यासश्च शुक्तौ रजतप्रतीतिरिव ब्रह्मणि प्रपञ्चप्रतीतिरूप एव । यद्वा—गुणानामु-
स्कर्षविवक्षीयविषयतारूपस्य पुंस्त्वस्यापकर्षविवक्षीयविषयतारूपस्य स्त्रीत्वस्योत्कर्षापकर्षयोर्विवक्षीयविषयता-
भावरूपसाम्यस्य नपुंसकत्वस्य च एकत्रैकदा सत्त्वेऽपि न काप्यनुपपत्तिः ।

दर्पणव्याख्या

ननु कथं तर्हि पुम्पशोरेव यागाङ्गत्वनिर्णयोऽत आह ❀ छागो वेति ❀ । ❀ न्यायेनैव ❀ एवंप्रकारेण लिङ्ग-
स्यार्थपरिच्छेदकस्य व्युदासः । यथा "सारस्वती मेषी" इत्यत्र तद्धितप्रकृतिशब्दः स्त्रीलिङ्गः पुंलिङ्गो वेति सन्देहे "सन्दिग्धे
वाक्यशेषात्" (मी० सू० १ ४।१९।२९) इति न्यायेन, "तद्यामदेवमिथुनम्" इत्यर्थवादाद् द्वयोरेवैकशेषेण ग्रहणं तद्वन्म-
न्त्रवर्णादत्र पुम्पशोर्यागाङ्गत्वनिर्णय इति भावः । ❀ तत्रेति ❀ मन्त्रवर्णे इत्यर्थः । ❀ असम्भावितमिति ❀ छागश-
ब्दस्य व्यक्त्यादिवाचित्वे लिङ्गत्वाभावादिति भावः । ❀ प्रपञ्चितमिति ❀ लौकिकलिङ्गमेव नामार्थः । तथावयवविशेष-
संस्थानरूपम् । 'दारान्' इत्यादौ पुंस्त्वारोपेणैव तत्प्रयुक्तकार्यम्, "रात्राह्नाहाः पुंसि" (पा० सू० २ । ४ । २९) इत्यादि-
लिङ्गानुशासनस्यैवोक्तार्थे मानत्वात् । अत एव न पशुत्विया यागमिति । अथवा स्त्रीत्वादिर्जातिरेव ।

'तिस्रो जातय एवैताः केषाञ्चित् समवस्थिताः ।
अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिः' ॥

इत्यादि शास्त्रोक्तमिति ।

परे तु—

'स्तनकेशवती नारी लोमशः पुरुषः स्मृतः ।
एतयोरन्तरं यच्च तदभावे नपुंसकम्' ॥

इति स्पृश्युक्तलक्षणलक्षितलिङ्गस्यासार्वत्रिकत्वेन 'दारान्' इत्यादौ गत्वानापत्त्या 'स्त्रियाम्' इति सूत्रे "अवश्यं कश्चित्
स्वकृतान्त आस्थेयः" इत्यादिना सार्वत्रिकगुणावस्थारूपपारिभाषिकलिङ्गस्य शास्त्रीयकार्योपयोगिनो भाष्यकृताऽभ्युपगमेऽपि
गुरसंज्ञाविज्ञानाश्वत्वादिशास्त्रप्रवृत्तौ लौकिकलिङ्गस्याप्याश्रयणं पुमादिसंज्ञानां सङ्ख्यासंज्ञाया इवाधिकसंग्रहार्थं प्रवृत्तत्वेऽपि
मतसिद्धार्थनिरासार्थमप्रवृत्तेः । अत एव

'आविर्भावस्तिरोभावः स्थितिश्चेत्यप्यपायिनः ।
धर्मा मूर्तिषु सर्वासु लिङ्गत्वेन व्यवस्थिताः' ॥

इत्यत्रापिनाऽलौकिकलिङ्गमपि समुच्चितवान् हरिः । तत्र सति सम्भवे सामानाधिकरण्यसम्बन्धेन लौकिकपुंस्त्वविशिष्ट-
शास्त्रीयलिङ्ग एव पुमादिशब्दानां शक्तिर्न केवलशास्त्रीये, नापि लौकिके । असम्भवे तु शास्त्रीय एव । अत एव 'पशुना
यजेत' इत्यादौ पशुस्त्रिया कृते यागे वैगुण्यम् । तत्र लौकिकपुंस्त्वविशिष्टशास्त्रीयपुंस्त्वस्यैव शब्देन प्रतिपादनादित्याहुः ।
अथ लिङ्गे शक्तिग्रहविषयतया अभावेन प्रातिपदिकार्थत्वाभावात् 'त्रिकम्' इति पक्षोऽनुपपन्न इति चेन्न, "स्वमो-
र्नपुंसकात्" (पा० सू० ७ । १ । २३) इत्यादिसूत्रप्रामाण्येन 'पुंलिङ्गादिविशिष्टोऽयं घटो घटपदवाच्यः' इत्याकारकशक्ति-

चतुष्कम्—सङ्ख्यासहितं त्रिकमित्यर्थः।

पञ्चकम्—कारकसहितं चतुष्कमित्यर्थः।

नन्वन्वय-व्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यम्, तत एव लिङ्गादीनामुपस्थितौ प्रकृतिवाच्यत्वे मानाभावाच्चेति चेत्, सत्यम्, प्रत्ययवर्जिते 'दधि पश्य' इत्यादौ प्रत्ययमजानतोऽपि बोधात् प्रकृतेरेव वाचकत्वं कल्प्यते, लिङ्गानुशासनस्य प्रकृतेरेव दर्शनाच्च।

प्रभा

अन्वयेति—तत् (कारण) सत्त्वे सत्त्वम् (कार्यस्य) अन्वय, तदभावेऽ (कारणाभावे) भाव (कार्याभाव.) व्यतिरेक। तथाच 'अजा' इत्यादौ टाप्सत्त्वे स्त्रीत्वप्रतीति, टावाद्यभावे स्त्रीत्वप्रतीत्यभाव इत्यन्वयव्यतिरेकाभ्यामिति भाव। तत् = लिङ्गादिकम्। तत. = प्रत्ययात्। बोधादिति—लिङ्गस्येति शेष। प्रकृतेरेवेति—नच प्रकृतेर्लिङ्गादौ लक्षणा, अनुपपत्तिप्रतिसन्धान विनापि बोधदर्शनात्, प्रकृतिमात्रे गृहीतशक्तिकस्य पुंसो लिङ्गादिबोधोदयात्, प्रकृतेरेव लिङ्गानुशासनस्य दृष्टत्वाच्च। प्रकृतेर्वाचकत्वादेव 'स्वौजसमौट्' इत्यनेन 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे (प्रकृत्यर्थे) भवन्ति' इति न्यायेनैव विभक्तीना सङ्ख्यार्थकत्वे 'द्व्येकयो' 'कर्मणि द्वितीया' इत्यादीना नियमार्थत्व भाष्यकृदुक्त सङ्गच्छते।

केचित्तु—सङ्ख्यामात्रस्य विभक्त्यर्थत्वम्, शेषचतुष्टयस्य प्रातिपदिकार्थत्वमाहु। तत्र घटत्वविशिष्टे घटे, लिङ्गे, सङ्ख्यायाम्, कारके च खण्डश शक्ति। घटे लिङ्ग–सङ्ख्ययोर्विशेषणतयाऽन्वय। कारकस्य तु विशेष्यत्वम्। लिङ्गसङ्ख्याविशिष्टे घटादौ शक्तिकल्पनायान्तु ससर्गस्यापि शक्तिविषयतापत्त्या गौरवम्, 'राजपुरुष' इत्यादौ सङ्ख्यानवच्छिन्नबोधासिद्धिश्च। विशकलिते शक्तिस्वीकारे तु न सङ्ख्यानवच्छिन्नबोधानुपपत्ति, सङ्ख्याविषयकतात्पर्यग्राहकाभावेनानुपस्थिते। परे [illegible] घटे लिङ्गादिविशिष्टे च शक्तिरिति न सङ्ख्यानवच्छिन्नबोधानुपपत्ति।

• ननु 'पञ्चकं नामार्थ' इति स्वीकारे 'नामार्थप्रकारकबोधम्प्रति विभक्तिजन्योपस्थिति कारणम्' इति कार्यकारणभावविलयापत्ति, इष्टापत्ते, द्योत्यार्थमादाय तदुपपत्तेश्च। लिङ्गानुशासनस्येति—वक्ष्यमाणयुक्त्या

दर्पणव्याख्या

भ्युपगमेन सामञ्जस्यात्। 'शब्दनिष्ठमेव लिङ्गं नत्वादिप्रवृत्तौ निमित्तम्' इतिमते शब्दार्थयोरभेदे लिङ्गस्य साक्षादितरथा स्वाश्रयवाच्यत्वसम्बन्धेनार्थांशे प्रकारत्वाद्धर्मितावच्छेदकत्वेन धर्मितावच्छेदकसमानाधिकरणत्वेन शक्तिग्रहविषयताया नियामकत्वस्य फलबलेन कल्पनात्।

वस्तुतस्तु पारिभाषिकलिङ्गमप्यर्थ एव स्वीकर्तुमुचितम्। पुलिङ्गः शब्द इत्यादौ पुल्लिङ्गादिशब्दा अर्शआद्यजन्ता। आत्मनि सर्वस्याध्यस्तत्वेन परम्परया तत्रापि स्त्यानादिसत्त्वात् "आत्मा ब्रह्म" इत्यादिप्रयोगोपपत्ति। स्त्यानम् = तिरोभावोऽपचय इति यावत्, उपचयादिविवक्षाया एव प्रयोगनियामकत्वेन तेषामेकत्र विरोधेऽपि क्षत्यभावात्। अत एव "सामान्ये नपुसकम्" इति तत्र तत्रोक्त सङ्गच्छते। उत्कर्षापकर्षसत्त्वेऽपि तदविवक्षायामिति तदर्थ इत्याद्यन्यत्राऽवधार्यम्।

लिङ्गादित्रयस्य नामार्थत्व साधयितु शङ्कते—❀ नन्विति ❀। ❀ अन्वयव्यतिरेकाभ्यामिति ❀ टावादिसत्त्वे स्त्रीत्वादिबोधादभावे च तदभावादेवरूपाभ्यामित्यर्थः। एवम् यत्राप्यूह्यम्। तथाच ताभ्यां लिङ्गादेः प्रत्ययार्थत्वावधारणात् लिङ्गादित्रिकस्य प्रकृत्यर्थत्वमित्यर्थः। दधि पश्येत्यादावित्यादिना 'अत्र याति' 'इदमायाति' इत्यादिपरिग्रह। ❀ बोधादिति ❀ कर्मत्वादिबोधादित्यर्थः। तथाच व्यतिरेकव्यभिचारेणान्वयस्याप्यस्य तदर्थत्वाभावात् आभावांशमेव तेषामावश्यकमिति भाव। वक्ष्यमाणयुक्त्या सङ्ख्याकारकयो प्रत्ययार्थत्वेऽपि लिङ्गस्य प्रकृत्यर्थत्वमेव युक्तमित्याशयेनाह—❀ लिङ्गेति ❀।

अत एवैषु पक्षेषु न निर्बन्धः ( प्रत्ययस्यैव वाचकताया युक्तत्वात् ) ।

प्रभा

सङ्ख्या-कारकयोर्विभक्त्यर्थत्वेऽपि लिङ्गस्य तु लिङ्गानुशासनप्रामाण्यात्, 'गौः' 'पुः' इत्यादौ प्रत्ययं विनापि बोधदर्शनाच्च नामार्थत्वमेव युक्तम् । अत एव = प्रकृतिप्रत्यययोरन्यतरस्य वाचकत्वे तुल्यबलत्वादेव । न निर्बन्ध इति—अयमेव पक्षो युक्त इत्यत्राग्रहो नेत्यर्थः ।

प्रत्ययस्यैव वाचकतेति—अनन्तप्रकृतीनां वाचकत्वे शक्ततावच्छेदकत्वे गौरवादल्पतरप्रत्ययानां वाचकत्वे तु तेषां परिगणितत्वेनाल्पतरधर्मेष्वेव शक्ततावच्छेदकत्वमिति लाघवमिति भावः ।

अत्र प्रत्ययस्य वाचकत्वसमर्थनमयुक्तम्, पूर्वत्र 'न निर्बन्धः' इत्युक्त्वा प्रत्ययस्य वाचकत्वं समर्थ्य च पुनर्न निर्बन्ध इत्यस्यैव वाक्यपदीयकारिकया समर्थितत्वात् । अन्यथा प्रत्ययस्य वाचकत्वव्यवस्थापनानन्तरमुभयपक्षसमर्थिका 'द्योतिका वाचिका वा' इति वाक्यपदीयोक्तिरसङ्गता स्यादिति पञ्चोलिनः ।

दर्पणव्याख्या

अत एवेति प्रकृतिप्रत्यययोरन्यतरस्य वाचकत्वे युक्तिसाम्यादेवेत्यर्थः । निर्बन्ध इति इदमेव मतं मुख्यमित्यभिनिवेश इत्यर्थः । तदेवाह—प्रत्ययस्यैवेति । युक्तत्वादिति । अनन्तानां प्रकृतीनां शक्तत्वकल्पनापेक्षया कतिपयस्वादीनामेव तत्कल्पने लाघवादिति भावः ।

केचित्तु—टावादिकं विनापि खट्वादिशब्देभ्यः स्त्रीत्वस्याप्युपस्थितिदर्शनात् रामज्ञानादिशब्देभ्यः पुंस्त्वनपुंसकत्वयोर्बोधस्य सार्वजनीनानुभवसिद्धत्वाल्लिङ्गस्य प्रातिपदिकार्थत्वमेव । सुब्विभक्तिस्मरणादपि बोधाङ्गीकारेण सङ्ख्याकारकयोर्विभक्तिवाच्यतैव । उक्तञ्च—

स्वार्थो द्रव्यञ्च लिङ्गञ्च सङ्ख्या कर्मादिरेव च ।
अमी पञ्चैव नामार्थास्त्रयः केषाञ्चिदग्रिमाः ॥ इति ।

अग्रिमाः = लिङ्गान्ता इत्याहुः ।

नन्वेकवचनत्वादेरनुगतस्य दुर्वचतया कथं तेन रूपेण स्वादीनामेकत्वादिवाचकत्वम् । तथाहि—न तावदेकत्वादिबोधकत्वं तत्, वाचकतायाः शक्तरूपत्वेनात्माश्रयात्, बोधकतारूपत्वे द्विवचनादीनामपि शक्तिभ्रमेणैकत्वादिबोधकत्वात् । नाप्येकवचनत्वादिकं जातिः, सुत्वादिना साङ्कर्यात् । पाणिनिसङ्केतसम्बन्धेनैकवचनादिपदवत्त्वं तत्, तादृशसङ्केतस्य सङ्केतत्वेन सम्बन्धत्वे कस्यचिदेकवचनादिपदादौ व्याकरणान्तरमर्यादया तत्स्यादि च्यः इत्याकारकसङ्केतस्यापि सम्भवेनातिप्रसङ्गतादवस्थ्यात् । पाणिनिसङ्केतत्वेन तत्त्वे व्याकरणान्तरमर्यादया 'डित्थादिपदात् स्वौजसादिर्बोद्धव्यः' इत्याकारकपुरुषविशेषीयपाणिनिसङ्केततुल्यसङ्केतसम्बन्धेन एकवचनादिपदवत्त्वस्य, सङ्केतसम्बन्धेन डित्थादिपदवत्त्वस्य वा विनिगमनाविरहेण शक्ततावच्छेदकत्वापत्तेरिति चेत्,

सुत्वाम्त्वादिनैवैकवचनस्य शक्यत्वाभ्युपगमेनोक्तदोषानवकाशात्, कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशाच्च न परस्परजन्योपस्थितौ व्यभिचारः । न च 'दधि' 'मधु' इत्यादौ व्यभिचारः, तत्र लुप्तविभक्त्यनुसन्धानेनैव बोधाभ्युपगमात् । कथमन्यथा द्योतकतावादिमतेऽपि केवलप्रातिपदिकात् तदुपपत्तिः, द्योतकस्यैवाभावात् ।

न चानेकसुत्वादीनां शक्ततावच्छेदकत्वे गौरवात् प्रातिपदिकत्वस्यैकस्य तत्त्वमुचितम्, लाघवादिति वाच्यम्, उक्तरीत्या प्रातिपदिकत्वस्याप्यनुगतस्य दुर्वचत्वात्, तदज्ञानेऽप्येकत्वादिबोधस्यानुभवसिद्धत्वात् । पदत्वेन वर्णत्वेन वा शक्तत्वे तु विभक्तेरपि वाचकतासिद्धेः, एकत्वाद्युपस्थितेः प्राग्वर्णत्वाद्युपस्थितेरप्यनावश्यकत्वात् तदनुरोधेन तत्कल्पने गौरवाच्च । पदार्थयोर्विशेष्यविशेषणभावेनान्वये भिन्नपदजन्योपस्थितेरतन्त्र्ये प्रकृत्युपस्थाप्यघटैकत्वाबोधप्रसङ्गेन परस्परमनन्वयापत्तेश्चेति स्वादीनां सङ्ख्यादिवाचकत्वमेवेति भावः ।

## 'द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः' ।

प्रभा

द्योतिकेति—अत्र 'द्वित्वादीनां विभक्तयः' इत्युक्त्या सङ्ख्याकारकयोर्वाचकत्वे एव मतभेदो दर्शित, नतु लिङ्गांशे, इति लिङ्गं प्रातिपदिकार्थ एवेति ध्वन्यते। अत एव लिङ्गस्य टाबादिद्योत्यत्वेन विशेषणतयैव भानम्। तदुक्तम्—

*स्वार्थो द्रव्यञ्च लिङ्गञ्च सङ्ख्याकर्मादिरेव च।*
*अमी पञ्चैव नामार्थास्त्रयः केषाञ्चिदग्रिमाः॥* इति।

ननु सङ्ख्या-कारकयोर्विभक्तिवाच्यत्वपक्षे यत्र विभक्तेर्लुक् तत्रोच्चरितशब्दाभावात् संख्या-कारकयोः शाब्दबोधो न स्यात्। नच स्मृतया विभक्त्या बोधः, 'उच्चरितशब्दः प्रत्यायको नानुच्चरितः' इति भाष्यविरोधादिति चेन्न, तत्र लुग्विधायकशास्त्रबलेन प्रकृतेरेव तत्रार्थे शक्तिकल्पनात्। 'विभक्तिस्मरणाद् बोधः' इति नैयायिकोक्तं तु न युक्तम्, 'घटं पश्य' इत्यादौ शब्दाश्रिततया स्मृतस्याकारस्यापि शाब्दबोधापत्तेरिति पञ्चोलिनः।

ननु सङ्ख्याकारकयोरपि प्रातिपदिकार्थत्वमेवास्तु, सुप्त्वाद्यनेकधर्माणां शक्ततावच्छेदकापेक्षया सङ्केतसम्बन्धेन प्रातिपदिकपदवत्त्वमेकमेव शक्ततावच्छेदकमस्त्विति चेन्न, सङ्केतसम्बन्धेन नामपदवत्त्वस्य, घटादिपदवत्त्वस्य च विनिगमनाविरहेण शक्ततावच्छेदकत्वे गौरवस्य दुर्द्धरत्वात्। विस्तरस्तु

दर्पणव्याख्या

द्योतकतावादिनां पुनरयमाशयः—न प्रकृतीनां धर्मकारकयोर्विर कल्पितयो शक्तिर्येनोक्तदूषणावकाशः स्यात्, किमुत करवविशिष्टे घटादौ पृथक्शक्त्यनङ्गीकरणेनान्वयबोधाभावात्, अनन्तप्रकृतीनामेकत्वादिशक्ततावच्छेदकगौरवस्याप्यभावात्, घटपदस्यैकत्वे शक्तिभ्रमदशायाम् 'घट: प्रमेय:' इत्यादिवाक्यादेकत्वं प्रमेयमिति बोधस्य सर्वसिद्धतया तदनुरोधेनैकत्वादिविषयकशाब्दबोधे घटादिपदजन्यैकत्वाद्युपस्थितेर्हेतुताया आवश्यकत्वाच्च।

किञ्च विभक्तेः सङ्ख्यावाचकत्वमते समानविषयकानुमितिसामग्रीप्रतिबन्धकताया प्रातिपदिकजन्यघटाद्युपस्थितिः स्यादिजन्यैकत्वाद्युपस्थितिश्च निवेश्या। तथाच तयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबन्ध्यप्रतिबन्धकभावद्वयम्। मन्मते तदुभयपदार्थयोरैकविशिष्टविषयकोपस्थितिरेव निवेश्येति लाघवम्, विशिष्टविषयकोपस्थितेरप्येकत्वादिप्रकारतानिरूपितघटादिविशेष्यताशालित्वेन, घटादिविशेष्यतानिरूपितैकत्वादिप्रकारताशालित्वेन वा निवेश इत्यत्र विनिगमकाभावात् साम्यमिति तु न, त्वन्मते तत्र योग्यताज्ञानघटोपस्थित्येकत्वोपस्थितीनां त्रितयाणां विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबन्ध्यप्रतिबन्धकभावषट्कम्, तत्र मन्मते योग्यताज्ञाने विशिष्टविषयकोपस्थितेः प्रत्येकं विशिष्टोभयकर्तृकवैशिष्ट्यं निवेश्य द्वयम्, प्रत्येकं तादृशोपस्थितिविशिष्टायामुपस्थितौ योग्यताज्ञानस्य वैशिष्ट्यं निवेश्य च द्वयमिति चतुर्णामेव लाघवात्। अतिप्रसङ्गपरिहारस्तु तत्तच्छाब्दबोधे तत्तद्वचनसमभिव्याहारस्य हेतुत्वकल्पनात्।

एवम् 'कारकं विभक्त्यर्थ:' इति पक्षे तत्तत्कारकबोधे स्वोत्तरत्वादिविशिष्टसमभिव्याहारस्य हेतुत्वकल्पनात् न बोधः। स च 'अमुघट:' इत्यतो बोधवारणाय चावश्यकमाजादिनामप्यावश्यक। एवं विभक्त्योपसर्गाणामपि द्योतकत्वं बोध्यमिति दर्शयितुमभिप्रायेण हरिसम्मतिमाह ॐ द्योतिका वाचिका वेति ॐ।

*बहुषु बहुवचनोऽर्थेषु समुदायोऽभिधायकः।*

इति स्वपरोक्तारोपं 'घटः' इत्याद्याकारानुपूर्व्या वर्णसमुदायो द्वित्वादिविशिष्टघटादिवाचक इति तदर्थः। पदस्फोटमवलम्ब्य चेदम्। आमाये—चाण्वयोः साकाङ्क्षैरानिरुक्तःकथैकावयवान्वयानुपलम्भादभिधायकत्वाभावस्य सर्वथानुपपत्तेश्च कारकविभक्त्यर्थः।

अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

इत्याद्यभियुक्तोक्तेः ।

'विष्णुमुच्चारय' इत्यादावर्थोच्चारणासम्भवेन, विना शब्दविषयं शाब्दबोधासङ्गतिश्चेति सोऽपि प्रातिपदिकार्थः ।

प्रभा

नास्तीत्यर्थः । सर्वं ज्ञानं तादात्म्यसम्बन्धेन शब्देनानुविद्धमित्यतः शब्दोऽपि शाब्दबोधे भासते इत्यर्थः। ज्ञाने शब्दनिरूपितं तादात्म्यमारोपितमेवेति बोधयितुमिवशब्दप्रयोगः । यः शब्दः ज्ञातः सन्नर्थमुपस्थापयति स एव शब्दः प्रकारतया भासते, नतु शब्दान्तरम् ।

केचित्तु शब्दार्थयोस्तादात्म्यस्यारोपितत्वेनार्थभाने तत्तादात्म्यापन्नशब्दस्यापि भानमित्यसङ्गतम्, भ्रमस्थले शुक्तौ रजतप्रतीतावपि रजतस्याक्षतत्त्ववद्वित्ति शब्दार्थयोर्भेदेऽपि ज्ञानसामान्यसामग्र्या एव शब्दविषयकज्ञानजनकत्वं कल्प्यतेऽनुभवबलादतः शब्दभानोपपत्तिः । अर्थज्ञानेनोद्बोधकविधयोपस्थितस्य शब्दस्य चाक्षुषादिप्रत्यक्षेऽपि न भानानुपपत्तिरित्याहुः । तदपरे न क्षमन्ते, उपस्थापकार्थज्ञाने उपस्थाप्यस्य ज्ञानादर्शनात् । अतः 'घटादिशब्दः, तत्तच्छाब्दबोधविषयः, अभियुक्तोक्तसकलकर्तृकज्ञानविषयत्वात्' इति शाब्दबोधविषयत्वं साध्यते । यावज्ज्ञानविषयत्वं तदन्तर्गतयत्किञ्चिज्ज्ञानविषयत्वं विना न सम्भवतीति नाप्रयोजकत्वम् । घटादिशब्दे तत्तच्छाब्दबोधविषयत्वपुरस्कारेण 'न सोऽस्ति' इत्यभियुक्तोक्तवाक्यजन्यबोधविषयत्वमादाय न सिद्धसाधनमित्याहुः ।

वस्तुतस्तु—शब्दार्थयोर्वास्तविकतादात्म्यमादायार्थभाने शब्दभानमुपपादनीयम् । खड्गादिशब्दोच्चारणे मुखोच्छेदादिरूपदोषस्तु न, मुखोच्छेदादिकारणतावच्छेदकीभूतसंयोगादिसम्बन्धस्य शब्देऽभावादिति शाब्दिकाः । नन्वस्तूक्तरीत्या शब्दस्य शाब्दबोधविषयत्वम्, परन्तु तस्य घटादिशब्दशक्यत्वे मानाभाव इत्यत आह—विष्णुमिति—शब्देनार्थमात्रस्य बोधेऽर्थे उच्चारणकर्मताया बाधेन 'विष्णुमुच्चारय' इत्यतो बोधानापत्तिः।' शब्दस्यापि शक्यत्वे तत्रोच्चारणकर्मत्वसम्भवेन विष्णुरूपार्थबोधकं शब्दमुच्चारय इति बोधः । अत एव

'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' ।

इत्यादौ उदयास्तसमययोर्महतामेकरूपत्वबोधनाय कथितपदत्वस्यादोषत्वमालङ्कारिकैः स्वीकृतम् । शाब्दबोधे शब्दस्याभाने तूभयत्राप्येकप्रतीतेरेव सत्त्वात् पदान्तरोपादानेऽप्येकरूपत्वलाभेनात्र कथितपदत्वस्य दोषत्वं दुर्वारमेव स्यात् । शब्दभानस्वीकारे तु ताम्रपदभिन्नरक्तादिपदोपादाने पदान्तरस्यैव शाब्दबोधविषयत्वे नैकरूपत्वानापत्तिः । सोऽपि = शब्दोऽपि । प्रातिपदिकार्थ इति—शब्देऽर्थे च एकवृन्तगतफलद्वयन्यायेन

ल ७४. शक्तिः । तथाच 'विष्णुमुच्चारय' इत्यादौ वाचकत्वसम्बन्धेनार्थः शब्दे विशेषणम् । 'विष्णुं पश्य'

दर्पणव्याख्या

❀ अनुविद्धमिति ❀ विशिष्टमित्यर्थः । अनुव्यवसायो यथाऽर्थेन विशिष्टज्ञानं विषयीकरोति तथा शब्देन विशिष्टमपीत्यर्थः । वैशिष्ट्यञ्चार्थद्वारक बोध्यम् । घटपदजन्यबोधानन्तरम् 'घटं शाब्दयामि' इत्येवानुव्यवसायात्र कलशं कुम्भं वेत्यत एव "उदेति सविता ताम्रः" (भानुः) इत्यादौ न पौनरुक्त्यम्, तत्पदानुपादाने उदयास्तयोः शाब्दबोधे ऐकरूप्यानिर्वाहादिति भाव. ।

ननु तावताऽपि शब्दभानं सिद्धम्, न विशेष्यत्वेनेति कथं शब्दस्य शब्दार्थत्वमित्यत आह— ❀ विष्णुमिति ❀ अर्थोच्चारणासम्भवेनेति वदता लक्षणाऽवसरोऽपि सूचितः । ❀ असङ्गतिरिति ❀ अनुपपत्तिरित्यर्थः । ❀ सोऽपि ❀ = शब्दोऽपि । ❀ प्रातिपदिकार्थ इति ❀ प्रकारान्तरेणोपस्थितस्य विशेष्यत्वासम्भवादिति भावः ।

नच लक्षणया निर्वाहः, निरूढलक्षणायाः शक्त्यनतिरेकात्, 'जयगडदशमुच्चारय' इत्यादौ स्याग्रहेण शक्यसम्बन्धरूपलक्षणाया अग्रहाच्च ।

प्रभा

ादिस्थले स्ववाच्यत्वसम्बन्धेन शब्दोऽर्थे विशेषणम् । नचैवमुपस्थितीयमुख्यविशेष्यतायाः शब्देऽर्थे च ःमानय' इत्यत्रार्थविशेषणीभूतशब्दे 'घटमुच्चारय' इत्यादौ शब्दविशेषणीभूतेऽर्थे च सुन्दरादिपदार्थान्तरा- ापत्तिरिति वाच्यम्, तत्पदप्रयोज्यशाब्दबोधीयविशेष्यतानिरूपितप्रकारत्वासमानाधिकरणोपस्थितीय- ोष्यतासम्बन्धेनोपस्थितेः कारणत्वस्वीकारात् । प्रकृते विशेषणीभूते शब्दे, अर्थे च शाब्दप्रकारतासमानाधि- णैवोपस्थितीयविशेष्यतेति न दोषः ।

नन्वेवं सुन्दरादिपदार्थस्य घटरूपार्थेऽन्वयाभिप्रायेण 'सुन्दरं घटमानय' इत्यत्राप्यनापत्तिः, अर्थ- ुविशेष्यतायाः 'घटमुच्चारय' इत्यत्र प्रकारतासमानाधिकरणोपस्थितीयविशेष्यताया अर्थेऽपि सत्त्वादिति ।, इतरपदार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति तत्पदप्रयोज्यशाब्दबोधीयविशेष्यता- रूपितप्रकारताश्रयत्वप्रकारकतात्पर्यीयविशेष्यत्वाभावसमानाधिकरणोपस्थितीयविशेष्यतासम्बन्धेनोपस्थितेः ाणत्वात् । 'सुन्दरं घटमानय' इत्यत्र च 'घटशब्दः घटपदप्रयोज्यघटार्थनिष्ठविशेष्यतानिरूपित- ब्दबोधीयप्रकारताश्रयो भवतु' इत्याकारकतात्पर्यीयविशेष्यतासमानाधिकरणोपस्थितिविशेष्यतेति न ार्थान्तरान्वयस्तत्र । घटरूपेऽर्थे च तादृशप्रकारताश्रयत्वप्रकारकतात्पर्यीयविशेष्यताया अभावेन तादृश- पर्यीयविशेष्यत्वाभावसमानाधिकरणोपस्थितीयविशेष्यतासम्बन्धेनोपस्थितेः सत्त्वात्तत्र सुन्दरादिपदा- र्थस्य उपपद्यते ।

लक्षणयेति—स्ववाच्यवाचकत्वरूपसम्बन्धात्मिकया, तादृशसम्बन्धमूलिकया वा लक्षणयेत्यर्थः । रूढेति—निरूढत्वञ्च—'स्वजन्यशाब्दबोधसमानाकारकशाब्दबोधध्वंसकालिकस्वजन्यशाब्दबोधसामान्यक- त्वम्' । स्वपदं लाक्षणिकशब्दपरम् । तथा च निरूढलक्षणास्थले गङ्गापदनिष्ठलक्षणाज्ञानजन्यतटविषयको बोधस्तादृशबोधसमानाकारकस्तटविषयको बोधः कस्यचित् ततः पूर्वं जात एव भवेत्, गङ्गापदेन ब्दबोधस्यानादित्वादिति तद्बोधध्वंससमानकालिक एव सर्वोऽपि गङ्गापदजन्यतटविषयको बोध इति णसमन्वय ऊहनीयः । एतत्रानादिलक्षणायाम्, शक्तौ चाक्षतमित्याह—शक्त्यनतिरेकादिति—शक्तिरूप- त्वादित्यर्थः । निरूढलक्षणायां शक्तौ चानादितात्पर्यस्यापेक्षितत्वादिति भावः । लक्षणाया असम्भवस्थला- धेनाह—जयगडेति—जयगडदशेति समुदायस्य कुत्रापि शक्त्यभावाल्लक्षणा न सम्भवतीति भावः । ेकदा समुदायस्योच्चारणकर्मत्वमसम्भवि, वर्णानां क्षणस्थायित्वात् । तथा च प्रत्येकस्योच्चारणकर्मतयैव ुदाये कर्मत्वमारोपणीयमिति प्रत्येकवर्णानामर्थस्य कोशे प्रसिद्धतया शक्यसम्बन्धरूपा लक्षणा स्यादिति

दर्पणव्याख्या

❀ लक्षणया ❀ स्ववाच्यवाचकत्वसम्बन्धरूपया ❀ निर्वाह इति ❀ तावताऽपि पदवाच्यत्वासिद्धेरिति भावः । निरूढेति ❀ निरूढत्वञ्च लक्षणायामनादितात्पर्यप्रयोज्यत्वम्, अनादित्वञ्च तत्र स्वजन्यबोधसमानाकारपूर्व- बोधध्वंसवत्त्वम् । शक्त्यनतिरेकादित्यस्यासम्मत इत्यादि । एतत्तत्त्वमग्रे वक्ष्यते । तस्या अप्रामाणिकत्वमप्याह— जयगडदशमिति ❀ तत्र समुदायस्य कुत्राप्यशक्तत्वादिति भावः । ❀ अग्रहादिति ❀ मन्मते ▮ तादृशसमुदायस्यैव शक्यतयाऽनुपपत्तिरिति भावः ।

ननु तत्र समुदायस्याशक्तत्वेऽपि तद्घटकजकारादिवर्णानामेकाक्षरकोशादौ चैत्रादौ शक्तिप्रतिपादनात्तत्तदर्थवाचकत्वरूप-

अज्ञातायाश्च वृत्तेरनुपयोगात् , 'गावमुच्चारय' इति भाषाशब्दानामनुकरणे साधुतासम्प्रतिपत्तेः, तेषां शक्त्यभावेन परनये लक्षणाया असम्भवाच्चेत्यभिप्रेत्य षोढाऽपि क्वचित् प्रातिपदिकार्थ इत्याह—

शब्दोऽपि यदि भेदेन विवक्षा स्यात् तदा तथा ।
नोचेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थो व भासते ॥२६॥

यद्यनुकार्यानुकरणयोर्भेदविवक्षा तदा शब्दोऽपि प्रातिपदिकार्थः ।

प्रभा

चेन्न, शक्तावज्ञातायां शक्यसम्बन्धरूपलक्षणाया ज्ञानासम्भवादित्याह—अज्ञातायाश्चेति—प्रत्येकवर्णशक्त्य-ज्ञानेऽपि उक्तवाक्येन शाब्दबोधदर्शनात्तत्र शब्दस्य प्रातिपदिकार्थत्वमावश्यकम् । गावमिति—गाव इति अपशब्दः तमनुकृत्याह—'गावमुच्चारय' इति । साधुतासम्प्रतिपत्तेरिति—साधुत्वाभ्युपगमादित्यर्थः । तथाच भाष्यम्—न चापशब्दपदार्थकः शब्दोऽपशब्दो भवति' ; 'यो हि मन्यतेऽपशब्दपदार्थकः शब्दोऽपशब्दो भवतीति तस्यापशब्द इत्येषापशब्दः स्यात्' इति । एतेनानुकरणस्य साधुत्वं स्पष्टमेव बोधितम् । गाव इति भाषाशब्दे नैयायिकादिमते शक्तेरभावेन तस्य शक्यार्थाप्रसिद्ध्या लक्षणाया असम्भवः । शब्दस्य शक्यत्वे तु गावशब्दरूपार्थेनैवार्थवत्त्वात्प्रातिपदिकत्वेऽम्विभक्तिः सुलभा ।

षोढेति—पूर्वोक्तपञ्चकसहितः शब्द इति षोढा प्रातिपदिकार्थः । क्वचिदिति—अनुकार्यानुकरणयो-र्भेदविवक्षायामित्यर्थः । पटदिति कुर्वित्यादौ अनुकरणानुकार्ययोर्भेदस्य ध्वनिमयत्व-वर्णमयत्वादिरूपविरुद्ध-धर्मसम्बन्धेन सिद्धत्वाद् यदि अनुकार्यानुकरणयोर्भेदविवक्षा तदा शब्दोऽपि तथा = प्रातिपदिकार्थः । चेद् = यदि । नो = भेदविवक्षा न । तदा श्रोत्रादिभिः = श्रवणेन्द्रियेण । आदिना शक्तिज्ञानतत्संस्काराणां संग्रहः । सिद्धोऽपि = उपस्थितोऽपि । असौ = शब्दः । अर्थो व = शक्यार्थ इव । 'शाश्वतं वं पपुर्यशः' इतिवत् इवार्थकोऽत्र वशब्दः । भासते = शाब्दबोधविषयो भवति ।

दर्पणव्याख्या

लक्षणायास्तत्र नानुपपत्तिरत आह—❀ अज्ञातताया इति ❀ । गङ्गापदस्य वस्तुतः स्वशक्यप्रवाहसामीप्यरूपसम्बन्धस्याग्रहे लक्ष्यार्थबोधस्यानुदयेन ज्ञाताया एव तस्याः पदार्थोपस्थित्यौपयिकत्वेन प्रकृते तदग्रहाद्युक्तानुपपत्तिरसदवस्थैवेति भावः ।

ननु शाब्दबोधाव्यवहितप्राक्काले तादृशवृत्तिग्रहासत्त्वेऽपि यदा कदाचिज्ज्ञाततादृशवृत्तिग्रहादिनोद्बुद्धसंस्कारेण पदार्थोपस्थितिद्वारा तादृशशाब्दबोधोपपत्तिः सुकरेत्यत आह—❀ गावमिति ❀ गोशब्दाद्यनुकरणे साधुत्वस्य सर्वैरेवाभ्युपगमादित्यर्थः । ❀ परनय इति ❀ परः नैयायिकस्तन्मते तेषां शक्त्यभावेन तद्घटितलक्षणाया अप्यप्रसराद् वृत्तिमत्त्वात्मकार्थवत्त्वनिबन्धनप्रातिपदिकत्वाद्यनुपपत्तिरिति भाव. ।

❀ षोढाऽपीति ❀ पूर्वोक्तपञ्चकसहितः शब्दोऽपीत्यर्थः ❀ क्वचित् ❀ = अनुकरणस्थले । तच्चानुकरणं द्विविधम् । ध्वनेर्वर्णस्य च । तत्राद्यम्—पटत्करोतीत्यादि । द्वितीयम्—भुवो वुगित्यादि । ❀ भेदविवक्षेति ❀ पटदित्यादौ ध्वनिमयत्व-वर्णमयत्वाभ्याम् , भुवो वुगित्यादावर्थपदार्थकत्व-शब्दपदार्थकत्वाभ्यां तद्विवक्षेत्यर्थः । ❀ शब्दोऽपि प्रातिपदिकार्थ इति ❀ तथाच "मतौ छः सूक्तसाम्नोः" ( पा० सू० ५ । २ । ५९ ) इति सूत्रे योऽस्यावाम्नायेऽस्यवामशब्दः पठ्यते छप्रकृतेरस्यवामीयमित्यादौ पदार्थोऽस्त्येव प्रातिपदिकत्वाच्छसिद्धिरिति भावः । मूले अर्थेऽवभासते इति पाठे अर्थे = घटादिस्वरूपे अवभासते विशेषणतया विषयो भवतीत्यर्थः ।

अपिर्हेतौ, उपस्थितत्वाद्भासते इत्यर्थः।
यदि न भेदविवक्षा, तदा श्रोत्रादिभिरुपस्थितोऽप्यर्थवद् भासते। तत्सिद्धये शक्तिरुपेया, अभेदे
अयं भावः—अनुकार्यानुकरणयोर्भेदेऽनुकार्यस्य पदानुपस्थितत्वात् शाब्दबोधविषयतोपपत्तिरिति।
प्रत्यक्षे विषयस्य हेतुत्वात् स्वप्रत्यक्षरूपां पदजन्योपस्थितिमादाय
यद्यप्यतिप्रसङ्गवारणाय

प्रभा

शक्तिरिति—अनुकार्यनिरूपिता शक्तिरनुकरणे उपेया = स्वीकार्या।
तत्सिद्धये = अनुकार्योपस्थितिसिद्धये। शक्तिरिति—अनुकार्यनिरूपिता शक्तिरनुकरणे कल्पनीयेति
नन्वनुकरणेनानुकार्योपस्थितये भेदेऽभेदे चोभयत्रानुकार्यनिरूपिता शक्तिरनुकरणे कल्पनीयेति
भेदपक्षे एव शक्तेरावश्यकत्वकथनमयुक्तमत आह—अभेद इति। प्रत्यक्ष इति—अनुकरणस्य श्रावणप्रत्यक्षे
प्रत्यक्षात्मकज्ञानस्य विषयोऽनुकरणात्मकः शब्दः स चानुकार्यादभिन्न इति स्व ( अनुकार्य ) प्रत्यक्षरूपां शब्दा-
त्मकानुकरणजन्यामुपस्थितिमादाय शब्दस्य शाब्दबोधविषयतोपपत्तिः, पदप्रत्यक्षस्य विषयविधया पदजन्य-
स्यात्। अतिप्रसङ्गेति—घटोऽस्तीत्यादौ समवायेन शब्दाश्रयतया आकाशोपस्थितेरपि पदजन्यतया पदजन्यो-
पस्थितिमात्रेण शाब्दबोधविषयत्वे आकाशस्यापि शाब्दबोधविषयत्वापत्तिरूपातिप्रसङ्गेत्यर्थः।

दर्पणव्याख्या

तत्र 'अ'शब्द' भावार्थे, तथाच भेदपक्षे यथाऽनुकार्यरूपोऽर्थो
वस्तुतस्तु भूषणपर्यालोचनयासावर्थो च भासते इति पाठः। तत्रानुपस्थितस्य कथं भानमित्याकाङ्क्षा-
विशेष्यतया शाब्दबोधे भासते तथाऽभेदपक्षेऽनुकार्याभिन्नानुकरणशब्दोऽपीत्यर्थः। वस्तुतस्तु-लिप्याद्युपहितस्य
यामुक्तम्—❀ श्रोत्रादिभिरिति ❀ आदिना—वृत्तिज्ञानजन्यसंस्कारसङ्ग्रह इति केचित्। इति स्वसार्वत्रिकमिति भावः। अत एव
तस्य शाब्दे भानसम्पत्तये—आदीति। 'पदोपस्थितमेव शाब्दबोधे भासते' इति स्वसार्वत्रिकमिति भावः। अत एव
सारकृता 'अर्थवद्भासते' इति तद्विवृतम्। एतेनाभेदपक्षेऽनुकरणस्यार्थाभावेन तदंशे भानवर्णनमसम्भवदुक्तिकमित्याशङ्का
समाहिता। नन्वभेदपक्षेप्यनुकार्यस्य शाब्दे कथं भानम्, पदवृत्तिजन्योपस्थित्यभावादत आह—❀ अयम्भाव इति ❀
'पदानुपस्थितत्वात्' इत्यस्य शाब्दबोधे भानानुपपत्त्येति शेषः। ❀ तत्सिद्धये ❀ शाब्दबोधजनकपदजन्योपस्थितये इत्यर्थः।
❀ शक्तिरिति ❀ 'असम्भवस्य तत्स्मृत्यजनकत्वा'दिति शेषः। तथाच पदवृत्तिज्ञानजन्योपस्थितिसद्भावात्तस्य शाब्दविषयता
मुख्येति। ❀ अभेदे इति ❀ अभेदविवक्षायामित्यर्थः, तत्पक्षे निरूप्यनिरूपकत्वयोर्भेदनिबन्धनत्वेनानुकरणे तद्दुर्लभम्-
स्भवादिति भावः। ❀ हेतुत्वादिति ❀ उपस्थितिनिष्ठजन्यतायामन्वेति।
❀ स्वप्रत्यक्षेति ❀ अनुकरणप्रत्यक्षरूपामित्यर्थः। ❀ शाब्दबोधविषयतोपपत्तिरिति ❀ अयमाशयः—अभेद-
पक्षे स्वप्रत्यक्षरूपामुपस्थितिमादाय यथा शाब्दे शब्दस्य भानम्, तथैव 'घटमानय'इत्यादौ घटादिपदानामपि तां सामग्री-
मादाय भानस्य दुर्वारतया शाब्दबोधमात्रस्य शब्दविषयकत्वसिद्धिः, तदुक्तं 'स्वं रूपम्' इति सूत्रे भाष्ये—"नैतदुक्तम्,
किं कारणम्? शब्दपूर्वको ह्यर्थे सम्प्रत्ययः, आतश्च शब्दपूर्वः' योऽपि ह्यसौ नाम्नाऽऽहूयते नाम च तेन यदा नोपलब्ध तदा
पृच्छति—किं भवानाहेति, शब्दपूर्वकश्चार्थस्य सम्प्रत्ययः, इह शास्त्रे शब्दे सम्भवादर्थस्य निवृत्तिः' इति। तत्र—'शब्द-
पूर्वको हि' इत्यादिना शब्दवृत्तिज्ञानस्य पदार्थोपस्थित्यादावन्वयव्यतिरेकौ प्रदर्श्य 'शब्दपूर्वक' इत्यादिमन्थेन प्रकारान्तरं
प्रदर्श्यते, शब्दविशेषणक इत्यर्थः। तेनार्थे असम्भवेऽर्थविशेषणतयोपस्थिते शब्दे कार्यमित्यर्थः। तथाचोक्तभाष्याच्छब्दतदर्थ-
योरुभयोरेव शब्दाद्भानम्। यत्र च लोके शब्दे इतरपदार्थान्वयबाधस्तत्रार्थांशे शब्दस्य विशेषणता। यत्र स्वयं "विष्णु-
मुच्चारय" "अग्नेर्ढक्" ( पा० सू० ४। २। ३३ ) इत्यादौ तत्र शब्दांशेऽर्थस्य विशेषणतेति स्पष्टप्रतिपत्तेः, ❀ विषय-
त्वमनादृत्येति ❀ वाक्यपदीयाच्चेति। ❀ अतिप्रसङ्गेति ❀—घटोऽस्तीत्यत्र समवायेनैकज्ञानविषयत्वादिना
योपस्थितस्याकाशादेः शाब्दे भानापत्तिवारणायेत्यर्थः।

वृत्तिजन्यपदोपस्थितिरेव हेतुः, तथाप्यत्राश्रयतया वृत्तिमत्त्वस्य सत्त्वान्नानुपपत्तिः। निरूपकता-ऽऽश्रयताऽन्यतरसम्बन्धेन वृत्तिमत एव शाब्दबोधविषयत्वं कल्प्यते इत्यनवद्यम्, सम्बन्धस्योभय-निरूप्यत्वात्, पदार्थस्येव तद्बोधकत्वेन स्वस्यापि ज्ञानसम्भवाच्चेति।

---

प्रभा

वृत्तिजन्येति—'विषयतया शाब्दबोधं प्रति पदविशिष्टोपस्थितिः कारणम्' इत्यर्थः। वैशिष्ट्यञ्च—स्वजन्यत्व—स्वनिष्ठवृत्तिविशिष्टविषयकत्वोभयसम्बन्धेन। सम्बन्धघटकवैशिष्ट्यञ्च—स्वाश्रयत्व-स्वनिरूपकत्वान्यतरसम्बन्धेन। तथाचाकाशोपस्थितेः घटपदजन्यत्वेऽपि घटपदनिष्ठवृत्तिविशिष्टविषयकत्वाभावेन नातिप्रसङ्ग इति भावः। तत्रैव घटपदस्य शाब्दबोधविषयतोपपत्तिः, घटपदोपस्थितेरुभयसम्बन्धेन घटपदविशिष्टत्वात्। एवञ्चाभेदानुकरणपक्षेऽनुकार्यस्य वृत्त्यानुपस्थितत्वेऽपि तदुपस्थितौ पदविषयकत्वेन पदजन्यत्वस्य स्वा (वृत्ति) श्रयपदविषयकत्वेन स्व (पद) निष्ठवृत्तिविशिष्टविषयकत्वस्य च सत्त्वेन शाब्दबोधविषयत्वोपपत्तिः। तथाच बोधनिष्ठविषयिताव्यापकविषयिताकत्वं शब्दस्य सिद्धम्, शब्दार्थयोस्तादात्म्येन ज्ञानस्यार्थविषयत्वे शब्दविषयकत्वस्य नियतत्वात्, अनुभवबलाज्ज्ञानसामान्यसामग्र्या एव शब्दभासकत्वोपगमाच्च।

वृत्तिमत एवेति—आश्रयतासम्बन्धेन शब्दस्य, निरूपकतासम्बन्धेनार्थस्य च वृत्तिमत्तया शाब्दबोधविषयत्वम्। निरूपकतासम्बन्धेन वृत्तिमत एवार्थस्य अर्थवत्सूत्रे ग्रहणान्नाभेदपक्षेऽनुकरणस्य प्रातिपदिकत्वमिति विभक्त्यप्राप्तिः। कल्प्यत इति—अन्यतरसम्बन्धेन वृत्तिविशिष्टस्य शाब्दबोधविषयत्वकल्पने गौरवसत्त्वेऽप्यनुभवानुरोधात् तत्कल्प्यत इति भावः। तदुक्तम्—'स्वं रूपम्' इति सूत्रे भाष्ये—'नैतद् वक्तव्यम्। किं कारणम्। शब्दपूर्वको हि अर्थसम्प्रत्ययः। अतश्च शब्दपूर्वको योऽपि ह्यसौ नाम्नाऽऽहूयते। नाम च यदाऽनेन नोपलब्धं तदा पृच्छति किं भवानाहेति। शब्दपूर्वकश्चार्थस्य सम्प्रत्ययः। अत्र शास्त्रे शब्दे कार्यसम्भवादर्थस्य निवृत्तिरिति।' ननूक्तसम्बन्धेन वृत्तिविशिष्टस्य शाब्दबोधविषयत्वमिति कल्पनेऽपि स्व (शब्द) प्रतियोगिकत्वविशिष्टस्य वृत्तिरूपसम्बन्धस्यानुयोगिन्येव सत्त्वेन प्रतियोगिनः शब्दस्य भानानुपपत्तिरित्यत आह—उभयनिरूप्यत्वादिति—सम्बन्धस्य शब्दार्थोभयनिष्ठत्वादित्यर्थः। तथाच शब्दप्रतियोगिकः सम्बन्धश्चेत्तदा प्रतियोगितया शब्देऽनुयोगितायां चार्थे तद्वृत्तित्वम्। पदार्थस्येवेति—अर्थस्य यथा वृत्तिरूपसम्बन्धवत्त्वं तथा तद्बोधकत्वेन=वृत्तिमदर्थबोधकत्वेन स्वस्यापि=शब्दस्यापि वृत्तिरूपसम्बन्धवत्त्वेन बोधविषयत्वमिति भावः।

---

दर्पणव्याख्या

ॐ वृत्तिजन्येति ॐ वृत्तिज्ञानजन्येत्यर्थः। ॐ पदोपस्थितिरिति ॐ घटपदं शक्तिमदित्यादौ साक्षात्पदोपस्थितेर्हेतुताया दर्शनात् प्रकृते च तदभावेऽनुकरणस्य शाब्दविषयत्वं दुर्घटमिति भावः।

ॐ आश्रयतयेति ॐ इदञ्च 'बोधकत्वं शक्तिः' इत्यभ्युपेत्य। 'बोध्यत्वं सा' इति पक्षे तु निरूपकतयेति बोध्यम्। अन्यथाऽऽश्रयतासम्बन्धेन वृत्तिमत्त्वस्यैव शाब्दबोधविषयत्वे तन्मते निरूपकतासम्बन्धेन वृत्तिमतः शाब्दे भानानुपपत्तिरत आह—ॐ निरूपकतेति ॐ प्रामाणिकगौरवस्यादोषत्वादिति भावः। ॐ अनवद्यमिति ॐ वृत्तिनिरूपकार्थबोधकत्वस्यैव प्रातिपदिकत्वे तत्सत्त्वाभेदपक्षे तत्संज्ञाप्रवृत्तिरिति भावः।

ननु स्वप्रतियोगिकत्वविशिष्टसम्बन्धाऽऽश्रयतायाः शक्तित्वानभ्युपगमेन कथमनुकरणस्य वृत्तिमत्त्वमित्यत आह—ॐ सम्बन्धस्येति ॐ। ॐ तद्बोधकत्वेनेति ॐ शब्दस्याऽर्थवत्तादृशबोधजनकत्वेनेत्यर्थः। तथाच इत्यादिवाक्यप्रामा-

विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यते । इति चेति ।

प्रसङ्गादनुकार्य्यानुकरणयोरभेदपक्षे साधकमाह—

अत एव गवित्याह भू सत्तायामितीदृशम् ।
न प्रातिपदिकं नापि पदं साधु तु तत् स्मृतम् ॥२७॥

'गवित्ययमाह' 'भू सत्तायाम्' इत्येवमादयो यतोऽनुकरणशब्दा अनुकार्य्यान्न भिद्यन्ते ।

प्रभा

अयम्भाव.—द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्यालोकसंयोगस्य हेतुत्वमावश्यकम्, अन्यथा चक्षुःसंयोगाव-स्थायामन्धकारेऽपि घटादिप्रत्यक्षापत्ति.। तथाच दीपो यथा घटं प्रकाशयन्नात्मानमपि प्रत्यक्षीकरोति, तथा अर्थगोचरशब्दनिष्ठशक्तिसहकृत एव शब्दोऽर्थस्य स्वस्य च प्रत्यायकः । यथा घटाद्यभावे स एवालोकः स्वमात्र विषयकप्रत्यक्षजनकस्तथाऽर्थे तात्पर्याभावे शब्दे च तात्पर्ये सति स एव शब्दस्तद्रूपस्यैव स्वमात्रबोधं जनयति ।

यत्तु दर्पणकाराद्य.—ज्ञानत्वव्यापकविषयिताकत्व न शब्दे साधयितुं शक्यते घटादिप्रत्यक्षाद्यव्यवहित-प्राक्काले घटादिपदोपस्थितेरनैयत्येन तादृशप्रत्यक्षादेः घटपदादिविषयकत्वासम्भवादिति तन्न, पदपदार्थयो स्तादात्म्यमते पदोपस्थितेर्नैयत्यात् । नच तादात्म्ये 'घटरूपोऽर्थे घटशब्दो न' इति व्यवहारासङ्गति, भेदा-भेदघटितस्यैव तादात्म्यस्य स्वीकारेण भेदस्योद्भूतत्वविवक्षायां तथा व्यवहारसम्भवात् । पदविषयकज्ञान-जनकतायाः प्रमाणचतुष्टयेऽपि स्वीकारेण ज्ञानमात्रे तद्भानस्य निराकर्तुमशक्यत्वादिति गुरवः ।

दर्पणव्याख्या

स्वं रूपमिति सूत्रभाष्यादप्युक्तार्थस्यैव लाभादिति तस्यैव पद्यान्तरमाह — ❀ विषयत्वमिति ❀ स्वस्य विषयता मसम्पाद्य शब्दैरर्थो न बोध्यते इत्यर्थः, स्वजन्यार्थबोधत्वस्य स्वविषयकत्वव्याप्यत्वादिति यावत् ।

अयं भाव —शब्दार्थयोरभेदमते तन्मूलकाध्यासाच्छाब्दादर्थाऽऽकारवृत्तौ जायमानायां शब्देनापि तस्यां स्वाकार-समर्पणमिति शाब्दबोधस्य शब्दविषयकत्वसिद्धिरिति ।

अत्र वदन्ति—" न सोऽस्ति प्रत्ययो लोके" इत्युक्त्वात् किं बोधत्वावच्छेदेन शब्दविषयकत्वं प्रतिज्ञायते, उत शाब्दत्वमिति पदद्वयावच्छेदकत्वावच्छेदेन साध्यम् । किं वा शाब्दत्वसामानाधिकरण्येन । नाद्य, घटादिप्रत्यक्षाव्यवहितप्राक्-काले घटादिपदोपस्थितेरनैयत्येन तादृशप्रत्यक्षस्य घटादिपदविषयकत्वासम्भवात् । एवं घटाद्यनुमितावपि तद्भान न सम्भ-वति, व्यापकतया तदवच्छेदकतया वा व्याप्तिग्रहे तदभावात्, तदनन्तरम् 'घटपदं साक्षात्करोमि' 'घटपदमनुमिनोमि' इत्यनुव्यवसायाभावाच्च । न द्वितीय, घटपदज्ञानजन्योपस्थितेस्तद्वाचकपदेऽभावेन तस्य शाब्दविषयत्वासम्भवात्, पदज्ञा-नस्य सम्बन्धिज्ञानविधयाऽर्थस्मारकत्वेन : हस्तिपकदर्शनजन्यहस्त्युपस्थितौ हस्तिपकस्यैव तज्जन्यार्थोपस्थितावुद्बोधकताव-च्छेदकपदस्य विषयत्वासम्भवाच्च । 'घटो न घटशब्द' इति सार्वजनीनप्रतीत्या शब्दार्थयोस्तादात्म्ये मानाभावेन नाध्या-रोपः; शब्दाऽऽकारतासम्भवोऽपि घटशब्दबोधानन्तरं घटपदं शाब्दयामीति प्रतीते सार्वजनीनत्वे क्षणविलम्बमहिष्णुता सम्भवेदपि न च तस्यास्तथात्वमिति न किञ्चिदेतत् ।

किञ्च भिन्ने विषयेऽनुमितिसामग्र्या बलवत्त्वात् यत्र तादृशानुमितिसामग्रीकाले केवलघटत्वविशिष्टविषयक-शाब्दधीजनकतानिर्णयादसत्त्वात् घटशाब्दधीर्न तत्र घटो तद्भान दुरुपपादमेव । पश्चाच्छब्दरूपाविद्धविशिष्टमित्रविषयका

प्रभा

विभक्तिरहिताश्चानुकरणप्रयोगाः सङ्गच्छन्ते।

अत्रेदमाकूतम्—ज्ञानमात्रे शब्दस्य, वाच्यार्थस्य च भानमिति सिद्धान्तः शाब्दिकानाम्। यथा निर्विकल्पके विशकलितयोर्घट-घटत्वयोर्भानम्, तथा आनुपूर्व्याः, शब्दस्य च विशकलितयोर्भानम्। ततो घटशब्दवाच्यो घट इति विशिष्टवैशिष्ट्यावगाहि ज्ञानं जायते। न च चाक्षुषादिप्रत्यक्षस्थले शब्देन तन्निष्ठानुपूर्व्या जात्या वा चक्षुरादिसन्निकर्षाभाव इति वाच्यम्, इन्द्रियसम्बद्धविशेषणतायाः, इन्द्रियसम्बद्धतादात्म्यस्य वा सन्निकर्षस्योभयत्र सम्भवात्। न चैवं तद्वाचकस्य सर्वस्य भानापत्तिः, तार्किकमते चक्षुःसंयुक्तसन्निकर्षेण घटत्वस्य निर्विकल्पकज्ञानकाले द्रव्यत्वस्य भानवारणाय अदृष्टविशेषस्य, कालविशेषस्य वा हेतुत्वकल्पनवदस्मन्मतेऽपि तथाकल्पनसम्भवात्। 'वृद्धिरादैच्' इति सूत्रे सामानाधिकरण्येन निर्देशात् 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' इति स्मृतेः, 'ओमित्येकाक्षरं ब्रह्म' इति श्रुतेश्च शब्दार्थयोस्तादात्म्येन अर्थनिरूपितव्याप्यत्वावगाहिपरामर्शस्यैव शब्दविषयकविशेषणतया शब्दविषयकानुमितौ कारणत्वसम्भवाच्च। शब्दार्थयोस्तादात्म्यस्य भेदाभेदरूपतया भेदस्योद्भूतत्वविवक्षायाम् 'घटं पश्यामि' 'घटरूपोऽर्थः घटशब्दो न' इत्यादिप्रयोगोपपत्तिः।

न च पदज्ञानस्य सम्बन्धिज्ञानविधया अर्थस्मारकत्वेनार्थस्मृतौ तद्भानासम्भवः, हस्तिदर्शने हस्तिपकस्मृतौ हस्तिनो भानादर्शनादिति वाच्यम्, हस्तिपकस्मृतौ हस्तिनो भानस्येष्टत्वात्। एवं भिन्नविषयकानुमितिसामग्रीकाले 'घटशाब्दबोधो जायताम्' इति या इच्छा तस्याः शब्दविषयकत्वमपीति न सा शाब्दबोधे शब्दज्ञानप्रतिबन्धिका, इत्येवं 'ज्ञानमात्रे शब्दस्य भानम्' इति पक्षे आपतिता दोषा निराकरणीया इति दिक्।

भूषणे बालकृष्णेन कृता व्याख्या मनोरमा
नामार्थनिर्णयस्तत्र पूर्णः प्रीयान्महेश्वरः॥

——❀❀❀——

दर्पणव्याख्या

❀ अन्यथेति ❀ भेदपक्षस्यैवाभ्युपगमे इत्यर्थः। ❀ प्रत्ययः परश्चेति ❀ नियमशास्त्राणां निषेधमुखेनापि प्रवृत्ते 'प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या न केवला' इति नियममूलकस्य "अपदं न प्रयुञ्जीत" इति निषेधविधेः प्रत्यययोग्यस्य प्रत्ययं विना प्रयोगेऽतिक्रमणादसाधुतापत्तेरित्यर्थः। अस्मन्मते तु तस्य प्रत्यययोग्यत्वाभावात्तन्निषेधविषयतायाः एवाभावात्तदतिक्रमणाप्रसक्तेः साधुत्वादेव च तत्रावादेशादिरपि। अन्यथा भाषाशब्देष्विव न तत्प्रवृत्तिः स्यादिति भावः॥ १७॥

इति श्रीभूषणसारदर्पणे नामार्थनिरूपणम्॥ ४॥

——❀❀❀——

# अथ समासशक्तिनिर्णयः

समासान् विभजते—

सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा ।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥२८॥

सुपां सुपा—पदद्वयमपि सुबन्तम् 'राजपुरुषः' इत्यादिः । सुपां तिङा— पूर्वपदं सुबन्तं उत्तरपदं तिङन्तम् 'पर्य्यभूषयत्' 'अनुव्यचलत्' ।

## ॥ अथ समासशक्तिनिर्णयः ॥

प्रभा

सामान्यतो नामार्थं निरूप्य समासस्यापि नामविशेषत्वात् तदर्थं निरूपयितुं प्रसङ्गात्समासभेदानाह—
मासानिति—'विशेषज्ञानं सामान्यज्ञानपूर्वकम्' इति न्यायादादौ समासत्वस्यैव निरूपणीयत्वेऽपि सम
ष्टत्वात्तत्रैव विप्रतिपत्तेश्च तद्भेदा एव मूलकृता प्रदर्शिताः । समासत्वञ्च पाणिन्यादिसङ्केतसम्बन्धेन समास-
द्यत्त्वरूपम् , एकार्थीभावापन्नपदसमुदायविशेषत्वं वा । ननु पदपदेन शक्तस्य ग्रहणे कृदन्ते तद्धितान्ते
ातिव्याप्तिः, सुबन्ततिङन्तयोर्ग्रहणे कुम्भकारकटप्रूयादिष्वव्याप्तिः, तत्र कृदन्तधातुभ्यामेव समासविधानेन
ादृशविपदसमुदायत्वाभावादिति चेन्न, तत्र पदपदेन पदत्वयोग्यस्य ग्रहणात् । पदत्वयोग्यत्वञ्च—पदत्वप्रयो-
ाकप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकधर्मवत्त्वरूपम् । तथाच कारशब्दे तादृशधर्मस्य प्रातिपदि-
रत्वस्य, प्रूशब्दे धातुत्वस्य च सत्त्वेनादोषादिति गुरवः । एकार्थीभावश्चाग्रे वक्ष्यते ।

सुपामिति—सुपा सह सुपां समासः । एवमुत्तरत्र योजनीयम् । सुप्पदं सुबन्तपरम् तिङ्पदमपि तदन्त-
रम् । तथाच सुबन्तप्रतियोगिकसाहित्यविशिष्टसुबन्तनिरूपितवृत्तित्वविशिष्टः समास एकः । तिङन्तप्रतियोगि-
कसाहित्यविशिष्टसुबन्तनिरूपितवृत्तित्वविशिष्टो द्वितीयः । नामप्रतियोगिकसाहित्यविशिष्टसुबन्तनिरूपितवृत्तित्व-

दर्पणव्याख्या

कृत्तद्धितस्यैव निर्वाहात नामसमुदायात्मकसमासेऽतिरिक्ता शक्तिरिति मत दूषयिष्यन् प्रसङ्गात्समासार्थं निरूपयितु-
मादौ तद्विभागप्रदर्शनमित्याशयेनाह—॥ समासानिति ॥ समासत्वञ्च शक्तिसम्बन्धेन समासपदवत्त्वम्, एकार्थीभावा-
पन्नपदसमुदायविशेषो वा । एकार्थीभावे मानञ्च "किं पुनः सामर्थ्यं नाम ? पृथगर्थानामेकार्थीभावः समर्थवचनम् , क्व पुन.
पृथगर्थानि, क्वैकार्थानि । वाक्ये पृथगर्थानि– राज्ञः पुरुष.' इति, समासे पुनरेकार्थानि–'राजपुरुषः'' इति समर्थसूत्रस्थं
भाष्यम्, तन्मूलिका वक्ष्यमाणा युक्तयश्च ।

तत्रैकार्थत्वमेकोपस्थितिविषयार्थकत्वम् । नत्वेकार्थशक्तत्वम्, घटादिपदानामपि घटघटत्वतत्सम्बन्धरूपनानार्थशक्तत्वे-
नैकार्थतानापत्तेः । नानोपस्थितिविषयार्थकत्वं पृथगर्थकत्वम् । यथा वाक्ये पृथक्पदार्थानामाकाङ्क्षादिसहकारेण विशिष्टार्थप्रत्ययः,
नैवं वृत्तौ, किन्त्ववयवशक्त्या समुदायशक्तिसहकृतया जायमाना पदार्थोपस्थितिरेव विशेष्यविशेषणभावापन्नविशिष्टार्थमवगा-
हते, "संसृष्टार्थं समर्थम्" इति भाष्यात् । राजपुरुषादिपदम्–'राजसम्बन्धवत्पुरुषादौ शक्तम्' इत्याकारकः शक्तिग्रहः । तत्तश्च
प्रासाप्राप्तविवेकेन विशिष्टशक्तिः षष्ठ्यर्थे पर्यवस्यति । अत एव न तत्र राजादौ सुन्दरादिपदार्थान्वयः, एकदेशत्वात् ।
'देवदत्तस्य गुरुकुलम्' इत्यादौ तु गमकत्वात् स इति वक्ष्यते । जहत्स्वार्थावृत्तिः पदानामानर्थक्यमिति तु न सम्यक्,
'महाबाहुः' इत्यादावस्वाप्यनापत्तेः । भूतपूर्वगत्याश्रयणन्तु सत्यां गतावनुचितम् । तदुक्तम्–

'गतिमतोदात्तवता तिङाऽपि समासः' इति वार्त्तिकात् समासः । सुपां नाम्ना 'कुम्भकारः' इत्यादिः । 'उपपदमतिङ्' ( पा० सू० २।२।१९ ) इति समासः । स च "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति परिभाषया भवति सुबुत्पत्तेः प्राक्, अत्रोत्तरपदे सुबुत्पत्तेः प्रागित्यर्थात् ।

प्रभा

विशिष्टस्तृतीयः । धातुप्रतियोगिकसाहित्यविशिष्टसुबन्तनिरूपितवृत्तित्वविशिष्टश्चतुर्थः । तिङन्तप्रतियोगिकसाहित्यविशिष्टतिङन्तनिरूपितवृत्तित्वविशिष्टः पञ्चमः । सुबन्तप्रतियोगिकसाहित्यविशिष्टतिङन्तनिरूपितवृत्तित्वविशिष्टः षष्ठः । अत्र साहित्यञ्च सङ्केतसम्बन्धेन समासशब्दघटकरूपगुणकृतम् , अपर्याप्त्या उभयमपि समासपदवत् । तथाच 'समासान् विभजते' इत्यत्र स्व ( विपूर्वकभजधातु ) समभिव्याहृतपदा ( समासपदा )र्थतावच्छेदकीभूत (समासत्व) धर्मव्याप्यमिथोविरुद्धधर्मसुबन्तप्रतियोगिकसाहित्यविशिष्टसुबन्तनिष्ठसमासत्व, तिङन्तप्रतियोगिकसाहित्यविशिष्टसुबन्तनिष्ठसमासत्व, नामप्रतियोगिकसाहित्यविशिष्टसुबन्तनिष्ठसमासत्व, तिङन्तप्रतियोगिकसाहित्यविशिष्टतिङन्तनिष्ठसमासत्व, सुबन्तप्रतियोगिकसाहित्यविशिष्टतिङन्तनिष्ठसमासत्वरूपषड्धर्मावच्छिन्नविषयकबोधनानुकूलो व्यापारः विपूर्वकभजधात्वर्थः प्रकृते । गतिमतेति—'कुगतिप्रादय' (२।२।१८) इति सूत्रे भाष्ये गतेस्तिङन्तेन सह समासविधानार्थमिदं वार्तिकम् । उदात्तवता, गतिमता च तिङा गतिःसमस्यते इत्यर्थः । 'उदात्तवता' इत्यस्योदाहरणम्—'यत्परियन्ति' इति । अत्र 'निपातैर्यद्यदि' इति सूत्रेण 'तिङ्ङतिङः' इति प्राप्तस्य निघातस्य प्रतिषेधे 'यन्ति' इत्यस्य प्रत्ययस्वरेणाद्युदात्ततया परिरूपगतेरुदात्तवता 'यन्ति' इत्यनेन समासः । 'गतिमता' इत्यस्योदाहरणम्—'अनुव्यचलत्' इति । अत्र 'वि' इत्यस्य 'अचलत्' इत्यनेन 'सह' इति योगविभागात् समासः । 'व्यचलत्' इत्यनेन 'अनु' इत्यस्य 'गतिमता च' इत्यनेन समासः । अत्र परत्वात् 'तिङ्ङतिङः' इत्यनेन निघाते उदात्तवता इत्यस्याप्राप्त्या 'गतिमता च' इत्युक्तम् । 'सह' इति योगविभागेन सिद्धे वार्तिकं व्यर्थमिति केचित् । वार्तिकादिति—इदमुपलक्षणम्— 'सह' इति योगविभागस्य । तेन 'वि' इत्यस्य 'अचलत्' इत्यनेन योगविभागात् समास इत्यस्य नासङ्गतिः । अत्र समासफलन्तु समासस्वरः, 'न समासे' इत्यनेन 'इकोऽसवर्णे' इत्यस्य निषेधे 'पर्य्यभूवत्' इत्यत्र,

दर्पणव्याख्या

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी । इति ।

अवयवार्थविरुद्धो यत्र समुदायार्थस्तत्रैव सा, यथा । कृष्णसर्पादाविति तदर्थः । अयमेव पक्षः —

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ।

इतिवदतो मूलकृतः सम्मतः, तथा सति पङ्कजशब्दादौ परैर्योगरूढ्यभ्युपगमेन तद्दृष्टान्तोपन्यासस्यार्थक्यात् । जहत्स्वार्था वृत्तिरिति पक्षस्य तत्सम्मतत्वे स्वमते तस्य पक्षतया परैस्तत्र तदनभ्युपगमेन तदुपन्यासानुपपत्तेः स्पष्टत्वात् । अधिकमग्रे वक्ष्यत इति ।

🟊 गतिमतोदात्तवतेति 🟊 उपलक्षणमिदम्—'सह सुपेति योगविभागस्यापि । 'अनुव्यचलत्' इत्यत्रानोर्व्यचलदित्यनेन वेरचलदित्यनेन युगपत्समासः, अन्यथा सुबन्तेन व्यचलदिति समुदायस्य समर्थत्वात् । सत्यां समाससंज्ञायां धातुत्वप्रतिषेधापादनेन, समासान्तोदात्तत्वञ्च भवति । तिङन्तार्थस्योत्तरपदार्थस्य प्रकृत्यर्थव्यापारस्य सत्त्वधर्मत्वाभावा न ततः सुबुत्पत्तिः । समयपरिपालकौपयिकवचनस्य तु नावसरः, छन्दसि तदापादनासम्भवादिति भावः । तथा सुबन्तस्यानभिधानान्नैवाप्रवृत्तिरिति भावः ।

अन्यथा 'चर्मक्रीती' इत्यादौ नलोपानापत्तेः ।

सुपां धातुना—उत्तरपदं धातुमात्रम्, न तिङन्तम्, 'कटप्रूः' 'आयतस्तूः', "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च" इति वार्त्तिकात् । तिङां तिङा—'पिबतखादता' 'पचतभृज्जता' इत्यादिः, "आख्यातमाख्यातेन क्रियासातत्ये" इति मयूरव्यंसकाद्यन्तगणसूत्रात् । तिङां सुबन्तेन—पूर्वपदं तिङन्तमुत्तरं सुबन्तम्—'जहिस्तम्बः', "जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारञ्चाभिदधाति" इति मयूरव्यंसकाद्यन्तगणसूत्रात् ।

अयं षड्विधोऽपि समासः "सह सुपा" ( पा० सू० २ । १ । ४ ) इत्यत्र योगविभागेन भाष्ये व्युत्पादितः, स्पष्टः शब्दकौस्तुभादौ ॥ २८ ॥

प्रभा

'अनुव्यचलत्' इत्यत्र च यणसिद्धिः । अन्यथा=पूर्वपदे, उत्तरपदे च सुबुत्पत्तेः प्राक् समासस्वीकारे । वार्त्तिकादिति –वार्त्तिके धातुसुबन्तयोर्द्वन्द्वघटकतया निर्देशेन निपातनादित्यर्थः । षड्विध इति—एकार्थीभावापन्नत्वे सति सुबन्तद्वयादिघटितत्वम् । एकार्थीभावेत्यस्य सर्वत्र वक्ष्यमाणभेदेषु सम्बन्धः । सुबन्ततिङन्तघटितसमुदायत्वम्, सुबन्तनामघटितसमुदायत्वम् । नचात्र 'राजपुरुषः' इत्यादिष्वतिव्याप्तिः, सुबन्तनामपर्य्याप्तोद्देश्यताकसमासत्वस्य तदर्थकत्वात् । सुबन्तधातुघटितत्वम्, नचैतस्य 'कष्टश्रितः' इत्यादिष्वतिव्याप्तिः, सुबन्तधातुपर्याप्तोद्देश्यताकसमासत्वस्य तदर्थकत्वात् । तिङन्तद्वयघटितत्वम्, तिङन्तपूर्वपदसुबन्तोत्तरपदघटितसमुदायत्वम् । षण्णां समासानामेतानि षड्लक्षणानि । भाष्ये व्युत्पादित इति—चिन्त्यमेतत्, उक्तषड्विधत्वस्य भाष्यकृताऽसंदृष्टत्वात् । तथाहि—'सहग्रहणं क्रियते सहभूतयोरेव समाससंज्ञा यथा स्यात्, एकैकस्य समाससंज्ञा मा भूदिति ।' इति सहग्रहणस्य प्रयोजनं गर्गदण्डनन्यायेन समुदाये वाक्यपरिसमाप्तिविधया संसाध्य उक्तम्—एवं तर्हि सिद्धे सति यत्सहग्रहणं करोति तस्यैतत् प्रयोजनं योगाङ्गं ( सूत्रावयवम् ) यथा विज्ञायेत । सति च योगाङ्गे योगविभागः करिष्यते । सह सुप् समस्यते । केन सह ? समर्थेन । 'अनुव्यचलत्' 'अनुप्राविशत्' । ततः सुपा । सुपा च सह सुप्समस्यते । अधिकारश्च लक्षणम् ( विधायकं ) च ।

दर्पणव्याख्या

*अन्यथेति* सुबुत्पत्तेः प्राक्समाससंज्ञाऽभ्युपगम इत्यर्थः । नलोपेत्यस्यापदत्वादित्यादिः । यद्यपि 'उपपदम्' ( पा० सू० २ । २ । १९ ) इति सूत्रे भाष्येऽनयोर्योगयोर्निवृत्त सुप्सुपेत्युक्तम्, तथाप्युपपदमिति महासंज्ञाबलादेव पूर्वपदस्य सुबुत्पत्त्यनन्तरम् ( एव ) समास इति भावः । 'प्राक्सुबुत्पत्तेः' इत्येकदेशप्रयोजनप्रदर्शनमिषेण परिभाषाया प्रयोजनमपि दर्शितम् । सुबुत्पत्तेः पश्चात् समासे हि स्वार्थ-द्रव्य-लिङ्ग-सङ्ख्या कारकाणा क्रमिकत्वस्यान्तरङ्ग बहिरङ्गभावमूलकस्य "कुत्सिते" ( पा० सू० ५ । ३ । ७४ ) इति सूत्रभाष्यसम्मतत्वेनान्तरङ्गत्वात् सुबुत्पत्तेः पूर्वं टाप्यनदन्तत्वात् "क्रीतात् करणपूर्वात्" ( पा० सू० ४ । १ । ५० ) इति ङीषोऽनुपपत्तेरिति दिक् ।

*भाष्ये व्युत्पादित इति* तत्र हि प्रत्येकं समाससंज्ञावारणस्य सहशब्दप्रयोजनं समुदाये वाक्यपरिसमाप्तिन्यायेन परिहृत्य 'एवं तर्हि सिद्धे सति यत् सहग्रहणं करोति तस्यैतत् प्रयोजनं योगाङ्गं यथा विज्ञायेत, सति योगाङ्गे योगविभागः करिष्यते । सह सुप् समस्यते । केन सह समर्थेन, अनुव्यचलत् 'अनुप्राविशत्' । ततः सुपा, सुपा च सह सुप् समस्यते । अधिकारश्च लक्षणञ्च, यस्य समासस्य अन्यल्लक्षणं नास्ति इदं तस्य लक्षणं भविष्यति" इत्युक्तम् । तत्राधिकारप्रयोजनम्—देवदत्तः पचतीत्यादौ समानाधिकरणेन समाससंज्ञावारणं बोध्यम् ॥ २८ ॥

योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च ॥ २६ ॥
भौतपूर्व्यात् सोऽपि रेखागवयादिवदास्थितः ॥ २६३ ॥

चतुर्धा, अव्ययीभाव-तत्पुरुष-द्वन्द्व-बहुव्रीहिभेदात्। अयं प्रायोवादः, 'भूतपूर्वः', 'दन्भूः', ('काराभूः') 'आयतस्तूः', 'वागर्थाविव' इत्याद्यसङ्ग्रहात्।

तथा पूर्वपदार्थप्रधानोऽव्ययीभावः। उत्तरपदार्थप्रधानस्तत्पुरुषः उभयपदार्थप्रधानो द्वन्द्वः। अन्यपदार्थप्रधानो बहुव्रीहिरित्यादि लक्षणमपि प्रायिकम्, 'उन्मत्तगङ्गम्' 'सूपप्रति' 'अर्द्धपिप्पली'

प्रभा

योवाद इत्यर्थः। अपरं वादमाह—योऽयमिति। प्राधान्येति—अस्य वाद इति शेषः। दन्भूः='दृढं भवति' इति दन्भूः। उणादिसूत्रेण दृढशब्दस्य दन्नादेशो निपातनात्, नृपः, वज्रम्, चक्रं वा दन्भूशब्दार्थः। काराभूः=कारा= न्धनागारम्, तत्र भवः काराभूः=बन्दीकृत इति यावत्। आयतस्तूः=आयतम्=दीर्घं स्तौति इति आयतस्तूः। रते 'सह' इति योगविभागात् निपातनाच्च केवलसमासाः=विशेषसंज्ञारहिता इत्यर्थः। पूर्वपदार्थ इति—उत्तर- पदार्थनिष्ठप्रकारतानिरूपितपूर्वपदार्थनिष्ठविशेष्यताकोपस्थितिजनकोऽव्ययीभावः। पूर्वपदार्थनिष्ठप्रकारता- निरूपितोत्तरपदार्थनिष्ठविशेष्यताकोपस्थितिजनकस्तत्पुरुषः। पूर्वपदार्थनिष्ठविषयतया साक्षान्निरूपितत्वा- भाववती या उत्तरपदार्थनिष्ठविषयता तादृशविषयताकोपस्थितिजनकः समासो द्वन्द्वः। पूर्वपदोत्तरपदभिन्न- पदार्थनिष्ठविशेष्यतानिरूपितोत्तरपदार्थनिष्ठप्रकारताकोपस्थितिजनकः समासो बहुव्रीहिरित्यर्थः। अत्र पूर्व- पदभिन्नत्वनिवेशात् 'अर्द्धपिप्पली' इत्यादौ नातिव्याप्तिः। परस्परेति—लक्ष्यतावच्छेदकस्य लक्षणाभाववति, लक्षणस्य च लक्ष्यतावच्छेदकाभाववति वृत्तित्वावित्यर्थः। यथा पूर्वपदार्थप्रधानत्वरूपलक्षणाभाववति 'उन्मत्तगङ्गम्' इत्यत्र लक्ष्यतावच्छेदकस्याव्ययीभावत्वस्य वृत्तित्वम्। लक्ष्यतावच्छेदकाव्ययीभावत्वाभाव- वति 'अर्द्धपिप्पली' इत्यत्र पूर्वपदार्थप्रधानत्वरूपलक्षणस्य वृत्तित्वमिति परस्परव्यभिचार इत्यर्थः। व्यभि- चारमेव दर्शयति—तथाहीति। उन्मत्तगङ्गमिति—उन्मत्ता गङ्गा यस्मिन्देशे स देश उन्मत्तगङ्गम्। अत्र बहुव्रीहि- लक्षणातिव्याप्तिरव्याप्तिश्चाव्ययीभावलक्षणस्य। सूपप्रतीति सूपस्य=द्विदलस्य लेशः=सम्बन्ध इत्यर्थः। तत्पुरुष- लक्षणातिव्याप्तिरव्याप्तिश्चाव्ययीभावलक्षणस्य। अर्द्धपिप्पलीति—अव्ययीभावलक्षणस्यातिव्याप्तिरव्याप्तिश्च तत्पुरुषलक्षणस्य। भाष्ये हि 'समुदाये दृष्टाः शब्दा अवयवेऽपि दृश्यन्ते' इति न्यायेन पिप्पली-कायादिशब्दाः पिप्पल्यवयव-कायावयवपरा इति। अर्द्धपिप्पलीत्यस्यार्द्धोऽभिन्नपिप्पल्यवयवः, 'पूर्वकायः' इत्यस्य पूर्वो- भिन्नकायावयव इत्यर्थेन, एवम् 'भिक्षाद्वितीयम्' इत्यस्य 'भिक्षावयवद्वितीयम्' इत्यर्थेन कर्मधारयमाश्रित्य 'पूर्वापराधरोत्तरम्' 'अर्धं नपुंसकम्' 'द्वितीयतृतीय' इति सूत्रत्रयमेकदेशिसमासविधायकं प्रत्याख्यातम्।

दर्पणव्याख्या

*भूतपूर्व इत्यादि* एषां वक्ष्यमाणयत्किञ्चिल्लक्षणाक्रान्तत्वेऽपि तत्तदधिकारीयत्वाननुशिष्टत्वादसङ्ग्रहो बोध्यः, समासाधि- कारीयसूत्रानुष्ठितत्वाद्विभागे तदसङ्ग्रहे दृष्टापत्तेरयोगात्।

*पूर्वपदार्थेत्यादि* प्राधान्यञ्च समासघटकपदार्थप्रकारतानिरूपितमुख्यविशेष्यत्वम्। तथाच पूर्वपदार्थ- विशेष्यकबोधजनकत्वमव्ययीभावत्वमित्यर्थः। एवमग्रेऽपि। 'उपकुम्भम्' इत्यत्र कुम्भनिरूपितसामीप्यस्य विशेष्यतया बोधात् 'राजपुरुषः' इत्यादौ राजसम्बन्धिपुरुषस्योत्तरपदार्थस्य, 'पीताम्बरः' इत्यत्र पीताभिन्नाम्बरसम्बन्धिनोऽन्यपदार्थस्य, 'धवखदिरौ' इत्यत्र धावित्यापन्नधवखदिरयोः पूर्वोत्तरपदार्थयोर्विशेष्यतया भानाद् यथायथं लक्षणसमन्वयः।

द्वित्राः' 'शशाकुशपलाशम्' इत्यादौ परस्परव्यभिचारात्। तथाहि—'उन्मत्तगङ्गम्' इत्यव्ययीभावे पूर्वपदार्थप्राधान्याभावादव्याप्तिः, अन्यपदार्थप्राधान्याद् बहुव्रीहिलक्षणातिव्याप्तिश्च, "अन्यपदार्थे च संज्ञायाम्" (पा० सू० २। १। २१) इति समासात्। 'सूपप्रति' इत्यव्ययीभावे उत्तरपदार्थप्राधान्यात्तत्पुरुषलक्षणातिव्याप्तिः, अव्ययीभावाव्याप्तिश्च। 'सुप् प्रतिना मात्रार्थे' (पा० सू० २। १। ९) इति समासात्। 'अर्द्धपिप्पली' इति तत्पुरुषे पूर्वपदार्थप्राधान्यसत्त्वाद् अव्ययीभावातिव्याप्तिः, तत्पुरुषाव्याप्तिश्च, "अर्द्धं नपुंसकम्" (पा० सू० २। २। २) इति समासात्।

एवम् 'पूर्वकायः' इत्यादौ द्रष्टव्यम्। 'द्वित्राः' इति बहुव्रीहावुभयपदार्थप्राधान्याद् द्वन्द्वातिव्याप्तिः, बहुव्रीह्यव्याप्तिश्च। 'शशाकुशपलाशम्' इत्यादिद्वन्द्वे समाहारान्यपदार्थप्राधान्याद् बहुव्रीह्यतिव्याप्तिः, द्वन्द्वाव्याप्तिश्च स्यादिति भावः।

सिद्धान्ते तु 'अव्ययीभावाधिकारपठितत्वमव्ययीभावत्वम्' इत्यादि द्रष्टव्यम्। असम्भवश्चेत्यपि

तत्राजहत्स्वार्थापक्षे उक्तव्यवस्था नासम्भविनीत्याशङ्कां मनसिकृत्य आह—

जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा ॥ ३० ॥
भेदः संसर्ग उभयं चेति वाच्यव्यवस्थितेः ॥३०½॥

जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था। पदं वर्णवद् वृत्तौ पदानामानर्थक्यमित्यर्थः।

प्रभा

तथाच जहत्स्वार्थत्वमेवैकार्थीभावः। अजहत्स्वार्थत्वं व्यपेक्षा। आद्ये समुदायस्यैव विशिष्टार्थोपस्थापकत्वेऽवयवभूतानि पदानि न स्वार्थोपस्थापकानि वैयर्थ्यात्, अनन्यलभ्यस्यैव शब्दार्थत्वात्। अजहत्स्वार्थत्वपक्षे परस्परापेक्षत्वरूपव्यपेक्षात्वस्य सम्भवात् तत्पक्षेऽवयवाः स्वार्थोपस्थापका एव। तथाच 'स्वार्थपर्यवसायिनां पदानामाकाङ्क्षावशात् परस्परान्वयो व्यपेक्षा' इति फलति। तत्रेति—घटकत्वं सप्तम्यर्थः। तद्घटकाजहत्स्वार्थपक्ष इत्यर्थः। उक्तेति—पूर्वपदार्थप्रधानोऽव्ययीभाव इत्यादिलक्षणरूपव्यवस्थेत्यर्थः। नासम्भविनी=सम्भविन्येवेत्यर्थः।

ते=जहत्स्वार्थाऽजहत्स्वार्थे। भेद इति—भेदो वाच्यः। संसर्गो वाच्यः। उभयम्—भेदसंसर्गात्मकमुभयं वाच्यम्। इति वाच्यस्य=शक्यार्थस्य व्यवस्थितेः=व्यवस्थाया हेतोः पुनस्त्रिधा=भेदवाचिका, संसर्गवाचिका, भेदसंसर्गोभयवाचिका इति द्वयी वृत्तिस्त्रिधेत्यर्थः। स्वार्थमिति—जहति (पदानि) स्वार्थं यस्यां वृत्तौ सा 'जहत्स्वार्था' इति द्वितीयान्तस्वार्थपदप्रथमान्तजहत्पदघटितव्यधिकरणबहुव्रीहिरेव मूलग्रन्थतः प्रतीयते। स च 'सप्तमी विशेषणे' इति सप्तम्यन्तस्य पूर्वनिपातविधानेन ज्ञापितात् क्वचिद्व्यधिकरणानामपि बहुव्रीहिरिति वचनादुपपाद्य। वस्तुतस्तु इति स्वानि (आत्मीयानि पदानि) यमर्थमिति ग्रासोदकवद् द्वितीयान्तार्थे समानाधिकरणबहुव्रीहिं कृत्वा जहत्स्वोऽर्थो यस्यामिति समानाधिकरणबहुव्रीहिरेव व्युत्पाद्यः। वृत्ताविति—शक्करामादिपदघटकरेफाद्विवर्णानामिव वृत्तिघटकपदानामप्यानर्थक्य मिति भावः। अन्यथा तत्र पदानामर्थवत्त्वस्वीकारे तुल्ययुक्त्या वर्णानामप्यर्थवत्त्वापत्तिरिति भावः। अत्र पक्षे वृत्तिघटकेषु पदेषु अर्थवच्छब्दनिमित्तकं कार्यं तु प्राग्भाविनमर्थमादाय 'प्रत्ययोत्तरपदयोश्च' इत्यादिशास्त्रारम्भसामर्थ्याद्वा भवत्येवेति बोध्यम्। तेन 'महाबाहु' 'सुपन्था' इत्यादीनां सिद्धिः।

दर्पणव्याख्या

प्राद्यभेदेन, किन्तु, अथ ये वृत्तिं वर्तयन्ति किं ते आहुरित्यादिभाष्याद् वाक्यादेवेयं वृत्तिर्निष्पन्नेति मतमवलम्ब्याय विचार इति लभ्यते। *समासशक्त्यैव *इत्येनकारेणावयवशक्तिव्यवच्छेदः। दृष्टान्तमाह—*वृषादिपदानामिवेति*।

आनुपूर्व्यन्तरघटकत्वाभावविशिष्टानुपूर्व्या एव शक्ततावच्छेदकत्वेन वृषभादिपदान्तर्गतवृषादिसमवेतानुपूर्व्याः शक्तताऽनवच्छेदकत्ववत् समासान्तर्गतराजानुपूर्व्याः शक्ततावच्छेदकत्वासम्भवादित्यर्थः। अन्यथा रामादिपदादग्न्यादीनामन्यार्थानामपि पदार्थोपस्थितिशाब्दबोधयोरापत्तिः, अवान्तरव्युत्पत्त्यापत्तिः, धन वनमित्यादौ जस्त्वाऽऽपत्तिश्च। वाक्ये तु पदान्यर्थवन्त्येव। 'राजसम्बन्धी पुरुषः' इत्यादर्थे राज्ञः पुरुषः, 'पुरुषो राज्ञः' इत्यादिविशिष्टानुपूर्वीद्वयस्य शक्यतावच्छेदकत्वकल्पनाऽपेक्षया पदशक्तिकल्पनाया एव लघीयस्त्वादिति भावः।

नचैतत्कल्पे विशिष्टरूपोपादाननियतत्वाऽनापत्त्या, महाबाहुः, सुपन्थाः, इत्यादौ दोष, अनर्थकत्वात्। एवमर्थवत्त्वनिबन्धनप्रातिपदिकत्वाभावेन नलोपाद्यनापत्तिश्चेति वाच्यम्, वृत्तिप्राग्भाविनमर्थवत्त्वमारोप्य तत्तत्कार्यस्य सूपपादत्वात्। इदञ्च "प्रत्ययोत्तरपदयोश्च" (पा० सू० ७।२।९७) इति सूत्रभाष्ये स्पष्टम्।

अन्यथा राजपदेन विग्रहवाक्य इव, राज्ञः स्वातन्त्र्येणोपस्थितिमत्त्वात्, 'ऋद्धस्य राज्ञः पुरुष' इत्यत्रेव 'ऋद्धस्य राजपुरुषः' इत्यस्याप्यापत्तेरिति ।

अजहदिति—न जहति पदानि स्वार्थं यस्यां सा अजहत्स्वार्था ।

अयमभिप्रायः—राजपुरुषादिसमासादौ नातिरिक्ता शक्तिः, कल्पकाभावात्, क्लृप्तराजादिपदादेवार्थोपस्थितिसम्भवे तत्कल्पनस्य गौरवपराहतत्वाच्च । क्लृप्तशक्तित्यागोऽप्यप्रामाणिकः कल्प्येत । तथाचाऽऽकाङ्क्षादिवशात् क्लृप्तशक्त्यैव विशिष्टार्थबोधः ।

प्रभा

अयमत्र विशेषः—'यथा तक्षा राजादिकर्मणि प्रवर्तमानः स्वमर्थं जहाति, एवं राजादिपदमपि स्वमर्थं जह्यात् । एवं हि दृश्यते लोके पुरुषोऽपरकर्मणि प्रवर्तमानः स्वमर्थं जहातीतिवत् यदा राजा पुरुषार्थे प्रवर्तमानः स्वमर्थं जह्यात्, उपगुश्चापत्यार्थे स्वमर्थं जह्यात्' इति भाष्ये पुरुषार्थे प्रवर्तमानोऽपत्यार्थे प्रवर्तमानः इति भाष्येण पूर्वपदमेव स्वार्थं जहातीति प्रतीयते । अन्यथा—पूर्वपदस्यार्थोपस्थापकत्वे । आपत्तेरिति—जहत्स्वार्थत्वे तु राजपदार्थस्य पृथगुपस्थित्यभावेन 'पदार्थः पदार्थेन' इति न्यायविरोधान्न तत्र विशेषणान्वयः । न जहती ति—शत्रन्तप्रकृतिकजसन्तं पदं जहतीति । न जहत्स्वार्था अजहत्स्वार्थेति विग्रहः । ननु समुदायशक्त्यैव राजविशिष्टपुरुषस्य बोधनिर्वाहेऽवयवशक्तिर्व्यर्थेत्यत आह—अयमिति । अतिरिक्तेति—जहत्स्वार्थपक्षवत् समुदाये शक्तिरत्र पक्षे नाश्रीयते इति भावः । कल्पकाभावादिति—'ननु राजपुरुषः' इत्यनेन 'राजसम्बन्धवान् पुरुषः' इति सम्बन्धप्रकारकबोध एव समुदायशक्तिकल्पकः, विभक्त्यभावेन सम्बन्धोपस्थितेः समुदायशक्तिसाध्यत्वात् । न च सम्बन्धस्य संसर्गतयैव भानमाकाङ्क्षावशादिति वाच्यम्, नामार्थयोर्भेदसंसर्गेणान्वयस्य 'नामार्थयोरभेदान्वयः' इति व्युत्पत्तिविरुद्धत्वादित्यत आह—क्लृप्तशक्तिकराजादीति—क्लृप्तशक्तिकराजादिपदादेवेति पाठः । क्लृप्ता शक्तिर्यस्य राजादिपदस्य तत् क्लृप्तशक्तिकम् । क्लृप्तशक्तिकञ्च तद् राजादिपदं तस्मादित्यर्थः । तत्कल्पनस्य=समुदायशक्तिकल्पनस्य । 'नामार्थयोरभेदान्वयः' इति व्युत्पत्तिः समासातिरिक्तविषयेति स्वरूपसंसर्गको बोधो नानुपपन्न इत्यत आह—गौरवपराहतत्वादिति—व्युत्पत्तौ वृत्तिघटकातिरिक्तत्वेन निवेशो तत्र तत्र समुदायशक्तिकल्पनापेक्षया लाघवमेवेत्यभिप्रेत्याह । क्लृप्तशक्तित्याग इति । आकाङ्क्षादिवशादिति—स्वत्वसम्बन्धेन राजविशिष्टपुरुष इत्याकारकबोधं प्रति राजपदाव्यवहितोत्तर-

दर्पणव्याख्या

*अन्यथेति* वृत्तौ व्यपेक्षारूपसामर्थ्याभ्युपगमे इत्यर्थः । *इत्यस्यापि* इत्यपिना राज्ञः पुरुषो भार्यायाश्चेत्येकत्र द्वयभिन्नविषयताशालिबोधजनकस्य समुच्चयः । *आपत्तेरिति* अस्मन्मते तु पदार्थैकदेशत्वाद्वृद्धेऽपि शक्त्यभ्युपगमेन (अ) राजकीयभिन्नत्वेनानवगते विशेषणान्तरायोगाच्च न सेति भावः । अजहत्स्वार्थवृत्तिपक्षस्य भाष्यानुसारेणाऽव्यपेक्षोपपादनाद् 'व्यपेक्षायां सामर्थ्यमेके' इत्येकीयमताश्रितामनुसृत्याह—*अयमभिप्राय इति* । *नातिरिक्तेति* क्लृप्तशक्त्यतिरिक्तेत्यर्थः । *कल्पकाभावादिति* कल्पकस्यान्यथानुपपत्तिरूपप्रमाणस्याभावादित्यर्थः ।

ननु विशिष्टार्थानुपपत्तिरेव तत्कल्पिका भविष्यतीत्यत आह—*क्लृप्तराजादीति* तत्कल्पनस्य—विशिष्टशक्तिकल्पनस्येत्यर्थः । ननु स्यादेव यदि तत्पक्षे प्रत्येकपदशक्तिकल्पना, सैव नेतिच गौरवावसरोऽत आह—*क्लृप्तशक्तीति* प्रतिशब्दं क्लृप्तायाः प्रत्येकपदशक्तिस्तत्परित्याग इत्यर्थः । कालभेदेनाप्येकस्यैव शब्दस्यार्थद्वयानवगमकत्वयोर्विरुद्धत्वात्, नर्तकादिवत् यथाऽनुपपत्त्या च वृत्तिदशायां तत्स्वीकारस्यौचित्यादिति भावः ।

ननु प्रत्येकशक्त्या तत्तदर्थोपस्थितावपि विशिष्टे शक्त्यनङ्गीकारेण तदनुपस्थित्या कथं तस्य शाब्दविषयतेत्यत आह—*तथाचेति* । *आकाङ्क्षेति* । आदिपदाद्योग्यताऽऽदिपरिग्रहः, राजपदाव्यवहितपुरुषपदत्वादिरूपकारणसमवधा

अयमेव व्यपेक्षापक्षो मतान्तरत्वेन भाष्यकारैरुक्तः । नचात्र मते समासे 'ऋद्धस्य' इति विशेषणान्वयापत्तिः, "सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणयोगो न" इति वार्त्तिकात् । तथाचैतन्मतवादिनां पूर्वोत्तरपदार्थसत्त्वाद् पूर्वपदार्थप्रधान इत्यादिव्यवस्था सूपपदेति भावः ।

प्रभा

पुरुषपदत्वरूपाकाङ्क्षाज्ञानरूपकारणवशादित्यर्थः । नन्वत्र पक्षे प्रमाणाभाव इत्यत आह—अयमेवेति—
अजहत्स्वार्थावृत्तिरिति पक्ष एव । तथाचात्र भाष्यमेव प्रमाणमिति भावः । मतान्तरत्वेनेति—तथाच
भाष्यम्—'परस्परव्यपेक्षां सामर्थ्यमेके' इति । बहुव्रीहौ, द्वन्द्वे च समुदायस्यान्यपदार्थे, समूहे च शक्तिः,
'अनेकमन्यपदार्थे' 'चार्थे द्वन्द्वः' इति सूत्रबलात् । एवञ्च चित्रागन्वितताया गोः स्वस्वामिभावसम्बन्धेनान्य-
पदार्थेऽन्वये चित्राभिन्नगवस्वामीति बोधः । द्वन्द्वेऽपि समूहे वर्तिपदार्थयोरवयवावयविभावसम्बन्धेनान्वय
इति तयोरपि व्यपेक्षापक्षेण निर्वाहः । अन्यपदार्थे समूहे च शक्तिकल्पनेऽपि वर्तिपदार्थविशिष्टे तम्मि-
न शक्त्यकल्पनेन लाघवसत्त्वात् । अन्वयापत्तिरिति—पृथगुपस्थितत्वमुख्यविशेष्यतायाः सत्त्वादिति भावः ।
विशेषणानामिति—'ऋद्धस्य राज्ञः पुरुषः' इति वाक्ये ऋद्धस्येति विशेषणसत्त्वान् राजपुरुष इति समासो न
भवति । एवम् 'राजपुरुषः' इति वृत्तिघटकीभूतस्य राजपदार्थस्य विशेषणसम्बन्धो न भवति, ऋद्धस्येत्यादि-
विशेषणतया नान्वेतीत्यर्थः । वृत्तस्य—इत्यस्य समासघटकत्वे सति पदान्तरार्थनिष्ठविशेष्यतानिरूपितप्रका-
रता ऽश्रयस्येत्यर्थः । पुरुषपदार्थे तु अन्वयविवक्षायां 'सुन्दरः राजपुरुषः' इति भवत्येव, पुरुषे प्रकारताऽऽश्र-
यत्वस्याभावात् । समासघटकमात्रस्य सविशेषणत्वे समासाभावे तु 'उपमितं व्याघ्रादिभिः' इति सूत्रे
'सामान्याप्रयोगे' इत्यस्य वैयर्थ्यापत्तिः, 'पुरुषो व्याघ्र इव शूरः' इत्यत्र पुरुषे शूर इति विशेषणसत्त्वात
समासाप्राप्तेरिति सामान्याप्रयोगग्रहणाज्ज्ञापकाद् विशेष्यस्य सविशेषणत्वेऽपि समासो भवत्येवेति 'राज-
पुरुषः सुन्दरः' इत्यादौ न दोषः । वार्तिकादिति—अनन्तसमासे शक्तिकल्पनापेक्षया वार्तिकारम्भे एव लाघव-
मिति भावः । एतन्मतेति—व्यपेक्षासामर्थ्यमितिवादिनां मतेत्यर्थः । सूपपदेति—अव्याप्त्यतिव्याप्तिदोष-
परिहारेऽपि लक्षणसमन्वयसम्भवेनासम्भवो नेति भावः । अत एव 'सुबामन्त्रिते' इति सूत्रे 'सुबिति
किमर्थम् । करोष्यटन् । नैतदस्ति, असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? समानाधिकरणमसमर्थ-
वद् भवतीति' इति भाष्योक्तं सङ्गच्छते । एकार्थीभावस्यात्र ग्रहणे तु सूत्रवैयर्थ्यमेव स्यादिति व्यपेक्षा-
सामर्थ्यस्यैवात्रावश्यकता । ननु समर्थसूत्रे एकार्थीभाव एव सामर्थ्यम्, 'सुबामन्त्रिते' इत्यत्र सूत्रारम्भ-
सामर्थ्यान् तदनुपस्थितिरिति चेन्न, 'ऋतेन मित्रावरुणावृतावृधावृतस्पृशा' इत्यत्र 'ऋतेन' इत्यस्य पराङ्ग-
वद्भावादाष्टमिकनिघातापत्तेः । अत्र समर्थपरिभाषोपस्थित्या व्यपेक्षारूपसामर्थ्यस्य ग्रहणे तु ऋतेनेत्यस्य
'आशाथे' इति पदोपात्तव्याप्तिक्रियायामन्वयेन सामर्थ्याभावान् पराङ्गवद्भावाभावे पाष्ठेन 'आमन्त्रितस्य'
इत्यनेन आद्युदात्तसिद्धिरिति स्पष्टं चेदं वेदभाष्यादौ ।

दर्पणव्याख्या

नादित्यर्थः । तथाच प्रत्येकपदार्थोपस्थितिसहकृताऽऽकाङ्क्षाऽऽदिभिरेव विशिष्टबोधसम्भवेन तत्पूर्वं विशिष्टोपस्थित्यपेक्षा
यस्यै सा कल्प्येतेति भावः । *अयमेवेति* अयमभिप्राय इत्यादिनोक्त एवेत्यर्थः । भाष्यकारैरित्यस्य 'परस्परव्यपेक्षा
सामर्थ्यमेके' इत्यादिनेति शेषः । उक्तापत्तिमुद्धरति—*नचात्रेति* । अन्वयापत्तिरिति* यथाश्रुताभिप्रायेण सम्बन्धिज्ञान-
णायामापत्तेरभावस्य ———ात ।

प्रसङ्गाद् वृत्तिभेदमपि निरूपयति–ते पुनरिति—द्वे अपि वृत्ती त्रिविधे, वाच्यत्रैविध्यात्। वाच्यमेवाह–भेद इत्यादि। भेदः=अन्योन्याभावः। तथाच 'राजपुरुषः' इत्यादावराजकीयभिन्न

प्रभा

प्रसङ्गादिति—वृत्तिसामान्येन विशेषस्य स्मरणात् स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गसङ्गतेरित्यर्थः। भेद इति–एतेषां समासवाच्यत्वे मानन्तु समर्थसूत्रस्थं भाष्यमेव। तथाहि—'सामर्थ्यन्नाम भेदः, संसर्गो वा। अपर आह—भेदसंसर्गौ वा सामर्थ्यमिति। कः पुनर्भेदः संसर्गो वा। इह राज्ञ इत्युक्ते सर्वं स्वं (अश्वो गृहं वा) प्रसक्तम्, 'पुरुष इत्युक्ते सर्वः स्वामी प्रसक्तः'। प्रसक्तिस्तदैव यदा प्रमाणान्तरेण पुरुषस्य पारतन्त्र्यं निर्णीतम्। अन्यथा पुरुष इत्युक्तेऽस्तीति प्रतीतिः स्यान्नतु स्वामिमात्राक्षेपः। 'इहेदानीं 'राजपुरुषमानय' इत्युक्ते राजा पुरुषं निवर्तयति–अन्येभ्यः स्वामिभ्यः। पुरुषो राजानं निवर्तयति अन्येभ्यः स्वेभ्य इति'। अत्र कैयटः–'यदि च वृत्तौ भेदसंसर्गौ न स्यातां तदा सामर्थ्यमेव न स्यात्, तदात्मकत्वात् सामर्थ्यस्येत्यर्थः। तत्र संसर्गाविनाभावित्वादनुमीयमानसंसर्गो भेदः सामर्थ्यमिति भेदः समासवाच्यः। भेदाविनाभावित्वादनुमीयमानभेदः संसर्गो वा सामर्थ्यमिति संसर्गः समासवाच्यः। तत्र भेदपक्षे राजा पुरुषं स्वाम्यन्तरेभ्यो निवर्त्य स्वार्थं जहाति। पुरुषस्त्वजहदपि स्वार्थं स्वान्तरेभ्यो राजानं निवर्तयतीति। ततश्च कृतकार्यस्य भवतु राजार्थस्य निवृत्तिः। अकृतकार्यस्य निवृत्तौ वृत्तिरेव न स्यादिति भेदो वाच्यः। एवम् 'राज्ञः' इत्युक्ते सर्वं स्वं प्रसक्तम्, पुरुष इत्युक्ते सर्वः स्वामी प्रसक्तः। 'राजपुरुषः' इत्युक्ते राजा स्वत्वेन पुरुषमेव सम्बध्नाति नान्यम्, पुरुषः स्वामित्वेन राजानमेव सम्बध्नाति नान्यम्। इति संसर्गः समासार्थः। उभौ वा यौगपद्येनाश्रीयमाणौ सामर्थ्यमित्युभयं समासार्थः। भेदशब्दो विशेषार्थकोऽपि सम्भवति, यथा–'द्रव्यभेदानाह' इत्यादावत आह–अन्योन्याभाव इति। ननु 'राजपुरुषः' इत्यादौ भेदः समासार्थः' इति सत्यम्, परन्तु राजप्रतियोगिकः पुरुषानुयोगिक, उत पुरुषप्रतियोगिको राजविशिष्टपुरुषप्रतियोगिको वा राजानुयोगिकः। नाद्यः राजपदार्थस्य पुरुषे विशेषणत्वेन 'एकत्र विशेषणतयाऽन्वितस्यापरत्र विशेषणत्वायोगात्' भेदे विशेषणत्वायोग', राजभेदस्य राजसम्बन्धिमात्रे सत्त्वेनाव्यावर्तकत्वात् वक्ष्यमाणप्रयोजनासिद्धेश्च। न द्वितीयः, भेदस्य प्रतियोगितावच्छेदकेन सह विरोधाद् राजनि पुरुषभेदस्य वाच्यत्वे तत्र पुरुषत्वस्य सत्त्वेन पुरुषभेदस्य बाधितत्वात्। तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकपुरुषभेदस्याव्यावर्तकत्वात्, 'राजधनम्' इत्यादौ धनत्वावच्छिन्नप्रतियोगिताकभेदस्य राजनि सम्भवेऽपि तदनुपयोगाच्च। तृतीयो राजविशिष्टपुरुषभेदोऽपि वक्तुमशक्यः, प्रयोजनविरहादित्यत आह–तथाचेति। बोध इति—राजभिन्नासम्बन्धी पुरुष इति बोध इत्यर्थः। नचैवं 'राजपुरुषः' इत्यनेन 'राजसम्बन्धवान्, स्वत्वसम्बन्धेन राजविशिष्टो वा पुरुष इति बोधोऽप्यनुभवसिद्धस्तस्यानुपपत्तिरिति वाच्यम्, भेदस्य संसर्गाविनाभूतत्वेन तादृशभेदरूपहेतुना संसर्गानुमानात् तादृशबोधसिद्धेः। तादृशबोधो मानस एव, नतु शाब्द इति भावः, ननु अराजकीयभिन्नः पुरुष

दर्पणव्याख्या

*प्रसङ्गादिति* स्मृतिकालावच्छिन्नोपेक्षानर्हताऽवच्छेदकधर्मवत्त्वादित्यर्थः। *वृत्तिभेदमिति* वृत्तेः समासादिवृत्तेर्भेदम् भेदसंसर्गादिरूपार्थकृतमित्यर्थः। तदुक्तं भाष्ये—"सामर्थ्यन्नाम भेदः, संसर्गो वा। अपर आह—भेदसंसर्गौ वा सामर्थ्यम्" इति। यदि वृत्तौ भेदसंसर्गौ न स्यातां तदा सामर्थ्यमेव न स्यात्तदात्मकत्वात्सामर्थ्यस्य" इत्यतस्तदर्थकत्वं तस्येति तद्भावः। *भेद इति* संसर्गाविनाभावित्वादनुमीयमान (संसर्गः) तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः। तदेवाह *अन्योन्याभाव इति*।

व्यपेक्षावादस्यैवं युक्तिभाष्यविरुद्धत्वात् तन्मूलकः 'पूर्वपदार्थप्रधानः' इत्याद्युत्सर्गोऽप्ययुक्तः। किन्तु 'रेखागवय' न्यायेनोत्सर्गोऽपि परम्परयैव बोधक इत्याशयेन समाधत्ते—

प्रभा

व्यवहारानुपपत्तिरिति वाच्यम्, पुटे चम्पकाद्यसत्त्वेऽपि तत्सम्बन्धमात्रान् निष्कासितान्यपि चम्पकमल्लिकासुमनःसु 'अयं चम्पकपुटः' 'अयं मल्लिकापुटः' इति व्यवहारवद् राजपदस्यार्थानुपस्थापकत्वेऽपि विशेषणत्वव्यवहारोपपत्तेः। तदुक्तं समर्थसूत्रे भाष्ये—"अन्वयाद्विशेषणं भवत्ययं मल्लिकापुटोऽयं चम्पकपुट इति निष्कीर्णास्वपि सुमनःसु अन्वयाद्विशेषणं भवत्ययं मल्लिकापुटोऽयं चम्पकपुट इति" इति। यद्वा "भेदसंसर्गौ वा सामर्थ्यम्"। तथाहि—राजपदसन्निधानात् पुरुषपदेन राजभिन्नास्वामिकराजस्वामिकपुरुषमेव बोधयति। अतो न राज्ञः स्वान्तरेण सम्बन्धः, नापि पुरुषस्य स्वाम्यन्तरेण सम्बन्धः। तदुक्तम्भाष्ये—'भेदसंसर्गौ वा सामर्थ्यमिति। कः पुनर्भेदः, संसर्गो वा। इह 'राज्ञः' इत्युक्ते सर्वं स्वं प्रसक्तम्, पुरुष इत्युक्ते सर्वः स्वामी प्रसक्तः। इहेदानीं राजपुरुषमानय इत्युक्ते राजा पुरुषं निवर्तयत्यन्येभ्यः स्वामिभ्यः, पुरुषोऽपि राजानमन्येभ्यः स्वेभ्यः। एवमेतस्मिन्नुभयतो व्यवच्छिन्ने (उभयस्मिन्परस्परेणावच्छिन्ने) यदि स्वार्थं जहाति कामं जहातु न जातुचित् पुरुषमात्रस्यानयनं भविष्यति" इति, अनेन भाष्येण परस्परसम्बन्धाद् भेदसंसर्गौ यथाकथञ्चिद्बोधविषयौ भवत इत्येव लभ्यते, न तु वाच्यौ ताविति।

किञ्च भेदसंसर्गयोर्बोधविषयत्वे भेदे संसर्गे च प्रतियोगितासम्बन्धेनान्वयाय राजपदार्थस्यावश्यकतया जहत्स्वार्थावृत्तिरिति पक्षे राजपदेन तदर्थोपस्थित्यभावरूपत्यागकथनस्यासङ्गतिः। किञ्च द्वन्द्व—बहुव्रीह्योर्भेदसंसर्गयोः शक्यत्वं दुर्वचम्। एवञ्च पुरुषत्वेन रूपेण पुरुषपदमेव व्यक्तिविशेषं बोधयति। नापि पुरुषस्य स्वाम्यन्तरेण सम्बन्ध इति भाष्योक्तेः पुरुषत्वेन रूपेण व्यक्तिविशेषज्ञानस्यापि देवदत्तस्वामिकः पुरुष इति ज्ञानं प्रति विरोधित्वम्। अत एव कः चन्द्रः इति प्रश्ने प्रकृष्टप्रकाशः चन्द्र इत्युत्तरे चन्द्रत्वेन प्रकृष्टप्रकाशशब्दस्य बोधकत्वमिति तात्पर्यग्राहकत्वं चन्द्रशब्दस्य वेदान्तिभिः स्वीकृतम्। एवञ्चोत्तरपदे एव यत्र तादृशार्थतात्पर्यग्राहकत्वं पूर्वपदस्य तत्रैकार्थीभावः। अत एव 'एकार्थीभाव' सामर्थ्यं परिभाषा चेत्येवं सूत्रमभिन्नतरकं भवति' इति भाष्ये एष एव पक्षः समीचीन इति बोधयितुं तदुक्तनिर्देशः। ननु यथा एकार्थीभावमात्रस्य ग्रहणे 'समर्थः' इति सूत्रस्यावृत्त्या सामर्थ्यद्वयपरकत्वं न भवति, तदुच्यते—सूत्रमभिन्नतरकं भवति वाक्यभेदो न भवतीति। एवं व्यपेक्षामात्रस्य स्वीकारेऽपि सूत्रं न भिद्यते इति एकार्थीभावः सामर्थ्यमिति समीचीनमित्यत्र विनिगमकाभाव इति चेन्न, व्यपेक्षापक्षे अनेकविधगौरवस्य, भाष्ये तदुक्तनिर्देशस्य च विनिगमकस्य सत्त्वादित्यलं विस्तरेण।

परम्परयेति—वृत्तिवाक्यार्थबोधकवाक्ये यो राज्ञ इत्यादेरर्थो दृष्टस्तस्य सत्त्वमात्रेणोत्सर्गः पूर्वपदार्थप्रधान इत्यादिबोधक इत्येव परम्परा। 'राजपुरुषः' इत्यादेः समुदायस्य राजसम्बन्धविशिष्टपुरुषादाववयवशक्तितो भिन्नैव शक्तिः। यथा पङ्कजादिशब्दे अवयवशक्तितो भिन्नैव पद्मत्वावच्छिन्ननिरूपिता समुदायं

दर्पणव्याख्या

*व्यपेक्षावादस्येति* अव्यवहितोक्तदिशया वक्ष्यमाणरीत्या चेत्यर्थः। उक्ताजहत्स्वार्थपक्षस्य तु निर्दिष्टत्वमेवात भाव।
*एवं युक्तीति* उक्तवक्ष्यमाणेत्यर्थः। *भाष्येति* "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इत्यादिभाष्यदूषितत्वादित्यर्थः।

समास इति—वृत्तिमात्रोपलक्षणम्, "समर्थः पदविधिः" (पा० सू० २।१।१) इत्यत्र पदमुद्दिश्य यो विधीयते-समासादिः स समर्थः—विग्रहवाक्यार्थाभिधाने शक्तः सन् साधुरिति सूत्रार्थस्य भाष्याल्लाभात् ।

प्रभा

वृत्तिमात्रेति—मात्रपदं कार्त्स्न्यार्थम्, एकार्थीभाववति तत्सत्ता सकलवृत्तिबोधकमित्यर्थः। पदमुद्दिश्येति—उद्देश्यतया च विधेयतया साक्षान्निरूपिता, पदत्वसमुदायान्यतरधर्मावच्छिन्ना च ग्राह्या, तेन 'न पदान्ताद्वोः' इत्यादिसूत्रे 'अन्यारात्' इत्यादौ च न समर्थपरिभाषोपस्थितिः। तथाहि 'कर्तृकरणे' इत्यादि—कृद्धितादिषु समर्थपरिभाषानुपस्थितिः, पदत्वेन, सुबन्तत्वेन वा साक्षादुद्देश्यत्वाभावादिति वाच्यम्, पदविधिशब्देन पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसंज्ञानिमित्तकविधेयतावच्छेदकसम्पादकशास्त्रविधेयस्यैव ग्रहणात्। तथाच तत्सूत्रे वृत्तीनां पदविधित्वेन सामर्थ्यनिमित्तकत्वं सिद्धम्। तथाहि-पदसंज्ञाप्रयोजकाः प्रत्ययाः—कृत्तद्धितादिभिन्नस्वाद्युत्पत्तिश्च तद्धितान्तस्यैव तत्प्रयोजक-संज्ञा प्रातिपदिकसंज्ञा धातुसंज्ञा च, प्रातिपदिकादित्यधिकृत्य स्वप्रत्ययाद्युत्पत्तिविधानात्, धातोरित्यधिकृत्य तिङश्च विधानात्। प्रातिपदिकसंज्ञा—धातुसंज्ञाऽन्यतरनिष्ठविधेयतानिरूपितोद्देश्यता कृत्तद्धितान्तसनाद्यन्तसमाससंज्ञाघटितान्यतमनिष्ठा तदवच्छेदकः कृत्प्रत्ययः, तद्धितप्रत्ययः, समाससंज्ञा सनादिः तत्सम्पादकं शास्त्रं 'ण्वुल्तृचौ' 'तस्यापत्यम्' 'सुपा' 'धातोः कर्मणः' इत्यादि, तद्विधेयत्वं कृत्तद्धितसमाससनादिषु। एते च सामर्थ्याश्रिताः। यत्र सामर्थ्यं तत्रैव प्रवर्तन्ते। न च कृत्तद्धितसमाससंज्ञासनादिषु जातेषु सामर्थ्यम्, सति सामर्थ्ये कृदादय इत्यन्योन्याश्रय इति वाच्यम्, कृदादिविधायकशास्त्रारम्भसामर्थ्यात्तदुद्देश्येषु आरोपितसामर्थ्यस्य सत्त्वात्। अत एव एकार्थीभाव इति च्विप्रत्ययान्तघटित निर्देशः। आरोपितैकार्थीभाव एव च वृत्तौ निमित्तम्। तः=समाससंज्ञादिः। समर्थः=विग्रहवाक्यार्थाभिधाने शक्तः सन् साधुरिति सम्बन्धेन

दर्पणव्याख्या

*वृत्तिमात्रेति* मात्रपदं कार्त्स्न्यार्थकम्। अजहत्स्वार्थलक्षणया वृत्तिसामान्यपरत्वमित्यर्थः। *वाक्यार्थाभिधान इति* तथाभिधाने इत्यर्थः। भाष्यादित्यस्य 'समर्थानां पदविधानम्' इत्यादिः।

मूले *पङ्कजशब्दवदिति* असम्भवादिति; उभयत्र उभयदर्शनात्। पङ्कजशब्दे यथाऽवयवशक्त्यतिरिक्तशक्तिस्तद्वत्समासेऽपीत्यर्थः। ननु पङ्कजपदे रूढिस्वीकारे मानाभावः, समुदायात् पद्मत्वविशिष्टप्रतीतेरेव मानत्वात्, [illegible] रूढ्यैकवाच्यत्वात् पङ्कजपदाद् योगेन कुमुदस्यापि बोधप्रसङ्गाच्च। रूढिस्वीकारेऽप्युद्भिदादेव वृक्षादेरिव योगेन पङ्कजपदेन कुमुदमपि बोध्यत इति तु न, यत्र योग-रूढिभ्यामेकार्थबोधस्तत्र केवलयौगिकार्थबोधे रूढेः प्रतिबन्धकत्वकल्पनात्।

अथवा रूढ्या नियमतः स्मृत पद्मस्य कर्तृव्यक्तित्वात्तत्प्रत्ययेन पङ्कजनिकर्तृतया बोध्यते। 'बाधकं विना व्यक्तिवचनानां सन्निहितव्यक्तिबोधपरत्वम्' इति नियमात्, व्यक्तिवचनानां यत्किञ्चिद्व्यक्तितात्पर्यकाणां सन्निहितो या व्यक्तिविशेषपरतास्त्वमिति तदर्थः। "घटेन जलमाहर" इत्यत्र सन्निहितसच्छिद्रव्यक्तिबोधवारणाय तत्र 'बाधकं विना' इति।

तथाच पद्मे तात्पर्यसत्त्वेन तदेव योगेनापि प्रतीयते, न कुमुदम्। प्रथमकल्पस्तु रूढिज्ञानस्य ग्राह्याभावानवगाहित्वात्, जनकज्ञानाविघटकत्वाच्च प्रतिबन्धकत्वासम्भवात् क्षोदाक्षमः, सिद्धेरनायत्या 'मणिमन्त्रादि' न्यायेन प्रतिबन्धकत्वाभ्युपगमेऽप्यन्यत्र तथाकल्पने मानाभावात्। इत्थञ्च पद्मानुभवसामग्रीसत्त्वात् तस्यैव बोधः, न कुमुदस्य। सत्यां हि सामग्र्यां फलानुत्पादे प्रतिबन्धकस्यापेक्षणादिति तार्किकाः। तद्दृष्टान्तेन वृत्तिमात्रे समुदाये शक्तिरावश्यकीति कथने पूर्वोक्तार्थ एव पर्यवस्यतीति।

चित्रग्वादिपदेऽपि स्वामित्वेनोपस्थितये तत्कल्पनाऽऽवश्यकत्वात् । लक्षणयैव तथोपस्थितिरिति चेत्, पङ्कजपदेऽपि सा सुवचा । एवं रथकारपदेऽपि ।

## प्रभा

तत्कल्पनेति—समुदायशक्तिकल्पनेत्यर्थः । नहि चित्रग्वादिपदेन समुदायशक्तिं विना स्वामित्वेनोपस्थितिः सम्भवतीति भावः । लक्षणयेति—'बोध्यसम्बन्धो हि लक्षणा' इति मते समुदायस्य लक्षणया, शक्यसम्बन्धो लक्षणेति मते ऽप्रत्ययस्य लक्षणयेत्यर्थः। नच पङ्कजपदे समुदायशक्तिस्वीकारेऽप्यवयवशक्त्या कुमुदादिबोधः स्यादिति वाच्यम्, केवलयौगिकार्थबोधं प्रति समुदायशक्तिज्ञानजन्योपस्थितेः प्रतिबन्धकत्वात् ।

केचित्तु 'मणिमन्त्रादि' न्यायेनोक्तप्रतिबन्ध्यप्रतिबन्धकभावकल्पने गौरवात् । रूढ्यर्थतावच्छेदकावच्छिन्नविषयतानिरूपितयोगार्थनिष्ठविषयताकबोधं प्रति अवयवशक्तिसहकृतरूढिशक्तिज्ञानं कारणम्' इति न केवलं यौगिकार्थबोधः । 'रूढिर्योगापहारिणी' इति तु यत्र योगार्थरूढ्यर्थयोरभेदबाधस्तत्रैव, यथा—मण्डप—प्रवीणादिषु । तत्र प्रतिबन्ध्यप्रतिबन्धकभावोऽपि न, किन्तु रूढ्यर्थस्य शीघ्रोपस्थितिकत्वेन बोधात् सकृदुच्चरितन्याय एव तन्नियामक इत्यन्यत्र विस्तरः ।

सेति—लक्षणेत्यर्थः, नतु शक्तिः । पङ्कजपदं योगरूढमात्रस्योपलक्षणमित्याह—एवमिति—पङ्कजपदवदित्यर्थः । रथकारपदेऽपीति—समुदाये जातिविशेषनिरूपिता शक्तिर्न सिध्येदिति शेषः । तथा=योगमात्रकल्पने । चशब्दो वाक्यालङ्कारे । यत्तु रथकार इति—रथकारः=शूद्रजातीयः । तथाहि—माहिष्येण करिण्यामुत्पन्नो रथकारः । 'माहिष्येण करिण्यान्तु रथकारः प्रजायते' इति स्मृतेः । माहिष्यश्च—क्षत्रियेण वैश्यायामुत्पादितः । करिणी च—वैश्याच्छूद्रायामुत्पादिता कन्या । नचास्य जात्यन्तरत्वम्, अनुलोमसङ्कराणां मातृवृत्तिजातिमत्त्वात् । अत एव 'ब्राह्मणक्षत्रियवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एव भवन्ति' इति शङ्खस्मृतिः सङ्गच्छते । अनुलोमसंकरश्च—निम्नजातीयस्त्रीपूच्चजातीयपुरुषेणोत्पन्न. ।

अत्र मीमांसायामाशङ्कितम्—किमत्र रथकारपद शूद्रत्वव्याप्यजात्याश्रयपरम्, उत रथकर्मकोत्पादक[illegible] 'अग्न्याधानं नोपपद्यते' आधानस्य [illegible] निषेधात् । अतो रथकारपदेनाव[illegible] ' इति न्यायेन समुदायशक्त्या शूद्रस्य शीघ्रोपस्थितिकतया ग्रहणम् । नच वेदेऽधिकाराभावः, अग्न्याधानविधायकश्रुत्या तदुपयोगिमन्त्रेषु अधिकारकल्पनमिति निर्णीतम् । नैयायिकमते च समुदायशक्तेरभावाल्लक्षणयैव शूद्रस्य ग्रहणं वक्तव्यमिति लक्षणां विनैव समुदायशक्त्या शूद्रस्याधिकारित्वं प्रकल्प्य विधानसामर्थ्यादपूर्वविधानकल्पनमयुक्तम् । निषेधकश्रुतिविरोधवारणाय रथकारकर्तृकाग्न्याधानोपयोगिमन्त्रकर्मकाध्ययनभिन्नाध्ययननिषेधपरत्वं श्रुतेर्वाच्यम्, इति सकोचादिरूपं गौरवं विनैवावयवशक्त्या ब्राह्मणादिग्रहणेनैव श्रुतिविधानोपपत्तौ तदयुक्तं स्यादिति भावः समुदायशक्तिवादिनये तु रूढिशक्त्या शूद्रस्यैवोपस्थित्या अगत्या मीमांसकानां तत्कल्पनं युक्तम् ।

## दर्पणव्याख्या

* तत्कल्पनस्य *=रूढिकल्पनस्येत्यर्थः । * तथोपस्थितिरिति * स्वामित्वादिना स्वाम्याद्युपस्थितिरित्यर्थः । * सुवचेति * पद्मत्वादिनोपस्थितिरपि लक्षणयेति वक्तुं शक्यमित्यर्थः । रथकाराधिकरणविरोधमपि त्वाह—* एवमिति * ।

अयं भावः विशिष्टशक्त्यस्वीकारे 'राज्ञः पुरुषः' इत्यत्रेव 'राजपुरुषः' इत्यत्रापि स्याद् विशेषणाद्यन्वयः, राजपदेन स्वतन्त्रोपस्थितिसत्त्वात्। विभाषावचनञ्च समासनियमवारणाय कार्य्यमिति।

ननु "सविशेषणानाम्" इति वचनान्न विशेषणाद्यन्वयः, विभाषावचनञ्च कृतमेवेत्याशङ्कां समाधत्ते—वचनैरेवेति। न्यायसिद्धमेव सूत्रम्। व्यपेक्षाविवक्षायां (व्यासस्य) वाक्यस्य, एकार्थीभावे समासस्येति स्वभावादेव प्रयोगनियमसम्भवात्। सविशेषणेत्यपि विशिष्टशक्तौ राज्ञः पदार्थैक-

प्रभा

विशेषणाद्यन्वय इति—'ऋद्धस्य राज्ञः पुरुषः' इतिवद् 'ऋद्धस्य राजपुरुषः' इत्यपि स्यादिति भावः। स्वतन्त्रेति—'शक्यभाव्यसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधम्प्रति मुख्यविशेष्यतासम्बन्धेनोपस्थितिः कारणम्' इति कार्यकारणभावस्य राजपदार्थस्य पृथगुपस्थितौ सत्त्वेन विशेषणान्वयः स्यात्। राजसम्बन्धवत्पुरुषस्योपस्थितौ तु राजपदार्थस्य मुख्यविशेष्यतयोपस्थितेरभावेन न विशेषणाद्यन्वयः। उक्तकार्यकारणभावस्वीकारादेव घटत्वे नित्यपदार्थस्यान्वयाभिप्रायेण 'नित्यो घटः' इति न प्रयोगः, घटत्वस्य विशेष्यतयाऽनुपस्थितेः। एवं 'राजपुरुषः' इत्यत्र पुरुषेऽन्वयाभिप्रायेण 'राजपुरुषः सुन्दरः' इतिवत् 'राजपुरुषो देवदत्तस्य च' इति न प्रयोगः, राजवैशिष्ट्येनैव पुरुषपदार्थस्योपस्थित्या एकसम्बन्धेन यत्किञ्चिद्वैशिष्ट्येनोपस्थिते तत्सजातीयसम्बन्धेनेतरपदार्थान्वयस्याव्युत्पन्नत्वात्। अत एव 'घटो द्रव्यत्वस्य' इति न प्रयोगः, समवायसम्बन्धेन घटत्ववैशिष्ट्येनोपस्थिते घटे समवायसम्बन्धेन तत्र पदार्थान्तरान्वयस्य व्युत्पत्तिविरुद्धत्वात्। एवं राजपदार्थस्य पुरुषेऽन्वयवद् अश्वादावन्वयाभिप्रायेण 'राजपुरुषोऽश्वश्च' इति वाक्यस्य न प्रामाण्यम्, एकत्र (पुरुषे) विशेषणतयाऽन्वितस्यापरत्र (अश्वादौ) विशेषणत्वायोगादिति न्यायविरुद्धत्वात्। नियमवारणायेति—विभाषाधिकाराभावे व्यपेक्षापक्षमात्रवादिनो व्यपेक्षायामेव समासस्य विधानेन वृत्तिर्संज्ञावन्नित्यत्वं समाससंज्ञायाः स्यात्तथा च वाक्यस्य निवृत्तिरेव स्यात्तद्वारणाय सूत्रं कार्यमिति भावः। सूत्रमिति—'विभाषा' इत्यधिकारसूत्रमित्यर्थः। एकार्थीभाववादिनये तु एकार्थीभावविवक्षायां समासस्य, व्यपेक्षायां समासाप्राप्त्या वाक्यस्य च सिद्धतया विभाषासूत्रं न कार्यमिति भावः। एवम् 'समर्थानां प्रथमाद्वा' इत्यत्र, 'धातोः कर्मणः' इत्यत्र च वाग्रहणं न कार्यम्, उक्तविवक्षाद्वयेन तद्धितसनादिवृत्तेर्वाक्यस्य च सिद्धत्वात्। तदुक्तम् 'वावचनानर्थक्यम् स्वभावसिद्धत्वात्' इति। वृत्तिघटकविशेषणे लिङ्गायोगः 'कुक्कुटाण्डम्' मृगक्षीरम्' इत्यादौ क्वचिदेव, न सर्वत्र, तेन 'राज्ञीपुत्रः' इत्यादौ स्त्रीत्वस्य बोधविषयत्वेऽपि न दोषः। अन्ये तु किंजातीयं मांसमिति प्रश्ने छागस्य मांसमित्युत्तरे जात्यन्तरसम्बन्धनिवृत्तावेव वाक्यतात्पर्येण वाक्येऽपि लिङ्गविशेषबोधादर्शनान्न लिङ्गविशेषाबोध एकार्थीभावकृत इत्याहुः।

वस्तुतस्तु यत्र यत्र लिङ्गविशेषबोधादर्शनं तत्र तत्रैकार्थीभाव इति न व्याप्तिः, किन्तु असति बाधके यत्र यत्रैकार्थीभावस्तत्र तत्रोपसर्जनपदार्थे विशेषणाद्यनन्वय इत्येवेति क्वचिद्वाक्येऽपि लिङ्गविशेषानन्वयदर्शने न क्षतिरिति पञ्चोलिनः।

दर्पणव्याख्या

* अयम्भाव इति *। * न्यायसिद्धमेव सूत्रमिति * इह व्यपेक्षायां समासो न भवत्येकार्थीभावे वाक्यं न भवति, विभिन्नविषयत्वेन बाध्यबाधकभावासम्भवादिति न्यायसिद्धं विभाषावचनं नारम्भणीयमित्यर्थः। तदुक्तं भाष्ये—"न वा भावेनाभाविविशेषे" इति। एकार्थीना विकल्पनाचार्यो विकल्पेनेति तद्भावः।

देशतयाऽन्वयासम्भवान्न्यायसिद्धमिति भावः ।
देशतयाऽन्वयासम्भवान्न्यायसिद्धमिति भावः ।

अत एव व्यपेक्षापक्षमुद्भाव्य "अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः
स वक्तव्यः" इति भाष्यकारेण दूषणमप्युक्तम् ॥ ३२ ॥

तथा 'धवखदिरौ' 'निष्कौशाम्बिः' 'गोरथः' 'घृतघटः' 'गुडधानाः' 'केशचूडः' 'सुवर्णालङ्कारः'
'द्विदशाः' 'सप्तपर्णाः' इत्यादावितरेतरयोग-निष्क्रान्त-युक्त-पूर्ण-मिश्र-सङ्घात-विकार-सुब्प्रत्यय-
लोप-वीप्साद्यर्थो वाचनिको वाच्य इत्यतिगौरवं स्यादिति दूषणान्तरमाह—

प्रभा

'वृत्तावुपसर्जनपदार्थे संख्या न प्रतीयते' इत्यस्यापि संख्यात्वव्याप्यैकत्वत्वादिना एकत्वादिसंख्या न
प्रतीयते इत्येवार्थः, किन्तु संख्यात्वेन रूपेण एकत्वादिसंख्या प्रतीयत एव । इयमेव वृत्तावभेदैकत्वसंख्या
प्रतीयते इत्युक्तं भाष्ये । भेदो विशेषरूपं तदभावरूपैकत्वसंख्येत्यर्थः । विशेषरूपं यदेकत्वत्वादि तत्प्रतीत्य-
भावरूपेत्यर्थः । उपसर्जनपदार्थगता संख्या न प्रतीयते, उपसर्जनपदोपात्ता तु प्रतीयते इति 'द्विपुत्रः' इत्यादौ
न दोषः । भाष्यविदस्तु केनापि रूपेण संख्या न प्रतीयते, संकोचेन भाष्यव्याख्याने मानाभावात् । 'त्वत्पुत्रः'
'तावकीनः' 'मासजातः' इत्यादौ एकत्वत्वेन रूपेणैकत्वसंख्या प्रतीयते । 'युष्मत्पुत्रः' 'यौष्माकीणः' इत्यादा-
वनेकत्वेन रूपेणानेकसंख्या भासते । अत एव 'गोपुचरी' 'वर्षासु जातः' इत्यादौ बहुवचनसत्त्वेऽपि न
बहुत्वबोधः, किन्तु बहुत्वारोपेण संस्कारमात्रम् । अत एव राजपुरुष इत्यादौ संख्याया अप्रतीतिर्न सुबभाव-
कृता, उक्तेषु तत्सत्त्वेऽपि तदप्रतीतेरित्याहुः ।

अन्वयासम्भवादिति—पदार्थः पदार्थनान्वेतीति न्यायविरोधादिति भावः । अत एव भेदस्य पशुत्वेऽ-
न्वयाभिप्रायेण 'अपशुः पशुः' इति वाक्यस्य न प्रामाण्यम् । अत एव व्यपेक्षापक्षे गौरवादेव । कैयटोक्तं दूषण-
माह—तथेति । लोप इति—विग्रहवाक्ये निष्क्रान्तः कौशाम्ब्या इत्यादौ क्रान्ताद्यर्थस्य बोधाय यथा क्रान्तादिशब्दानां
प्रयोगो भवति तथा वृत्तिजन्यबोधेऽपि तेषां भानमस्तीति तत्तद्वाचकानां सम्प्रयोगः स्यादिति तेषां
लोपो वक्तव्य इति भावः ।

वाचनिका वाच्य इति—'चार्थे द्वन्द्वः' इत्यत्र 'चार्थे' इत्येको योगस्तत्रानेकमिति सुपिति चानुवर्तते । एव-
मनेकं सुबन्तं चार्थे वर्तते, तच्च द्वन्द्वसंज्ञकं भवति इति वाक्यभेदेन वचनादेव बोद्धव्य इत्यर्थः । एवम्
अत्यादयः क्रान्ताद्यर्थे वर्तन्ते इत्यर्थकम्—'अत्यादयः क्रान्ताद्यर्थे' इति वाक्यं भित्वा द्वितीयेन 'प्रथमया'
इत्यनेन समाससंज्ञा विधेया, इत्येवमनेकवचनैरर्थबोधनेऽतिगौरवमिति भावः । 'धवखदिरौ' इत्यत्र
'समाहृतौ धवखदिरौ' इति समाहृतार्थः, 'निष्कौशाम्बिः' इत्यत्र निष्क्रान्तः कौशाम्ब्या इति क्रान्तार्थः ।
'गोरथः' इत्यत्र गोभिर्युक्तो रथ इति युक्तार्थः, 'घृतघटः' इत्यत्र घृतपूर्णो घट इति पूर्णार्थः । 'गुडधानाः'
इत्यत्र गुडमिश्रा धाना इति मिश्रार्थः, केशचूड इत्यत्र केशसङ्घातभूता (जटीभूता) चूडा (शिखा)

दर्पणव्याख्या

*अन्वयासम्भवादिति* वृत्तौ ह्युपसर्जनपदेन प्रधानार्थाभिधायिना भाव्यम्, स्वस्य निर्दोषगाऽऽकाङ्क्षायाश्च
प्राधान्यमिति कथमेकदा प्राधान्यमेकार्थीभावश्चास्य, युगपद्गुणप्रधानभावविरोधादिति न्यायसिद्धमेवेत्यर्थः । *अत एवेति*
व्यपेक्षावादस्याऽऽपातरमणीयत्वादेवेत्यर्थः । * दूषणमप्युक्तमिति * अस्य नानाकारकाक्रियातयुष्मदस्मदादेशप्रतिषेधः ।
'अयं दण्डो हरानेन' इत्यादिनेति शेषः ॥ ३२ ॥ कैयटोक्तं दोषसङ्घातमाह—*तथेत्यादि* । *इति दूषणान्तरमिति*
इत्याकारकं दूषणान्तरमित्यर्थः । * पूर्वोक्तानामिति * 'निष्कौशाम्बिः' इत्यादौ क्रान्ताद्यर्थवाचकानां लोपवचनमित्या-
दिकानामित्यर्थः । एतद्दूषणोद्धारस्य वक्ष्यमाणत्वादाह—*दूषणान्तरमिति* ।

साधकान्तरमाह—

अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना ।
क्लृप्तत्यागश्चास्ति तव तत् किं शक्तिं न कल्पयेः ॥ ३४ ॥

अयं भावः । चित्रगुरित्यादिषु चित्रगवीनां स्वाम्यादिप्रतीतिर्न विना शक्तिमुपपद्यते । नच तत्र लक्षणा । सा हि न चित्रपदे, 'चित्रस्वामी गौः' इति बोधापत्तेः । नापि गोपदे, 'गोस्वामी चित्रः' इत्यन्वयबोधापत्तेः । चित्रादिमात्रस्य लक्ष्यैकदेशत्वेन तत्र गवादेरन्वयायोगात् ।

नच 'चित्राभिन्ना गौः' इति शक्त्युपस्थाप्ययोरन्वयबोधोत्तरं तादृशगोस्वामी गोपदेन लक्ष्यते इति वाच्यम्, गोपदस्य, चित्रपदस्य वा विनिगमनाविरहेण लक्षकत्वासम्भवात् ।

प्रभा

साधकान्तरमिति—समासशक्ताविति शेषः । अषष्ठ्यर्थेति—अत्र षष्ठीपदं सप्तम्या अप्युपलक्षणम् । षष्ठ्यर्थबहुव्रीहाविव तुल्ययुक्त्या सप्तम्यर्थबहुव्रीहावपि व्युत्पत्त्यन्तरकल्पनायाः अतिरिक्तशक्तिकल्पनारूपाया अप्रसक्तेः । क्लृप्तत्यागश्चेति—'क्लृप्तशक्त्यैव निर्वाहे ऽक्लृप्तशक्तिकल्पनाया अन्याय्यत्वात्' इति व्युत्पत्तित्यागश्चेत्यस्यार्थः । तव=व्यपेक्षावादिनः । शक्तिम्=एकार्थीभावात्मिकाम् । चित्रगवीनामिति—'चित्रगोस्वाम्यादि' इति लिखितपुस्तकेषु पाठ उपलभ्यते, परन्तु स चिन्त्यः, दघो दुर्वारत्वात् । चित्रगवीस्वाम्यादीति तूचितमिति पञ्चोलिनः । चित्रगुपदेन चित्राणां गवां स्वामी इति बोधः समुदाये एकार्थीभावात्मिकां शक्तिं विना नोपपद्यत इत्यर्थः । लक्षणेति—किं पूर्वपदे लक्षणा, उत उत्तरपदे इति विकल्प्य नाद्येत्याह—सा हीति=लक्षणा हीत्यर्थः । चित्रपदस्य चित्रस्वामिनि लक्षणायां वृत्तिजन्योपस्थितविशेष्यस्य स्वामिनो नामार्थयोरभेदान्वय इति न्यायेनाभेदसम्बन्धेन गोपदार्थेऽन्वये चित्रस्वामी गौरिति बोधापत्तेरित्यर्थः । पूर्वपदे लक्षणायां दोषमुक्त्वा उत्तरपदे तस्या दोषमाह—नापीति । गोस्वामीति—गोस्वामिनो गोपदार्थतया तत्र चित्रस्याभेदान्वये 'चित्रो गोस्वामी' इति बोधापत्तेरित्यर्थः । लक्ष्यैकदेशत्वेति—'चित्रपदस्य चित्रस्वामिनि, गोपदस्य गोस्वामिनि वा लक्षणायां चित्रपदार्थगोपदार्थयोर्लक्ष्यैकदेशत्वेनेत्यर्थः । अन्वयायोगादिति—'पदार्थः पदार्थेन' इति न्यायविरोधादिति भावः । अन्वयबोधोत्तरमिति—शीघ्रोपस्थितिकतया पदार्थोपस्थित्यादिसामग्रीवशात् शक्यार्थयोरेवान्वयबोधोत्तरं गोपदेन चित्राभिन्नगवीस्वामित्वेन रूपेणान्वयपदार्थो लक्ष्यते । तादृशबोधश्च लक्ष्यतावच्छेदकचित्रत्वादिविशिष्टगवीस्वामित्वस्योपस्थितये आवश्यकः । तादृशबोधे च चित्रपदं तात्पर्यग्राहकम् ।

दर्पणव्याख्या

षष्ठ्यर्थबहुव्रीहिपर्युदासे बीजं प्रदर्शयति—* अयम्भाव इति * । * विना शक्तिमिति * । समुदायशक्तिमित्यर्थः । * नच तत्रेति * तादृशसमुदायघटकपूर्वोत्तरपदयोरित्यर्थः । * चित्रस्वामीति * समानाधिकरणनामार्थयोः' इति व्युत्पत्तेरिति भावः । ननु गोपदस्य गोमति लक्षणा । यदि चित्रस्याभेदान्वये चित्राभिन्नगोस्वामीति बोधानुपपत्तिः, अत आह—* चित्रादिमात्रस्येति * आदिना गवादिपरिग्रहः । मात्रपदात् पूर्वपदे लक्षणेत्यादिना चित्रपदोपादानम् ।

* लक्ष्यैकदेशत्वेनेति * लक्ष्यगोस्वामिरूपपदार्थैकदेशत्वेनेत्यर्थः । * अन्वयायोगादिति * 'एकपदार्थप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति विशेष्यतासम्बन्धेनापरपदजन्योपस्थितिर्हेतुः' इत्यर्थपर्यवसितायाः 'पदार्थः पदार्थेनान्वेति' इत्यादिव्युत्पत्तेर्विरोधादुक्तान्वयासम्भवादिति भावः । * [illegible] * नचेति *

नच गोपदे साक्षात् सम्बन्ध एव विनिगमक इति वाच्यम् , एवमपि 'प्राप्तोदकः' 'कृतविश्वः' इत्याद्यपष्ठ्यर्थबहुव्रीहौ विनिगमकाभावात् । यौगिकानां कर्त्राद्यर्थकतया साक्षात्सम्बन्धाविशेषात् ।

नच 'पदद्वये लक्षणा' इति नैयायिकोक्तं युक्तम् , बोधावृत्तिप्रसङ्गात् । नच परस्परं तात्पर्यग्राहकत्वादेकस्यैवैकदा लक्षणा, न द्वयोरिति न बोधावृत्तिरिति वाच्यम् , एवमपि विनिगमनाविरहतादवस्थ्येन लक्षणाया असम्भवात् ।

नच चरमपदे एव सा, प्रत्ययार्थान्वयानुरोधात् , प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तेरिति वाच्यम् , एवं हि बहुव्रीह्यसम्भवापत्तेः । "अनेकमन्यपदार्थे" (पा० सू० २ । २ । ४)

प्रभा

साक्षात्सम्बन्ध इति—गोपदे लक्षणायां स्वस्वनिरूपितस्वामित्वरूपसाक्षात्सम्बन्धः शक्यसम्बन्धः, चित्रपदस्य तु गुणवाचित्वात् स्वसमवायिनिष्ठस्वत्वनिरूपितस्वामित्वरूपः शक्यसम्बन्धो गोघटितपरम्परासम्बन्धो लक्षणारूपो वाच्य इति लाघवमेव गोपदे लक्षणायां विनिगमकम् । नैयायिकमते शुक्लादिशब्दवच्चित्रशब्दस्य गुणवाचकत्वेन शक्यसम्बन्धः परम्परारूप इत्यस्य वक्तुं शक्यत्वादत आह—एवमपीति—गोपदे लक्षणायां लाघवरूपविनिगमकसत्त्वेन निर्वाहेऽपीत्यर्थः । प्राप्तोदक इति—'द्वितीया श्रितातीत' इत्यनेन द्वितीयान्तस्य प्राप्तशब्देन समासविधानाज्ज्ञापकात्सकर्मकादपि कर्तरि क्तः । 'तयोरेव' इति सूत्रेण कर्मणि क्ते तु अभिहितत्वेन द्वितीयाया अप्राप्त्या समासविधानवैयर्थ्यं स्पष्टमेव । प्राप्तमुदकं यमिति कर्मार्थे बहुव्रीहिः । अत्र प्राप्तोदकपदयोः समानार्थकत्वम् । प्राप्तिकर्त्रभिन्नमुदकमित्यर्थात् । कृतविश्व इति—कर्मणि क्तः । अत्रापि कृतविश्वशब्दयोरेकार्थबोधकत्वम्, कृतिकर्माभिन्नं विश्वमित्यर्थात् । एवंविधेषु कर्मादिवाचकप्रत्ययान्तघटितेषूभयोः समानार्थकत्वेन तुल्यैव शक्यसम्बन्धरूपा लक्षणेति पूर्वपदे उत्तरपदे वेत्यत्र विनिगमनाविरह एव । अपष्ठ्यर्थेति—ननु 'अध्यापकपुत्रको देवदत्तः' 'याचकगुरुपको ग्रामः' इत्यादौ षष्ठीसप्तम्यर्थबहुव्रीहावपि द्वयोर्द्रव्यवाचकतया विनिगमनाविरहस्यैव सत्त्वात् परमताभिप्रायेणापि अपष्ठ्यर्थ इति संकोचोऽसङ्गत इति चेन्न, षष्ठीसप्तम्यर्थबहुव्रीहौ गुणवाचकस्य विशेषणत्वे 'पीताम्बरः' 'चित्रगुः' इत्यादौ विनिगमकसत्त्वेन 'अपष्ठ्यर्थे' इत्युक्तेः । तथाच षष्ठ्यर्थबहुव्रीहिपदेन गुणवाचकपदघटितबहुव्रीहेरेव ग्रहणम्, नतु षष्ठ्यर्थबहुव्रीहिमात्रस्य । इदमपि नैयायिकमतेन । शाब्दिकनये तु तेषामपि गुणिवाचकतया अपष्ठ्यर्थ इति संकोचो व्यर्थ एव । पदद्वय इति— चित्रपदं गोपदञ्च चित्रगवीस्वामिनि लाक्षणिकमित्यर्थः । विनिगमनेति—कस्य पदस्य तात्पर्यग्राहकत्वं कस्य लक्षणेत्यत्र विनिगमनाविरहतादवस्थ्यमेवेति भावः । ननूत्तरपदस्य विभक्तिसन्निहिततया वक्ष्यमाणव्युत्पत्तिरेव विनिगमिका भविष्यतीत्यत आह—नचेति । असम्भवापत्तेरिति—यत्समुदायघटकमनेकं सुबन्तमन्यपदार्थप्रतिपादकं तादृशसमुदायस्य बहुव्रीहिसंज्ञाविधानेन उत्तरपदमात्रस्यान्यपदार्थप्रतिपादकत्वे बहुव्रीहिसंज्ञाविधायकशास्त्राप्राप्त्या बहुव्रीह्यसम्भवापत्तेरित्यर्थः ।

दर्पणव्याख्या

*साक्षादिति* गोद्वारक इत्यर्थः । तथाच षष्ठ्यर्थबहुव्रीहौ न व्युत्पत्त्यन्तरकल्पनमिति भावः * पदद्वय इति * विनिगमकाभावादिति भावः *नैयायिकेति* अस्य प्राचीनेत्यादिः । एकदेशान्वयपक्षे हि तैरित्थमुक्तम् *बोधावृत्तीति* बोध्यमानस्य स्वामिनो द्वेधा भानापत्तेरित्यर्थः । *विनिगमनाविरहेति* चित्रपदं तात्पर्यग्राहकमुत गोपदमित्येकतरपक्षपातियुक्तिविरहतादवस्थ्येनेत्यर्थः । *असम्भवादिति* एकतरपदे लक्षणाया असम्भवादित्यर्थः । पदद्वये लक्षणायान्तु उक्तदोष इति भावः । प्रत्ययार्थान्वयानुपपत्तिरेव उत्तरपदे लक्षणाया विनिगमिका भविष्यतीत्याशङ्क्य निराचष्टे—*नचेति* *एवं हीति* [illegible]

इत्यनेकसुबन्तानामन्यपदार्थप्रतिपादकत्वेन तद्विधानात् ।

किञ्चैवं सति घटाऽऽदिपदेष्वपि चरमवर्ण एव वाचकताकल्पना स्यात्, पूर्वपूर्ववर्णानां तात्पर्यग्राहकत्वेनोपयोगसम्भवात् । एवं सति चरमवर्णमात्रश्रवणेऽर्थबोधापत्तिरिति चेद् अत्राप्युदकपदमात्रश्रवणादर्थप्रत्ययापत्तिस्तुल्येत्यन्यत्र विस्तरः ।

## प्रभा

तद्विधानादिति—अयम्भावः—यस्मिन्नर्थे यस्य शब्दस्य शास्त्रेण साधुत्वं बोध्यते तस्य शब्दस्य तेन शास्त्रेणार्थवाचकत्वं न विधीयते, किन्तु लोकसिद्धं तत्तदर्थप्रतिपादकत्वमुद्देश्यतावच्छेदकत्वेनाश्रित्य तत्तत्कार्यविधानद्वारा तत्तच्छब्दानां साधुत्वं बोध्यते । अत एव पङ्क्तिविंशत्यादिशब्दानां व्यवहारतस्तत्तदर्थवाचकत्वस्य सिद्धत्वेऽपि 'पङ्क्तिविंशति' इति सूत्रेण साधुत्वबोधनं सङ्गच्छते । अत एव समर्थसूत्रे भाष्ये—'स्वभावत एव तेषां शब्दानामर्थेष्वभिनिविष्टानां निमित्तत्वेनान्वाख्यानं क्रियते' इत्युक्तम् । एवञ्च लौकिकमर्थप्रतिपादकत्वं निमित्तत्वेनाश्रित्य बहुव्रीहिसंज्ञा विधीयते । तच्च भवन्मते सुबन्तसमुदाये नास्तीति बहुव्रीह्यसम्भव इति ।

ननु चरमपदे लक्षणास्वीकारेऽपि पूर्वपदमपि तादृशलक्षणायां तात्पर्यग्राहकतया अन्यपदार्थे वर्तत एवेति बहुव्रीह्यसम्भवोक्तिश्चिन्त्येत्यत आह—किञ्चेति । एवम्=बहुव्रीहौ चरमपदे एव लक्षणायाम् । ननु चरमवर्णे एव वाचकताऽस्तु को दोष इति, अत आह—एवं सतीति—चरमवर्णे एव वाचके सतीत्यर्थः । अर्थबोधापत्तिरिति—उदककर्तृकप्राप्तिकर्मरूपार्थबोधापत्तिरित्यर्थः । एतेन उदकशब्दादप्यर्थबोधो जायते एवेत्यपास्तम् । ननु तादृशार्थबोधकत्वप्रकारकतात्पर्यग्राहकपूर्वपदाभावान्नोदकमात्रश्रवणात् तदर्थबोधापत्तिः । किञ्च कोशादिप्रामाण्येन वर्णसमुदायात्मकघटादौ शक्तिरङ्गीक्रियते, अत्र तु चरमपदस्य लक्षणयैवान्यपदार्थबोधोपपत्तौ अनन्यलभ्यो हि शब्दार्थः' इति न्यायेन समुदायशक्त्यसिद्धिरत आह—अन्यत्र विस्तर इति—भूषणे विस्तर इत्यर्थः । तत्र हि प्रत्ययानां सन्निहितगतस्वार्थबोधकत्वस्वीकारो न सम्भवति 'सर्वकः' 'दधि इयद्

## दर्पणव्याख्या

पदार्थलक्षकत्वे इत्यर्थः । बहुव्रीह्यसम्भवे हेतुमाह—*अनेकमिति* *तद्विधानादिति* बहुव्रीहिविधानादित्यर्थः ।

अयम्भावः । वृत्तेर्विशिष्टार्थकत्वं न शास्त्रैकगम्यम् । "अचतुर" इत्यादावर्थानादेशनात् । किन्तु लौकिकव्यवहारगम्यम् । "स्वभावत एव तेषां शब्दानामेष्वर्थेष्वभिनिविष्टानां निमित्तत्वेनान्वाख्यानं क्रियते" इति समर्थसूत्रभाष्यात् । "अनेकमन्यपदार्थे" (पा० सू० २ । २ । २४) "चार्थे द्वन्द्वः" (पा० सू० २ । २ । २९) इत्यादीनामनेकप्रथमान्तमन्यार्थप्रतिपादकं बहुव्रीहिसंज्ञकं भवति. चार्थे वर्तते यः प्रथमान्तसमुदायः स द्वन्द्वसंज्ञको भवतीति क्रमेण लोकसिद्धार्थानुवादेन बहुव्रीह्यादिसंज्ञाविधायकत्वमात्रम्, अर्थस्यापि विधाने वाक्यभेदापत्तेः । स्वसमानार्थकवाक्यानिवृत्तये विभाषाऽधिकारोऽपि विधेयः स्यात् । एवञ्च सुबन्तसमुदायस्यान्यार्थप्रतिपादकत्वे कथं बहुव्रीहिः स्यादिति । नन्वेकपदस्यान्यार्थप्रतिपादकत्वे तात्पर्यग्राहकतयाऽपरपदस्याप्युपयोगित्वेन समुदायस्य विशिष्टार्थप्रतिपादकत्वमविकलमत आह—*किञ्चैवमिति* समासस्थचरमपदस्यैव लक्षकत्वे सतीत्यर्थः । इष्टापत्तावाह—*एवं सतीति* चरमवर्णस्य वाचकत्वे सतीत्यर्थः *अत्रापि* प्राप्तोदकादावपीत्यर्थः *आपत्तिरिति* आपाद्यव्यतिरेकनिर्णयकालिकाऽऽपाद्यव्याप्याऽऽपादकवत्ताज्ञानसत्त्वादिति भावः ।

नन्वुदकपदमात्रश्रवणान्न लक्ष्यार्थबोधः, तदानीं लक्षणाकल्पिकायास्तात्पर्यग्राहकपूर्वपदोपस्थितेरभावादत आह—*अन्यत्रेति* भूषणे इत्यर्थः । *विस्तर इति* उत्तरपदलक्ष्यार्थे प्रत्ययार्थान्वयाभावेन तत्र प्रत्ययार्थानन्वयाऽऽपत्तिरित्यादि

एवञ्च, अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना, उक्तयुक्तेः। अगत्या शक्त्यन्तरकल्पनेत्यर्थः।
बन्धुतत्याग इत्यस्य बन्धुमशक्त्योपपत्तिरिति व्युत्पत्तित्यागश्च तत्रास्ति। तत् किं सर्वत्र समासे शक्तिः
न कल्पयेरिति वाक्यार्थः। यत्तु व्यपेक्षावादिनो नैयायिक-मीमांसकादयः। न समासे शक्तिः,
'राजपुरुषः' इत्यादौ राजपदादेः सम्बन्धिलक्षणयैव 'राजसम्बन्ध्यभिन्नः पुरुषः' इति बोधोपपत्तेः।

प्रभा

दधाति' इत्यादौ व्यभिचारात्। 'दधि बहुपटुर्ददाति' इत्यत्र बहुजर्थस्य दध्नि अन्वयापत्तेश्चेति प्रातिपदिकात्
कर्मत्वादौ स्यादय इति 'कर्मणि द्वितीया' इत्यादिशास्त्रैर्बोधितत्वात् प्रत्यासत्तिन्यायेन लब्धायाः 'प्रत्ययानां
प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्' इति व्युत्पत्तेः तादृशव्युत्पत्तिसिद्धस्य प्रकृतिप्रत्यययोः परस्परान्वितार्थबोधकत्वे
एव साधुत्वस्य भङ्गः, उत्तरपदमात्रस्याप्रकृतित्वात्, प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतापर्याप्त्यधिकरणस्यैव
प्रकृतित्वात्। तदर्थं व्युत्पत्त्यन्तरस्वीकारापेक्षया समुदायशक्तिरेव न्याय्येत्यभिप्रायेणाह—एवञ्चेति।
व्युत्पत्त्यन्तरकल्पना=समुदाये शक्तिकल्पना। उक्तयुक्तेरिति—प्रकृत्यर्थप्रत्ययार्थयोरन्वयानुपपत्तिरूपयुक्ते-
रित्यर्थः। तत्किमिति—तदिति तस्मादित्यर्थेऽव्ययम्। कल्पयेरिति—सम्प्रश्ने लिङ्। बोधोपपत्तेरिति—न चैवं
समासस्य वृत्त्या अर्थविषयकबोधजनकत्वाभावात् प्रातिपदिकत्वानापत्तिः, स्व—स्वावयवान्यतरनिष्ठवृत्त्याऽ
र्थविषयकबोधजनकत्वरूपार्थवत्त्वस्य ग्रहणेनादोषात्, समासग्रहणसामर्थ्यादेव प्रातिपदिकत्वसम्भवाच्च।

दर्पणव्याख्या

*व्यपेक्षावादिन इति* समर्थसूत्रे "परस्परान्वययोग्य-
*व्युत्पत्तीति* व्युत्पत्तित्यागः प्रकृते प्रतिज्ञाहानिरेव! *न समासे शक्तिरिति*। समासे=राजपुरुषादिसमुदाये, विशिष्टशक्तिर्न
तत्रोक्तम्। सरूपसामर्थ्यमेव व्यपेक्षा" इतिवादिन इत्यर्थः। संसृष्टार्थं समर्थमिति भाष्यकारोक्तेः, संसर्गस्य
स्त्यर्थः। समासप्रयोजकत्व बलप्रत्येकपदवृत्त्यतिरिक्ते नास्तीति यावत्। 'इसुसोः सामर्थ्ये" (पा० सू० ८। ३। ४४) इत्यत्र समर्थपदस्य
पृथगुपस्थितिनिबन्धनत्वात् परस्परव्यपेक्षैव सामर्थ्यम्। अन्यथा समासादावेकार्थीभाव, पराङ्गवद्भावादौ व्यपेक्षेति
साहशार्थकत्वस्य सर्वैरेवाङ्गीकारात्, पराङ्गवद्भावानुरोधाच्च। "ऋतेन मित्रावरुणावृतावृधावृतस्पृशौ" इत्यादावृतेनेत्यादेः पराङ्गवद्भावे सति
वाक्यभेदापत्तेः। तत्र व्यपेक्षाऽनादरे "ऋतेन मित्रावरुणा
'आमन्त्रितस्य च" (पा० सू० ६। १। १९८) इत्याद्युदात्तताऽऽपत्तिः।
नच "तन्निमित्तग्रहण कर्तव्यम्" इति वार्तिकेनाऽऽमन्त्रितार्थस्य यन्निमित्तं तद्वाचकमेव पराङ्गवदित्यर्थकेन नियमि
तत्वात् पराङ्गवद्भावाप्रसक्तिरिति वाच्यम्, समर्थपरिभाषामाश्रित्य तत्प्रत्याख्यानस्यैव न्याय्यत्वात्। "ऋतेन मित्रावरुणौ"
इत्येतयोः समभिव्याहृतक्रियान्वयित्वेन परस्परमसामर्थ्यात् "मित्रावरुणावृतस्पृशौ" एतयोस्तु षाष्ठिकान्वयबोधसत्त्वाद
स्त्येव सामर्थ्यम्, स्पष्टं चेद वेदभाष्ये। अत एवानन्तरपाठोऽपि चरितार्थः। 'पुत्रो राज्ञः पुरुषो देवदत्तस्य' इत्यादौ
निरुक्तव्यपेक्षारूपसामर्थ्याभावादेव समासाप्रसक्तेः।
समर्थसूत्रार्थस्तु पदसम्बन्धी समासादिविधिः साक्षात्परम्परया वा स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वरूप
व्यपेक्षाऽपरनामकसामर्थ्यवत्पदाऽश्रितो बोध्य इति बहुव्रीहौ चित्राऽऽदिविषयतायाः साक्षात्प्रयोजकत्वाभावात्परम्परयेति।
अपि च वृत्तित्वावच्छेदेनैकार्थीभाववादिमते स्वावयवार्थातिरिक्तार्थाभिधायकत्वरूपवृत्तिलक्षणस्य कर्मधारयेऽव्याप्ति,
तत्रावयवार्थातिरिक्तार्थत्वाभावात्। वृत्तित्वसामानाधिकरण्येन रथन्तराऽऽदिशुद्धरूढे पङ्कजादियोगरूढे च कोशाऽ
दिसिद्धायाः समुदायशक्तेरस्माभिरप्यभ्युपगमेन सिद्धसाधनात्। शुद्धयौगिकचित्रग्वादिसमुदाये शक्त्यभ्युपगमस्तु कोशाऽ
वनुक्तत्वात्समासघटकप्रत्येकपदवृत्त्यैवोपपत्तेश्च हेय इति तदभिसन्धिः। शक्तिकल्पनानुपपत्त्यभावं तत्प्रयोजनतया दर्शयति—
*राजपुरुष इत्यादाविति* अत्र राजपुरुषपदमश्रूयमाणविभक्तिपूर्वपदकषष्ठीसमासपरम्, तेन 'दास्याः पुत्रः' इत्यादलुक्-
समासे न दोषः।

अत एव राज्ञः पदार्थैकदेशतया न तत्र 'शोभनस्य' इत्यादिविशेषणान्वयः। नरा घनश्यामः, 'निष्कौशाम्बिः' 'गोरथः' इत्यादौ इवादिप्रयोगापत्तिः, उक्तार्थतयैव क्रान्तादिपदप्रयोगासम्भवात्। न वा "विभाषा" (पा० सू० २।७।११) इति सूत्रावश्यकत्वम्, लक्षणया 'राजसम्बन्ध्यभिन्नः पुरुषः' इति बुबोधयिषायां समासस्य, राजसम्बन्धवानिति बुबोधयिषायां विग्रहस्येत्यादिप्रयोगनियमसम्भ-

प्रभा

अत एव=राजसम्बन्धिनि लक्षणाभ्युपगमादेव। तत्रेति—तत्र=राजनि 'पदार्थः पदार्थेन' इति न्यायविरोधादिति भावः। उक्तार्थकतयेति—'घनश्यामः' इत्यत्र घनशब्दस्य घनसदृशे, 'निष्कौशाम्बिः' इत्यत्र निःशब्दस्य द्योतकत्वमाश्रित्य कौशाम्बीपदस्य कौशाम्ब्यवधिकनिष्क्रमणकर्तरि, 'गोरथः' इत्यत्र गोशब्दस्य गोयुक्ते च लक्षणयोक्तार्थकतयेत्यर्थः। प्रयोगासम्भवादिति—'उक्तार्थानामप्रयोग' इति न्यायादिति भावः। यदुक्तं पूर्वं 'विभाषा' इति सूत्रञ्च कार्यमिति तत्र समाधातुमाह—न वेति। विग्रहस्येति—'राज्ञः पुरुषः' इति विग्रहस्येत्यर्थः। अयम्भावः—'राज्ञः' इत्यत्र षष्ठ्यर्थः सम्बन्धस्तत्र राजपदार्थस्य निरूपितत्वसम्बन्धेनान्वयः। सम्बन्धस्य च स्वरूपसम्बन्धेन पुरुषेऽन्वय इति राजनिरूपितसम्बन्धवान् पुरुष इति बुबोधयिषायां विग्रहस्य प्रयोगसम्भवादिति। नियमसम्भवादिति—नच कर्मधारये समासेन, विग्रहेण च एकविधबोधस्यैव दर्शनेन तत्र उक्तनियमानुपपत्तिरिति वाच्यम्, 'नीलमुत्पलम्' इति वाक्ये नीलपदोत्तरविभक्तेरभेदोऽर्थः, तस्य स्वरूपसम्बन्धेन उत्पलेऽन्वयविवक्षायां वाक्यस्य, नीलपदस्य नीलभेदाभाववति लक्षणया नीलभेदाभाववदभिन्नम् उत्पल-

दर्पणव्याख्या

नच सम्बन्ध एव षष्ठ्योऽस्त्वेवञ्च व्याससमासयोः समानाकारबोधजनकत्वप्रवादोऽप्युपपत्स्यते। राजाऽऽदिसम्बन्धरूपलक्ष्यार्थस्योत्तरपदार्थे आश्रयतयाऽन्वयेनैवोपपत्तौ सम्बन्धिनि लक्षणाऽभ्युपगमे प्रयोजनाभावश्चेति वाच्यम्, 'राजा पुरुषः' इत्यादावपि राजादिपदार्थस्य स्वस्वामिभावसम्बन्धेन पुरुषादावन्वयवारणाय निपातातिरिक्तनामार्थनिष्ठाभेदातिरिक्तसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति विशेष्यतासम्बन्धेन प्रत्ययनिपातान्यतरजन्योपस्थितेर्हेतुत्वस्यावश्यकतया प्रकृते राजसम्बन्धरूपनामार्थस्य प्रत्ययनिपातान्यतरानुपस्थिते पुरुषादावन्वयासम्भवात्, निपातातिरिक्तत्वविशेषणात् 'चन्द्र इव मुखम्' इत्यादाविवपदार्थसादृश्यस्य नामार्थस्य प्रत्ययजन्यापरिस्थित्यविषये मुखे निपातातिरिक्तनामार्थचन्द्रस्य तथोपस्थित्यविषये सादृश्येऽन्वयेऽपि न क्षति। अभेदातिरिक्तसम्बन्धावच्छिन्नत्वस्य प्रकारताया निवेशाच्च 'राजा पुरुषः' इत्यादावभेदान्वयेऽपि न सा।

नच समस्यमानातिरिक्तत्वेनापि नाम्नो विशेषणीयत्वान्न प्रकृतेऽनुपपत्तिरिति वाच्यम्, गौरवात्, क्वचिद्गत्या सङ्कोचेऽपि सर्वत्र सङ्कोचस्यान्याय्यत्वाच्च, प्रकृते सम्बन्धिलक्षणाऽभ्युपगमरूपगतिसत्त्वात्, निपातानां द्योतकत्वनये घटादिपदानां घटादिप्रतियोगिकलाक्षणिकतयैवोपपत्तौ व्युत्पत्तौ निपातातिरिक्तत्वस्याप्रवेशाच्चेति भावः।

*अत एवेति* पूर्वपदस्य सम्बन्धिलाक्षणिकत्वादेवेत्यर्थः। *(न) विशेषणान्वय इति* "पदार्थः पदार्थेनान्वेति" इति व्युत्पत्तेरिति भावः। ननु 'गभीरायां नद्यां घोषः' इत्यादौ नदीपदलक्ष्यनदीतीरार्थैकदेशनद्यां गभीराद्यन्वयवदत्राप्येकदेशान्वयो दुर्वार इति चेन्न, दृष्टान्तासिद्धेः। तत्राप्येतन्मते नदीपदस्य गभीरनदीतीरलक्षकतया गभीरपदस्य तात्पर्यग्राहकतायाश्च वक्ष्यमाणतया अदोषात्, तादृशव्युत्पत्तेः ससम्बन्धिव्यतिरिक्तविषयतया चैत्रस्य नप्तेत्यादावेकदेशान्वयेऽपि क्षतिविरहादिति। *उक्तार्थतयेति* तत्र निरादीनां द्योतकतया कौशाम्ब्यादिपदस्यैव कौशाम्ब्यवधिकनिष्क्रमणकर्त्रर्थे लक्षणाऽभ्युपगमेनैवेप्सितार्थबोधोपपत्तौ क्रान्तादिशब्दानामुपादानासम्भवादित्यर्थः। *आवश्यकत्वमिति* तेन पारायणादावदृष्टार्थकतया स्पष्टप्रतिपत्त्यर्थकतया वा तत्प्रयोगेऽपि न क्षतिरिति भावः।

वोधात् ।
वात् । नापि पङ्कजपदप्रतिबन्दी शक्तिसाधिका, तत्रावयवशक्तिमजानतोऽपि
नच शक्तिग्रहे लक्षणया तेभ्यो विशिष्टार्थप्रत्ययः सम्भवति । अत एव राजादिपदशक्तिग्रहे
'राजपुरुषः' 'चित्रगुः' इत्यादौ न बोधः। नापि (नच) चित्रगुरित्यादौ लक्षणासंभवेऽप्यदृष्टदर्थबहुव्रीहौ
लक्षणाया असम्भवः बहुव्युत्पत्तिभञ्जनापत्तेरिति वाच्यम्, 'प्राप्तोदकः' इत्यादावुदकपदे एव लक्षणा-
स्वीकारात् । पूर्वपदस्य यौगिकत्वेन तल्लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बितत्वात्,

प्रभा

मिति बुबोधयिषायां समासस्य च वक्तुं शक्यत्वात्।
नचैवमपि द्वन्द्वे समासवाक्ययोर्नियमानुपपत्तितादवस्थ्यम्, उत्तरपदेन लक्षणया साहित्यविवक्षायां
द्वन्द्वस्य, चशब्देन साहित्यविवक्षायां वाक्यस्य च प्रयोगनियमसम्भवात्। एवमौपगवादौ तद्धितादिवृत्तावपि
बोध्यम्। उपगुनिरूपितसम्बन्धवदपत्यमिति विवक्षायां वाक्यस्य, उपगुसम्बन्ध्यभिन्नमपत्यमिति विवक्षायां
तद्धितवृत्तेश्च प्रयोगः। एवमन्यत्राप्यूह्यम्। शक्तिः पङ्कजशब्दवदिति पूर्वोक्तं दृष्टान्तं निराकरोति—नापीति।
प्रतिबन्दीति—अनिष्टान्तरप्रसक्तिकोक्तिरित्यर्थः। पङ्कजशब्दे समुदाये शक्तिस्वीकारोक्तिः समासेऽनिष्टशक्तिसाधिका
नेति भावः। शक्तिज्ञानं विना शक्यानुपस्थितौ शक्यसम्बन्धरूपलक्षणाया अभावेन लक्षणया पद्मत्वा-
वच्छिन्नस्य बोधो नैव सम्भवतीति भावः। एवञ्च पङ्कजपदेऽवयवशक्तिज्ञानेऽपि पद्मत्वावच्छिन्नविषयकबोधस्य
सर्वानुभवसिद्धतया तत्र समुदायशक्तिरावश्यकीति सिद्धम्। अत एव=अवयवशक्तिज्ञानस्य विशिष्टार्थबोध-
प्रयोजकत्वादेव। न बोध इति—तत्रावयवशक्तिज्ञानविरहदशायां शाब्दबोधाभावः सर्वानुभवसिद्ध इति
बोधाभावस्तत्र इष्ट एवेति भावः। अपदृष्टार्थं इति कारिकोक्तं दोषं परिहरति—नापीति—क्लिष्टितपुस्तकेषु
नापीत्येव पाठः। मुद्रितेषु नचेति। नापीत्यस्य वाच्यमित्यनेनान्वयः। लक्षणाया असम्भव इति—'असम्भवः'
इति प्रथमान्त एव पाठः, सप्तम्यन्तस्यानन्वितार्थकत्वादिति पद्मालिन। तल्लक्षणायाः=यौगिकपूर्वपदलक्ष-
णायाः। धातुप्रत्ययेति—धातुश्च प्रत्ययश्च तदर्थश्चेति धातुप्रत्ययतदर्थास्तेषां ज्ञानेन साध्यतयेत्यर्थः। धातु-
प्रत्ययज्ञानं विना तदर्थज्ञानासम्भवेनार्थज्ञानद्वारा धातुप्रत्ययज्ञानमपि लक्षणायाः प्रयोजकमिति भावः।

दर्पणव्याख्या

* प्रतिबन्दीति * पङ्कजादिपदे पद्मत्वादिविशिष्टशक्तत्वस्य उपगमस्त्वित्यर्थः। * अवयवशक्तिमजानतोऽपि *
इत्यपिना दृष्टान्त—दार्ष्टान्तिकयोर्वैषम्यं सूच्यते। *शक्तिग्रहे* अवयवशक्तिग्रहाभावे। *तेभ्यः* पङ्कजादिपदघटका-
वयवेभ्यः। *विशिष्टार्थप्रत्यय इति*। पद्मत्वादिरूपेण पद्मादिबोध इत्यर्थः। लक्षणायाः शक्यार्थत्वात्,
किन्तु समुदायशक्त्युपस्थिते तस्मिन्नवयवशक्त्युपस्थापितपङ्कजनिकर्तुरभेदान्वयोपगम एवेति भावः। *अत एवेति*।
तत्तदीयलक्षणाग्रहे तत्पदार्थज्ञानस्य हेतुत्वादेवेत्यर्थः उत्तरपदलक्षणायां विनिगमकमाह—*यौगिकत्वेनेति* ।
*विलम्बितत्वात्* इत्यनेन शीघ्रोपस्थितिकत्वमुत्तरपदलक्षणाया विनिगमकमिति सूचितम्।
ननु व्युत्पत्तिपक्षे यौगिकत्वमुदकादिपदानामपि समस्त आह—*प्रत्ययानामिति*। यथाश्रुतमङ्गत्यर्थंतस्योदकादौ
बाधात् प्रकृत्यर्थपदमन्यथा व्याचष्टे—*सन्निहितेति* 'दण्डिनमानय' इत्यादौ व्यवहितपदार्थे=दण्डादौ कर्मत्वाद्यन्वय-
वारणाय सन्निहितेति। तथाच "अणुरपि विशेषोऽध्यवसायकरः" इति न्यायेनोत्तरपदे एव लक्षणेति न बोधाऽऽवृत्तिरूप-
दूषणमपीति भावः। पूर्वोक्तदूषणान्तरमुद्धरति—

प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुरोधाच्च ।

घटादिपदे चातिरिक्ता शक्तिः कल्प्यमाना विशिष्टे कल्प्यते, विशिष्टस्यैव सङ्केतितत्वात् । बोधकत्वस्यापि प्रत्येकं वर्णेष्वसत्त्वात् । प्रकृते चात्यन्तसन्निधानेन प्रत्ययार्थान्वयसौलभ्यायोत्तरपदे एव सा कल्प्यत इति विशेषः ।

प्रभा

ननु 'शक्तं पदम्' 'शक्यसम्बन्धो लक्षणा' इति मते धातोः क्तप्रत्ययस्य च शक्तत्वेऽपि प्राप्तपदस्याशक्ततया तत्र शक्यसम्बन्धरूपलक्षणाया असम्भव इति क्तप्रत्यये एव लक्षणा वाच्या । तथाच तत्र लक्षणायां प्रत्ययमात्रज्ञानं तदर्थज्ञानञ्चापेक्ष्यते' उदकपदे लक्षणायामुदकपदज्ञानम्, तदर्थज्ञानञ्चापेक्ष्यते, इत्युभयत्रापि साम्यमेव, नहि पूर्वत्र धातुतदर्थज्ञानस्यापेक्षा, यतो विलम्बितत्वं स्यादितीदमसङ्गतम् । नच क्तप्रत्ययस्योदकफर्तृकप्राप्तिकर्मणि लक्षणायां तात्पर्यग्राहकतया धातुज्ञानं तदर्थज्ञानञ्चापेक्ष्यत एवेति वाच्यम्, उदकेऽपि तादृशार्थे लक्षणायां पूर्वपदतदर्थज्ञानस्यापेक्षितत्वेन साम्याक्षतेरिति यौगिके पूर्वपदे लक्षणायां विलम्बितत्वं दुरुपपादमित्यरुचेराह—प्रत्ययानामिति । उक्तव्युत्पत्त्यनुरोधेन चरमपदे एव लक्षणेत्यत्र प्रतिबन्दितया यदुक्तं शाब्दिकेन घटपदेऽपि चरमवर्णे एव वाचकता स्यादिति तन्निराकरोति—घटादिपद इति । अतिरिक्तेति—न्यतिरिक्तत्वं भिन्नत्वम्, तच्च यत्किञ्चित्प्रतियोगिकं सर्वत्रैवेत्यसङ्गतमिति चेन्न, घटशब्दघटकधातुप्रत्ययशक्तिप्रतियोगिकभिन्नत्वस्य, घटपदातिरिक्त यद्गृहीतशक्तिकं पदं तच्छक्त्यतिरिक्तत्वस्य, बोधकत्वापेक्षयाऽतिरिक्तत्वस्य वा विवक्षितत्वात् । सङ्केतितत्वादिति—कोशादिना सङ्केतितत्वस्य बोधनादित्यर्थः । ननु बोधजनकत्वरूपा शक्तिश्चरमवर्णे एवास्तु, किन्तु बोधजनकत्वं शक्तिं विना अनुपपन्नमिति तदतिरिक्ता कल्प्यमाना शक्तिर्

रणत्वस्यापीत्यर्थः ।

तदन्यथानुपपत्त्या

इति—घटादिपदापेक्षया समासस्य लक्षणायां भेद इत्यर्थः । समासदृष्टान्तेन घटादिपदेषु चरमवर्णे अप-

दर्पणव्याख्या

*घटादिपदे चेति* । *कल्प्यमाना* इत्युक्त्या अक्लृप्तत्वं सूचयति—*विशिष्टस्यैवेति* व्यवहारादिना तत्रैव तन्निर्धारणादिति भावः । *असत्त्वात्* इत्यस्य येन तत्रापि विनिगमकगवेषणा स्यादिति शेषः । *उत्तरपद इति* प्रासादकादिघटकोदकादिपदे इत्यर्थः । *सा* लक्षणा । *विशेष इति* घटादिपदात् समासस्य लक्षणाया वैरूप्यमित्यर्थः ।

अत्रेदं बोध्यम्—उपकुम्भोपकुम्भमित्यादावुत्तरपदस्यैव समीपाद्यर्थे लक्षणा, पूर्वपदं तात्पर्यग्राहकम् । तत्पुरुषेऽपि क्वचिदर्धपिप्पलीत्यादावेकदेशिनि चरमपदस्यैव सा पिप्पल्यर्धाद्यर्थे, इतरद् द्योतकम् । नीलोत्पलमित्यादिकर्मधारये तु न क्वापि सा, प्रत्येकपदशक्त्युपस्थितयोरभेदान्वयसौलभ्यात् । बहुव्रीहौ तूत्तरपद एव सेति सार एव व्यक्तम् । पाणिपादमित्यादिद्वन्द्वेऽप्युत्तरपदस्य पाणिपादसमाहारे लक्षणा, पदान्तरं द्योतकम् । तत्रैव परम्परया वादनकर्मत्वान्वयः । एवमितरेतरयोगद्वन्द्वे साहित्यापन्नप्रत्येकपदार्थयोरुत्तरपदस्यैव सा । अत एव द्विवचनाद्यर्थद्वित्वाद्यन्वयस्तत्र । समाहारद्वन्द्वे साहित्यं विशेष्यम्, अत्र तु विशेषणमिति भेदः ।

यद्वा समाहारद्वन्द्वेऽपि साहित्याप्रतीतेर्न तत्र लक्षणा, किन्तु प्रत्येकपदशक्त्युपस्थापितयोरेव साक्षाद् वादनकर्मतान्वयः । "द्वन्द्वश्च प्राणि" ( पा० सू० २ । ४ । २ ) इतिप्रकरणातिदिष्टैकत्वसमासस्यैव मुख्य समाहारपदव्यपदेश्यत्वम् । इतरत्र तु समाहार औपचारिकः । नाव इतरेतरयोगे तत्प्रसङ्गः । एवमितरेतरयोगेऽपि न लक्षणा, एकस्मृत्यारूढपदद्वयात्

स्वीकृतश्च घटादिपदेष्वपि चरमवर्णस्यैव वाचकत्वं मीमांसकम्मन्यैरित्याहुः ।

प्रभा

तितामापत्तिमिष्टापत्त्या परिहरन्नाह—स्वीकृतश्चेति। मीमांसकम्मन्यैरिति—आत्मानं मीमांसकं मन्यन्ते, न तु ते मीमांसका इति सूचनेन चरमवर्णस्य बोधकत्वाभाव एव सर्वसम्मतो न तु बोधकत्वमितीष्टापत्तिर्युक्तेति ध्वनितम्।

आहुरिति—अत्र व्यपेक्षावादिनः—'उपकुम्भम्' इत्यादौ प्रत्ययार्थान्वयसौलभ्याय उत्तरपदस्य

दर्पणव्याख्या

प्रत्येकशक्त्युपस्थितार्थयोर्द्वित्वान्वयसम्भवात्, एकक्रियाऽन्वयित्वरूपस्य एकबुद्ध्यवच्छिन्नत्वरूपस्य वा साहित्यस्य पश्चादेवागमेन पूर्वं तत्र लक्षणाग्रहासम्भवाच्च। 'चार्थे द्वन्द्वः' इत्यस्य चार्थान्वययोग्य इत्यर्थान्न तद्विरोधोऽपि।

युक्तञ्चैतत्, द्वन्द्वत्वावच्छिन्नस्य प्रधानीभूतार्थद्वयप्रतिपादकत्वे एव "द्वन्द्वः सामासिकस्य च" (गीता) इत्यनेन समासमूहमध्ये द्वन्द्वस्य विभूतितया परिगणनस्य भगवत्कृतस्य सङ्गतेः। विशिष्टशक्त्या, लक्षणया वा तस्य प्रधानीभूतसमासार्थप्रतिपादकत्वे तु समासान्तराद् द्वन्द्वस्याविशेषात्तदसङ्गतिः स्पष्टैव।

यत्तु भारतभावदीपे—सममेकेनाऽऽसनं समासो विदुषां गुरुशिष्याणां वा मन्त्रार्थं कथार्थं चैकत्रावस्थानम्। तत्र विदितमर्थजातं सामासिकम्, चातुरर्थिकष्ठक्, तस्य "ठस्येकः" (पा० सू० ७।३।५०) इतीकादेशः, "यस्येति च" (पा० सू० ६।४।१४८) इत्यल्लोपः। तस्य मध्ये द्वन्द्वम्—रहस्योऽहम् 'द्वन्द्वं रहस्य" (पा० सू० ८।१।१५) इति सूत्रे द्वन्द्वशब्दस्य रहस्यवाचित्वं शाब्दिकप्रसिद्धमिति व्याख्यातम्।

तत्तु विदितार्थस्य चतुर्थे चतुर्थ्यां च अदर्शनाद्रथन्तराधिकरणन्यायेन सङ्केतितसमासशब्दात् पारिभाषिकसमासरूपार्थस्यैवोपस्थितेरुचितत्वेन समासस्य सामूहिकठक्' समासशब्दात्तदनभिधानात्। 'द्वन्द्वं रहस्य" (पा० सू० ७।१।१५) इत्यनेन रहस्ये व्युत्पादितद्वन्द्वस्य नित्यनपुंसकत्वेन पुंल्लिङ्गस्य तद्वाचित्वासम्भवात्। समासवाचिनश्च तस्य पुंल्लिङ्गतायाः "चार्थे द्वन्द्वः" (पा० सू० २।२।२९) इत्यादौ दृष्टत्वात् पारिभाषिकत्वाच्च तेन समासस्यैव ग्रहणस्योचितत्वाच्च चिन्त्यम्।

नच साहित्याभानेऽन्यतरस्य क्रियाऽन्वयविवक्षायाम् 'पश्य धव खदिरं छिन्धि' इतिवाक्यवत् 'पश्य धवखदिरौ छिन्धि' इति प्रयोगापत्तिरिति वाच्यम्, प्रत्ययार्थद्वित्वावच्छिन्नधर्मिकस्यैव पदार्थान्तरान्वयबोधस्यानुभव दर्शनेनात्रापि तदवच्छेदेनान्वयस्यैवौचित्यात्।

नच द्वित्वान्वययोग्यतावच्छेदकसाहित्यभानमन्तरेण द्वित्वान्वय एव दुर्लभ इति वाच्यम्, योग्यताऽवच्छेदकोपस्थितेरनपेक्षणात्, उपस्थितयोर्योग्य एव तदन्वयात्। अत एव 'घटेन जलमानय' इत्यत्र छिद्रेतरत्वस्य योग्यताबलेनान्वयः, न तु छिद्रेतरत्वप्रकारकः शाब्दबोधः, तत्र प्रकृत्यर्थतावच्छेदकस्यैव द्वित्वान्वययोग्यतावच्छेदकत्वेऽपि क्षतिविरहाच्च। विवेचितं चेदमधिकमन्यत्र।

नच 'क्षौमवसनावग्निमादधीयाताम्' इत्यत्र समुच्चयसाहित्यलाभो न स्यादिति वाच्यम्, "यत् कर्तव्यं तदनया सह" इति वचनान्तरात्तत्सिद्धेः। यद्यपि द्वन्द्वे परस्परान्वयित्वरूपव्यपेक्षा दुर्घटा, तथापि "चार्थे द्वन्द्वः" (पा० सू० २।२।२९) इति विधिसामर्थ्यादेव तत्र समासः, तदर्थं लुक्, समुच्चयान्वाचययोस्त्वनभिधानादेव न द्वन्द्व इति स्पष्टं भाष्ये। यत्त्वेकस्यां क्रियायामेकरूपेणान्वयित्वमेव तत्र सामर्थ्यमिति, तन्न, चनिर्देशस्य क्वचित् पूर्वोक्तस्य सामर्थ्यस्याश्रयणे समर्थसूत्रे वाक्यभेदापत्तेः, एकक्रियान्वयित्वस्य ततोऽननुभवाच्चेति पूर्वोक्तापत्तिमिष्टत्वेनापि परिहरति—* स्वीकृतमिति* ।

* चरमवर्णस्यैवेति * पूर्वपूर्ववर्णानुभवजन्योद्बुद्धसंस्कारसहितान्तिमवर्णस्येत्यर्थः। नातः केवलचरमवर्णा-

अत्रोच्यते—समासे शक्तिस्वीकारे तस्य प्रातिपदिकसंज्ञादिकं न स्यात्, अर्थवत्त्वाभावात्,

प्रभा

कुम्भसमीपे लक्षणा, पूर्वपदं तात्पर्यग्राहकम्। तत्पुरुषे एकदेशिसमासेऽपि उत्तरपदे एव लक्षणा, पूर्वपदं तात्पर्यग्राहकम्। कर्मधारये तु न लक्षणा, किन्तु शक्यार्थयोरभेदान्वयः। समाहारद्वन्द्वे 'पाणिपादम्' इत्यादौ उत्तरपदस्य पाणिपादादिसमाहारे लक्षणा, पूर्वपदं तादृशार्थलक्षणायां तात्पर्यग्राहकम्। समाहारः=समूहः= अपेक्षाबुद्धिविशेषविषयताश्रयः। न च समाहारे कर्मत्वाद्यनन्वयः, बाधादिति वाच्यम्, स्वघटकवृत्तित्वरूप-परम्परासम्बन्धेनान्वयसम्भवात्। इतरेतरयोगद्वन्द्वेऽप्युत्तरपदस्य साहित्यविशिष्टधवखदिरादौ लक्षणा। अत एव साक्षात्परम्परया वा निरूप्यनिरूपकभावापन्नविषयताप्रयोजकत्वरूपसामर्थ्यं द्वन्द्वेऽप्युपपन्नम्। स्वार्थनिष्ठविषयतानिरूपितविषयतानिरूपितविषयताप्रयोजकत्वसम्बन्धेन धवखदिरपदयोः परस्परविशिष्टत्व-रूपं सामर्थ्यं सिध्यति। धवनिष्ठविषयतानिरूपिता या साहित्यनिष्ठा विषयता तन्निरूपिता खदिरनिष्ठा या विषयता तत्प्रयोजकत्वं खदिरपदस्य। एवं खदिरपदविशिष्टं धवपदमपि बोध्यम्। साहित्यस्याभाने तु उक्तसामर्थ्यानुपपत्तिः। एकधर्मावच्छिन्नेऽन्वयित्वरूपमेव सामर्थ्यमिति तु न युक्तम्, 'समर्थः पदविधिः' इत्यस्यावृत्तिप्रसङ्गात्। विभक्त्यर्थसङ्ख्याया विशेष्यभूतधवखदिरयोरन्वयः। समाहारे तु साहित्यस्य विशेष्यतया तद्गतैकत्वमेव विभक्त्या बोध्यते इत्येकवचनमेव। यदि तु द्वन्द्वविषये साहित्यस्य न प्रतीतिस्तदा न तत्र लक्षणा। अत एवोभयपदार्थप्रधानो द्वन्द्व इत्युद्घोषः सङ्गच्छते। 'द्वन्द्वश्च प्राणि' इत्यादिशास्त्रेण विहितसमाससंज्ञकत्वं समाहारद्वन्द्वत्वम्, तदतिरिक्तद्वन्द्वत्वमितरेतरयोगत्वम्। ननु धवखदिरादेः चार्थ-वाचकत्वाभावाद् द्वन्द्वानुपपत्तिः, 'चार्थे द्वन्द्वः' चार्थान्वययोग्यकार्थानां द्वन्द्व इत्येवार्थः। अत एव गीता-याम्—'द्वन्द्वः सामासिकस्य च' इत्युक्तिः सङ्गच्छते। सामासिकस्येत्यस्य समाससमूहस्य मध्ये इत्यर्थात्। समासान्तरे पूर्वपदोत्तरपदार्थयोर्विशेष्यविशेषणभावो द्वन्द्वे सर्वपदार्थानां समप्राधान्यमित्येव श्रेष्ठत्वम्। न च साहित्यस्य द्वन्द्वबोध्यत्वाभावे उक्तसामर्थ्यानुपपत्तिः, द्वन्द्वोत्तरभाविद्वित्वान्वयविषयतामादाय सामर्थ्यस्य सूपपादत्वात्। एवञ्च 'न धवं छिन्धि' 'खदिरञ्च पश्य' इत्यत्रैव द्वन्द्वानुपपत्तिः, साक्षात्परम्परया वा निरूप्यनिरूपकभावापन्नविषयताप्रयोजकत्वरूपसामर्थ्यस्य 'इसुसोः सामर्थ्ये' इत्यत्र स्वीकृतत्वात्। अत एव 'ऋतेन, मित्रावरुणावृता' इत्यादौ व्यपेक्षाभावे पराङ्गवद्भाववारणाय आमन्त्रितस्य यन्निमित्तं तद्वाचकपदं पराङ्गवद्भवतीत्यर्थकस्य 'तन्निमित्तग्रहणं कर्त्तव्यम्' इति वार्तिकस्य सामर्थ्यानुवृत्त्या वा सिद्धमिति 'सुबामन्त्रिते पराङ्गवत्' इति सूत्रे भाष्ये प्रत्याख्यानं सङ्गच्छते। अन्यथा पराङ्गवद्भावविषये एकार्थीभावस्या-सम्भवात् भाष्यासङ्गतिः स्पष्टैव। न चैवं द्विगुसमासेऽपि समाहारस्य वाच्यत्वं न स्यादित्युपसर्जनत्वा-भावेन 'द्विगोः' इति ङीप् न स्यादिति वाच्यम्, 'तद्धितार्थ' इति सूत्रे समाहारे इत्यस्य समाहारे विधातुमिष्टे इत्यर्थेनादोषादिति दिक्।

पूर्वोक्तरीत्या एकार्थीभावाभावेऽपि नैयायिकेन सर्वस्मिन्दोषे परिहृते स्वसिद्धान्तेन शाब्दिकः समाधत्ते—अत्रोच्यते इत्यादिना। तस्य=समासस्य। संज्ञादिकमिति—आदिना सुब्लुकः, समुदायात्सुबुत्पत्तेः, 'अनुदात्तं पदम्' इति सूत्रस्य प्रवृत्तेश्च संग्रहः। व्यपेक्षया अर्थविषयकबोधजनकत्वरूपार्थवत्त्वस्य ग्रहणे गौरवम्, शब्दाधिकारप्रसङ्गश्च, पूर्वसूत्रे एतादृशार्थवत्त्वाग्रहणात्, चित्रग्वादावसम्भवश्च, गोपदस्यैव लक्षणया विशिष्टार्थबोधकत्वात्। न चार्थबोधजनकज्ञानविषयशब्दत्वमेव अर्थवत्त्वम्, अस्ति च प्रकृते तत्,

दर्पणव्याख्या

र्थबोधापत्तिः। अधिकमग्रे वक्ष्यते। "व्यपेक्षाया सामर्थ्ये समास एकोऽसद्ग्रहीतो भवति" इति भाष्याद्यर्थ प्रकारा नैयायिकमतं दूषयति—* अत्रोच्यते इति *। संज्ञादीत्यादिना पदत्वादिपरिग्रहः।

''अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'' ( पा० सू० १ । २ । ४५ ) इत्यस्याप्रवृत्तेः । नच ''कृत्तद्धितसमासाश्च'' ( पा० सू० १ । २ । ४६ ) इत्यत्र समासग्रहणान्मा, तस्य नियमार्थताया भाष्यसिद्धाया वैयाकरणभूषणे स्पष्टं प्रतिपादितत्वात् ।

प्रभा

चित्रगुशब्दोऽर्थविषयकबोधजनको भवत्विति ज्ञानविषयतायाः समुदाये सत्त्वादिति वाच्यम्, चित्रशब्द-
स्तात्पर्यग्राहकतया गोशब्दो लक्षणया अर्थविषयकबोधजनको भवत्विति ज्ञानमादाय प्रत्येकं विभक्त्युत्प-
त्यापत्तेः । नचैकाजुद्विर्वचनन्यायेन समुदायादेव सुप्, समुदायस्य कार्यभाक्त्वे यत्रावयवस्यापि कार्य-
भाक्त्वं तत्रैव तत्प्रवृत्त्या प्रकृते समुदायात्सुपि पूर्वपदरूपावयवान्यवहितोत्तरत्वस्याभावेन तदप्रवृत्तेः । 'एका-
चो द्वे' इत्यादिसूत्रेषु विभक्त्यन्ततसमाननिर्देशेनावयवावधारणं तु न, गौरवात्, छान्दसत्वेनापि तदुपपत्तेर्वक्तु
शक्यत्वाच्च । तदुक्तम्—'स्यान्महद्गौरवं तस्मात्' इति । सा=प्रातिपदिकसंज्ञा । तथाच समासग्रहणं
विध्यर्थमेव स्यादिति भावः । तस्य=समासग्रहणस्य । ननु 'विधिनियमसम्भवे विधिरेव ज्यायान्' इति
अभियुक्तोक्तेर्विधित्वमेवोचितम् । किञ्च 'असूर्यम्पश्या' 'शशशृङ्गम्' इत्यादावर्थवत्त्वाभावेन प्रातिपदिक-
संज्ञाया असिद्ध्या 'सिद्धे सत्यारम्भमाणो विधिर्नियमाय कल्पते' इति न्यायविषयाभावेन नियमार्थ-
त्वानुपपत्तिश्चेत्यत आह—भाष्यसिद्धाया इति । तथाच भाष्यप्रामाण्यान्नियमार्थत्वमेवेति भावः ।
भूषणे स्पष्टमिति—'असूर्यम्पश्या' इत्यादावपि सूर्यकर्मकदर्शनाभाववति शक्तिकल्पनया 'अर्थवत्'
सूत्रेण प्रातिपदिकसंज्ञा सिद्धा । तदुक्तं कैयटेन—'असमर्थसमासेऽपि क्रियायामुभयोः सन्निपातादेकार्थी-
भावस्तद्द्वारकोऽस्त्येव' इति । 'शशशृङ्गम्' इत्यादावपि एकदेशः प्रसिद्धः शशरूपः, शृङ्गरूपश्चार्थः । आरो-
पितसम्बन्धश्च शक्य इति 'अर्थवत्' सूत्रेणैव प्रातिपदिकसंज्ञा सिद्धा ।
यद्वा बौद्धार्थमादायार्थवत्त्वं तत्र सुवचम् । किञ्च 'असूर्यललाटयोः' इति ज्ञापकादपि प्रातिपदिकत्वं
सिद्धम् । नहि सुबुत्पत्तिं विना समीपोच्चारितपदत्वरूपसुपपदत्वं सम्भवतीति शाब्दिकनये समासग्रहणस्य
नियमार्थत्वं सुवचमेव । किञ्च समासग्रहणादपि प्रातिपदिकत्वं वक्तुमशक्यम्, तत्र 'अर्थवत्' इत्यस्यानु-
वृत्तेः । समासांशे वदसम्बन्धस्तु न, एकत्रान्वयित्वाभावेन समासानुपपत्तेः । नहि अन्यतरस्य धनिकत्वे
'चैत्रमैत्रौ धनिकौ' इति प्रयोग इष्यते । छान्दसत्वात्साधुत्वकल्पनायान्तु गौरवमेव । किञ्च 'बहुपटवः' इत्य-
त्रार्थवत्सूत्रेण प्रातिपदिकत्वाय वृत्तौ समुदायेऽर्थवत्त्वं स्वीकार्यम् । 'कृत्तद्धित' इति सूत्रे स्वाव्यवहितपूर्वत्व-
स्वाव्यवहितोत्तरत्वान्यतरसम्बन्धेन तद्धितविशिष्टो यः स्व ( तद्धित ) घटितः स प्रातिपदिकसंज्ञको भवती-
त्यर्थस्तु न, पचतकीत्यादावपि प्रातिपदिकत्वापत्तेः । उक्तसम्बन्धेन तद्धितविशिष्टायाः प्रकृतेरेव ग्रहणे माना-
भावो गौरवञ्च । किञ्च समासग्रहणस्य विध्यर्थत्वे वाक्यस्य 'ग्रामं गच्छति' इत्यादिरूपस्य पूर्वसूत्रेण
प्रातिपदिकसंज्ञा दुर्वारा । नच वाक्यस्य प्रातिपदिकत्वे 'तृतीयाप्रभृतीनि' इति सूत्रेऽन्यतरस्यां ग्रहणं
न भवतीति ज्ञाप्यते इति वाच्यम्, समासाभावे
व्यर्थम्, इति तत्सामर्थ्याद् वाक्यस्य प्रातिपदिकत्वं 'दधि उपदंशम्' इत्यादौ 'इकोऽसवर्णे' इत्यस्य समासाभावे 'न
उत्तरपदप्रकृतिस्वराप्रवृत्तेरेव फलवत्वात्,
समासे' इति निषेधाप्रवृत्त्या प्रकृतिभावरूपफलस्य सत्त्वाच्च ।

दर्पणव्याख्या

* भाष्यसिद्धाया इति * ''समासग्रहणमर्थवत्समुदायानां नियमार्थम्'' इति भाष्यसिद्धाया इत्यर्थः ।
* स्पष्टमिति * वाक्यस्याप्यर्थवत्त्वेन प्रातिपदिकत्वप्रसक्तौ तद्व्यावृत्तये वचनारम्भमाश्रित्य नियमार्थेन

तथाच प्रातिपदिकसंज्ञारूपं कार्यमेवार्थवत्त्वमनुमापयति—धूम इव वह्निम् ।

किञ्चैवं 'चित्रगुमानय' इत्यादौ कर्मत्वाद्यनन्वयापत्तिः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोध-

प्रभा

दिषु धातुषु च न दोषः, तेषां प्रातिपदिकत्वे एकत्वादीनामभावेन सुपोऽप्राप्तेः, अपवादैस्तिबादिभिर्बाधाच्च । धूम इवेति—धूमो यथा वह्निमनुमापयति, तथा प्रातिपदिकसंज्ञारूपं कार्यं समासेऽर्थवत्त्वमनुमापयेदिति भावः । तथाहि—समासः एकार्थीभावात्मकशक्तिमान्, प्रातिपदिकसंज्ञकत्वात्, पङ्कजशब्दवत्, यन्नैवं तन्नैवम्, यथा 'दशदाडिमानि' इत्याद्यनर्थकसमुदायः ।

ननु पर्युदासन्यायेनातिप्पदेनार्थवत एव ग्रहणात् अनर्थकस्य प्रातिपदिकत्वं न स्यादित्यर्थवदित्यस्य प्रयोजनाभावेन समासग्रहणस्य नियमार्थतयोक्तन्यासे दोषाभाव इत्यरुचेराह—किञ्चेति । एवम्=समुदायशक्त्यस्वीकारे । इत्यादाविति—आदिना 'पूर्वकाय.' इत्यादेरितरेतरयोगद्वन्द्वस्य च संग्रहः ।

दर्पणव्याख्या

नचार्थवत्समुदायघटकवर्णानामर्थवत्त्वपक्षस्यापि भाष्ये दर्शनात् तद्ग्रहणेऽपि विभक्तिर्दुर्वारेति वाच्यम्, तत्पक्षेऽपि, "सङ्घातस्यैकार्थ्यात् सुबभावो वर्णात्" इति भाष्यवचनेनैकैव विभक्तिः समुदायान्तर्गतवर्णगतमेकत्वं बोधयेत् । एकमेव तदेकत्वं तच्चैकेन सुपा प्रत्यायितमिति बोधनीयाभावाद् विभक्तेः प्रत्येकवर्णादनुत्पत्तेरिति भावः ।

ननु समासवाक्यस्यार्थवत्त्वाऽभावेऽपि न प्रातिपदिकसंज्ञानुपपत्तिः, "कृत्तद्धित" (पा० सू० १ । २ । ४६) इति सूत्रेणैव तत्सम्भवात् । सम्भवति विधित्वे नियमकल्पनाया अन्याय्यत्वात् । समासग्रहणमेव च समासे एकार्थीभावाभावे मानम् । वाक्यस्य तु 'न' पूर्वसूत्रेण तत्प्रसक्तिः, अर्थवत्त्वाभावात् । संसर्गस्यावयवेऽप्याकाङ्क्षादिवशादेव तद्भानस्य सूपपादत्वात् । एवं प्रकृतिप्रत्ययसमुदायस्याप्यनर्थकत्वेनाप्राप्तसंज्ञाविधानार्थं कृत्तद्धितग्रहणमिति समस्तस्यैव सूत्रस्य विधायकत्वम् । आद्यसूत्रस्य तु अव्युत्पन्नसाधुशब्दस्वरूपमेव, नतु बहुपटुरित्यादिसमुदायोऽप्युत्तरपदलाक्षणिकत्वाद् तादृशसमुदायस्यार्थवत्त्वाभावात् । कृदन्तानां केषाञ्चिदर्थवत्त्वेऽपि धातुत्वात्, एवं तद्धितानामपि 'इ' 'इयान्' इत्यादीनां प्रत्ययत्वेन तादृशसमुदायस्य त्वनर्थकत्वेन पूर्वसूत्राविषयत्वेन तत्र तत्र प्रातिपदिकत्वविधानार्थं सूत्रकारेण द्वितीयं सूत्रं प्रणीतम् । अत एवात्रार्थवदिति नानुवर्तते, असम्भवात्प्रयोजनाभावाच्च । तत्र कृच्छब्देन प्रत्ययपरिभाषया तदन्तग्रहणं संज्ञाविधायित्वस्य प्रायिकत्वात्, इतरादिष्वकेवलकृतामप्रयोगेण तदुपादानवैयर्थ्याच्च । यद्यप्युक्तयुक्त्या तद्धितपदस्य तद्धितान्तपरतैव लभ्यते तथापि लक्ष्यतावच्छेदकाक्रान्तबहुपट्वादिसङ्ग्रहाय तस्याव्यवहितोत्तरत्वसम्बन्धेन तद्धितविशिष्टप्रकृतिघटितसमुदायतद्धितान्यतरपरतया व्याख्येयम् ।

प्रकृतित्वञ्च प्रत्ययविधानावधित्वम् । 'इ' 'इयान्' इत्यादौ तु प्रत्ययस्यैव तदन्तत्वाच्च दोषः । पचतक्यादिसमुदायान्तर्गततद्धितप्रकृतेर्निरुक्ततद्धितवैशिष्ट्याभावाच्च तत्रातिप्रसङ्गः, कृद्ग्रहणपरिभाषाया अनन्तरग्रहणज्ञापिताया असार्वत्रिकत्वाच्च न मूलकेनोपदंशमित्यादावतिप्रसक्तिः । एवं समासग्रहणेनाप्यप्राप्तप्रातिपदिकसंज्ञाविधानाद्राजपुरुष इत्यादिसमुदायात् स्वाद्युत्पत्तिः सुलभेति तत्र विशिष्टशक्त्यभ्युपगमो निष्प्रमाणकः । वाक्यस्य सा नेत्युक्तमेव, तत्र कोशादिना शक्त्यपरिच्छेदात् ।

यत्र तु कोशादिकं परिच्छेदकं तत्र समासे पङ्कजादौ तां न निवारयामः । एवञ्च वाक्यस्यार्थवत्त्वाभावेन प्रातिपदिकसंज्ञाऽप्रसक्तेस्तद्व्यावृत्तिरूपफलाभावेन समासग्रहणस्य नियमार्थत्ववर्णनमसाम्प्रतम् । भाष्ये तस्य नियमपरतया वर्णनं तु संसर्गस्य शक्यत्वमित्येकदेशिमतमनुसृत्यैवेत्यरुचेराह—*किञ्चैवमिति* । एवम्=समासे विशिष्टशक्त्यस्वीकारे । कर्मत्वाद्यनन्वयापत्तिरित्यस्य गवादिपदार्थे इति शेषः । तत्र हेतुमाह—*प्रत्ययानामिति* तथाच प्रकृतित्वम्

जनकत्वव्युत्पत्तेः विशिष्टोत्तरमेव प्रत्ययोत्पत्तेर्विशिष्टस्यैव प्रकृतित्वात्। यत्तु सन्निहितपदार्थगत-स्वार्थबोधकत्वव्युत्पत्तिरेव कल्प्यत इति, तन्न, 'उपकुम्भम्', 'अर्द्धपिप्पली' इत्यादौ पूर्वपदार्थे विभक्त्यर्थान्वयेन व्यभिचारात्।

नच तत्रापि सन्निधानमेव, आनुशासनिकसन्निधेर्विवक्षितत्वात्। (तथाच यत्पदोत्तरं याऽनु-शिष्टा सा तदर्थगतं स्वार्थं बोधयति। समासे च समस्यमानपदोत्तरमेवानुशासनमिति वाच्यम्,)

प्रभा

विशेष्यत्वाद्विभक्तेर्विशेष्यगतसंख्यादिबोधकत्वस्यैव निय-

पूर्वपदार्थे इति—उपपदार्थाद्धेपदार्थस्यैव मेन पूर्वपदस्योत्तरपदेन व्यवधानात् सन्निहितत्व नास्तीत्यतो व्यभिचार इति भावः। ननु 'उपकुम्भम्' इत्यत्र कुम्भशब्दस्यैव लक्षणया कुम्भसमीपार्थकत्वम्, 'अर्द्धपिप्पली' इत्यादावपि लक्षणया अर्धशब्दस्यैव विशिष्टार्थकत्वमित्युक्तव्युत्पत्तौ व्यभिचाराभाव इति चेन्न, विशिष्टे शक्तिस्वीकारेणैवोपपत्तौ शक्यार्थतत्सम्बन्ध-ज्ञानाद्यपेक्षणेन लक्षणाया गौरवात्, इतरेतरयोगद्वन्द्वे पूर्वपदार्थेऽपि विभक्त्यर्थान्वयेन व्यभिचाराच्च। नच तत्रापीति—नचेत्यस्य वाच्यमिति वक्ष्यमाणेनान्वय। तत्रापि=पूर्वपदेऽपि। सन्निधानमेवेति—सन्निधानञ्च नात्रा-व्यवहितपूर्वत्वरूपम्, किन्तु सन्निहितत्वेन शास्त्रबोधितत्वम्। तथा च- आनुशासनिकसन्निधेर्विवक्षितत्वे च। तथाच समासविधायके शास्त्र-

समस्यमानपदोत्तरमेवेति—समस्यमान पदम्=समसनकर्मीभूत पदम्। सुबन्तेन सहाव्यय समस्यते इत्युक्तावयवस्य घटकप्रथमान्तपदनिर्दिष्टानामेव साक्षात्समसनकर्मत्वं लभ्यते। तथाच समासस्य विधीयमाना प्रातिपदिकसंज्ञा समासकर्मैव बोधयेत्। तथाच साक्षात्समसनकर्मत्वम्। तथाच समासस्य विधीयमाना प्रातिपदिकसंज्ञा गृह्यते, 'सुबन्तेन सहाव्यय समस्यते' समासपद-समासपदेनाव्ययीभावस्य ग्रहणेऽव्ययमेव विशेष्यतया गृह्यते, एवमेकदेशिसमासे एकदेश एव समासपदजन्यबोधीयविशेष्यता जन्यबोधीयविशेष्यतायास्तत्रैव सत्त्वात्। एवमेकदेशिसमासे एकदेश एव समासपदजन्यबोधीयविशेष्यता सुबन्तमात्रे। इत्थञ्च प्रातिपदिकपदबोध्यसमासोत्तरत्व-बहुव्रीहौ, द्वन्द्वे च समासपदजन्यबोधीयविशेष्यता

दर्पणव्याख्या

बहुपटुरित्यादौ पट्वादिशब्देऽव्यासेः।

प्रत्ययविधानावधित्वम्, न तु प्रत्ययाव्यवहितपूर्वत्वम्, "यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्" इति भाष्यात् प्रत्ययाव्यवहितपूर्वस्यैव प्रकृतित्वलाभ

नच 'तावेव सुप्तिङौ यौ ततः परौ, सैव च प्रकृतिराद्या' इति विशेषानुशासने परौ तावेव सुप्तिङावित्युपलक्षणम्, प्रत्य इति वाच्यम्, तदर्थानवबोधात्। यौ ततो विधानावधेरुक्तौ विहितौ सैव प्रकृतिरिति तदर्थात्। आद्येत्यभ्यासाभिप्रायेण। तथाच समासोत्तरपदस्य विधाना यान्तरस्यापि, यतो विहितौ सैव प्रकृतिरिति तदर्थात्। उक्तव्युत्पत्तिविरोधादिति भावः।

धित्वरूपप्रकृतित्वाभावेन तदर्थे न कर्मत्वाऽऽद्यन्वय सम्भवति, उक्तव्युत्पत्तिविरोधादिति भाव.।

प्रत्ययानामिति व्युत्पत्तिर्हि दण्डिनमानयेत्यादौ दण्डादौ कर्मत्वान्वयवारणाय स्वीक्रियते। तदर्थञ्च 'प्रकृत्यर्थनिष्ठवि-धेयतानिरूपितविषयतासम्बन्धेन शाब्दबुद्धिं प्रति विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितित्वेन हेतुता' इति तत्र प्रकृते सन्निहि-तत्वेनैव निवेशस्तावतैवोक्तस्थले व्यभिचारवारणात्, न तु प्रकृतित्वेन, गौरवादिति मत दूषयितुमुपन्यस्यति—*यत्त्विति*।

* सन्निहितेति * सन्निहितत्वञ्चाव्यवहितपूर्वत्वेनानुसन्धीयमानत्वम्। तस्य च चित्रग्वादिपदे गवादौ सत्त्वादोक्तानुपपत्तिरिति भावः। व्युत्पत्तिरेवेत्येवकारेण पूर्वोक्तप्रकृतित्वघटितव्युत्पत्तिव्यवच्छेदः। उपकुम्भादौ व्यभिचा रोद्भावनन्तु प्राचीनमते। नव्यनये तत्रोत्तरपदे लक्षणाऽभ्युपगमेन तदप्रसक्तेः। *तत्रापि* उपकुम्भादिसमासेऽपीत्यर्थः।

* आनुशासनिकेति * सन्निहितत्व नाव्यवहितपूर्वत्वम्। तत्त्वेनानुसन्धीयमानत्व वा, धवखदिरावित्यादौ धवादिपदार्थे विभक्त्यर्थानन्वयप्रसङ्गात्, किन्तु सन्निहितत्वेनानुशासनबोधितत्वम्। तच्च धवादिपदार्थानामिवोपादि-पदार्थानामस्तीत्याशयवानाह—* तथाचेति *। * समस्यमानपदोत्तरमिति * समासस्यानेकपदसमुदायात्मकतया

अर्थवत्सूत्रेण विशिष्टस्यैव प्रातिपदिकत्वेन विशिष्टोत्तरं विभक्त्यनुशासनात् ।

अथ 'प्रकृतित्वाश्रये विभक्त्यर्थान्वयः' इत्येव कल्प्यत इति चेत्तर्हि, 'पङ्कजमानय' 'दण्डिनं पश्य' 'शूलिनं पूजय' इत्यादौ पङ्क–दण्ड–शूलेष्वानयन–दर्शन–पूजनादेरन्वयप्रसङ्गात्, 'अघटमानय' इत्यत्र घटेऽप्यानयनान्वयापत्तेश्च । नच दण्डादीनां विशेषणतया न तत्रानयनाद्यन्वयः,

## प्रभा

विशिष्टविधीयमानविभक्तेः सन्निहितत्वं पूर्वपदेऽप्यस्तीति तद्गत कर्मत्वादिकं विभक्तिर्बोधयेत् । अत्र सन्निहितत्वञ्च—स्वादिप्रत्ययनिष्ठविशेष्यतानिरूपितोत्तरत्वसम्बन्धावच्छिन्नप्रकारताश्रयत्वरूपम् । तच्च पूर्वपदेऽक्षतम् । यद्वा पदसमुदायात्मकसमासोत्तरं विधीयमाना विभक्तिः समुदायस्य प्रत्येकानतिरिक्ततया प्रत्येकपदोत्तरमपि विहितैवेति तत्सन्निहितत्वं पूर्वपदेऽपि सुलभम् । तदाह—पदपदोत्तर यानुशिष्टेति । 'वृक्षप्रचलन'-न्यायेन 'तस्मादित्युत्तरस्य' इति परिभाषाबलात् पदसमुदायात्मकसमासाव्यवहितोत्तरत्वविशिष्टैव विभक्तिर्भवतीति त्वन्यत् । समासस्यार्थवत्सूत्रेणैव प्रातिपदिकसञ्ज्ञाविधानात् प्रातिपदिकसञ्ज्ञाया समासे सङ्केत-मर्थवत्त्वेनैव, ननु समसनकर्मत्वेनेत्यानुशासनिकसन्निहितत्वमपि समुदाये एव, ननु तद्घटके, विशिष्टे एवार्थवत्त्वसत्त्वादित्याह—अर्थवत्सूत्रेणेति— ननु नियमस्य निषेधमुखेन प्रवृत्तौ तु पूर्वपदेऽपि तादृशसन्निहितत्वमक्षतमेवेति चेन्न, 'पुत्रेण सहागतः पिता' इत्यत्र पुत्रप्रतियोगिकसाहित्यविशिष्टे पितरि आगमनकर्तृत्वविधानवत् सुबन्तादिविशिष्टे सुबन्तादौ समाससञ्ज्ञाया विधानेन समसनकर्मत्वस्यापि विशिष्टे एव सत्त्वात्, 'समस्यते' इत्युक्तिस्त्वबुधानाम् इति शेखरोक्त्या, समसनकर्मत्वस्याविधानेन समुदायवृत्तिसमाससञ्ज्ञाया एव सङ्केतसम्बन्धेन विधानाच्च । विशिष्टोत्तरभवति—एवघटित एव पाठः ।

प्रकृतित्वाश्रये इति—प्रकृतित्वाश्रयार्थे इत्यर्थः, अर्थस्यार्थे एवान्वयौचित्यात् । प्रकृतित्वञ्च—प्रत्यय-निष्ठविधेयतानिरूपितोद्देश्यतारूपम्, तदवच्छेदकरूप वा तदाश्रयत्वञ्चापर्याप्त्या पूर्वपदेऽप्यक्षतम् । अन्वय प्रसङ्गादिति—पङ्कादिपदेष्वपि प्रकृतित्वाश्रयत्वस्यापर्याप्त्या सत्त्वादिति भावः । दण्डविशिष्टस्यानयनतात्पर्ये दण्डेऽप्यानयनान्वय इष्टापत्तिसम्भावनया स्थलान्तरमाह—अघटमिति—अत्र घटभिन्नस्यानयने न कस्यापि घटानयने इष्टापत्तिरिति भावः । विशेषणतयेति—'प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः' इति न्यायेन पङ्कजादावेवान्वयः स्यान्नतु अप्रधाने पङ्कादाविति भावः । 'एकत्र विशेषणतयाऽन्वितस्यापरत्र

## दर्पणव्याख्या

समुदायस्य प्रत्येकानतिरिक्ततया समासरूपप्रातिपदिकाद् विहितविभक्तेस्तत्तत्पदसन्निहितत्वादिति भावः ।

सम्भवेदेव यदि समासग्रहणनिबन्धना प्रातिपदिकसंज्ञा, किन्तु तस्य नियामकतया पूर्वसूत्रेणैव सा वाच्या । तथाचो पपद्यतास्मान इत्याशयेनाह—* अर्थवत्सूत्रेणेति * तथाच शास्त्रबोधितसन्निहितत्वमपि विशिष्टस्यैव, न केवलपूर्वपद स्येत्युक्तस्थले व्यभिचारो दुरुद्धर इति भावः । प्रकृतित्वस्य पर्याप्त्याख्यविलक्षणसम्बन्धेन समुदायमात्रविश्रान्तत्वेऽपि केवलाश्रयतया तद्वत्त्वस्य प्रत्येकदेशेऽपि सम्भवादुक्तव्युत्पत्तिशरीरे आश्रयतैव निवेशनीयेत्याशयेन शङ्कते—* अथेति *
* प्रकृतित्वाश्रये *=प्रकृतित्वाश्रयार्थे । अत्रनिहितप्रत्ययार्थे दूषणमुक्ताव्य सन्निहितेऽपि तदाह—* अघटमिति
पूर्वपदार्थप्राधान्यमप्रेत्याशयेन दूषणान्तरानम् । तदग्रेचाऽग्रे वक्ष्यते । * विशेषणतयेति *एकत्र विशेषणतयाऽपर
परत्र तदन्वय नैराकाङ्क्ष्यादिति भावः । यत्र क्वापि विशेषणेनापरान्वय इति यथाश्रुत दूषयति—

'पाकान्नीलः' 'घर्मात् सुखी' इत्यादौ पाक–घर्मादिहेतुतया रूप–सुखादावनन्वयप्रसङ्गात्। यच्च–प्रकृत्यर्थत्वं तज्जन्यज्ञानविषयत्वमात्रम्, तच्चात्राविरुद्धमिति, तन्न, 'घटं पश्य' इत्यत्र घटपदात् समवायेनोपस्थिताकाशवारणाय वृत्त्या प्रकृत्यर्थत्वस्यावश्यकत्वात्।

अथ 'प्रत्ययप्राग्वर्त्तिपदजन्योपस्थितिविशेष्यत्वं प्रकृत्यर्थत्वम्' इति चेन्न, 'गामानयति कृष्णो दण्डेन' इत्यत्र कृष्णे तृतीयार्थान्वयप्रसङ्गात्।

प्रभा

न हि जन्यत्वं विशेषणत्वायोगात्' इत्यभिप्रायेण तु नेयमुक्तिः, 'पाकान्नीलः' इत्याद्युत्तरग्रन्थविरोधात्। नापि 'प्रकृतिजन्यप्रतीतिविशेष्ये एव विभक्त्यर्थान्वयः' इत्यभिप्रायेणापि 'विशेषणतया' इत्याद्युक्तिः, 'पाकान्नील' इत्यादिसमाधानासङ्गतेः। कश्चिद्विशेषणतयाऽन्वितमिति नीलादौ विशेषणं न स्यात्। जन्यत्वरूपपञ्चम्यर्थस्य

पाकान्नील इति—पाकः=विलक्षणतेजःसंयोगः, विक्लित्त्यनुकूलव्यापारो वा। सुखे, नीले च जन्यत्वाश्रयत्वस्य सर्व'प्रधानाप्रधानयोः' इति न्यायेनाप्रधाननीलसुखादावन्वयो न स्यात्। 'पाकान्नीलः' इत्यत्र जनानुभवसिद्धतया 'प्रधानाप्रधानयोः' इति न्याय प्रायिक इति मन्तव्यमिति भावः। नीलगुणस्य विशेष्यत्वं बोध्यं नैयायिकमते। नीलपदस्य गुणे एव शक्ततया नीलत्वगुणविशिष्टे लक्षणया 'प्रकृत्यर्थाशाब्दिकमते तूभयत्र शक्तिरेव। अत एव 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति वार्तिकं सङ्गच्छते। न्वितस्यार्थबोधकत्वमिति व्युत्पत्तौ प्रकृत्यर्थत्व न वृत्त्या प्रकृतिप्रयोज्यज्ञानविषयत्वम्, किन्तु यथाकथञ्चित् प्रकृतिप्रयोज्यज्ञानविषयत्वम्, तदाह—यच्चेति। तच्चात्रेति—तच्च=प्रकृत्यर्थत्वम्, अत्र='उपकुम्भम्' 'अर्धपिप्पली' इत्यादौ पूर्वपदार्थे। अविरुद्धमिति—कुम्भपदपिप्पलीपदयोर्लक्षणायामपि पूर्वपदस्य तात्पर्यग्राहकतया लक्ष्यार्थोपस्थितौ प्रकृतिप्रयोज्यज्ञानविषयत्वमक्षतमेवेति भावः। आकाशवारणायेति—आकाशे दर्शिकर्मत्वान्वयवारणायेत्यर्थः। नतु चाक्षुषज्ञानं प्रत्युद्भूतरूपवत्त्वस्य कारणतया नाकाशे दर्शनकर्मत्वान्वय इति चेन्न, दर्शिज्ञानसामान्यार्थत्वेऽन्वयापत्तेरित्याशयात्। प्रकृत्यर्थत्वस्य = प्रकृतिजन्यज्ञानविषयत्वस्य। आवश्यकत्वात्=अवश्यं प्रवेशनीयत्वात्। प्रत्ययप्राग्वर्तीति—अस्य वृत्त्येति शेषः। तेन 'घटं पश्य' इत्यत्र आकाशे न कर्मत्वान्वयः। विशेष्यत्वमिति—विशेष्यत्वोक्त्या 'घटं पश्य' इत्यत्र घटत्वे 'दण्डिनं पश्य' इत्यत्र दण्डे च न कर्मत्वान्वयः। अत्र प्रत्ययप्राग्वर्तित्वं नाव्यवहितत्वघटितम्, द्वन्द्वघटकपूर्वपदार्थे दर्शनकर्मता, तत्रोक्तविशेष्यत्वाभावात्। न च प्रकृतिघटकप्राग्वर्तिपदकर्मत्वाद्यनन्वयापत्तेः। कृष्ण इति—कृष्णपदेऽपि तृतीयाप्राग्वर्तित्वस्य सत्त्वात्।

दर्पणव्याख्या

* पाकान्नील इत्यादि * नीलत्व–सुखयोः स्वाश्रये विशेषणतयाऽन्वितयोः पाकादित्याद्यन्तर्गतपञ्चम्यर्थहेतुत्वस्यानन्वया* अत्र * पत्तेरित्यर्थः। * तज्जन्यज्ञानविषयत्वेति * तत्पदार्थः प्रकृति। मात्रपदेन वृत्तिप्रतिपाद्यत्वस्य व्यवच्छेदः। चित्रग्वादिसमासान्तर्गतगवादिपदार्थे इत्यर्थः। * अविरुद्धमिति * अबाधितमित्यर्थः। 'घट पश्य' इत्यत्र दर्शनवामान्यार्थः। * आकाशवारणायेति * समवायेनोपस्थिताकाशे दृश्यर्थकर्मत्वाद्यन्वयवारणायेत्यर्थः। * वृत्त्या प्रकृत्यर्थत्वस्येति * वृत्तिजन्योपस्थितिविषयत्वस्येत्यर्थः।

'वादिवाक्ये यावन्तोऽर्था सम्भवन्ति' इति न्यायेनोक्तव्युत्पत्ति दूषयितुमर्थान्तरपरतया व्याचष्टे—* अथेति * पूर्वं तु प्रत्ययसन्निहितपदार्थत्वं प्रकृतित्वम्, अत्र तु तत्प्राग्वर्तिपदार्थत्वमिति भेद। * प्रसङ्गादिति * प्रत्ययप्राग्वर्त्तिपदजन्योपस्थितिविषयताया कृष्णे सत्त्वादिति भाव। 'प्रत्ययानाम्' इति व्युत्पत्तेरेकार्थीभाववादिमते सत्त्वेऽपि नास्मन्मते सा सार्वत्रिकी, समास एवासम्भवात्। किन्तु प्रकृते व्युत्पत्त्यन्तरमेव कल्प्यते इत्यभिप्रेत्याह—* अथेति *।

[१] (अथ समस्यमानपदार्थगतस्वार्थबोधकत्वं समासोत्तरविभक्तेः कल्प्यत इति चेन्न,) अक्लृप्तकल्पनां क्लृप्तव्युत्पत्तित्यागञ्चापेक्ष्य समुदायशक्तिकल्पनस्यैव युक्तत्वादिति दिक् ।

अपिच समासे विशिष्टशक्त्यस्वीकारे 'राजपुरुषः' 'चित्रगुः' 'नीलोत्पलम्' इत्यादौ सर्वत्रानन्वयप्रसङ्गः, राजपदादेः सम्बन्धिनि लक्षणायामपि, ('तण्डुलः पचति' इत्यादौ कर्मत्वादिसंसर्गेण तण्डुलादेः पाकादावन्वयवारणाय प्रातिपदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितेर्हेतुताया आवश्यकत्वात्, पुरुषादेस्तथात्वाभावात् ) 'तण्डुलः शुभ्रः' इत्यादौ च प्रातिपदिकार्थप्रथमार्थे तण्डुलादेः, तस्य च शुक्ले अभेदेनैवान्वयः ।

प्रभा

जन्योपस्थितिविशेष्यत्वस्य निवेशान्नोक्तदोषः । एवमपि 'बहुपटुः' 'दधि इयद् ददाति' इत्यत्राव्याप्त्यतिव्याप्त्योः सत्त्वादित्यरुचेराह—अथ समस्यमानेति । अक्लृप्तेति—अक्लृप्तस्य=समस्यमानपदार्थेतिनियमस्य कल्पनामपेक्ष्येत्यर्थः । क्लृप्तव्युत्पत्तीति—क्लृप्तायाः='प्रत्ययानां प्रकृत्यर्थ' इति व्युत्पत्तेस्त्याग इत्यर्थः ।

नन्वनन्तसमासरूपसमुदायेष्वनन्तशक्तिकल्पनापेक्षया व्युत्पत्त्यन्तरकल्पनायां क्लृप्तव्युत्पत्तित्यागे च न गौरवमत आह—दिगिति—दिगर्थस्तु—'राजपुरुषः' इत्यादौ राजपदस्य राजसम्बन्धिनि लक्षणायां राज्ञः पदार्थैकदेशतया शोभनाद्यन्वयवारणेऽपि 'दास्याः पुत्रः' इत्याद्यलुक्समासे लक्षणायां मानाभावेन दास्यादौ शोभनाद्यन्वयो दुर्वारः । नच दास्या इति ङसन्तस्य सम्बन्धिनि लक्षणा, ङसन्ते शक्त्यभावेन शक्यार्थसम्बन्धरूपलक्षणाया असम्भवात् । न षष्ठ्या, तदेकदेशे सम्बन्धे पदार्थैकदेशतया दास्या अनन्वयापत्तेः, 'सुब्विधौ न लक्षणा' इति सिद्धान्तभङ्गाच्च । किञ्च 'राज्ञः पुरुषः' इति वाक्याद्यथा राजसम्बन्धप्रकारकः पुरुषविशेष्यकः, स्वत्वसंसर्गको राजप्रकारकः पुरुषविशेष्यकश्च बोधो जायते, एवम् 'दास्याः पुत्रः' इत्यत्रापि तथैव बोध इष्टः, स दासीशब्दस्य सम्बन्धिलक्षणायां न स्यात् । किञ्च त्वदुक्तव्युत्पत्तेः 'बहुपटुः' इत्यत्राव्याप्तिश्च । तदर्थं व्युत्पत्त्यन्तरकल्पनायां गौरवञ्च । प्रातिपदिकार्थेति—भेदसम्बन्धावच्छिन्नप्रातिपदिकार्थनिष्ठप्रकारताकबोधं प्रतीत्यर्थः । तेन 'स्तोकं पचति' इत्यादौ स्तोकरूपप्रातिपदिकार्थस्य अभेदेन पाकेऽन्वयेऽपि न व्यभिचारः । तथात्वाभावादिति—पुरुषस्य विभक्तिजन्योपस्थितिविषयत्वाभावादित्यर्थः । प्रातिपदिकार्थेति-

दर्पणव्याख्या

* अपक्लृप्तकल्पनामिति * समस्यमानपदार्थविषयतानिरूपितविषयतासम्बन्धेन शाब्दं प्रति विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेः कारणत्वान्तरकल्पनामित्यर्थः ।

ननु प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वरूपा व्याख्यासाधारण्येनैव व्युत्पत्तिः । सन्निहितत्वञ्च प्रकृतिघटकत्वे सति प्राग्वर्तित्वमिति नोपदूषणमत आह—*दिगिति* तथाच्चास्ते चाक्लृप्तव्युत्पत्त्यपेक्षया पदत्वस्य प्रकृतित्वघटकत्वे व्युत्पत्तौ निवेशे गौरवमित्यादिदिगर्थः ।

ननु प्रत्ययानामिति व्युत्पत्तौ प्रकृतिप्रत्ययघटितत्वं तत्र प्रकृतिप्रत्ययपदयोरनुगतयोर्दुर्वचत्वेन तत्तद्व्यक्तिभेदेन कार्यकारणभावो वाच्यः । तथाच समासघटके समस्यमानपदार्थस्य प्रत्ययार्थान्वयानुरोधे बाधकाभावात् आह—* अपि चेति * । यद्यप्यनेकसमासेषु विशिष्टशक्तिकल्पनापेक्षया क्लृप्तव्युत्पत्तित्यागगौरवेण व्युत्पत्त्यन्तरकल्पनैव लघीयसी इत्यत आह—*अपि चेति* । * अनन्वयप्रसङ्ग इति * नानार्थैकदेशेति व्युत्पत्तेरिति भावः ।

अनन्वयमेवाह—* राजपदादेरिति * । लक्षणायामङ्गीकृतायां सम्बन्धिनि राज्ञः अन्वयाभावः स्पष्ट एव । ननु व्युत्पत्तेः 'तण्डुलः शुभ्रः' इत्यादौ व्यभिचारोऽत आह—* तण्डुलः शुभ्र इति * । * अभेदेनैवान्वय इति * ।

'शुभ्रेण तण्डुलेन' इत्यादौ च विशेषणविभक्तिरभेदार्थिका,

प्रभा

प्रातिपदिकपदं लक्षणया प्रातिपदिकार्थपरम्। तथाच प्रातिपदिकमर्थो यस्याः सा प्रातिपदिकार्थिका सा चासौ प्रथमा चेति प्रातिपदिकार्थकप्रथमा तदर्थे तण्डुलस्याभेदसंसर्गेणान्वयः। प्रथमार्थस्य चाभेदेन शुभ्रेऽन्वयः। तथाच तण्डुलाभिन्नार्थाभिन्न शुभ्र इति 'तण्डुलः शुभ्रः' इत्यनेन बोधः।

एतेन 'तण्डुलः शुभ्रः' इत्यत्र तण्डुलपदार्थस्य 'नामार्थयोरभेदान्वयः' इति नियमेन शुभ्रेऽन्वयात् प्रातिपदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितिः कारणम्' इत्यस्य व्यभिचारः, एतन्न्यायानङ्गीकारे कर्मतासम्बन्धेन तण्डुलविशिष्टः पाक इत्यर्थे 'तण्डुलः पाकः' इत्यस्य प्रामाण्यापत्तिरिति तद्वारणाय विशेष्यतासम्बन्धेन प्रातिपदिकार्थप्रकारकबोधं प्रति धातुभिन्नजन्योपस्थितेः कारणत्वं वाच्यम्। तथाच 'राजपुरुषः' इत्यत्र धातुभिन्नपुरुषपदजन्योपस्थितेः सत्त्वात् स्वत्वसंसर्गकराजप्रकारकबोधे बाधकाभाव इत्यपास्तम्, तण्डुलः शुभ्रः' इत्यत्रापि तण्डुलस्य प्रथमार्थाभेदे एवान्वयात्। प्रथमया प्रातिपदिकार्थस्यार्थत्वेनैवोपस्थाप्यते इति न घटो घट इतिवत् शाब्दबोधानापत्तिः।

यद्वा विभक्त्या असत्स्वरूपेण तण्डुलस्योपस्थितिरिति विरूपेणोपस्थितिसत्त्वान्नान्वयनाशः। अत्र मूलकृता तण्डुलप्रकारको बोधः स्वीकृतः, स चासङ्गतः, 'जातिगुणवाचकयोः समभिव्याहारे जातिवाचकस्य विशेष्यताप्रयोजकत्वम्' इति नियमेन तण्डुलस्यैव विशेष्यतया भानौचित्यात्। नन्वेवमपि 'शुभ्रं तण्डुलम्' शुभ्रेण तण्डुलेन' इत्यादौ विशेषणविभक्तेः साधुत्वमात्रार्थकतया शुभ्रस्य तण्डुल एवान्वयेनोक्तनियमे व्यभिचारतादवस्थ्यमित्यत आह—शुभ्रेणेति। अभेदार्थिकेति—नचाभेदार्थं द्वितीयादिविधायकशास्त्राभावः,

दर्पणव्याख्या

तथाच तण्डुलान्वयिनि प्रातिपदिकार्थे विभक्तिजन्योपस्थिते सत्त्वान्न तत्र व्यभिचार इति भावः। शुभ्रेण तण्डुलेन इत्यादौ व्यभिचारमाशङ्क्य निराकरोति—*अभेदार्थिकेति* अथवा कट इव तत्समानाधिकरणभीष्माऽऽदिभ्यो द्वितीया भविष्यतीति द्वितीयादिविभक्तेरनभिहितसूत्रे भाष्यकृताऽभिधानात् सामानाधिकरण्यस्य समानाधिकरणयोर्विशेष्यविशेषणयोर्भावस्याभेदस्य विशेषणवाचकविभक्त्यर्थत्वलाभात् तत्रापि शुभ्रेणेति तृतीयाजन्याभेदोपस्थितिसत्त्वान्न व्यभिचार इति भावः।

नन्वत्र अभेदो यदि भेदत्वावच्छिन्नाभावस्तदाऽप्रसिद्धिः, भेदस्य केवलान्वयित्वात्। यदि भेदप्रतियोगिकाभावस्तदा 'नीलो वह्निः' इति वाक्यस्य प्रामाण्यापत्तिः द्वित्वादिना नीलभेदाभावस्य वह्नौ सत्त्वात् विशेषणविभक्त्यर्थैकदेशे भेदे प्रकृत्यर्थस्यानन्वयापत्तिश्च।

नच भेदेऽभावे च द्वितीयादेः शक्तिः। भेदे च प्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वेनान्वयः, उक्तसम्बन्धेन प्रकृत्यर्थविशिष्टभेदस्य तु तत्तावच्छिन्नप्रतियोगिताकत्वेनाभावेऽन्वयोपगमान्नोक्तापत्त्यादिरिति वाच्यम्। 'प्रमेयो घटः' इत्यादौ प्रमेयत्वावच्छिन्नभेदाप्रसिद्ध्या बोधासम्भवात्, नीलत्वादिपर्याप्तद्वित्वावच्छिन्ननील घट इति वाक्यस्य प्रामाण्यापत्तेश्च। नीलत्वादिना नीलभेदाभावस्य घटेऽबाधात्।

नच तद्व्यक्तित्वावच्छिन्नाभेद एव विभक्त्यर्थः। तथा सत्यपूर्वव्यक्तिनिष्ठतद्व्यक्तित्वस्य मानाभावेन तदवच्छिन्नप्रतियोगिताकाभावे शक्तिग्रहासम्भवेनापूर्वव्यक्त्यभेदान्वयाऽनुपपत्तेः। अभावबुद्धेर्वैशिष्ट्यबुद्धित्वाऽवगाहित्वानुपपत्त्या एकधर्माऽवच्छिन्नप्रतियोगिताकाभावेऽपरधर्माऽवच्छिन्नप्रतियोगितायाः सम्बन्धतया भानासम्भवाच्चेति चेन्न, अभेदस्तादात्म्यम्, तच्च स्ववृत्त्यसाधारणो धर्मः। असाधारण्यञ्च स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टं यत्तदन्यत्वमित्येकमात्रवृत्तिधर्म एव, तस्मिन्नाधेयतया प्रकृत्यर्थोऽन्वयः। अपूर्वव्यक्तिनिष्ठतद्व्यक्तित्वस्य विशिष्य-

पार्ष्ठिको वाऽन्वय इति नातिप्रसङ्गः । तथाच समासे परस्परमन्वयासम्भवादावश्यिकैव समुदायस्य तादृशे विशिष्टार्थे शक्तिः ।

प्रभा

कर्माद्यभेदस्य कर्मादिरूपतया 'कर्मणि द्वितीया' इत्यादिनैवाभेदे द्वितीयादेर्विधानात् । ननु समानाधिकरणस्थले विशेष्यवाचकपदोत्तरविभक्त्यैव कर्मादीनामभिधानाद् विशेषणवाचकपदोत्तरविभक्तिः साधुत्वार्थिकैवेति व्यभिचारतादवस्थ्यमित्याह—पार्ष्ठिको वेति—कर्मादिष्वेव द्वितीयेति 'कर्मणि द्वितीया' इत्यादिशास्त्राणां नियमार्थतया विभक्तीनां साधुत्वार्थकत्वं न युक्तम्, किन्तु कर्माद्यर्थकत्वमेव । नच विशेषणे कर्मत्वाभावः, 'कटोऽपि कर्म भीष्मादयोऽपि कर्म' इति भाष्योक्त्या विशेषणेऽपि कर्मत्वसत्त्वात् । तथाच 'कारकाणां क्रियायामेवान्वयः' इति नियमेन विशेष्यविशेषणयोः परस्परमन्वयाभावादुक्तनियमे व्यभिचाराभावः । ननु क्रियायामन्वयेऽपि विभक्त्यर्थेऽनन्वयेन व्यभिचारतादवस्थ्यम्, विभक्त्यर्थान्वयद्वारैव कारकाणां क्रियान्वयनियमात् । नन्वेवं तण्डुले शुभ्रस्यान्वयाभावेऽव्यावर्तकतया 'शुभ्रेण तण्डुलेन शूलिनं पूजयेत्' इति विधिस्थले शुभ्रेण वस्त्वन्तरेण, श्यामतण्डुलेन च पूजने विधिवैगुण्यानापत्तिः । किञ्च 'नीलोत्पलमानय' इत्यादौ सामर्थ्याभावान्नीलोत्पलयोः समासानापत्तिरिति चेन्न, विशेष्यविशेषणयोः पार्ष्ठिकपरस्परान्वयबोधस्वीकारेणादोषात्—पार्ष्ठिक इति—क्वाचित्कः पाठः । पृष्ठम्=पश्चात्कालः, तत्र भवः पार्ष्ठिकः, 'कालाट्ठञ्' इति ठञ् । पार्ष्णिक इति पाठेऽपि पार्ष्णिः=पृष्ठम्=पश्चात्कालस्तत्तद्भवः क्रियायामन्वयबोधोत्तरं 'शुभ्रगुणविशिष्टः क' इत्याकाङ्क्षायामुपस्थिततण्डुले एवान्वयेन शुभ्राभिन्नस्तण्डुल इति मानसिकं बोधमादायैव विशेषणत्वम्, सामर्थ्यञ्चोपपाद्यमिति भावः । पार्ष्ठिकबोधकृतसामर्थ्यमादाय समासे च 'विशेषणं विशेष्येण' इति सूत्रमेव मानम् । तत्सूत्रसामर्थ्येन सामर्थ्याभावेऽपि विशेष्यविशेषणयोः समास इति कल्पनापेक्षया ईदृशसामर्थ्यमादायापि समास इति कल्पनस्यैवौचित्यात् ।

परे तु प्रथमायाः प्रातिपदिकार्थो न वाच्यः, किन्तु द्योत्य एव । वाच्यत्वे तु बोधावृत्तिप्रसङ्गः, घटो घट इतिवदनन्वयापत्तिश्च । नच विभक्त्याऽसत्त्वेनोपस्थितिरिति नानन्वयः, सर्वजनानुभवविरुद्धत्वात् । 'प्रातिपदिकार्थे प्रथमा' इत्यस्य तत्तत्प्रातिपदिकेन प्रातिपदिकार्थे विवक्षिते तदुत्तरं प्रथमा इत्येवार्थः । एवं विशेषणविभक्तेरभेदोऽर्थ इत्यप्यसङ्गतम्, तादृशानुशासनाभावात् । नच कर्माद्यभेदस्य कर्मादिरूपतया 'कर्मणि द्वितीया' इत्यादिसूत्रमेव मानम्, कर्मत्वादिनैव तत्तत्सूत्रेण कर्मादीनां विभक्त्यर्थत्वबोधनात्, विशेष्यवाचकपदोत्तरविभक्तेरपि अभेदार्थकत्वप्रसङ्गाच्च । अत एव भाष्यकृता विशेषणवाचकाद् द्वितीयाद्युपपत्तिः प्रकारान्तरेण समाहिता । तथाहि—'अनभिहिते' इति सूत्रे 'विशिष्टस्य क्रिययेप्सिततत्वात् कर्मत्वादुभयत्रापि द्वितीया' इत्युक्तम् । अत्र कैयटः—यथेश्वर ( धनिक ) सुहृदः स्वयं निर्धना अपि तद्धनेनैव धनमाजस्तद्वत् तद्योगक्षेमत्वादिति । विशेषणस्य विशेष्यसमानशक्तिं विना एकार्थबोधकत्वरूपसामानाधिकरण्यानुपपत्तिरिति विशेष्यसमानशक्तिकत्वं तस्य ।

अयम्भावः—विशिष्टनिष्ठं कर्मत्वं विशेष्यविशेषणयोः समानविभक्तिकत्वं विना बोधयितुं न शक्यत

दर्पणव्याख्या

शानुभवनयत्वेऽप्येकमात्रधर्मत्वेन सामान्यप्रत्यासत्त्या गुणहात् सर्वं मुख्यमिति । *पार्ष्ठिक इति* । शाब्दबोधोत्तरकालिक इत्यर्थः । *अन्वय इति* तद्बोध इत्यर्थः । अरुणाधिकरणरीत्या सर्वेषां विभक्त्यर्थानां प्रथमं क्रियायामेवान्वयेन पश्चात् शुभ्रादिपदार्थान्वये विभक्तिजबोधस्यितिसत्त्वात्तस्येऽपि नोक्तव्युत्पत्तेर्व्यभिचार इति भावः ।

किञ्च 'राजपुरुषः' इत्यादौ सम्बन्धिनि, सम्बन्धे वा लक्षणा। नाद्यः, 'राज्ञः पुरुषः' इति विवरणविरोधात् । (समाससमानार्थकवाक्यस्यैव विग्रहत्वात् ) अन्यथा तस्माच्छक्तिनिर्णयो न स्यात् । नान्त्यः 'राजसम्बन्धरूपः पुरुषः' इति बोधप्रसङ्गात् ।

## प्रभा

इति विशेषणादपि अपर्य्याप्त्या कर्मत्वमादाय सैव विभक्तिरिति। अथवा 'कटोऽपि कर्म भीष्मादयोऽपि' इति पक्षान्तरेण समाहितम् । अत्र पक्षे विशेषणे पृथक् कर्मत्वशक्ति, विशेष्ये च पृथक् , परन्तु द्रव्याभेदात् न पार्थक्येन शक्तिज्ञानम् । अत्र पक्षे विशेष्यविशेषणे परस्परमन्विते एव क्रियायां सम्बन्नोतः । नचैवं कारकाणां क्रियान्वयनियमभङ्गः, साक्षात् क्रियाजनकानां साक्षात्, द्रव्यद्वारा क्रियाजनकानां द्रव्यद्वारैव क्रियायामन्वय इति तत्तात्पर्य्यात् । तथाच प्रथमाया द्योतकतया 'शुभ्रस्तण्डुलः' इत्यत्रोक्तव्युत्पत्तेर्व्यभिचार एव । प्रकारतायां भेदसम्बन्धावच्छिन्नत्वनिवेशो तु दोषाभाव इत्यत आह—किञ्चेति ।

## दर्पणव्याख्या

ननु नामार्थयोरिति व्युत्पत्तेः राजा पुरुषस्तण्डुलः पचतीत्यादौ राज्ञः स्वस्वामिभावसम्बन्धेन पुरुषे, तण्डुलस्य कर्मतासम्बन्धेन धात्वर्थपाकेऽन्वयवारणायाऽवश्यकत्वेऽपि नच राजा पुरुषः स्तोकं पचतीत्यनाभेदसम्बन्धेनान्वयाद् व्यभिचारवारणायाभेदातिरिक्तसम्बन्धावच्छिन्नत्वं नामार्थनिष्ठप्रकारतायां निवेशनीयम् ।

नच विशेषणविभक्तेरभेदार्थकतया निर्वाह, कट एव कर्मेति भाष्यव्याख्यावसरे भीष्मादीनां स्वयमकर्मकत्वेऽपि विशेष्यसम्बन्धिविभक्त्यैव भीष्मादिपदोत्तरे भवितव्यम्, तदेकयोगक्षेमत्वात् । केवलानां च प्रातिपदिकानाम् "प्रत्यय" "परश्च" इति नियमेन प्रयोगानर्हत्वात् । यथेश्वरसुहृदः स्वयं निर्धना अपि तदीयधनेनैव तत्फलभाजः, एवं गुणा अपीति "अनभिहित" सूत्रे वदता कैयटेन विशेषणविभक्तेः साधुत्वमात्रार्थकत्वं स्पष्टमेवोक्तम् । विभक्त्यर्थप्रातिपदिकार्थनिरोध्य- कनामा(पुरुषा)दिप्रकारकबोधस्य समानाधिकरणविशेष्यविशेषणभावस्थलेऽननुभवाच्च । अत एव व्युत्पत्तौ भेदेनेति पठ्यते । तथाच तत्पक्षे लक्ष्यार्थराजसम्बन्धिनः पुरुषादावन्वयो नानुपपन्नोऽत आह—*किञ्चेति* । * विवरणविरोधादिति * ।

अत्र वदन्ति—विग्रहस्य विग्रियमाणसमानाऽर्थकत्वम् , नाविग्रियमाणजन्यबोधे यद्विशेषकत्वे सति यत्प्रकारक बोधजनकत्वं तत्तद्विशेष्यकतत्प्रकारकबोधजनकत्वम्, ग्रामसुदकं यमित्यादेः प्रासादकादिसमासविग्रहत्वानुपपत्तेः, पचति, व्याकरणमधीते इत्यादीनां पाचको वैयाकरण इत्यादिकृत्तद्धितान्तविग्रहत्वानापत्तेश्च, तत्र विग्रहविगृह्यमाणजबोधविषय पदार्थानां विशेष्यविशेषणभाववैपरीत्यात् । नापि तज्जन्यबोधीययावद्विषयविषयकबोधजनकत्वम्, पुरुषस्य राजेत्यस्यापि राजपुरुषादिविग्रहत्वापत्तेः । किन्तु विग्रियमाणजबोधजनकत्वं तद् वाच्यम् । ग्रामसुदकं यमित्यादेः प्रासादकादिसमासज बोधविषयाः परस्परसम्बन्धतात्पर्यविषयीभूताश्च यावन्तः पदार्था उदकादयस्तावद्विषयकबोधजनकत्वम् । घटकीया कर्मतेत्ये- तावन्मात्रस्य घटकर्मकानयनप्रतीतिरिति विग्रहत्ववारणाय यावदिति । राज्ञः पुरुषः सुन्दर इत्याधिकाऽवगाहिनो राजपुरुष इति विग्रहत्वमिष्टमेव ।

वस्तुतस्तु शक्तिग्रहणार्थं प्रयुज्यमाने तद्भिन्नतात्पर्यविषयार्थकपदप्रयोगदौर्लभ्यमेव । पुरुषस्य राजेत्यादेस्तु विग्रहत्ववा- रणाय तात्पर्यविषयत्वं विशेषणम् । तत्र पुरुषः प्रतियोगी न, घटः कर्मतामित्यादिसमुदायस्य घटकर्मकानयेत्यादिविग्रहत्वम् । कुम्भं करोतीत्यादीनां तु कर्तृलाक्षणिकानामेव न्यायनये कुम्भकारादिविग्रहत्वम् । प्रकृते च राजपुरुष इत्यादिस्थस्य राज्ञः पुरुष इति वाक्ये अर्थान्तरत्वात् तस्य विग्रहत्वानुपपत्तिरिति ।

*अन्यथेति* समानाऽर्थकत्वाभावे इत्यर्थः । *तस्मात्* विग्रहवाक्यात् । *न स्यादिति* तत्समाना- ऽर्थकवाक्यस्यैव तच्छक्तिनिर्णायकत्वादिति भावः । सम्बन्धलक्षणाकल्पं दूषयति—* नान्त्य इति * नीलोत्पलादिसमास-

विरुद्धविभक्तिरहितप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरित्यादि प्रपञ्चितं वैयाकरणभूषणे।
अत एव "वषट्कर्त्तुः प्रथमभक्षः" इत्यत्र न भक्षमुद्दिश्य प्राथम्यविधानं युक्तम्,

प्रभा

*विरुद्धविभक्तिरहितेति*—विरुद्धविभक्तित्वञ्च—विशेष्यवाचकपदोत्तरविभक्त्यर्थभिन्नार्थकविभक्तित्वम्। तादृशविभक्तिरहितत्व राजशब्देऽस्तीत्यभेदान्वयापत्तिरिति भाव.। अत एव=समासे एकार्थीभावस्वीकारादेव। *वषट्कर्त्तुरिति*—'ऋत्विजो हविश्शेषं भक्षयन्ति' इति वाक्यान्तरेण प्राप्त भक्षणमनूद्य 'वषट्कर्तुं प्रथमभक्ष' इति श्रुत्याऽप्राप्त प्राथम्यं विधीयते। वषट=देवतोद्देशेन हविस्त्यागसम्बन्धी मन्त्रविशेषस्तं करोतीति वषट्कर्ता। वषणनामकमन्त्रोच्चारयिता होतृविशेषस्तस्यैव प्रथम भक्षणमिति पूर्वपक्षे सिद्धान्तितम्। यदि भक्षणमनूद्य प्राथम्यं विहित स्यात्तदा यो भक्षो वाक्यान्तरेण प्राप्त स वषट्कर्तुं प्रथम इति विच्छिद्य=वाक्य

दर्पणव्याख्या

समहाय समानविभक्तिकेस्यपदद्वयोरुक्तम्—* विरुद्धविभक्तिरहितेति * विरुद्धविभक्तिकधातुप्रातिपदिकार्थयो 'स्तोकं पचति' इत्यादावभेदाऽन्वयदर्शनादाह—* प्रातिपदिकार्थयोरिति * तथाचाभेदसंसर्गावच्छिन्नप्रातिपदिकार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति विरुद्धविभक्तिरहितपदजन्योपस्थितेर्हेतुतया तस्या राजपुरुष इत्यादिसमासे-त्तरपदार्थे पुरुषादौ तस्मादभेदाऽन्वयो दुर्वार इति भाव।

ननु विरुद्धविभक्तिराहित्य व्यासमासाधारणम्, न विशेष्यवाचकपदस्य विशेषणवाचकपदाऽप्रकृतिकविभक्त्य प्रकृतित्वम्, नीलघटमानयेत्यादावभावात्। नापि विशेषणवाचकपदस्य विशेष्यवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वम्, विशेष्यपदाप्रकृतिकत्वस्य तदनुत्तरत्वस्य तदुत्तरत्वेनाऽप्रतिसन्धीयमानत्वस्य वा नीलो घट इत्यादौ नीलपदोत्तरविभक्तौ घटादिपदोत्तरविभक्तिभिन्नाया सत्त्वेन तत्राभेदान्वयानुपपत्तेरिति चेत्,

अत्र केचित्—विशेषणपदे विशेष्यवाचकपदप्रकृतिकविभक्तिसजातीयभिन्नविभक्त्यप्रकृतिकत्वमेव विरुद्धविभक्ति राहित्यम्। साजात्यञ्च प्रथमात्वादिना सुत्वादिना वा नीलो घट इत्यादौ विशेषणविभक्तेर्विशेष्यविभक्तिभिन्नत्वेऽपि तत्सजातीयभिन्नत्वाभावेनोक्तविरुद्धविभक्ति राहित्यस्य तत्राक्षतत्वादिति।

वस्तुतस्तु विशेषणविभक्ते साधुत्वमात्रार्थकत्वमिति मते विशेष्यवाचकपदोत्तरविभक्तिविरुद्धत्व स्वार्थभिन्नार्थकत्वम्। नीलो घट इत्यादौ विशेषणविभक्तेर्निरर्थकतया तत्र विशेष्यविभक्तिविरुद्धार्थकविभक्तिर्द्वितीयादिरूपैव, तदप्रकृतित्वस्य, विशेषणवाचकपदे सत्त्वान्न तदसङ्ग्रह। एव नीलघटमानयेत्यादिसमासस्थले विशेषणविभक्तेरेवाभावेन तादृशविभक्त्यप्रकृतित्व विशेषणवाचकपदस्याव्याहतम्। अत एव चैत्रस्य सुतस्य धनमित्यादौ नाभेदान्वयाऽऽकाङ्क्षा। तत्र विशेषणविशेष्यविभक्त्योर्भिन्नसम्बन्धार्थकत्वात्। नापि स्तोकमत्तीत्याद्यसङ्ग्रह। पूर्वकल्पे तु विशेषणवाचकविभक्तेस्ति- विजातीयत्वेनोक्ताकाङ्क्षायास्तत्रासत्त्वेन तदसङ्ग्रहः स्पष्ट एव।

सारे, प्रातिपदिकार्थयोरिति प्रकृताभिप्रायेणैव। तथाचोक्तविरुद्धविभक्त्यप्रकृतिप्रातिपदिकार्थनिष्ठाभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे धातुप्रातिपदिकान्यतरजन्योपस्थिति कारणमित्यर्थं फलित इति।

ननु पूर्वनिरुक्तविरुद्धविभक्तिराहित्यस्याभेदान्वयबोधाकाङ्क्षत्वे चैत्रस्य सुतस्य धनमित्यादौ तदापत्तिरत आह—*प्रपञ्चितमिति* विभक्त्यर्थमन्तर्भाव्य नामार्थान्वय एवोक्तव्युत्पत्तिरिति तत्रोक्तम्। तस्यापि सार्थकविभक्त्यप्रकृतित्वमपि विशेषणवाचकपदे निवेशनीयमत्र तात्पर्यम्। नैयायिकैरपि विशिष्टवाचिपदाऽभ्युपेय इत्याह—* अत एवेति * समासे एकार्थीभावस्य सर्वसम्मतत्वादेवेत्यर्थः। *भक्षमुद्दिश्येति* 'ऋत्विजो हवि शेषान् भक्षयन्ति" इति विहितभक्षणमनूद्येत्यर्थ.।

एकप्रसरताभङ्गापत्तेरिति तृतीये—"त्र्यङ्गैः स्विष्टकृतं यजति" इत्यत्राङ्गानुवादेन त्रित्वविधानं

प्रभा

भित्त्याऽन्वयो वाच्यः, स न सम्भवति 'प्रथमभक्षः' इति समासानुपपत्तेः। यथा 'पण्डितो ब्राह्मणः' इत्युक्ते यः पण्डितः स ब्राह्मण इति प्रतीयते। तथा 'पण्डितब्राह्मणः' इति समासेन न प्रतीयते। अत एव समासे विधेयाविमर्शस्य दोषत्वमुक्तमालङ्कारिकैः।

तदुक्तम्—एकप्रसरताभङ्गापत्तेरिति—एकप्रसरता=मिलितार्थबोधजनकतारूपा एकार्थीभावात्मिका शक्तिः, तस्या भङ्गस्तद् बाधरूपो यो वाक्यभेदस्तस्यापत्तेरित्यर्थः। उद्देश्यविधेयभावस्यानेकपदसाध्यत्वमेव, नैकपदसाध्यत्वमिति भावः। यच्छब्द [illegible] विशिष्टस्य (प्राथम्यविशिष्टभक्षणस्य) [illegible] धिकरणे। त्र्यङ्गैरिति—'पशौ हृदयस्याग्रेऽवद्यति' इत्यादिश्रुत्या एकादशानामङ्गानाम्=जिह्वाद्यङ्गानां होमस्य विधानेन 'प्रकृतिवद् विकृतिः कर्त्तव्या' इत्यतिदेशवाक्येन विकृतियागेऽपि एकादशानामङ्गानां होमे प्राप्ते तदङ्गमनूद्य त्रित्वं विधीयते इति पूर्वपक्षे एकप्रसरताभङ्गभिया=विशिष्टार्थविषयकोपस्थितिजनकताया बाधरूपो यो वाक्यभेदरूपो भङ्गस्तद्भिया त्रित्वविशिष्टाङ्गान्तरं विधीयते इति निर्णीतम्—पूर्वमीमांसायां दशमाध्याये तृतीयपादे।

समासेऽपि पृथगुपस्थितिस्वीकारे मीमांसकोक्त उद्देश्यविधेयभावनिरासो विरुद्ध्येतेति भावः। एकादशाङ्गानि—हृदयम्, जिह्वा, वक्षः, यकृत्, वृक्की, सव्यं दोः, उभे पार्श्वे, दक्षिणा श्रोणिः, गुदम्, इति। नच तच्छब्दयोगाभावात्प्राथम्यस्य विधेयताशङ्का अयुक्ता, यत्तच्छब्दयोरुद्देश्यविधेयभावनिर्णायकत्वस्योपलक्षणत्वात्। अन्यथा प्रथमो देवदत्त इत्यनेनापि उद्देश्यविधेयप्रतीतिर्न स्यात्। नच विधेयताया विशेष्यनिष्ठतया 'इको यणचि' इत्यादिसूत्रेषु दृष्टत्वेनेदमसङ्गतम्, अज्ञातस्यैव विधेयत्वमिति नियमेन विशेष्ये इव विशेषणेऽपि तत्सम्भवात्। अत एव 'प्रथमो देवदत्तः' इत्यत्र विशेषणेऽपि प्राथम्ये विधेयत्वप्रतीतिः। परे तु 'लोहितोष्णीषाः ऋत्विजः प्रचरन्ति' 'सप्तदशारत्निर्वाजपेयस्य यूपो भवति' इत्यादिषु समस्तेष्वपि उष्णीषयूपारत्नी अनूद्य लोहितत्वसप्तदशत्वयोर्विधेयत्वस्य मीमांसायां सिद्धान्तितया समस्तप्रयोगेऽपि प्राप्ताप्राप्तादिपर्यालोचनया उद्देश्यविधेयभावः प्रतीयत एव। अत एवालङ्कारिकैरपि समासस्थले विधेयाविमर्शस्य दोषत्वे बीजं विलम्बेन प्रतीतिः, सहृदयोद्वेगो वेत्येवोक्तम्। नतूद्देश्यविधेयभावाप्रतीतिरिति। एवञ्चास्य प्रमाणत्वेनोपन्यसनं विफलमेवेत्याहुः।

दर्पणव्याख्या

* एकप्रसरताभङ्गापत्तेरिति * उद्देश्यविधेयभावेनान्वये पृथगुपस्थितेर्नियामकत्वेन तदनुरोधेन तदभ्युपगमे विशिष्टार्थोपस्थितिजनकत्वरूपैकप्रसरताभङ्गापत्तेरित्यर्थः। तैर्विशिष्टशक्त्यनभ्युपगमेऽपि विशिष्टलक्षणाया अभ्युपगमेनैकप्रसरतायास्तन्मतसिद्धत्वात्। नचोद्देश्यतयाऽन्वये यच्छब्दयोगप्राथम्यादीनाम्, विधेयतयाऽन्वये च तच्छब्दयोगादीनां तन्त्रतया तत्र तदभावात् कथं तदापादानमिति वाच्यम्, सति तात्पर्ये प्रथमो भक्षः, पण्डितो ब्राह्मण इत्यादावुद्देश्यविधेयभावेनान्वयस्यानुभविकतया यच्छब्दयोगादीनां प्रायिकत्वात्। तादृशशाब्दबोधे असमस्तपदजन्योपस्थितेर्हेतुता तु न, दामोदरः पूज्यः, राजपुरुषः सुन्दर इत्यादितस्तथाबोधानुपपत्तेः, तत्र च प्राथम्यविशिष्टं भक्षणान्तरमेव विधीयते शब्दवृत्त्या, ततश्च प्राप्ताप्राप्तविवेकेन प्राथम्यविधिः पर्यवस्यतीति सिद्धान्तादिति भावः।

*त्र्यङ्गैरिति* । तत्र ह्रीज्याशेषभूतत्रित्वविशिष्टयत्किञ्चिदङ्गविधानम्, किं वा त्रित्वविशिष्टशेषाङ्गविधानमिति संशये

आख्यातं तद्धितकृतोर्यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः ॥ ३६ ॥

तद्धितकृतोर्यत्किञ्चिदर्थबोधकं विवरणमाख्यातम्, तत्र विपर्ययो दृष्टः । तथाहि—'आक्षिकः" "कुम्भकारः' इत्यत्राक्षकरणकव्यापाराश्रयः, कुम्भोत्पत्त्यनुकूलव्यापाराश्रय इति बोधः । 'अक्षैर्दीव्यति' 'कुम्भं करोति' इत्यत्राक्षकरणिका देवनानुकूला भावना, कुम्भोत्पत्त्यनुकूला भावनेति बोधः । कृत्प्रत्यये कारकाणाम्, आख्याते च भावनायाः प्राधान्यं वदतो मीमांसकस्यापि गुणप्रधानभावांशव्यत्यासो न विवरणत्वबाधक इति नात्र पाचिकस्य, 'चित्रा गावो यस्य' इत्यादेर्विग्रहत्वे बाधकमस्तीति भावः ॥ ३६ ॥

प्रभा

आख्यातमिति—तिङन्तमित्यर्थः । तच्च तिङन्तघटितविवरणपरम् । तथाच 'अक्षैर्दीव्यति' इत्याद्याकारकं तिङन्तघटितं विवरणमित्यर्थः । यत्किञ्चिदिति इदमीपदर्थेऽव्ययम् । यत्किञ्चिदर्थस्य=ईपदर्थस्य । उपदर्शकम्=बोधकम् । गुणेति—विशेष्यविशेषणभावादावित्यर्थः । त =तद्धितकृतोः । आक्षिक इति—'तेन दीव्यति' इति कर्तरि ठक् । कुम्भकार इति—'कर्मण्यण्' इति कर्तरि अण् । भावनेति—'भावप्रधानमाख्यातम्' इति सिद्धान्तादिति भावः । तद्धितकृतोरर्थबोधकवाक्ये गुणप्रधानभाववैपरीत्यसत्त्वेऽपि विवरणत्वव्यवहारवत् चित्रा गावो यस्येति वाक्येऽपि विवरणत्वसम्भवादिति भावः । तथाच वृत्तिजन्यबोधसमानविषयकबोधजनकत्वमेव विग्रहत्वम्, नतु वृत्तिजन्यबोधीयप्रकारताविशेष्यतासमानप्रकारताविशेष्यताकबोधजनकत्वम् । किञ्च चित्राणां गवामयमिति विग्रहो भाष्यवार्तिकादिविरुद्धः । तथाच भाष्यवार्तिकम्—'सप्तम्यर्थे बहुव्रीहिः' 'कर्तृकर्मवचनेनाप्रथमाया अप्रथमाविभक्त्यर्थे बहुव्रीहिः 'शेषो बहुव्रीहिः' इति । नचालौकिके प्रथमान्तानामेव निवेश इति न भाष्यादिविरोध इति वाच्यम्, यद्विभक्त्यन्तानां लोके वाक्ये सन्निवेशस्तद्विभक्त्यन्तानामेव परिनिष्ठितानां लौकिके वाक्ये प्रवेशस्यौचित्यात्, नतु षष्ठ्यन्तानाम्, उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावात् । अन्ये तु 'तत्र दृष्टो विपर्ययः' इत्यस्यायमर्थः—कर्त्रादिमुख्यविशेष्यकबोधजनकत्वं विग्रहवाक्यस्य, भावनामुख्यविशेष्यकबोधजनकत्वं कृत्तद्धितादेरिति, तद्विपरीतविशेष्यविशेषणभावापन्नार्थविषयकबोधजनकत्वरूप एवात्र विपर्ययपदार्थो नत्वेकाधिकरणे, विशेष्यतादिविपर्ययसत्त्वेऽपि आख्यातादिरूपैकनिष्ठत्वाभावात् ।

अयम्भावः—विपर्ययो द्विधा—समानाधिकरणः, व्यधिकरणश्च । तत्राद्यः—'देवदत्तस्य स्वभावविपर्ययः' । द्वितीयः—'पञ्चरात्रमात्रान्मित्रस्य स्वभावो विपर्यस्तः' इति । तत्र द्वितीयविपर्ययस्य एव वृत्तिविग्रहयोरिति प्रतीयते । परन्तु आद्य एवात्र विपर्ययः । तथाहि—लोके प्रयुज्यमानस्य 'अक्षैर्दीव्यति' इत्यादितिङन्तस्य

दर्पणव्याख्या

उपदर्शकस्य विवरणम्—•अर्थबोधकमिति• । • आख्यातम् •=तिङन्तम् । तत्र तिङन्तघटिते विवरणे इत्यर्थः । व्याख्यानमेवाह—•तथाहीत्यादि• ।

ननु [illegible] बोधस्य समानार्थकत्वाद्विग्रहत्वं स्यादित्यत आह—•कृत्प्रत्यये इति• । कारकाणाम्=कर्त्रादीनाम् । •प्राधान्यम्• मुख्यविशेष्यत्वम् । भावनायाः प्राधान्यम्, '[illegible]' इति [illegible] "भावप्रधानमाख्यातम्" इति निरुक्तादिति भावः ॥ ३६ ॥

नन्वस्तूक्तरीत्या सर्वत्र समासे शक्तिः, 'अस्तु च तथाविग्रहस्तथापि षष्ठीतत्पुरुष-कर्मधारययोः शक्तिमत्त्वाविशेषान्निषादस्थपत्यधिकरणसिद्धान्तसिद्धिर्न स्यादित्यत आह—

प्रभा

क्यस्य यथा भावनाविशेष्यकबोधजनकत्वम्, न तथा वृत्त्यर्थप्रदर्शकविग्रहवाक्यस्य, किन्त्वेतस्य तद्धितद्वयोरिव कर्त्रादिविशेष्यबोधजनकत्वमेव। एवञ्च न वृत्तिविग्रहयोः समानार्थत्वभङ्ग इति। वाक्यपदीयग्रन्थेयमेव पुण्यराजेन व्याख्यातम्। तथाच 'आख्यातं तद्धित' इति कारिकायाम् 'गुणप्रधान' इत्यंशेन लोकप्रयुक्तवृत्त्यर्थप्रदर्शकतिङन्तयोरेव वैपरीत्यं बोध्यते इति भावः। एतेन 'राज्ञः पुरुषः' इत्यादिविग्रहवाक्यस्य, 'राजपुरुष' इत्यादिवृत्तेश्च समानविशेष्यताप्रकारताकबोधजनकत्वं सर्वत्र सूचितम्। नच 'वाक्ये व्यपेक्षा' 'वृत्तावेकार्थीभाव' इति भाष्यविरोधः, लोके प्रयुक्तवाक्ये इति तदर्थात्। वृत्ताविरस्य वृत्तिविषये=विग्रहे वृत्तौ च एकार्थीभाव इति च तदर्थोचचेति भावः। अत एव 'तद्वहति रथयुग' इति सूत्रस्थ भाष्यं संगच्छते। तथाहि—'रथादिभ्यः प्रत्ययविधानमनर्थकम्, तस्येति विहितत्वात्' इति। ननु 'रथं वहति' इत्यर्थे षष्ठ्यन्तत्वाभावात् 'तस्येदम्' इति न स्यादित्ति भाष्यम् असङ्गतं स्यादिति चेन्न, 'रथस्य वोढा' इत्यर्थे भाष्यतात्पर्यात्। अत एव 'वोढा' इति द्रव्यप्रधानम्' 'वहतीति क्रियाप्रधानम्' इत्याशङ्क्य 'य एवार्थो रथं वहति, स एव रथस्य वोढेति' इति सूत्रेऽयमर्थः समर्थ्यं 'द्विरथ्य' इत्यत्र आर्हीयत्वाभावाल्लुङ् मा भूदिति फलान्तरमुक्तम्। 'य एव रथं वहति' इति भाष्यस्य विग्रहवाक्यात्मकत्वमित्याशयः। अन्यत्र तु भावप्राधान्यमेव तस्येति भाव इत्याहुः॥ ३६॥

तथाविग्रह=चित्रा गावो यस्येत्याद्याकारक। शक्तिमत्त्वेति—एकार्थीभावात्मिकायाः शक्तेरुभयत्र तुल्यत्वादित्यर्थः। निषादेति—विप्रात् शूद्रयां जातो निषाद इत्युच्यते। तदुक्तम्—

विप्रान्मूर्द्धावसिक्तो हि क्षत्रियायां विश स्त्रियाम्।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि च॥ इति

स्थपतीति—स्थपतिः=शिल्पी, राजा वा। तदुक्तम्—

स्थपतिः कारुभेदेऽपि भूभृद् भूमिधरे नृपे॥ इति॥

सिद्धान्तसिद्धिरिति—सिद्धान्तस्य=प्रमाणैर्निश्चितार्थस्य सिद्धिः=अनुष्ठानोपयोगिनी निष्पत्तिः। तत्र हि 'निषादस्थपतिं याजयेत्' इत्यत्र निषादस्थपतिशब्दः किं कर्मधारयः, उत षष्ठीतत्पुरुषो बहुव्रीहिर्वा इत्याशङ्क्य निषादस्थपतिशब्दः कर्मधारयः, लक्षणाविरहात्। ननु तत्पुरुषादिस्तत्र, लक्षणाऽऽश्रयणे गौरवादिति तन्नयसिद्धान्तस्तत्सिद्धिरेकार्थीभावस्वीकारे न स्यादुभयत्र शक्तिमत्त्वाविशेषेण क्वापि लक्षणाया अभावादिति भावः। ननु निषादस्थपति शूद्रस्तस्य वेदेऽनधिकाराद् याजनासम्भव इति चेन्न, विधिसामर्थ्याद् यागोपयोग्यध्ययनस्य कल्पनात्। नच गौरवम्, फलमुखगौरवस्यादोषत्वात्। फलम्=लाघवादिरूपं मुखे=आदौ यत्र तादृशगौरवस्यादोषत्वादित्यर्थः।

दर्पणव्याख्या

* शक्तिमत्त्वाविशेषादिति * शक्तिमत्त्वमेकार्थीभावः। * सिद्धान्तसिद्धिरिति * सिद्धान्तस्य=मीमांसितार्थस्य सिद्धिः=अनुष्ठानोपयोगार्हत्वमित्यर्थः। तथाहि—"निषादस्थपतिं याजयेत्" इति श्रूयते। तत्र निषादस्थपतिशब्दः किं षष्ठीतत्पुरुष, बहुव्रीहिर्वा, उत कर्मधारय इति संशये, कर्मधारयेऽपूर्वविद्याध्ययनकल्पनागौरवाद् बहुव्रीहौ वाक्यलक्षणाया गौरवाल्लाघवात् षष्ठीतत्पुरुष एवेति पूर्वपक्षे, तत्पुरुषस्यापि पूर्वपदलाक्षणिकतया कर्मधारयाऽपेक्षया गौरवाल्लाघवात्

पर्यवस्यच्छाब्दबोधाविदूरप्राक्क्षणस्थितेः ।
शक्तिग्रहेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम् ॥ ३७ ॥

पर्यवस्यंश्चासौ शाब्दबोधश्च तस्मादविदूरश्चासौ प्राक्क्षणश्च तदानीन्तनलाघवमादायाधिकरणाविरोध इत्यर्थः । अयं भावः—निषादस्थपतिपदस्य समासशक्तिपक्षे, निषादरूपे, निषादानाञ्च स्थपतौ, निषादस्वामिके पुरुषान्तरे चेत्येवं सर्वत्र शक्तत्वान्नानार्थत्वम् । तथाच "नानार्थे तात्पर्याद् विशेषावगतिः" इति न्यायेन तत्कल्पनायां पदद्वयेन पूर्वोपस्थितार्थे एवोपस्थित्यादिलाघवात् तत्

प्रभा

पर्यवस्यन्=फलीभवन् । तदानीन्तनेति—समासजन्यशाब्दबोधाव्यवहितप्राक्क्षणवृत्तिशक्तिग्रहनिष्ठान्तरङ्गबहिरङ्गभावस्य चिन्तनमादायेत्यर्थः । निषादस्वामिक इति—निषादः स्थपतिः स्वामी यस्येति बहुव्रीहिपक्षे पुरुषान्तरे इत्यर्थः । तत्कल्पनायाम्=तात्पर्यकल्पनायाम् । पूर्वोपस्थितार्थे इति—समासशक्तिग्रहात् प्राक् पदद्वयेन उपस्थितेः निषादरूपस्थपतौ एवेत्यर्थः । लाघवादिति—षष्ठीतत्पुरुषशक्तिग्रहस्य षष्ठ्यर्थसम्बन्धरूपाधिकविषयकत्वेन बहुव्रीहेश्चान्यपदार्थरूपाधिकविषयकत्वेन तदपेक्षया पूर्वोपस्थितवर्तिपदार्थमात्रापेक्षत्वेन कर्मधारयशक्तिग्रहे तात्पर्यकल्पने लाघवमिति भावः । जैमिनिनाप्युक्तम्—'स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्' इति । निषादाभिन्नस्थपतिरेव निषादस्थपतिपदबोध्यः, अन्तरङ्गत्वेन तथाविधेऽर्थे शीघ्रोपस्थितिजनकत्वानुकूलशक्तिरूपसामर्थ्यादित्यर्थः । ननु मीमांसकमते समासे नानाशक्तेरभावात् कथं

दर्पणव्याख्या

कर्मधारय एव । अपूर्वविद्याध्ययनस्योत्तरकालकस्यत्वेन तादृशगौरवस्य फलमुखतया अदोषत्वादिति । सिद्धान्तितम्, तद् विरुध्येत, भवन्मते तत्पुरुषस्वीकारेऽपि गौरवानवकाशादिति भावः ।

* तदानीन्तनेति * तादृशयावत्समासजन्यशाब्दबोधाव्यवहितप्राक्क्षणवृत्तिशक्तिग्रहनिष्ठान्तरङ्गबहिरङ्गभावचिन्तनप्रयुक्तलाघवमादायेत्यर्थः । तदेव निरूपयति—*अयम्भाव इति* । निषादरूप इति* स्थपतावित्यनेनान्वितम् । *निषादानामिति* । निषादसम्बन्धिस्थपतावित्यर्थः । तत्र षष्ठ्यर्थसम्बन्धान्तर्भावेणैकार्थीभावाभ्युपगमात् । *निषादस्वामिक इति* । स्थपतिशब्दस्य स्वाम्यर्थकतया निषादाभिन्नस्वामिके पुंसीत्यर्थः । तत्रान्यपदार्थान्तर्भावेण समुदायशक्तिस्वीकारात् 'नानार्थे' इत्यस्य युगपदनेकार्थोपस्थितौ जातायामिति शेषः । 'न्यायेन' इत्यस्य क्व तात्पर्यमिति सन्देहे सति । तत्कल्पनायाम्=तात्पर्यकल्पनायाम् । * पूर्वोपस्थितार्थे एवेति * । समासघटकप्रत्येकपदप्रयुक्तोपस्थापितार्थमात्रविषयककर्मधारयीयशक्तिग्रहस्यान्तरङ्गत्वेन प्रथमोपस्थितार्थे एवावस्थितिर्गौणतानिषादस्थपतिशब्दस्य तात्पर्यमवसीयते तेन विशेषावगतिः । ननु यदि भूतपदार्थविषयकशक्तिग्रहो रस्यापिते, तदुपस्थितेर्विलम्बितत्वादित्याशङ्कार्थः ।

निरुक्तन्यायेऽपि सामर्थ्यं मूलकृदभिप्रेतमित्यर्थे इदमपि प्रमाणम् । अन्यथा बहुत्त्वार्थत्वविरोधे पदानामानर्थक्यात् सत्ये शब्दसहपाठ्योपस्थितेरसम्भवेन क तन्मूलकशक्तिग्रह इति तत्सान्तरङ्गत्वकथनमसङ्गतमेव स्यादिति बोध्यम् । * तत् * तात्पर्यम् । * कल्प्यते *—आपाद्यते ।

ननु "संयोगो विप्रयोगश्च" इत्यादिना हरिणा संयोगादीनां विशेषावगतिहेतुत्वं बोध्यते, तत् कथं तात्पर्यस्य विशेषावगतिहेतुत्वमिति चेन्न, नानार्थकपुरस्थितानेकेषु संयोगादिनैकस्मिन्नवधारिते तात्पर्ये विशेषावगतिरिति शब्दार्थसंशयानवच्छेद इति भावार्थस्य वक्ष्यमाणत्वात् । संयोगादीनां तात्पर्यग्राहकतयामेवोपयोगेन तात्पर्यस्य विशेषावगतिहेतुत्वं सम्भवतीति भावः ।

कल्प्यत इति । परेषामपि सति तात्पर्य्ये 'यष्टीः प्रवेशय' इतिवल्लक्षणाया दुर्वारत्वात्, तात्पर्य्यमेव कल्प्यकोटावशिष्यत इति दिक् ॥ ३६ ॥

इति वैयाकरणभूषणसारे समासशक्तिनिरूपणम् ॥ ५ ॥

प्रभा

नानार्थकत्वमत आह—परेषामिति । लक्षणाया इति—षष्ठ्यर्थसम्बन्धविशिष्टे, अन्यपदार्थविशिष्टे च लक्षणाया दुर्वारत्वादित्यर्थः । नच निषादशब्दस्य जातिवाचित्वात् स्थपतिशब्दस्य स्वामिवाचकत्वेन गुणवाचकत्वात् विशेषणतया पूर्वनिपात उचित इति वाच्यम्, पूर्वनिपातस्यानित्यत्वात्, राजदन्तादित्वाच्च तस्य परनिपातकरणात् । नच स्वामिनः स्वे नित्यसाकाङ्क्षत्वेन षष्ठीसमास एवोचित इति वाच्यम्, जैमिनिना 'लिङ्गदर्शनाच्च' इति हेत्वन्तरोक्तेः । लिङ्गञ्च दृश्यते कूटञ्च दक्षिणेति तदर्थः । कूटं हि निषादानामेव स्वमिति शबरस्वामी । तात्पर्यमेवेति—ननु तात्पर्यग्राहकेषु हर्य्युक्तेषु संयोगादिषु शाब्दस्यागणनादिदमसङ्गतमिति चेन्न, स्वरादय इत्यादिना तस्यापि ग्रहीतुं शक्यत्वादित्यलम् ॥ ३६ ॥

समासेन समासस्य शक्तीनां निर्णयो गतः ।
प्रभायां बालकृष्णेन कृष्णो नंनम्यतेऽसकृत् ॥

॥ शुभम्भूयात् ॥

दर्पणव्याख्या

ननु प्रत्येकपदशक्तिपक्षेऽनायासेनैवाधिकरणसिद्धान्तापत्तौ विशिष्टशक्तिपक्षे तादृशसिद्धान्तसमर्थने क्लेशो दुष्परिहर एवेत्यत आह—*परेषामपीति* । *प्रवेशयेतियदिति* तात्पर्य्यस्यैव लक्षणानियामकतया तत्सत्त्वे वाक्यलक्षणया समासान्तरबोधस्य दुर्वारतया तात्पर्य्यभावेनैव तदवगतेर्वारणीयत्वादित्यर्थः ।

ननु "निषादस्थपतिं याजयेत्" इत्यत्र स्थपतिशब्दः स्वामिपर्यायः, श्रेष्ठार्थो वा । उभयथाऽप्यसौ गुणवचनः । तस्य च जातिवचननिषादपदेन कर्मधारये तत्र गुणवचनस्यैव पूर्वनिपातनियमेन स्थपतिनिषादमिति प्रसज्ज्येत, नतु निषादस्थपतिमिति स्यात् । किञ्च उभयथापि स्थपतिशब्दार्थस्य नित्यसम्बन्धिसापेक्षत्वेन षष्ठीसमास एव न्याय्यः, नतु कर्मधारय इति कथमुक्तसिद्धान्तसङ्गतिः प्रकृतेऽपीत्यत आह—*दिगिति* तदर्थस्तत्त एवास्वरसात् "लिङ्गदर्शनाच्च" इति सूत्रं हेत्वन्तरोपसङ्ग्राहकं प्रणीतं महर्षिणा । तच्च शबरस्वामिना "कूटं हि निषादानामेवोपकारकम् नार्याणाम् । एवञ्च तन्निषादानामेव स्वम्" इति भाष्ये व्याख्यातम् । तथाच कूटदक्षिणालिङ्गात् कर्मधारयत्वे निर्णीते स्थपतिशब्दस्य राजदन्तादित्वात् परनिपातो बोध्यः, सम्बन्ध्याकाङ्क्षानिवृत्तिरप्यर्थतो निषादानां स्वत्वलाभादुपपद्यते । एवं लाघवादिविचारस्तु कथञ्चित् सम्भवमात्रेणेति सर्वमनवद्यम् ॥ ३६ ॥

इति वैयाकरणभूषणसारदर्पणे समासशक्तिनिरूपणम् ।



## ॥ अथ शक्तिनिर्णयः ॥

शक्तिप्रसङ्गात् तस्याः स्वरूपमाह—

## ॥ अथ शक्तिनिर्णयः ॥

### प्रभा

शक्तिप्रसङ्गादिति—"समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ।"

इति समासप्रकरणोक्तग्रन्थेन "एकसम्बन्धिज्ञानमपरसम्बन्धिनः स्मारकम्" इति न्यायेन शक्तित्वरूपधर्मसाजात्यसम्बन्धेन घटादिपदनिष्ठशक्तेरपि स्मरणात् स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गसङ्गत्या आह—तस्याः स्वरूपमिति—शक्तेराकार इत्यर्थः। येषां पदानामर्थनिरूपितवृत्तिज्ञानं नास्ति ततः पदार्थोपस्थिति, शाब्दबोधश्च न जायते, अतः "तद्धर्मावच्छिन्नार्थविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मावच्छिन्नार्थनिरूपितवृत्तिविशिष्टज्ञानस्य हेतुत्वम्" वाच्यम्।

ज्ञाने वृत्तिवैशिष्ट्यञ्च—स्वाश्रयपदविषयकत्व—स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्योभयसम्बन्धेन।

तत्र पदज्ञानाभावेऽपि शाब्दबोधवारणायाद्यसम्बन्धः। वृत्तिज्ञानजन्यसंस्कारसत्त्वेऽपि विस्मृतवृत्तिकस्य शाब्दबोधवारणाय द्वितीयः। वृत्तिज्ञानञ्च आज्ञाप्याज्ञापकवृद्धयो. 'घटमानय' इत्युक्तिरूपघटकर्मकानयनरूपव्यवहारेणाप्तोपदेशादिना च पदनिष्ठवृत्तिजिज्ञासोर्जायते।

तथाच 'तद्धर्मावच्छिन्ननिरूपितवृत्तिविषयकपदज्ञानत्वरूपकारणतावच्छेदकघटकतया निविष्टवृत्तेर्ज्ञानस्य विशिष्टज्ञानं प्रति विशेषणज्ञानं कारणम्' इति विशेषणज्ञानविधया आवश्यकत्वम्। तत्र वृत्तित्वसामान्यलक्षणन्तु 'शाब्दबोधौपयिकसम्बन्धत्वम्','पदपदार्थोभयनिरूपितसम्बन्धत्वम्' वा। सा च वृत्तिर्द्विधा—शक्तिर्लक्षणा चेति। तत्र ईश्वरसङ्केतश्शक्तिः। आधुनिकसङ्केतः परिभाषा। शक्त्या अर्थबोधकं पदं वाचकमित्युच्यते। बोध्यश्चार्थो वाच्य इति। परिभाषया अर्थबोधकं पारिभाषिकम्—यथा नदीवृद्ध्यादिपदम्। यत्पद शक्तिं परिभाषां विनापि सादृश्यादिना बोधकं तल्लाक्षणिकम् इत्युच्यते। 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इति 'इदं पदमेतदर्थविषयकबोधजनकं भवतु' इति अर्थविशेष्यिका, पदविशेष्यिकेश्वरेच्छा वा। ईश्वरेच्छा संकेतः, स एव शक्तिः। लक्षणा च शक्यसम्बन्धरूपा। तत्र तात्पर्यानुपपत्तिरेव लक्षणाबीजम्, नत्वन्वयानुपपत्तिः, गङ्गापदस्य नौकायां लक्षणाप्रसङ्गात्। घोषपदस्य मीने लक्षणापत्तिरिति तु न, 'न विधौ परः शब्दार्थः' इति न्यायात्, इति नैयायिकाः।

### दर्पणव्याख्या

*प्रसङ्गादिति* "समासे खलु भिन्नैव शक्तिः" इति ग्रन्थेन स्मृताया शक्तेरनुपेक्षणीयत्वादिति भाव। अगृहीतवृत्तिकात् पदात् पदार्थोपस्थितेः शाब्दबोधस्य चादर्शनात्तद्धर्मावच्छिन्नविषयकशाब्दबुद्धिं प्रति तद्धर्मावच्छिन्नार्थनिरूपितवृत्तिविषयकपदज्ञान करणम्, वृत्त्या पदजन्यपदार्थोपस्थितिर्व्यापारः, तां विना तदनुत्पत्ते नतु वृत्तिमत्त्वेन ज्ञातं पदम्, अतीतानागतशब्दानुसन्धानाच्छाब्दबोधानुदयप्रसङ्गात्।

वृत्तिश्च—शक्तिलक्षणाभेदाद् द्विविधा। तत्रार्थे पदसङ्केतः शक्तिः। स चेदपदमिममर्थं बोधयतु इति पदविशेष्यकेश्वरेच्छात्मक। 'अस्मात् पदादयमर्थो बोध्यः' इत्याकारपदार्थविशेष्यकेश्वरेच्छारूपो वा, विनिगमकाभावात्। तया चार्थबोधकं पदं वाचकमिति व्यवह्रियते। शास्त्रकारादिसङ्केतः परिभाषा। तया चार्थबोधकं पदं पारिभाषिकमिति व्यवह्रियते, यथा—नदीवृद्ध्यादिपदम्। लक्षणा च शक्यसम्बन्ध। तत्कल्पिका च मुख्यार्थबाधोन्नीततात्पर्यानुपपत्तिः।

तथाहि—'गङ्गायां घोषः' इत्यत्र गङ्गापदस्य घोषाभाववत्प्रवाहार्थकत्वेन तीरतात्पर्यकत्वे उन्नीते तात्पर्यविषयतीर-

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥ ३७ ॥

प्रभा

वैयाकरणमते तु वृत्तिस्त्रिधा—शक्तिर्लक्षणा व्यञ्जना च । तत्र शक्तिज्ञानं विना शक्यसम्बन्धरूपाया
लक्षणाया ज्ञानासम्भवात् प्रथमं शक्तिरूपाया वृत्तेः स्वरूपमाह—इन्द्रियाणामिति । स्वविषयेष्विति—स्वम्=
इन्द्रियं तज्जन्यं घटादिज्ञानं तद्विषयेषु घटादिषु इत्यर्थः । तथाच इन्द्रियजन्यं ज्ञानरूपं यत्कार्यं तद्गतं
सविषयकत्वं कारणेषु=इन्द्रियेषु आरोप्योक्तम्—स्वविषयेष्विति । एतेन ज्ञानेच्छायत्नसंस्काराणामेव सविषय-

दर्पणव्याख्या

स्मृतिं विनाऽनुपपद्यमानेन तीरशाब्दबोधेन तत्स्मृतिराक्षिप्यते । सा च गङ्गापदवृत्तिं विनानुपपद्यमाना तज्ज्ञानमाक्षिपति ।
तद्विषयो गङ्गापदनिरूपिता वृत्तिर्न शक्तिः, तस्यानाभावादतस्तीरस्मारिका काचिदन्यैव वृत्तिः कल्प्यते । सा च गङ्गापदशक्य-
सामीप्यरूपैव तेन रूपेण गृह्यमाणा तीरं स्मारयत्यनुभावयति च । शक्याशक्योपस्थितिस्तु न लक्षणा, उपस्थितिहेतोस्त-
स्यास्तत्वासम्भवात् । नापि स्वबोध्यसम्बन्धः, समाशक्तिनिरूपणोक्तयुक्तेः ।
नन्वीश्वरेच्छायाः शक्तित्वासम्भवः, घटपदस्यापि पटे शक्तत्वप्रसङ्गात्, 'घटपदात् पटो बोद्धव्य' इतीच्छाया विषय-
तया पटेऽपि सत्त्वात् । यदि चेश्वरेच्छीयघटपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यत्वं शक्तिरिति न पटपदेऽतिप्रसङ्ग,
तद्विषयत्वेऽपि तादृशविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वस्य तत्रानभ्युपगमादित्युच्यते, तदापि गङ्गापदात् तीरबोध-
स्यापि जायमानत्वेन सन्मात्रविषयकेश्वरेच्छीयगङ्गापदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यत्वस्य तीरे सत्त्वाच्छक्यत्वेन
निर्वाहे कृत लक्षणयेति चेन्न, गङ्गापदवाच्यत्वव्यवहारस्य तीरादावसत्त्वेन गङ्गापदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानि-
रूपितविशेष्यत्वसम्बन्धेन ईश्वरेच्छीयगङ्गादिपदानां प्रवाहादौ शक्तिः, तीरादिनिष्ठविशेष्यतायाश्च गङ्गादिपदजन्यबोधनि-
धयत्वप्रकारतानिरूप्यत्वेऽपि न तस्या तादृशविषयतात्वेन तादृशप्रकारतानिरूपितत्वम्, अपि तु शुद्धविषयतात्वेनैवेत्यभ्यु-
पगमान्न तया लक्षणाऽन्यथासिद्धि, नापि विषयत्वलक्षणसम्बन्धस्य पदे बन्धजनकभावे च सत्त्वेऽपि तत्रातिप्रसङ्गः ।
तत्र लक्ष्योपस्थितिनियामकः सादृश्यात्मकः सम्बन्धो गौणी, तदतिरिक्तस्तु शुद्धलक्षणेति व्यवह्रियते । शुद्धाप्युपादान-
लक्षणभेदेन द्विविधा । तत्र मुख्यसहार्थोपस्थापकत्वमुपादानत्वम् । शक्याविषयकलक्ष्यार्थोपस्थितिजनकत्वं लक्षणत्वम् ।
'यष्टीः प्रवेशय,' 'गङ्गायां घोष' इत्यादिके यथायथमुदाहरणे । तत्राप्याद्याऽजहत्स्वार्था, अन्त्या च जहत्स्वार्थेत्युच्यते । वक्ष्य-
माणरीत्या स्वन्यतोऽवधार्याणीति नैयायिका आहु ।
मीमांसकास्तु उक्तयुक्त्या लाक्षणिकपदस्य वाचकत्वपरिहारेऽपि नेश्वरेच्छायाः शक्तित्वम्, ईश्वरस्यैवानभ्युपगमात् ।
नन्विच्छाया ईश्वरीयत्व नुपादेयमेवत्राऽऽधुनिकसङ्केतज्ञानादपि शाब्दबोधोदयेन तादृशसङ्केतस्य वृत्तित्वानिर्वाहः । आधु-
निकसङ्केतत्वेन तात्पर्यस्याऽपि वृत्तित्वप्रसङ्गस्तु न, पदार्थोपस्थितिनियामकसङ्केतस्यैव वृत्तित्वेन तस्याऽतत्त्वात् । तज्ज्ञानस्य
साक्षादेव शाब्दधीजनकतया पदार्थोपस्थित्यात्मकव्यापारानपेक्षणाद् वृत्त्युपस्थापितार्थ एव प्रकरणादिना तदवधारणात् ।
आधुनिकसङ्केतितडित्थादिपदेषु त्वाधुनिकसङ्केतस्य प्रागवधारितस्य डित्थादिव्यक्तिशाब्दधीजनकपदार्थोपस्थितौ
नियामकत्वेन तद्वृत्तित्वस्य सौलभ्यादिति चेदेवमपि सङ्केतस्य निष्प्रतियोगिकतया तदीयोच्चविषयत्वस्याप्यासमर्गाय-
तया सम्बन्धित्वासम्भवेन पदार्थानुपस्थापकत्वाद् वृत्तित्वानिर्वाहात् । तस्मात् पदपदार्थयोर्वाच्यवाचकभावनियामकः सम्बन्धः
पदार्थान्तरमेव । नाप्यसौ समवेत, अभावादावपि सत्त्वात् । किन्तु वैशिष्ट्याख्येन सम्बन्धान्तरेण वर्तत इत्याहुः ।
वाच्यत्व यथा न समवायि तथा वक्ष्यत इति वदता दीधितिकृतापि तन्मतमेवानुसृतम् । तदेतन्नानामतानि निरा-
कर्तुमादौ तत्स्वरूपप्रदर्शनमित्याशयेन मूलमवतारयति—*तस्याः स्वरूपमिति* तस्याः—शक्तेः । निर्विषयाणां देश कृप

इन्द्रियाणाम्=चक्षुरादीनां स्वविषयेषु=चाक्षुषेषु घटादिषु यथाऽनादिर्योग्यता=तदीयचाक्षुषादिकारणता, तथा शब्दानामपि अर्थैः सह तद्बोधकारणतैव योग्यता, सैव शक्तिरित्यर्थः।

ननु न बोधकारणत्वमनादिभूतं शक्तिः, आधुनिकदेवदत्तादिपदे तदभावात्।

प्रभा

कथया 'इन्द्रियाणां स्वविषयेषु' इत्युक्तिरसङ्गतेत्यपास्तम्। इन्द्रियाणामित्यत्र निष्ठत्वं षष्ठ्यर्थः। स्वविषयेषु इत्यत्र निरूपितत्वं सप्तम्यर्थः। योग्यता=कारणता। तथाच इन्द्रियनिष्ठा इन्द्रियविषयघटादिनिरूपिता या कारणता सा यथा अनादिस्तथा सकलशब्दनिष्ठा घटादिनिरूपिता योग्यताऽपि अनादिः। नच घटादिनिरूपितेन्द्रियनिष्ठा कारणतेत्यसङ्गतम्, घटादेरिन्द्रियाजन्यत्वादिति वाच्यम्, घटादिज्ञानगतकार्यत्वस्यारोपेण तदुक्तेः।

वस्तुतस्तु घटादिविषयकचाक्षुषादिज्ञाननिरूपिता योग्यता (कारणता) इन्द्रियनिष्ठा यथा अनादिस्तथा शब्दनिष्ठा अर्थविषयकज्ञाननिरूपिता योग्यता (कारणता)ऽपि अनादिः। योग्यतायामनादित्वञ्च—'इन्द्रियजन्यज्ञानप्रतियोगिकध्वंसव्याप्यत्वम्' कालिकसम्बन्धेन व्याप्यव्यापकभावो बोध्यः। तथाहि—यदा यदा चक्षुरादीन्द्रियनिष्ठा ज्ञानजनकता तदा तदा तज्ज्ञानपूर्वकालिकतदिन्द्रियजन्यज्ञानध्वंस इति ध्वंसस्य व्यापकत्वम्, ज्ञानजनकतायाश्च व्याप्यत्वं सुलभम्। नच सृष्ट्यारम्भे इन्द्रियनिष्ठप्राथमिकज्ञानजनकताकाले तदिन्द्रियजन्यपूर्वज्ञानाभावेन तद्ध्वंसस्याभावाद् व्यभिचार इति वाच्यम्, तत्पूर्वसृष्टिकालिकतादृशज्ञानध्वंसस्य तदानीमपि वक्तुं शक्यत्वात्। प्रागभावाप्रतियोगित्वं वाऽनादित्वम्, ज्ञानजननसामर्थ्यरूपायाः जनकताया नित्यतया, प्रागभावाप्रतियोगित्वस्याक्षतेः। इयञ्च योग्यतारूपा शक्तिः पदार्थान्तरम्, नत्वीश्वरेच्छारूपा, ईश्वरेच्छा-ज्ञान-यत्नानामन्यतमरूपत्वे मानाभावेन सर्वरूपत्वे गौरवात्। भूषणकाराभिमतं बोधजनकत्वं शक्तिरिति सिद्धान्तं स्फुटीकर्तुं वाक्यपदीयकारिकयाऽऽह ग्रन्थकारः—इन्द्रियाणामिति। शब्दकौस्तुभेऽप्युक्तम्—घटादिबोधजननसामर्थ्यमेव घटादिपदानां शक्तिरिति। शब्दार्थयोः सम्बन्धो योग्यता।

तत्रानादित्वविशेषणं न युक्तमिति ध्वनयन्नाह—नन्विति। आधु...वेति=एतत्कालिकडित्थादिसंकेतविषयेत्यर्थः। तदभावात्=अनादित्वविशिष्टबोधकारणत्वस्याभावात्। बोधकारणत्वस्य सर्वेऽपि बोधगता-

दर्पणव्याख्या

अन्यथा पित्रादीनां सङ्केताज्ञानेऽप्यन्वयबोधप्रसङ्गः, लाक्षणिकातिव्याप्तिश्चेति सङ्केतज्ञानमपि हेतुर्वाच्यम् । तथाचावश्यकत्वात् स एव शक्तिरस्तु ।

प्रभा

नादित्वस्याभावेन विशेषणाभावप्रयुक्तविशिष्टाभाव इति भावः । अन्यथा=देवदत्तादिपदेऽप्यनादित्वविशिष्ट-
बोधकारणत्वस्वीकारे । पित्रादीति—यदि देवदत्तादिपदेऽपि अनादिबोधकारणता स्यात्तदा पित्रादिसंकेत-
ज्ञानस्य तद्ग्राहकतया पित्रादिसंकेतज्ञानाभावेऽपि देवदत्तादिपदाच्छाब्दबोधापत्तिरिति भावः ।
ननु बोधकारणत्वमेव शक्तिः । अनादित्वं नहि शक्तिशरीरे निविष्टम्, किन्तु प्रसिद्धत्वमात्रबोधकम् ।
तथाच देवदत्तादिपदे तादृशशक्तेरप्रसिद्धत्वात् सत्त्वेऽपि न बोध इत्यत आह—लाक्षणिकेति—अत्र प्रसिद्ध-
बोधकारणत्वसत्त्वात् तटनिरूपितापि गङ्गापदे शक्तिः स्यादिति भावः । नन्वप्रसिद्धबोधकारणत्वस्य सत्ता-
मात्रेण बोधस्वीकारे 'नहि वह्निरविदितशक्तिर्न दहति' इति व्युत्पन्नवदव्युत्पन्नस्यापि बोधवारणाय यथा
प्रत्यक्षप्रमाणचक्षुरादेरनाद्यर्थप्रत्यायकत्वे सत्यपि इन्द्रियसंनिकर्षापेक्षा, तथा अत्रापि संकेतग्रहसचिवस्यैव
बोधकत्वमित्याह—संकेतज्ञानमिति—तथाच लक्ष्यतटादिनिरूपितसंकेतज्ञानाभावान्नातिव्याप्तिरिति भावः ।
अपीति—अपिना योग्यताज्ञानसंग्रहः । तथाच=संकेतज्ञानस्य हेतुत्वे सिद्धे च । स एव=संकेत एव । संकेतश्च—
'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्याद्याकारकेच्छारूपोऽर्थविशेष्यकः । इदं पद ( घटादिपद ) जन्यबोधीय-
विषयतावानर्थ इति तदर्थात् विषयतानिष्ठप्रकारतानिरूपिता विशेष्यता अर्थे सुलभेति अर्थविशेष्यकत्व-
मुक्तसंकेते । इदंपद ( घटादि ) मिममर्थं बोधयतु इत्याकारकेच्छारूपः पदविशेष्यकश्च इदमर्थ, ( घटाद्यर्थ )
विषयकबोधजनकतावत्पदं भवतु इति तदर्थात् बोधजनकत्वनिष्ठप्रकारतानिरूपितविशेष्यतायाः पदे
सत्त्वात् । संकेतस्य शक्तित्वादेवार्थबोधकं पदं शक्तमिति व्यवहारः । अर्थबोधकत्वस्यैव वाचकत्वे तु दण्ड-
वान् दण्डवान्' इतिवत् उद्देश्यताऽवच्छेदकविधेयताऽवच्छेदकयोरैक्यादुद्देश्यविधेयभाव एव न स्यात् ।
किञ्च बोधजनकत्वान्यथानुपपत्त्या कल्प्यमानशक्तेर्बोधजनकत्वरूपत्वे आत्माश्रयापत्तेः, स्वस्य स्वोपपाद-
कत्वासम्भवात् । तत्रेदं तत्त्वम्—ईश्वरसंकेतः शक्तिः तया बोधकं वाचकम् । आधुनिकसंकेतः परिभाषा तया
बोधकं पारिभाषिकम् । घटपटादिपदं वाचकम् । वृद्धिगुणादिपदं पारिभाषिकम् । यत्र चोभयविधोऽपि
संकेतो नास्ति, अथ च सादृश्यादिना बोधकं तल्लाक्षणिकमित्युच्यते । लक्षणा च शक्यसम्बन्धरूपैव । यत्र
सादृश्यातिरिक्तसम्बन्धरूपा लक्षणा सा शुद्धा इति, यत्र सादृश्यात्मकसम्बन्धरूपा सा गौणी इति च
व्यवह्रियते । मुख्यार्थपूर्वकतात्पर्यानुपपत्तिरेव लक्षणाबीजम् । यथा 'गङ्गायां घोषः' इत्यत्र । प्रथमं गङ्गापदेन
प्रवाहविशेषोपस्थितिः । तत्र घोषाभावज्ञाने जाते इदं गङ्गापदं घोषाभाववत्प्रवाहार्थकमिति ज्ञानानन्तरम्—
गङ्गापदं तटविषयकतात्पर्यवत् घोषान्वय्यर्थबोधजनकत्वप्रकारकतत्कालिकाभिप्रायविषयत्वात् यन्नैवं तन्नै-
वमित्यनुमित्या तात्पर्यज्ञाने जाते 'तटे घोषः' इति शाब्दबोधो जायते । स च तटोपस्थितिं विनाऽनुपपन्नः ।
तटोपस्थितिश्च गङ्गापदे तटविषयकवृत्तिं विनाऽनुपपन्ना सती गङ्गापदस्य तटे वृत्तिं कल्पयति । तत्र कोशाद्य-
भावात् तटनिरूपिता शक्तिरूपा वृत्तिस्तु असम्भवन्ती सती अनुमितिविषयलक्षणायां पर्यवस्यति । नन्वी-
श्वरेच्छायाः शक्तित्वमेव युक्तम्, ईश्वरेच्छाया एकत्वेन लाघवात् । सा यथा घटपदाद् घटो बोद्धव्य इत्या-

दर्पणव्याख्या

सङ्केतनिरपेक्षस्यैव तस्य शाब्दबोधहेतुत्वे इत्यर्थः । * लाक्षणिकेति * तत्राप्यनादि-
सम्भवतीत्याह—* अन्यथेति * भूतस्यापि बोधजनकत्वस्य सत्त्वादिति भावः । *आवश्यकत्वादिति* अवश्याऽपेक्षणीयज्ञानविषयत्वादित्यर्थः । *स एव*=

स चाधुनिके पित्रादेः, गवादौ चेश्वरस्य चेति चेत् ,
अत्रोच्यते—सङ्केतो न स्वरूपेण हेतुः, अगृहीतशक्तिकादर्थबोधप्रसङ्गात् ।

प्रभा

कारिका, तथा घटपदात्पटो बोद्धव्य इत्याकारिकापि । तथाच घटस्य घटपदवाच्यत्ववत्पटस्यापि घटपदवाच्यत्वापत्तिः, ईश्वरेच्छीयविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यताया घटपदेऽपि सत्त्वात् । ईश्वरेच्छाया एकत्वेऽपि घटपदजन्यबोधविषयतानिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनेच्छावत्त्व एव यदि घटपदस्य वाच्यत्वमित्युच्यते, तदापि ईश्वरेच्छायाः सन्मात्रविषयकत्वेन 'गङ्गापदात् तटो बोद्धव्यः' इत्याकारिकेच्छाया अपि आवश्यकत्वेन गङ्गापदजन्यबोधीयविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन तटस्यापि ईश्वरेच्छाविशिष्टतया गङ्गापदवाच्यत्वापत्तिरिति चेन्न, 'गङ्गापदं तटवाचकम्' इत्यस्य, 'तटो गङ्गापदवाच्य' इत्यस्य वा व्यवहारस्य लोकेऽदर्शनेन 'गङ्गापदजन्यबोधविषयतावाँस्तटः' इत्यस्य दर्शनेन च गङ्गापदजन्यबोधीया या विषयत्वनिष्ठा प्रकारता तस्यां शुद्धविषयतात्वावच्छिन्नत्वमेवाङ्गीक्रियते । वाच्यस्थपदकविषयत्वनिष्ठप्रकारतायाञ्च गङ्गापदजन्यबोधीयविषयतात्वरूपविशिष्टधर्मावच्छिन्नत्वमपेक्ष्यते इति तादृशविषयतात्वावच्छिन्नप्रकारतानिरूपिता विशेष्यता च प्रवाहे एव, नतु तटे इति गङ्गापदवाच्यत्वस्य तटेऽनतिप्रसङ्गात् । इत्थञ्च 'तत्तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छाविशिष्टोऽर्थो वाच्यः' इत्यभ्युपगमान्न लक्ष्यार्थेऽव्यतिव्याप्तिरिति सर्वं सुस्पष्टम् । स च=संकेतश्च । आधुनिके=आधुनिकसंकेतविषये देवदत्तादौ । इदं नैयायिकमतेन ।

अत्र मीमांसकाः—ईश्वरेच्छा न शक्तिः, ईश्वराभावात् । किन्तु यस्य कस्यचित्संकेत एव शक्तिः अत एव देवदत्तादिपदादपि शाब्दबोधः । नच 'द्वादशेऽहनि पिता नाम कुर्यात्' इति श्रुत्या तत्रापि ईश्वरसंकेतसत्त्वान्न दोषः, तत्तदानुपूर्वीमत्पदघटितसंकेतस्यैव शक्तित्वात् । अन्यथा अपभ्रंशानामपि तव ( नैयायिकस्य ) मते शक्तत्वापत्तिः । नचैवं तात्पर्यस्यापि संकेतरूपत्वाच्छक्तित्वापत्तिः, पदार्थोपस्थितिजनकस्यैव संकेतस्य शक्तित्वस्वीकारात् । तात्पर्यस्य [illegible] साक्षाच्छाब्दबोध प्रत्येवार्थविशेषविषयकत्वनिर्णायकतया कारणत्वम्, नतूपस्थितिं प्रत्यपीत्यदोषात् । शब्देन वृत्त्योपस्थितेषु अनेकार्थेषु प्रकरणादिना तात्पर्यनिर्णय इति च लोकप्रसिद्धिरिति, तन्न युक्तम्, पदपदार्थयोः सम्बन्धोऽभिधा, सम्बन्धस्य च सप्रतियोगिकत्वनियमात् । संकेते तु सप्रतियोगिकत्वस्यानुभवविरुद्धत्वात्सम्बन्धत्वाभावः । किन्तु शक्तिः पदार्थान्तरम्, सैव च पदपदार्थयोर्वाच्यवाचकभावनियामिका । सा च वैशिष्ट्याख्यसम्बन्धेनार्थनिष्ठा प्रतियोगित्वसम्बन्धेन पदनिष्ठा चेति मीमांसकमतं निराकर्तुं स्वमतमाह—अत्रोच्यते इत्यादिना—आदौ संकेत शक्तिरिति मतं निरस्यति—सङ्केत इति । संकेतोऽज्ञातोऽपि चक्षुरिव स्वरूपतः सत्तामात्रेण हेतुः ? 'ज्ञातः सन् वा हेतुः ? ज्ञानमपि किं सामान्यरूपेण ( येन केनापि धर्मेण ) उत विशेषरूपेण ? नाद्यः, स्वस्य रूपम्=स्वनिष्ठो धर्मविशेषः संकेतत्वम्, तेन सतोऽज्ञायमानस्यापि हेतुत्वे । अगृहीतशक्तिकात्=अज्ञातसंकेतरूपशक्तिकादपि शब्दा-

दर्पणव्याख्या

सङ्केत एव । एवकारेण औपचारिकत्वव्यवच्छेदः, सङ्केतस्य स्वरूपतः कारणत्वे ज्ञातस्य वा, तत्रापि सामान्यतो विशेषरूपेण वा हेतुत्वमभिमतमिति विकल्पं दूषयति—अत्रोच्यत इति । स्वरूपेणेति । स्वस्य यद्रूपमिति [illegible] सङ्केतत्वेनेत्यर्थः । दण्डत्वेन घटे दण्ड इव ज्ञानाविषय एव संकेतः सङ्केतत्वेन हेतुरिति यावत् । अगृहीतशक्तिकादिति । अज्ञातसंकेतादित्यर्थः । [illegible] अर्थबोधप्रसङ्गादिति । सङ्केतस्य तत्र विद्यमानत्वादिति भावः ।

नापि सामान्यतो ज्ञातः, प्रमेयत्वादिना तज्ज्ञानेऽपि बोधप्रसङ्गात् । नाऽपि सङ्केतत्वेन तत्तदर्थ-तज्ज्ञानं हेतुः, गवादिपदेष्वपीश्वरादेः सङ्केतत्वेन तज्ज्ञानशून्यानां लौकिकमीमांसकादीनां तत्तदर्थ-बोधजनकत्वग्रहवतामेव बोधोदयेन व्यभिचारात् । नचार्थधीजनकतावच्छेदकत्वेन

प्रभा

दर्थबोधापत्तिरित्याह—प्रमेयत्वादिनेति । सामान्येन ज्ञानं निराकरोति—नापीति । प्रमेयत्वादिनेति—प्रमेयत्वस्य सर्वान्वयितया संकेतस्यापि तेन रूपेण ज्ञानसम्भवादिति भावः । सङ्केतत्वेनेति—संकेतत्वरूपविशेषधर्मेणे-त्यर्थः । गवादिपदेष्विति—गवादिपदेषु ईश्वरसंकेतस्यैव सम्भवेन ईश्वरानङ्गीकर्तृमते तत्र संकेतकर्तुरभावात् संकेतत्वेन ज्ञानाभावेऽपि बोधादर्शनाच्च संकेतत्वेनापि तज्ज्ञानं हेतुरित्याह—ईश्वरादेरिति—आदिना मह-र्षीणां संग्रहः । ईश्वरादेः संकेतत्वेन=ईश्वरादिकर्तृकेच्छाविषयत्वेन । तज्ज्ञानशून्येति—गवादिपदेषु संकेतकर्तुरी-श्वरादेरभावात् । संकेतस्याप्यभावेन तज्ज्ञानशून्यानाम्=संकेतज्ञानशून्यानाम् । लौकिकमीमांसकादीनामिति—लौकिकाश्च मीमांसकाश्चेति विग्रहे द्वन्द्वे लौकिकमीमांसकास्ते आदयो येषामित्यर्थे द्वन्द्वघटितो बहुव्रीहिः । तत्र लौकिकाः=व्यावहारिकपदार्थमात्रज्ञानवन्तः पामराः । मीमांसकास्तु श्रुति-लिङ्गादिबलाबलविचारपूर्वक-कर्मकाण्डविषयकतत्त्वनिर्णायकजैमिनिप्रणीतग्रन्थविशेषं मीमांसामधीयते विदन्ति वा ये त उच्यन्ते । आदिना चार्वाकादिनास्तिकसंग्रहः । तत्तदर्थेति—'गवादिपदं गवाद्यर्थविषयकबोधजनकम्' इत्याकारकज्ञानवतामित्यर्थः । ग्रहणवतामेवेति—एवशब्दः सङ्केतज्ञानं व्यवच्छिनत्ति । तद्व्यवच्छेदस्य 'तज्ज्ञानशून्यानाम्' इत्यनेनैवोपपत्त्या-देवकाररहित एव पाठो युक्तः । बोधोदयेनेति—'इदं पदमेतदर्थविषयकबोधजनकत्वावत्' इति पदविशेष्यकार्थ-विषयकबोधजनकत्वप्रकारकज्ञानाच्छाब्दबोधोत्पत्त्येत्यर्थः । व्यभिचारादिति—संकेतज्ञानस्य पदविशेष्यकबोध-जनकत्वप्रकारकज्ञानत्वेन सत्त्वेऽपि तत्तदर्थनिरूपितेश्वरसंकेतत्वावच्छिन्नशक्तिज्ञानत्वेन सङ्केतज्ञानरूपकार-णस्यासत्त्वेन शाब्दबोधरूपकार्यस्य च सत्त्वेन कार्यतावच्छेदकसम्बन्धेन कार्याधिकरणवृत्त्यत्यन्ताभावीय-प्रतियोगितानवच्छेदकधर्मवत्त्वरूपकारणतायां व्यभिचारात्=कार्यसत्त्वेऽपि कारणासत्त्वरूपाद् व्यभिचारा-दित्यर्थः । यद्यपि संकेतत्वेन संकेतज्ञानस्य हेतुत्वशङ्कायां कारणतावच्छेदकदले नेश्वरस्य निवेशस्तथापि गवा-दावाधुनिक संकेतकर्तुरभावात्संकेताभावे बोधानापत्त्या ईश्वरस्यैव संकेतयितृत्वस्यावश्यकतया 'गवादिपदे-ष्वपीश्वरादेः' इति ग्रन्थोक्त्यनुरोधेनेश्वराज्ञानवतां तत्कृतज्ञानाभावप्रदर्शनायेश्वरोपन्यासः कृतः । यदुक्तं प्राक् 'संकेतत्वेन' इति तत्र विशेषरूपेणेति शेषः, तत्पूर्वं 'सामान्यतः' इत्युक्तेः । तत्र विशेषरूपं न संकेतत्वम्, किन्तु तत्तदर्थधीजनकतावच्छेदकत्वरूपमितिशङ्कां निराचष्टे—नचेति—गोपदं गोरूपार्थविषयकबोधजनकमिति ज्ञानस्य शाब्दबोधजनकत्वं मीमांसकैः स्वीक्रियते । केन रूपेण तत्र जनकतेत्याकाङ्क्षायाम् 'तत्तदर्थधीजनकतावच्छे-दकत्वेन' इत्युक्तम् । अयं भावः—यथा कस्यचित्पुरुषस्य घटरूपार्थस्य घटत्वेन ज्ञानाभावेऽपि ततो जला-हरणदर्शनेन जलाहरणकरणत्वेन घटस्य ज्ञानमस्त्येव । एवं संकेतकर्तुरीश्वरस्य ज्ञानाभावे तत्कार्यरूपसंके-

दर्पणव्याख्या

* सामान्यत इति * जनकाजनकसाधारणरूपेणेत्यर्थः । * सङ्केतत्वेनेति * ईश्वरीयसङ्केतत्वादिना विशेषधर्मे-णेत्यर्थः । * तज्ज्ञानशून्यानामिति * सङ्केते ईश्वरीयत्वमविदुषामित्यर्थः । * लौकिकमीमांसकानामिति * वैदिकानां तेषां कथञ्चिदीश्वरबोधसम्भवादुक्तम्—* लौकिकेति * । अथवा लौकिकानां व्यावहारिकपदार्थमात्रविषयकज्ञा-नवतां पामराणामिति यावत्, मीमांसकानां चेत्यर्थः । *बोधोदयेनेति* सङ्केतत्वेन तज्ज्ञानमात्राद् गवाद्यर्थबोधोदयेनेत्यर्थः ।

तज्ज्ञानं तथा, ततोऽपि लाघवेनार्थधीजनकत्वेनैव हेतुतायामस्मत्पक्षसिद्धेः। नचाधुनिकदेवदत्तादौ सङ्केतज्ञानादेव बोधेनास्य व्यभिचारः, तत्रापि "इदम्पदम् एनमर्थं बोधयतु" इतीच्छाग्रहे पदे तदर्थबोधकत्वस्यावगाहनेन व्यभिचाराभावात्।

### प्रभा

तस्य मीमांसकानां संकेतत्वरूपविशेषधर्मेण ज्ञानाभावेऽपि पदविशेष्यकबोधजनकत्वप्रकारकज्ञाने पदस्य विशेष्यतया विशेष्यितासम्बन्धेन शाब्दबोधकारणीभूतोक्तज्ञाने पदस्य विशेषणतया भानेन तत्र पदे ज्ञाननिष्ठशाब्दबोधीयकारणतावच्छेदकत्वस्य विशेष्यित्वरूपविषयित्वसम्बन्धावच्छिन्नस्य वक्तुं शक्यतया तत्तदर्थविषयकशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितबोधजनकत्वप्रकारकपदविशेष्यकज्ञाननिष्ठा या जनकता तादृशजनकतानिरूपिता विशेष्यित्वसम्बन्धावच्छिन्ना याऽवच्छेदकता तादृशावच्छेदकत्वप्रकारकं ज्ञानम् 'तादृशबोधजनकतावच्छेदकतावद्गवादिपदम्' इति। तथाच गवादिपदनिष्ठेन तादृशावच्छेदकत्वेन संकेतज्ञानस्य कारणत्वं नानुपपन्नमिति कस्यचिन्मतं दूषयति—ततोऽपीति—अर्थधीजनकतावच्छेदकत्वरूपधर्मादपीत्यर्थः। ननु अर्थधीजनकतावच्छेदकत्वप्रकारकज्ञाने जनकतात्वेन जनकता तु निविष्टैवेति तादृशजनकतात्वेनैव संकेतज्ञानस्य कारणत्वेऽवच्छेदकत्वानिवेशप्रयुक्तलाघवमित्याह—लाघवेनेति—तत्पदविशेष्यकतत्तदर्थविषयकबोधजनकत्वप्रकारकज्ञानत्वेन कारणतायां लाघवेनेत्यर्थः। अस्मत्पक्षेति—'बोधकत्वं शक्तिः' इति भूषणकाराभिमतपक्षसिद्धेरित्यर्थः, ननु तत्तदर्थविषयकबोधजनकत्वज्ञानस्य कारणत्वे यत्र संकेतत्वेन संकेतज्ञानाद् बोधस्तत्र व्यभिचारः, अर्थधीजनकत्वज्ञानस्याभावादित्याह—न चाधुनिकेति। व्यभिचार इति—'कारणाभावे कार्याभावः' इति व्यतिरेकव्याप्तेर्व्यभिचार इत्यर्थः। व्यभिचारं निराकरोति—तत्रापीति—तादृशसंकेतज्ञानेऽपीत्यर्थः। इच्छाग्रह इति—पदविशेष्यिका या इच्छा तद्रूपो यः संकेतस्तद्ग्रह इत्यर्थः। पद इति—'इदं पदमेनमर्थं बोधयतु' इतीच्छारूपसंकेतस्य 'इदं पदमेतदर्थविषयकबोधजनकतावत्' इत्यर्थकत्वेन संकेतस्यार्थबोधजनकत्वप्रकारकपदविशेष्यकतया तज्ज्ञानस्यापि अर्थविषयकबोधजनकत्वप्रकारकपदविशेष्यकत्वमक्ष-

### दर्पणव्याख्या

यद्यपि सङ्केतत्वेन सङ्केतज्ञानकारणतावादिमते नेश्वरीयत्वादेर्निवेशस्तथापि गवादावीश्वरस्येति तद्ग्रन्थालोचनायेश्वरीयत्वादेर्निवेशस्तदभिमत इत्यभिप्रेत्य दूषितमिति ध्येयम्। तत्तदर्थधीजनकत्वग्रहवतामेवेत्येतत्स्मरेण निरुक्तसङ्केतज्ञानवत्त्वव्यवच्छेद। स च तज्ज्ञानशून्यानामित्यस्यैवानुवादः। एतच्छून्यपाठस्तु सुगम। इदञ्च शक्तिग्रहरूपकारणप्रदर्शकम्। * तज्ज्ञानम् *=सङ्केतज्ञानम् * तथा *=हेतु। सङ्केतितपदस्यैवार्थधीजनकत्वेन पदनिष्ठजनकताया सङ्केतस्यावच्छेदकत्वादिति भाव।

* ततोऽपीति * अर्थधीजनकतानिरूपितविषयतासम्बन्धावच्छिन्नाऽवच्छेदकत्वस्याऽवच्छेदकत्वाऽपेक्षयार्थधीजनकतात्वेन हेतुताया औचित्येन वैयाकरणेष्टसिद्धिरित्यर्थः, सङ्केतज्ञानस्येदं पदमर्थधीजनकताऽवच्छेदकवदित्याकारकस्याऽर्थधीजनकताऽवच्छेदकत्वाऽवच्छिन्नप्रकारताकज्ञानत्वेन हेतुत्वे गौरवादिदं पदमर्थधीजनकमिति ज्ञानस्यैवार्थधीजनकतात्वावच्छिन्नप्रकारताकज्ञानत्वेन हेतुत्वमुचितम्, लाघवादिति भाव।

वस्तुतस्तु तन्मते सङ्केतत्वेनैव हेतुतेति नोक्तविकल्पावसर इति बोध्यम्। सङ्केतज्ञानादेवेत्येवेनाऽर्थधीजनकत्वग्रहव्युदास.। अस्य=बोधकत्वग्रहस्य, व्यभिचारो व्यतिरेके। * तत्रापि *=सङ्केतमात्रादर्थबोधस्थलेऽपीत्यर्थ। * इच्छाग्रहेऽपि * इदम्पदविशेष्यकैतदर्थबोधकत्वप्रकारकेच्छाग्रहे इत्यर्थ.। * अवगाहनेनेति * विषयीकरणेनेत्यर्थ। ज्ञानेच्छा

नच स्वातन्त्र्येणार्थबोधकताज्ञानं कारणं वाच्यम् । अन्यथा 'नेदं तद्बोधजनकम्' इति जानतः 'अस्माच्छब्दादयमर्थो बुद्धोऽनेन' इति जानतस्तद्ग्रहापत्तेरिति वाच्यम्,

प्रभा

तम्, इच्छाविशेषरूपसंकेतविषयकं यज्ज्ञानं तत्र स्वविषयीभूतायामिच्छायां यत्प्रकारकत्वं यद्विशेष्यकत्वं तादृशेच्छाज्ञानेऽपि तत्प्रकारकत्व—तद्विशेष्यकत्वयो मानमिति नियमः । तथाच संकेतज्ञानस्थलेऽप्यर्थधीजनकत्वज्ञानमक्षतमेवेति भावः । स्वातन्त्र्येणेति—इतराविशेषणत्वेनेत्यर्थः । प्रकृते [illegible] अर्थधीजनकत्वमिच्छारूपे संकेते विषयितासम्बन्धेन विशेषणीभूय तज्ज्ञानेऽपि भासते, ननु संकेतज्ञानेऽर्थधीजनकत्वं साक्षाद्भासत इति भावः । अन्यथा=अन्यत्र विशेषणतया भासमानस्यापि बोधजनकत्वज्ञानस्य कारणत्वे । तद यथा—'घटपदं घटत्वावच्छिन्नविषयकबोधजनकतावत्' इति तात्पर्येण चैत्रेण 'घटमानय' इति वाक्यमुच्चारितम् । मैत्रेण तद्वाक्यं श्रुत्वा 'घटपदं पटत्वावच्छिन्नविषयकबोधजनकतावत्' इत्याकारकरूपेण ज्ञात्वा पटो बुद्धः । ततो विष्णुमित्रेण 'घटपदं पटत्वावच्छिन्नविषयकबोधजनकत्वाभाववत्' इति जानता 'घटपदात्पटो बुद्धोऽनेन' (मैत्रेण) इति ज्ञातम् । इत्थञ्च पारतन्त्र्येण (अन्यत्र=ज्ञाने विशेषणतया ) भासमाने बोधजनकत्वज्ञानस्य शाब्दबोधकारणत्वे भ्रान्तज्ञाने घटपदे पटत्वावच्छिन्नबोधजनकत्वस्यावगाहनेन भ्रान्तज्ञानं जानतो ज्ञानेऽपि तादृशबोधजनकत्वस्य विषयतया अभ्रान्तस्यापि घटपदात्पटबोधापत्तिः । किञ्च परम्परया तज्ज्ञानस्य कारणत्वे 'घटपदं पटत्वावच्छिन्नविषयकबोधजनकत्वाभाववत्' इति ज्ञानवतः पुंसोऽपि अभावप्रतियोगितया बोधजनकत्वज्ञानसत्त्वाद् घटपदात्पटबोधापत्तिः । ननु ज्ञानेतराविशेषणत्वेन बोधजनकत्वज्ञानस्य कारणत्वे घटपदाद् घटस्यापि बोधो न स्यात् पदे विशेषणतयैव बोधजनकत्वज्ञानसत्त्वादिति चेन्न, 'इतराविशेषणत्वेन' इत्यस्य विषयितया ज्ञानेतराविशेषणत्वेनेत्यर्थात् । तथाच पदे बोधजनकत्वस्य स्वरूपेण विशेषणत्वेऽपि न दोषः ।

यत्तु—पारतन्त्र्येण बोधजनकत्वज्ञानस्य कारणत्वे 'वयस्या नागरास्तद्वान्क्षानं घ्नन्ति वैद्यनाम्' इत्यत्र वयस्यापदं हरीतकीम्, नागरपदं शुण्ठीञ्च बोधयतु इति तात्पर्येणोच्चरितस्थले वयस्यापदं तरुणीबोधकम्, नागरपदं नागरिकपुरुषबोधकमिति बोद्धुर्बोधं जानतो वयस्यापदं नात्र तरुणीबोधकमिति जानतोऽपि वयस्यापदात्तरुणीबोधापत्तिरिति तन्न, वयस्याशब्दस्योभयार्थकत्वेन वयस्यापदं तरुणीविषयकबोधजनकत्वाभाववदिति ज्ञानासम्भवात् । तद्ग्रहापत्तेरिति—घटशब्दात्पटबोधापत्तेरित्यर्थः । पारतन्त्र्येण बोधजन

दर्पणव्याख्या

दिविषयकज्ञानस्य तद्विषयकत्वनियमादिति भावः । * स्वातन्त्र्येणेति * इतराविशेषणत्वेनेत्यर्थः । प्रकृते चेच्छायां विषयितया विशेषणीभूतबोधकत्वस्यैव तज्ज्ञानेन विषयीकरणादिति भावः ।

* अन्यथेति * पारतन्त्र्येणापि बोधकताज्ञानस्य शाब्दधीहेतुत्व इत्यर्थः । इष्टापत्तिनिरासायाह—* नेदं तद्बोधजनकमितीति * । * अस्माच्छब्दादिति * एतच्छब्दजन्येतद्विषयकबोधविषयोऽयमयं इत्याकारकज्ञानवत इत्यर्थः । पदविशेष्यकार्थधीजनकत्वबोधग्रहे विद्यमाने तदंशेऽर्थधीजनकत्वावगाहिनः 'इदं पदमेतदर्थधीजनकत्वेन बुद्धमनेन' इति ग्रहस्यासम्भवाच्चतुष्पदात्मादित्याकारकबोधग्रह उक्तः । एतस्मिंस्तु न तस्य प्रतिबन्धकता, आश्रयाभावानवगाहित्वादिति भावः ।

* तद्ग्रहापत्तेरिति * पदादिशाब्दबोधापत्तेरित्यर्थः । उक्तज्ञानस्य विषयविषयकत्वेऽपि न तेन पदांशेऽर्थबोधकत्वं विषयीक्रियते येन तस्य शक्तिग्रहत्वं स्यात् । किन्तु बोधादौ तत्पदजन्यत्वस्यार्थांशे बाह्यबोधविषयत्वस्य तथा,

नेदं तद्बीजनकमिति ग्रहवतो बाधेन पदे परग्रहं जानतोऽपि तद्ग्रहासम्भवात् । अन्यथा भ्रान्तिज्ञस्यापि भ्रान्तत्वापत्तेरिति ।

## प्रभा

फत्वज्ञानस्य कारणत्वे निपतितामापत्तिं परिहरति—नेदं तद्बीति—इदम्=घटपदम् । तद्बीजनकम्=पटत्वावच्छिन्नविषयकबोधजनकत्वाभाववदिति निश्चयस्य 'घटपदं पटत्वावच्छिन्नविषयकबोधजनकतावत्' इति ज्ञानं प्रति प्रतिबन्धकतया प्रतिबन्धकरूपबाधसत्त्वेनेत्यर्थः । पदे=घटादिपदे । परग्रहम्='घटपदं पटत्वावच्छिन्नविषयकबोधजनकतावत्' इति परस्य=अन्यस्य भ्रान्तस्य ग्रहम्=ज्ञानं जानतोऽपीत्यर्थः । तद्ग्रहासम्भवात्=घटपदे पटत्वावच्छिन्नविषयकबोधजनकत्वज्ञानासम्भवात् । अन्यथेति—घटपदे पटविषयकबोधजनकत्वाभावावगाहिनिश्चयसत्त्वेऽपि तत्र पटविषयकबोधजनकत्वावगाहिज्ञानस्वीकारे इत्यर्थः । भ्रान्तिज्ञस्येति—'रजतत्वाभाववान् शुक्त्यादौ रजतत्वेन रूपेणानेन ज्ञातः' इति ज्ञानवत इत्यर्थः ।

ननु भ्रान्त्यात्मकज्ञाने इन्द्रियसन्निकर्षाभावात् तज्ज्ञानासम्भव इति चेन्न, चेष्टादिना तज्ज्ञानानुमितिसम्भवात् । 'अयं पुरुषः शुक्तिं रजतं जानाति' इति ज्ञानवान्, अथ नेदं रजतमिति च ज्ञानवान् यः स एव भ्रान्तिज्ञः । यत्र चैत्रस्य शुक्तौ रजतत्वभ्रमो जातस्तत्र चैत्रीयं ज्ञानं यथा शुक्तौ रजतत्वप्रकारकम्, तथा भ्रान्तिज्ञस्य मैत्रस्यापि यदि शुक्तौ रजतत्वप्रकारकं स्यात्तदा सोऽपि भ्रान्तः स्यात् । तथा तु न भवति, किन्तु भ्रान्त्यात्मकज्ञाने शुक्तिविशेष्यकरजतत्वप्रकारकं रजतत्वावगाहिज्ञानं जायते, नतु शुक्तौ रजतत्वावगाहिज्ञानं भ्रान्तिज्ञस्य ।

ननु पदविशेष्यकार्थविषयकबोधजनकत्वप्रकारकज्ञानस्य पदार्थोपस्थितिं प्रति कारणत्वस्वीकारेण यथा पदनिष्ठस्यार्थबोधजनकत्वस्य शक्तित्वम्, तथा अर्थविशेष्यकपदजन्यधीविषयत्वप्रकारकज्ञानस्यापि पदार्थोपस्थितिं प्रति कारणत्वं वाच्यमिति पदजन्यधीविषयत्वमपि अर्थनिष्ठं शक्तिः स्यात् । नचेष्टापत्तिः, परस्परोपस्थितौ व्यभिचारप्रसङ्गात् । तथाहि—यत्र पदविशेष्यकशक्तिज्ञानादुपस्थितिस्तत्रार्थविशेष्यकशक्तिज्ञानाभावः । यत्रार्थविशेष्यकशक्तिज्ञानादुपस्थितिस्तत्र पदविशेष्यकशक्तिज्ञानाभाव इति 'कार्यजनकत्वे सति कार्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वरूपकारणत्वम्' कुत्रापि शक्तौ न स्यात्, कार्यसत्त्वेऽपि

## दर्पणव्याख्या

त्वेन तुल्यवित्तिवेद्यतया पदार्थेऽर्थबोधकत्वमप्यवगाह्यत इति तु दुर्वचम्, तुल्यवित्तिवेद्यत्वे मानाभावात्, तत्प्रतिबन्धकस्य ग्राह्याभावावगाहिनो नेदं तद्बीजनकमिति ज्ञानस्य जागरूकत्वाच्च ।

ननु पदनिष्ठार्थधीजनकत्ववदर्थनिष्ठपदजन्यबोधविषयत्वमपि शक्तिर्विनिगमनाविरहात्, उभयविधज्ञानाच्छाब्दबोधस्य सर्वानुभवसिद्धत्वाच्च, कार्यतावच्छेदककोटावन्यतरदितीतरत्वनिवेशाच्च न परस्परजन्यशाब्दबोधे व्यभिचारः । एवञ्च द्वितीयशक्तिग्रहरूपात् तस्माच्छाब्दबोधापत्तिः दुर्वारेति वाच्यम्, तथा सति नेदमर्थधीजनकमिति ग्राह्याभावावगाहिनोऽप्रतिबन्धकत्वग्रहस्योपन्यासवैयर्थ्यात् । ग्राह्याभावावगाहित्वेऽप्युभयविधशक्तिग्रहव्यतिरेकाभ्यां प्रतिबन्धकत्वोपगमेन तदुपन्यासस्य सार्थक्यमित्यादिने ... एवेत्याशयेन दूषयति—नेदं तद्बीजनकमिति । बाधेन—अबाधितज्ञानानास्कन्दितनिश्चयनिर्णयात्मकप्रतिबन्धकसद्भावेनेत्यर्थः । तद्ग्रहासम्भवात्—अर्थविशेष्यकपदजन्यबोधविषयत्वग्रहासम्भवादित्यर्थः । अन्यथेति बाधग्रहेऽपि बाध्यमानस्य ... इति शेषः, इदं विशेष्यकत्वप्रकारकत्वे ... । 'भ्रान्तिज्ञस्य' इत्यनेन दोषाभाववत्त्वमपि सूच्यते । भ्रान्तत्वापत्तेरिति तदभाववति तत्प्रकारकज्ञानवत्त्वं स्यादिति भावः ।

इदञ्चार्थधीजनकत्वं पित्रादिसङ्केतज्ञानादेव गृह्यते, अतस्तज्ज्ञानात् पूर्वं न बोधः। नापि लाक्षणिकोच्छेदापत्तिः, इष्टत्वात्,

प्रभा

तत्तदभावस्य सुलभत्वादिति चेन्न, यया सामग्र्या एका शक्तिर्गृह्यते तयाः सामग्र्या एवापरशक्तिज्ञानेऽपि कारणतया 'तुल्यवित्तिवेद्यत्व (समानसामग्रीग्राह्यत्व) न्यायेन पदविशेष्यकशक्तिज्ञानस्यार्थांशे पदजन्यो-पस्थितिविषयावगाहित्वस्यार्थविशेष्यकशक्तिज्ञानस्य च पदांशेऽर्थोपस्थितिजनकत्वावगाहित्वस्य च कल्पने-नैकसत्त्वेऽपरसत्ताया अपि सत्त्वेनादोषात्। यदि च तुल्यवित्तिवेद्यत्वे मानाभावस्तदा कार्यतावच्छेदक-कोटौ 'स्वसामानाधिकरण्य—स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन तत्तच्छक्तिज्ञानवैशिष्ट्यं तत्तदु-पस्थितौ निवेशनीयमिति न क्वापि व्यभिचारः। इत्थञ्च 'नेदं तद्धीजनकम्' इति ज्ञानस्य 'तत्प्रकारकतद्-विशेष्यकबुद्धिम्प्रति तदभावप्रकारकतद्विशेष्यकबुद्धेरेव प्रतिबन्धकत्वम्' इति ज्ञानं ग्राह्याभावावगाहित्वेन प्रतिबन्धकमुच्यते। नच ग्राह्यस्य=ज्ञानविषयत्वेनाभिप्रेतस्य प्रतियोगिनोऽभावावगाहिज्ञानस्य प्रतियोगिप्रकार-कबुद्धिम्प्रति प्रतिबन्धकत्वमिति ग्राह्याभावावगाहित्वेव प्रतिबन्ध्यप्रतिबन्धकभाव इति यदिमतेऽर्थविशेष्यक-शक्तिज्ञानाच्छाब्दबोधो दुर्वार इति वाच्यम्, अर्थविशेष्यकशक्तिज्ञानम्प्रति ग्राह्याभावानवगाहित्वेऽप्युभय-विधशक्तिज्ञानं प्रति अन्वयव्यतिरेकाभ्यामनुभवसिद्धप्रतिबन्ध्यप्रतिबन्धकभावस्वीकारेणादोषात्।

अत एव 'घटवद् भूतलम्' इति बुद्धिम्प्रति 'भूतले घटाभावः' 'घटाभावो भूतलवृत्तिः' 'भूतलवृत्त्य-भावप्रतियोगी घटः' इत्यादिनिश्चयानां सर्वानुभूतं प्रतिबन्धकत्वं सङ्गच्छते। ननु उक्तार्थधीजनकत्वं शब्द-श्रवणमात्रेण गृह्यते चेत्तर्हि अगृहीतसङ्केतादपि नारायणादिपदाच्छाब्दबोधापत्तिरित्याशङ्कायामाह—इदञ्चार्थधीति—शक्तित्वेनाभिमतञ्चेत्यर्थः। अत इति—शक्तिज्ञानं प्रति संकेतज्ञानस्य कारणत्वादेवेत्यर्थः। तज्ज्ञानात्=संकेतज्ञानात्। न बोध इति—अर्थविषयकबोधजनकत्वरूपशक्तिज्ञानाभावेन शाब्दबोध इत्यर्थः। ननु घटपदेन शक्त्या घट-इष्टत्वादिति—लक्षणारूपा वृत्तिर्नैवास्ति, किन्तु तीरेऽपि शक्तिरेवेति भावः। ननु घटपदेन शक्त्या घट-त्वविशिष्टस्य बोध इव गङ्गापदेन शक्त्या प्रवाहत्वविशिष्टस्यैव बोधः स्यान्नतु तीरत्वविशिष्टस्य, तत्र तीर-त्वविशिष्टस्य बोध इव गङ्गापदेन शक्त्या प्रवाहत्वविशिष्टस्यैव बोधः स्यान्नतु तीरत्वविशिष्टस्य, तत्र तीर-निरूपितशक्तेरभावात्। नच तीरत्वावच्छिन्ननिरूपिताऽपि शक्तिस्तत्रास्तीति वाच्यम्, तीरपर्यायेषु कोशादौ तदग्रहणादिति चेन्न, प्रवाहत्वेनैव रूपेण तीरस्यापि बोधात्। नच तीरे प्रवाहत्वाभावाद् बोधानुपपत्तिः,

दर्पणव्याख्या

अनेदञ्चिन्त्यम्—यत्रेदं पदमेतदर्थं बोधयत्विति सङ्केतज्ञानमात्राच्छाब्दबोधस्तत्र बोधकताग्राहकज्ञानस्य हेतुतावादि-मते व्यभिचारो दुरुद्धर एव। नच तत्र सङ्केतज्ञानमेव बोधकताज्ञानमित्युक्तमेवेति वाच्यम्, सविषयकज्ञानस्य तद्विषयवि-षयकत्वेऽपि तद्विशेष्याऽशे तत्प्रकारो न तेन विषयीक्रियते। 'घटमहं जानामि' इत्यनुव्यवसायेन ज्ञानांशे घटत्वप्रकारकत्व-घटविशेष्यकत्वयोरेव विषयीकरणात्। अन्यथा भ्रान्तिज्ञस्य भ्रान्तत्वापत्तिरनिवार्य्यैव स्यात्।

अत एव शब्दचिन्तामणौ तात्पर्यविषयसंसर्गज्ञानपूर्वकत्वस्य पदपक्षकानुमानेन सिद्धावपि नेतरपदार्थेऽभिमतापर-पदार्थसंसर्गसिद्धिः, तादृशसंसर्गज्ञानपूर्वकत्वानुमानेन तत्पदार्थे इतरपदार्थतात्पर्यविषयसंसर्गस्याविषयीकरणादित्यस्वरसात् पदार्थपक्षकानुमानमवतारितं पक्षधरमिश्रैरिति।

शक्तिग्राहकमाह—* इदञ्चेति * शक्तित्वेनाभ्युपेतं बोधकत्वञ्चेत्यर्थः। पित्रादित्यादिनाप्तपरिग्रहः। * गृह्यत इति * कार्यतावच्छेदककोटौ स्वातन्त्र्यनिवेशान्न संकेतज्ञानाजन्ये संकेतज्ञानात्मकबोधकताज्ञाने व्यभिचार इति भावः। पूर्वोक्तां लाक्षणिकोच्छेदापत्तिमिष्टत्वेन परिहरति—* नापीति *

तत्तदुपस्थितिमत्त्वं कार्य्यतावच्छेदकम्, तत्तदुपस्थितित्वञ्च कारणतावच्छेदकम्, अनन्तकार्य्यकारणभावप्रसङ्गात्। किञ्च पदार्थोपस्थितिं प्रत्यपि शक्तिज्ञानत्वेन, लक्षणाज्ञानत्वेन च हेतुतेति व्यभिचारः, गौरवञ्च प्राग्वदेव द्रष्टव्यम्। नच 'इदं पदमेतदर्थबोधकम्' इति शक्तिज्ञानेन कार्य्यकारणभावकल्पनेऽपि तत्तदर्थभेदेनानेककार्य्यकारणभावकल्पने गौरवं तवापि समानम्, परस्परव्यभिचारवारणायाव्यवहितोत्तरत्वघटितत्वे च सुतरामिति वाच्यम्,

प्रभा

तत्तदुपस्थितिमत्त्वमिति—शक्तिज्ञानजन्योपस्थितिविशिष्टशाब्दबुद्धित्वम्, लक्षणाज्ञानजन्योपस्थितिविशिष्टशाब्दबुद्धित्वञ्चेत्यर्थः। तत्तदुपस्थितीति—शक्तिज्ञानजन्योपस्थितित्वम्, लक्षणाज्ञानजन्योपस्थितित्वञ्चेत्यर्थः। अनन्तेति—नचोपस्थितेर्द्वैविध्यात् कार्यकारणभावोऽपि द्विविध एव स्यादित्यनन्तेत्यसङ्गतमिति वाच्यम्, व्यक्तिभेदेन द्विविधोपस्थितेरप्यानन्त्यमित्याशयात्। शक्तिज्ञानजन्योपस्थितित्वेनोपस्थितिमात्रस्योक्ताव्यवहितोत्तरत्वस्य वक्तुमशक्यत्वात् तत्तद्व्यक्तेर्ग्रहणे कार्यकारणभावानन्त्यं स्पष्टमेवेति भावः। यद्वा—अव्यवहितोत्तरत्वम्—स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वम्। प्रकृते स्वम्=उपस्थितिः। गौरवान्तरमाह—किञ्चेति—शक्तिज्ञानजन्योपस्थितिः, उपस्थितिजन्यः शाब्दबोध इति उपस्थितिं प्रत्यपि शक्तिज्ञान-लक्षणाज्ञानयोः कारणत्वस्यावश्यकत्वे यत्र शक्तिज्ञानादुपस्थितिस्तत्र लक्षणाज्ञानाभावः, यत्र लक्षणाज्ञानादुपस्थितिस्तत्र शक्तिज्ञानाभाव इति व्यतिरेकव्याप्तिव्यभिचारवारणाय उपस्थितौ तत्तद्व्यक्तित्वेन शक्तिज्ञान-लक्षणाज्ञानयोः स्वाव्यवहितोत्तरत्वं निवेश्य कार्यकारणभावस्वीकारे व्यक्तीनामानन्त्यात्कार्यकारणभावानन्त्येऽतिगौरवमिति भावः।

ननु पूर्वोक्तरीत्या सामान्यतः कार्यकारणभावस्वीकारे उपस्थितेः, शाब्दबोधस्य चादर्शनेन तत्तत्पदं तत्तदर्थञ्च निवेश्यैव कार्यकारणभावो वाच्य इति लक्षणाऽनङ्गीकर्तृमतेऽपि गौरवं तुल्यमित्याह—नचेदमिति—'गङ्गापदं प्रवाहविषयकबोधजनकम्' इति शक्तिज्ञानत्वेनोपस्थितिं प्रति कार्यकारणभावकल्पनेऽपीत्यर्थः। पदतदर्थेति—पदञ्च तदर्थश्चेति पदतदर्थौ तयोर्भेदेनेत्यर्थः। पदभेदेन यथा भगीरथरथखातावच्छिन्नप्रवाहविषयकोपस्थितिं प्रति गङ्गापदं भगीरथरथखातावच्छिन्नप्रवाहविषयकबोधजनकमिति शक्तिज्ञानस्येव जाह्नवीपदं तादृशार्थबोधजनकमिति शक्तिज्ञानस्यापि कारणत्वमिति पदभेदेन कार्यकारणभावभेदः। प्रवाह-

दर्पणव्याख्या

जन्यशाब्दबोधे व्यभिचारवारणाय सत्यन्तम्। प्रकृते लक्षणाज्ञानजन्योपस्थितिजन्यशाब्दबोधे उक्तसम्बन्धेन शक्तिज्ञानजन्योपस्थितिवैशिष्ट्याभावेन तत्कार्य्यतावच्छेदकाक्रान्तत्वाभावान्न व्यभिचार इति भावः।

* अनन्तेति * स्वत्वस्य तत्तद्व्यक्तिविश्रान्तत्वेनाननुगततया तद्घटिताव्यवहितोत्तरत्वसम्बन्धेनोपस्थितिमत्त्वस्य कार्य्यतावच्छेदककोटौ निवेशे कार्य्यकारणभावानन्त्यमिति भावः। न्यायसाम्यादाह—* किञ्चेति * प्राग्वदेवेति * शक्तिज्ञानं विनाऽपि लक्षणाज्ञानात् पदार्थोपस्थितेः, एवं लक्षणाज्ञानं विनाऽपि शक्तिज्ञानात्पदार्थोपस्थितेस्तयोरुपस्थितिहेतुतायां परस्परं व्यभिचारः, अव्यवहितोत्तरत्वसम्बन्धेन तत्तत्कारणवैशिष्ट्यस्य कार्य्यताऽवच्छेदकत्वेन निवेशे च गौरवं तद्वदेवेत्यर्थः।

ननु बाधकाभावादिनोऽपि गङ्गापदं प्रवाहबोधकमिति शक्तिग्रहादुपस्थित्यर्थोपस्थिति-शाब्दबोधयोरादिवारणाय कारणतावच्छेदककुक्षौ तत्तदर्थनिवेश आवश्यक, तथाच लक्षणावादिमते च गौरवमित्याशङ्कां निराकरोति—* नचेति * ।

* परस्परेति * गङ्गापदनिष्ठतीरबोधकत्वग्रहं विनाऽपि तीरादिपदनिष्ठतादृशशक्तिग्रहेण तीरबोधापत्तेः परस्परजन्यबोधे व्यभिचारप्रतिरोधायेत्यर्थः।

शक्तिभ्रमानुरोधेन तत्तत्पदतत्तदर्थभेदेन कार्य्यकारणभावानन्त्यस्य तवापि साम्यात्। लक्षणाका-
र्यकारणभावकल्पनागौरवं परं तवातिरिच्यते। अथ वृत्तिजन्योपस्थितित्वेनैव शाब्दबोधहेतुता,

प्रभा

विषयकोपस्थितिं प्रति 'गङ्गापदं प्रवाहविषयकबोधजनकम्' इति ज्ञानस्येव तीरविषयकोपस्थितिं प्रति 'गङ्गा-
पदं तीरविषयकबोधजनकम्' इति शक्तिज्ञानस्यापि कारणत्वमित्यर्थभेदेन कार्यकारणभावभेदः। एवं
लक्षणावादिमतेऽपि प्रवाहविषयकोपस्थितिं प्रति गङ्गापदनिष्ठशक्तिज्ञानजन्योपस्थितिः कारणम्। तीरविषय-
कोपस्थितिं प्रति गङ्गापदनिष्ठलक्षणाज्ञानजन्योपस्थितिः कारणमिति कार्यकारणभावद्वयेन साम्यमेवेत्याह—
गौरवं तवापि समानमिति। परस्परव्यभिचारेति—यत्र 'गङ्गापदं तीरबोधकम्' इति शक्तिज्ञानेन तीरोपस्थितिस्तत्र
'तटपदं तीरबोधकम्' इति तीरोपस्थापकशक्तिज्ञानस्याभावः। यत्र 'तटपदं तीरबोधकम्' इति शक्तिज्ञानेन
तीरोपस्थितिस्तत्र 'गङ्गापदं तीरबोधकम्' इति शक्तिज्ञानस्याभाव इति व्यतिरेकव्याप्तिव्यभिचारवारणाय
समवायेन स्वसामानाधिकरण्य—स्वाव्यवहितोत्तरत्वोभयसम्बन्धेनोक्तत्रितयसम्बन्धेन या तत्तच्छक्तिज्ञान-
वैशिष्ट्यं तत्तदुपस्थितौ तत्रैव तत्तदुपस्थितिवैशिष्ट्यं तत्तच्छाब्दबोधे च निवेश्यमिति वैयाकरणमतेऽपि
अतिगौरवं स्फुटमेवेति भावः। गौरवसाम्यं स्पष्टयति—शक्तिभ्रमेति— अयम्भावः—यत्र 'गङ्गापदं तीरं
शक्तम्' इति शक्तिभ्रमस्तत्र तीरोपस्थितिं प्रति गङ्गापदशक्तिज्ञानस्य कारणत्वम्। यत्र 'गङ्गापदं तीरे लाक्षणि-
कम्' इति ज्ञानात्तीरोपस्थितिस्तत्र तीरोपस्थितिं प्रति गङ्गापदनिष्ठलक्षणाज्ञानस्य कारणत्वम्। एवं तीरो-
पस्थितिं प्रति तटादिपदनिष्ठशक्तिज्ञानस्यापि कारणत्वमित्युक्तरीत्या कारणत्रयवैशिष्ट्यं तीरोपस्थितौ निवे-
श्यैवात्रापि व्यभिचारो वारणीयो लक्षणावादिना। शक्तिवादिनस्तु 'गङ्गापदं तीरे लाक्षणिकमिति ज्ञानाभावेन
तीरोपस्थितौ तादृशज्ञानकारणत्वस्य तदव्यवहितोत्तरत्वनिवेशस्य चाभावेन लाघवमिति लक्षणावादिमते
कार्यकारणभावे गौरवं दुष्परिहरमिति भावः। तदाह—लक्षणाकार्यकारणभावकल्पनागौरवमिति।

ननु तीरोपस्थितिं प्रति गङ्गापदनिष्ठलक्षणाज्ञानम्, भ्रमस्थले गङ्गापदनिष्ठशक्तिज्ञानम्, तटादिपद-
निष्ठशक्तिज्ञानञ्च कारणमिति कारणत्रयस्वीकारे एव गौरवम्। परन्तु लक्षणावादिनापि तीरोपस्थितिं प्रति
गङ्गापदनिष्ठवृत्तिज्ञानं तटादिपदनिष्ठशक्तिज्ञानञ्च कारणमिति कारणद्वयमेव स्वीक्रियते। लक्षणाज्ञानस्यापि
वृत्तिज्ञाने एवान्तर्भाव इति गौरवाभाव इत्याह—अथ वृत्तीति—अयम्भावः 'तीरविषयकशाब्दबोधम्प्रति
गङ्गापदनिष्ठवृत्तिज्ञानजन्योपस्थितिः कारणम्' इत्येव वाच्यम्। एवञ्च गङ्गापदनिष्ठवृत्तिज्ञानजन्योपस्थितित्व-
मेव कारणतावच्छेदकमित्युक्तरूपेण लक्षणाज्ञानजन्योपस्थितेरपि कारणत्वे गौरवाभावस्तदर्थं पृथक् कार्य-
कारणभावाकल्पनात्। इदमुपलक्षणम्—तीरविषयकशाब्दबोधम्प्रति तटादिपदनिष्ठशक्तिज्ञानजन्योपस्थिति-
त्वेनापि कारणत्वस्य।

दर्पणव्याख्या

* शक्तिभ्रमानुरोधेनेति * गङ्गापदस्य तीरे शक्तिभ्रमदशायां तीरोपस्थित्यादे सर्वमतसिद्धतया तत्का-
रणतावच्छेदककोटौ तत्तत्पदतत्तदर्थनिवेशस्यावश्यकत्वादित्यर्थः।

*तवेति* लक्षणास्वीकर्तुरित्यर्थः। शक्तिज्ञानकारणतायां शक्तेर्वृत्तित्वेन निवेशो स्यादेवोक्तदोषः किन्तु वृत्तित्वेनैव
न तत्सम्भावनेत्याशङ्कते—*अथेति*। *वाच्यमिति* शक्तिजन्योपस्थितावपि लक्षणाजन्योपस्थितावपि शक्तिलक्षणासाधा-
रणवृत्तित्वावच्छिन्नजन्यत्वसत्त्वादिति भावः।

वृत्तिज्ञानत्वेन च पदार्थोपस्थितिकारणतेत्येवं मया वाच्यमिति चेन्न, शक्ति-लक्षणान्यतरत्वस्य, शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलपदपदार्थसम्बन्धत्वस्य वा वृत्तित्वस्य कारणतावच्छेदकत्वाच्छक्तित्वमपेक्ष्य गुरुत्वात्, शाब्दबोधहेतुताऽवच्छेदकपदार्थोपस्थितिहेतुवृत्तेरज्ञाने तद्घटितकार्य्यकारणभावग्रहस्याप्यसम्भवात्।

प्रभा

वृत्तिज्ञानत्वेनेति—एवं तीरोपस्थितिं प्रत्यपि गङ्गापदनिष्ठवृत्तिज्ञानं कारणमिति वृत्तिज्ञानत्वमेकमेव कारणताऽवच्छेदकमिति तेनैव रूपेण लक्षणाज्ञानस्यापि संग्रहे दोषाभाव इति भावः। इदमप्युपलक्षणम्—तीरविषयकोपस्थितिं प्रति तटादिपदनिष्ठशक्तिज्ञानत्वेन कारणत्वस्य। तथा कार्यकारणभावस्वीकारेऽपि गौरवमाह—शक्तिलक्षणेति—शक्तिभिन्नं सत् लक्षणाभिन्नं यत्तद्भिन्नत्वरूपान्यतरत्वे जगत्प्रवेशकृतगौरवस्य स्वरूपकृतगौरवस्य, शक्तिभेदविशिष्टो यो लक्षणाभेदो लक्षणाभेदविशिष्टो य. शक्तिभेद इत्येवं भेदानां विशेष्यविशेषणभावव्यत्यासेन निवेशप्रयुक्तगौरवस्य च सत्त्वादाह—शाब्दबोधहेत्विति शाब्दबोधस्य हेतुः शाब्दबोधहेतुः स चासौ पदार्थोपस्थितिश्चेति कर्मधारयस्तदनुकूलो यः पदपदार्थयो. सम्बन्धः=शक्तिरूपो लक्षणारूपो वा तत्त्वं वृत्तित्वम्। पदार्थोपस्थित्यनुकूलपदपदार्थसम्बन्धत्वमात्रोक्तौ गगनपदस्य तदर्थेनाकाशेन सह यः सम्बन्धः समवायस्तस्यापि आश्रयतयाऽऽकाशोपस्थापकत्वात् समवायेऽतिव्याप्तिः स्यादिति पदार्थोपस्थितौ शाब्दबोधहेत्विति विशेषणम्। तथाच पदनिष्ठवृत्तिज्ञानजन्यपदार्थोपस्थितावेव शाब्दबोधहेतुत्वस्य सत्त्वेन शाब्दबोधहेत्वित्यादेः शाब्दबोधहेतुपदनिष्ठवृत्तिज्ञानजन्योपस्थित्यनुकूलपदपदार्थसम्बन्धत्वमित्यर्थो लभ्यते। एवञ्च पदार्थोपस्थितिम्प्रति वृत्तिज्ञानं कारणमित्युक्तौ वृत्तिज्ञाने साक्षात्परम्परया वा यद्विशेषणीभूतं तत्सर्वं कारणतावच्छेदकं स्यात्। वृत्तिज्ञाने च वृत्तित्वं स्वाश्रयविषयित्वसम्बन्धेन विशेषणीभूतमिति गुरुभूते वृत्तित्वे कारणतावच्छेदकत्वकल्पनापेक्षया शक्तिज्ञानत्वेन कारणत्वं स्वीकृत्य लघुभूते शक्तित्वे एव कारणतावच्छेदकत्वं स्वीकार्यम्। एवञ्च वृत्तिज्ञानत्वेन कारणत्वं हेयमेव। किञ्च शाब्दबोधनिष्ठकार्यतानिरूपिता या वृत्तिज्ञानजन्यपदार्थोपस्थितिनिष्ठा कारणता तदवच्छेदकस्य पदार्थोपस्थितिवृत्ते =(पदार्थोपस्थितिवृत्तेरित्येव पाठः, हेतुपदवैयर्थ्यात्, काशिकाकारादिभिस्तथैव व्याख्यातत्वाच्च) पदार्थोपस्थितिनिष्ठस्य धर्मस्य पदनिष्ठवृत्तिज्ञानजन्यपदार्थोपस्थितित्वरूपस्य विशिष्टज्ञाने विशेषणज्ञानस्य कारणतया विशेषणीभूतवृत्तित्वज्ञानं विना ज्ञानं न सम्भवतीति कारणतावच्छेदकज्ञानमन्तरा शाब्दबोध-पदार्थोपस्थित्योः कार्यकारणभावोऽपि न सम्भवतीति शाब्दबोधपदार्थोपस्थित्योः कार्यकारणभावज्ञाने वृत्तित्वज्ञानं कारणम्। वृत्तित्वज्ञाने च वृत्तित्वघटकतया निविष्टशाब्दबोधपदार्थोपस्थित्योः कार्यकारणभावज्ञानं कारणमित्यन्योऽन्याश्रयतया किमपि ज्ञानं न भवतीति भावः।

दर्पणव्याख्या

* शक्तिलक्षणेति * शक्तिभिन्नत्वे सति लक्षणाभिन्न यत्तद्भिन्नत्वस्येत्यर्थः। * शाब्दबोधेति * शाब्दबोधजनिका या पदार्थोपस्थितिः पदवृत्तिज्ञानजन्योपस्थितिस्तदनुकूलेत्यर्थः, कारणताऽवच्छेदकत्वे उभयसाधारण दूषणमाह—* गुरुत्वादिति * अस्मदभिमतशक्तित्वमपेक्ष्य निरुक्तान्यतरत्वादेर्गुरुत्वादित्यर्थः। द्वितीये दूषणान्तरमाह—* शाब्दबोधहेत्विति *। शाब्दबोधानुकूलत्वस्य तज्जनकत्वस्य कारणताऽवच्छेदकोपस्थित्यधीनत्वेन तस्य च पदवृत्तिज्ञानजन्योपस्थितिरूपात्मकतया तज्ज्ञानस्य स्वघटकवृत्तिज्ञानं विना असम्भवेन कार्यकारणभावग्रह एव दुर्घट इत्यर्थः। तथाच वृत्तित्वग्रहे शाब्दबोधपदार्थोपस्थित्योः कार्यकारणभावग्रहस्तद्ग्रहे च निरुक्तपदपदार्थसम्बन्धत्व-

अथ ममापि शक्तिज्ञानत्वेनैव हेतुता, शक्यसम्बन्धज्ञानरूपलक्षणायां शक्तेरपि प्रवेशात्, इति चेन्न, शक्तिज्ञान-पदार्थोपस्थित्योः कार्यकारणभावे समानविषयत्वस्यावश्यकत्वात्। अन्यथा

प्रभा

लक्षणायां वृत्तित्ववादिनो ममापीत्यर्थः।
आपतितं गौरवं प्रकारान्तरेण परिहरन्नाह—अथ ममापीति—'लक्षणा नाङ्गीक्रियते' इत्यसङ्गतमित्यपास्तम्,
एतेन शक्यसम्बन्धरूपलक्षणायाः केनाप्यपलपितुमशक्यत्वात् 'लक्षणा नाङ्गीक्रियते' इत्यसङ्गतमित्यपास्तम्, शक्तिज्ञानत्वेनेति—ननु शक्तिज्ञानत्वेन,
लक्षणायाः सर्वसम्मतत्वेऽपि तत्र वृत्तित्वस्य सर्वसम्मतत्वाभावात्। शक्तिज्ञानत्वेनेति—ननु शक्तिज्ञानत्वेन,
लक्षणाज्ञानत्वेन च हेतुत्वमित्यर्थः। हेतुतेति—शाब्दबोधम्प्रति, तदनुकूलपदार्थोपस्थितिं प्रति च हेतुतेत्यर्थः,
लक्षणायाः शक्तिविषयार्थसम्बन्धरूपतया लक्षणाज्ञानविषयतायाः शक्तावपि सत्त्वादिति भावः। ननु
'शक्यादशक्योपस्थितिर्लक्षणा' इति नये लक्षणायास्तीरोपस्थितिरूपतया तज्ज्ञानविषयतायाः शक्यत्वस्वेन
शक्तिज्ञानत्वेन हेतुत्वं दुर्वचमित्यत आह—शक्यसम्बन्धेति। शक्तेरपि प्रवेशादिति—शक्तेरपि विशेषणतयैव
प्रवेशः, ननु देवदत्तगृहस्य काकादेरिव कादाचित्कत्वे सति व्यावर्तकत्वेनोपलक्षणतयेति भावः। ननु लक्ष-
णायां शक्तेर्विशेषणत्वेऽपि यदि शक्तौ पदार्थोपस्थितौ च 'तत्पदजन्यपदार्थोपस्थितिं प्रति तत्पदनिष्ठशक्ति-
ज्ञानं कारणम्' इत्येवंरूपेण विषयमनिवेश्यैव कार्यकारणभावः स्यात्तदा लक्षणाज्ञानस्यापि गङ्गादिपदनिष्ठ-
प्रवाहविषयकशक्तिविषयकत्वेन गङ्गापदजन्यतीरविषयकोपस्थितिम्प्रति गङ्गादिपदनिष्ठशक्तिज्ञानत्वेन कारण-
त्वं वक्तुं शक्यम्। तथापि नैवं कार्यकारणभावोऽत्र, किन्तु 'तत्तत्पदजन्यतत्तदर्थविषयकोपस्थितिं प्रति तत्त-
त्पदनिष्ठतत्तदर्थनिरूपितशक्तिज्ञानं कारणम्' इति विषयं निवेश्यैव वक्ष्यमाणदोषपरिहाराय कार्यकारण-
भावो वाच्यः, तथाच तीरविषयकोपस्थितिम्प्रति गङ्गापदनिष्ठतीरनिरूपितशक्तिज्ञानस्य कारणतया लक्षणा-
स्थले तादृशशक्तिज्ञानाभावेन शक्तिज्ञानत्वेन कारणत्वं दुर्लभमित्याह—शक्तिज्ञानपदार्थोपस्थित्योरिति। समानेति—
कार्यकारणभावे समानविषयत्वप्रवेशस्यावश्यकत्वादित्यर्थः। तद्विषयकोपस्थितिम्प्रति तद्विषयकशक्तिज्ञान-
त्वेन हेतुत्वस्यावश्यकत्वादिति यावत्। 'गङ्गापदशक्यसम्बन्धि तीरम्' इति लक्षणाज्ञानस्य तीरविषयकत्वे
सति शक्तिविषयकत्वेऽपि तीरांशे शक्तिविषयकत्वानवगाहितया उपस्थितेश्च तीरविषयकत्वावगाहनेन
समानविषयकत्वाभावान्न तादृशकार्यकारणभावेन निर्वाह इति भावः। अन्यथा—शक्तिज्ञानपदार्थोपस्थित्योः
समानविषयकत्वाभावेऽपि कार्यकारणभावस्वीकारे।

दर्पणव्याख्या

रूपवृत्तित्वमहं इत्यन्योन्याश्रयेणोक्तस्य वृत्तित्वासम्भव इति भावः।
वस्तुतस्तु विजातीयपदार्थोपस्थितिजनकपदपदार्थयोः सम्बन्धः शक्तिः। वैजात्यस्य निवेशाच्च नाशाद्योपस्थिति-
जनकसमवायादावतिव्याप्तिः। तादृशवैजात्यपरिचायकञ्च शाब्दबोधानुकूलेति। ननु तेन रूपेणोपस्थितेर्निवेश इत्यन्तिमलक्ष-
णस्यादुष्टत्वमिति। *ममापि* लक्षणाऽङ्गीकर्त्तुरपीत्यर्थः। *प्रवेशादिति* तथाच लक्षणाज्ञानस्यापि शक्तिज्ञानत्वेनैव हेतु-
त्वेन लक्षणाज्ञानजन्यलक्ष्यार्थोपस्थित्यादौ शक्तिज्ञानस्य हेतुताया व्यभिचार इत्यर्थः। विषयमनिवेश्यैव यदि शक्तिज्ञानपदार्थो-
पस्थित्योः कार्यकारणभावः सम्भवेत् तदा स्यादप्युक्तप्रकारः, स एव न सम्भवतीत्याह—*शक्तिज्ञानेति*। *आवश्यक-
त्वादिति* तदर्थविषयकोपस्थितिं प्रति तदर्थनिरूपिततत्पदनिष्ठशक्तिज्ञानत्वेन हेतुताया आवश्यकत्वादित्यर्थः।
आवश्यकत्वमेवाह—*अन्यथेति* शक्तिज्ञानपदार्थोपस्थित्योः कार्यकारणभावे समानविषयत्वानिवेशे इत्यर्थः। सम्बन्धा
महत्त्व इत्युक्त्या लक्षणाज्ञानादत्र बोधितम्।

गङ्गा–तीरयोः सम्बन्धाग्रहवतो गङ्गापदशक्तिं जानतोऽपि 'गङ्गायां घोषः' इति वाक्यात्तीरबोधप्रसङ्गः, शक्तिज्ञानस्य हेतोः सत्त्वात्। अपिच 'घटमानय' इति वाक्यम्, हस्तिनश्च स्मरतः, घटपदादिभ्यो घटादेः, गजाद्धस्तिपकस्य च समूहालम्बनस्मरणवतो घटानयनवद्धस्तिपकस्यापि शाब्दबोधापत्तिः, समूहालम्बनरूपायां पदार्थोपस्थितौ वृत्ति (पद) जन्यत्वसत्त्वात्।

तथाच 'विषयतया शाब्दबोधं प्रति तदंशविषयकवृत्तिजन्योपस्थितिर्हेतुः' इति वाच्यम्, एवञ्च

प्रभा

सम्बन्धाग्रहवत इति—'प्रवाहो गङ्गापदशक्यः' इति ज्ञानवतः 'गङ्गापदशक्यसम्बन्धितीरम्' इति ज्ञानाभाववतः पुरुषस्य गङ्गापदात्तीरबोधो न जायते। असमानविषयकस्यापि शक्तिज्ञानस्य हेतुत्वे तु गङ्गापदात् तीरोपस्थितेस्तद्द्वारा शाब्दबोधस्य चापत्तिरित्यर्थः। ननु तद्विषयकशाब्दबोधम्प्रति शक्तिज्ञानजन्यतद्विषयकोपस्थितिः कारणम्, इति कार्यकारणभावे समानविषयकत्वनिवेशोऽस्तु इति गङ्गातीरयोः सम्बन्धाग्रहवतः प्रवाहो गङ्गापदशक्य इति जानतोऽपि तीरोपस्थितेरभावान्न शाब्दबोध इत्यत आह—'अपिचेति'। स्मरत इति—वाक्यविषयकं हस्तिविषयकञ्चैकमेव समूहालम्बना (विषय) त्मकं स्मरणम्। इदञ्च पदज्ञानं कारणमिति मतेन। यदि तु स्फोटः शब्दः प्रत्यायक इति मतं तदा वाक्यमित्यस्य श्रूयमाण इति शेषः। तथाच घटादिपदहस्त्युभयविषयकसमूहालम्बनात्मकस्मृतिरूपज्ञानेन वाक्यश्रवणात्मक—हस्तिस्मरणात्मकज्ञानद्वयेन वा घटादिपदनिष्ठशक्तिस्मृतिद्वारा घटादिपदार्थविषयिका हस्तिपकविषयिका च समूहालम्बनस्मरणात्मिका एका उपस्थितिः। एषा चोपस्थितिर्घटादिपदनिष्ठशक्तिज्ञानजन्या। अत एव पूर्वत्र वाक्यस्मरणोक्तिः। तादृशोपस्थितेश्च घटकर्मकमानयनमिति शाब्दबोधो जायते। 'हस्तिपककर्मकमानयनम्' इति शाब्दबोधस्तु न जायते' शक्तिज्ञानपदार्थोपस्थित्योरपि समानविषयकत्वनियमात्, प्रकृते घटादिपदनिष्ठशक्तिज्ञानस्य हस्तिपकविषयकतया हस्तिपकविषयकसमूहालम्बनात्मकोपस्थितेर्हस्तिपकविषयकशक्तिज्ञानजन्यत्वाभावात्। तस्यामेवोपस्थितौ घटादिपदनिष्ठघटादिविषयकशक्तिज्ञानजन्यत्वसत्त्वेन घटादिविषयकशाब्दबोधोपपत्तिः। इत्थञ्च हस्तिपकस्योक्तस्थले शाब्दबोधवारणाय शक्तिज्ञान-पदार्थोपस्थिति-शाब्दबोधानां समानविषयकत्वस्यावश्यकतया 'गङ्गायां घोषः' इत्यादिस्थले तीरादिविषयकोपस्थितिशाब्दबोधम्प्रति प्रवाहविषयकशक्तिज्ञानत्वेन कारणत्वमसम्भवदुक्तिकमित्याह—विषयतयेति—प्रकृते हस्तिपकनिष्ठविषयतया शाब्दबोधं प्रति तादृशविषयतया हस्तिपकांशविषयकशक्तिज्ञानजन्योपस्थितेर्हेतुत्वमिति तादृशोपस्थितेरभावान्न शाब्दबोध इति भावः। एवञ्च लक्षणावृत्त्यन्तरमेव। अत एव 'अयं वाच्यः' 'अयं लक्ष्यः' इति व्यवहारद्वयमप्युपपद्यते, इत्यन्यत्र विस्तरः।

दर्पणव्याख्या

## दर्पणव्याख्या

वान् देश इत्याकारकविशिष्टवैशिष्ट्यावगाह्यनुव्यवसायात्मकोपस्थितावपि सत्त्वात्तद्विषयस्यापि शाब्दबोधापत्तिः, साक्षाजन्योपस्थितेरसंग्रहश्च, साक्षाजन्यत्वस्य तत्त्वे तु लक्षणाज्ञानजन्योपस्थित्यसंग्रहः, इत्युभयसाधारणस्य तस्य निर्वक्तुमशक्यत्वात्। स्वरूपसम्बन्धरूपस्य तस्याननुगतस्योभयसाधारण्यं तु सुतरामसम्भावितमिति भावः। अन्यथासिद्धिनिरूपकतानवच्छेदकशक्तिज्ञाननियतोत्तरवर्तितावच्छेदकधर्मवत्त्वरूपं शक्तिप्रयोज्यत्वमुभयसाधारणं सुवचमित्यपि केचित्। अधिकमग्रे वक्ष्यते।

अत्र वदन्ति—अर्थबोधजनकत्वस्य वस्तुतः पदनिष्ठस्य वाच्यवाचकव्यवहारनियामकशक्तित्वसम्भव एवोक्तकार्यकारणभावे गौरवलाघवादिचर्चा, ननु तस्य तद्रूपत्वसम्भवः। तथाहि—शाब्दबोधं प्रति वृत्तिज्ञानस्य हेतुतेति निर्विवादम्। सा च भवदुक्तार्थधीजनकत्वस्य वृत्तित्वे न सम्भवति, तद्रूपायास्तस्याः ज्ञाननिष्ठशाब्दधीजनकतायामनवच्छेदकत्वात्। आत्माश्रयेण स्वस्यैव स्वावच्छेदकत्वासम्भवात्।

किञ्च प्रयोज्यप्रयोजकव्यवहारद्रष्टृप्रयोज्यप्रवृत्त्यनुमिते प्रयोज्यघटानयनादिज्ञाने उपस्थितत्वाच्छाब्दस्यैव हेतुतायामवधार्यमाणायामसम्बद्धस्य कारणत्वानुपपत्त्या कल्प्यमानसम्बन्धस्य जनकत्वात्मकत्वासम्भव, स्वयमनुपपद्यमानत्वेन गृहीतस्य प्रतीतुमशक्यत्वात्। तस्मात् 'बोधकत्वं शक्तिः'। एवं न्यायमताम्युपेतास्मात् पदादेतदर्थविशेष्यकबोधो भवत्वित्याकारकेश्वरेच्छाविषयत्वस्यापि सङ्केतीयगङ्गापदजन्यत्वप्रकारतानिरूपितबोधत्वावच्छिन्नोद्देश्यतानिरूपितविशेष्यत्वावच्छेदकताधेयतासम्बन्धावच्छिन्नावच्छेदकत्वपर्यवसितस्य न शक्तित्वम्, लक्षणोच्छेदापत्तेः।

गङ्गापदात्तीरबोधोद्देश्येन गङ्गापदात् तीरविशेष्यकबोधो भवत्वितीच्छाया अपि भगवत्या सम्भवात्, तादृशेच्छीयनिरूपकतावच्छेदकताया लक्ष्ये तीरेऽपि सम्भवात् तादृशावच्छेदकतात्वेन शक्तिज्ञानस्य शाब्दबोधे कारणताकल्पने गौरवाच्च। तीरादिनिष्ठावच्छेदकतायाः पूर्वोक्तविशेष्यतावृत्त्यवच्छेदकतानिरूपितत्वेऽपि न विशेष्यतावृत्त्यवच्छेदकतात्वेन तन्निरूप्यत्वम्, किन्तु शुद्धावच्छेदकतामात्रेणेति न तादृशशक्तिस्तीरे इति तु शिष्यप्रतारणामात्रम्। इच्छाविषयत्वम्, ज्ञानविषयत्वं वा शक्तिरिति विनिगमनाविरहाच्चेत्यधिकमग्रे वक्ष्यते। तस्मात् पदपदार्थयोर्वाच्यवाचकभावव्यवहारनियामकः सम्बन्धः पदार्थान्तरमेव।

तस्य च लक्ष्यव्यावृत्तस्यैव धर्मिग्राहकमानसिद्धत्वाल्लक्ष्यबोधार्थं शक्यसम्बन्धरूपलक्षणावृत्तेरपि स्वीकार आवश्यकः। तज्ज्ञानस्य शाब्दबोधे हेतुत्वान्तरकल्पनप्रयुक्तगौरवं तु फलमुखत्वान्न दोषावहम्, अन्यथाऽनुपपत्तेश्च। अत एव शक्यलक्ष्यव्यवहारः सर्वत्र सङ्गच्छते।

अथवा शक्तिलक्षणाज्ञानयोः शाब्दत्वं प्रत्येकरूपेणैव हेतुता। तथाहि—तच्छाब्दं प्रति शक्तित्वावच्छिन्नसांसर्गिकविषयतानिरूपितपदनिष्ठप्रकारतानिरूपिततदर्थनिष्ठविशेष्यताकज्ञानत्वेन हेतुता। शक्तिसम्बन्धेन, शक्यसम्बन्धेन वा पदप्रकारकज्ञाने शक्तेः संसर्गत्वात्। शक्तित्वनिष्ठावच्छेदकताया पर्याप्तेरनिवेशेन शक्यसम्बन्धप्रकारकज्ञानस्यापि तेन क्रोडीकरणात्। परन्तु पदनिष्ठप्रकारतानिरूपिततादृशसांसर्गिकविषयतायामर्थनिष्ठविशेष्यतानिरूपितत्वानभ्युपगमान्न शक्तिसम्बन्धेन पदाभावप्रकारकबुद्धिप्रतिबध्यत्वं लक्षणाज्ञानस्य।

"इन्द्रियाणाम्" इत्यादिहरिपद्यस्य त्वयमर्थः—इन्द्रियाणां चाक्षुषादिविषयेषु=घटादिषु पुरुषप्रयत्नानपेक्षा यथा योग्यता=तदीयचाक्षुषादिकारणतावच्छेदकरूपाऽस्ति तथाऽर्थैः सार्कमपि पदानां सम्बन्धो योग्यता=तच्छाब्दबोधजनकताऽवच्छेदकधर्म, ननु जनकत्वमेव, उपयुक्ते, इति न तद्विरोधोऽपीति सर्वमनवद्यम्। तद्ग्राहकञ्च—व्याकरणमुपमानादि। तदुक्तम्—

> शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
>
> वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥ इति।

*तत्र व्याकरणादिर्व्याकरणादेवेत्र शक्तिग्राहकमिति नैयायिकमतम्। यतो व्याकरणवशेन "सः कर्मणि"* (पा० सू० ३।४।६९) इति सूत्रेण कृतादेः शक्तिः परिच्छिद्यते, ननु कर्तरीति यथोक्तमेवेत्यलम्। एवम् "गुणे शुक्लादयः" इति कोशेनापि शापाराव्दृष्टेन गुणे एव शक्तिर्निर्णीयते, ननु गुणिनि, गौरवात्। गुणिबोधस्तु शुक्लादिशब्देभ्यो निरूढ-

## दर्पणव्याख्या

लक्षणैवेति च तदुक्तेः । निरूढलक्षणा प्राङ् निरुक्तम् ।

उपमानस्य तु सादृश्यज्ञानात्मकस्यातिदेशवाक्यार्थस्मृतिद्वारा गवयादिर्गवयादिपदवाच्य इति शक्तिपरिच्छेदकत्वम् । इदमेतद्वाचकमित्याकाराऽऽप्तवाक्यादपि तद्ग्रहः । आप्तत्वञ्च—तदर्थविषयकयथार्थज्ञानवत्त्वम् । व्यवहारात्—यथा प्रयोजकवृद्धेन घटमानयेत्युक्ते प्रयोज्यवृद्धेनाऽऽनीते घटे पार्श्वस्थो घटकर्मकानयनादिकार्यं घटकर्मकानयनादिज्ञानसाध्यमित्यनुमिमीते, व्यवहारे व्यवहर्तव्यज्ञानस्य हेतुत्वात् । अनन्तरं तद्धेतुजिज्ञासायामुपस्थितं तद्वाक्यमेव तद्धेतुत्वेनावधारयति । तस्य चार्थासम्बद्धस्य तद्धेतुत्वानुपपत्त्याऽर्थेन साकं पश्चाद् वाक्यस्य सम्बन्धमवधारयति । सैव शक्तिरिति व्यवह्रियते ।

यद्यपि प्रथमं तेन वाक्यस्यैव वाक्यार्थेऽवधारितः सः, तथापि 'घटं नय' 'गामानय' इत्यावापोद्वापाभ्यां पश्चाज्जातप्रत्येकपदशक्तिग्रहेण प्राग्जातवाक्यशक्तिग्रहे चन्द्रादेर्ज्योतिःशास्त्राध्ययनजन्यप्रहतयोजनादिपरिमाणग्रहेण पाश्चात्येन प्राथमिकाल्पपरिमाणग्रह इवाप्रामाण्यं गृह्यते इति नैयायिकाः । प्रत्येकपदशक्तिग्रहेणैवाकाङ्क्षादिसहकृतेन वाक्यार्थबोधोपपत्तेरिति तदाशयः ।

*अन्ये तु वाक्यार्थशक्तिग्रहस्य प्रत्येकपदशक्त्युपजीव्यत्वात्तेनैतद्बाधासम्भवेन प्राग्जातशक्तिग्रहस्यैव बलवत्त्वमित्याहुः ।*

वाक्यशेषात्तु—"यवैर्जुहोति" इत्यत्र यवपदस्य दीर्घशूकविशिष्टे आर्याणां प्रयोगात् कङ्गौ म्लेच्छानां प्रयोगात् क्व शक्तिरिति सन्देहे 'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति" इति वाक्यशेषेण दीर्घशूकविशिष्टे तन्निर्णयः । विवरणस्य यथा शक्तिग्राहकत्वं तथा धात्वर्थनिरूपणे उक्तम् । "इह सहकारतरौ मधुरं पिको रौति" इत्यादौ प्रसिद्धसहकारादिपदसन्निधानात् पिकादिपदानां कोकिलादौ शक्तिपरिच्छित्तिरिति । सैषा शक्तिर्नानार्थेषु संयोगादिना नियम्यते । तदुक्तं काव्यप्रकाशे—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ इति ॥

शब्दार्थस्यानवच्छेदे=सन्देहे तन्निरासद्वारा विशेषनिर्णयस्य जनकाः संयोगादय इति तदर्थः । शक्योपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनिर्णयद्वारा तत्तदर्थबोधजनकत्वं तेषामिति भावः ।

तत्र सवत्सा धेनुरवत्सा धेनुरिति क्रमेण संयोगविप्रयोगयोरुदाहरणे । साहचर्यम्=सादृश्यम्, सदृशयोरेव प्रायशः सह प्रयोगात्, एवञ्च 'रामलक्ष्मणौ' इत्यादावुभयनाम्नोर्मार्ययोर्युगपदेव साहचर्यग्रहाधीनतात्पर्यग्रहेण विशेषावगतिरिति नान्योन्याश्रयः । 'रामार्जुनगतिस्तयोः' इत्यादौ विरोधेन सा । 'अञ्जलिना जुहोति' 'अञ्जलिनाऽऽदित्यमुपतिष्ठते' इत्यादौ धात्वर्थवशात्तदाकाराञ्जलिपरत्वम् । 'सैन्धवमानय' इत्यादौ तु भोजनादिरूपप्रकरणेन सा । 'अक्ताः शर्करा उपदधाति' इत्यादौ 'तेजो वै घृतम्' इत्यादिस्तुतिरूपाल्लिङ्गादक्तपदस्य घृतसाधनाञ्जने तात्पर्यावगतिः । 'रामो जामदग्न्यः' इत्यादौ जामदग्न्यपदसन्निधानेन रामपदस्य परशुरामपरता । एवम् 'अभिरूपाय कन्या देया' इत्यत्राभिरूपतरायेति सामर्थ्यादवगम्यते । 'वृश्च निम्बं परशुना' इत्यत्रौचित्यात् परशुपदस्य छेदनार्थत्वम् । 'भात्यत्र परमेश्वरः' इत्यत्र राजधानीरूपदेशात् परमेश्वरपदस्य राजपरत्वम् ।

'चित्रभानुर्भाति' इत्यत्र चित्रभानुपदं रात्रौ वह्नेर्दिवा सूर्यस्य बोधकम् । 'मित्रं भाति', 'मित्रो भाति' इत्यादौ व्यक्तेः=लिङ्गादात्मे सुहृदोऽन्ये सूर्यस्य बोधकं मित्रपदम् । 'स्थूलपृषतीमनड्वाहीम्' इत्यत्र स्वरात् तत्पुरुषबहुव्रीह्यर्थनिर्णयः । आदिपदात् प्रत्ययत्वादि, यथा—'सुसिक्तम्' इत्यत्र सुशब्दस्य कर्मप्रवचनीयस्य पूजार्थकत्वम्, सुषिक्तमित्यत्रोपसर्गस्यान्यार्थकत्वम् । एवम्—'प्रणायकः' इत्यत्र णत्वात् प्रणयनकर्तृबोधः । 'प्रनायकः' इत्यत्र तदभावात् प्रगतनायकबोध इत्याद्यूह्यम् ।

## दर्पणव्याख्या

यत्तु—पदपदार्थयोर्योऽर्थः स शब्दो यः शब्दः सोऽर्थः इतीतरेतराध्यासमूलकं तादात्म्यं भेदव्याप्तमस्ति । तस्य वाचकः प्रणवादिः । 'ओमित्येकाक्षरं ब्रह्म' इति भेदाभेदयोर्दर्शनात् । आद्ये भेदस्योद्भूतत्वविवक्षया षष्ठी, अभेदस्योद्भूतत्वविवक्षया तस्ये प्रातिपदिकार्थे प्रथमा । स एव सम्बन्धः पदतदर्थयोर्बोध्यबोधकभावव्यवहारनियामकः ।

शक्तिस्तु सङ्केतः, पदार्थान्तरं चेति भट्टानुयायिमतम् । तत्तु न साधीयः, अध्यासमूलकस्याससत्त्वस्य सम्बन्धत्वासम्भवात्, भेदाभेदयोः परस्पराभावरूपतया विरुद्धयोरेकत्रासम्भवाच्च कस्यचित् तथाऽध्यासस्य सम्भवेऽपि सर्वेषां तथाऽध्यासे मानाभावात्, घटपदनाशेऽपि घटस्योपलभ्यमानतया तयोस्तादात्म्यस्यासम्भवद्युक्तिकत्वाच्च ।

न च पाकरक्ते प्राक् श्यामेऽपि पाकोत्तरम् 'अयमिदानीं न श्याम' इति प्रतीतेर्भेदाभेदौ न विरुद्धाविति वाच्यम्, अव्याप्यवृत्तीनां तेषामेकावच्छेदेन विरोधानपायात् । अत एव तत्र देशकालावच्छेदकभेदेनैव 'अयमिदानीं न श्याम' 'वृक्षो मूले न कपिसंयोगी' इति, न तु तदनवगाहिनी घटोऽयं न श्यामो वृक्षो न कपिसंयोगीति प्रतीतिः, किं चाभेदवादे घटपदनाशे घटनाशापत्तिरेव शब्दवदर्थस्यापि श्रोत्रेन्द्रियग्राह्यतायाः शब्दस्य चक्षुरादीन्द्रियग्राह्यतायाश्चापत्तिरिति महद्गौरवम् । शब्दस्य यथा न नित्यत्वं तथा वक्ष्यते ।

नचात्यन्तभेदे घटः पटोऽस्य त्वाऽभेदे घटो घट इति सामानाधिकरण्यादर्शनाद् भेदाभेदवादापत्तिरिति वाच्यम्, 'शब्दो घटः' इत्याद्यननुभवात् 'घटो न शब्दः, शब्दो न घटः' इत्याद्यनुभवाच्च भेदस्यैव सिद्धेः । 'ओमित्येकाक्षरम्' इत्यादौ त्वक्षरपदस्य तत्प्रतिपाद्ये निरूढलक्षणया सामानाधिकरण्योपपत्तेस्तत्र वाक्यस्योपासनाकाण्डस्थतया भेदेऽप्यभेदोपासनपरतयोपपत्तेश्चेत्यन्यत्र विस्तरः ।

सा च शक्तिस्त्रिधा—योगः, रूढिः, योगरूढिश्चेति । प्रकृतिप्रत्ययनिरूपिता तत्तदर्थे या शक्तिः स योगस्तन्मात्रेणार्थबोधकं पदं यौगिकमिति व्यवह्रियते । यथा पाचकादिपदम्, तद्घटकधातुप्रत्ययया पाकादौ, कर्त्रादिकारके च व्युत्पन्नत्वात् । अवयवार्थाप्रतीतौ केवलसमुदायस्य तत्तदर्थे या शक्तिः सा रूढिः, तयाऽर्थबोधकं पदं रूढम् । यथा—मणिनूपुरादि । अश्वगन्धादिपदात् कदाचिदवयवार्थनिष्ठसमुदायनिरूढशक्त्यौषधिबोधः । कदाचित्तु अश्वस्य गन्धोऽस्यामिति व्युत्पत्त्या यानिशालादिबोधोऽवयवशक्त्येति यौगिकरूढं पृथङ्नोक्तम्, उक्तयोरेवान्तर्भावात् । "रूढिर्योगापहारिणी" इति तु प्रकरणाद्यभावे । लाक्षणिकं तद् वाजिशालाबोधे इत्यपरे । यत्रावयवार्थसहकृता समुदायशक्तिरर्थबोधिका सा योगरूढिस्तयाऽर्थबोधकं पदं योगरूढम् । यथा—पङ्कजादिपदम् । तत्र पङ्काधिकरणकोत्पत्त्या पद्मत्वनिष्ठबोधाद् अनुपपत्तिप्रतिसन्धानं विनापि पद्मबोधात् तत्र लक्षणावसर इत्यादि प्रपञ्चितं पूर्वमेव ।

'गङ्गायां घोष' इत्यादौ गङ्गापदस्य तीरे शक्यसामीप्यरूपलक्षणामते तदाऽऽहितसंस्कारजन्यतीरादिस्मृत्या तीराधिकरणकघोषशाब्दबुद्धिः । लक्ष्यव्यवहारान्यथानुपपत्त्या लक्षणाया अप्यवश्यमभ्युपेयत्वात् । अन्वयाऽनुपपत्तिप्रतिसन्धानं च तत्कल्पने बीजम् । यथोक्ते क्वचिन्निराकाङ्क्षत्वमपि तद्बीजम् । यथा 'वदनं तस्या वदनं सुखमसुरं भाति चाभ्यासाम्'' इत्यत्र तादात्म्यसम्बन्धावच्छिन्नवदनत्वावच्छिन्नप्रकारतानिरूपितवदनत्वावच्छिन्नविशेष्यताको बोधो न सम्भवति तादात्म्यसम्बन्धावच्छिन्नतादृशप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धौ विधेयताऽवच्छेदकभेदस्य तन्त्रत्वात्, इति वदनत्वावच्छिन्नार्थकवदनपदनिरूपिताकाङ्क्षा न वदनपदेऽतस्तत्र वदनपदं लक्षणयाऽऽह्लादकपरम् । तदुपस्थिताह्लादकत्वावच्छिन्नस्याभेदान्वयो वदने अनुशासनबोधितनैराकाङ्क्ष्यमपि क्वचित्तथा । यथा—

कृतसीतापरित्यागः स रत्नाकरमेखलाम् ।
बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् ॥

इत्यत्र भुजिधातोरवनवाचकस्यात्मनेपदनिराकाङ्क्षतया पाल्यार्थबुद्धौ प्रतिबद्धायां तद्धातुना स्वार्थपालनसम्बन्धि शासनं लक्ष्यते । आत्मनेपदसमभिव्याहृतभुजित्वावच्छेदेनाऽऽरयातबोध्यकर्त्रन्वितपालनबोधस्य रूपायोग्यत्वरूपनैराकाङ्क्षपरस्य,

नन्वेवं भाषादितो बोधदर्शनाद् बोधकतारूपा शक्तिस्तत्रापि स्यात् । तथाच साधुताऽपि स्यात् , शक्तत्वस्यैव साधुताया व्याकरणाधिकरणे प्रतिपादनादित्याशङ्कां द्विधा समाधत्ते—

### प्रभा

नत्वस्य पीनत्वं नोपपादकम् , किन्तु तद्भिन्नं रात्रिभोजनरूपमेव । एवं बोधजनकत्वानुपपत्त्या कल्प्यमानः शब्दार्थयोः सम्बन्धः पदार्थान्तरमेव, नतु बोधजनकत्वरूपः । अत एव मीमांसकैर्बोधजनकतावच्छेदकधर्मविशेषात्मिका शक्तिरिति स्वीकृतम् । तज्ज्ञापकञ्च कोषव्यवहारादि ॥ ३७ ॥

बोधजनकत्वस्य शक्तित्वे दोषमाशङ्क्य निराचष्टे—नन्वेवमिति—बोधजनकत्वस्य शक्तित्वाङ्गीकार इत्यर्थः । भाषादित इति—भाषा—अत्रापभ्रंश=यज्ञादावुच्चारणेन पापहेतुतया अपभ्रश्यते=पात्यते नरकादावनेनेति करणे घञ् अपभ्रंशः=तत्तद्देशीयव्यावहारिकोऽसाधुशब्दः । यद्यपि भाष्यते या सा भाषेति व्युत्पत्त्या 'गुरोश्च हल.' इति कर्मणि अप्रत्यये भाषाशब्दश्शब्दमात्रपरः । अत एव 'सत्यशिश्वीति भाषायाम्' इति पाणिनिसूत्रं सङ्गच्छते । तथापि प्रकृते साधुशब्दप्रतिकूलतया अत्र प्रयोगादसाधूनामेवात्र तेन ग्रहणम् । तत्रापि=गगर्य्यादिशब्देऽपि । कोशाप्तव्यवहारज्ञाप्येश्वरेच्छादिरूपस्य शक्तित्वे तु न दोषः तत्रेश्वरेच्छादिरूपाया. शक्तेः कल्पकाभावात् । तथाच=शक्तत्वे च । व्याकरणाधिकरण इति—साधुपदप्रयुक्तिनयमाधिकरणे । तथाच सूत्रम्—'प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात्' इति सूत्रे 'अनादिवाचकत्वं साधुत्वं तद्विपर्ययश्चासाधुत्वम्' इत्युक्तम् । अग्रे च 'यद्यपि अमीषामवाचकत्वं यद्यपि च मुख्याभावे गौणलाक्षणिकयोरप्यसम्भवस्तथापि वाचकशक्तिजतया मूलशब्दोपस्थापकत्वेन (स्मारणेन) प्रत्यायकत्वं भविष्यति' इत्यनेन 'असाधुरनुमानेन' इति पक्ष उपपादित. शास्त्रदीपिकायाम् । द्विधेति—साक्षाद्बोधकत्वाभावेन बोधकत्वस्य सत्त्वेऽपि साधुत्वस्य शक्तत्वादतिरिक्तत्वेनेति प्रकारद्वयेनेत्यर्थः ।

### दर्पणव्याख्या

इत्यत्र अश्रुतानां भ्रमणस्य पुष्पस्यो जलवाहकैः साक्षाद् रमन्ते इत्यतात्पर्यविषयलक्ष्यार्थानालिङ्गितार्थान्तरस्यापि प्रतीतिः । सा चार्थद्वारिकाऽपि—

"भ्रम धार्मिक विस्रब्धः सोऽऽ श्वा मारितस्तेन ।
गोदातीरनिकुञ्जप्रतिष्ठितनिर्गतदृप्तसिंहेन ॥"

इत्यादौ प्रतिभाजुषां सहृदयानां वक्तृबोद्धव्यवैशिष्ट्यस्फूर्तौ सिंहप्रतीत्यनन्तरं गोदातीरे स्वभीरुभ्रमणायोग्यत्वप्रत्ययादिति चेत्र, लक्ष्यार्थानालिङ्गितार्थस्य केवलयोगेन प्रतीत्यसम्भवेऽपि लक्षणया तस्या सूपपादत्वात् । पावनत्वादिप्रतीतिर्विशिष्टलक्षणयाऽपि शुद्धलक्षणयैवानुपपत्तिपरिहारे विशिष्टे तदभ्युपगमे बीजाभाव इति ॥ न, 'यष्टीः प्रवेशय' इत्यत्रापि तदनापत्तेः, यात्यार्थवैयञ्जनिकबुद्धेरनुमानेनापि गतार्थत्वाच्च ।

वस्तुतस्तु गालिप्रदानादेरिवेताऽपि तथा तात्पर्यमेवोन्नीयते, न त्वन्वयबोध , अनुमितिर्वा, बोधे व्यभिचारसाधर्म्-
तयो , सन्देहे वा तयोरसम्भवाच्चेत् तैर्व्यञ्जनोल्लासाभ्युपगमादित्यन्यत्र विस्तर ॥ ३७ ॥

यदि पुनरानुभाविको लोकानां स्मरणवादी शब्दादमुमर्थं प्रत्येमीति प्रत्ययस्तदा व्यञ्जनावृत्तिरप्यस्त्वेवेति स्वोचनिष्कृष्टमतमवलम्ब्य मूलमवतारयति—* नन्विति * एवम्—बोधकत्वस्यैव शक्तित्वे * तत्रापि *=अपभ्रंशात्मकभाषायामपि । * स्यादिति * तस्या अपि बोधकत्वात् । ईश्वरेच्छादीनां शक्तित्ववादिनां तु नायमतिप्रसङ्ग इति भावः । इष्टापत्तावाह—* तथाचेति * । "नापभ्रंशितवै" इत्यादिनिषेधविधिविषयतानापत्त्येत्यापत्ते कर्तुमशक्यत्वादिति भावः ।

* द्विधेति * अपभ्रंशानामुक्तशक्तिमत्त्वाभावव्यवस्थापनेन साधुत्वस्याऽन्यथानिर्वचनेन चेत्यर्थः ।

असाधुरनुमानेन वाचकः कैश्चिदिष्यते ।
वाचकत्वाविशेषे वा नियमः पुण्यपापयोः ॥ ३८ ॥

असाधुः=गाव्यादिः, अनुमानेन=साधुशब्दमनुमाय, वाचकः=बोधकः कैश्चिदिष्यते । तथाच लिपिवत्तेषां साधुस्मरणे एवोपयोगः, नतु साक्षात्तद्वाचकत्वम्, अतो न साधुत्वमिति भावः । उक्तं हि वाक्यपदीये—

ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।
तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः ॥

प्रभा

अनुमानेनेति—अत्र माधातु स्मृतौ । अन्तर्भावितण्यर्थश्च । अन्यथा घटस्स्मरति' इत्यादिप्रयोगाद- र्शनात् स्मरणकर्तृत्वस्य चेतने एव दर्शनेन 'असाधुशब्दः साधुशब्दमनुमाय बोधकः' इत्यर्थे स्मृतिकर्तृत्वस्य शब्दे बाधात् 'समानकर्तृकयोः' इति क्त्वाप्रत्ययानुपपत्तिः । शब्दस्य प्रयोजककर्तृत्वे तु समानकर्तृ- कत्वं सूपपादम् । यद्वा शब्दे चेतनत्वारोपेण स्मृतिकर्तृत्वं बोद्ध्यमिति पक्षान्तरम् । कैश्चित् नैयायिका- दिभिः । वाचकत्वाविशेषे इति—तद्वत्त्वात् व्यवहारस्या वशेष ग्रन्थकार आह तत्र च शास्त्रं नियामकम् । 'साधु- शब्दैरेवार्थोऽभिधेयो नापशब्दैः' एवं क्रियमाणमभ्युदयकारं भवति । असाधुशब्दप्रयोगे तु धर्माभावः पाप- स्येनोपपद्यते । अपशब्दानां बोधकत्वे मतत्रयम्—अपशब्देन साधुस्मरणं तत एव बोध इत्येकम् । अप- शब्दः शब्देन तादात्म्यापन्नोऽर्थम्बोधयतीति द्वितीयम् । अपशब्दः शब्दवत् साक्षादेवार्थं बोधयतीति तृतीयम् । न तृतीयमादाय 'नियमः पुण्यपापयोः' इत्युक्तिः । तद्वाचकत्वम् तस्य=असाधुशब्दस्य वाचकत्वम् बोधकत्वम् । न साधुत्वमिति—वाचकत्वमेव साधुत्वमिति मत इत्यर्थः । तथाच—साधुशब्दं जानतां व्युत्पन्नानामसाधूना साधुशब्दस्मरणाद्बोधः । अव्युत्पन्नानान्तु शक्तिभ्रमादेव बोधः । ननु रजतत्वं जानत एव शुक्तौ भ्रमो भवति न त्वजानत इति पामराणां भ्रमासम्भव इति चेन्न, कदाचिद्व्युत्पन्नोऽसाधुशब्दं साधुश- बुद्ध्या व्यवहृतवान्, तन्दृष्ट्वा पामरास्तथैव व्यवहर्तुमारब्धा इति पूर्वपूर्वभ्रमादुत्तरोत्तरभ्रमः । यद्वा— 'घटमानय' इति केनचिदुक्तम्, तदानीमेवान्येनोच्चरितं गगरीशब्दं श्रुत्वा घटमानयन्तञ्च तन्दृष्ट्वा गगरी- शब्दादेवास्य बोध इति पामरस्य भ्रमो जातस्तत एवोत्तरोत्तरेषां भ्रमः । ते=असाधुशब्दाः । साधुष्विति— विषयत्वं सप्तम्यर्थः । साधुशब्दविषयकं स्मरणं कारयित्वा । प्रत्ययोत्पत्तिहेतवः=प्रत्ययः=अर्थबोधस्तदुत्पत्ति- कारणानि भवन्ति इति पूर्वार्द्धार्थः । तादात्म्यमिति—साधुशब्दतदर्थयोस्तादात्म्यम् । ययोः शब्दार्थयोः परस्परं

दर्पणव्याख्या

मूले * अनुमानेन वाचक इति * अनुमानमत्र स्मृतिः । अनु=पश्चात् मानम्=मितिरिति व्युत्पत्तेः नतु व्याप्तिज्ञानम्, गाव्याद्यपभ्रंशानां गवादिशब्दविकृतित्वेनोद्बोधकविधया झगिति प्रकृतिस्मारकत्वा- दव्युत्पन्नानामपि शाब्दबोधदर्शनात् । *अनुमानेन साधुशब्दमिति* । *अनुमायेति* स्मृत्वेत्यर्थः । वक्ष्यति च— तेषां साधुस्मरणे दित्याशयेन व्याचष्टे—*अनुमानेन साधुशब्दमिति* । अपभ्रंशानां साक्षाद् बोधकता तु न शब्दजनकसाधुत्वस्याभावादसाधुत्वज्ञानस्य प्रतिबन्धकत्वाद्वेति एवोपयोग इति । तत्र हरिसम्मतिमाह—*उक्तं हीति* । ते अपभ्रंशाः । *'साधुषु* इति विषयसप्तमी, साधुविषयकस्मरणेनेत्यर्थः । भावः । पक्षान्तरमाह—* तादात्म्यमिति * साधुगवादिशब्दतादात्म्यप्रकारकज्ञान *प्रत्ययेति* गवाद्यर्थबोधकारणानीत्यर्थः ।

न शिष्टैरनुगम्यन्ते पर्य्याया इव साधवः ।
ते (न) यतः स्मृतिशास्त्रेण तस्मात् साक्षादवाचकाः ॥
अम्बाम्बेति यदा बालः शिक्ष्यमाणः प्रभाषते ।
अव्यक्तं तद्विदां तेन व्यक्ते भवति निर्णयः ॥
एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते ।

### प्रभा

लोके शिष्टव्यवहारे तादात्म्यमुपलभ्यते तयोरेव वाच्यवाचकभावः । यदर्थस्य यत्र शब्दे तादात्म्यन्तदर्थनिरूपिता तस्मिन् शब्दे शक्तिः, अपभ्रंशस्य तु शिष्टव्यवहारविषयत्वाभावान्नार्थेन सह तादात्म्यम् । परन्त्वसाधुशब्दा अपि अर्थेन सह तादात्म्यमुपगता इवार्थप्रकाशका भवन्ति । एतेन बोद्धुरपभ्रंशेऽर्थतादात्म्यभ्रमाच्छक्तिभ्रमेण बोध उपपादितः ।

अन्ये हेलाराजादयस्तु अन्यथा व्याचख्युः । तथाहि—विवाग् ( विरुद्धवाग् ) अशक्तव्यक्तीनां बालवन्ध्यादिवदनुमिता ( अनुस्मृता ) वृत्तिर्विदुषां वाचिका । नहि विद्वांसोऽर्थमपभ्रंशशब्दात् साक्षात्पश्यन्तीति नापभ्रंशानामर्थे कश्चित्सम्बन्धः । अत एव पुराकल्पेऽनृतादिभिरिवापभ्रंशैरपि रक्षिता वागासीत् । अवाचका एवापभ्रंशाः । ते तु सादृश्यात् साधुशब्दमनुमापयन्ति ( स्मारयन्ति ) । तथाच सङ्ग्रहकारः—'शब्दप्रकृतिरपभ्रंश.' इति । शब्दः प्रकृतिः=उपादानकारणं यस्य सोऽपभ्रंशः । तथाच स्वप्रकृतिभूतशब्देन तादात्म्यापन्न एवापभ्रंशोऽर्थमभिदधाति ।

न शिष्टैरिति—यतः शिष्टैः पाणिन्यादिभिः साधवः पर्य्याया इव स्मृतिशास्त्रेण व्याकरणस्मृत्या ते=अपभ्रंशाः । नानुगम्यन्ते=अनुगतप्रकृतिप्रत्ययादिरूपेण न बोध्यन्ते । तस्मात्=पाणिन्यादिभिरननुख्यातत्वात् ।

अम्बम्बेति—मात्रादिभिः 'अम्बा' 'अम्बा' इति कथयेति शिक्ष्यमाणो बालो यदाऽशक्त्या 'म्बा' म्बा' इति किञ्चिदव्यक्तमस्पष्टाक्षरं भासते, तद्विदाम्=व्यक्तविदाम्, तेन—अव्यक्तेन व्यक्ते ज्ञाते सति निर्णयो भवति=अर्थज्ञानं जायते । एवमिति—साधौ प्रयोक्तव्ये=प्रयोक्तुमर्हत्वेऽपि कथञ्चिदपभ्रंशः यः शब्दः प्रयुज्यते=

### दर्पणव्याख्या

विषयतामापाद्य वेत्यर्थः । एवकारो वाऽर्थे । गोपदे उच्चारणीये करणापाटवेन गावीत्युच्चारितम्, वस्तुतो गोपदमेवेदमिति तादात्म्येन भासमाना गाव्यादिशब्दा गवादिरूपार्थस्य प्रकाशका इत्यर्थः । नच वक्ष्यमाणक्त्याभेदः, तत्रापभ्रंशगतानुपूर्व्या एव शक्ततावच्छेदकत्वात् । अत्र तु साधुगतायास्तस्यास्तत्त्वमिति भेदादिति भाव ।

यत्तु—शब्दार्थयोस्तादात्म्यं शक्तिरिति स्वोक्तार्थे तादात्म्यमित्यादिहरिकारिकार्द्धस्योपष्टम्भकतयोपन्यसनम्, तन्तुच्छैव, तादात्म्यस्य शक्तित्वेऽपि शब्दनिष्ठतादात्म्यज्ञानस्यार्थबोधकत्वेन तस्य शक्तित्वासम्भवात् । उपक्रमोपसंहारपर्य्यालोचनया साधुशब्दतादात्म्यभ्रान्त्याऽपभ्रंशानामर्थबोधकजनकत्वमिति पक्षान्तरपरतयैव तद्व्याख्यानस्यौचित्यादिति ।

अवाचकत्वे युक्तिमाह—* न शिष्टैरिति * यतस्तेऽपभ्रंशाः साधव पर्य्याया इव शिष्टैः स्मृत्यादिना न प्रतिपाद्यन्तेऽतो न वाचका इत्यर्थः । ते साधुष्वित्यानुकमर्थं विशदयति—* अम्बाम्बेत्यादि * 'अव्यक्तम्' इति भाषणक्रियाविशेषणम् । * तद्विदाम् * अव्यक्तशब्दश्रोतृणाम् । * तेन * साधुविकृत्यपभ्रंशश्रवणेन । * व्यक्ते * अपभ्रंशप्रकृति साधुशब्दे । अस्य स्मृते सतीति शेष । * निर्णयः * तदर्थशाब्दबोधो भवतीत्यर्थः । * एवमिति * इत्थमेवेत्यर्थः * साधौ *=गवादिशब्दे । * अपभ्रंश *=गाव्यादिः ।

तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते ॥ इति ॥

नन्वपभ्रंशानां साक्षादवाचकत्वे किं मानम्, ? शक्तिकल्पकव्यवहारादेस्तुल्यत्वात्, इति चेत् सत्यम्, तत्तद्देशभेदेन भिन्नेषु तेषु तेषु शक्तिकल्पने गौरवात्। नच पर्य्यायतुल्यता शङ्क्या, तेषां सर्वदेशेष्वेकत्वात्, विनिगमनाविरहेण सर्वत्र शक्तिकल्पना, नहि अपभ्रंशे तथा, अन्यथा भाषाणां पर्यायतया गणनापत्तेश्च। एवञ्च 'शक्तत्वमेवास्तु साधुत्वम्' इति नैयायिकमीमांसकादीनां मतं तन्मतेनैव द्रष्टव्यम्।

इदानीं स्वमतमाह—वाचकत्वाविशेषे वेति। अयं भावः—अपभ्रंशानामशक्तत्वे ततो बोध एव न स्यात्। नच साधुस्मरणात् ततो बोधः, तानविदुषां पामराणामपि बोधात्, तेषां साधोरबोधाच्च

प्रभा

प्रयुक्तो भवति तेन=अपभ्रंशेन साधुव्यवहितः=साधुस्मरणद्वारकः कश्चिदर्थोऽभिधीयते=प्रत्याय्यते।

अपभ्रंशानां वाचकत्वाभावं द्रढयितुं शङ्कते—नन्विति। शक्तिकल्पकेति—शक्तिकल्पकेषु मुख्यो वृद्धव्यवहार एव। स चापभ्रंशेष्वपि तुल्य एवेति। अपभ्रंशानामपि वाचकत्वमेवास्त्विति भावः। तत्तु तेष्विति—नानाविधेषु बुद्धिस्थेष्वित्यर्थः। तथाचापभ्रंशानां नानात्वेन संस्कृतस्य च सर्वत्रैकानुपूर्वीकत्वेन बोधकतया तत्रैव लाघवात् शक्तिरिति भावः। पर्य्यायतुल्यतेति—यथा एकस्यार्थस्यानेके साधवः पर्यायास्तथाऽपशब्दा अपभ्रंशा अपि सन्त्वित्यर्थः। तेषाम्—साधुपर्य्यायाणाम्। एकत्वादिति—विष्णुनारायणादिपर्यायाणां सर्वदेशेष्वेकरूपेण बोधकत्वादित्यर्थः। तथा—सर्वदेशेष्वेकरूपता। अन्यथा—अपभ्रंशेष्वपि शक्तिकल्पनायाम्। एवञ्च—अपभ्रंशानामशक्तत्वे च। नच शक्तत्वस्यैव साधुत्वे लाक्षणिकानामसाधुत्वम्, तेषामपि प्रवाहादौ शक्तत्वात्। नचैवं घटादीनां पटाद्यर्थे साधुत्वापत्तिः, शक्तत्वस्य वृत्तिमत्त्वपरत्वेनादोषात्। तन्मतेनैवेति—'असाधुरनुमानेन' इति हर्युक्तमताभिप्रायेण नैयायिकादीनां मतमित्यर्थः। आहेति—कौण्डभट्ट इति शेषः। वाचकत्वाविशेषेति—शब्दापशब्दयोर्वाचकत्वकृतभेदाभावेऽपि व्याकरणस्मृत्या नियमः क्रियते—साधुभिर्भाषणे पुण्यमसाधुभिर्भाषणेऽपुण्यमिति वाचकत्वन्तूभयोः सममेवेति भावः। अतः 'समानायामर्थावगतौ शब्देन चापशब्देन च, तत्र धर्मनियमः क्रियते शब्देनैवार्थोऽभिधेयो नापशब्देनेति' इति भाष्यं सङ्गच्छते। ततः=अपभ्रंशात्। तान्=साधुशब्दान्। अविदुषाम्=अजानताम्। तेषाम्=पामराणाम्। साधोः=साधुशब्दात्।

दर्पणव्याख्या

* तेन *=असाधुशब्देन। *साधुव्यवहितः*=साधुस्मृतिद्वारकः। *कश्चित्*=प्रसिद्धोऽस्मादिरूपः। * अभिधीयते *—बोध्यते इत्यर्थः। उक्तमेवार्थं द्रढयितुमाशङ्कते—* नन्विति *। तेषाम्*=साधुपर्यायाणाम्। *एकत्वादिति* एकजातीयत्वादित्यर्थः। *तथा* एकजातीयत्वम्, येन तत्रापि विनिगमकाभावाच्छक्तिकल्पना स्यादिति भावः।

*अन्यथेति * एकजातीयत्वस्य शक्तिकल्पनायामतन्त्रत्वे शक्तिमत्त्वाविशेषात् साधूनामिवापभ्रंशानामपि कोशादौ प्रतिपादनं प्रसज्येतेत्यर्थः। * तन्मतेनैवेति * ते साधुष्वनुमानेनेत्याद्युक्तहरिमतेनैवेत्यर्थः। अपभ्रंशाद् बोधस्योत्तरीत्योपपादितत्वात् तत्र शक्तिकल्पनं स्वाभाविकमूलकमित्याशङ्कां निराचिकीर्षुः स्वोक्तप्रकारासम्भवं दर्शयति—* अयम्भाव इति *। * तानिति * साधुशब्दानित्यर्थः। अज्ञाने हेतुमाह—* पामराणामिति *। * बोधादिति * व्यवहारेण तेषां बोधानुमानादित्यर्थः।

नच शक्तिभ्रमात् तेभ्यो बोधः, बोधकत्वस्याबाधेन तद्ग्रहस्याभ्रमत्वात् । 'ईश्वरेच्छा शक्तिः' इति मतेऽपि सन्मात्रविषयिण्यास्तस्या बाधाभावात्, शक्तेः पदपदार्थविशेषघटिताया भ्रमासम्भवाच्चेति ।

प्रभा

यदि प्रत्यक्षश्रुतादपि न बोधश्चेत्तर्हि स्मृतात्कथं बोधः स्यादिति भावः। तेभ्यः=अपशब्देभ्यः। अबाधेनेति—अपशब्दे पामराणां बोधजनकत्वप्रकारकनिश्चयात्मकज्ञानविषयतायाः सत्त्वेन बोधजनकत्वाभावरूपबाधज्ञानासम्भवेनेति भावः, तदभाववत्ताज्ञानम्प्रति तद्वत्तानिश्चयस्य प्रतिबन्धकत्वात् । ईश्वरेच्छेति—गगर्यादिपदादपि घटादिविषयकबोधदर्शनेन 'घटो गगरीपदजन्यबोधीयविषयतावान् भवतु' इत्याद्याकारिकेश्वरेच्छाशक्तिरावश्यकी। अन्यथा घटादिनिष्ठाया गगर्यादिपदजन्यबोधविषयताया ईश्वरेच्छाया अविषयत्वेन तस्याः सन्मात्रविषयत्वं हीयेत। नच लाघवादीश्वरैक्यमिव तदिच्छाया अप्यैक्यात् गगरीपदजन्यबोधविषयत्वप्रकारिका या इच्छा तदीयविशेष्यतयैव शक्तिः। एवम् 'पटः पटपदजन्यबोधविषयतावान् भवतु' इत्याद्याकारिकायाः समूहालम्बनात्मकेश्वरेच्छीयविशेष्यतायाः पटादावपि सत्त्वाद् गगरीशब्दात्पटादिबोधापत्तिरिति चेन्न, तत्पदजन्यबोधविषयत्वनिष्ठविषयतात्वावच्छिन्नप्रकारतानिरूपकेश्वरेच्छीयविशेष्यतायाः पटादौ सत्त्वेऽपि गगरीपदजन्यबोधविषयतात्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यताया घटनिष्ठाया एव गगरीपदस्य शक्तित्वेनाभिमतत्वात्, तस्याश्च घटे एव सत्त्वेनादोषात्। एवमेवान्यपदस्यान्यपदार्थे शक्तिर्बोध्या । तथाच गगरीपदजन्यबोधविषयतात्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतारूपा शक्तिर्यदि घटेऽस्ति तदा भ्रमत्वासम्भवः, तदभाववति तत्प्रकारकज्ञानस्यैव भ्रमत्वात्। यदि घटे नास्ति तर्हि अन्यत्रापि नास्तीति सुतरां भ्रमत्वासम्भवः, क्वचिज्ज्ञातस्यैव भ्रमत्वसम्भवात्। ननु पदविशेष्यकाया अपि इच्छायाः शक्तित्वेन घटविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपितविशेष्यताकेच्छायास्तादृशविशेष्यतासम्बन्धेन घटपदे एव प्रसिद्धतया गगरीपदे तद्भ्रमसम्भव इति चेन्न, घटपदनिष्ठविशेष्यतासम्बन्धेनैव तादृशेच्छायाः शक्तित्वेन भ्रमत्वासम्भवादित्याह—पदपदार्थविशेषेति ।

दर्पणव्याख्या

तथाचानधीतशास्त्राणां तेषां साधुत्वप्रकारकशब्दज्ञानासम्भवेन न तत्र साधुशब्दस्मृतिकल्पनया शाब्दबुद्धिरुपपादयितुं शक्येति भावः। किञ्च साधुशब्दस्मृतिकल्पना कथञ्चित् सम्भवेदपि यदि प्रत्यक्षश्रुतसाधुशब्दात्तेषां बोधोदयः स्यात्। स एव नास्तीत्याह—* तेषां साधोरिति। * शक्तिभ्रमादिति * अर्थनिरूपितायाः साधुशब्दनिष्ठायाः शक्तेरपभ्रंशे भ्रमादित्यर्थः ।

किं बोधकत्वरूपशक्तिभ्रमात् तत्र बोध उपपद्यते, उतेश्वरेच्छारूपशक्तिभ्रमात्। तत्र नाद्य कल्प इत्याह— * बोधकत्वस्येति *। द्वितीये त्वाह— * ईश्वरेच्छेति। *सन्मात्रेति* मात्रपदं कृत्स्नार्थकम्। अपभ्रंशाद् बोधस्य सर्वानुभवसिद्धत्वेन बोधकत्वेनेश्वरेच्छाया अपि तत्राबाधेन तामादायापि न शक्तिज्ञानस्य भ्रमत्वसम्भव इति। प्रतीतेर्भ्रमत्वे विषयबाधस्यैव तन्त्रत्वादिति भावः।

ननु साधुनिष्ठ इत्याद्यंशेऽपि बाधकाभावेन तद्व्यावृत्तेश्वरेच्छारूपशक्तेस्तत्र भ्रमे बाधकाभावोऽत आह— * शक्तेरिति * । *भ्रमासम्भवाच्चेति* तत्तदर्थविषयकतद्बोधजनकत्वप्रकारकेच्छायास्तत्तदर्थविशेष्यकत्वेन तत्तत्पदार्थविशेष्यकत्वासम्भवेन तद्भ्रमासम्भवादित्यर्थः । प्रभाकृतामभिप्रायेणेदम्। परिष्कृतविशेष्यतारूपायास्तत्तत्पदावच्छिन्नाया शक्तेस्तत्पदार्थान्तरेऽसत्त्वात् तत्र भ्रमे प्रमाणाभावादिति बोध्यम्। तथाच भ्रमेणापि बोधस्य दुरुपपादत्वेन

उक्तञ्च वाक्यपदीये—

पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु ।
प्रसिद्धिमागता येषु तेषां साधुरवाचकः ॥
दैवी वाग् व्यवकीर्णेयमशक्तैरभिधातृभिः ।
अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः ॥ इति ॥

अवाचकः=अबोधकः, बुद्धिविपर्ययः=एते एव वाचका नान्ये इति विपर्यय इत्यर्थः । किञ्च विनिगमनाविरहाद् भाषायामपि शक्तिः । नच तासां नानात्वं दोषः,

प्रभा

उक्तञ्चेति—अपभ्रंशानां वाचकत्वमुक्तमित्यर्थः । पारम्पर्यादिति—'चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यानम्' इति वार्तिकात्स्वार्थे ष्यञ् । परम्परात इत्यर्थः । अभिधातृषु=वक्तृषु । विगुणेषु वागिन्द्रियदोषवशादुच्चारणसामर्थ्यरहितेषु सत्सु पारम्पर्यात्=तान्शवक्तृपरम्परातो येषु अर्थेषु प्रसिद्धिम्=रूढिम् आगता=प्राप्तास्तेषामर्थानां साधु=शब्दः स्मरणद्वारा अवाचकः=बोधको न भवति किन्त्वसाधुरेव साक्षाद् बोधको भवतीत्यर्थः ।

दैवीति— इयं दैवी संस्कृतरूपा वाग् । अशक्तैः उच्चारणसामर्थ्यरहितैरभिधातृभिः व्यवकीर्णा=विकृतानुपूर्वीका कृता । अनित्यदर्शिनाम् शब्दानित्यत्ववादिनां नैयायिकानाम् । अस्मिन् वादे=शक्तिविचाररूपे वादे । एते= साधवः । नान्ये=नापभ्रंशाः । ननु तत्तत्पदजन्यबोधविषयत्वप्रकारिका तत्तदर्थविषयकबोधजनकत्वप्रकारिका वेश्वरेच्छा शक्तिरिति मते द्वितीयेच्छाया अर्थघटितत्वेऽपि पदघटितत्वाभावाद् गगर्यादिशब्दे तद्भ्रमसम्भव इत्यत आह—किञ्चेति ।

दर्पणव्याख्या

भाषाया शक्तिरावश्यिकेति भाव ।

अस्मिन्नपि पक्षे हरिसम्मतिमादर्शयति— *उक्तञ्चेति* । *पारम्पर्यादिति* स्वार्थे ष्यञ् । *विगुणेषु इति* हेतुगर्भं विशेषणम् । वैगुण्यञ्च करणापाटवरूपम्, अभिधातृवैगुण्यस्यापभ्रंशनियामकत्वात् । तथाच विगुणेष्वभिधातृषु सत्सु परम्परया येष्वर्थेषु प्रसिद्धिमागता इत्यर्थः । * दैवीति * संस्कृतरूपेत्यर्थः । * अशक्तैः * =करणापाटववद्भिः * व्यवकीर्णा *=उच्छिन्नानुपूर्वीका कृतेत्यर्थः । * अनित्यदर्शिनाम् * शब्दानित्यत्ववादिनाम् । * अस्मिन् वादे *—शक्तिविवादे इत्यर्थः ।

ननु 'तेषां साधुरवाचक' इत्यनुपपन्नम्, यस्मिन्नर्थेऽपभ्रंशा प्रयुज्यन्ते तद्वाचकत्वस्य साधुषु सर्वसम्मतत्वादतो व्याचष्टे—* अबोधक इति * व्यवहित साधुर्न तत्र बोधक, किन्तु साक्षादपभ्रंशा एव तत्तदानुपूर्वीमत्त्वेन वाचका इति भावः ।

नन्वियं अपभ्रंशरूपा वाग् अभिधातृवैगुण्येनोच्छिन्नानुपूर्वीकाऽपि दैवं संस्कृतरूपैव । नैयायिकाना त्वस्या अबोधकत्वे भ्रम एव । पारम्पर्यादित्युपपादनात् साधुतादात्म्यभ्रान्तिमूलकशक्तिभ्रमेण बोधकत्वसम्मतत्वादित्यर्थकम् 'दैवीवागव्यवकीर्णेयम्,' इत्यपि पूर्वोक्तान्तिमकल्पस्यैवोपोद्बलकम् । नचैवं 'तेषां साधुरवाचक' इत्यनुपपन्नम्, तत्पक्षे आरोपित साधुत्वकापभ्रंशानां बोधकत्वेन साधुस्मरणाद् बोधानभ्युपगमात् । तेषामित्यादे साधुतादात्म्यारोपविषयास्त एव प्रसिद्धार्थानां बोधका, नतु तत्तदानुपूर्वीमत्त्वेन बोधका इत्यर्थात्सामान्यकमुक्तत्वादपभ्रंशानां वत्वेन वाचकत्वासिद्धिरत आह—
* किञ्चेति * । * तासाम् *=भाषाणाम् । * दोष इति * तथाच गौरवात् तत्र शक्तिरित्यर्थः ।

संस्कृतवन्महाराष्ट्रादिभाषायाः सर्वत्रैकत्वेन प्रत्येकं विनिगमनाविरहतादवस्थ्यात् ।

किञ्चानुपूर्वी पदेऽवच्छेदिका । सा च पर्य्यायेष्विव भाषायामप्यन्यान्यैवेति कस्तयोर्विशेष इति विभाव्यं सूरिभिः। तथाच संस्कृतवद् भाषायाः सर्वत्रैकत्वेन प्रत्येकं शब्दाः शक्ता एव। नच पर्य्यायतया भाषाणां गणनाऽऽपत्तिः, साधूनामेव कोशादौ विभागाभिधानात्।

नन्वेवं साधुता तेषां स्यादित्यत आह-नियम इति—पुण्यजननबोधनाय साधूनाम्, "साधुभिर्भाषितव्यम्" इति विधिः। पापजननबोधनाय "नासाधुभिः" इति निषेधः। तथाच पुण्यजननयोग्यत्वं साधुत्वम्। पापजननयोग्यत्वमसाधुत्वम्। तत्र जनकताऽवच्छेदिका च जातिः।

प्रभा

महाराष्ट्रेति— इदमुपलक्षणम्—सर्वभाषायाः सर्वत्रैकरूपेण बोधकत्वात्। नहि काचन भाषा देशभेदेन भेदमुपैति। यदि विकृता तर्हि भाषान्तरमेव सा। नन्वानुपूर्वी वाचकतावच्छेदिका सा च साधुशब्देषु एका। अपभ्रंशानान्तु नानात्वान्नानानुपूर्वी शक्ततावच्छेदिकेति गौरवमित्याशङ्कायामाह— किञ्चानुपूर्वीति—नानापर्य्यायनिष्ठा नानानुपूर्वी यथा शक्ततावच्छेदिका साधुषु स्वीक्रियते तथा नानाऽपभ्रंशनिष्ठाया नानाऽऽनुपूर्व्याः शक्ततावच्छेदकत्वास्वीकारे बीजाभाव इति भावः। तयो=साध्वसाध्वोः। नच संस्कृतशब्दानां वाचकत्वे सकलशिष्टपरिगृहीतत्वमेव बीजम्, 'शवतिर्गतिकर्मा कम्बोजेषु, विकारे एव एनमार्या भाषन्ते' इति भाष्यात् संस्कृतस्यापि सकलशिष्टपरिगृहीतत्वाभावात्। 'भाषाशब्दाः शक्ता एव' इत्येव पाठ। 'भाषायाः सर्वत्रैकत्वेन प्रत्येकं शब्दाः शक्ता एव' इति त्वपपाठः, पुनरुक्तघटितत्वात्। विधिरिति—तथाच भाष्यम्—'शब्देनैवार्थोऽभिधेयो नापशब्देनेति, एवं क्रियमाणमभ्युदयकारि भवतीति' इति। 'एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति' इति च। सम्यग्ज्ञातः=साधुत्वप्रकारकज्ञानविषयीभूतः। शास्त्रान्वितः=व्याकरणशास्त्रव्युत्पादनमार्गेणानुसहितः। शिक्षोक्तस्थानप्रयत्नादिवैशिष्ट्येनोच्चारितः। निषेध इति—'न म्लेच्छितवै नापभाषितवै' इति भाष्ये 'न म्लेच्छितवै' इत्यस्यैव दार्ढ्यार्थमनुवादः—'नापभाषितवै' इति अपशब्देन न भाषणीयमित्यर्थः। 'कृत्यार्थे तवैकेन्केन्यत्वनः' (३-४-१४) इत्यनेन म्लेच्छ-भाषधातुभ्यां तवैप्रत्ययः। समानायामर्थावगतौ शब्देनापशब्देन च तत्र शास्त्रेण धर्मनियमः क्रियते, शब्देनैवार्थोऽभिधेयो नापशब्देनेति' इति च निषेध इत्यर्थः। तथाच पुण्यजनकः साधुशब्दप्रयोगः, पापजनकोऽसाधुशब्दप्रयोगः। समवायेन पुण्यविशेषं प्रति स्वाभिव्यञ्जककण्ठाद्यभिघातादिजनकत्वसम्बन्धेन साधुशब्दः कारणम्। पुण्यजननेति—शब्दनिष्ठः पुण्यजनकतावच्छेदको धर्मो जातिविशेषः साधुत्वम्। अप-

दर्पणव्याख्या

सकलदेशशिष्टपरिगृहीतत्वमेव विनिगमकमत आह—* अवच्छेदिकेति * बोधजनकताऽवच्छेदिकेत्यर्थः * तयोरिति * साध्वपभ्रंशयोरित्यर्थः। सकलशिष्टपरिगृहीतत्वन्तु न विनिगमकम्, "शवतिर्गतिकर्मा कम्बोजेषु प्रयुज्यते। विकारे एवैनमार्या भाषन्ते" इति भाष्यात्तत्तद्देशनियतशब्देषु शक्तिसिद्ध्यानापत्ते, वाचकस्य व्यञ्जकतायामालङ्कारिकाणां प्राकृतभाषोदाहरणस्यासङ्गतत्वापत्तेश्च। अत एव तत्तद्देशीयशिष्टानां तत्तद्भाषासु निस्सन्दिग्धशक्तत्वप्रत्ययः सङ्गच्छते। नचासौ भ्रमः, बोधकाभावादिति भावः। उपसंहरति—* तथाचेति *। * एवम् *=अपभ्रंशानामपि शक्तत्वे * तेषाम् *=अपभ्रंशानाम्। * साधुता स्यादिति * शक्तत्वस्यैव साधुत्वादिति भावः। * साधुभिर्भाषितव्यमिति * साधूनेव प्रयुञ्जीतेत्यादिरूप इत्यर्थः। * नासाधुभिरिति * "नापभ्रंशितवै न म्लेच्छितवै" इत्यादिनिषेधविधिरित्यर्थः। * योग्यत्वम् *—जनकतावच्छेदकधर्मवत्त्वम्। * तत्र *=साधुशब्दे। * जातिरिति *

तज्ज्ञापकञ्च कोशादि, व्याकरणादि च।

एवमेव च राजसूयादेर्ब्राह्मणे फलाजनकत्ववद् गवादिशब्दानां नाश्वादौ साधुत्वमिति सङ्गच्छते। आधुनिकदेवदत्तादिनाम्नामपि "द्व्यक्षरम्" इत्यादिभाष्येण व्युत्पादितत्वात् साधुत्वम्। एवञ्च

## प्रभा

भ्रंशशब्दनिष्ठः पापजनकतावच्छेदको धर्मविशेषोऽसाधुत्वम्। साधुत्वं जातिः, कत्वादिना साङ्कर्यन्तु न जातित्वबाधकम्, ययोर्धर्मयोर्लोके वैयधिकरण्यस्यैव प्रसिद्धिस्तयोरेव साङ्कर्यस्य जातित्वबाधकत्वात्। साधुत्वकत्वादिधर्मयोस्तु 'करोत्यादिशब्दघटकः ककारः साधुः' इति व्यवहारस्यापि दर्शनेन सामानाधिकरण्यस्य सर्वसम्मतत्वात्। नरत्वसिंहत्वयोस्तु लोके वैयधिकरण्यमेवेति तयोः साङ्कर्यं जातित्वबाधकम्, इति न नरसिंहे नरत्वं सिंहत्वञ्च जातिद्वयम्, किन्तु नरसिंहत्वं जात्यन्तरम्। साङ्कर्यं भेदभञ्जकत्वस्यैव बाधबीजत्वात्। एवञ्च भूतत्वमूर्तत्वे जातिरूपे एव। आकाशातिरिक्तभूतचतुष्कं मूर्तम्, इति व्यवहारदर्शनेन नरत्वसिंहत्वयोरिव वैयधिकरण्याभावात्। कोशादिति—आदिना भाष्यशिष्टप्रयोगानुमानादीनां सङ्ग्रहः। अत्र कोशादिव्याकरणयोरन्यतरप्रयोग उचितः। अत एव भूषणे कोशव्याकरणादिकमित्युक्तम्। अत्र कोशोपन्यासेन तत्तदर्थपुरस्कारेणैव शब्दानां साधुत्वं बोधितम्। अन्यथा कोशस्य तत्तदर्थनिरूपितशक्तेरेव बोधकतया साधुत्वज्ञापकत्वेनोपन्यसनमसङ्गतमेव स्यात्। एवम्=तत्तदर्थपुरस्कारेण शब्दानां साधुत्वादेव। राजसूयादेरिति—'राजा राजसूयेन यजेत' इति श्रुत्या राजकर्तृकेष्टभावनायामेव राजसूययागस्य करणत्वबोधनेन राजपदस्य रूढ्या क्षत्रियार्थकतया ब्राह्मणस्य तदनधिकारित्वेन कृते राजसूये फलाजनकत्ववदित्यर्थः। नाश्वादौ साधुत्वमिति—तत्तदर्थनिबन्धनत्वात्साधुत्वस्येत्यर्थः। अत एव 'मस्करमस्करिणौ वेणुपरिव्राजकयोः' इत्यादिसूत्रेषु अर्थनिर्देशः सङ्गच्छते। नचैवं लाक्षणिकानामसाधुत्वापत्तिः, तीराद्यर्थे केनापि साधुत्वाबोधनादिति वाच्यम्, शिष्टैस्तीराद्यर्थे लाक्षणिकानां प्रयुक्तत्वेन तत्रापि साधुत्वाक्षतेः, शक्यतावच्छेदकारोपस्यैव लक्षणात्वेन शक्यार्थमादायैव तत्प्रयोगसत्त्वाच्च। आधुनिकेति—कोशाद्यबोधितार्थे स्वेच्छया शिष्टैः प्रयुक्तानामित्यर्थः। द्व्यक्षरमिति—'घोषवदाद्यन्तरन्तस्थं द्व्यक्षरं चतुरक्षरं वा पुरुषस्य नामकृतं कुर्यान्न तद्धितम्' इति भाष्येणेत्यर्थः।

## दर्पणव्याख्या

तत्र प्रमाणन्तु "एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति" इति "एकः पूर्वपरयोः" (पा० सू० ६। १।८४) इत्यत्र भाष्यपठितश्रुतिः। सम्यग् ज्ञातः=साधुत्वेन ज्ञातः। 'यदिह परिनिष्ठितं तत् साधु' इत्यर्थापत्तिलभ्यवाक्येन च तत्। शास्त्रान्वितः=शास्त्रव्युत्पादनमार्गेणाभिसहितः। सुप्रयुक्तः=शिष्टप्रयुक्तमार्गेण प्रयुक्त इति तदर्थः, "ते हेऽलय इति कुर्वन्तः पराबभूवुः" इति श्रुतिश्च। यदि च कत्वादिना साङ्कर्यान्न तस्य जातित्वमिति विभाव्यते तदास्तूपाधिरिति भावः।

*तज्ज्ञापकमिति* तदभिव्यञ्जकमित्यर्थः। यथैतत्तथोक्तम्। व्याकरणादिपदाच्छिष्टप्रयुक्तत्वपरिग्रहः। *एवमेवेति* तत्तदर्थपुरस्कारेण तत्तच्छब्दानां साधुत्वपर्यवसानलाभेनैवेत्यर्थः। * फलाजनकत्ववदिति * क्षत्रियाधिकारिकृतस्यैव तस्य फलश्रवणादिति भावः। * साधुत्वमिति * गवाद्यर्थपुरस्कारेणैव गवादिशब्दानां प्रयोगे पुण्यजनकत्वरूपं साधुत्वमित्यर्थः। नन्वाधुनिकदेवदत्ताद्यर्थपुरस्कारेण देवदत्तादिशब्दानां शास्त्रेऽव्युत्पादनात् तेषां देवदत्तादौ साधुता न स्यादत आह—*आधुनिकेति *। * द्व्यक्षरमिति * "घोषवदाद्यन्तरन्तःस्थं द्व्यक्षरं चतुरक्षरं वा पुरुषस्य नाम कृतं कुर्यान्न

यः शब्दो यत्रार्थे व्याकरणे व्युत्पादितः स तत्र साधुरिति पर्यवसितम् ।

गौणानां गुणे व्युत्पादनात् तत्पुरस्कारेण प्रवृत्तौ साधुत्वमेव । आधुनिकलाक्षणिकानां त्वसाधुत्वमिष्टमेव । अत एव 'ब्राह्मणाय देहि' इत्यर्थे 'ब्राह्मणं देहि' इत्यादिकं लक्षणयाऽपि न साधुरित्यादि विस्तरेण प्रपञ्चितं भूषणे ॥ ३८ ॥

अतिरिक्तशक्तिग्रहोपायमाह—

प्रभा

व्याकरणेनेति—एतेन व्याकरणेन व्युत्पादितानामेव साधुत्वं ध्वनितम् । नच व्याकरणापरिगृहीतानां रथन्तरादीनामसाधुत्वापत्तिः, 'पृषोदरादीनि यथोपदिष्टम्' 'उणादयो बहुलम्' इत्यादिना तेषामपि परिग्रहात् । गौणानामिति—गुणादागता गौणाः क्रौर्य्यादिगुणयोगात् माणवकादौ प्रयुक्ताः, न लाक्षणिकाः सिंहादिशब्दाः, नैयायिकमते गुणिनि प्रयुक्ताः शुक्लादिशब्दाश्च गुणे=प्रकारीभूते प्रवृत्तिनिमित्ते तादृशगुणमादाय व्युत्पादनात्=वाचकत्वेन बोधनात् । तत्पुरस्कारेण=शक्यतावच्छेदकारोपात् तादृशप्रवृत्तिनिमित्तपुरस्कारेण प्रवृत्तौ=प्रयोगे । 'सिंहो माणवकः' इत्यादौ आरोपे निमित्तं क्रौर्य्यादिगुणयोगः 'शुक्लो घटः' इत्यादौ गुणिनि शुक्लत्वारोपे शुक्लगुणयोगो निमित्तम् । वैयाकरणनये तु शुक्लशब्दो गुणगुणिनोरुभयत्रापि शक्त एव । अत एव 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति वार्तिकं सङ्गच्छते । अन्यथा लक्षणया प्रकृत्यैव मतुबर्थस्य गुणिनोऽभिधानात् मतुपोऽप्राप्त्या लुग्विधानानुपपत्तेः । आधुनिकलाक्षणिकानामिति—नन्वाधुनिकदेवदत्तादिनाम्नां शरीरविशेषावच्छिन्ने शास्त्रेण व्युत्पादनादसाधुत्वापत्तिरत आह—असाधुत्वमिति । अत एवेति—यः शब्दो यत्रार्थे व्याकरणे व्युत्पादितस्तस्य तत्रैव साधुत्वादेवेत्यर्थः । अत एव 'कर्तृकर्मणोः कृति' इत्यादिसूत्रं चरितार्थम् । अन्यथा शेषषष्ठ्याः कर्मादौ लक्षणया सिद्धे तद्वैयर्थ्यं स्पष्टमेव ।

नन्वपभ्रंशानां वाचकत्वे 'अर्थवत्' इत्यनेन प्रातिपदिकसञ्ज्ञापत्तिः, तत्तच्छास्त्रप्रवृत्तौ साधुत्वस्यापि उद्देश्यतावच्छेदकदले निवेशात् । नच शास्त्रप्रवृत्तौ साधुत्वम्, साधुत्वे च शास्त्रप्रवृत्तिरित्यन्योऽन्याश्रय इति वाच्यम्, 'भूवादयो धातवः' इत्यनेनावृत्त्या साधुत्वस्यापि विधानात् । नच तस्यापि तत्राप्रवृत्त्यापत्तिः, तदुद्देश्यतावच्छेदकत्वेन साधुत्वस्याप्रवेशात् । 'सिद्धे शब्दार्थसम्बन्धे' इति, 'साध्वनुशासनेऽस्मिन् शास्त्रे' इति च भाष्यात् साधुत्वस्य सिद्धत्वात् कोशादिना तज्ज्ञानेन शास्त्रप्रवृत्तौ बाधकाभावाच्च ॥ ३८ ॥

ननु पुण्यजननयोग्यत्वं साधुत्वम्, तज्ज्ञापकञ्च कोशव्याकरणाद्युक्तम् । एवञ्च येषां शब्दानां कोशेन व्याकरणेन वाऽनुक्तिस्तेषामसाधुत्वापत्तिरत आह—अतिरिक्तेति—कोशव्याकरणाद्यतिरिक्तो यः शक्तिग्रहो-

दर्पणव्याख्या

सद्धितम्'' इति भाष्यस्यस्मृत्येत्यर्थः । तत्तद्देशभाषाऽनुसारेण क्रियमाणानां नाम्नां तु शास्त्राव्युत्पन्नत्वादसाधुत्वमेवेति भावः । * गौणानामिति * शुक्लादिशब्दानामित्यर्थः । गुणे=स्वशक्ये शुक्लादिरूपे ।

* व्युत्पादनादिति * "गुणवचनेभ्यो मतुपो लुक्" इति स्मृत्या 'गुणे शुक्लादयः पुंसि" इत्यादिकोशेन चेत्यादि । तत्पुरस्कारेण=नीलाद्यर्थपुरस्कारेणेत्यर्थः * प्रवृत्तौ *=गुणिनि प्रयोगे । शक्यार्थस्य बाधे अन्वयानुपपत्तिप्रतिसन्धानात्तैर्लक्ष्यार्थोपस्थापनेऽपि शक्यार्थमादाय तेषां साधुत्वं नानुपपन्नम् । शक्यार्थपुरस्कारेण तेषां शास्त्रव्युत्पन्नत्वादित्यर्थः । गौणपदस्य निरूढलाक्षणिकपदोपलक्षणत्वाच्च न गङ्गायां घोष इत्यादौ गङ्गादिपदानामसाधुत्वमिति भावः । * आधुनिकानामिति * ऐच्छिकयत्किञ्चित्सम्बन्धेन शास्त्रकृत्तात्पर्याविषये प्रयुक्तानामित्यर्थः ॥ ३८ ॥

ननु शक्तिग्राहकयोः कोशव्याकरणयोर्नियमानतत्ताच्छक्तिग्रहोपायकथनं व्यर्थमत आह * अतिरिक्तेति * कोशव्या-

सम्बन्धिशब्दे सम्बन्धो योग्यतां प्रति योग्यता ॥
समयाद् योग्यतासंविन्मातापुत्रादियोगवत् ॥ ३६ ॥

सम्बन्धो विषयः । योग्यतां प्रति योग्यता—सम्बन्धिशब्दं प्रति योग्यता विषय इति । समयात्—व्यवहारात्, योग्यतासंवित्—शक्तिग्रहः । घटपदमत्र योग्यमेतत्सम्बन्धीति व्यवहारात् सा ग्राह्येत्यर्थः ॥ ३६ ॥

इति वैयाकरणभूषणसारे शक्तिनिर्णयः ॥ ६ ॥

प्रभा

पायस्तमाहेत्यर्थः । सम्बन्धिशब्द इति—इन्द्रियाणामिति कारिकायां यः सम्बन्धशब्दस्तत्र वाच्यत्वेन प्रतीति-विषयो यो योग्यतारूपः ( शक्तिरूपः ) सम्बन्धः । योग्यताम्प्रति—योग्यतयैव ( सम्बन्धपदनिष्ठयास्यैव ) 'वृक्षं प्रति विद्योतते विद्युत्' इतिवत् । 'लक्षणेत्थंभूत' इत्यादिना लक्षणे द्वितीया, वृक्षं प्रति विद्योतते विद्युत्' इतिवत् । तदुक्तं हेलाराजेन—'सम्बन्धशब्दो योग्यतालक्षणं सम्बन्धं योग्यतयैव प्रतिपादयति' इति । एवं समवायशब्दोऽपि अनादिसिद्धया स्वनिष्ठयोग्यतयैव समवायरूपं स्वार्थं प्रतिपादयति । एतेन सम्बन्धे सम्बन्धान्तराभाव इत्यपास्तम्, योग्यतारूप ( शक्तिरूप ) सम्बन्धस्य सर्वत्र सत्त्वात् । ननु योग्यताया एव सम्बन्धत्वे सङ्केतस्य कोपयोग इत्यत आह—समयादिति—समयात्=सङ्केतात्, अनादिसिद्धाया योग्यतायाः ( शक्तेः ) संवित्=ज्ञानं भवति । तत्र दृष्टान्तमाह—मातापित्रेति—'इयमस्य माता' 'अयमस्य पिता' इति व्यवहाराद् यथा सिद्धस्यैव जन्यजनकभावस्य ज्ञानम्, तथा योग्यताज्ञानं सङ्केतात्स्यादिति भावः । ग्रन्थकारस्त्वन्यथा व्याचष्टे—सम्बन्धो विषय इति—सम्बन्धशब्दे विषयीभूतो यः सम्बन्धः=शक्तिरूपस्तस्य 'अयं शब्द एतदर्थ-सम्बन्धी' इति योग्यताम्प्रति=योग्यताशब्दं प्रति विषयीभूता या योग्यता तस्याः 'अयं शब्दोऽस्मार्थे योग्यः' इति समयात्=व्यवहारात्, योग्यतासंविच्छक्तिज्ञानं जायते, योग्यतासम्बन्धयोरैक्यात् 'योग्यतासंविद्' इति सम्बन्धसंविदोरप्युपलक्षणम् । मातेति पूर्ववद् व्याख्येयम् ।

मञ्जूषाकारस्तु—इमे कारिके इत्थं व्याख्याते । तथाहि—इन्द्रियाणाम्=चक्षुरादीनाम् । स्वविषये=रूपादिविषयकज्ञानजनने । अनादिः=पुरुषप्रयत्नानपेक्षा । यथा योग्यता=तज्जनकतावच्छेदकधर्मस्वरूपा । तथा शब्दानामर्थेऽनादिः सम्बन्ध एव योग्यता=तज्जनकतावच्छेदको धर्मः । सम्बन्धशब्दे=सम्बध्यतेऽर्थेन सह यः स सम्बन्धो घटादिः, कर्मणि घञ् । सम्बन्धिशब्दे=घटादिशब्दे योग्यताम्प्रति=बोधजनकतावच्छेदकधर्मस्वरूपयोग्यतानिरूपितो यस्तादात्म्यलक्षणः सम्बन्धः स एव योग्यता, स्वाभाविकी एव । समयात्=अनादि-वृद्धव्यवहारपरम्परारूपास्मदादिसमयेन गृहीतादीश्वरसङ्केतान्निश्चीयते । यथा मातापुत्रयोः जन्यजनकभावस्य 'इयमस्य माता' इत्यादिव्यवहारो निश्चायक इति अत्र=अर्थे । अयम्=अर्थः । एतत्सम्बन्धी=घटादिपद-सम्बन्धी । सा=योग्यता ।

पञ्चोलिबालकृष्णस्य प्रभायां शक्तिनिर्णयः ।
प्रीत्यै भूयाद् भगवतोर्भवानीविश्वनाथयोः ॥
॥ शुभम्भूयात् ॥

दर्पणव्याख्या

करणाभ्यामतिरिक्तो यः शक्तिग्रहोपायस्तमित्यर्थः । तथाचानधीतव्याकरणाना तेन शक्तिग्रहासम्भवात् तदर्थं व्यवहाररूपमप्युपायमाहेतिसर्वव्याख्यानाच्च वैयर्थ्यमिति भाव । एतेन ग्रन्थकृतातिरिक्तशक्तेरनङ्गीकारेण तद्ग्रहोपायप्रदर्शनं व्यर्थमित्याशङ्कापि समाहिता । विषयपदाध्याहारेण मूलं व्याचष्टे—* सम्बन्धो विषय इति * ।

## अथ नञर्थनिर्णयः ।

नञर्थमाह—

नञ्समासे चापरस्य प्राधान्यात् सर्वनामता ॥
आरोपितत्वं नञ्द्योत्यं न ह्यसोऽप्यतिसर्ववत् ॥ ४० ॥

### अथ नञर्थनिर्णयः

### प्रभा

वृत्तिस्त्रिधा—शक्तिर्लक्षणा व्यञ्जना च । तत्र लक्षणायाः शक्त्यैव गतार्थत्वं समर्थ्य व्यञ्जना निरूपणीया । व्यञ्जनाया द्योतकत्वस्वरूपतया द्योतकनञर्थं निरूपयति—नञ्समासे इति—यद्यपि नञ्समासस्यापि समासशक्तिनिर्णये एव निरूपणमुचितम्, तथापि नञो द्योतकतया पृथङ् निरूपयति—नञ्समास इति—अत्र 'नञ्समासे' इत्युक्त्या 'घटो न पटः' 'अत्र घटो नास्ति' इत्यादावसमासस्थले घटभेदवान् पटः, घटप्रतियोगिकोऽभाव इत्यादिप्रतीत्या नञोऽभावार्थकत्वेऽपि दोषाभावः, तथापि 'असः' इत्यादौ तदभाव इत्याद्यर्थेऽभावे तदर्थस्य विशेषणतया 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इत्युक्त्या सर्वनामकार्यं न स्यादित्याह—अपरस्येति—नञ्समासे त्रयः पक्षा भाष्ये उक्ताः । तथाहि—१ अन्यपदार्थप्रधानः, २ पूर्वपदार्थ-

### दर्पणव्याख्या

तथाचायमेतत्सम्बन्धीति व्यवहारे सम्बन्धो विषयः । *योग्यतां प्रति*—इदमत्र योग्यमिति योग्यताव्यवहारे योग्यताविषयो यतोऽतः समयात् तद्व्यवहारायोग्यताया बोधकतारूपशक्ते राचित्ज्ञान भवतीत्यर्थः ।

तत्र दृष्टान्त—*मातापुत्रादियोगवदिति* यथाऽयमेतत् सम्बन्धीति व्यवहारस्तयोर्जन्यजनकभावनिश्चायकस्तद्वदित्यर्थः ।

अन्ये त्विद इत्थमित्थं व्याचक्षते—*सम्बन्धिशब्दे*=अयमेतत्सम्बन्धीति व्यवहारे । * योग्यतामिति *=अर्थबोधजनकताऽवच्छेदकधर्मवत्त्वरूपयोग्यताव्यवहारनिरूपितो यस्तादात्म्यलक्षणोऽन्यो वा सम्बन्धः स एव योग्यताऽपरपर्यायो विषय इति शेष । स चानादिः, वृद्धव्यवहारापरपर्यायोऽस्मदादिभयानिश्चीयते, ननु बोधजनकत्वमेव शक्तिः, एतद्बोधजननेऽयं योग्य इति व्यवहारात् । अत एवैतच्छेपे—

इति प्रत्ययहेतुत्व सम्बन्ध उपपद्यते ।
शब्दस्यार्थे यतस्तस्मात् सम्बन्धोऽस्तीति गम्यते ॥

इत्यन्तेनोक्तार्थं स्पष्टीकृत इति । अधिकमन्यतोऽवधार्यम् ॥ ३९ ॥

इति वैयाकरणभूषणसारदर्पणे शक्तिस्वरूपनिरूपणम् ॥ ६ ॥

---

'समासे खलु भिन्नैव' इत्यत्र पङ्कजशब्दवदिति वदता समासे तद्घटकप्रत्येकशक्तिसहकृतसमुदायशक्तेरपेक्षात्वमङ्गीकृतम् । तच्चानुपपन्नम्, यत्र समासघटकप्रत्येकपदस्यानर्थकत्वं तत्र प्रत्येकशक्तिसाचिव्यासम्भवात् । यथा नञ्समासघटकनञः ।

तयोरर्थाभिधाने हि व्यापारो नैव विद्यते । इत्युक्ते ।

एवञ्च नहरस्यार्थवाद इवेत्थस्थले उत्तरपदार्थादिप्राधान्यस्य स्वरसतोऽनुपपत्तिरपीतीमां शङ्कां परिहर्तुं नञर्थनिरूपणमित्याह—* नञर्थमिति * । मूले * नञ्समास * इति ।

अयं भावः—'घटो न पटः', 'घटो नास्ति' इत्यादावभावशाब्दबोधस्य सार्वजनीनप्रसिद्धिसिद्धत्वान्नञोऽभावार्थकत्वमावश्यकम् । तथाचोत्तरपदार्थप्राधान्यादिव्यवस्था सुलभा । यद्यपि 'घटो न' इत्यादावभावविशेष्यक एव बोधः, स यदि 'अघटः' इत्याद्यनुरोधेनारोपितत्वार्थकत्वमपि नञोऽङ्गीकरणीयमिति शेषपूरणेन व्याचष्टे सारे—

भावविषयकबोधे तस्य विशेष्यताया एव दर्शनात् । अस्मद्रीत्या च स आर्थो बोधो मानसः ।

तथाच 'असर्वस्मै' इत्याद्यसिद्धिप्रसङ्गो नेति । अत्र चारोपितत्वम्—आरोपविषयत्वम् । आरोपमात्रमर्थो विषयत्वं संसर्ग इति निष्कर्षः ।

प्रभा

तस्य=नञर्थाभावस्य । विशेष्यताया इति—'घटो नास्ति' इत्यस्य नैयायिकमते 'सत्तावान् घटाभावः' इति, शाब्दिकनये घटाभिन्नैकाश्रयवृत्तिवर्तमानकालावच्छिन्नसत्ताभाव इति च बोधः । एतेन 'असर्वः' इत्यस्य 'प्रतियोगितासम्बन्धेन भेदादिविशिष्टः सर्वः' इत्यर्थेऽपि सर्वनामता सिध्यतीत्यपास्तम्, तादृशबोधस्यानुभवविरुद्धत्वात्, 'अब्राह्मणमानय' इत्यादौ ब्राह्मणस्यैवानयनप्रसक्तेश्च । नन्वेवम् 'अघटः' इत्यादिना 'घटभिन्नः' इत्याद्यर्थस्य सर्वजनानुभवसिद्धस्यापलापापत्तिरित्याह—*अस्मदिति* । *सः*='घटभिन्नः' इत्याकारकोऽभावविशेष्यकः । शाब्दस्तु 'आरोपितघटत्वाश्रयः' इत्येव । *आर्थ इति* –घटभिन्ने एव घटत्वारोपात् आरोपितघटत्वस्य घटभेदस्य च सामानाधिकरण्यात्फलतीति भावः । तथाच=नञ आरोपितार्थकत्वे च । लाघवादाह—*आरोपमात्रमिति*—आरोपश्च—तदभाववद्विशेष्यकं तत्प्रकारकं ज्ञानम् । *विषयत्वं संसर्ग इति*—'विषयतासम्बन्धेनारोपविशिष्टं यद् ब्राह्मणत्वं तद्वान्' इति 'अब्राह्मणः' इत्यनेन बोधः । तथाच नञः शक्यतावच्छेदकमारोपत्वमिति लाघवम् । आरोपितस्य शक्यत्वे तु आरोपविषयत्वं शक्यतावच्छेदकमिति गौरवम् । यद्यपि विषयत्वस्य संसर्गत्वे प्रकारत्वे वा शक्यत्वं स्वीकार्यमेव, तथापि समासे एकार्थीभावात्मकशक्तिस्वीकारेणाकाङ्क्षाभास्यत्वासम्भवः । नचैवं लाघवाभावः, संसर्गीभूतविषयत्वस्य सम्बन्धाभावकृतलाघवसत्त्वात् । विषयत्वस्य प्रकारविधया भाने तु निरूपितत्व—स्वरूपसम्बन्धयोर्भाने गौरवम् ।

भाष्ये तु पक्षान्तरमप्युक्तम्—'अथवा सर्वे एवैते शब्दा गुणसमुदायेषु वर्तन्ते, ब्राह्मणः, क्षत्रियः वैश्यः, 'शूद्रः' इति ।

तपः श्रुतञ्च योनिश्चेत्येतद्ब्राह्मणकारकम् ।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥

समुदाये ब्राह्मणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते । जातिहीने गुणहीने चेति । अयम्भावः—नञ्शब्दः कचित् गुणं निषेधति । 'अब्राह्मणोऽयं यस्तिष्ठन् मूत्रयति' 'अब्राह्मणोऽयं यस्तिष्ठन् भक्षयति' इति । अत्र ब्राह्मणशब्दो जातिमात्राश्रयपरः । नञ्पदं गुणक्रियाराहित्यं द्योतयति, गुणक्रियारहितो ब्राह्मणत्वजातिमानित्यर्थः कचिज्जातिं निषेधति—शुच्याचारं पिङ्गलं कपिलकेशं गौरं दृष्ट्वाऽध्यवस्यति ब्राह्मणोऽयमिति, ततः पश्चात्प्रमाणेन' 'अब्राह्मणोऽयम्' इति जानाति, अत्र ब्राह्मणशब्दः शुचित्वादिगुणमात्राश्रयपरः । नञ् च जातिं निषेधति 'ब्राह्मणत्वजातिरहित, शुचित्वादिगुणविशिष्टश्चायमिति बोधः । नन्वारोपस्य नञ्वाच्यत्वे नञो द्योतकत्वाभङ्गः इत्यत आह—

-दर्पणव्याख्या

दाविति * तस्य * नञर्थस्य । नञर्थाभावसत्त्वस्य विशेष्यताया तन्त्रत्वादिति भावः ।

ननु तत्रापि 'अघटः पटः' इत्यतो 'घटभिन्न पटः' इति सर्वसिद्धप्रतीत्यनुपपत्तिरत आह—* अस्मद्रीत्येति * * सः —भेदबोधः । * आर्थ इति * अर्थात्=उपस्थितिविषयादागत इत्यर्थः । * मानस इति * तत्र शाब्दत्वप्रत्ययस्त्वभिन्द एवेति भावः । नन्वसर्वशब्दस्य सर्वनामत्वाभावे का क्षतिरत आह—* तथाचेति * अत्र चेति * आरोपितत्वमभ्याप्यमिति कल्पे चेत्यर्थः । * निष्कर्ष इति * विषयत्वस्य संसर्गमर्यादयैव लाभादनन्यलभ्यारोपस्यैव नञर्थत्वम्,

घोत्यत्वोक्तिर्निपातानां घोतकत्वमभिप्रेत्य ॥ ४० ॥

'घटो नास्ति' 'अब्राह्मणः' इत्यादावारोपबोधस्य सर्वानुभवविरुद्धत्वात् पक्षान्तरमाह—

अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात् ।
विशेषणं विशेष्यो वा न्यायतस्त्ववधार्यताम् ॥ ४१ ॥

तदर्थः=नञर्थः अर्थपदं घोत्यत्व–वाच्यत्वपक्षयोः साधारण्येन कीर्तनाय । भाष्यस्येति—तथाच नञ्सूत्रे महाभाष्यम्—"निवृत्तपदार्थकः" इति, निवृत्तं पदार्थो यस्य "नपुंसके भावे क्तः" ( पा० सू० ३ । १ । ११४ ) इति क्तः । अभावार्थक इत्यर्थः ।

प्रभा

घोत्यत्वोक्तिरिति—निपातमात्रस्य घोतकत्वमिति सिद्धान्तानुरोधात्तथोक्तिः, नतु वाचकत्वस्वीकारेऽत्र दोष इति भावः । नहीति—अतितर्वयत्=अतिसर्वपदजन्योपस्थितीयप्रकारता यथा सर्वाऽऽर्थे तथा 'असः' इति पदजन्योपस्थितीयप्रकारताख्यविषयता तत्पदार्थे नास्ति किन्तु मुख्यविशेष्यताख्यविषय-तैवास्तीति भावः । नचारोपितत्वस्य नञर्थत्वे 'वायौ रूपं नास्ति' पीतः शङ्खो नास्ति' इत्यादौ शाब्द-बोधानापत्तिः, वाय्वधिकरणकरूपकर्तृकसत्तायाः पीतशङ्खकर्तृकसत्तायाश्चाप्रसिद्ध्या कथमसदर्थसत्तायां विशिष्टसत्तारचारोप इति वाच्यम्, विशकलितानां वाय्वादीनां प्रसिद्धेरदोषात् । मिलितप्रसिद्धेश्चाप्रयोज-कत्वात् । विशिष्टं तावन्त एव पदार्थास्ते च प्रसिद्धाः । यद्वा—विशिष्टप्रसिद्धिराहार्यरूपैव । किञ्च रूपकर्तृ-कसत्तायां वाय्वधिकरणकत्वम्, शङ्खकर्तृकसत्तायां पीतकर्तृकत्वञ्चारोप्यते । रूपकर्तृकाऽऽरोपितवाय्वधि-करणत्विका सत्ता इति, शङ्खकर्तृकारोपितपीतकर्तृकत्विका सत्ता इति च बोधः ।

यत्तु—समासघटकस्यैव नञ आरोपितत्वार्थकत्वमिति तन्न, यत आरोपितत्वं नञ्घोत्यमतो नञ्स-मासे अपरस्य प्राधान्यात् सर्वनामता सिध्यतीति हेतुत्वमात्रोक्त्या समासघटकस्यैव नञस्तदर्थकत्वमित्यस्या-लाभात् । समासघटकस्यापि नञ आरोपितत्वार्थकत्वादेवाग्रे 'घटो नास्ति' इत्यत्र दोषोक्तिः सङ्गच्छते ॥४०॥ आरोपितब्राह्मणत्वविशिष्ट इति च बोधः । घटा-

घटो नास्तीति—आरोपिता घटकर्तृका सत्ता इति, इत्याकारकसर्वजनानुभवविरुद्ध इत्यर्थः । अर्थपदमिति—तद्वाच्यस्तद्-भिन्नाश्रयकसत्ताभावः, ब्राह्मणभिन्न साधारण्येनोभयोर्बोधनायेत्यर्थः । भाष्यस्येति—पूर्वपदार्थस्य घोत्यो वेति वक्तव्येऽर्थपदं बोद्धव्यार्थपरतया 'अथवा पुनरस्तूत्तरपदार्थप्रधानः' इत्युक्तम् । प्राधान्ये 'असः' इत्यादिसर्वनामकार्याभावादिरूपं दूषणमुक्त्वा भेदविशिष्टो ब्राह्मणः' इत्यर्थे ब्राह्मणस्यैव विशेष्यतयाऽब्राह्मणमानयेत्युक्ते 'अत्र पक्षे 'प्रतियोगितासम्बन्धेन ‘नैव दोषः, इदन्तावदयं प्रष्टव्य......'राजपुरुषमानय' इत्युक्ते राजा ब्राह्मणस्यानयनं प्राप्नोति' इत्युक्त्वा यथा भवति, तथा इहापि नञ्विशेषकः प्रयुज्यते तेन नञ्विशि-विशेषकः प्रयुज्यते, तेन राजविशिष्टस्यानयनं

दर्पणव्याख्या

नञारोपविषयत्वस्य, गौरवादिति भाव । नञारोपस्य वाच्यत्वाभ्युपगमे घोतकताप्रतिपादकमूलविरोधोऽत आह—* घोत्य-त्वोक्तिरिति * वाच्यस्यापि तस्य विशेषणतैव, नाभाववद्विशेष्यतेति सूचयितुमेव तथोक्तिरिति भाव. ॥ ४० ॥

* घटो नास्तीति * यद्यपि समासयोग्यनञ एवारोपार्थकत्व मूले उक्तम्, तथापि 'घटो नास्ति' इत्युक्तिरत्र तत्राप्यारोपानुभव इति दृष्टान्तार्थैत्यवधेयम् । 'नञ्घोत्यम्' इत्यत्र नञो विशेषणतया व्यवधानेन चोपस्थितत्वेऽपि त्यदादीनां बुद्धिस्थपरामर्शकत्वाचदा तत्परामर्शो नानुचित इत्याह—* तदर्थ इति * । * साधारण्येनेति *

यत्तु—निवृत्तः पदार्थो यस्मिन्नित्यर्थः । सादृश्यादिनाऽध्यारोपितब्राह्मण्याः क्षत्रियादयोऽर्था यस्येत्यर्थ इति कैयटः, तन्न, अध्यारोपितब्राह्मण्यस्य क्षत्रियादेर्नञवाच्यत्वात् ।

प्रभा

ष्टस्यानयनं भविष्यति । कः पुनरसौ ( नञ् ) निवृत्तपदार्थकः' इति भाष्यस्येत्यर्थः । निवर्तनम्=निवृत्तम् ( अभावः ) पदार्थः=अर्थो यस्य स निवृत्तपदार्थकः=अभावार्थकनञित्यर्थः । आरोपितार्थकत्वपरत्वेनोक्तभाष्यस्य कैयटोक्तं व्याख्यानं खण्डयति—यत्त्विति । निवृत्त इति– निवृत्तः पदार्थो मुख्यं ब्राह्मण्यं यस्मिन् स सादृश्यादिनाऽध्यारोपितब्राह्मण्यः क्षत्रियादिरित्यर्थः । अध्यारोपितेति अध्यारोपितं ब्राह्मण्यं येषु ते इत्यर्थः । शक्यतावच्छेदके लाघवाल्लोकप्रसिद्धेश्चाभाव एव नञ्वाच्यः । 'अब्राह्मणो देवदत्तः' इत्यत्र सामानाधिकरण्येनान्वयस्तु नञर्थभेदस्य तद्वति लक्षणयोपपाद्यः । नञवाच्यत्वात्=नञो वाच्यत्वाभावादित्यर्थः । यद्यपि 'सन्देहाद् दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते' सन्देहात्तावत् गौरं शुच्याचारं पिङ्गलम् ( उत्कृष्टकान्तिमन्तम् ) तदुक्तम् शब्दार्णवे—

पिङ्गलस्तु परच्छायः पिङ्गे शुक्लाङ्गखण्डवत् । इति कपिलकेशं दृष्ट्वाऽध्यवस्यति—'ब्राह्मणोऽयम्' इति । ततः पश्चादुपलभते नायं ब्राह्मण इति अब्राह्मणोऽयमिति । पूर्वं शौचाचारगौरवर्णादिकं दृष्ट्वा ज्ञातं ब्राह्मणोऽ-

दर्पणव्याख्या

प्रकृतेऽर्थपदस्य तज्जन्यबोधविषयपरतया पक्षद्वयस्य सङ्ग्रहः । तत्रासति बाधके वाचकत्वमेव । सति तु तस्मिन् द्योतकताऽपीति भावः । * नञवाच्यत्वादिति *

'यद्युत्तरपदार्थप्राधान्येन नञ्तत्पुरुषस्य, ब्राह्मणस्याऽनयनं प्राप्नोति । नञः प्रयोगात्तदर्थविशिष्टस्यानयनं भविष्यति । कः पुनरसौ नञर्थो ? निवृत्तपदार्थकः । ब्राह्मणत्वस्य गौरत्वादेर्दर्शनाद् दुष्टोपदेशाद्वा पूर्वं ब्राह्मणोऽयमित्यध्यवस्यति । ततः पश्चादुपलभते—'नायं ब्राह्मणः' इति । ततोऽब्राह्मणोऽयमिति प्रयुङ्क्ते । अतश्च तद्दृष्टगुणदर्शनाद् दुष्टोपदेशाद्वा ब्राह्मणत्वाध्यवसायपूर्वकमेव नाय ब्राह्मण इति ज्ञानम् । नह्यय कालवर्णमापणे दृष्ट्वाऽध्यवस्यति ब्राह्मणोऽयमिति । यथास्थितं वस्तुतत्त्वं तस्य निर्ज्ञातं भवति" इति नञ्सूत्रभाष्यपर्यालोचनया कैयटोक्तार्थस्यैव साधुत्वं लभ्यते । तथापि तद्भाष्यस्य भेदमत्यक्षे क्वचिद् यो यानुपलब्धेर्हेतुत्वप्रदर्शनपरतयैवोपपत्तेर्नञ आरोपवाचकत्वे तदुपष्टम्भकत्वाभावात् ।

अन्यथाऽत्यन्तासदृशे उक्तयुक्त्या तदारोपासम्भवेन तत्र नञर्थस्तदर्थकत्वासम्भवात् 'अघट पटः' इत्यनापत्तेः । 'प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ' इति तान्त्रिकोक्ते नीलो 'घटः' इत्यादौ तादात्म्येन घटांशे नीलपदार्थभानात्समभिव्याहारे तादात्म्यसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रतियोगिताकाभावबोधस्य सर्वानुभवसिद्धस्य नञोऽभावार्थकत्वे विनाऽनुपपत्त्यैवं एकत्रापि एकत्रापि वाक्यजन्यबोधयोस्तत्तदभावानवगाहितया परस्परप्रतिबन्ध्यप्रतिबन्धकभावानापत्तेश्च नञो भेदार्थकत्वमावश्यकम् ।

नच नञोऽभेदार्थकत्वे 'अब्राह्मणमानय' इत्यादितो ब्राह्मणभिन्नलोष्टादेरपि बोधाऽऽपत्तिः । नचेष्टापत्तिः, नह्यब्राह्मणमानयेत्युक्ते लोष्टमानीय कृती भवति" इति भाष्यविरोधादिति वाच्यम्, घटत्वेन घटार्थकघटपदात् सन्निहितव्यक्तिबोधवत् प्रकरणादिना ब्राह्मणभिन्नमात्रार्थकाद् ब्राह्मणपदात् क्षत्रियादेरेव बोधसम्भवात् । तस्मादघटो न पट इत्यादावसमस्ते नञो भेद एव शक्तिः, भेदत्वस्याखण्डोपाधितया तस्य शक्यतावच्छेदकत्वे लाघवात् । समासघटकस्य तस्य तु उत्तरपदस्य तद्भिन्ने लक्षणायां तात्पर्यग्राहकत्वमेव । नच "न ब्राह्मणैरेतैरुपद्रुतम्" इत्यादौ नञो भेदार्थकत्वे तत्प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिकत्वाऽनुपपत्तिः, सामानाधिकरण्याभावादिति वाच्यम्, प्रतियोग्यनुयोगिनोरभेदान्वयबोधोपयिकाकाङ्क्षायां सत्यामेव नञा भेदबोधनेन तयोः समानविभक्तिकत्वस्य तदुपजीव्यत्वात् । एवञ्च नञा भेदबोधने प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिवचनत्वं नियामकमत एव 'भूतले न घटः' इत्यादौ न भेदबोधः ।

## दर्पणव्याख्या

दृश्यते च—"यजतिषु ये यजामहं करोति नानुयाजेषु" इत्यत्र नञा पर्युदासबोधः। उक्तवाक्ये यजतिशब्दो यागस्वरूपवचनः। तथाच अनुयाजभिन्नेषु यागेषु ये यजामहशब्दवन्मन्त्रं करोति=उच्चारयतीत्यर्थः। अत एवात्रानुयाजभिन्नेषु यजतिषु ये यजामहपदवन्मन्त्रप्रयोगरूपैकार्थविधानादेकविधेयार्थकत्वरूपैकवाक्यत्वमुपपद्यते। अन्यथा यागेषु ये यजामहपदवन्मन्त्रविधानमनुयाजेषु निषेधविधानमिति विधेयद्वयार्थकत्वरूपवाक्यभेदापत्तेः, ये यजामहपदानुषङ्गकल्पने गौरवाच्चेति भावः।

अन्ये तु—शास्त्रविहितप्रतिषिद्धत्वात्, षोडशिग्रहणाग्रहणवद्विकल्पापत्तेर्नानुयाजेष्वित्यत्र नञः प्रतिषेधार्थकत्वम्। तथाहि—क्रियायाः कारकसाकाङ्क्षत्वाद् विनिगमनाविरहेण सकलकारकनिष्ठां प्रतियोगिभूतां भावनामुद्दिश्याभावविधिस्तत्र वाच्यः। एवञ्चोद्देश्यस्य प्रसिद्ध्यर्थं तत्प्राप्तिरपेक्षिता। प्राप्तिसापेक्षत्वात् प्रतिषेधस्य। प्राप्तिश्च क्वचिद्रागतः, यथा—"न कलञ्जं भक्षयेत्" इति। तत्र कलञ्जभक्षणादेरागत इष्टसाधनत्वाद्गत्या प्रसक्तायाः कलञ्जभक्षणभावनाया निषेधशास्त्रेण निवृत्तिनिश्चयश्चेऽनगतेऽर्थात् तद्विषयकलञ्जभक्षणस्यानिष्टसाधनत्वावगमात् ततो निवृत्तिः। प्रकृते तु ये यजामहङ्करोतीति शास्त्रादेव सा। एवञ्च निषेधस्य शास्त्रविषयत्वेन प्राबल्यवद् विधिशास्त्रस्याप्युपजीव्यत्वेन प्राबल्यान्निषेधेन विधेरत्यन्तबाधायोगाद् विकल्प एव प्राप्नोति।

विकल्पे च "व्रीहिभिर्जुहोति" "यवैर्वा जुहोति" इत्यादौ प्रथम व्रीह्यनुष्ठाने वेदस्य निरर्थकत्वमिति अनवस्थासम्भवा यवशास्त्रस्याप्राप्तप्रामाण्यस्वीकारः, प्रतीतप्रामाण्यपरित्यागश्चेति दोषद्वयम्। प्रयोगान्तरे यवोपादाने यवशास्त्रस्य स्वीकृतप्रामाण्यपरित्यागः, परित्यक्तप्रामाण्योपादानश्चेति दोषद्वयमिति चत्वारो दोषाः। पुनस्तृतीये प्रयोगे व्रीह्युपादाने व्रीहिशास्त्रस्य स्वीकृताप्रामाण्यपरित्यागः, त्यक्तप्रामाण्यस्वीकारश्चेति दोषद्वयम्। चतुर्थे यवोपादाने व्रीहिशास्त्रस्यास्वीकृताप्रामाण्यस्वीकारः, स्वीकृतप्रामाण्यत्यागश्चेति दोषद्वयमिति चत्वारोऽन्येऽपीत्यष्टदोषविकल्पापत्त्या नञनुयाजपदाभ्यामनुयाजभेदो बोध्यते। साऽयं पर्युदासः। अस्मिँश्च पक्षे ये यजामहो न कर्तव्यतया प्रतीयते, 'यजतिषु ये यजामहङ्करोति' इत्यनेनैव तद्विधानात्। किन्तु सामान्यशास्त्रविहितयेयजामहमनूद्य तस्यानुयाजव्यतिरिक्तविषयता बोध्यते।

तथाच सामान्यशास्त्रस्य विशेषविधिसापेक्षत्वान्नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्तविषयसमर्पणादनुयाजव्यतिरिक्तेषु ये यजामहः कर्तव्यतया प्रतीयतेऽनुयाजेषु तु न कर्तव्यतया प्राप्तः, नापि प्रतिषिद्धः स इति न विकल्पः। नच नञा निषेधबोधनेऽपि पदशास्त्रेणाऽऽहवनीयशास्त्रस्येव नानुयाजेष्विति विशेषशास्त्रेण यजतिषु ये यजामहङ्करोतीति सामान्यशास्त्रस्य बाधान्न विकल्प इति वाच्यम्,

परस्परनिरपेक्षयोर्हि बाध्यबाधकभावः, पदशास्त्रेणाऽऽहवनीयशास्त्रस्यानपेक्षणात् स उचितः। निषेधशास्त्रस्य तु प्रतियोगिप्रसिद्ध्यर्थमस्त्यपेक्षा विध्यर्थस्य। "प्रसक्तं हि प्रतिषिध्यते" इति न्यायेन न तद्बाधः, असम्भवात्। किन्तूक्तयुक्त्या विकल्प एव। तथाच द्विरदृष्टकल्पनाप्रसङ्गोऽपि। निषेधेनैव ज्ञायते। यदनुयाजेषु ये यजामहकरणे न कश्चनोपकारो भवति निषेधाच्च तदकरणादनृतवदनाकरणादिव दर्शपूर्णमासयोः। स चोपकारोऽदृष्टरूप एवेत्यतोऽपि विकल्पो न युक्त इत्याहुः।

अत्र केचित्—निषेधशास्त्रानालोचनेन सामान्यशास्त्रालोचनमात्रेण भ्रमात्मकप्रतियोगिप्रसिद्धिप्रामाण्यबोधनसम्भवेन विकल्पाप्रसक्तेः, विशेषनिषेधे सामान्यविधेस्तदितरपरत्वस्य 'ब्राह्मणेभ्यो दधि दातव्यम्' 'कौण्डिन्याय न दातव्यम्' इत्यादौ व्युत्पत्तिसिद्धत्वाच्च।

नच तत्रापि पर्युदास एव नञा बोध्यते, नञा पर्युदासबोधने विशेष्यविशेषणवाचकपदयोः समानविभक्तिकत्वस्येव तयोः समानवचनस्यापि तन्त्रत्वात्, तस्य प्रकृतेऽभावात्। अन्यथा न महतो राज्ञ इत्यादावित्र, न महतां राज्ञ इत्यादावपि महद्भेदप्रतीत्यापत्तिः। एको न द्वाविति वत् कथञ्चित् समर्थनेऽपि द्वितीयस्य दातव्यमित्यस्य नैरर्थक्यप्रसङ्गश्च, 'ब्राह्मणेभ्यो दधि दातव्यं कौण्डिन्याय न' इत्यत एव कौण्डिन्यभिन्नब्राह्मणोद्देश्यकदधिदानबोधसम्भवादित्याहुः।

प्रभा

यमिति। पश्चादाप्तजनोपदेशादिना ज्ञातम्—'नायं ब्राह्मणः' इति। इत्थमेव दुरुपदेशाच्च दुरुपदिष्टस्य भवति—अमुष्मिन्नवकाशे ब्राह्मणस्तमानयेति, स तत्र (उपदिष्टस्थाने) गत्वा यं (ततः स्थानाद् ब्राह्मणे गते तत्र स्थितं क्षत्रियादिकम्) पश्यति तमध्यवस्यति ब्राह्मणोऽयमिति। ततश्च पश्चादुपलभते 'नायं ब्राह्मणः' 'अब्राह्मणोऽयम्' इति निर्ज्ञातं तस्य भवति। अत्र तत्स्थाने कियत्कालपर्यन्तं 'ब्राह्मणस्तिष्ठति' *इति नोक्तं तेनेति तत्स्थाने कञ्चन स्थितं दृष्ट्वा प्रयोज्यकर्त्रा ज्ञातं ब्राह्मणोऽयमिति*, पश्चादुपदेशादिना ज्ञातं नायं ब्राह्मण इति। ब्राह्मणज्ञानपूर्वकाब्राह्मणज्ञानप्रदर्शनेनैतदुक्तं भवति यत् 'निवृत्तः पदार्थः=पूर्वं यो ज्ञातः ब्राह्मणत्वरूपः पदार्थः स निवृत्तो यस्य क्षत्रियादेः स एव सादृश्यादिना अध्यारोपितब्राह्मण्यः क्षत्रियादिरेव नञर्थ इति कैयटोक्तं युक्तं प्रतीयते, तथापि ब्राह्मणगुणाचारादिविशिष्टे ब्राह्मणत्वयोग्यताप्रदर्शनपूर्वकतदनुपलब्धावेव भाष्यतात्पर्यकल्पनयोपपत्तौ नञ आरोपवाचकत्वे तद्भाष्यस्य प्रामाण्यानर्हत्वात्। किञ्च कैयटमते सादृश्यादिना तद्धर्मारोपस्थले एव तादृशनञः प्रयोगे 'घटो न पटः' 'नीलो न रक्तः' 'अघटः पटः' इत्यादावत्यन्तासदृशे नञः प्रयोगानुपपत्तिः। किञ्च 'नञोऽभावे यद्धर्मावच्छिन्ने येन सम्बन्धेन यस्य प्रकारतया भानं नञ्समभिव्याहारे तद्धर्मावच्छिन्ने प्रकारतावच्छेदकतत्सम्बन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभावः प्रकारतया भासते' इति नियमः। तदुक्तम्—'प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ' इति। एवञ्च 'नीलो घटः' इत्यादौ नीलपदार्थोऽभेदसम्बन्धेन घटे प्रकार इति नञ्सत्त्वे 'नीलो न घटः' इत्यादौ घटत्वावच्छिन्नेऽभेदसम्बन्धावच्छिन्ननीलनिष्ठप्रतियोगिताकाभावस्य भानमुचितम्, तद्भज्यते, नञ आरोपितार्थकतामते, नञ्सत्त्वेऽपि 'आरोपितनीलत्ववान् घटः' इत्याकारकबोधस्यैव तन्मते सत्त्वात्। नञो भेदरूपाभावार्थकत्वे तु न दोषः 'घटो न पटः' 'नीलो न रक्तः' इत्यादितः 'घटभेदवान् पटः' 'नीलभेदवान् रक्तः' इत्याद्याकारकबोधे बाधकाभावात्। नचैवं 'अब्राह्मणमानय' इत्यादिना लोष्ठादेरप्यानयनापत्तिः ब्राह्मणभेदस्य तत्र सत्त्वादिति वाच्यम्, घटमानय' इत्यादौ प्रकरणादिना घटत्वेन व्यक्तिविशेषबोधवद् ब्राह्मणभेदवत्त्वेन क्षत्रियादेरेव बोधसम्भवात्। अत एव 'नह्यब्राह्मणमानय इत्युक्ते लोष्ठमानीय कृती भवति' इति भाष्यं सङ्गच्छते। किञ्च नञ आरोपितार्थकत्वे आरोपितत्वं शक्यतावच्छेदकम्, भेदार्थकत्वे तु अखण्डोपाधिरूपं भेदत्वमेवेति लाघवमपि भेदार्थकत्वे बीजम्। नच समासाभावे नञो भेदार्थकत्वे 'न घटः पटः' इत्यादौ प्रतियोग्यनुयोगिनोः समानाधिकरणानुपपत्तिः, अभेदेनान्वयाभावादिति वाच्यम्, यत्र नञ्समभिव्याहाराभावे प्रतियोग्यनुयोगिनोरभेदान्वयबोधौपयिकी आकाङ्क्षा (समानविभक्तिकत्वम्) तत्रैव नञो भेदार्थकत्वम्। अत एव 'भूतले न घटः' इत्यादौ न भेदबोधकत्वम्, किन्तु अत्यन्ताभावबोधकत्वमेव। एवञ्च प्रतियोग्यनुयोगिनोः समानविभक्तिकत्वमभेदार्थकत्वे उपजीव्यम्। अत एव 'प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ' इति नियमस्यापि नानुपपत्तिरित्याशयात्। उक्तनियमवाक्यार्थश्च नञसत्त्वे यत्र धर्मिणि यस्य पदार्थस्य येन सम्बन्धेन प्रकारता नञ्सत्त्वे तत्र धर्मिणि तस्य पदार्थस्य तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावः प्रकारतया भासत इति। 'घटः पटः' इत्यत्र समानविभक्तिकत्वसत्त्वाद् घटाभिन्नः पट इति भ्रमात्मको बोधः सम्भवतीति 'घटो न पटः' इत्यत्र 'घटभेदवान् पटः' इत्येव बोधः, उक्तनियमानुसारात्। नञो भेदार्थकत्वे समानविभक्तिकत्वस्योपजीव्यत्वादेव मीमांसायाम् 'यजतिषु येयजामहं करोति नानुयाजेषु'

दर्पणव्याख्या

विकल्पप्रसक्तिरूपदोषाभावेऽपि वाक्यभेदाऽऽपत्तेर्गौरवरूपतया समानविभक्तिकत्वादेस्तद्बोधनियामकत्व इति। न नञः पर्युदासार्थकत्वमेव, नानुयाजेष्वित्यत्रोचितमिति तु परे।

अन्यथा सादृश्यादेरपि वाच्यतापत्तेः ।

यत्तु—तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥

इति पठित्वा अब्राह्मणः, अपापम्, अनश्वः, अनुदरा कन्या, अपशवो वा अन्ये गोऽश्वेभ्यः, अधर्म इत्युदाहरन्ति । तत्रार्थिकार्थमभिप्रेत्येति स्पष्टमन्यत्र ।

प्रभा

इति श्रुतौ पर्य्युदास एव नात्यन्ताभावः । एतदर्थश्च—'येयजामहे' इति पदघटितमन्त्रमनुयाजभिन्नेषु
यागेषु उच्चारयेदिति । अत्र यजतिशब्दो यागपरः । यदि तु नञत्रात्यन्ताभावार्थकः स्यात्तदा यजतिषु
( यागेषु ) येयजामहं ( येयजामहपदघन्मन्त्रम् ) करोति=उच्चारयति इत्येकं विधिवाक्यं स्यात् । 'नानुया-
जेषु इति वाक्यमनुयाजेषु येयजामहपदघटितं मन्त्रन्नोच्चारयेदिति निषेधकं स्यादिति वाक्यभेदापत्तिरूप-
गौरवं स्यादिति भावः । यद्वा—पर्य्युदासानाश्रयणे 'नानुयाजेषु येयजामहं करोति' इत्यत्र विकल्पः स्यात् ।
तथाहि—प्राप्तिसापेक्षो हि निषेधः—यथा 'व्रीहीनवहन्ति' इति शास्त्रं वैतुष्यार्थमवघाते स्वतः प्रवृत्तं पुरुष-
म्प्रति न प्रवर्तते, वैयर्थ्यात् । किन्तु नखविदलनादौ प्रवृत्तं पुरुषम्प्रति प्रवर्तते, कर्तव्यत्वेन प्रसक्तस्य निषे-
धात् । प्राप्तिसापेक्षत्वान्निषेधानामनुयाजेषु येयजामहनिषेधे तस्य तत्र प्राप्तिर्वक्तव्या । सा च न भोज-
नादाविव रागतः प्रवृत्तिः सम्भवति, अतः 'यजतिषु येयजामहं करोति' इति शास्त्रात् सा वक्तव्या । शास्त्र-
प्राप्तस्य निषेधे विकल्पः स्यात् । विकल्पश्चानुयाजेषु स्वेच्छया येयजामहमन्त्रं पठेन्न पठेद्वेत्येवं रूपः । नच
रागतः प्राप्तस्य शास्त्रेण यथा सर्वथा बाधः, न तथा विधिशास्त्रेण प्राप्तस्य निषेधशास्त्रेण सर्वथा बाधः । इति
पदशास्त्रेण आहवनीयशास्त्रस्य बाध इव 'नानुयाजेषु' इति विशेषशास्त्रेण 'यजतिषु येयजामहं करोति' न
सामान्यशास्त्रस्य बाधः स्यादिति वाच्यम्, शास्त्रयोर्हि न तत्र बाध्यबाधकभावो यत्र परस्य निरपेक्षता । न
हि पदशास्त्रस्य स्वार्थविधानार्थमाहवनीयशास्त्रस्यापेक्षाऽस्ति । निषेधशास्त्रस्य तु प्रसक्तस्य निषेधार्थं 'यजतिषु
ये यजामहं करोति' इति विधिशास्त्रस्यास्ति अपेक्षेति न बाध्यबाधकभावः । अन्यथा=यथाकथञ्चित्प्रतीयमानस्य
वाच्यत्वाङ्गीकारे । वाच्यतापत्तेरिति—नचेष्टापत्तिः, शक्यतावच्छेदके गौरवात् । तत्सादृश्यमिति—'अब्राह्मणः' इत्यनेन
ब्राह्मणसदृशः । अपापम्=पापाभावः । अनश्वः=अश्वभिन्नः । अनुदरा=अल्पोदरा । अपशव इति—गोऽश्वेभ्योऽन्ये
पशवोऽप्रशस्ता इत्यर्थः । अपशव =अप्रशस्ताः पशव इत्यर्थः । अधर्मः=धर्मविरुद्धः । आर्थिकार्थमिति—आरोपित-
ब्राह्मणत्वविशिष्ट आरोपितपापत्वविशिष्ट एवंविधशाब्दबोधानन्तरं मानसो बोध इत्यर्थः ।

दर्पणव्याख्या

प्रकृतमनुसराम —*अन्यथेति* लाघवानादरेणाऽऽरोपितत्वस्य नञ्वाच्यत्वाभ्युपगमे इत्यर्थः । *सादृश्यादेः*
इत्यादिना पठिष्यमाणाल्पत्वादे. सङ्ग्रह । 'अब्राह्मण ' इत्यादेर्ब्राह्मणसदृशः, पापाभाव , अश्वभिन्न., अल्पोदरा, गवाश्वेतराः
पशवोऽप्रशस्ताः, धर्मविरुद्ध इत्यादिक्रमेणार्थ । ननु सादृश्यादेरवाच्यत्वे कथ ततस्तद्बोधोऽत आह—* तत्रेति *
तत्पठनं त्वित्यर्थः । * अभिप्रेत्येति * भेदप्रतियोगित्वप्रकारकब्राह्मणादिबोधानन्तरभाविमानसबोधमभिप्रेत्येत्यर्थः ।
ब्राह्मणादिबोधस्य तत्तत्पदादेव सम्भवाद्भेदप्रतियोगित्वेन ब्राह्मणादिबोधनाय यदब्राह्मणादिपदोपादान तत्सादृश्यादिना
क्षत्रियादिबोधनार्थमित्यूहमूलकक्षत्रियादिबोधस्य भेदप्रतियोगी ब्राह्मण इत्यादिवाक्यार्थबोधोत्तरमेव सम्भवादिति भावः ।

विशेषणमिति—प्रतियोगिनीति शेषः। तथाचासर्वपदे सर्वनामता। "अनेकमन्यपदार्थे" "सेव्यतेऽनेकया सन्नतापाङ्गया" इत्यादावेकशब्दार्थप्राधान्यादेकवचननियमः। 'अब्राह्मणः' इत्यादावुत्तरपदार्थप्राधान्यात् तत्पुरुषत्वम्। 'अत्वं भवसि' 'अनहं भवामि' इत्यादौ पुरुषवचनादिव्यवस्था चोपपद्यते।

प्रभा

विशेषणमिति—ननु नञर्थभेदस्य प्रतियोगिभिन्ने स्वरूपसम्बन्धेन विशेषणत्वे 'अब्राह्मणः' इत्यादौ समासानापत्तिः, प्रतियोगिनः ब्राह्मणेन सामर्थ्याभावादत आह प्रतियोगिनीति—नञर्थो भेदः, ब्राह्मणत्वाद्यवच्छिन्नप्रतियोगितासम्बन्धेन प्रतियोगिनो विशेषणमिति भाव.। एतेन भेदप्रतियोगितायाः केवलान्वयितया 'अब्राह्मणः' इत्यत्र घटादेरपि भेदविशिष्टतया बोधानापत्तिरित्यपास्तम्। ब्राह्मणत्वावच्छिन्नप्रतियोगितासम्बन्धेन भेदस्य ब्राह्मणे एव सत्त्वात्। भेदस्य विशेषणत्वे 'भेदप्रतियोगी ब्राह्मणः' इति शाब्दबोधः। 'ब्राह्मणभिन्नः' इति मानसबोध आर्थिक इति भाव.। 'अब्राह्मण. क्षत्रियः' इत्यादौ 'क्षत्रियवृत्तिभेदप्रतियोगी ब्राह्मणः' इति बोधः। नच क्षत्रियस्य वृत्तित्वसम्बन्धेन नञर्थभेदेऽन्वयानापत्तिः, नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वादिति वाच्यम्, निपातेतरनामार्थयोरेव तथात्वात्। उत्तरपदार्थस्य प्राधान्ये फलमाह—सर्वनामतेति। अनेकमिति—तथाच भाष्यम्—'इदं खल्वपि भूय उत्तरपदार्थप्राधान्ये सति सङ्गृहीतं भवति, किम्? अनेकमिति। किमत्र सङ्गृहीतम्, एकवचनम्, कथं पुनरेकस्य प्रतिषेधे द्विबहूनां सम्प्रत्ययः स्यात्, प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं करोति। तद्यथा 'आनय' 'आसय' 'शायय' 'भोजय' अनेकमिति'। अयम्भाव.—अनेकशब्दो यदि बहूनां वाचकस्तदा बहुवचनं प्राप्नोति। यद्येकप्रतिषेधमात्रमस्यार्थस्तदा 'अनेको जन आगतः' इत्यत्र द्विबहूनां प्रतीतिर्न स्यादित्याशङ्कायामुक्तं भाष्यकृता—प्रसज्येति—यत्र क्रियागुणौ विधायानेकमित्याह तत्र निराश्रययोः क्रियागुणयोरसम्भवात् एकप्रतिषेधादनियतसङ्ख्यद्रव्याक्षेपे सति बहूनाम्प्रतीतिः। इदञ्च भाष्यमत्यन्ताभावो नञर्थस्तस्य च प्रतियोगिनि विशेषणत्वमित्यभिप्रायेण। वस्तुतस्तु प्रसज्यप्रतिषेधस्यासमासे एव प्रतीत्या इदं भाष्यमेकदेशि। अत एव यत्र खलु पुनर्न प्रसज्येते तत्र कथम् 'अनेकं तिष्ठति' इति। भवति चैव जातीयकानामप्येकस्य प्रतिषेधेन बहूनां सम्प्रत्ययः। तद्यथा न न एकं प्रियम्। न न एकं सुखम्, इति भाष्ये पक्षान्तरमुक्तम्। अयम्भाव.—पर्युदासे द्व्यादिसङ्ख्यायुक्त एवानेकशब्दार्थः। यस्मात् द्व्यादिष्वेकत्वमारोप्य प्रतिषिध्यते, यथा—क्षत्रियादौ ब्राह्मणत्वम्। एवञ्च यथा—अब्राह्मणः=क्षत्रियादिरुच्यते तथाऽनेकपदेन सङ्ख्यान्तरयुक्त. प्रतियोगितासम्बन्धेन भेदविशिष्ट एक इति। सेव्यते इति—

वर्जयन्त्या जनै. सङ्गमेकान्तत—

स्तर्कयन्त्या सुखं सङ्गमे कान्ततः।

योपयैष स्मरासन्नतापाङ्गया

सेव्यतेऽनेकया सन्नतापाङ्गया॥

दर्पणव्याख्या

द्बोधे शाब्दत्वप्रत्ययस्यानुभवात्सक्षणयेन साहस्यादिना ब्राह्मणादिबोध इति तन्ये। विशेषणस्य विशेष्यसाकाङ्क्षत्वादाह—* प्रतियोगिनीति * एवञ्च 'अब्राह्मण.' इत्यादे प्रतियोगितया भेदविशिष्टो ब्राह्मण इत्याद्याकारको बोध इति भाव:। भेदस्य प्रतियोगितयोत्तरपदार्थान्वये उपपत्तिमाह—* तथाचेति *।

*सर्वनामता* चेत्यादि-प्रथमान्तचतुष्टयस्य 'उपपद्यते' इत्यनेनान्वय। सर्वनामता=सर्वनामसंज्ञा। तदन्त-

अन्यथा त्वदभावो मदभाव इतिवदभावांशे युष्मदस्मदोरन्वयेन युष्मत्सामानाधिकरण्यस्य तिङ्व्यसत्त्वात् पुरुषव्यवस्था न स्यात्।

प्रभा

मा० स० ४—श्लो० ४२। सन्नतौ अपाङ्गौ यस्यास्तया स्मरात्=स्मरतापात् कूणितनेत्रया अनेकया
योपया एष कृष्णः सेव्यते इत्यर्थः। अत्वमिति—चक्रसम्बोध्यः युष्मदर्थः। अस्मच्छब्दोच्चारयिता अस्मच्छब्दार्थः।
भेदविशिष्टस्त्वम्, भेदविशिष्टश्चाहमिति अत्वमनहमित्यनेन बोधः। अन्यथा नञर्थाभावस्य युष्मदस्मदर्थ-
रूपप्रतियोगिनि विशेषणत्वाभावे, अभावस्य विशेष्यत्वे इति यावत्। त्वदभाव इति—एतेनोत्तरपदार्थप्रा-
धान्यवादिनयेऽत्यन्ताभावस्यापि विशेषणतया भानं सूचितम्। इतिवदिति—'त्वदभावो मदभावोऽस्ति' इत्या-
दाविव युष्मत्सामानाधिकरण्याभावान्मध्यमोत्तमपुरुषौ न स्यातामित्यर्थः। किञ्च 'अयुवां भवथः' 'अयूयं
भवथ' इत्यादौ द्विवचनादिकमपि न स्यात्, कर्तुरभावस्यैकत्वात्। अन्वयेनेति—विशेषणतयाऽन्वयेनेत्यर्थः।
सामानाधिकरण्यस्येति—समानाधिकरणे=समानमधिकरणम्=अर्थो यस्य तस्मिन्, केन समानमित्याकाङ्क्षायां
प्रत्यासत्त्या यस्य स्थाने मध्यमपुरुषो विधीयते तेन समानम्। तथाच लकारेण तुल्यमित्यर्थः। लकारस्य
लोके प्रयोगाभावात् तुल्यत्वस्य च स्ववाच्यवाचकत्वरूपेणैव वक्तव्यतया तदादेशेन तुल्यत्वमादायाह—
तिङ्वाच्यकारकवाचिनि युष्मद्युपपदे इति—लकारस्य इह त्रयोऽर्थाः—कर्तृ-कर्म-भावाः। तत्र यदा भावे लस्तदा
लवाच्यभाववाचकत्वस्य धातुप्रत्यययोरेव सम्भवेन युष्मदादिनामसु तत्सामानाधिकरण्यासम्भवात् तिबादयो
प्राप्नुवन्तीति 'लङ्भावकर्मणोः' इति भावे लङ्विधानसामर्थ्यात् 'अपदं न प्रयुञ्जीत' इति भाष्याच्च प्रथमो-
पस्थितत्वात् प्रथमपुरुषस्यौत्सर्गिकमेकवचनमेव, कर्तृकर्मादीनां द्वित्वबहुत्वेऽपि न द्विवचनादयः। एवञ्च
लकारस्य कर्तृवाचकत्वे युष्मदोऽपि यदा कर्तृवाचकत्वम्, तस्य कर्मवाचकत्वे युष्मदोऽपि यदा कर्मवाच-
कत्वं तदा मध्यमः। एवम् अस्मच्छब्दे, तद्भिन्ने उपपदेऽपि बोध्यम्। स्थानिन्यपीति—स्थानम्=प्रसङ्गः सोऽस्यास्त
स्थानी। प्रसङ्गश्चाविद्यमानस्यैवेति। स्थानिनि=अप्रयुज्यमाने=अनुच्चार्यमाणे, अपिशब्दादुच्चार्यमाणे या
युष्मदादौ मध्यमपुरुषादयः। 'तिङ्वाच्यकारकवाचिनि' इति तु न युक्तम्, स्वविधेयतिङ्घटितस्य विधाना-
त्प्रागसिद्धत्वेन स्वोद्देश्यत्वासम्भवात्। आरोपितवाचकत्वमादाय 'लवाच्यकारकवाचिनि' इत्येव पन्तु
युक्तम्। नन्वेवमपि 'परमत्वं पचसि' 'त्वत्कल्पः पचसि' 'बहुत्वं पचसि' इत्याद्यसिद्धिः, लकारवाच्यार्थ-
वाचकत्वस्य युष्मच्छब्देऽभावात्। नच युष्मद्घटिते उपपदे इत्यर्थान्न दोषः, 'अतित्वं भवति' इत्यत्राति-
प्रसङ्गादिति चेन्न 'युष्मदि साधने इत्येवं भविष्यति' इति भाष्येणैव समाहितत्वात्। नन्वेवमपि युष्मदि साधने

दर्पणव्याख्या

विधिनेति शेषः। अन्यथा संज्ञोपसर्जनानां सर्वादित्वाभावे तदर्थस्य नञर्थविशेषणत्वे तत्संज्ञानुपपत्तिरिति भावः।
* अनेकम् * इत्यादावेकभिन्नमिति बोधे स्वीक्रियमाणे एकप्रतियोगिकभेदवति द्वित्वस्य बहुत्वस्य वाऽसत्त्वसम्भवेन
ततस्तद्बोधकद्विवचनबहुवचनयोरापत्तिः, एकत्वार्थस्य तस्य तत्र बाधात्तद्बोधकैकवचनस्यानुपपत्तिश्चेति भावः।
* तत्पुरुषत्वमिति * भेदविशेषणत्वे तदनुपपत्तिः स्यात्। * पुरुषेति * तिबादित्रिकस्य इतिपुरुषेत्यर्थः।
* वचनेति * एकवचनत्वादिरूपेत्यर्थः। "अयुवां भवथ" इत्यादौ युष्मदस्मदर्थाभावविशेष्यकबोधे तस्य द्वित्वाद्यर्थस्य
बाधाद् द्विवचनाद्यनुपपत्तिः। 'भावनाऽन्वयिन्येव सङ्ख्याऽन्वयः' इति त्वदभ्युपगमेनान्यार्थगतसङ्ख्यामादाय द्विवचनाद्यु-
पादनस्य कर्तुमशक्यत्वादिति भावः।
* पुरुषव्यवस्थेति * * अन्यथेति * नञर्थाभावस्योत्तरपदार्थविशेषणत्वे तद्विशेष्यत्व इति यावत्।

अस्मन्मते च भेदप्रतियोगित्वदभिन्नाश्रयिका भवनक्रियेत्यन्वयात् सामानाधिकरण्यं नानुपपन्नमिति भावः ।

विशेष्यो वेति—प्रतियोगिनीति शेषः । अयं भावः—गौणत्वेऽपि नञ्समासे "एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" ( पा० सू० ६ । १ । १३२ ) इति ज्ञापकात् सर्वनामसंज्ञा नानुपपन्ना । 'असः शिवः' इत्यत्र सुलोपवारणाय 'अनञ्समासे' इति हि विशेषणम् । नच तत्र

प्रभा

इत्यस्य युष्मदर्थे कारके इत्येवार्थस्तदाऽपि देवदत्तादेः सर्वस्यैव युष्मदर्थत्वात् 'देवदत्तः पचति' इत्यादावतिव्याप्तिः । नच युष्मच्छब्दनिष्ठप्रयोजकतानिरूपितप्रयोज्यतावद्विषयतावदर्थे साधने इत्यर्थेन प्रयोजकतायाश्चापर्याप्ताया अपि ग्रहणेनादोषः, 'अतित्वं भवसि' इत्यादावापत्तितादवस्थ्यादिति चेन्न, युष्मच्छब्दवृत्त्यानुपूर्व्यवच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावदुपस्थितिव्यापकमुख्यविशेष्यतावदर्थे साधने इत्यर्थेनादोषात् । प्रयोजकता च पूर्ववदपर्याप्ताऽपि । अतित्वमित्यादौ तादृशमुख्यविशेष्यतावदर्थे कारकत्वाभावान्न दोषः ।

न स्यादिति—अभावस्य कर्तृत्वेन लकारवाच्यकारकवाच्यत्वस्य युष्मच्छब्देऽभावान्मध्यमोत्तमपुरुषयोर्व्यवस्था न स्यादिति भावः । सामानाधिकरण्यमिति—लकारास्मदोः प्रवृत्तिनिमित्तयोरेकाधिकरणवृत्तित्वरूपं सामानाधिकरण्यमित्यर्थः । शेष इति—'अब्राह्मणः' इत्यादेः ब्राह्मणभिन्नक्षत्रियादिरर्थः । नन्वेवम् 'असः' इत्यस्य तद्भिन्न इत्यर्थे तच्छब्दार्थस्योपसर्जनतया 'त्यदादीनामः' इत्यादेरप्रवृत्त्याऽसिद्धयापत्तिरित्यत आह—गौणत्वेऽपीति । ज्ञापकादिति—नच सर्वनामत्वाभावेऽपि एतत्तदोरित्यस्य वैयर्थ्याभावेन ज्ञापकत्वानुपपत्तिः, उपसर्जनत्वेन सर्वादित्वाभावे तदन्तर्गणतया त्यदादित्वस्याप्यभावेनात्वाप्रवृत्त्या नञ्समासे 'हल्ङ्याब्भ्यः' इति सूत्रेण सुलोपस्य सिद्धतया सूत्रस्य वैयर्थ्याभावेऽपि 'अनञ्समासे' इत्यस्य वैयर्थ्येन ज्ञापकत्वसम्भवात् । तदाह—अनञ्समासे इति । ज्ञापकादिति—नञ्समासे उपसर्जनत्वेऽपि सर्वादित्वप्रयुक्तं कार्यं भवतीत्यर्थे ज्ञापकादित्यर्थः । सर्वनामत्वेति—इदमुपलक्षणम्—सर्वाद्यन्तर्गणकार्यमात्रस्य ।

दर्पणव्याख्या

"युष्मद्युपपदे" ( पा० सू० १ । ४ । १०५ ) इति सूत्रद्वयाविषयतया "शेषे प्रथमः" ( पा० सू० । १ । ४ । १०८ ) इत्यस्य प्रवृत्त्या प्रथमपुरुषस्यैवापत्तेरित्यर्थः । * नानुपपन्नमिति * । तथाचोक्तव्यवस्था सुलभेति भावः । ननु नञर्थभेदस्य प्रतियोगितयोत्तरपदार्थान्वये 'अघटमानय' इत्यत्र स्वभेदप्रतियोगित्वस्य घटे सत्त्वात्तद्बोधानन्तरं घटानयनस्याप्यापत्तिरत आह—मूले—* विशेष्यो वेति * । विशेषणाकाङ्क्षायामाह—सारे * प्रतियोगिनीति * । उत्तरपदार्थरूपप्रतियोगिनीत्यर्थः ।

निरूपितत्वं सप्तम्यर्थः । उत्तरपदार्थरूपप्रतियोगिनिष्ठविशेषणतानिरूपितविशेष्यताश्रयो नञर्थ इति यावत् । ननु तर्हि उत्तरपदार्थाप्राधान्ये पूर्वोक्तदूषणगणो दुष्परिहरोऽत आह—* अयम्भाव इति * । * गौणत्वेऽपीति * नञ्समासघटकैतदाद्यर्थस्य नञर्थविशेषणत्वेऽपीत्यर्थः । * ज्ञापकादिति * । तत्सूत्रस्थानञ्समासग्रहणाज्ज्ञापकादित्यर्थः । ज्ञापकतामेव प्रपञ्चयति—* असः शिव इति * ।

"एतत्तदोः" ( पा० सू० ६ । १ । १३२ ) इत्यनेन परस्परसाहचर्यात् सर्वनामैतत्तच्छब्दयोः परस्य सोर्हलि लोपो विधीयते । नञ्तत्पुरुषान्तर्गतैतत्तदोरुपसर्जनतया सर्वनामत्वाभावादेवानतिप्रसङ्गे व्यर्थं सदनञ्समासग्रहणं नञ्समासे सर्वादेः सर्वनामताज्ञापनेन चरितार्थमिति भावः । साहचर्यज्ञापकस्यासार्वत्रिकत्वं सूचयन् सूत्रे सर्वनाम्नोऽग्रहणे मानान्तरमाह—

तच्छब्दस्य सर्वनामताऽस्ति, गौणत्वात् । 'अकोः' इत्यकच्सहितव्यावृत्त्या सर्वनाम्नोरेव तत्र ग्रहणलाभात् । तथाच 'अनञ्समासे' इति ज्ञापकं सुवचम् ।

"अनेकमन्यपदार्थे" इत्यादावेकवचनम्, विशेष्यानुरोधात् । "सुबामन्त्रिते पराङ्गवत् स्वरे" ( पा० सू० २ । १ । २ ) इत्यतोऽनुवर्तमानं सुब्ग्रहणं विशेष्यमेकवचनान्तमेव । किञ्चानेकशब्दाद् द्विवचनोपादाने, बहूनां बहुवचनोपादाने द्वयोर्बहुव्रीहिर्न सिद्ध्येदित्युभयसंग्रहार्थमेकवचनम्, जात्यभिप्रायम्, औत्सर्गिकं वा ।

## प्रभा

ननु सर्वनाम्न एव तत्र सूत्रे ग्रहणमित्यत्र मानाभाव इत्याशङ्कायामाह,—
गौणत्वादिति—उपसर्जनत्वादित्यर्थः। ननु सर्वनाम्न एव तत्र सूत्रे ग्रहणमित्यत्र 'अवत्सा गौः' इतिवत् सर्वनाम्नोरेव ग्रहणलाभा-
अकोरिति— सर्वनाम्न एवाकचः सम्भवेन विप्रयोगन्यायेन 'अनञ्समासे' इत्यस्य वैयर्थ्यं सूपपादमिति सर्वनामग्रहण-
दिति भावः। वस्तुतस्तु सर्वनाम्नो ग्रहणाभावेऽपि 'अनञ्समासे' इत्यस्य 'असति बाधकेऽभेदेन विशेषणीभूतार्थकपदं विशेष्यवा-
प्रयासो व्यर्थ एवेति पञ्चोलिनः । विशेष्यानुरोधादिति—'असति बाधकेऽभेदेन विशेषणीभूतार्थकपदं विशेष्यवा-
चकपदसमानवचनम्' इति नियमानुरोधादित्यर्थः । नन्वत्र विशेष्यवाचकपदाभाव इत्यत आह—सुबामन्त्रित
इति। नन्वत्र विशेष्यविशेषणयोः समानवचनकत्वे 'अवर्षा हेमन्तः' इति नञ्सूत्रस्थभाष्यप्रयोगासङ्गतिः,
'गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति' इति नञ्सूत्रस्थभाष्याक्षरैव समाहितत्वात् ।
अत्राश्रयपदेन विशेष्यस्येव प्रतियोगित्वाश्रयस्य प्रतियोगिनोऽपि ग्रहणेन वर्षागतलिङ्गसङ्ख्ये भवतः ।
एवञ्च नञ्समासे कचित्प्रतियोगिगते लिङ्गसङ्ख्ये कचिदनुयोगिगते लिङ्गसङ्ख्ये भवत इति तत्त्वम् ।

ननु 'तव्यत्तव्यानीयरः' इत्यत्राधिकृतस्य 'प्रत्ययः इत्यस्य 'नन्दिग्रहिपचादिभ्यः' इत्यत्राधिकृतस्य
'धातोः' इत्यस्य च वचनविपरिणामवत्सुबिति स्यादित्यरुचेराह—किञ्चेति—'अनेकमन्यपदार्थे' इति
सूत्रे द्विवचनान्तोपादाने बहूनां सुबन्तानां बहुवचनान्तन्यासकरणे च द्वयोः सुबन्तयोर्बहुव्रीहिर्न
स्यादित्युभयोर्ग्रहणार्थमौत्सर्गिकमेकवचनमिति भावः । जात्यभिप्रायमिति—एकभिन्नत्वरूपसामान्यगत-
त्वाभिप्रायमित्यर्थः । यथा बहुव्रीहिषु सम्पन्नेषु 'सम्पन्नो व्रीहिः' इत्यत्र व्रीहिषु बहुत्वसत्त्वात्
समवायेन स्वार्थैकत्वान्वयस्य बाधात् स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन व्रीह्यावन्वयस्तथा
'अनेकम्' इत्यत्र स्वार्थैकत्वस्य स्वाश्रयैकभेदवत्त्वसम्बन्धेन द्वयोर्बहुषु वाऽन्वय इति भावः ।
भेदत्वस्य जातित्वाभावा-त्स्यम्=एकत्वं तदाश्रयः प्रकृते एकभेदस्तद्वत्त्वं द्वित्वादिष्विति समन्वयः । द्वित्वबहुत्वयोरभावे
ज्जात्यभिप्रायमित्यसङ्गतमित्यत आह—औत्सर्गिकमिति—एकवचनमिति योगविभागेन

## दर्पणव्याख्या

* अकोरिति * असर्वनाम्नः सर्वनामविहिताकजसम्भवेन तत्पर्युदासात् सर्वनाम्नोरेव तयोर्ग्रहणं निश्चीयत
इत्यर्थः । एतत्कल्पे एतत्तदुत्तरस्य सोर्हलि लोप इति सूत्रार्थः । अर्थद्वारकसम्बन्धाश्रयणेन व्याख्यानं । पूर्वकल्पाभिप्रायेणो-
त्तरपदलक्षणाभिप्रायेण वेति भाव. । * विशेष्यानुरोधादिति * । असति विशेषानुशासने विशेषणवाचकपदस्य विशेष्य-
वाचकपदसमानवचनत्वनियमादिति भावः ।

ननु विशेषणस्य विशेष्यसङ्ख्याविरुद्धसङ्ख्यावत्त्वेऽपि विशेषणवाचकपदात्तद्वचनमित्यत्र प्रमाणाभावोऽत आह—
* किञ्चेति * । नन्वनेकशब्दोपादानादेव द्वयोर्बहूनां वा तत्सिद्धेर्द्विवचनबहुवचनयोरपि समयपरिपालनार्थत्वसम्भवा-
देकवचनोपादानं व्यर्थमेवेत्यत आह—* औत्सर्गिकं वेति * । "एकवचनमुत्सर्गतः करिष्यते" इति, "न केवलाः"

"सेव्यतेऽनेकया" इत्यत्रापि 'योषया' इति विशेष्यानुरोधात्, प्रत्येकं सेवनान्वयबोधनाय चैकवचनम्, नतूत्तरपदार्थप्राधान्यप्रयुक्तम्। अत एव "पतन्त्यनेके जलधेरिवोर्मयः" इत्यादिकमपि सूपपादम्।

प्रभा

एकत्वे, एकत्वाभावे चैकवचनविधानादिति भावः। तथाचोक्तम्—'एकवचनमुत्सर्गतः करिष्ये' इति। न केवल विशेष्यानुरोधादेवैकवचन किन्तु साभिप्रायमपीत्याह—प्रत्येकमिति—एवंकयोषा (स्त्री) कर्तृककर्मकसेवनम्, न तु योषासमुदायकर्तृकसेवनमिति प्रत्येकप्रीतिद्योतनायेत्यर्थः। उत्तरपदार्थेति—उत्तरपदार्थप्राधान्याभावेऽपि एकवचनस्य समर्थिततया उत्तरपदार्थप्राधान्यं न स्वीकार्यमिति भाव.। अत एव=पूर्वपदार्थप्राधान्यादेव। अनेके इति—यदि प्रतियोगितासम्बन्धेन भेदविशिष्ट एक इत्यर्थः स्यात्तदा 'उर्मयः' इति बहुवचनान्तोपस्थाप्यबहुत्वविशिष्टेषु ऊर्मिषु भेदविशिष्टैकस्याभेदेनान्वयबोधो न स्यादिति भाव.।

नच भेदेऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैव प्रतियोगिनोऽन्वयो वाच्य'। अन्यथा ब्राह्मणेऽपि ब्राह्मणत्व-घटत्वोभयधर्मावच्छिन्नब्राह्मणनिष्ठप्रतियोगिताकभेदस्य सत्त्वात् 'अब्राह्मण' इति प्रयोगापत्तिः। तथाचैकत्वस्य केवलान्वयितया एकत्वावच्छिन्नप्रतियोगिताकभेदस्याप्रसिद्धतया एकत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन एकपदार्थस्य भेदेऽन्वयानापत्तिरिति वाच्यम्, व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगित्वानिरूपको यो, भेदस्तद्विशिष्टो यो विशेष्यतावच्छेदको धर्मस्तत्त्वरूपानेकत्वस्य स्वीकारेणादोषात्। धर्मे भेदवैशिष्ट्यञ्च—स्वसामानाधिकरण्य—स्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन। भेदश्च तत्तद्व्यक्तिप्रतियोगिको ग्राह्य.। तथाच 'इमौ द्वौ तद्व्यक्तिर्न' 'इमे बहवस्तद्व्यक्तिर्न' इत्यादिभेदमादाय लक्षणसमन्वयो बोध्य.। तादृशधर्मत्वञ्च द्वित्वबहुत्वादीनाम्।

ननु पूर्वपदार्थप्राधान्ये 'उत्तरपदार्थप्रधानस्तत्पुरुष.' इति व्युत्पत्तिविरोध', तादृशव्युत्पत्तेः प्रायिकत्वस्योक्तत्वात्। ननूत्तरपदार्थप्राधान्येऽप्यनेकशब्दस्यैकशेषेण एको रथोऽश्वो गज इत्याद्यर्थप्रतीत्या बहुवचनान्तत्वोपपत्तिरिति चेन्न, सकृदुच्चरितानेकशब्देन सकलार्थप्रत्यायनसम्भवेनानेकानेकशब्दस्य प्रयोगाप्राप्त्या एकशेषाप्राप्ते', पृथग्विभक्त्यन्तरथादिशब्दप्रयोगे एकस्यैवानेकशब्दस्यावृत्त्याऽन्वयसम्भवेनैकशेषानुपयोगाच्च द्वन्द्वनिर्देशेऽपि एकस्यैव समुदिते ऽन्वयसम्भवाच्च।

सूपपादमिति—उत्तरपदार्थप्राधान्ये भेदप्रतियोगी एक इत्यर्थे तु 'अनेके' इति बहुवचनान्तत्व

दर्पणव्याख्या

इति नियममूलकवचनविरहितमित्यर्थः। सति तात्पर्ये क्वचित् सार्थकमप्येकवचनमिष्यत एवेत्याह—* प्रत्येकमिति * एकभिन्नत्वेनोपस्थितासु योषासु प्रत्येक सेवनान्वयबोधायेत्यर्थः। उपसंहरति—* नत्विति *। * अत एवेति * अनेकशब्दस्यैकभिन्नार्थकत्वादेवेत्यर्थः।

* सूपपादमिति *। भेदप्रतियोग्येकार्थकत्वे तु दुरुपपाद स्यात्, एकशेषेण समर्थन त्वगतिकगतिरिति भावः। भाष्योदाहृते "नैकस्तिष्ठति" इति प्रयोगे 'जन' इत्यप्याहार्य्यम्। प्रत्येक स्थित्यन्वयबोधार्थञ्च तत्रैकवचनम्। 'अनेके जना' इति स्वरूपञ्चेद। उत्तरपदार्थप्राधान्यादिव्यपदेशस्तु प्रायिक इत्यादीनि भाष्यम्। अत्य भवसि' इत्यादिना 'अनहम् भवामि' इत्यादिर्गृह्यते। युष्मद इत्यस्मदोऽप्युपलक्षणम्। एवम् 'त्वन्दिभ' इत्यत्रापि लक्षणेति नैयायिकाद्यनुसारेण, स्वमते तदनभ्युपगमात्। 'अत्वम्भवसि' इत्यादावारोपादिदोषस्य सर्वानुभवविरुद्धत्वाभावे सर्वत्रोत्तरपदस्य स्वार्थभिन्नधर्मिकत्वमेव युक्तमिति भाव।

'अत्वं भवसि' इत्यादौ युष्मदस्मदोस्तद्भिन्ने लक्षणा। नञ् द्योतकः। तथाच भिन्नेन युष्मदर्थेन तिङः सामानाधिकरण्यात् पुरुषव्यवस्था। 'त्वद्भिन्नाभिन्नाश्रयिका भवनक्रिया' इति शाब्दबोधः। एवम् 'न त्वं पचसि' इत्यत्र त्वदभिन्नाश्रयकपाकानुकूलभावनाऽभावः। 'घटो नास्ति' इत्यत्र घटाभिन्नाश्रयकास्तित्वाभाव इतिरीत्या बोधः, असमस्तनञः क्रियायामेवान्वयात्।

प्रभा

दुरुपपादमिति भावः। ननु 'असः' इत्यादौ 'एतत्तदोः' इति सूत्रेऽनञ्ग्रहणं पूर्वपदार्थप्राधान्येऽपि उत्तरपदार्थप्राधान्यप्रयुक्तकार्यप्रवृत्तिज्ञापकमिति दोषाभावेऽपि 'अत्वं भवसि' इत्यादौ प्रथमपुरुषापत्तिरिन्द-वस्थैवेत्यत आह—अत्वमिति। इत्यादाविति—आदिना 'अनहं भवामि' इत्यस्य संग्रहः। भिन्नेन युष्मदर्थेन= त्वद्भिन्नेन युष्मदर्थेन। युष्मदिति—अस्मदोऽप्युपलक्षणमेतत्। अतएव 'अनहं भवामि' इत्यादेः सिद्धिः। सामानाधिकरण्यादिति—अनञ्समासग्रहणज्ञापितात् 'नञ्समासे पूर्वपदार्थप्राधान्येऽपि उत्तरपदार्थप्राधान्य-प्रयुक्तकार्यप्रवृत्तिः' इति वचनादपि पुरुषव्यवस्था सिध्यतीति भावः। भावनाभाव इति—अस्य 'इतिरीत्या बोधः' इत्यत्रान्वयः। नन्वसमस्तनञा सफलकारकविशिष्टक्रियाया अभावबोधने 'भूतलं घटवत्' इति नञर्थस्य क्रियायामन्वये शाब्दबोधप्रकारमाह—एवमिति। ज्ञानम्प्रति प्रतिबन्ध्यत्वं प्रतिबन्धकत्वं वा न स्यात्। एवमारोपितार्थकत्वेऽपि नञस्तदनुपपत्तिः, नञसत्त्वे तत्प्रकारकयद्विशेष्यको बोधो नञ्सत्त्वे तदभावप्रकारकतद्विशेष्यकबोधम्प्रत्येव प्रतिबन्ध्यप्रतिबन्धकभाव-स्वीकारात्। नञश्चैष स्वभावो यत्स्वसम्बन्धिप्रतिपक्षबोधकत्वमिति। नास्तीत्यत्र स्वरतीति सत्त्वशब्देन तम्बद्ध्यमानो नञ् सत्त्वप्रतिपक्षमसत्त्वं गमयतीति वाच्यम्, प्रागभावविधया प्रतिबन्ध्यप्रतिबन्धकत्वा-भावेऽपि अनुभवसिद्धप्रतिबन्ध्यप्रतिबन्धकभावेनादोषात्। क्रियायामेवेति—समासाघटकनञर्थनिष्ठविशेष्य-तानिरूपितप्रकारतासम्बन्धेन शाब्दबोधम्प्रति भावनात्वावच्छिन्नविशेष्यतासम्बन्धेन धातुजन्योपस्थितेः कारणतया धात्वर्थप्रतियोगिकाभावविशेष्यक एव बोध इति भावः। क्रियाग्रहणं गुणस्याप्युपलक्षणम्। अत एव नञ्सूत्रे भाष्यम्—'नञश्चैषस्वभावो यत्प्रसज्य क्रियागुणौ पश्चान्निवृत्तिं करोति'। प्रसज्य=निधाय ततः प्रतिषेध इत्यर्थः। तेन गुणाभावबोधेऽपि प्रसज्यप्रतिषेधो गम्यते। गुणोदाहरणन्तु 'न न एकं प्रियम्' इति भाष्यवचनमेव। अत्र 'न' इति षष्ठ्यन्तम्। अत्र हि एकत्वप्रतिषेधेन सङ्ख्यान्तरयुक्तप्रियप्रतीतिर्भवति। 'न सन्देहः' इत्यादौ च सन्देहात्यन्ताभावः प्रतीयते। सन्देहस्य गुण एव, एकधर्मिकविरुद्धनानाधर्मप्रकारक-ज्ञानरूपत्वात्। पूर्वोदाहरणे एकत्वं सङ्ख्यारूपो गुणस्तस्य प्रतिषेधः। नः=अस्माकं प्रियमेकं नेति तदर्थात्। एवञ्चैकत्वसंख्याप्रतिषेधः फलति। तदुक्तं कैयटेन—'अनेकत्वसङ्ख्याप्रतिषे-धादेव सङ्ख्यान्तरयुक्तवस्तुप्रतीतिः' इति। नचास्तीत्यस्याध्याहारादेककर्तृकसत्त्वैव निषिध्यते इति वाच्यम्, 'प्रसज्य क्रियागुणौ पश्चान्निवृत्तिं करोति' इति भाष्यविरोधात्। प्रसज्यप्रतिषेधार्थकनञो गुणेऽप्यन्वय इति 'क्रियया सह यत्र नञ्' इति प्रसज्यप्रतिषेधलक्षणे क्रियापदं गुणस्याप्युपलक्षणं बोध्यम्।

दर्पणव्याख्या

प्रसज्यप्रतिषेधार्थकनञो व्यवस्थामाह—* एवं न त्वं पचसीत्यादि * नञर्थे युष्मदर्थान्वये तु प्रकृते पुरुषव्यवस्था न सिद्ध्येदिति सूचयितु पचसीति मध्यमपुरुषनिर्देशः। अधिकं स्वादावेवोक्तम्। इदमुपलक्षणम्—'घटौ नस्त' इत्यादौ द्विवचनाद्यनुपपत्तेः। क्रियाप्रतियोगिकाभावविशेष्यकबोधे हेतुमाह—* असमस्तेति * व्याख्यानात् * नञः * तदर्थस्य प्रसज्यप्रतिषेधस्य तादृशनञर्थाभावनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन बोधे धातुजन्योपस्थितेर्भावनात्वा-वच्छिन्नविशेष्यतासम्बन्धेन हेतुत्वस्य पूर्वमुक्तत्वादिति भावः।

स चाभावोऽत्यन्ताभावत्वान्योन्याभावत्वादिरूपेण शक्यः,

प्रभा

नन्वभावनिष्ठशक्यताया अवच्छेदकं किम् ? न तावदभावत्वं 'मैत्रो न गच्छति' इत्यादावपि भेदबोधापत्तेः। नापि प्रसज्यप्रतिषेधत्वेन, उक्तदोषतादवस्थ्यात्। प्रसज्यप्रतिषेधत्वेनेत्यस्य विधानपूर्वकप्रतिषेधत्वेनेत्यर्थः। तथाच यत्र क्रिया न विधीयते='न लिप्तसि' इत्यादौ तत्राभावाप्रतीतिरत आह–स चेति–अभावश्चेत्यर्थः। अत्यन्ताभावत्वेति—अत्यन्ताभावशब्दोऽन्वर्थसंज्ञा तथाहि—अन्तमतिक्रान्तोऽत्यन्तः। अन्तशब्दोऽत्र जघन्यवाची, 'अन्तो जघन्यं चरमम्' इत्यमरात्। जघन्यत्वञ्च—स्व (अत्यन्ताभाव) प्रतियोगिनिष्ठतादृशाभाव (अत्यन्ताभाव) प्रतियोगित्वरूपम्। यथा—'घटाभाव.' इत्यत्र स्वः=घटाभावस्तत्प्रतियोगी घटस्तन्निष्ठोऽत्यन्ताभावः—पटाद्यभावः, घटाद्यभावो वा, ननु घटत्वात्यन्ताभाव इति घटत्वं घटाभावप्रतियोगिघटनिष्ठात्यन्ताभावाप्रतियोगि। तथाच घटाभावप्रतियोगिनिष्ठात्यन्ताभावप्रतियोगित्वाभाववति घटत्वेऽपि घटाभावस्य सत्त्वेन घटाभावः स्वप्रतियोगिनिष्ठात्यन्ताभावप्रतियोगित्वव्यभिचारी, तादृशप्रतियोगित्वाभावाधिकरणे घटत्वेऽपि सत्त्वात्। एवञ्चात्य-

दर्पणव्याख्या

नन्वभावस्य केन रूपेण शक्यता। न तावदभावत्वेन। 'चैत्रो न पचति' इत्यादावपि भेदबोधापत्ते। प्रसज्यप्रतिषेधत्वेन शक्यत्वेऽपि स एव दोषः, भेदस्यापि योग्यानुपलब्धिजन्यप्रत्यक्षविषयत्वात्। तदनुपस्थितावपि नञोऽभावबोधाच्चेत्यत आह—*स चेति* अभावश्चेत्यर्थ। तथाच नञोऽन्योन्याभावत्वेनात्यन्ताभावत्वेन वाऽभावे शक्तिकल्पनान्न दोषः।

* अत्यन्ताभावत्वेति * अन्तम्=स्वप्रतियोगिनिष्ठाभावप्रतियोगित्वमतिक्रान्तः=व्यभिचरितोऽत्यन्त। स चासावभावश्चेति विग्रहः। तस्य भावस्तत्त्वम्। स्वप्रतियोगिनिष्ठस्वसदृशाभावप्रतियोगित्वव्यभिचार्यभावत्वमिति यावत्। 'अन्तो जघन्यं चरमम्' इत्यमरेणान्तशब्दस्य जघन्ये वृत्तिबोधनात् जघन्यत्वञ्चोक्तार्थस्य जघन्यवृत्तित्वोपपत्तेः। घटात्यन्ताभावस्य स्वप्रतियोगिनिष्ठात्यन्ताभावप्रतियोगित्वाभाववति घटवृत्तिधर्मे सत्त्वात्तत्त्व तनाक्षतम्। घटान्योन्याभावस्य तु स्वप्रतियोगिनिष्ठान्योन्याभावप्रतियोगित्वव्यापकत्वाद्व्याप्तिः। व्युत्पत्तिप्रदर्शनं चेदम्। लक्षणं त्वत्यन्ताभावस्य तादात्म्येतरसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम्। * अन्योन्याभावेति * अन्योन्यस्मिंस्तादात्म्येनाभावः=अभवनमिति व्युत्पत्त्या तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वम्। ताभ्यां शक्य इत्यर्थ।

वस्तुतस्तु अत्यन्ताभावत्वाभावत्वेनैव शक्यता, ननूक्तरूपेण, गौरवात्, तेन रूपेण बोधस्याननुभवाच्च। अत एव "तस्मादत्यमभावश्च" इत्यत्राभावत्वेनैवात्यन्ताभावोपादानम्।

नन्व नञः संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वादिनाऽभावे शक्त्यनभ्युपगमे 'भूतले न घटः' इति वाक्यजबोधस्य संयोगसम्बन्धेन भूतलविशेष्यकघटविशिष्टबुद्धिविरोधित्वानापत्तिस्तत्संसर्गावच्छिन्नतद्विशिष्टबुद्धौ अभावांशे तत्संसर्गावच्छिन्नप्रतियोगिताकत्वावगाहिन्या एव तदभावबुद्धेः प्रतिबन्धकत्वादिति वाच्यम्,

निरुक्ताभावत्वेन शक्तावपि संयोगादीनां लक्षणे तादात्म्येतरसम्बन्धत्वेनानुगतरूपेणैव निवेशनीयतया नञ्पदशक्याऽभावे विशिष्य संयोगावच्छिन्नप्रतियोगिताकत्वभानासम्भवात्, प्रतिबन्धकत्वानुपपत्तितादवस्थ्यात्। तादृशविशिष्टबुद्धिविरोधित्वानुरोधेनाकाङ्क्षाबलादेव तादृशप्रतियोगितावत्त्वस्य विशिष्यप्रतियोग्यभावयोः सम्बन्धविधया भानस्योपगन्तव्यत्वात्।

नन्वन्योन्याभावात्यन्ताभावसाधारणाभावत्वस्य नञ्पदप्रवृत्तिनिमित्तत्वेऽन्योन्याभावे तत्र पृथक् शक्तिकल्पनानर्थक्यम्। नञोऽन्योन्याभावत्वप्रकारकबोधानुरोधात्तस्यापि शक्यतावच्छेदकत्वकल्पनमावश्यकम्, अन्यथा तादात्म्यसम्बन्धेन प्रतियोगिप्रकारकेऽयं घट इति बोधे नायं घट इति वाक्यजबुद्धेरप्रतिबन्धकत्वापत्तेः। अन्योन्याभावत्वाप्रकारकाभावबुद्धेरेव तादृशबुद्धिविरोधित्वात्। घटाभाववानिति बुद्धेरपि तद्विरोधितापत्तेश्चेति वाच्यम्

प्रभा

अत्यन्तः=ताद-
न्ताभावः=अन्तम्=स्वप्रतियोगिनिष्ठात्यन्ताभावप्रतियोगित्वमतिक्रान्तः=व्यभिचरित इति
शस्यप्रतियोगित्वव्यभिचारी, स चासावभावश्चेति कर्मधारयेण तादृशप्रतियोगित्वव्यभिचारी अ-
भावोऽत्यन्ताभाव इत्यन्वर्थत्वं सिद्धम् । इदञ्च योगार्थमात्रप्रदर्शनम् । अत्यन्ताभावत्वञ्च—
तादात्म्येतरसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । नित्यत्वे सति अभावत्वम्, त्रैकालिकसंस-
र्गाभावत्वं वा । कस्यचिन्मते अत्यन्ताभावो द्विधा—वायौ रूपाभावादिरूप एकः, भूतले घटाभावः
सामयिकात्यन्ताभावरूपो द्वितीयः । समयभेदेन यत्र कदाचित्तद्वत्ता, कदाचित् तदभाववत्ता च
तत्रैवायम् । अयं भावः—यस्य वस्तुनोऽभावस्तद् वस्तु तस्याभावस्य प्रतियोगि, प्रतियोगिनो भावः—
प्रतियोगिता=प्रतियोगिवृत्तिधर्मः । प्रतियोगिताया अवच्छेदकः कश्चन धर्मः, सम्बन्धश्च । धर्मसम्बन्धाभ्यां
प्रतियोगिताऽवच्छिद्यते । तत्र यः प्रतियोगितायाः समनियतो धर्मो घटत्वादिरूपः स प्रतियोगितावच्छेदकः ।
प्रतियोगी स्वाधिकरणे येन सम्बन्धेन नास्ति स सम्बन्धः प्रतियोगितावच्छेदकः । यथा—'संयोगेन भूतले
घटो नास्ति' इत्यत्र संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकोऽभावः प्रतीयते । भविष्यतो घटस्य
स्वाधिकरणे=कपालादौ योऽभावः ( अत्र घटो भविष्यति ) इत्यादिवाक्याभिव्यङ्ग्यः स प्रागभाव इत्युच्यते ।
भूतस्य घटस्य यो नाशः स 'घटो नष्टः' इत्यादिवाक्यबोध्यः प्रध्वंसाभाव इत्युच्यते । एतौ च न नञ्पद-
बोध्यौ, इत्यभावत्रयं संसर्गाभावशब्देन व्यवह्रियते । अन्योन्याभावस्तु 'कर्मव्यतिहारे सर्वनाम्नो द्वे
वाच्ये' इति वार्तिकेनान्यशब्दस्य द्वित्वे बहुलग्रहणात् समासवद्भावाभावे द्वित्वपूर्वभूतान्यप्रकृतिकसप्तम्याः
सावादेशो 'अन्योन्य ङि' इत्यस्याभावशब्देन समासे बहुलग्रहणबलेनैव सोरलुकि 'सुपो धातु' इति सप्तम्या
लुकि च 'अन्योन्याभाव' इति पदं सिद्ध्यति । अन्योऽन्यस्मिन् तादात्म्येनाभवनमन्योन्याभावः । तादा-
त्म्यम्=तस्य आत्मा=स्वरूपं तदात्मा, तदात्मनो भावस्तादात्म्यम्, अभेद इत्यर्थः । अन्योन्याभावस्य प्रति-
योगितावच्छेदकसम्बन्धश्च तादात्म्यमेव । अत एव तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽन्योन्या-
भाव इत्यभिधीयते । यथा—'घटः पटः' इत्यत्र समानविभक्तिकत्वात् 'नीलो घटः' इतिवत्
'घटपटयोः' अभेदः प्रतीयते । तत्र 'घटो न पटः' इत्युक्तौ 'पटभिन्नो घटः' इति बोधो जायते ।
सोऽयमभेदनिषेधकोऽभावोऽन्योन्याभावः । 'पटभिन्नो घटः' इतिवत् 'घटभिन्नः पटः' इत्यपि
प्रतीयते । एवञ्च 'अन्योन्याभावः' स्वप्रतियोगिनिष्ठान्योन्याभावप्रतियोगित्वव्यापकः । एवम्—
अन्योऽन्यपदं तादात्म्यसम्बन्धपरम्, तेनाभाव इति तृतीयासमासः । अवच्छिन्नप्रतियोगिताकत्वं तृतीयार्थः ।
तथाचासाधारणधर्मरूपतादात्म्यत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावत्संसर्गतानिरूपकप्रतियोगिताकाभा-
वत्वमन्योन्याभावत्वं फलितम् । तेन संयोगेन संयोगी नास्ति, समवायेन समवायी नास्ति, इत्याद्यत्य-
न्ताभावे न व्यभिचारः । यद्वा—अन्योऽन्यम्=परस्परं तन्निष्ठो योऽभावः सोऽन्योऽन्याभावः । ननु संसर्गा-

दर्पणव्याख्या

तत्राभावत्वस्य नञ्पदशक्त्या तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य समानविभक्तिकप्रतियोग्यनुयोगिवाचक-
पदयोः समभिव्याहाररूपाकाङ्क्षाबलेन लाभेन तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वरूपान्योऽन्याभावत्वावगाहितत्तत्
तत्तद्बुद्धेः प्रतिबन्धकत्वोपपत्तौ तेन रूपेण शक्तिकल्पनस्याकिञ्चित्करत्वात् ।

नच नास्त्येव तदवच्छिन्ने शक्तिः, पृथगुपादाने त्वभावसामान्यस्य नञर्थत्वालाभायैवेति वाच्यम्, तथा सति
"नञर्थाः षट् प्रकीर्तिताः" इत्यस्यासङ्गत्यापत्तेरिति चेत्, स्यादेव, यद्यन्योन्याभावत्वम्=तादात्म्यसम्बन्धावच्छिन्नप्रतियो
गिताकाभावत्वरूप निर्वक्तुं शक्येत, तदेव न, संयोगितादात्म्यस्य संयोगरूपतया संयोगात्यन्ताभावेऽतिव्याप्तेः । सम्बन्ध-
विषया तादात्म्यनिष्ठावच्छेदकतानिवेशेऽपि संयोगसम्बन्धावच्छिन्नसंयोगधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावातिव्याप्तिता-

प्रभा

भाव इत्यत्र कः समासः ?—संसर्गश्चासावभावश्चेति तु न, संसर्गस्य भावपदार्थतयाऽभावेऽभेदेनान्वयायोगात् । नच संसर्गपदं तादात्म्यसम्बन्धभिन्नसम्बन्धपरम् । एवमन्योऽन्यपदं तादात्म्यसम्बन्धपरम् । तथा संसर्गेण-तादात्म्यसम्बन्धभिन्नसम्बन्धेनाभावः संसर्गाभावः । अन्योऽन्येन-तादात्म्यसम्बन्धेनाभावोऽन्योऽन्याभावः । तादात्म्येतरसम्बन्धावच्छिन्नप्रतियोगिताकाभावः संसर्गाभावः । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽन्योन्याभावः । ननूक्तसंसर्गाभावत्वलक्षणे ध्वंसे प्रागभावे चाव्याप्तिः, ध्वंसप्रागभावीयप्रतियोगितायाः सम्बन्धानवच्छिन्नत्वादिति चेन्न, संसर्गपदस्य तादात्म्यसम्बन्धानवच्छिन्नप्रतियोगितापरत्वमन्योन्यपदस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगितापरत्वञ्चाश्रित्य तयोरभाव इति व्युत्पत्त्या संसर्गाभावान्योऽन्याभावशब्दयोः प्रयोगे बाधकाभावात् । नचैवमपि 'संयोगेन संयोगी नास्ति' इत्यादावत्यन्ताभावलक्षणाव्याप्तिः, प्रकृते संयोगस्य तादात्म्यरूपतया तादात्म्यसम्बन्धानवच्छिन्नप्रतियोगिताकत्वाभावादिति वाच्यम्, तादात्म्यत्वेन तादात्म्यसम्बन्धानवच्छिन्नत्वस्य निवेशेनादोषात् । तादात्म्यत्वञ्चासाधारणधर्मत्वरूपं नतु संयोगत्वरूपम् । निरूपकत्वस्य षष्ठ्यर्थतया अभावे तादृशप्रतियोगितानिरूपकत्वस्य सत्त्वादुक्तात्यन्ताभावत्वेनान्योऽन्याभावत्वेन च नञर्थाभावस्य भानमिति भावः । ननूक्तात्यन्ताभावत्वस्य गुरुत्वेन लघुभूतान्योऽन्याभावत्वेनैवाभावस्य शक्यत्वमस्तु, एवमुत्पत्तिमदभावत्वरूपध्वंसत्वस्य, उत्पत्तिशून्यनाशप्रतियोग्यभावत्वरूपप्रागभावत्वस्य चान्योऽन्याभावत्वापेक्षया गुरुतया शक्यतावच्छेदकत्वकल्पनमनुचितमिति चेन्न, नास्तीत्यादिप्रतीतिबलादनुयोगिताविशेष एवात्यन्ताभावादिर्नतूक्तरूप इति स्वीकारेणादोषात् । नच तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योऽन्याभावत्वमिति स्वीकारे 'संयोगेन संयोगी नास्ति' इत्याद्यत्यन्ताभावेऽतिव्याप्तिः, संयोगिनिष्ठतादात्म्यस्य संयोगरूपतया संयोगरूपतादात्म्यसम्बन्धावच्छि-

दर्पणव्याख्या

दनस्यात् । तादात्म्यत्वावच्छिन्नतादात्म्यसंसर्गता निवेश्य परिष्कृतस्य तस्य शक्यतावच्छेदकत्वे तु 'घटस्तादात्म्येन न घटः' इति प्रयोगानुपपत्तिः । एवञ्च तादात्म्यस्यान्योन्याभावप्रतियोगितावच्छेदकसम्बन्धत्वमपि प्रामाणिकम् । इह संयोगेन घटो नास्तीतिवत् 'अयं तादात्म्येन न घट' इत्यादिप्रत्ययात् । एवञ्च तादृशानुयोगिताविशेषप्रकारताकत्वमेवाभेदसम्बन्धेन प्रतियोगिप्रकारकधीविरोधित्वे तन्त्रमिति तदनुरोधेन नञः पृथगन्योन्याभावे शक्तिरावश्यकेति ।

ननु नञोऽविशेषेणात्यन्ताभावबोधकत्वे 'भूतले न घटः' इत्यादिवाक्यजबोधेऽत्यन्ताभावभानापत्तिः । नच नञ्पदजन्यात्यन्ताभावबोधेऽनुयोगिवाचकपदोत्तरसप्तमीसमभिव्याहारज्ञानस्य हेतुत्वान्नोक्तापत्तिरिति वाच्यम्, 'चैत्रो न पचति' इत्यादिवाक्यजभाननात्यन्ताभावबोधे व्यभिचारेणोक्तकार्यकारणभावस्यैवासम्भवादिति चेत्,

अत्र वदन्ति—यत्र नञ्समभिव्याहारे प्रतियोग्यनुयोगिनोराधाराधेयभावसंसर्गबोधौपयिकाकाङ्क्षा तत्रैव नञोऽत्यन्ताभावार्थकत्वोपगमेन नोक्तस्थले तद्बोधापत्तिः, तत्र नञ्समभिव्याहारे तादृशबोधौपयिकाकाङ्क्षाविरहात् । 'न पचति चैत्रः, 'नेदं चैत्रस्य' इत्यादौ नञ्समभिव्याहारे तिङर्थस्य कृत्यादेः प्रथमान्तपदोपस्थापितचैत्रादौ षष्ठ्यर्थस्वत्वस्येदंपदार्थे आधाराधेयभावबोधौपयिकप्रथमान्तपदादिसमभिव्याहाररूपाकाङ्क्षायाः सत्त्वेन तत्र नञा कृत्याद्यभावबोधनसम्भवात् ।

एवञ्च यत्र प्रतियोग्यनुयोगिनोराधाराधेयभावबोधः सप्तमीं विनाऽनुपपन्नस्तत्रानुयोगिवाचकपदात् सप्तम्यप्यपेक्ष्यते । यथा—'भूतले न घटः' इत्यादौ । तदुक्तं दीधितिकृता—"वस्तुतो न पचति चैत्रो नेदं मैत्रस्येत्यादौ विभक्त्यर्थं प्रति सम्बन्धादेरभावस्य बोधने नञा सप्तमी नापेक्ष्यते, अपेक्ष्यते च प्रातिपदिकार्थस्येति" इति ।

नच चैत्रो न पचतीत्यादौ नञाख्यातार्थभावनाभावबोधने चैत्रौ न पचतश्चैत्रा न पचन्तीत्यादौ द्विवचनाद्यनुपपत्तिः, भवन्मते भावनाऽन्वयिनि सङ्ख्यान्वयनियमेन भावनान्वयिन्यभावे द्वित्वाद्यभावेन द्विवचनादिना तस्य बोधयितु

प्रभा

अप्रतियोगिताकाभावत्वस्य तत्र सत्त्वादिति वाच्यम्, तादात्म्यावच्छिन्नतादात्म्यसम्बन्धनिष्ठावच्छेदकताक-
प्रतियोगिताकाभावत्वरूपान्योऽन्याभावत्वस्य विवक्षितत्वात्। प्रकृते च संयोगत्वावच्छिन्ना संयोगसम्बन्ध-
निष्ठावच्छेदकता, नतु तादात्म्यावच्छिन्नेति न दोषः। यद्यपि संयोगितादात्म्यस्य संयोगरूपत्वे तत्तादात्म्य-
मपि संयोगत्वरूपमेवेत्यत्यन्ताभावेऽतिव्याप्तिस्तदवस्थैव, तथापि संसर्गतावच्छेदकं तादात्म्यत्वम्, नतु संयो-
गत्वादिरूपम्, किन्तु संयोगिव्यक्तिवृत्त्यसाधारणधर्मत्वरूपमेवेति उक्तात्यन्ताभावीयप्रतियोगितानिरूपिता
संयोगसम्बन्धनिष्ठावच्छेदकता नासाधारणधर्मत्वरूपतादात्म्यत्वेनावच्छिन्नेति न दोषः। तद्दूषणेनेति—
अत्यन्ताभावत्वादिरूपेण बोधस्यानुभवसिद्धत्वादित्यर्थः। घटप्रागभावध्वंससमये 'अत्र घटो नास्ति' इत्या-
दिना घटप्रागभावः, घटध्वंसाभाव इत्याकारिकैव प्रतीतिर्नत्वत्यन्ताभावात्मिका प्रागभावध्वंसयोरत्यन्ता-
भावेन सह विरोधस्य प्राचीनतार्किकसम्मतत्वेन ध्वंसप्रागभावसमयेऽत्यन्ताभावस्यासम्भवादिति भावः।
केचित्तु—अभावत्वमेव शक्यतावच्छेदकम्, 'चैत्रो न गच्छति' इत्यादौ चैत्रकर्तृकगमनाभावबोध-
स्यानुभवसिद्धत्वात्। ननु 'चैत्रो न गच्छति' इति वाक्यात् तादृशबोधासम्भवः, 'नञ्समभिव्याहारे
यादृशधर्मिणि येन सम्बन्धेन यः प्रकारतया भासते, नञ्समभिव्याहारे तादृशधर्मिणि तत्सम्बन्धावच्छिन्न-
प्रतियोगिताकाभावः प्रकारतया भासते' इति नियमात् प्रकृते क्रियामुख्यविशेष्यकबोधस्यैव नञ्समभि-
व्याहारे सिद्धान्तितत्वेन नञ्सत्त्वे कथं समवायेन क्रियाभावभानमिति चेन्न, क्रियायां चैत्रकर्तृकत्वं प्रकार-
तया भासते। क्रियायां चैत्रकर्तृकत्वञ्च—चैत्रनिष्ठाश्रयतानिरूपकत्वम्। प्रकृते चैत्रनिष्ठायाः समवायसम्ब-
न्धावच्छिन्नाश्रयतायाः क्रियानिष्ठविशेष्यतानिरूपितनिरूपकत्वनिष्ठप्रकारतावच्छेदकतया भानेन नञ्सम-
भिव्याहारे तत्सम्बन्धावच्छिन्न (स्वनिष्ठविशेष्यतानिरूपित प्रकारतावच्छेदकत्वसम्बन्धावच्छिन्न) प्रति-
योगिताकक्रियाभावस्याप्यङ्गीकारात्। एवम् 'घटो न पटः' इत्यादावप्यन्योऽन्याभावस्य बोधः सम्भवति।
अभावत्वावच्छिन्नस्य नञा तत्र तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य समानविभक्तिकप्रतियोग्यनु-
योगिवाचकपदसमभिव्याहारवशाद् भानेन निर्वाहात्। 'प्रतियोग्यनुयोग्यमानान्वयौ तुल्ययोगक्षेमौ' इति
नियमस्य नञ्समभिव्याहारे प्रतियोग्यनुयोगिनोर्यत्सम्बन्धावच्छिन्नाश्रयत्वप्रकारकबोधौपयिकाकाङ्क्षा तत्स-

दर्पणव्याख्या

बोधनेन द्वित्वादिविशिष्टचैत्रकर्तृकक्रियाभाव इति बोधा-
मशक्यत्वात्। वैयाकरणमते तु तत्र धात्वर्थक्रियाभावस्यैव नञा
म्युपगमेन तादृशानुपपत्त्यभावादिति वाच्यम्, द्विवचनाद्युपपत्तेः। तन्म-
नञ्समभिव्याहारे भावनाभावान्वयिनि विट्वर्थसङ्ख्यान्वय इति व्युत्पत्त्यन्तराभ्युपगमेन
तेऽपि यच्चैत्रकर्तृकः पाकोऽप्रसिद्धस्तत्र चैत्रो न पचतीति प्रयोगानुपपत्त्या क्रियाप्रतियोगिकाभावस्य नञा प्रत्यायितुम-
शक्यत्वाच्च।
नच तत्र नञा भेद एव बोध्यते। प्रतियोगितया चैत्रादिविशिष्टस्य तस्याऽऽख्यातार्थकर्तृत्वैकदेशान्वयात्र तादृशमर्या-
गानुपपत्तिरिति वाच्यम्, तथा सति प्रतियोगितासम्बन्धावच्छिन्नधात्वर्थप्रकारकबोधे असमस्तनञ्जन्योपस्थितेर्हेतुत्वस्या-
नैव व्यभिचारेण स्वसिद्धान्तव्याघातात्। नञ्समभिव्याहारे आख्यातार्थभावनान्वय्यर्थकत्ववत् नञ्समभिव्याहारे भावना-
न्वय्यर्थकत्वरूपसामानाधिकरण्यस्य युष्मदादौ सत्त्वान्न न त्वं पचसीत्यादौ मध्यमादिपुरुषानुपपत्तिः।
यद्वा नञ्समभिव्याहारे स्वबोधकर्तृत्वबोधकत्वम्। तत्समभिव्याहारे तु भूतपूर्वं तदादाय पुरुषोपपत्तिरिति। इदं
त्ववधेयम्—'नञ्समभिव्याहारे प्रतियोग्यनुयोगिनोर्यः सम्बन्धो भासते तत्समभिव्याहारे तत्सम्बन्धावच्छिन्नतदभावस्तदनु-
योगिनि भासते' इति व्युत्पत्तेर्न भूतले न घट इत्यादावन्योन्याभावबोधस्तद्विधायकं तादात्म्यं बोध्यम्। परन्तु घटत्वादिवि-

तत्तद्रूपेण बोधनादित्याद्यन्यत्र विस्तरः ॥ ४१ ॥

इति वैयाकरणभूषणसारे नञर्थनिर्णयः ॥ ७ ॥



प्रभा

म्बन्धावच्छिन्नप्रतियोगिताकाधेयाभावस्यापि भानमित्यर्थः। नच 'जले समवायेन नीलरूपं नास्ति' इति वाक्याज्जीलरूपाश्रयतायां समवायसम्बन्धावच्छिन्नत्वस्य पृथग्भानाभ्युपगमो भवता कार्य्यः, स च न सम्भवति, उक्तनियमेनैव सम्बन्धावच्छिन्नत्वलाभेन समवायेनेतिशब्दात् पुनस्तद्भानाङ्गीकारे पौनरुक्त्यापत्तिरिति वाच्यम्, उक्तनियमवशाद् यत्र समवायेनेत्यादिपदसमभिव्याहारो नास्ति तत्र तत्सम्बन्धावच्छिन्नत्वं प्रतियोगितायामेव भासते। यत्र तु समवायेनेत्यादिसमभिव्याहारस्तत्राभावांशे तत्सम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य प्रकारतया भानमित्यङ्गीकारात्।

नञा किञ्चन नास्तीति बोधयन्ती श्रुतिर्यतः।
तदर्थनिर्णयो यातो बालकृष्णप्रभाश्रितः॥
॥ शुभम्भूयात् ॥



दर्पणव्याख्या

विशेष्योपस्थापकपदसमभिव्याहृतनञादिपदस्य घटत्वावच्छिन्नप्रतियोगिताकत्वेन घटप्रकारकाभावशाब्दत्वस्य, तथा नीलादिसाकाङ्क्षघटादयुपस्थापकपदसमभिव्याहृतनञ्पदस्य नीलघटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन नीलघटादिप्रकारकशाब्दबुद्धित्वस्य च कार्य्यतावच्छेदकत्वोपगमान्न नीलघटो न घट इत्यादिप्रयोगप्रसक्तिः, भवति च पीतो घटो न नीलघट इत्यादिप्रयोगोपपत्तिरित्याद्यन्यतोऽवधार्य्यमित्याशयवानाह—* इत्याद्यन्यत्र विस्तर इति * ॥ ४१ ॥

इति वैयाकरणभूषणसारदर्पणे नञर्थनिरूपणम् ॥ ७ ॥

## ॥ अथ निपातार्थनिर्णयः ॥

प्रादयो द्योतकाः, चादयो वाचकाः, इति नैयायिकमतमयुक्तम्,

### अथ निपातार्थनिर्णयः

#### प्रभा

नञो निपातत्वेऽपि 'ब्राह्मणवशिष्ठन्यायेन तदर्थं निरूप्य 'प्रादयो द्योतकाश्चादयस्तु वाचकाः'
इति नैयायिकोक्तं वैषम्यमयुक्तमिति ध्वनयन् निपातानां द्योतकत्वं समर्थयते—प्रादय इत्यादिना ।
द्योतका इति—ननु द्योतकता व्यञ्जकतारूपैव, सा च व्यञ्जना न नैयायिकसम्मतेति दृष्टान्तासङ्ग-
तिरिति चेन्न, तन्मते द्योतकत्वस्य स्वसमभिव्याहृतपदगतवृत्तिबोधकत्वरूपत्वात् । तस्य च 'प्रजयति'
इत्यादौ प्रशब्देऽपि सम्भवः, तन्मते प्रकर्षविशिष्टे जये धातौ लक्षणायाः स्वीकारात् । तत्र प्रपदं
तात्पर्यग्राहकम् । अन्ये तु प्रकर्षः प्रशब्दवाच्य एव । तस्य च प्रकारतया जिधात्वर्थे जयेऽन्वयः ।
नच 'नामार्थधात्वर्थयोः साक्षाद्भेदेनान्वयोऽव्युत्पन्नः' अत एव कर्मतानिरूपकत्वसम्बन्धेन पाके-
ऽन्वयाभिप्रायेण 'तण्डुलः पचति' इति न प्रयोग इति वाच्यम्, तादृशव्युत्पत्तेर्निपातातिरिक्त-
विषयकत्वात् । अत एव मीमांसकमते 'न कलञ्जम् (विषाक्तशस्त्रहतमृगमांसम्, पक्षिविशेषं वा)
भक्षयेत्' इत्यादौ भक्षणनञर्थाभावयोः साक्षादेव परस्परमन्वयेन कलञ्जकर्मकभक्षणाभावप्रयोज्यमपूर्व-
(पुण्य)मिति बोधः । नैयायिकमते नञर्थोऽभावस्तत्र लिङर्थस्य बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाध-
नत्वस्य प्रतियोगितयाऽन्वयः । अभावस्य स्वरूपसम्बन्धेन भक्षणरूपधात्वर्थेऽन्वयः । तथाच बलवद-
निष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभाववद्भक्षणमिति बोधः । नचैवं प्रशब्दस्य प्रकर्षवाचकत्वे 'प्रतिष्ठते'
इत्यादौ प्रकर्षप्रतीतौ प्रकृष्टा स्थितिरित्येव बोधः स्यादिति वाच्यम्, द्योतकतावादिनयेऽपि तद्दोपतादव-
स्थ्यात् । नच द्योतकत्वमते धातूनामनेकार्थत्वात् स्थाधातुरत्र गमनार्थक इति तद्गतार्थत्वं प्रशब्दो
द्योतयतीति वाच्यम्, निपातानां वाचकत्वादिनाऽपि तथात्वस्य वक्तुं शक्यत्वात् ।
'यश्चोभयोः समो दोषः परिहारस्तयोः समः' इति न्यायात् । निपातानामपि अनेकार्थतया प्रकर्षे
इत्यादित्वेऽपि प्रशब्दस्य शक्तिस्वीकारात् । आदित्वञ्च—तदर्थविषयककृतिध्वंससमानकालिकत्वम् । नच
प्रशब्दजन्यप्रकर्षविषयकबोधम्प्रति जिधात्वादिसमभिव्याहाररूपायाः, तज्जन्यादित्वविषयकबोधम्प्रति
स्थाधात्वादिरूपाया आकाङ्क्षायाः कारणत्वान्नोक्तदोष इति वाच्यम्, दत्तोत्तरत्वादित्याहुस्तन्न युक्तम्,
धातूनामनेकार्थत्वस्य सर्वसम्मतत्वेन प्रकर्षादिविशिष्टतत्तदर्थे धातूनां शक्तिकल्पनेनैव तादृशार्थबोधसम्भवे
निपातानां पृथक् शक्तिकल्पने तज्जन्योपस्थित्यादीनाञ्च पृथक्कल्पनेऽतिगौरवप्रसङ्गात् । अनेकार्थकशब्दस्थले
एकस्यैवार्थस्य एकदोपस्थितौ नियामकस्यापेक्षणेन प्रशब्दस्यैव तात्पर्यग्राहकत्वेन नियामकत्वात् । किञ्च
निपातानां वाचकत्वेऽपि प्रशब्दस्याप्यनेकार्थतया तत्र तात्पर्यग्राहकस्यापेक्षणेऽननुगततत्तद्धातूनां तात्पर्य-
ग्राहकत्वकल्पनापेक्षयाऽनुगतप्रशब्दस्यैव तत्कल्पकत्वमुचितम् । किञ्च शक्तानां घटादिपदानां क्रियायोगे

#### दर्पणव्याख्या

प्रासङ्गिकं निपातोपसर्गार्थनिरूपणमित्याशयेन मूलमवतारयति—*प्रादयो द्योतका इति* द्योतकतारूपशक्तिमन्त
इत्यर्थः । अत एव 'प्रजयति' इत्यादौ न प्रकर्षादर्थस्य निशेष्यतेति भावः । मतान्तरे तु तात्पर्यग्राहकत्वं द्योतकत्वं वक्ष्यति ।

वैषम्ये बीजाभावादिति चादीनामपि निपातानां द्योतकत्वं समर्थयते—

द्योतकाः प्रादयो येन निपाताश्चादयस्तथा ।
'उपास्येते हरिहरौ' लकारो दृश्यते यथा ॥ ४२ ॥

येन हेतुना प्रादयो द्योतकास्तेनैव हेतुना चादयः=निपातास्तथा = द्योतका इत्यर्थः । अयं भावः—'ईश्वरमनुभवति' इत्यादावनुभवादिः प्रतीयमानो न धात्वर्थः, 'भवति' इत्यत्राप्यापत्तेः । नोपसर्गार्थः, तथा सत्यप्रकृत्यर्थतया तत्राख्यातार्थानन्वयापत्तेः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः, 'अनुगच्छति' इत्यादौ अनुभवादिप्रत्ययापत्तेश्च ।

प्रभा

केवलानामपि प्रयोगदर्शनेन प्रशब्दस्य च केवलस्य तादृशार्थे प्रयोगादर्शनात् प्रशब्दस्य प्रकर्षे शक्तिरयुक्तेति । लक्षणया प्रशब्दस्य प्रकर्षविशिष्टतत्तदर्थबोधकत्वं तत्तद्धातुश्च तात्पर्यग्राहक इत्यपि न, शक्यार्थाभावे शक्यसम्बन्धरूपलक्षणाया असम्भवात्, आख्यातप्रकृतित्वेन तदर्थे आख्यातार्थान्वयानापत्तेश्च । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेरित्याहुः ।" नन्वेवं प्रादीनामिव 'घटमानय' इत्यादौ घटादिपदानामपि घटकर्मत्वादौ लक्षणा स्याद् द्वितीयादेस्तात्पर्यग्राहकतया तत्र शक्तिर्न सिध्येदिति वाच्यम्, कर्मत्वादिपदान्तस्य प्रातिपदिकार्थत्वे तस्य निरूपकतासम्बन्धेनानयनादिधात्वर्थेऽन्वयानापत्तेः, नामार्थधात्वर्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वात् । न च 'स्तोकं पचति' इत्यादावभेदेन नामार्थधात्वर्थयोरन्वयस्य व्युत्पन्नतया घटकर्मके लक्षणयाऽभेदेनानयनेऽन्वयोऽस्त्विति वाच्यम्, 'कर्मणि द्वितीया' इत्यादेः शक्तिग्राहकत्वसिद्धान्तस्य विरुद्धत्वापत्तेः । तस्मादुपसर्गाणां द्योतकत्वमेव । उपसर्गसंज्ञायाः क्रियायोगे विधानात् क्रियावाचकधातुत एव द्योत्यार्थविशिष्टक्रियाभानम् । 'सुजनः' इत्यादौ क्रियावाचकासमभिव्याहारे उपसर्गत्वाभावाद् वाचकत्वमेव । अत एव 'निर्मक्षिकम्' इत्यत्र निरित्यस्य ध्वंसवाचकतया, 'उपकुम्भम्' इत्यत्र 'उप' इत्यस्य समीपवाचकतयाऽव्ययीभावः सिद्ध्यति । वाचका इति—'घटः पटश्च' इत्यादौ 'घटसमुचितः पटः' इत्यादि क्रमेण बोधस्यानुभविकत्वादन्वयव्यतिरेकाभ्यां चादीनां वाचकत्वमेवेति नैयायिका आहुः । वैषम्ये=प्रादीनां द्योतकत्वम्, चादीनां वाचकत्वमिति भेदे । बीजाभावादिति—यथा प्रादिद्योत्यार्थस्य धात्वर्थे विशेषणत्वं तथा चाद्यर्थस्यापि विशेषणतया वैषम्यं नास्तीति भाव । तार्किकैरुपसर्गाणां द्योतकत्व स्वीक्रियते तत्सम्मतदृष्टान्तेनाह—तथेति । कारिकोत्तरार्द्धोपात्तहेतुनैव न चादीनामपि द्योतकत्वं किन्तु प्रमाणान्तरमप्यस्तीत्याह—अयमभाव इत्यादिना । धात्वर्थ इति—भूधात्वर्थ इत्यर्थः । तेनानुभवस्य ज्ञाधात्वर्थत्वेऽपि न दोषः । अन्वयव्यतिरेकाभ्यां लाघवादुपसर्गवाच्य एवानुभवादित्याशङ्कां परिहरन्नाह—नोपसर्गार्थ इति । ननु धात्वर्थफलस्थानापन्नानुभवस्यान्वयत्वेऽपि तज्जनकव्यापारस्य धात्वर्थतया आख्यातार्थान्वयः स्यादित्यत आह—अनुगच्छतीति ।. प्रत्ययापत्तेश्चेति—नचोपसर्गेणानुभवादियोधे तत्तद्धातुसम-

दर्पणव्याख्या

तत्र येनेत्यत्र यच्छब्दो नोत्तरार्द्धपठितहेतुमात्रपरामर्शक, किन्तु हेत्वन्तरपरामर्शकोऽपि इत्याह—* अयं भाव इति * । * न धात्वर्थ इति * न तत्प्रयोगान्तर्गतधातुशक्य इत्यर्थः । * आपत्तेरिति * अनुभवादिप्रतीत्यापत्तेरित्यर्थः । * नोपसर्गार्थ इति * न तद्धातुसमभिव्याहृतप्रादिशक्य इत्यर्थः । * अनन्वयापत्तेरिति * एतच्चानुभवादिमात्रप्रतीतिमभ्युपेत्य । वस्तुतस्तथास्वीकारेऽक्रियार्थकत्वेन अनुभवादेर्धातुत्वानापत्तेरिति बोध्यम् ।

न विशिष्टार्थः, गौरवात् । तथाच धातोरेव विद्यमानत्वादिवाचकत्वास्तु लक्षणा, उपसर्गस्तात्पर्यग्रा-
हक इत्यस्तु । तथाच तात्पर्यग्राहकत्वमेव द्योतकत्वमिति ।
तच्च चादिष्वपि तुल्यम्। 'चैत्रमिव पश्यति' इत्यादौ सादृश्यविशिष्टं चैत्रपदलक्ष्यम्, इवशब्द-
स्तात्पर्यग्राहक इत्यस्य सुवचत्वादिति । तत्र स्वयं युक्त्यन्तरमाह—'उपास्येते हरिहरौ' इति—अत्र
ह्युपासना किमुपसर्गार्थः, विशिष्टस्य, धातुमात्रस्य वा ।

प्रभा

भिव्याहारस्य कारणत्वं कल्प्यत इति वाच्यम्, सत्तादौ शक्तत्वेन क्लृप्तस्य धातोरेवानुभवार्थकत्वमुपसर्गस्य
द्योतकत्वमित्यस्यापि वक्तुं शक्यत्वात् । विशिष्टार्थं = 'अनुभू' इति समुदायार्थः । गौरवादिति—विशिष्टानुपूर्व्याः
शक्ततावच्छेदकत्वे विनिगमनाविरहादव्यवहितोत्तरत्वसम्बन्धेनानुविशिष्टभूशब्दस्याव्यवहितपूर्वत्वसम्बन्धेन
भूशब्दविशिष्टस्यानोर्वा वाचकत्वकल्पने च गौरवादित्यर्थः । विशिष्टस्य प्रकृतित्वाभावेन तदर्थे प्रत्ययार्था-
न्वयानापत्तिरपि दोषो बोध्यः । तथाचेति—धातोरुपसर्गस्य विशिष्टस्य च वाचकत्वासम्भवे चेत्यर्थः ।
विद्यमानत्वादीति – आदिना 'यागात् स्वर्गो भवति' इत्यत्रोत्पत्तेः संग्रहः । धातोर्विद्यमानत्ववाचकत्वविशेषणं
हेतुगर्भितम्, यतो धातोर्विद्यमानत्ववाची, अतस्तस्य शक्यसम्बन्धरूपा लक्षणा सम्भवति । प्राद्यस्तु न
कस्याप्यर्थस्य वाचका इति शक्यसम्बन्धरूपा लक्षणा तत्र न सम्भवतीति भावः ।
नन्वेवमुपसर्गस्य तात्पर्यग्राहकत्वसिद्धावपि न द्योतकत्वसिद्धिरत आह—तथाच तात्पर्येति । नन्वेवं
प्रादीनां द्योतकत्वे तेषां पृथगर्थाभावेन क्रियायोगाभावादुपसर्गत्वानापत्तिरिति चेन्न, यत्र यस्य फलस्य
धात्वर्थव्यापारविशेषणतया प्रतीतिर्यत्प्रादिगम्या तत्र तादृशार्थबोधकाः प्रादय उपसर्गसंज्ञका इत्यर्थस्यैव
क्रियायोग इत्यादिना विवक्षितत्वात् । तच्चेति—निरुक्तद्योतकत्वञ्चेत्यर्थः । द्योतकत्वसिद्धये युक्त्यन्तरमाह—
त्रयमिति ।

दर्पणव्याख्या

नन्वनुभवार्थकत्वेऽपि तस्य फलस्थानीयत्वेन तदन्वयिव्यापारसामान्यार्थकत्वादेर्न धातुत्वानुपपत्तिरत आह—
ननु भवार्थकत्वेऽपि तस्य फलस्थानीयत्वेन तदन्वयिव्यापारसामान्यार्थकताया एवाभ्युपेयतया तथा
*अनुगच्छतीत्यादाविति* भवानोरनुभवार्थकत्वे तदनुरोधेन गमेरपि व्यापारसामान्यार्थकताया
प्रतीतिर्दुर्वारा स्यादित्यर्थः ।
वस्तुतस्तु संयोगावच्छिन्नव्यापारेऽन्यार्थानुभवस्य बाधेनान्वयासम्भवात्तानोरनुभवार्थकत्वसम्भावनेति भावः । * गौरवा-
दिति * विशिष्टानुपूर्व्याः शक्ततावच्छेदकत्वे गौरवादित्यर्थः । * तथाचेति * धातूपसर्गविशिष्टेना प्रत्येकं प्रतीयमानानु
भवार्थप्रतिपादकत्वासम्भवादिति समुदितार्थः । विद्यमानत्वादीत्यादिनोत्पत्तिर्गृह्यते । लक्षणेत्यस्यानुभवादिरूपेऽर्थे इति शेषः ।
लक्षणाकल्पिकायास्तात्पर्यानुपपत्तेस्तात्पर्यग्रहाधीनतया तस्य चोपसर्गसमभिव्याहाराद्यायत्तत्वादित्यर्थः ।
नन्वेतावतोपसर्गस्य तात्पर्यग्राहकत्वमेव समायातम्, न द्योतकत्वमत आह—* तथाचेति * तात्पर्यग्राहकत्व-
मेवेत्येवकारेण द्योतकत्वस्य वृत्त्यन्तरत्वव्यवच्छेदः । अनुभवादिफले धातोस्तात्पर्यग्राहकत्वस्योपसर्गसमभिव्याहाराधीनत्वात्
"उपसर्गाः क्रियायोगे" ( पा० सू० १ । ४ । ५९ ) इत्यत्रापि क्रियाविशेषणीभूतार्थतात्पर्यग्राहकत्वमेवोपसर्गा
क्रियायोगे इत्यनेन विवक्षितमिति भावः । एतच्चाग्रे वक्ष्यते । * तत्रेति * द्योतकत्व इत्यर्थः । सकर्मकत्वस्येत्यनापत्ते
रित्यनेनान्वितम् ।

नायः, तथा सति स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वस्यास्धातोरुपासनारूपफल-वाचकत्वाभावादनापत्तेस्ततः कर्म्मणि लकारो न स्यात् । न द्वितीयः, गौरवात् । तृतीये त्वागतं द्योतकत्वम् , तात्पर्य्यग्राहकत्वलाभादिति भावः । 'दृश्यते' इत्यत्र 'कर्मणि' इति शेषः ॥ ४८ ॥

तद्यादिष्वपि तुल्यमित्याह—

तथान्यत्र निपातेऽपि लकारः कर्मवाचकः ।
विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः ॥ ४३ ॥

अन्यत्र = 'साक्षात्क्रियते,' 'अलङ्क्रियते,' ऊरीक्रियते शिवः,' इत्यादौ । अत्रापि धातोस्तत्तदर्थे

प्रभा

तथा सति=उपासनाया उपसर्गवाच्यत्वे सति । स्वार्थेति—नच फले स्वार्थत्वविशेषणं मास्तु, तथा-चोपासनाया उपसर्गार्थत्वेऽपि उपासनारूपफलव्यधिकरणव्यापारवाचकतया धातोः सकर्मकत्वं निर्बाधमे-वेति वाच्यम्, यत्किञ्चित्फलव्यधिकरणव्यापारवाचकत्वस्याकर्मकधातावपि सत्त्वेनातिव्याप्तिवारणाय फले स्वार्थत्वनिवेशस्यावश्यकत्वात् । अन्यथा विच्छित्त्यादिरूपफलव्यधिकरणव्यापारवाचकतया शीङादेरप्य-कर्मकत्वानापत्तेः । सकर्मकत्वस्येति—अस्य 'अनापत्तेः' इति वक्ष्यमाणेनान्वयः । ततः=आस्धातोः । न स्यादिति—'लः कर्मणि' इत्यनेन सकर्मकेभ्य एव कर्मणि विधानात् । द्वितीय इति—विशिष्टार्थ इत्यर्थः । गौरवादिति—इदमुपलक्षणम्—भ्वादिगणे विशिष्टस्य पाठाभावेन धातुत्वानापत्तेः । नच 'उपास्यते' इत्यादि-शिष्टप्रयोगदर्शनाद् भ्वादौ पाठः कल्प्यते इति वाच्यम्, एवमपि विशिष्टेऽड्द्विर्वचनादिव्यवस्थानुपपत्तेः । उक्तञ्च वाक्यपदीये—

अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम् ।
धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः ॥

इति । इदं दूषणमनुभवतीत्यादावपि बोध्यम् । ननु भावे लकारेऽपि 'उपास्यते' इति स्यादित्यत आह—दृश्यते=धातुमात्रार्थपरत्वपक्षे । आगतमिति—उपसर्गसमभिव्याहारे धातुमात्रेण तादृशार्थप्रतीतेरुपसर्गस्य तादृशार्थतात्पर्यग्राहकत्वं कल्पनीयमित्यागतं द्योतकत्वमित्यर्थः । दृश्यते इति—भावे लकारे 'हरिर्हरी दृश्यते' इति प्रयोगानुपपत्ते' ॥ ४२ ॥

तद्वेति—द्योतकत्वञ्चेत्यर्थः । तथा=प्रादिवत् । अन्यत्र=चादिरूपे निपाते समभिव्याहृते । वाचक इति—अस्य 'दृश्यते' इति शेषः । अत्रापि=लक्ष्येष्वपि । तत्तदर्थे इति—साक्षात्पूर्वकृधातोः इन्द्रियसन्निकर्षनिष्ठ-प्रयोजकतानिरूपितप्रयोज्यतावद्विषयताशालिप्रत्यक्षानुकूलव्यापारनिरूपितम् । अलम्पूर्वकृधातोः शोभानु-कूलव्यापारविशेषनिरूपितम् । ऊरीपूर्वकृधातोः स्वीकृत्यनुकूलव्यापारनिरूपितञ्च वाचकत्वमित्यर्थः ।

दर्पणव्याख्या

कर्मणि लकारसिद्ध्यर्थं तत्तदर्थवाचकत्वं वाच्यमित्युपसर्गवत् द्योतकत्वममीषामपीत्यर्थः । यद्यपि कृधातोः सकर्मकत्वमस्त्येव, तथाप्येष्वर्थेषु सकर्मकता न स्यात् । अन्यथा 'वायुर्विकुरुते' 'सैन्धवा विकुर्वते' इत्यत्रापि स्यादिति भावः ।

अथोपासना-साक्षात्कारादिर्निपातार्थोऽस्तु, "साक्षात्प्रत्यक्षतुल्ययोः" इति कोशस्वरसात् । तदनुकूलो व्यापार एव धात्वर्थोऽस्तु । स्व-स्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवत्त्वं सकर्मकत्वमपि सुवचमिति दृष्टान्तदार्ष्टान्तिकावयुक्ताविति नेदं साधकमिति चेन्न, नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयासम्भवेन निपातधात्वर्थयोरन्वयासम्भवात् । अन्यथा 'तण्डुलः पचति' इत्यत्रापि कर्मतया

प्रभा

धातोस्तत्तदर्थे लक्षणायान्तु 'वाचकत्वम्' इत्यस्य बोधकत्वमर्थः । शक्तत्वे तु यथाश्रुतमेव साधु । अमीषाम्=चादीनाम् । ननु भ्वाद्यकर्मकधातुरिव कृधातुर्नाकर्मकः, किन्तु सकर्मक एव । तथा च न कर्मणि लकारानुपपत्तिरत आह—यद्यपीति । एष्वर्थेषु=साक्षात्काराद्यर्थेषु । अन्यथा=यत्र कुत्रचित्सकर्मकत्वस्य दर्शनेन सर्वत्र सकर्मकत्वस्वीकारे । इत्यत्रापि स्यादिति—'करोति घटम्' इत्यत्र कृधातोः सकर्मकत्वस्य दृष्टतया 'विकुर्वते सैन्धवाः' इत्यत्रापि सकर्मकत्वापत्तिः । नचेष्टापत्तिः, तदर्थे 'सैन्धवैर्विक्रियते' इति भावे प्रत्ययानुपपत्तेः । किञ्च 'साक्षात्क्रियते गुरुः' इत्यत्र गुरोर्लकारेणाभिधानं न स्यात्, साक्षात्कारस्य निपातवाच्यत्वेन गुरोर्धात्वर्थफलाश्रयत्वाभावात् । कोशस्वरसादिति—यद्यप्येतेन कोशेनोपशब्दस्योपासनार्थकत्वं न सिध्यति, तथापि निपातान्तराणां तथात्वदर्शनेन 'अथ निपाता उच्चावचेष्वर्थेषु निपतन्ति' इति निरुक्ते निपातशब्दार्थनिर्वचनेन चोपशब्दस्यापि तदर्थत्वं कल्प्यते इति भावः । कृधातोर्व्यापारमात्रवाचित्वे गुर्वादीनां धात्वर्थफलाश्रयत्वाभावात् कर्मत्वं न स्यादित्याशङ्कामपाकरोति—स्व-स्वयुक्तेति—स्व-( धातुः ) श्च स्व ( धातु ) युक्तनिपातश्चेति स्व-स्वयुक्तनिपातौ तयोरन्यतरार्थीभूतं यत्फलं तद्व्यधिकरणव्यापारवाचकत्वमित्यर्थः । अत्र 'वाचित्वम्' इत्येव लिखितपुस्तकेषु पाठः । ननु व्यापारवत्त्वमिति । दृष्टान्तेति—'उपास्येते हरिहरौ' इति दृष्टान्तः । दृष्टान्तमर्हतीति दार्ष्टान्तिकम् 'साक्षात्क्रियते' इत्यादिः । नेदं साधकमिति—इदम्='साक्षात्क्रियते' इत्यादिस्थले गुर्वादेः कर्मणो लकारेणाभिधानम् । साधकम्=धातोर्विशिष्टार्थकत्वस्य निपातानां द्योतकत्वस्य च साधकम्=उपपादकं नेत्यर्थः । साक्षादिति—विभक्त्यर्थकर्मत्वाद्यन्वयद्वारा स्वान्वयो भवत्यपेत्यर्थः । विभक्त्यर्थकर्मत्वादिसम्बन्धेनैवान्वये तु भेदेनेत्यस्य विभक्तिवाच्याभिन्नभेदसम्बन्धेनेत्यर्थः । अन्वयासम्भवेनेति—साक्षात्काररूपं फलं निपातार्थः, व्यापारमात्रं कृधात्वर्थः । फलस्यानुकूलत्वरूपभेदसम्बन्धेन व्यापारेऽन्वयेन

दर्पणव्याख्या

* अमीषामिति * चादिनिपातानामपीत्यर्थः । * अस्त्येवेति * 'घटः क्रियते' इत्यादौ कर्मणि लकारदर्शनात् कृञः न सकर्मकत्वानुपपत्त्या साक्षात्कारे लक्षणेति भावः । * एष्विति * साक्षात्कारादिरूपार्थेष्वित्यर्थः । * अन्यथेति * क्वचिदर्थान्तरमादाय कृञः सकर्मकत्वस्य सर्वत्र तत्स्वीकारे इत्यर्थः ।

* वायुर्विकुरुत इति * विकारानुकूलव्यापारवाचकस्यापि सकर्मकत्वापत्त्या "अकर्मकाच्च" (पा० सू० १।३।३५) इति विहितात्मनेपदानुपपत्तिरिति भावः । उपास्यते गुरुरित्यादावुपादुपसर्गाणामुपासनाद्यर्थवाचकत्वेऽपि पूर्वोक्तसकर्मकत्वानुपपत्तिं परिहरति—*अथेति* । *इदमिति* सकर्मकत्वानुपपत्तिरूपमित्यर्थः । *साधकम्*=द्योतकत्वसाधकम् ।

तण्डुलानां धात्वर्थेऽन्वयापत्तेरिति । किञ्च प्रादीनां वाचकत्वे 'भूयान् प्रकर्षः' 'कीदृशो निश्चयः' इतिवत् 'भूयान् प्र' 'कीदृशो निः' इत्यपि स्यात् । अस्मन्मते प्रादेरनर्थकत्वान्न तदन्वय इत्यतो द्योतकता तेषां स्यादिति । साधकान्तरमभिप्रेत्याह—विशेषणेति । 'शोभनः समुच्चयो द्रष्टव्यः' इतिवत् 'शोभनश्च द्रष्टव्यः' इत्यस्यापत्तेस्तुल्यसमाधेयत्वादिति भावः ।

अपिच निपातानां वाचकत्वे प्रातिपदिकार्थयोर्विना षष्ठ्यादिकं भेदेनान्वयासम्भवः । अन्यथा 'राजा पुरुषः' इत्यस्य 'राजसम्बन्धी पुरुषः' इत्यर्थापत्तेरित्यभिप्रेत्याह—आदीति—'धवखदिरयोः

प्रभा

साक्षात्कारानुकूलो व्यापार इति बोधो न स्यात्, नामार्थधात्वर्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वादिति भावः ।
अन्यथा=नामार्थस्य भेदसम्बन्धेन धात्वर्थेऽन्वयस्वीकारे । नच कर्मत्वेनान्वये द्वितीयाऽऽपत्तिः, कर्मत्वस्या-
आकाङ्क्षाभास्यत्वेन प्रत्ययवाच्यत्वविवक्षायामेव द्वितीयादिविधानात्तदप्राप्तेः । ननु 'नामार्थधात्वर्थयोः'
इति व्युत्पत्तौ निपातेतरनाम्नो ग्रहणेनादोष इत्यत आह—किञ्चेति । इत्यपि स्यादिति—अभ्युपगमवादेनैतत् ।
वस्तुतस्तु—चादिनिपातानां समुच्चये नित्यसाकाङ्क्षतया शब्दशक्तिस्वभावात् समुच्चयार्थकपदं विना प्रयोगा-
सम्भवः । तदन्वय इति—भूयः पदार्थस्य प्रशब्दार्थे, कीदृशपदार्थस्य निश्शब्दार्थेऽन्वय इत्यर्थः । साधनेति—
त्रस्य निपातानां द्योतकत्वे इति शेषः । तुल्येति—तुल्येन=प्रादितुल्येन निरर्थकत्वहेतुना समाधातुं शक्यत्वा-
दित्यर्थः । 'विष्णुमुपासते' इत्यादावुपाद्यर्थे कर्मत्वान्वयासम्भवात् तेषामपि द्योतकत्वमेवेति भावः । यदि तु
निपातानां वाचकत्वे 'चार्थे द्वन्द्वः' इति सूत्रं मानमित्युच्यते, तदा ममापि 'ईषद्दुः सुषु कृच्छ्राकृच्छ्रार्थेषु खल्'
इति सूत्रं प्रादीनां वाचकत्वे मानत्वेन गृह्यताम् । षष्ठ्यादिकमिति—आदिना द्वितीयादेः संग्रहः । एवञ्च
'अभेदातिरिक्तसम्बन्धावच्छिन्नप्रातिपदिकार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधम्प्रति विशे-
ष्यतासम्बन्धेन विभक्तिजन्योपस्थितिः कारणम्' इति कार्यकारणभावस्यावश्यकतया 'धवश्च खदिरश्च' इत्यत्र
तदभावेन धवादेश्चार्थसमुच्चयेऽन्वयासम्भवः । अन्यथा=षष्ठ्यादिकं विनापि नामार्थयोर्भेदसम्बन्धेनान्वयस्वी-
कारे । आपत्तेरिति—अत्र 'राज्ञः पुरुषः' इतिवद् 'राजा पुरुषः' इति लिखितपुस्तके पाठः । स्वत्वसम्बन्धेन
राजप्रकारकपुरुषविशेष्यकबोधापत्तेरिति भावः । आदीतीति—'विशेषणाद्ययोगोऽपि' इति कारिकांशो आदि-

दर्पणव्याख्या

*किञ्चेति* । *इत्यपि स्यादिति* अभ्युच्चयवादोऽय
व्युत्पत्तौ निपातातिरिक्तत्वविशेषणानेयमापत्तिरत आह—
श्चादयस्तथाप्यसमुच्चयस्य नित्यं समुच्चेयसाकाङ्क्षतया समुच्चयार्थकपदप्रयोग विना चादिप्रयोगासम्भवात् । शब्दशक्ति-
स्वाभाव्येन नित्य धातुपरतन्त्रोपसर्गे स्वार्थस्य धात्वर्थविशेषणतयैव बोधनेन तदसमभिव्याहारे तत्प्रयोगस्याप्यसम्भवात् ।
अत एव वक्ष्यति—*तुल्यसमाधेयत्वादिति* ।
ननु निपातानां वाचकत्वे "चार्थे द्वन्द्वः" (पा सू० २।२।२९) इत्यादिसूत्रमेव मानम् । प्रादीनां वाचकत्वे
तु मानानुपलम्भाद् द्योतकत्वैवोचितेति चेत्, तत् किम् 'ईषद्दुः सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' (पा० सू० ३।३।१२६) इत्या-
दिसूत्रात्मक मानं पाणिनिविहितमिति विभावय । षष्ठ्यादिकमित्यादिपदेन तदर्थविहितद्वितीयादिपरिग्रहः । अभेदातिरिक्तसम्ब-
न्धावच्छिन्नप्रातिपदिकार्थप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दत्वावच्छिन्नं प्रति विशेष्यतया विभक्तिजन्योपस्थितेर्हेतुतया
प्रकृते तदभावेन भेदान्वयासम्भव इत्यर्थः । *अन्यथा*=उक्तकार्यकारणभावानभ्युपगमे । *आपत्तेरिति* ।
भेदेनान्वयबोधापत्तेरित्यर्थः । *आदीति* भेदान्वयसङ्ग्राहकमादिपदमित्यर्थः ॥ ४३ ॥

समुच्चयः' इतिवत् 'धवस्य च खदिरस्य च' इत्येव स्यादिति भावः ॥ ४३ ॥

ननु प्रातिपदिकार्थयोर्भेदान्वयबोधे विरुद्धविभक्तिजन्योपस्थितिर्हेतुरिति कार्यकारणभावो निपातातिरिक्तविषय एवेति नोक्तदोष इत्याशङ्क्याह—

पदार्थः सदृशान्वेति विभागेन कदापि न।
निपातेतरसङ्कोचे प्रमाणं किं विभावय ॥ ४४ ॥

सदृशा=सदृशेन, समानाधिकरणेनेति यावत्। अन्वेति, अभेदेनेति शेषः। विभागेन=असदृशेन, असमानाधिकरणेनेति यावत्।

प्रभा

पदेन भेदसम्बन्धेन नामार्थयोरन्वयापत्तेः सङ्गृहः, तदाह—धवस्य चेति। इत्येवेति—ननु 'धवश्च खदिरश्च'
स्यादिति भावः ॥ ४३ ॥

प्रातिपदिकार्थयोर्भेदेति—ननु प्रातिपदिकार्थयोर्भेदेनान्वयस्य क्वाप्यदृष्टत्वादिदमसङ्गतमिति चेन्न, 'भेदेन'
इत्यस्य भेदघटितपरम्परासम्बन्धेनेत्यर्थात्। तथाच विभक्त्यर्थान्वयद्वारेण प्रातिपदिकार्थेन समं प्रातिपदि-
कार्थान्वयो भवतीति नियमो निपातातिरिक्तविषयक एव। 'प्रातिपदिकार्थनिष्ठभेदघटितपरम्परासम्बन्धाव-
च्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधम्प्रति निपातेतरपदजन्योपस्थितिः कारणम्' इति
धवस्य च इति न स्यादित्यत आह—सदृशेति। ननु 'सदृशा' इत्याद्यन्तस्याप्यनन्वयोऽत आह—सदृशेनेति—
तथाच तृतीयान्तम्, ननु 'वाचा' 'निशा' इत्यादिवदाबन्तम्। यत्किञ्चिद्रूपेण सादृश्यस्य व्यधिकरणेऽपि
सम्भवादाह—समानाधिकरणेनेति—स्वयाचकशब्दसमानाधिकरणशब्दवाच्येनेत्यर्थः। अथवा स्वनिष्ठपदार्थ-
तावच्छेदकसमानाधिकरणपदार्थतावच्छेदकाधिकरणेन, तादात्म्यसम्बन्धेन सम्बन्धिना वा। ईदृशपदार्थ-
योरभेदसम्बन्धेनान्वयः स्यादित्याशयेनाह—अभेदेनेति। ननु समानविभक्तिकपदोपस्थाप्यत्वेन सादृश्या-
भावेऽपि 'मृदु पचति' इत्यादावन्वयो दृश्यते इत्यसदृशेन नान्वेतीत्यनुपपन्नमत आह—असमानाधिकरणेनेति—
स्वनिष्ठपदार्थतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगिपदार्थतावच्छेदकाधिकरणेन कदाचन नान्वे-
तीत्यर्थः। अयम्भावः—अभेदसम्बन्धेन प्रातिपदिकार्थप्रकारकबोधम्प्रति विरुद्धविभक्त्यनवरुद्धप्रातिपदिक-
धात्वन्यतरजन्योपस्थितेर्हेतुताऽवश्यं वाच्या। अत एव 'राज्ञः पुरुषः' इत्यत्राभेदान्वयबोधो न। तथाच

दर्पणव्याख्या

*भेदान्वयेति*। 'प्रातिपदिकार्थयोरभेदान्वय' इति पाठस्तु सादृश्यान्वयबोधे विभक्तिजन्योपस्थितेर्हेतुत्वस्य केना-
ऽप्यनभ्युपगमादप्रक्रान्तत्वाच्च चिन्त्य। *निपातातिरिक्तेति*। तथाच समुच्चयार्थस्य निपातार्थत्वेन न तेन सा-
पदार्थान्तरस्य भेदान्वयानुपपत्तिरित्यर्थः। सदृक्शब्दस्य समाना दृगितिव्युत्पत्त्योपादानेऽन्वयानत्या मते तुल्यरूपस्य,
"तमिवेमं पश्यन्ति जनाः" इति भाष्ये कर्तृकर्मव्युत्पन्नस्य वा तस्य ग्रहणमित्यभिप्रेत्य व्याचष्टे—*सदृशेनेति*
तुल्येनेत्यर्थः।

ननु विरुद्धविभक्तिकस्यापि नामत्वादिना तुल्यत्वात् तेनाभेदेनान्वयापत्तिरत आह—*समानाधिकरणेनेति*
तथाच समानविभक्तिकपदोपस्थाप्यत्वेन सादृश्यस्य विवक्षणान्नोक्तदोष इति भावः। एवञ्च मूलेऽन्वेतीत्यनन्तरमभेदेनेति
शेषः। 'स्तोकम्पचति' इत्यादौ विभिन्नविभक्तिकपदोपस्थाप्यत्वादसदृशेनाप्यभेदान्वयादाह—*असमानाधिकरणेनेति*
विशेषणवाचकपदप्रकृतिकविभक्तिविरुद्धार्थकविभक्तिप्रकृत्युपस्थाप्येनेत्यर्थः।

अयमर्थः—समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिर्निपातातिरिक्तविषयेति कल्पने मानाभावः, गौरवञ्च। अस्माकं निपातानां द्योतकत्वादन्वय एव नास्तीति नायं दोषः। अत एव 'घटो नास्ति' इत्यादौ घटपदं तत्प्रतियोगिके लाक्षणिकमिति नैयायिकाः ॥ ४४ ॥

प्रभा

'घटश्च' इत्यादावप्यभेदान्वयबोधापत्तिः स्यादिति। ननु 'नामार्थयोरभेदान्वयः' इति व्युत्पत्तौ निपातातिरिक्तत्वविशेषणदानेनादोष इत्यत आह—मानाभाव इति। ननु 'कीदृशो निः' इत्यादिप्रयोगापत्तिरेव मानमित्यत आह—गौरवञ्चेति। ननु निपातातिरिक्तत्वेनासंकोचे तथापीदं दूषणमत आह—अस्माकमिति। अन्वय एवेति—पृथगुपस्थितयोरेव संसर्गस्यान्वयरूपत्वादिति भावः। नायं दोष इति—'धवस्य च' 'खदिरस्य च' इति बोधो नास्तीत्यर्थः, व्युत्पत्तेः पृथगुपस्थितिविषयत्वात्। प्रकृते च धवादिपदेनैव धवसमुच्चयस्योपस्थापनादुक्तव्युत्पत्तेरविषयत्वम्। अत एव=निपातातिरिक्तत्वेन संकोचाभावादेव। लाक्षणिकमिति—'घटो न' इत्यत्र समानविभक्तिकत्वेऽपि घटाभेदस्याभावे बाधाद् घटपदस्य घटप्रतियोगिके लक्षणया 'घटप्रतियोगिकाभिन्नोऽभावः' इत्यभेदान्वय उपपद्यते। सङ्कोचे तु उक्तव्युत्पत्तेरविषयतया घटस्य प्रतियोगितानिरूपकत्वरूपभेदसम्बन्धेनापि नञर्थाभावेऽन्वयसम्भवाल्लक्षणाप्रयासो व्यर्थ एव स्यादिति भावः। नैयायिका इति—प्राञ्च इति शेषः। नव्यास्तु—'घटो न पटः' 'चैत्रो न पचति' 'चैत्र इव मैत्रः' 'पुत्रेण सहागतः' इत्यादौ भेदसम्बन्धेन नामार्थयोरन्वयबोधः क्लृप्त एव। आद्ये घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटस्य भेदे

'दर्पणव्याख्या

ननु वाचकतावादिनोक्तव्युत्पत्तेर्निपातातिरिक्तत्वेन सङ्कोचनीयेत्युक्त्यैवाक्षेपसौध्ये मूले समानाधिकरणेत्यादिव्युत्पत्तिकथनेऽर्थान्तरमत आह—*अयमर्थ इति* स चेत्थम्—"निपातेन कदाचन" इत्यनेन व्यधिकरणयोरभेदान्वयं व्यवच्छिन्दता नामार्थयोर्भेदेनान्वय इति व्युत्पत्तिरेव भाष्येण प्रदर्श्यते, नतु समानाधिकरणयोरिति व्युत्पत्त्यन्तरं तथा। किं तु दृष्टान्तविधया तदुपन्यसनमिति नोक्तदोषः।

तथाच प्रधानीभूतव्युत्पत्त्यावेन निपातेतरसङ्कोचोत्कीर्तनमिति सर्वं सुस्थम्।

ननु नामार्थयोरभेदान्वयबोधे समानविभक्तिकपदजन्योपस्थितिहेतुताया पदांशे निपातातिरिक्तत्वं निवेशनीयमिति नोक्तदोष इत्यवतरणं तु समीचीनम्। नच तादृशव्युत्पत्तेरप्रामाण्यात् कथमेतदिति वाच्यम्, मूलोक्तादिपदेनैव पदघटादिकमन्तरेण भेदेनान्वयासम्भवं प्रतिपादयता समानविभक्तित्वेन धवश्चेत्यादावभेदान्वयापादानस्यापि कुक्षीकृतत्वात्तदेव च सामानाधिकरण्य व्युत्पत्तौ निविष्टमिति यथाश्रुतमूलसङ्गमनादिति।

ननु तदन्वयानुपपत्तिरेव मानमत आह—*गौरवञ्चेति*। ननु तत्रापीदं दूषणं समानमत आह—*अस्माकमिति* द्योतकतावादिनामित्यर्थः। *द्योतकत्वादिति* चादीनां समभिव्याहृतपदसमुच्चिततत्तदर्थरूपलक्ष्यार्थे तात्पर्यग्राहकत्वादित्यर्थः। *नास्तीति* समुच्चयादेस्तन्निरूपकत्वादेश्च समभिव्याहृतपदेनैव लाभात्तस्य पृथगुपस्थित्यभावेनान्वयस्यैवाभावेनातस्थलस्य तादृशव्युत्पत्त्यविषयत्वादिति भावः। *अत एवेति*। व्युत्पत्तौ निपातातिरिक्तत्वविशेषणप्रवेशादेवेत्यर्थः। *लाक्षणिकमिति*। व्युत्पत्तेस्तद्घटितत्वे तु तत्र लक्षणानुसरणं व्यर्थमेव स्यादिति भावः।

नैयायिकास्तु नञो वाचकताया भाष्यसम्मतत्वात् 'घटो न पटः' 'चैत्रो न पचति' इत्यादौ नञर्थाभावस्य विशेषणतया घटचैत्रादिष्वन्वयानुरोधादुक्तव्युत्पत्तौ व्यभिचारवारणाय निपातातिरिक्तत्वविशेषणमावश्यकम्। एवञ्च घटश्च पटश्चेत्यादौ विभक्तिजन्योपस्थितिं विनाऽपि चार्थस्य घटादिष्वन्वयः सुलभः।

अपिच निपातानां वाचकत्वे काव्यादावन्वयो न स्यादिति साधकान्तरमाह—

शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ।
इत्यादावन्वयो न स्यात् सुपाञ्च श्रवणं ततः ॥४५॥

अत्रोस्रसदृशैः शरैः रससदृशानुदीच्यानुद्धरिष्यन्नित्यर्थः । अयञ्चोस्रादिशब्दानां तत्सदृशपरत्वे इवशब्दस्य द्योतकत्वे सत्येव सङ्गच्छते । अन्यथा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधः ।

तथाहि—उस्रैरिति करणे तृतीया । नचोस्रोऽत्र करणम् । इवार्थसदृशस्य करणत्वेऽपि तस्य करणत्वं नानेन बोधयितुं शक्यम्, अप्रकृत्यर्थत्वात् । इवशब्दस्य चासत्त्वार्थकतया तदुत्तरतृतीयाया

प्रभा

तस्य स्वरूपसम्बन्धेन पटे, द्वितीये आख्यातार्थकृत्यभावस्य स्वरूपसम्बन्धेन चैत्रे, तृतीये चैत्रस्य निरूपितत्वसम्बन्धेन इवार्थसादृश्ये, चतुर्थे पुत्रस्य प्रतियोगितासम्बन्धेन सहार्थसाहित्येऽन्वय । तथाचैषु भेदेनान्वयसिद्धये नामार्थयोरभेदान्वय इति व्युत्पत्तौ 'निपातेतरत्व' विशेषणं निवेशनीयमेव । यद्वा 'निपातातिरिक्तनामार्थनिष्ठविषयतानिरूपितनिपातार्थवृत्तिविषयतासम्बन्धेन नामार्थप्रकारकशाब्दबोधं प्रति विशेष्यतासम्बन्धेन विभक्तिजन्योपस्थिति कारणम्' इति कार्यकारणभावेन दोष परिजह्रु ॥ ४४ ॥

ननु अनन्तनामसु समुच्चयादिनिरूपितशक्तिकल्पनापेक्षया परिगणितनिपातेष्वेव शक्तिकल्पनौचित्येत्याशङ्कायामाह—अपिचेति—उक्तदोषाणां कथञ्चिद्वारणेऽपि स्थलान्तरे दोषोऽस्त्येवेति भाव । अयञ्चेति—'उस्रसदृशै शरै' इत्यादिनोक्तार्थश्चेत्यर्थः । अन्यथा=उस्रादिशब्दानां उस्रादिसदृशे लक्षणाया अस्वीकारे । प्रकृत्यर्थान्वित इति—प्रकृतिनिष्ठवृत्तिविषयार्थान्वितेत्यर्थः । प्रकृते उस्रसदृशानां उस्रपदनिष्ठवृत्त्यविषयतया तृतीयार्थकरणत्वान्वयो न स्यादिति भाव । उस्रै=किरणैः । अत्र=उदग्देशीयराजोद्धरणक्रियायाम् । इवार्थेति—इवार्थसदृशाभिन्नशराणां करणत्वेऽपि । तस्य=सदृशार्थस्य । अनेन=उस्रपदोत्तरतृतीयारूपप्रत्ययेन । अप्रकृत्यर्थत्वेति—'इवार्थे सदृश' इति मते तृतीयाप्रकृतिभूतोस्रशब्दार्थत्वाभावादित्यर्थः । ननु इवशब्दोत्तरलुप्यमानतृतीयया स्वप्रकृतीवार्थसदृशस्य करणत्वप्रतीति स्यादत आह—असत्त्वार्थेति—लिङ्गसङ्ख्यानन्वितमसत्त्वम् । तथाच 'चादयोऽसत्त्वे' इत्यनेनाव्ययतया अव्ययेषु कारकत्वाभावा-

दर्पणव्याख्या

ननु घटो नेत्यत्र घटस्य नामार्थत्वाद्विभक्तिजन्योपस्थिति किन्तु तत्प्रकारकप्रतियोगितासंसर्गकनञर्थविशेष्यकबाधानुपपत्तिर्दुष्परिहरैवेति वाच्यम्, एतद्भिन्नेन घटादिपदानां तत्प्रतियोगिके लक्षणाऽभ्युपगमात् निपातातिरिक्तनामार्थयोः साक्षाद्भेदेनान्वयोऽव्युत्पन्न इत्यत्र द्विवचनस्वारस्येन निपातातिरिक्तनामार्थनिष्ठभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितनिपातार्थवृत्तिविशेष्यतासम्बन्धेन बोधं प्रति विशेष्यतासम्बन्धेन विभक्तिजन्योपस्थितेर्हेतुत्वकल्पनाद्वा सामञ्जस्यादित्याहुः ॥ ४४ ॥

उक्तव्युत्पत्तेर्निपातातिरिक्तविषयत्वेन पूर्वोक्तदोषपरिहारेऽपि स्थलान्तरे न मतेऽन्वयानुपपत्तिर्दुर्वारैवेत्याशयेन मूलमवतारयति *अपिचेति* । *इत्यर्थ इति* इत्यन्वयबोध सर्वसम्मत इत्यर्थ । *अयञ्चेति* उक्तान्वयबोधश्चेत्यर्थ । *अन्यथेति* निपातानां वाचकत्वाभ्युपगम इत्यर्थ । व्युत्पत्तिविरोधं व्यक्तीकरोति—( * अत्र *=उदीच्योद्धरणे ) *तथाहीत्यादि* ।

ननु इवशब्दोत्तर तृतीयार्थकरण एवेवार्थान्वय कुतो नेत्यत आह—*इवशब्दस्येति* । *असत्त्वार्थकतयेति* ।

असम्भवात् । सम्भवे वा श्रवणप्रसङ्गात्, उत्तरपदोत्तरतृतीयानन्वयप्रसङ्गाच्चेत्याह—सुपाञ्चेति । सुपां श्रवणश्चेत्यर्थः । चकारादुत्तरपदोत्तरतृतीयाऽनन्वयः समुच्चीयते ।

इत्यादावित्यादिपदात् । "वागर्थाविव सम्पृक्तौ" "पार्वतीपरमेश्वरौ वन्दे" इत्यत्र वागर्थयोर्वदिकर्मत्वाभावात्तदुत्तरद्वितीयाया अनन्वयः । इवार्थस्य कर्मत्वान्वयबोधासम्भवश्च संगृह्यते ।

यदि च विशेषणविभक्तिरभेदार्था, साधुत्वमात्रार्था वा तदाऽपि इवशब्दस्य वाचकत्वेऽनन्वय एव । उत्सलसदृशशराणां समानाधिकरणपदोपस्थाप्यतया भेदेनान्वयायोगात् ।

प्रभा

त्करणत्वाभावेन करणतृतीयाया असम्भवादित्यर्थः । नचैवं 'स्वयं कृतम्' इत्यादिषु करणत्वेनान्वयदर्शनादिदमसङ्गतम्, तत्र करणत्वस्य स्वयमित्यव्ययार्थत्वेनादोषात् । नन्वत्रापि करणत्वमिवार्थः, तेन सम्बन्धेनोद्धरणे अन्वयोऽस्तु, अत एव 'दीधितौ' 'पृथिव्यामेव गन्धः' इत्यत्र एवशब्दोत्तरलुप्तपञ्चम्या समवायसम्बन्धावच्छिन्नाधेयत्वस्य व्यवच्छेदेऽन्वयेन 'पृथिवीसमवेत. पृथिव्यन्यसमवेतत्वाभाववान् गन्ध.' इति बोधो दर्शितः । तथैव इवशब्दस्यापि करणार्थकत्वेन तदुत्तरतृतीयया तद्बोधेन नानुपपत्तिरत आह—सम्भवे वेति—अत्र वाशब्दोऽनादरपरः । कारणत्वव्याप्यधर्मेणेवार्थसदृशस्योपस्थितेः केनाप्यनभ्युपगमात् । कारणत्वेनेवार्थस्यान्वयं स्वीकृत्य सत्त्वार्थकत्वाभ्युपगमे तु निपातत्वाभावेनाव्ययत्वाभावाल्लुगप्राप्त्या तृतीयायाः श्रवणप्रसङ्ग इत्याह—श्रवणेति । अनन्वयप्रसङ्गादिति—इवशब्दस्य वाचकतावादिनये उत्पलस्य निरूपितत्वसम्बन्धेन सादृश्ये एवान्वयेन तृतीयार्थकरणत्वस्य तत्र बाधादन्वयो न स्यादिति भावः । इदमुपलक्षणमुत्ले करणत्वाभावेन तृतीयाया अनुपपत्तेः । ननु इवशब्दस्य सत्त्वार्थकत्वेऽपि स्वरादिपाठेनाव्ययतया सुपो लुक् सिद्ध्येदित्यत आह—कारिकायां श्रवणाच्चेति—चशब्दो भिन्नक्रमः सुपां श्रवणाच्चेति । तथाच चशब्दो दोषान्तरसमुच्चायकः । समुच्चेयमाह—चकारादिति । वदिकर्मत्वाभावादिति—वागर्थयोः सादृश्यरूपे इवार्थे एवान्वये द्वितीयार्थकर्मत्वस्यानन्वयः, द्वितीयाया अनुपपत्तिश्चेति भावः । साधुत्वमात्रेति—'न केवला प्रकृतिः प्रयोक्तव्या' इति न्यायेन क्रियमाणा विभक्तिर्विशेष्यवाचकप्रकृतिकविभक्तिसजातीयैव विभक्तिर्न्तुमुचिता । अन्यथा अभेदान्वयबोधो न स्यात्, अभेदान्वयबोधे विरुद्धविभक्तिराहित्यादेः कारणत्वात् । उत्पलसदृशशराणामिति—त्रिपदो द्वन्द्वः । समानाधिकरणपदेति—'उत्पले' 'इव' 'शरैः' इति विरुद्धविभक्तिरहितपदैरुपस्थापितत्वेनाभेदान्वय एव स्यान्नतु भेदान्वय इति भावः । भेदेनान्वयेति—उत्पलपदार्थस्य प्रतियोगित्वसम्बन्धेन

दर्पणव्याख्या

ऽन्वयेऽनन्वयप्रसङ्गचेत्यर्थः । निपातत्वादिति यावत् । तत्र कारकानन्वयितावच्छेदकरूपेणोपस्थितेऽर्थे नैराकाङ्क्ष्यात् कारकान्वयासम्भवेन तदर्थकतृतीयाया असम्भवादिति भावः । *सम्भवे वेति* । वाकारोऽनास्थायाम् । अव्यये वदाब्दस्य प्राप्त्यर्थत्वात्तदभ्युपगमे तु तता विभक्तेस्तच्छ्रवणस्य च दुर्निवार्यतैव स्यादिति दूषणान्तरमाह—*उत्तरपदोत्तरेति* । *अनन्वयप्रसङ्गादिति* वाचकतावादिमत इति शेषः ।

इदमुपलक्षणम्, तृतीयाऽनुपपत्ते । उत्पलस्यैवार्थसदृशान्वये उद्धरणकरणत्वस्य तत्राभावात् । अस्मन्मते तूत्पलसदृशोत्पलार्थस्य करणत्वान्न तदनुपपत्तिरिति भावः । तदुत्तरं सुब्व्यतिरिक्तप्रत्ययश्रवणत्वापत्त्यभावेन समुच्चेयासम्भवमाशङ्क्य चकारस्यान्वयारम्भं इत्याह—*सुपां श्रवणाच्चेति* । चकारसमुच्चेयं दर्शयति—*उत्तरपदोत्तरतृतीयेति* । तृतीयायास्तदर्थस्य अनन्वयमेव स्पष्टयति—*उत्पलसदृशेत्यादि*—तत्पदार्थानामित्यर्थः । *भेदेनान्वयेति* सामानाधिकरण्यमात्मार्थवत्तिसुप्समुच्चयेरिति भाव ।

बाधादभेदेनापि न सः । नह्युत्पलाभिन्नसदृशाभिन्नः शर इत्यर्थो द्रष्टव्यः ॥ ४५ ॥

प्रभा

सदृशपदार्थैकदेशे सादृश्ये, सादृश्यस्य च स्वनिष्ठानुयोगितासम्बन्धेनान्वयो बाधित इत्यर्थः । तथाच 'घन-
श्यामः' इत्यादौ घनपदं स्वसदृशे लाक्षणिकम् । अत एवोत्तरपदार्थेऽभेदेनान्वयात् कर्मधारयसमास-पुंवद्-
भावौ सिद्धौ । नच घनपदस्य सदृशपरत्वे सदृशस्योपमेयत्वेनोपमानवाचकत्वानुपपत्तिः, स्वतन्त्रप्रयोगमादाय
भूतपूर्वगत्या उपमानवाचकत्वव्यवहारात्, सदृशपरत्वेऽपि विशेषणीभूतघनमादाय तथात्वाच्च । द्योत्यस्यापि
सदृशस्यानुभववशाद् विशेष्यतया भानम् । उत्पलाभिन्नेति—उत्पलाभिन्नः सदृशः उत्पल एवेति तस्य शरे, शरः उत्पला
नेति भेदसत्त्वादभेदान्वयोऽपि बाधित एवेति भाव. । इवशब्दस्य द्योतकत्वे तु उत्पलप्रतियोगिकसादृश्यविशिष्टा-
भिन्नः शर इति बोधः । परे तु केषाञ्चिन्निपातानां द्योतकत्वम् । अत एव नेत्यनेनाभावबोधः, कस्याभाव इत्या-
काङ्क्षा च सङ्गच्छते । अत एव 'आनो दिवः पर्वतात्' इत्यादौ 'आ' इत्यस्यार्वागित्यर्थेन दिग्योगलक्षणा
पञ्चमीति निरुक्ते उक्तम् । किञ्च द्योत्यस्य विशेषणत्वमेव । अत एव 'स्त्रियाम्' इति सूत्रे वाचकतापक्षे
स्त्रीत्वस्य प्राधान्यमाशङ्क्य द्योत्यत्वेन समाहितं भाष्ये । 'हेतुमति च' इत्यत्रापि भाष्ये प्रकृत्यर्थविशेषणाय
णिचो द्योतकत्वमुक्तम् । हरिणाप्युक्तम्—

निपाताः द्योतकाः केचित् पृथगर्थाभिधायिनः ।
आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः ॥

इति । अत एव 'चतुष्टयी शब्दानां प्रवृत्तिः, नामाख्यातोपसर्गनिपाताः' इति भाष्ये उक्तम् । एवञ्च द्योत्यार्थस्य
विशेषणत्वनियमेन 'उत्पलसदृशैः शरैः' इति बोधोऽपि न युक्तः । किञ्च 'सदृशपरत्वे उपमानवाचकत्वाभा-
वात्' 'उपमानानि सामान्यवचनैः' (२।१।५४) इति समासानुपपत्तिः । विग्रहेऽपि सदृशपरत्वेन भूतपूर्व-
गत्याऽपि न निर्वाहः । 'घनेन तुल्यम्' इति तु न विग्रहः, 'मृगीव चपला' इत्यर्थे मृगचपला इत्यादौ पुंवत्वा-
नापत्तेः । केवलघनादिशब्दप्रयोगे 'घनः' इत्यादावुपमानवाचकत्वस्य दुर्वचतयाऽपि भूतपूर्वगतिरयुक्तैव ।
किञ्च 'घनश्यामः' इत्यादौ श्यामस्योपमेयेऽन्वयेनोपमेयमात्रवाचकतयोपमानोपमेययोः साधारण-
धर्मवाचकत्वानुपपत्तिः । अत एव भाष्ये उक्तम्—'यदि शस्त्रीव श्यामा देवदत्ता' इति विग्रहस्तदा
'शस्त्र्यां श्यामेत्येतदपेक्ष्यं स्यात् । अयं भावः—श्यामापदार्थस्य देवदत्तायामेवान्वयेन शस्त्र्यां श्यामत्वं न
प्रतीयेत, इति तत्र 'श्यामा' इत्यध्याहारेण योजनीयं स्यादिति । यदि यथा शस्त्री श्यामा तद्वद्देवदत्तेति
विग्रहस्तदा देवदत्तायां श्यामेत्येतदपेक्ष्यं स्यात्' इति । एवम् 'तस्यामेवोभयं वर्तते' इति भाष्ये सिद्धान्तितम् ।
तस्यामेव=उपमेयायां देवदत्तायामेव । उभयम्=पूर्वपदमुत्तरपदञ्च । सादृश्यमूलकाभेदाध्यवसायादुपमान-

दर्पणव्याख्या

सादृश्यस्य भेदघटितत्वादिति भावः । अत्रेदं बोध्यम्—
ननु तर्ह्यभेदान्वयस्तत्र स्यादत आह—*बाधादिति* समानविभक्तिकत्वस्य—
वाचकतापादिना इवादिना सादृश्यादिबोधने पर्युदासनञिवानुयोगिप्रतियोगिवाचकपदयोः

लिङ्गसङ्ख्याविभेदेऽप्यस्तूपमानोपमेयता ।
विभक्तिः पुनरेकैवमुपमानोपमेययोः ॥

उत्पलनिरूपितसादृश्याभयशरकरणकोद्धरणबोध-
इति अनुशासनसिद्धाया नियामकताया अभ्युपगमेन प्रकृते
प्रसादः । भेदाभेदयोर्विकल्पस्योपन्यासस्तु सारकारोक्तश्चिन्त्य एवेति ॥ ४५ ॥

ननु त्वन्मते 'अब्राह्मणः' इत्यादौ तत्पुरुषलक्षणाव्याप्त्यापत्तिः, पूर्वपदस्यानर्थकत्वेनोत्तरपदार्थप्राधान्याभावात् । उपसर्गस्यार्थवत्त्वाभावेन प्रातिपदिकत्वाभावाद्विभक्तिश्च ततो न स्यादित्यत आह—

नञ्समासे चापरस्य द्योत्यं प्रत्येव मुख्यता ।
द्योत्यमेवार्थमादाय जायन्ते नामतः सुपः ॥ ४६ ॥

नञ्समासादौ योत्तरपदार्थप्रधानता सा द्योत्यमर्थमादायैव । तमेवार्थमादायार्थवत्त्वात् प्रातिपदिकत्वमित्यर्थः ।

वस्तुतः "अव्ययादाप् सुपः" ( पा० सू० २ । ४ । ८२ ) इति ज्ञापकात् सुबुत्पत्तिः ।

प्रभा

वाचकस्याप्युपमेयपरत्वम् । साधारणधर्मत्वनिर्वाहाय तन्त्रादिना उभयत्र सम्बन्धः । तदुक्तं कैयटे 'एवञ्चोपमेये श्रुतः कथमुपमानं न संस्पर्क्ष्यति' इति । भाष्येऽपि 'श्यामत्वस्योभयत्र भावादुभयगुणवाचकत्वाच्च श्यामशब्दस्य सामान्यवचनत्वम्' इति । एवञ्च 'घनश्यामः' इत्यनेन उपमानश्यामघनाभिन्नः श्यामो देवदत्त इति बोधः । समासे तु एकार्थीभावात्तथाबोधः । नचैवं 'पुरुषो व्याघ्र इव शूरः' इत्यत्राप्युभयत्र सम्बन्धाद् विशेषणस्यापि सविशेषणत्वेन सविशेषणानां वृत्तिर्नेति समासाप्राप्त्या 'सामान्याप्रयोगे' इत्यस्य वैयर्थ्यम् । साधारणधर्मवत्त्वेनेतरसापेक्षत्वरूपोपमानत्वस्य साधारणधर्मांशे नित्यसापेक्षत्वेनादोषात्, सामान्याप्रयोगे ग्रहणाज्ज्ञापकात्सापेक्षत्वेऽपि समासस्वीकाराच्च अत एव 'राजपुरुषो धनी सुन्दरश्च' इत्यादि सिध्यति । तथाच सापेक्षत्वराहित्यं न समासप्रयोजकम्, किन्तु गमकत्वमेव तादृशार्थविषयकबोधजनकत्वमेव । शब्दशक्तिस्वभावात्क्वचिदेव गमकत्वमिति 'ऋद्धस्य राजपुरुषः' इत्यत्र गमकत्वाभावात् समासासाधुत्वम् । त्वन्मते=द्योतकत्ववादिमते । 'अब्राह्मणः' इत्यत्र उत्तरपदस्यैवारोपितब्राह्मणत्ववदर्थकतयाऽन्यपदार्थनिरूपितविशेष्यताया उत्तरपदार्थेऽभावेन तादृशव्यवहारानुपपत्तिरिति भावः । उपसर्गस्येति—द्योतकमात्रस्योपलक्षणमिदम् । अर्थवत्त्वाभावेनेति—उपसर्गाणां द्योतकत्वादिति भावः । द्योत्यार्थमिति—इतरपदार्थनिष्ठप्रकारतानिरूपितविशेष्यताशालिबोधजनकत्वमुत्तरपदार्थप्रधानत्वम् । तत्रेतरपदार्थपदेन वाच्य-लक्ष्य-द्योत्यात्मकस्त्रिविधोऽपि अर्थो गृह्यते । प्रकृते 'अब्राह्मणः' इत्यादावारोपितरूपद्योत्यार्थे प्रकारतायाः सत्त्वान्न दोष इति भावः । प्रातिपदिकत्वमिति—द्योतकत्वं व्यञ्जनैवेति वृत्त्याऽर्थविषयकबोधजनकत्वरूपार्थवत्त्वस्य द्योतकेऽपि सत्त्वात्प्रातिपदिकत्वमक्षतमेवेति भावः । व्यञ्जनारूपवृत्त्यन्तरस्यास्वीकारेऽप्याह—वस्तुतस्त्विति । ज्ञापकादिति—

दर्पणव्याख्या

*उत्तरपदार्थप्राधान्याभावादिति* प्राधान्यस्यान्यनिरूपितत्वनियमात् । *द्योत्यार्थमिति* द्योतकतावृत्त्युपस्थापितार्थमित्यर्थः *तमेवेति* । द्योत्यमेवेत्यर्थः । *अर्थवत्त्वादिति* अयं भावः—द्योतकताया अपि वृत्तित्वेन तयाऽर्थवत्त्वस्य द्योतकेऽप्यक्षततया तन्निबन्धनप्रातिपदिकसंज्ञानुपपत्तिः । नहि शक्तिलक्षणान्यतरदेवार्थोपस्थापकमिति नियमोऽस्तीति ।

ननु शब्दादुपस्थितसामान्यस्य विशेषे पर्यवसायकत्वं द्योतकत्वम्, ननु तदुपस्थानत्वमेवेति न तदादायार्थवत्त्वसम्भवोऽत आह—*वस्तुतस्त्विति* । *ज्ञापकादिति* द्योतकत्वादे तेषामनर्थकत्वादेव सुपः प्राप्त्यभावे लुग्विधानमनर्थकत्वे सुबुत्पत्तौ ज्ञापकमिति भावः ।

महाराहारसंहारविहारपरिहारवत् ॥ इति ]॥

अत्रोपसर्गपदं निपातोपलक्षणम् । धातुपदं पदान्तरस्येति बोध्यम् ॥ ४६ ॥

नन्वन्वयव्यतिरेकाभ्यां निपातानां तत्तदर्थवाचकत्वमेव युक्तम्, बोधकतारूपशक्तेरबाधात् । किञ्चोक्तरीत्या 'पचति' इत्यादौ धातोरेव कर्तृविशिष्टभावनायां लक्षणाऽस्तु तात्पर्यग्राहकत्वमात्रं तिङादेः—स्यादित्यरुचेः पक्षान्तरमाह—

प्रभा

ननु 'उपसर्गेण' इति वृद्धोक्तावुपसर्गमात्रस्योपादानं विरुद्धमित्यत आह—अत्रोपसर्गेति । लिखितपुस्तकेषु 'वृद्धोक्तावुपसर्गपदम्' इति पाठः । धातुपदमिति—कारिकायां 'धात्वर्थे' इत्यत्रोपात्तं धातुपदमित्यर्थः । नन्वधिकरणवार्तिके उपसर्गनिपातयोरपि सुबन्तत्वात् सुबन्तबोधकनाम्न पृथग्ग्रहणं व्यर्थमिति चेन्न, लिङ्गाद्यन्वय्यर्थप्रतिपादकं हि नामेत्यभिप्रायेण पृथगुपादानात् । उपसर्गाणां निपातत्वेऽपि पृथगुपादानं गोबलीवर्दन्यायेन । ननु सामान्यविशेषवाचिनां द्वन्द्वस्य भाष्याद्यसम्मततया गोरस्य बलीवर्देऽपि सत्त्वेन गोबलीवर्देति द्वन्द्वोऽसङ्गत इति चेन्न, गवा सहितो बलीवर्द इत्यर्थकत्वेनादोषात् । पदान्तरस्य='चन्द्र इव मुखं दृश्यते' इत्यादौ चन्द्रादिपदस्य ॥ ४६ ॥

द्योतकतापक्षं समर्थ्य वाचकत्वपक्षं समर्थयते—नन्विति । 'चन्द्र इव मुखं दृश्यते' इत्यादाविवादिसमभिव्याहारे तेषामर्थाः प्रतीयन्ते, तदभावे तु न इत्येवमन्वयव्यतिरेकाभ्यामित्यर्थः । निपाता वाचकाः, स्वसमभिव्याहारप्रयोज्यार्थप्रतीतिकत्वात् । ननु पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकव्यापकत्वं हेतावपेक्षितं, तच्चानर्थकनिपाते निपातत्वस्य सत्त्वाद्धेतोश्चासत्त्वात्, पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभावरूपभागासिद्धिरिति चेन्न, पक्षतावच्छेदकसामानाधिकरण्येनैवानुमितेरिष्टत्वात्, तत्र च भागासिद्धेरदोषात् । ननु निपातेषु ईश्वरेच्छारूपशक्तौ मानाभाव इत्यत आह—बोधकतेति—तथाच बोधकतारूपशक्तावनुभव एव प्रमाणमिति भावः । नन्वन्वयव्यतिरेकौ तात्पर्यग्राहकत्वेनाप्युपपन्नावित्यत आह—किञ्चेति—'प्रजयति' इत्यत्र प्रकर्षविशिष्टो जयो जिधातोरेवार्थः । प्रादीनान्तु तात्पर्यग्राहकतयोपयोग इत्युक्तरीत्येत्यर्थः । यदि चान्वयव्यतिरेकाभ्यां तिङां वाचकत्वमभिमतं तर्हि ताभ्यामेव निपातानामपि वाचकत्वमभ्युपेयमिति भावः । तिङादेरिति—आदिना कृताम्, सनादेश्च सङ्ग्रहः ।

दर्पणव्याख्या

निष्ठप्रकारतानिरूपितविशेष्यताशाल्यर्थकत्वरूपपारिभाषिकनामत्वमादाय तथोक्तम् । उपसर्गाणां निपातत्वेऽपि तदुपादानन्तु ब्राह्मणवसिष्ठन्यायेनेति बोध्यम् । ननु 'उपसर्गेण धात्वर्थ' इत्यत्र निपातत्वव्याप्योपसर्गत्वेन प्रादीनामुपादानात् कथं चादीनां द्योतकत्वे उपष्टम्भकमत आह—*उपसर्गपदमिति* । *पदान्तरेति*—'चन्द्र इव मुखम्' इत्यादावर्थकत्वेन चन्द्रादिनामार्थकमित्यर्थः । एवञ्च न सर्वेषां निपातानां वाचकत्वमिति भ्रमितव्यमिति भावः ॥ ४६ ॥

इदानीं वाचकतापक्षं परिष्करोति—*नन्विति* । *अन्वयव्यतिरेकाभ्यामिति* । 'चन्द्र इव मुखम्' इत्यादाविवादिनिपातसत्त्वे सादृश्याद्यर्थप्रतीतेस्तदसत्त्वे तदप्रतीतेश्च निपातानां घटादिपदवद्वाचकत्वमेव युक्तमित्यर्थः । नन्विच्छादिरूपशक्तेरभावात् कथं तेषां वाचकत्वमत आह—*बोधकतारूपेति* तथाच तदर्थबोधकत्वमेव तद्वाचकत्वमिति तेषामपि घटादिपदवद्वाचकत्वमेवेत्यर्थः ।

नन्वन्वयव्यतिरेकयोस्तदर्थतात्पर्यग्राहकत्वेऽप्युपपत्तेः प्रागभिहितत्वान्न तयोर्वाचकताप्रयोजकत्वमत आह—*किञ्चेति* । *उक्तरीत्येति* धात्वर्थस्यैव शब्दार्थतया 'प्रजयति' इत्यादौ प्रकृष्टजयस्य लक्षणया जिधातोरेवोपस्थितौ न प्रादीनां वाचकत्वम्, तेषां तात्पर्यग्राहकतयैवोपयोगादित्युक्तरीत्येत्यर्थः । *तिङादेः स्यादिति* तत्रान्वयव्यतिरेकाभ्यां

प्रभा

नच कृतां द्योतकत्वे सर्वानुभवविरुद्धं तदर्थस्य विशेषणत्वं स्यादिति वाच्यम्, अनुभवानुरोधात् 'सत्त्व-प्रधानानि नामानि' इति निरुक्तवचनाच्च द्योत्यस्यापि कृदर्थस्य विशेषणत्वमित्याशयात्। एवं सत्तादावपि बोध्यम्। परेतु–सुप्तिङां द्योतकत्वमिष्टमेव। अत एव 'पञ्चकं नामार्थः' 'पञ्चकं धात्वर्थः' इति प्रवादोऽप्युपपद्यते। अत एव 'पच' 'अजर्घाः' 'अचकात्' इत्यादौ तिङोऽभावेऽपि कर्त्राद्यर्थप्रतीतिः। लुप्तविभक्तिस्मरणाद् बोध इति तु न युक्तम्, 'प्रत्ययलोपे' इति सूत्रस्य प्रत्ययनिमित्तककार्यमात्रफलकत्वं वदता भाष्यकृता तत्पक्षस्य तिरस्कृतत्वध्वननात्। अत एव कर्त्राद्यर्थानां विशेषणत्वम्, धात्वर्थस्य विशेष्यत्वञ्च सङ्गच्छते। यत्र तद्धिताद्ौ प्रत्ययस्य वाचकता तत्र तदर्थस्य विशेष्यताया दृष्टत्वात्। नच वाचकताबोधकस्य 'लः कर्मणि च' इत्यादि-सूत्रस्य विरोधः, कर्तृकर्मविषयाद्धातोर्ल इत्येवं व्याख्यानेनादोषात्। अत एव 'भावे' इत्यनेन साहश्यम्। तत्र धातुनैव भावस्योक्ततया भावार्थविषये वर्तमानाद् धातोरित्यर्थस्यैवौचित्यात्। नच यत्र कर्तृकर्मणोः प्रती-तिस्तत्रापि भावे प्रत्ययापत्तिरिति वाच्यम्, सकर्मकेभ्य' कर्मणीति विशेषानुवादेन विहितत्वाद् भावे कारानभ्युपगमात्। पञ्चकस्य धात्वर्थत्वादेव 'भावकर्मणोः' 'शेषात्कर्तरि' 'द्व्येकयोः' इत्यादीनां नियमा-त्वपरं भाष्यमुपपद्यते इत्याहुः,

तन्न, यत्र धातोर्न श्रवणम्, किन्तु प्रत्ययमात्रस्यैव 'व्यतिसे' इत्यादौ तत्रापि कर्त्राद्यर्थप्रतीत्या तिङां द्योतकत्वासम्भवात्। तत्र यदि धातुस्मरणेन कर्त्रादिप्रतीतिश्चेत्तर्हि यत्र प्रत्ययस्य लोपे धातुमात्रस्य श्रवणं तत्र लुप्तविभक्तिस्मरणेन कर्त्रादिप्रतीतिर्वाच्येति तुल्ययोगक्षेमत्वात्तिङां वाचकत्वसिद्धेर्निष्प्रत्यूहत्वात्। अत एव स्वोत्तरतिङ्वाच्यकर्त्राद्यर्थगतद्वित्वारोपेण द्विवचनादीनि द्योतकत्ववादिनस्तयोरितिः सङ्गच्छते। नच कर्त्रादेस्तिङ्वाच्यत्वे 'प्रकृतिप्रत्ययौ' इति न्यायेन प्राधान्यापत्तिः, 'भावप्रधानमाख्यातम्' इत्यनेनौत्सर्गिकस्य तस्य बाधात्। अपिच 'प्रविश' इत्यत्र यथा श्रूयमाणस्य प्रविशेत्यस्य गृहं प्रविशेत्यर्थे शक्तिस्तथा 'अजर्घाः' 'अचकात्' इत्यादौ प्रत्ययलोपेऽपि श्रयमाणस्य कर्त्रादिविशिष्टे शक्तिरस्तु, वाक्यैकदेशन्यायात्। यथा 'प्रविश' इत्यस्य गृहं ग्रामं सभां वा प्रविशेत्यर्थेऽपि 'प्रविश' इत्यस्य न त्रिलिङ्गवाचकत्वम्, तथा भावधातु-मात्रात्कर्त्राद्यर्थस्य प्रतीतावपि धातुर्न तेषां वाचकः, अपि तु प्रत्यय एवेति न तन्मते लोपसम्भावनाऽपि, इति दिक्।

दर्पणव्याख्या

कर्त्रादिवाचकत्वावधारणे तु प्रादीनामपि वाचकत्वनिवृत्तिरिति भावः। परे तु "अजर्घाः" "अचकात्" इत्यादौ धातुमात्रात् कर्त्रादिबोधेन तिङां द्योतकत्वे इष्टैवापत्तिः।

नच तत्र लुप्तविभक्तिस्मरणाद् बोधः। लोपमजानतोऽपि बोधात् प्रत्ययलक्षणस्य लोपफलत्वं वदता भाष्यकृता लुप्तविभक्तिस्मरणाद् बोधस्यानभ्युपगमाच्च। यत्र प्रत्ययस्य वाचकता तत्रैव प्रकृतिप्रत्ययार्थयोः, इति नियमाशयः। यथा—'पाचकः' इत्यादिकृदन्ते। "लः कर्मणि" (पा० सू० ३।४।६९) इत्यादौ कर्मकर्तृविषयाद्धातोरित्यर्थेन तद्विरोधः, "भावे" इत्यस्य सर्वैस्तथैव व्याख्यानात्। भावविषयात्' इत्यस्य केवलविधानमात्रबोध-

नच सर्वत्रैव धातोर्भावनाविषयत्वात्तत्रैव लकारः स्यादिति वाच्यम्, 'भावविषयात्' इत्यस्य केवलविधानमात्रबोध-कादित्यर्थेनादोषात्। अत एव "भावकर्मणो" (पा० सू० १।३।१३) "शेषात् कर्तरि परस्मैपदम्" (पा० सू० १।३।७८) 'द्व्येकयोः" (पा० सू० १।४।२२) इत्यादीनां नियम इति भाष्यकृदुक्तिसङ्गतिः। तेषामनिर्दिष्टार्थत्वेन "अनिर्दि-ष्टार्थाः स्वार्थे भवन्ति" इति न्यायेन सर्वत्र सिद्धत्वादित्याहुः।

तच्चिन्त्यम्, 'व्यतिसे' इत्यादौ धातु विनापि कर्तृबोधेनाद्ययुक्तेः बोधेत्यात्, तुल्ययुक्त्या लुप्तानि द्योतकत्वाच्चे-

निपातानां वाचकत्वमन्वयव्यतिरेकयोः ।
युक्तं वा नतु तद्युक्तं परेषां मतमेव नः ॥ ४७ ॥

एवञ्च 'धात्वर्थप्रातिपदिकार्थयोर्भेदेनान्वयबोधो न व्युत्पन्नः' इति निपातातिरिक्तविषयः। समानाधिकरणप्रातिपदिकार्थयोरभेदान्वय इत्यपि तथेत्यगत्या कल्पनीयमिति भावः। नत्विति— नैयायिकोक्तं प्रादि—चाद्योर्वैषम्यमित्यर्थः।

यत्तु—सर्वेषां निपातानां वाचकत्वेऽर्थवत्सूत्रेणैव तेषां प्रातिपदिकत्वसम्भवात् "निपातस्यानर्थकस्य" इति विधिर्वैयर्थ्यम्।

प्रभा

अन्वयव्यतिरेकयोरिति—अस्य 'सतोः' इति शेषः। अन्वयव्यतिरेकयोः सतोर्निपातानां वाचकत्वं युक्तं वा=युक्तमेव। वाशब्द एवार्थे। तत्=प्रादिचाद्योर्वैषम्यं नतु युक्तम्। परेषां यन्मतं तदेव नः=अस्माकं वैयाकरणानाम्। वाचकत्वं द्योतकत्वं वा। परन्तु वैषम्यं नतु युक्तम्, अर्द्धजरतीयस्यानौचित्यादिति भावः। एवञ्च=निपातानां वाचकत्वे च। तथा=निपातातिरिक्तविषयः। इतरे दोषाः प्रागुद्धृता एव। सकर्मकत्वं स्वस्वयुक्तनिपातान्यतरार्थेत्यादिपूर्वोक्तं बोध्यम्। प्रत्ययानां प्रकृतिसमभिव्याहृतनिपातप्रकृत्यन्यतरार्थान्वितस्वार्थबोधकत्वं वाच्यम्। अत एव 'प्रतिष्ठते' इत्यत्रोपसर्गस्य गतिवाचकत्वेऽपि न क्षतिः। उपसर्गस्य फलमात्रवाचकत्वं धातोर्व्यापारवाचित्वमिति स्वीकारे तु प्रत्ययार्थस्य प्रकृत्यर्थे एवान्वयात् पूर्वव्युत्पत्तौ अन्यतरार्थेति निवेशस्य नावश्यकत्वम्। एवं नामार्थप्रकारकभेदसंसर्गकबोधं प्रति प्रत्ययनिपातान्यतरजन्योपस्थितेः कारणत्वं वाच्यम्। नच गौरवम्, उक्तरीत्या वाचकत्वे स्थिते गौरवस्यागत्या सोढव्यत्वात्। अत एव 'न' इत्येतन्मात्रेणाभावविषयको बोधः, पदान्तरसमभिव्याहाराभावेन द्योतकत्वासम्भवात्। ननु सकलनिपातानां वाचकत्वे केवलानामपि प्रयोगापत्तिरिति चेन्न, गत्युपसर्गयोः 'ते प्राग्धातोः' इति नियमेन केषाञ्चित् केवलप्रकृतिप्रत्ययवदुपपत्त्या केवलानां प्रयोगाभावात्। नेत्यादीनां केषाञ्चित्तथात्वस्येष्टत्वाच्च। तदुक्तं हरिणा—

प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते।
समुच्चयाभिधानेऽपि व्यतिरेको न विद्यते॥

दर्पणव्याख्या

द्वौतौ द्विवचनाद्यनुपपत्तेश्च, प्रत्ययलक्षणस्य लोपफलत्वेऽपि लुप्तविभक्तिस्मरणमन्वयबोधस्य फलत्वाभ्युपगमे बाधकाभावाच्च। स्तोत्रर्तिद्वाच्यकर्त्रादिगतद्वित्वारोपेण द्विवचनादिरिति स्तोकविरोधाच्च।

भवदुक्तरीत्यैव कर्तृविशिष्टभावनावाचकात्, कर्मविशिष्टभावनावाचकात्, केवलभावनावाचकाच्च धातोर्लकारा भवन्तीत्यर्थे लः कर्मणीत्यर्थपर्यवसानेन 'अनिर्दिष्टार्थाः' इति न्यायेनापि तत्तत्कारकादिविशिष्टभावनार्थकाना तिङा सर्वत्र सिद्धसम्भवेन नियमस्यान्यथैव सङ्गमनीयत्वादित्यन्यत्र विस्तरः।

ननु निपातानां वाचकत्वे 'घटो न पटः' इत्यादौ घटादेः प्रतियोगितया नञर्थाभावे तस्य चाऽश्रयतया घटादावन्वयोऽनुपपन्नः। भेदसम्बन्धेन प्रातिपदिकार्थप्रकारकबोधे विशेष्यतया प्रत्ययजन्योपस्थितेर्हेतुतायाम् "नामार्थयोर्भेदेनान्वय" इति व्युत्पत्तिविरुद्धत्वात्, एवं "समानाधिकरणनामार्थयोः" इति व्युत्पत्तेरभेदान्वयापत्तिश्चेत्यत आह—*एवञ्चेति*।
* विधिर्वैयर्थ्यमिति * तादृशवार्त्तिकेन प्रातिपदिकसंज्ञाविधानवैयर्थ्यमित्यर्थः।

सर्वेषां द्योतकत्वे "चानर्थकस्य" इति व्यर्थम्। तथाच केचिद् द्योतकाः, केचिद्वाचका इत्य-
भ्युपेयमिति, तन्न, एवं हि 'चादयो द्योतका प्रादयो वाचकाः' इति वैपरीत्यावारणात्। सर्वथानर्थकानां
पादपूरणमात्रार्थमुपात्तानां संग्रहाय वार्त्तिकारम्भस्य कैयटादौ स्पष्टत्वात्, तस्य प्रत्याख्यातत्वाच्च।
'परेषाम्' इति बहुवचनं मीमांसकसंग्रहाय। केवलघटशब्दात् समुच्चयाबोधाच्चकारश्रवणे तद्-
बोधाच्चकार एव तद्वाचकः, न द्योतकः। किञ्च द्योतकत्वे पदान्तराणां तत्र शक्तिः कल्प्या,
चकारादेर्द्योतकत्वशक्तिश्च कल्प्येति गौरवं स्यादिति हि समुच्चयाधिकरणे स्थितम्, तदपि न
युक्तमिति भावः।

तथाहि—अन्वयव्यतिरेकौ तात्पर्य्यग्राहकत्वेनाप्युपयुक्तौ। घटादिपदानामेव समुच्चिते
लक्षणा, तात्पर्य्यग्राहकः प्रकरणादिवच्चादिरिति स्वीकाराच्च शक्तिद्वयकल्पनाऽपि। अस्माकं लक्षणा-
ग्रहदशायां बोधात्तत्कार्य्यकारणभाव आवश्यकः। एवं शक्तिग्रहस्यापीति पक्षद्वयेऽपि कल्प्यान्त-
राभावेन गौरवाभावादुभयमपि युक्तमित्यभिमतम्।

प्रभा

इति। 'शोभनः समुच्चयः' इतिवत् 'शोभनश्च' इत्यस्य, 'घटस्य समुच्चयः' इतिवत् 'घटस्य च' इत्यस्य चाप-
त्तिस्तु न, शब्दशक्तिस्वभावेन नित्यपरतन्त्रतया इतरविशेषणत्वेनैव स्वार्थोपस्थापकत्वात्, षष्ठ्यर्थसम्बन्ध-
बोधम्प्रति, भेदेनान्वयबोधम्प्रति च चादिनिपातेतरजन्योपस्थितेरेव हेतुत्वाच्च। व्यर्थमिति—द्योतकत्वपक्षे
सर्वेषामेव निपातानामनर्थकतया व्यावर्त्त्यालाभादिति भावः। प्रत्याख्यातत्वादिति—'अधिपरी अनर्थकौ'
इत्यस्यानर्थकस्यापि निपातस्यार्थवत्कृतं कार्यं भवतीत्यर्थे व्यापकतामाश्रित्य प्रत्याख्यातत्वादित्यर्थः। मीमांस-
केति—मीमांसकानां भाष्यकारादिभेदेन नानात्वाद् बहुवचनमिति भावः। शक्तिद्वयेति—घटादेर्निपातानाञ्च
पृथक्शक्तिद्वयकल्पनाऽपीत्यर्थः। अस्माकम्=वाचकत्वद्योतकत्वोभयस्वीकर्तॄणाम्। तत्तत्कार्यकारणभाव=समुच्चित-
घटादिविषयकबोधम्प्रति घटादिपदनिष्ठलक्षणाज्ञानत्वेन कार्यकारणभावः। शक्तिग्रहस्यापीति—यथा घटादि-
विषयकशाब्दबोधम्प्रति घटादिपदनिष्ठशक्तिज्ञानत्वेन हेतुत्वम्, तथा समुच्चितविषयकशाब्दबोधे समुच्चितविष-
यकशक्तिज्ञानत्वेन कारणत्वमित्यनुभवानुरोधेन सममेवेति भावः।

दर्पणव्याख्या

(* अनर्थकस्येति *) *व्यर्थमिति* व्यभिचाराभावेन तस्य विशेषणत्वायोगादिति भावः। *प्रत्याख्यातत्वादिति*
"कृत्तद्धित" (पा० सू० १।२।४६) इत्यत्र चशब्देनैव तदर्थस्य समुच्चितत्वादिति भावः।
वक्ष्यमाणास्वरसादाह—*किञ्चेति* प्रकरणादिवदित्यनेन द्योतकताया वृत्तित्वाभावो ध्वन्यते। *अस्माकमिति*
पक्षद्वयाभ्युपगन्तॄणामित्यर्थः। *कार्य्यकारणभाव इति* समुच्चितघटादिशाब्दबोधे घटपदनिरूपितलक्षणाज्ञानत्वेन
हेतुतेत्याकारक इत्यर्थः। *शक्तिग्रहस्यापीति* घटाद्यर्थबोधे घटशक्तिज्ञानस्य, समुच्चयादिबोधे तच्छक्तिज्ञानस्य
हेतुतेत्याकारकः कार्य्यकारभावोऽप्यावश्यक इत्यर्थः।
*कल्प्यान्तराभावेनेति* द्योतकतापक्षे वाचकतापक्षेऽपि तत्तत्पक्षसाधककल्पनीयाभावेनेत्यर्थः।

-अत एव । "स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा" ।

इति वाक्यपदीयं सङ्गच्छते । दर्शनान्तररीत्या वाचकत्वमेव द्योतकत्वमेवेति नियमस्तु न युक्त इति ध्वनयन्नाह—'मतमेव नः' इति ॥ ४७ ॥

पर्य्यवसितमुपसंहरन्नाह—

निपातत्वं परेषां यत्तदस्माकमिति स्थितिः ।
व्यापकत्वाच्छक्ततायास्तवच्छेदकमिष्यते ॥ ४८ ॥

परेषां यन्निपातत्वम्—असत्त्वार्थकत्वे सति चाऽऽदिगणपठितत्वम्, शक्तिसम्बन्धेन निपातपदवत्त्वञ्च । जातिर्वा,

प्रभा

अत एव=पक्षद्वयेऽपि युक्तेः साम्यादेव । सः=उपसर्गः । द्योतकत्वमेवेति—निपातानामिति शेषः ॥ ४७ ॥

एतावता प्रपञ्चेन पक्षद्वयव्युत्पादनाद् यत्कृतं तद्भ्रानमोहनिवृत्तयेऽवतरणप्रदर्शनव्याजेनाह—'पर्य्यवसितमिति फलितमित्यर्थः । परेषाम्=अन्येषां वैयाकरणादीनामित्यर्थः । तत्=निपातत्वम् । अस्माकम्=वैयाकरणानाम् । स्थितिः=मर्यादा । 'चादयोऽसत्त्वे' इति सूत्रार्थानुसारेणाह—असत्त्वार्थकत्व इति—लिङ्गान्वयित्वम्, विशेष्यतया तद्भिन्नार्थप्रतिपादकमसत्त्वार्थकम् । नचैवं घटादिशब्दस्याप्यसत्त्वार्थकत्वापत्तिः, पुंस्त्वत्वेन पुंस्त्वस्योपस्थापकतया तादृशार्थप्रतिपादकस्य सत्त्वादिति वाच्यम्, विशेष्यतापदेन शाब्दबोधीयमुख्यविशेष्यताया ग्रहणात् । तथाच प्रादीनां चादीनाञ्च सत्त्वार्थकतया निपातत्वमुपपन्नम् ।

ननु 'चादयोऽसत्त्वे' इति सूत्रे 'असत्त्वे' इत्यस्य प्रसज्यप्रतिषेधपक्षे वाक्यद्वयं कल्पनीयम्—'चादयो निपातसञ्ज्ञकाः' इत्यर्थकम्—'चादयः' इत्येकम्, 'सत्त्वेऽर्थे चादयो न निपातसंज्ञकाः' इत्यर्थकम्—'असत्त्वे' इत्यपरम्, इति वाक्यभेदः, प्रतिषेधार्थकनञः क्रियायामन्वयेन सत्त्वेन सहानन्वयादसमर्थसमासः, निषेधेन शास्त्रबाधश्चेति दोषत्रयसत्त्वात्पर्युदास एवाश्रयणीयः । एवञ्च 'असत्त्वे चादयो निपातसञ्ज्ञकाः' इत्यर्थे सर्वथाऽनर्थकेषु चादिषु निपातसञ्ज्ञानापत्तिरत आह—शक्तिसम्बन्धेनेति—नैयायिकानां मते ईश्वरसङ्केतः शक्तिः । वैयाकरणानां बोधकता, तदवच्छेदकोऽखण्डो धर्मविशेषो वा शक्तिः । नन्वेवं शक्यतावच्छेदकं पदमेव, तथाच तेषामानन्त्याद् गौरवमत आह—जातिर्वेति—ननु हत्वादिना साङ्कर्यान्न जातित्वम्,

दर्पणव्याख्या

*अत एवेति* कल्पपक्षद्वये युक्तिसाम्यादेवेत्यर्थः *स वाचक इति* उपसर्गं प्रक्रम्येदम्, 'प्रतिष्ठते' इत्यत्र "गतिनिवृत्तिवाचकः स्थाधातुः, उपसर्गस्तदभावरूपगतिवाचकः" इति पुण्यराजेन तदर्थस्य कथनात् । 'वाचकत्वमेव' इत्यस्य निपातानामित्यादिः, एवं 'द्योतकत्वमेव' इत्यस्योपसर्गाणामित्यादि । * मतमेवेत्यादि * । * वा *=अथवा, अन्वयव्यतिरेकतो निपातानां वाचकत्वं युक्तम् । * नः *=अस्माकं मते परेषां यदेकस्य वाचकत्वमपरस्य द्योतकत्वमिति मतम्, तदेव तु न युक्तमिति मूलयोजना ॥ ४७ ॥

ननु "चादयोऽसत्त्वे" ( पा० सू० १ । ४ । ५७ ) इत्यत्र 'असत्त्वे' इति प्रसज्यप्रतिषेधाश्रयणेऽसमर्थसमासापत्तिः, वाक्यभेदापत्तिश्चेति पर्युदास एवाश्रयणीयः । तथानोक्तलक्षणस्याश्रयणेऽनर्थके तस्मिन्नव्याप्तिः । तावदन्यतमत्वस्य निवेशे तु गौरवमत आह—* शक्तिसम्बन्धेनेति * । तस्य लक्ष्यताऽवच्छेदकमभिप्रेत्याह—* जातिरिति * । निपातादवाच्यतावच्छेदकतया च तत्सिद्धिरिति भावः ।

उपाधिर्वा तदेवास्माकमपि । परन्तु सामान्य

प्रभा

यसमानाधिकरणत्व—स्वाभावसमानाधिकरणत्व—स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वैतत्त्रितयसम्बन्धेन परस्परविशिष्टत्वरूपसाङ्कर्यस्य सत्त्वात् । साङ्कर्यस्य च जातिबाधकत्वात् । तदुक्तम्—

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः ॥ इति ॥

तथाहि—'ह' इति निपाते हशब्दत्वं निपातशब्दत्वञ्चेति हत्वसामानाधिकरण्यम्, निपातचादिशब्दे हत्वाभावसामानाधिकरण्यम्, हन्त्यादिधातुघटकहशब्दे हत्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वमिति । चत्वप्रत्वादिसमानाधिकरणनानानिपातत्वस्वीकारे तु गौरवम् । कार्यतावच्छेदककारणताच्छेदकत्वयोरेव जातिसाधकत्वेन निपातत्वे च तत्त्वाभावेन जातित्वं दुर्वचम् । न च निपातपदशक्यतावच्छेदकतया जातित्वसिद्धिः, तथा सति जातित्व—अभावत्वादीनामपि जातित्वापत्तेः । अत एव गुणत्वस्य कार्यतायाः कारणतायाश्चानवच्छेदकत्वाज्जातित्वं निराकृतं दीधितिकृता । शक्यतावच्छेदकतया जातित्वसिद्धौ तु दीधितिविरोधः स्पष्ट एव । एवञ्च निपातत्वस्य जातित्वे मानाभाव इत्यत आह—उपाधिर्वेति—उपाधित्वञ्च—नित्यत्वे सत्यनेकसम्बद्धत्वम् । क्वचिदुपाधिर्वा जातिर्वेति पाठः । तस्यायमाशयः—साङ्कर्यस्य जातिबाधकत्वासम्भवः । जातिनाशकत्वरूपं जातिबाधकत्वं साङ्कर्ये न सम्भवति, जातेर्नित्यत्वात् । नापि जातित्वाभावसाधकत्वरूपं बाधकत्वम्, प्रमाणाभावात् । ननु अनुमानं प्रमाणम्, तथाहि—भूतत्वं जातित्वाभाववत्, स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्योभयसम्बन्धेन मूर्तत्वविशिष्टत्वात्, इति चेन्न, तदनुमानं यदि विशेषतस्तदा दृष्टान्ताप्रसिद्धिः । यदि 'उभयसम्बन्धेन जातिविशिष्ट तत्तज्जातित्वाभाववत्, यथा पृथिवीजलसंयोगः' इति सामान्यतस्तदपि न, द्रव्यत्वेऽपि पृथिवीत्वादेः पूर्वोक्तोभयसम्बन्धेन विशिष्टतया तत्र व्यभिचारात् ।

दर्पणव्याख्या

ननु इत्यादिना साङ्कर्यान्न निपातत्व जाति । तथाहि—निपातत्वाभाववति हत्वम्, धात्वादिहकारे हत्वाभाववति निपातत्वम् निपातात्मकचकारे तयोरेकत्र हकारे समावेशात् । तद्दूषकतावीज तु स्वसामानाधिकरण्य—स्वाभावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावाप्रतियोगित्वनियमभङ्ग एव । निरुपाधिसहचारग्रहश्च साहचर्यनियमेऽनुकूलस्तर्कः । अन्यथा तन्मात्रबलप्रवृत्तानां 'सत्तावान् जातेः' इत्याद्यनुमानानां विलयप्रसङ्गात् । अत एव 'भूतत्व न जातिः' इति साम्प्रदायिकाः ।

इत्यादिव्याप्यनिपातत्वस्य नानात्वाभ्युपगमेन साङ्कर्यस्य परिहारेऽपि सकलचादिसाधारण्याभावेनाननुगततया तस्यैवासिद्धिर्निष्प्रमाणत्वात् । किञ्च कार्यतावच्छेदकत्वादीनां जातित्वसाधकानां तत्राभावादपि न सा जातिः । शक्यतावच्छेदकत्व तु न तत्साधकम्, अभावत्वविभुत्वादीनामपि जातित्वापत्ते । अत एव गुणदीधितौ गुणत्वस्य जातित्व दीधितिकृता खण्डितमत आह—* उपाधिर्वेति * । * सामान्ये *—व्यापकधर्मे । इत्यर्थः ।

अय भावः—उपसर्गेष्वभयमतेऽपि द्योतकत्वे, वाचकत्वे वा कल्पनीये त. मिंवृचितयोपस्थितोपसर्गत्वनिपातत्वयोरुभयोधर्मयोर्मध्ये द्योतकत्वादिकमुपसर्गत्वावच्छेदेन कल्प्यम्, उत निपातत्वावच्छेदेनेति संशये अवच्छेदकनिर्णिनीषया व्यापकतया निपातत्वावच्छेदेनैव तत् कल्प्यते, सङ्ग्राहकलाघवात् । अत एवेश्वरानुमाने कर्तृजन्यत्वं घटत्वादिनाऽवच्छिद्यते, उत कार्यत्वेन, इत्यवच्छेदकजिज्ञासायामुक्तलाघवात् कार्यत्वमेव तदवच्छेदकम्, न तु घटत्वादिकमिति न्यायसिद्धान्त इति ।

## दर्पणव्याख्या

अत्र वदन्ति—प्रमाणानां सामान्यधर्मस्यावच्छेदकतायां तत्र पक्षपातः, यत्र च बहूनां धर्माणामवच्छेदकत्वकल्पनाप्रयुक्तं गौरवम्। यथा कर्तृजन्यत्वानुमाने कृतिजन्यतायां घटत्वाद्यपेक्षया कार्यत्वस्य। यत्र तु विशेषोऽप्येक एव तत्रोक्तयुक्तिविरहात् तस्यैवावच्छेदकत्वम्। अत एव व्यापारस्याधिकसंग्राहकत्वेऽपि कृतित्वस्यैवाख्यातशक्यतावच्छेदकत्वं स्वीकृतञ्च मीमांसकैरपि। द्रव्यप्रत्यक्षत्वं विहाय द्रव्यचाक्षुषत्वस्यैव रूपकार्यतावच्छेदकत्वम्। प्रकृते व्यापकत्वान्निपातत्वस्याधिकसंग्राहकत्वेऽपि व्याप्योपसर्गत्वस्यान्यैकत्वेन तस्यैवावच्छेदकत्वमुचितम्। निपातत्वस्याद्योतकेऽवाचके पादपूरणमात्रार्थके वृत्तित्वेनातिप्रसक्तत्वात्, 'प्रादयो द्योतकाः, उपसर्गत्वात्' इत्यनुमानाच्च।

नच प्रादीनां द्योतकता निपातत्वलिङ्गेनैव सेत्स्यतीति वाच्यम्, तस्योपसर्गत्वरूपोधिमत्तया तदसाधकत्वात्। नच चेष्टादौ साध्याव्यापकत्वान्न तस्योपाधित्वमिति वाच्यम्, शुद्धसाध्याव्यापकत्वासम्भवात्। अस्ति हि निपातत्वावच्छिन्नं द्योतकत्वं यत्र तत्रोपसर्गत्वम्, यत्र निपातत्वं नञादौ तत्र तदभावात्। ननु प्रकर्षाद्यर्थः प्रादिवाच्यः, तदन्वयव्यतिरेकानुविधायिशाब्दधीविषयत्वात्। यो यदन्वयव्यतिरेकानुविधायिशाब्दधीविषयः स तद्वाच्य इति सामान्यव्याप्तौ घटादिदृष्टान्तः।

नचानन्यलभ्यत्वमुपाधिः, तस्य वाच्यत्वरूपसाध्यव्यापकत्वात् कर्त्रादौ आख्यातान्वयव्यतिरेकानुविधायिशाब्दधीविषये साधनाव्यापकत्वादिति वाच्यम्, उक्तहेतुघटकशाब्दबुद्धेराक्षेपाद्यजन्यत्वेन विशेषणेनानन्यलभ्यत्वस्य साधनव्यापकत्वेनोपाधित्वायोगात्।

नच स्वरूपासिद्धिः, धातोरेव प्रकृष्टजयार्थकत्वेनोपसर्गस्य तात्पर्यमात्रग्राहकत्वादिति वाच्यम्, धातोः प्रकृष्टजयार्थपरत्वस्य प्रागुक्तैव खण्डनात्। नापि लक्षणा तस्य, प्रोचरत्वादेर्लक्ष्यतावच्छेदककोटिप्रवेशे गौरवात्। तस्माज्जयत्वादि धातोः शक्यतावच्छेदकम्, प्रकर्षत्वादिकं तूपसर्गस्येति वाच्यम्। तथाच क हेत्वसिद्धिः। जिञर्थस्य धातुलभ्यत्वे निपूर्वप्रत्वेनापि विनिगमनाविरहाल्लक्षकतावच्छेदककोटौ निवेशापत्तेः। नापि तदर्थस्य धात्वर्थेन साकमनन्वयप्रसङ्गः, निपातातिरिक्तत्वस्योक्तव्युत्पत्तौ विशेषणात्। एवञ्च 'प्रतिष्ठते' इत्यादौ धातोर्गत्यभावोऽर्थः, तदभावश्चोपसर्गार्थः।

तथाच ततो गत्यभावाभावज्ञानमिति धी, गमनत्वप्रकारकबोधस्तूत्तरकालिको मानस एवेति चेन्न, 'प्रस्थानम्' इति व्युत्पत्तेर्जागरूकतया गमनाभाववानिति बोधस्यापि गगनकुसुमायमानत्वात्।

किञ्च तथाबोधाङ्गीकारे तादृशस्थले प्रादीनामुपसर्गत्वमपि दुर्घटम्, क्रियाया अविशेषकत्वात्। क्रिया यत्रोपसर्गाभावविशेषिका, नतूपसर्गौ क्रियाभावविशेषकः। स्वादीनां द्योतकत्वान्तरस्यापनोकरीत्याप्युपसर्गाणां साऽवश्येति। निपातानान्तु केषाञ्चिद् वाचकत्वम्। तत्र नञर्थो निरूपितः। चार्थश्च समुच्चयादिभेदेन चतुर्विध इति, "चार्थे द्वन्द्वः" (पा० सू० २।२।२९) इत्यत्राकरेषु व्यक्तमेव।

इवार्थस्तु सादृश्यम्। तच्च तद्भिन्नत्वे सति तद्गतधर्मवत्त्वम्। यत्तु—सादृश्यं न भेदघटितमिति, तन्न वाक्यार्थे "नञिवयुक्तम्" इति परिभाषयैव तदेवार्थज्ञानलाभात्। सादृश्यप्रतियोग्यनुयोगिप्रतियोगिवाचकपदयोः समानविभक्तिकत्वं नियामकम्। नातश्चन्द्र इव मुखमित्यर्थे चन्द्रेणेव मुखमिति साधु।

एवकारस्य त्वन्ययोगव्यवच्छेदः, अयोगव्यवच्छेदः, अत्यन्तायोगव्यवच्छेदश्चार्थः। तत्र विशेष्यसङ्गतैवकारस्थले—'पार्थ एव धनुर्धरः' इत्यादावन्यतादात्म्यव्यवच्छेदोऽर्थः। अन्यत्रत्वं—समभिव्याहृतपदार्थापेक्षितम्। तथाच पार्थान्यतादात्म्याभाववद्धनुर्धराभिन्नः पार्थ इति बोधः। 'पृथिव्यामेव गन्धः' इत्यत्र पृथिव्यन्यसमवेतत्वाभाववान् पृथिवीसमवेतश्च गन्ध' इति बोधात्तत्रबोधे सप्तमीकाविशेषणविभक्तिसमभिव्याहारोऽपि नियामकः। अत्र भावान्वयबोधानुपपत्तौ पृथिव्यामेवास्यावश्यमिति प्रागुक्तैव। एवञ्च यत्रायोगव्यवच्छेदबोधे विशेष्यवाचकपदविशेषणवाचकसम्बन्धान्यतराभ्यां विशेषणैवकारो हेतुः। विशेषणसङ्गतैवकारस्थलेऽयोगव्यवच्छेदः। 'शङ्खः पाण्डुर एव' इत्यादौ शङ्खत्वावच्छेदेन पाण्डुरत्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वबोधात्। 'नीलं सरोजं भवत्येव' इत्यादौ क्रियासङ्गतैवकारस्थलेऽत्यन्तायोगव्यवच्छेदोऽर्थः।

धर्मे प्रमाणानां पक्षपाताच्छक्तता, द्योतकता वा तदवच्छेदेनैव कल्प्येति नैयायिकोक्तं मादि-
चाद्योर्वैषम्यमयुक्तमित्यर्थः । व्यापकत्वात्=सामान्यत्वात् । शक्ततताया इत्युपलक्षणम्—द्योतक-
ताया चेत्यपि द्रष्टव्यम् ॥ ४८ ॥

इति वैयाकरणभूषणसारे निपातानां द्योतकत्वादिनिर्णयः ॥ ८ ॥

---

प्रभा

वस्तुतस्तु शक्यतावच्छेदकतया चत्वप्रत्वादिभेदेऽपि 'निपातः' इति एकाकारप्रतीत्या वा निपातत्वे
जातित्वं सिध्यति । नचैवमभावत्वविभुत्वादीनामपि जातित्वसिद्धिरिति वाच्यम्, इष्टापत्तेः । अत एव—

स्वजातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते ।
ततोऽर्थजातिरूपेषु तदध्यारोहकल्पना ॥

स्युक्तं हरिणा । यदा विशुद्धा एवार्थजातयः शब्दैरभिधीयन्ते तदा सर्वे जातिवाचिन एव। किञ्च सामान्या-
देष्वपि जातेरभावे 'जात्याकृतिव्यक्तयस्तु पदार्थः' इति गौतमसूत्रविरोधापत्तिः । अत एव —

संयोगिद्रव्यभेदेन देशे च परिकल्पिते ।
तेषु देशेषु सामान्यमाकाशेऽपि जायते ॥

इत्यप्युक्तं हरिणा । अत एव 'आकृतिः पदार्थः' इति मीमांसकाः । तत्र प्रवृत्तिनिमित्तम्, जातिः, आकृतिः,
उपाधिरित्यनर्थान्तरम् । द्रव्यगुणकर्माण्येव जातिमन्ति इति तु स्वशास्त्रप्रक्रियानिर्वाहाय नैयायिका आहुः ।
अत एव गौतमेन प्रवृत्तिनिमित्तस्योपाधेश्च पदार्थत्वं कुत्रापि नोक्तम् । नापि कार्यतायाः कारणताया वाऽव-
च्छेदकतयैव जातिसिद्धिरित्यपि नियन्त्रितम् । परन्त्विति—अस्य 'वैषम्यं न युक्तम्' इत्यत्रान्वयः । परन्तुपदं
केवलवाचि, केवलं वैषम्यम्=वाचकताया द्योतकतायाश्चावच्छेदकभेदो न युक्त इत्यर्थः । सामान्यधर्मे=
उपसर्गत्वापेक्षया व्यापकधर्मे निपातत्वरूपे । प्रमाणानाम्=द्योतकत्ववाचकत्वावच्छेदकत्वविषयकप्रमाणा-
नाम् । पक्षपातादिति—व्यापकधर्मावच्छेदेन द्योतकत्ववाचकत्वरूपविधेयसाधकत्वादित्यर्थः । शक्तता=वाच-
कता । तदवच्छेदेन=निपातत्वावच्छेदेन । नैयायिकोक्तमिति—प्रादय उपसर्गा द्योतका इति द्योतकतावच्छेदकं
प्रादित्वमुपसर्गत्वं वेति चादयो निपाता वाचका इति वाचकतावच्छेदकं निपातत्वमिति नैयायिकोक्त-
मित्यर्थः । अयं भावः—उपसर्गाणां द्योतकत्वं वाचकत्वं वा उपसर्गवृत्तिधर्मावच्छेदेन कल्पनीयम् । तद्वृत्ति-
धर्मश्चोपसर्गत्वं निपातत्वमित्युभयम् । किमवच्छेदेन तत्कल्पनमिति संशये निपातत्वस्य व्यापकतया चादिषु
वाचकतावच्छेदकत्वेन क्लृप्ततया च तदवच्छेदेनैव द्योतकत्वकल्पनमुचितम् । यथा न्यायनयेऽदृष्टस्य कारण-
त्वकल्पनायां तत्कार्यतावच्छेदकं कार्यत्वमेव, व्यापकत्वात्, न तु घटत्वादिकम्, पटत्वादिकमादाय
विनिगमनाविरहादनन्तकार्यकारणभावप्रसङ्गात् । तथाऽत्रापि अनुगतरूपेण द्योतकत्वं वाचकत्वं वा युक्तम् ।
प्रकृते प्रमाणन्त्वनुमानमेव । तथाहि–'निपाता द्योतकाः, निपातत्वात्, उपसर्गवत्' इति । नच निपातत्वस्यैव
पक्षतावच्छेदकतया हेतुत्वाच्च व्याप्यग्रहः, सिद्धसाधनञ्चेति वाच्यम्, जातिरूपस्योपाधिरूपस्य वा निपा-
तत्वस्य पक्षतावच्छेदकतया सङ्केतसम्बन्धेन निपातपदवत्त्वस्य च हेतुत्वेनादोषात् । नच पादपूरणमात्रार्थके
चादौ द्योतकत्वरूपसाध्यस्यासत्त्वात्, निपातत्वस्य च सत्त्वाद् व्यभिचार इति वाच्यम्, वाचकत्वाभावरूप-
द्योतकत्वस्य साध्यत्वेन तस्यानर्थकनिपातेऽपि सत्त्वेन क्षतिविरहात् ।
अत्र नैयायिकाः—यत्र बहूनां व्याप्यधर्माणामेकस्य व्यापकधर्मस्य च

प्रभा

व्यापकधर्मस्यावच्छेदकत्वकल्पनमुचितम्, नतु बहूनाम्, गौरवादननुगतत्वाच्च। यत्र तु व्याप्योऽपि धर्म एक एव व्यापकोऽपि तथा, तत्र व्याप्यधर्मस्यैवावच्छेदकत्वं कल्प्यते, तस्यावच्छेदकत्वे गौरवाभावात्। अत एव न्यायनये आख्यातवाच्यायाः कृतेः कृतित्वेनैव व्याप्यत्वम्, नतु कृतित्वव्यापकव्यापारत्वेन। ईदृशस्थले मीमांसका अपि व्याप्यस्यैवावच्छेदकत्वमिच्छन्ति नतु व्यापकस्य। तद्यथा—द्रव्यचाक्षुषं प्रति उद्भूतरूपं कारणम्, तत्र द्रव्यचाक्षुषनिष्ठकार्यताया द्रव्यप्रत्यक्षत्वं न कार्यतावच्छेदकम्, किन्तु तद्व्याप्यं द्रव्यचाक्षुषत्वमेवेति मन्यन्ते। अद्योतके पादपूरणमात्रफलके निपाते द्योतकत्वरूपसाध्याभावेन निपातत्वस्य च सत्त्वेन व्यभिचरितत्वाच्च निपातत्वस्यावच्छेदकत्वासम्भवः। तथाच 'प्रादयो द्योतकाः, उपसर्गत्वात्' इत्यनुमानेन प्रादीनां द्योतकत्वमेवेति। किञ्च निपातत्वहेतुकद्योतकत्वसाध्यकानुमित्यसम्भवः, उपसर्गत्वरूपोपाधिविशिष्टत्वात्। उपसर्गत्वे द्योतकत्वरूपसाध्यव्यापकत्वस्य निपातत्वस्य वाचकचादिष्वपि सत्त्वेन निपातत्वरूपसाधनाव्यापकत्वस्य च सत्त्वात्। नच चेष्टादीनामपि सङ्केतितार्थद्योतकत्वेन तत्र चोपसर्गत्वस्यासत्त्वेन साध्याव्यापकत्वं निपातत्वरूपसाधनावच्छिन्नद्योतकत्वस्योपसर्गे एव सत्त्वेन निपातत्वसमानाधिकरणद्योतकत्वरूपसाध्यव्यापकत्वेन साधनावच्छिन्नसाध्यव्यापकत्वाप्युपाधित्वात्। ननु उपसर्गवाच्य एव प्रकर्षः। तथाहि—'प्रकर्षादिः प्रादिवाच्यः, प्राद्यन्वयव्यतिरेकानुविधायिशाब्दबुद्धिविषयत्वात्', 'प्रादिसत्त्वे तत्प्रतीत्या तदसत्त्वे चाप्रतीतेः'। यथा घटादिरूपोऽर्थो घटादिशब्दान्वयव्यतिरेकानुविधायीति स घटादिपदवाच्यः। नचात्रापि 'अनन्यलभ्यो हि शब्दार्थः' इत्यनन्यलभ्यत्वमुपाधिरिति वाच्यम्, तस्य वाच्यत्वरूपसाध्यव्यापकत्वेऽपि साधनाव्यापकत्वस्य दुर्वचत्वात्। तस्माज्जयादिर्धातुवाच्यः, प्रकर्षादिश्च प्रादिवाच्यः। नच नामार्थधात्वर्थयोः साक्षाद् भेदसम्बन्धेनान्वयस्याव्युत्पन्नतया प्रकर्षस्य स्वरूपसम्बन्धेन जयार्थेऽन्वयो न स्यादिति वाच्यम्, उक्तव्युत्पत्तौ निपातातिरिक्तत्वनिवेशादिति चेन्न, 'प्रतिष्ठते' इत्यत्र गत्यभावस्य धात्वर्थत्वे तदभावस्योपसर्गार्थत्वे न्यायनये तिङर्थाश्रयत्वे गत्यभावाभावस्याप्रकृत्यर्थतया 'प्रत्ययानां प्रकृत्यर्थान्वित' इति व्युत्पत्तिविरोधादनन्वयापत्तेः, आद्यगमनस्य प्रतीत्यभावापत्तेश्च। 'प्रतिष्ठते' इत्यत्र प्रशब्दार्थाभावस्य गमनाभावरूपधात्वर्थंप्रति विशेष्यतयैव भानाद् धात्वर्थगतविशेषकत्वाभावेनोपसर्गत्वानापत्तिः। तस्मादुपसर्गा द्योतका एव। चादयश्च केचिद् वाचकाः केचिद् द्योतकाश्च। वाचका यथा—नञोऽभावो वाच्यः, सादृश्यमिव वाच्यम्। सादृश्यबोधे च समानविभक्तिकत्वं प्रतियोग्यनुयोगिनोर्नियामकम्, तेन 'चन्द्रेणेव मुखम्' इति न प्रयोगः। नचोपमानोपमेययोर्भिन्नलिङ्गकत्वस्थले 'चन्द्र इव मुखमाह्लादकम्' इत्यादावुपमानगताह्लादकत्वस्याप्रत्यायकत्वेन कथं साधारणधर्मबोधकत्वं तस्येति वाच्यम्, तस्योपमाद्योपेक्ष्येव परिगणनात्। ह्लादयतीति लिङ्गरहितार्थोपस्थापकपदप्रयोगस्यैव तत्रौचित्यात्।

एवपदस्य त्रयोऽर्थो वाच्याः—१—अन्ययोग ( सम्बन्ध ) व्यवच्छेदः ( अभावः )। २—अयोग ( असम्बन्ध ) व्यवच्छेदः। ३—अत्यन्तायोगव्यवच्छेदश्च। तत्र विशेष्यवाचकपदोत्तर एवकार अन्यत्वस्य ( भेदस्य ) सन्निहितविशेष्यार्थप्रतियोगिक एव। योगश्च एवपदं विना यः प्रतीयते स एव। तथाच—'पार्थ एव धनुर्धरः' इत्यत्र पार्थभिन्नतादात्म्याभाववद्धनुर्धराभिन्नः पार्थ इति बोधः। एवम्—'काश्यामेव विश्वनाथः' इत्यनेन काशीभिन्नासंयुक्तः काशीसंयुक्तश्च विश्वनाथ इति बोधः। इत्यन्ययोगव्यवच्छेदः=भिन्नस्य सम्बन्धाभावः। विशेषणसन्निहितैवस्थलेऽयोगव्यवच्छेदः=सम्बन्धाभावाभावः सम्बन्धः प्रतीयते। यथा 'शङ्खः पाण्डुर एव' इत्यत्र विशेषणतावच्छेदकधर्मसम्बन्धाभावो विशेष्ये प्रतीयते, तथाच शङ्खत्वावच्छेदेन पाण्डुरत्वसमवायाभावाभावः प्रतीयते। पाण्डुरत्वसम्बन्धाभावाभाववान् शङ्ख इति बोधः। क्रियासङ्गतैवकारेणात्यन्तायोगव्यवच्छेदो बोध्यते। तथाहि—'नीलं कमलं भवत्येव' इत्यादौ क्रियासङ्गतैवकारेण

## ॥ अथ त्वादिभावप्रत्ययार्थनिर्णयः ॥

भावप्रत्ययार्थमाह—

प्रभा

तस्मादुपसर्गत्वेन निपातत्वेन वा वाचकत्वादि चिन्त्यमेव । कर्मप्रवचनीयसंज्ञका अपि प्रत्यादयो न क्रियाविशेषकाः, किन्तु क्रियानिरूपितसम्बन्धविशेषका एव । अत एव कर्म=क्रियां प्रोक्तवन्त इति कर्मप्रवचनीयाः। बाहुलकात्कर्तरि भूतेऽनीयर् । तेन सम्प्रति क्रियां न द्योतयन्ति, किन्तु क्रियानिरूपित सम्बन्धविशेषं द्योतयन्ति ये ते कर्मप्रवचनीयाः । क्रियागतविशेषकत्वाभावादुपसर्गत्वाप्राप्त्या उपसर्गसंज्ञाऽपवाद इत्युक्तिः फलितार्थाभिप्रायेणेति दिक् ।

निपातार्थस्य निर्णीत्या पातयन् विघ्नवारणान् ।
प्रभायां बालकृष्णस्य प्रभां दध्याद् इभाननः ॥

॥ शुभम् भूयात् ॥

---

अथ भावप्रत्ययार्थनिर्णयः ।

सामान्यतो नामार्थं तद्विशेषनिपातार्थञ्च निरूप्य नामघटकं स्वार्थस्य प्रथमोपस्थितत्वात्तदर्थकं तद्धितं निरूपयितुमाह—भावेति—भवन्ति=अर्थबोधनाय प्रवर्तन्तेऽनेनेति भावः । करणे घञ् । भावः=तत्तच्छब्द-प्रवृत्तिनिमित्तम् । तदुक्तं परममूले—'प्रकृतिजन्यबोधे प्रकारीभूतो भावः' इति । प्रकारपदेन च मुख्यविशेष्यतया साक्षान्निरूपितविषयताश्रयस्य ग्रहणम् । विषयता च प्रकारतारूपा, संसर्गतारूपा वा । घटादिपद-स्थले घटत्वादौ प्रकारतारूपा । 'औपगवः' 'राजपुरुषः' 'पाचकः' इत्यादिषु च संसर्गतारूपा । एषु

दर्पणव्याख्या

क्रियाविशेषकत्वम्, किन्तु क्रियागतसम्बन्धविशेषकत्वम्, कर्म=क्रियां प्रोक्तवन्तः 'कर्मप्रवचनीयाः' इत्यन्वर्थसंज्ञानात् । अधिपर्योस्तु एवार्थमात्रमर्थवत्त्वादेव वा । 'जपमनुप्रावर्षत्' इत्यत्र हेतुभूतजपनिरूपितलक्षणलक्ष्यभावसम्बन्धस्य वर्षणक्रियानिष्ठस्य अनुना द्योतनात् । एवमन्यत्रापि ज्ञेयम् । अत एव न तेषामुपसर्गत्वम् । क्रियागतविशेषद्योतको ह्युपसर्गः । उक्तं च हरिणा—

क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः ।
नापि क्रियापदाऽऽक्षेपी सम्बन्धस्य तु भेदकः ॥ इति ।

कृत्तद्धितसमासेभ्यो मतभेदनिबन्धनम् ।
त्वतलोरर्थकथनं टीकायां हरिणा कृतम् ॥ ४६ ॥

"कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनाऽन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्ब-
न्धेभ्यः" इति वार्त्तिकवचनमिति मीमांसकादीनां भ्रममपाकुर्वन्नाह—टीकायामिति । भर्तृहरिणा
महाभाष्यटीकायामित्यर्थः । त्वतलोरिति—भावप्रत्ययमात्रोपलक्षणम् ।
अयमर्थः—समासादौ शक्तिः कल्प्यमाना राजादिसम्बन्धविशिष्टे कल्प्यते

प्रभा

स्वादिप्रत्ययेन क्रमशः जन्यजनकभावस्य स्वस्वामिभावस्य क्रियाकारकभावस्य संसर्गतया बोधः। संसर्ग-
स्यापि प्रकारतया भानाङ्गीकारे तु विषयतापदेन प्रकारताया एव ग्रहणेऽपि न दोषः। तथा चोक्तेषु अन्य-
जनकभावसम्बन्धेन उपगुविशिष्टमपत्यम्, उपगुसम्बन्धवदपत्यमिति वा स्वस्वामिभावसम्बन्धेन राजवि-
शिष्टः पुरुषः, राजनिरूपितसम्बन्धवत्पुरुष इति वा, क्रियाकारकभावसम्बन्धेन पाकविशिष्टः कर्त्रादिः, पाक-
निरूपितसम्बन्धवान् कर्त्रादिरिति वा बोधः। वैयाकरणनये तु कृदादिवृत्तिषु पाचक इत्यादिषु प्रकारविधया
संसर्गविधया वा संसर्गादेर्भानमेकार्थीभावात्मकविशिष्टशक्त्यैव। अत एव 'औपगवः' इत्यत्रोपगुपदार्थे
धनिन इत्यस्य, 'पुत्रीयति' इत्यत्र पुत्रे 'विद्वांसम्' इत्यस्यान्वयाभिप्रायेण 'धनिन औपगवः' 'विद्वांसं
पुत्रीयति' इत्यादेर्न साधुत्वम्। नचैवं 'पर्वतो वह्निमान्, धूमात्' इत्यत्र धूमस्य हेतुतया वह्नावनन्वयापत्तिः,
'वृत्तस्य विशेषणयोगो न' इति व्युत्पत्तेर्वह्नेः पदार्थैकदेशत्वाच्चेति वाच्यम्, वह्निविशिष्टे पर्वते एव
सदन्वयाङ्गीकारात्। नच पञ्चम्यर्थहेतुत्वस्य निरूपकपर्वते बाध इति वाच्यम्, धूमज्ञानगतहेतुतानिरूप-
कत्वस्य वह्निज्ञाननिष्ठस्य वह्नावारोपेणान्वयस्य पर्वतेऽप्यारोपेण तत्त्वस्य वक्तुं शक्यत्वात्। अत एव न्याय-
भाष्यवार्तिककारैः 'प्रज्ञापनीयधर्मविशिष्टो धर्मी साध्यः' इत्युक्तं सङ्गच्छते। उभयथापि संसर्गस्यैव त्वादि-
प्रत्ययेन बोधनमित्याह—कृत्तद्धितेति। सम्बन्धाभिधानमिति—प्रकारतया, संसर्गतया वा भासमानस्य सम्बन्धस्य
त्वादिप्रत्ययेनाभिधानमित्यर्थः। भावप्रत्ययेनेति—भावे विहितप्रत्ययेनेत्यर्थः। अन्यत्रेति—अस्यार्थो मूले एव
वक्ष्यते। इति वार्तिकेति—'इति वार्तिककारवचनम्' इति पाठः। क्वचित् 'इति वार्तिकवचनमिति वा पाठः।'
'वार्तिकवचने' इति पाठस्तु हेय एव। भूषणे तु 'इतिवचनं वार्तिककारीयम्' इति भ्रमं मीमांसकानामिति
पाठः। तथाच कृत्तद्धितेति आरभ्य सम्बन्धेभ्य इत्यन्तं वार्तिककारवचनम्, वार्तिकमिति यावत्ति मीमां-
सकानां भ्रम एव।

वस्तुतस्तु भाष्यस्य स्वकृतटीकायां हरेरुक्तमेवैतत् 'कृत्तद्धितसमासेभ्यः' इति, ननु वार्तिकमित्याह—
भ्रममिति। महाभाष्यटीकायामिति— स्वकृतमहाभाष्यटीकायामित्यर्थः। ननु त्वादेरिति वक्तव्ये 'त्वतलोरिति
कथनेन ष्यञादीनामर्थान्तरत्वशङ्का स्यादत आह—भावप्रत्ययमात्रेति—तयाचोपलक्षणतया तेषामपि ग्रहण-
मिति भावः। अयमिति-वक्ष्यमाण इत्यर्थः। अयं इति—तात्पर्यार्थ इत्यर्थः। सम्बन्धविशिष्ट इति-स्वनिष्ठविषय-
तानिरूपितविषयतावत्त्वसम्बन्धेन सम्बन्धविशिष्टे इत्यर्थः। तेन सम्बन्धस्य संसर्गतया भानेऽपि नासंग्रहः।

दर्पणव्याख्या

* त्वतलोरिति * । * भावप्रत्ययेति * भावविहिततद्धितप्रत्ययेत्यर्थः।
सम्बन्धरूपभावबोधकत्वात् तत्तात्पर्यमाह—* अयमर्थ इत्यादिना * । 'इत्युक्तम्' इत्यस्य समासशक्तिनिरूपणावसर इति शेषः।
हरिवाक्यं विवृणोति—

इत्युक्तम् । तथाच तदुत्तरभावप्रत्ययः सम्बन्धं वदतीत्यर्थः । एतदपि 'भेदः, संसर्गः, उभयं वेत्युक्तेषु भेदपक्षे न सम्भवतीत्यत आह—मतभेदेति—पक्षभेदेनेत्यर्थः ।

एवञ्च राजपुरुषत्वम्, औपगवत्वम्, पक्तृत्वमित्यादौ स्वस्वामिभावसम्बन्धः, उपगवपत्यसम्बन्धः, (अपत्यापत्यवत्सम्बन्धः) क्रियाकारकभावसम्बन्धः, इत्यन्वयबोधः । औपगवादावव्यभिचरितसम्बन्धे तु अर्थान्तरवृत्तिस्तद्धित उदाहार्य्यः ।

## प्रभा

उक्तमिति—समासशक्तिनिरूपणे 'राजसम्बन्धवान्' इत्येव शाब्दं भानमित्यादिनेत्यर्थः । तदुत्तरेति—समासाद्युत्तरेत्यर्थः । वदतीति—बोधयतीत्यर्थः । एतदपि—कृदाद्युत्तरत्वादेः सम्बन्धवाचकत्वेऽपि । भेद इति—अराजकीयभेदवान् इति भेदः समासार्थः । संसर्ग इति—राजकीयसम्बन्धवानित्यर्थः । उभयमिति—अराजकीयभेदवान्, राजकीयसम्बन्धवाँश्चेत्यर्थः । भेदपक्ष इति—अराजकीयभेदविशिष्टपुरुष इत्यर्थके भेदपक्षे इत्यर्थः । न सम्भवतीति—'राजपुरुषः' इत्यतः पुरुषे राजसम्बन्धस्याभानादिति भावः । राजसम्बन्धवतो वस्तुगत्या पुरुषत्वेन बोधे पुरुषत्वमेव त्वप्रत्ययार्थः । पुरुषत्वरूपे प्रत्ययार्थे च राजसम्बन्धवतः पुरुषस्य तद्व्यक्तिमात्रनिरूपिताधेयतासम्बन्धेन प्रकृत्यर्थस्यान्वय इति नातिप्रसङ्गः । 'राजपुरुषः' इत्यतो भेदमात्रस्य भानपक्षे भेद एव त्वाद्यर्थः । पक्षभेद इति—कृदन्तादिविहितभावप्रत्ययस्य सम्बन्धोऽर्थ इति मतभेदेन हर्य्युक्तिर्नतु सिद्धान्तोक्तिरिति भावः ।

स्वस्वामिभावेति—त्वप्रत्ययार्थोऽत्र स्वस्वामिभावसम्बन्धः, अन्वयबोधस्तु राजपुरुषनिष्ठः स्वस्वामिभावसम्बन्धः । उपगवपत्यनिष्ठोऽपत्यापत्यवत्सम्बन्धः, पाककर्तृनिष्ठः क्रियाकारकभावसम्बन्ध इत्याद्याकारकः । उपगवपत्येति—'अपत्यापत्यवत्सम्बन्धः' इति लिखितपुस्तकेषु पाठः ।

अन्वयबोध इति—शब्दजन्यो बोध इत्यर्थः । पृथगुपस्थितयोरर्थयोराकाङ्क्षाभास्यसम्बन्धेन विशेष्यविशेषणभावापन्नार्थविषयकबोधस्यैवान्वयबोधत्वेन प्रकृते चैकार्थीभावशक्तिवादिनये पृथगुपस्थित्यभावेन तत्त्वस्य वक्तुमशक्यत्वात् । विशिष्टोपस्थितार्थबोधेऽपि शब्दजन्यत्वन्त्वक्षतमेव, 'शाब्दयामि' इत्यनुभवस्य सत्वात् । उपस्थितिविषययोरर्थयोः सम्बन्धोऽन्वय इति मते तु यथाश्रुतमपि साधु ।

अव्यभिचरितसम्बन्ध इति—व्यक्तेरुत्पत्तिमारभ्य आविनाशं तद्व्यक्तिनिष्ठात्यन्ताभावाप्रतियोगिसम्बन्ध इत्यर्थः । उपगवपत्ये च जन्यजनकभावसम्बन्धो नास्ति इत्यस्याभावेन तादृशसम्बन्धेऽत्यन्ताभावाप्रतियोगित्वं सुलभम् । अर्थान्तरवृत्तिरिति—देवतार्थकादितद्धितान्ताद् भावप्रत्यये 'ऐन्द्रत्वम्' इत्यादौ इन्द्राभिन्न-

## दर्पणव्याख्या

* सम्बन्धमिति * उत्तरपदार्थे पूर्वपदार्थसम्बन्धस्यैव धर्मत्वेन भासमानत्वादिति भावः ।

* भेदपक्ष इति * तत्पक्षे हि 'राजपुरुषः' इत्यत्र 'अराजकीयभिन्नः पुरुषः' इति बोधेन पुरुषांशे राजसम्बन्धाभानादिति भाव । * उपगवपत्यसम्बन्ध इति * उपगवपत्ययोर्जन्यजनकभावात्मकः सम्बन्ध इत्यर्थः । * अन्वयबोध इति * समासादोत्तरभावप्रत्ययस्य तत्तत्सम्बन्धवाचकत्वादिति भाव ।

* अव्यभिचरितसम्बन्धे त्विति * अव्यभिचरितसम्बन्धरूपजात्यैव भानोपगमे त्वित्यर्थः । तुशब्दसूचितार्थस्तु "तस्यापत्यम्" (पा० सू० ४ । १ । ८२) इत्यनेन षष्ठीप्रकृत्यर्थोपगवादिसम्बन्धेऽपत्येऽणादीनां विधानेन षष्ठ्यर्थसम्बन्धान्तर्भावेणैव तत्रैकार्थीभावस्यापगन्तव्यतया तत्रापत्यांशे संसर्गस्यैव प्रकारतया तस्यैव तदुत्तरभावप्रत्ययार्थत्वेन जातेस्तद्वाच्यत्वासम्भवादिति । * अर्थान्तरवृत्तिरिति * तात्पर्यघटितार्थवृत्तिराधिकाद्यन्तर्गततद्धगादिरित्यर्थः । तदर्थ

'दामोदरत्वम्' 'कृष्णसर्पत्वम्' इत्यादौ जातिविशेषबोधादाह—अन्यत्रेति—रूढेरभिन्नरूपा-
व्यभिचरितसम्बन्धेभ्यश्चान्यत्रेत्यर्थः । रूढिरुक्ता । द्वितीयं यथा शुक्लत्वम । अत्र "तदस्यास्त्यस्मिन्"
(पा० सू० ५ । २ । १४) इति मतुपः "गुणवचनेभ्यो मतुपो लुगिष्टः" (पा० वा०) इति लुप्तत्वात्
तद्धितान्तत्वेऽपि 'घटः शुक्लः' इत्यभेदप्रत्ययाद् गुणस्यैव प्रकारत्वेन भानं जायते । तृतीयम्—

प्रभा

देवतासम्बन्ध इति बोधः । अत्रेन्द्रोद्देश्यकदानकर्मत्वसम्बन्धो वृत्ते हविष्युत्पद्यते, नतु ततः प्राक्, इत्य-
व्यभिचरितसम्बन्धभिन्नत्वं तत्र । तथाच 'औपगवत्वम्' इत्यस्य उपगवपत्यत्वमित्येवार्थः ।
दामोदरत्वमिति—दामोदरपदस्य नारायणपरत्वे कल्पभेदेन तद्भेदमादाय यत्किञ्चिद्व्यक्तिपर-
त्वेऽवस्थाभेदेनानेकव्यक्तिवृत्तित्वाज्जातित्वमुपपाद्यम् । कृष्णसर्पत्वमिति कृष्णसर्पो जातिविशेषः । बहुल-
ग्रहणान्नित्यसमासः । उक्तेति—दामोदरत्वम्, कृष्णसर्पत्वमित्यनेन । तद्धितान्ता रूढिशब्दाः—रर-
हस्ति–कुञ्जरादयः । समासाः—सप्तपर्ण–लोहितशाल्यादयः । कृदन्ताः—गृह–रजक–प्राहादयः । एतेभ्यो
जातावेव स्वादयः, नतु सम्बन्धे । अभिन्नरूपाः शुक्लादयस्तद्धितान्ताः । एते च 'गुणवचनेभ्यो मतुपो
लुगिष्टः' इति मतुपो लुकि गुणे गुणिनि चाभिन्नरूपाः समानानुपूर्वीकाः । तथाच तद्धितान्तेभ्योऽपि
शुक्लादिभ्यः प्रकारीभूते गुणे, एव प्रत्ययः, नतु गुणगुणिनोः समवायसम्बन्धे । 'शुक्लो गुणः' इति गुणवाच-
कात्तु जातावेव स्वादयः । तदाह—द्वितीयमिति—अभिन्नरूपादाहरणमित्यर्थः । तृतीयमिति—अव्यभिचरित-
सम्बन्धोदाहरणमित्यर्थः । सतो भावः सत्तेति जातावेव प्रत्ययः । सद्वस्तु सत्तासम्बन्धं नहि कदाचिद् व्यभि-
चरति । सद्वस्तुनि अव्यभिचरितसत्ता ( जाति ) सम्बन्धस्य सत्त्वेऽपि नहि 'सत्' शब्दः तादृशसम्बन्धम-
पेक्ष्य सद्वस्त्वभिधत्ते, किन्तु सत्तारूपां जातिमपेक्ष्यैव सद्वस्त्वभिधत्ते इति जातावेव तल्प्रत्ययः । पुरुषे राज-
सम्बन्धे जाते राजसम्बन्धमपेक्ष्यैव राजपुरुषशब्दस्तत्र प्रवर्तते इति सम्बन्धे एव तत्र त्वादिः । धवखदिरा-
दिद्वन्द्वादपि जातिसमुदाये संज्ञाशब्दात् संज्ञारूपे सञ्ज्ञिन्यध्यस्ते प्रत्ययः । यथा डित्थत्वमित्यत्र । यद्वा व्यक्ता-
वेव प्रकारतया भानमाश्रित्य त्वप्रत्यय इति व्यक्तेरेव प्रकारतया भासमानत्वात्प्रत्ययार्थोऽपि । तदुक्तं हरिणा—

जातिगुणाज्जातिगुणे समासकृत्तद्धिताच्च सम्बन्धे ।
धवखदिराज्जातिसंघाते ॥
डित्थादेश्च स्वरूपे धवखदिराज्जातिसंघाते ॥
डित्थादेश्च स्वरूपे तदभिधाने त्वतलौ' इति । अत्र कैयटः—'गुणशब्देन

तदुक्तं भाष्ये—'यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ' इति । अत्र कैयटः—'गुणशब्देन
यावान् कश्चित्पराश्रयो भेदको जात्यादिरर्थः स सर्वं इह गृह्यते' इति ।

दर्पणव्याख्या

क्रियाकारकभावसम्बन्धस्य प्रकारतया भानादित्याशयः ।
कर्त्रादौ देवनादिरूपक्रियाया क्रियाकारकभावसम्बन्धस्य प्रकारतया भानादित्याशयः । * अभिन्नरूपादिति * प्रत्ययान्तत्वेऽपि
* रूढेरिति * कथमप्यवयवयोगादर्थविशेषप्रसिद्धादित्यर्थः । * अभिन्नरूपादिति * प्रत्ययान्तत्वेऽपि
प्रत्ययलुका प्रकृतिसमानाऽऽकारात् 'शिष्यमाण लुप्यमानार्थाभिधायि' इति न्यायेन प्रकृत्यर्थान्वितप्रत्ययार्थाभिधायिन
इत्यर्थः । * अव्यभिचरितसम्बन्धेभ्य इति * अव्यभिचरितो व्यक्तिनिष्ठात्यन्ताभावाप्रतियोगी सम्बन्धः समवायात्मको
यस्य जात्यादेस्तद्विशिष्टवाचकेभ्य इत्यर्थः । नात पाकादिना नाशेन स्वाश्रयनिष्ठाभावप्रतियोगिना तत्त्वम् । * उक्तेति *
'दामोदरत्वम्' इत्यादौ जातिविशेषेण भानादिति ग्रन्थेनेत्यर्थः । * द्वितीयं यथेति * अभिन्नरूपोदाहरण यथेत्यर्थः ।
तद्धितान्तत्वेऽपीत्यनेना तदुत्तरभावप्रत्ययेन सम्बन्धाभिधान प्राप्नोतीति सूचितम् । *अभेदप्रत्ययादिति* इदञ्च पञ्चम्यर्थे
विहितस्य मतुप सम्बन्धार्थकत्वशङ्कानिरासाय । 'तृतीयम्' इत्यस्योदाहरणं यथेति शेषः ।

सतो भावः सत्तेति । अत्र जातावेव प्रत्यय इति दिक् ॥ ४६ ॥

दण्डीत्यादौ प्रकृत्यर्थविशिष्टद्रव्यमात्रवाचकता तद्धितस्येति यदन्तं मीमांसकम्मन्यं प्रत्याह—

अत्रार्द्धजरतीयं स्याद् दर्शनान्तरगामिनाम् ।
सिद्धान्ते तु स्थितं पक्षद्वयं त्वादिषु तच्छृणु ॥ ५० ॥

प्रभा

दिगिति—'यं धर्ममपेक्ष्य शब्दस्यार्थाभिधाने प्रवृत्तिस्तदेव प्रवृत्तिनिमित्तं स एव त्वादिप्रत्ययार्थः । स च कचिज्जातिः, कचिद्गुणः, कचित्सम्बन्धः, कचिद् द्रव्यम्, कचिद्भावः' इति यथायथमूह्यम् । यथा घटत्वं जातिः । गुणवाचकात् त्वे शुक्लत्वं रूपत्वव्याप्यजातिः, गुणिवाचकात् त्वे शुक्लत्वं गुणः, राजपुरुषत्वम्=राजपुरुषसम्बन्धः, दण्डवत्त्वम्=दण्डः, दण्डसम्बन्धो वा, घटाभाववत्त्वम्=घटाभावः, घटाभावसम्बन्धो वा, दण्डत्वत्वम्=दण्डः । घटाभावत्वत्वम्=घटाभाव इति ॥ ४९ ॥

अत्र विशेषो वक्ष्यते—दण्डीत्यादाविति—'दण्डी' इत्यादौ मत्वर्थीयप्रत्ययान्ते दण्डादिरूपप्रकृत्यर्थविशिष्टो यः कश्चनार्थः पुरुषदेशादिरूपः स एव मतुबर्थः, नतु द्रव्यदण्डान्तरयोः सम्बन्धः । सम्बन्धस्य तु वाक्यविधया विशेष्यविशेषणभावबोधोत्तरमार्थप्रतीतिरेव, न शाब्दः । अत एव 'पाचकः' इत्यादिकृदन्तेऽपि क्रियाविशिष्टकर्त्रादिरेव कृदर्थः, सम्बन्धस्तूत्तरकालमर्थतः । तदुक्तम्—

पाकन्तु पचिरेवाह कर्तारं प्रत्ययोऽप्यकः ।
पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित् ॥

इति । नच दण्डादियुक्तं द्रव्यमनन्तमिति शक्तिग्रहासम्भवः, दण्डत्वेन दण्डमनुगमय्य तेनानुगमसम्भवात् । नच 'दण्डी' 'कुण्डी' इत्यादौ दण्डत्वकुण्डत्वादीनामप्यनन्तत्वात्तेन रूपेण दण्डादेरनुगमासम्भवेन तद्युक्तद्रव्याणामनुगमासम्भव इति वाच्यम्, प्रकृत्यर्थत्वेन दण्डादीननुगम्य तद्युक्तद्रव्याणामनुगमसम्भवादित्याह—अत्रार्द्धेति—अर्द्धं जरत्या अर्द्धजरती सैवेतीवार्थे कन्, तस्य लुका, सदृशे लक्षणया वा अर्द्धवृद्धातुल्यन्यायोऽर्द्धजरती । यथा कामिनो जरत्या अप्यर्द्धं विपर्ययवासनया कामयन्ते, मुखस्तनादिकन्तु सौन्दर्यराहित्यान्न कामयन्ते इत्यर्द्धस्य कामनाविपर्यत्वमर्द्धस्य तदविपर्यत्वञ्चानुचितम् । यथा वा अर्द्धं जरत्याः कुक्कुट्याः पाकाय, अर्द्धञ्च प्रसवाय चेति कौशलासम्भवः, किन्तु जरत्या एव पाकः, युवत्यास्तु प्रसवार्थत्वम् । तथा एकस्यैव द्विविधकार्यकरत्वं न युक्तम् । प्रकृते कस्यचिद्भावप्रत्ययस्य सम्बन्धवाच-

दर्पणव्याख्या

* सत इति * सच्छब्दजन्यबोधे धर्मपर्कारौ सत्तायाः प्रकारतया भानात्तदुत्तरभावप्रत्ययेनापि सैवाभिधीयते धर्मः । तथाचोत्तरपद्येषु भावप्रत्ययान्तात् सम्बन्धाभानादुक्तवाक्ये अन्यत्रेत्युक्तमिति भावः ।

ननु 'गुरुत्वं सत्त्वम्' इत्यादौ सतोऽपि शौक्ल्यादिसम्बन्धस्य भावप्रत्ययेनानभिधानवत् 'राजपुरुषः' इत्यत्रापि नभिधानं स्यात्, तत्रापि राजादीनां पुरुषादिपदार्थे स्वत्वादिसम्बन्धेन प्रकारतेत्यस्यापि वक्तुं शक्यत्वादित्यत आह—दिगिति * तद्धर्मस्तु निर्वक्ष्यमाणभावे "तस्य भावः" (पा० सू० ५ । १ । ११ ।) इति सूत्रेण त्वतलादयो विधीयन्ते ।

ननु जातिगुणादिना भावत्वेन सम्बन्ध एवेति नियमः । तथाच 'यत्प्रकृतेर्यद्धर्मप्रकारबोधः शास्त्रसम्मतः स एव ...स्याभिधेयः' इति दण्डादिभिन्नप्रकृते कृदन्तादितोऽपि सम्बन्धप्रकारकबोधस्य भाष्यसम्मतत्वात् तदेव ...प्रत्ययेना... ...वे नोक्तेषु भावप्रत्ययस्य जात्याद्यभिधायकत्वमिति ॥ ४९ ॥

अत्र=भावप्रत्ययविषये। तथाहि – दामोदरत्वम्, घटत्वमित्यादौ भावप्रत्ययस्य सम्बन्धानभिधायकत्वेन मीमांसकानां दण्डित्वमित्यादिष्वपि तदभिधानं न स्यात्। प्रकृतिजन्यबोधे प्रकारः प्रकृत्यर्थसमवेतो हि तदुत्तरभावप्रत्ययेनाभिधीयते। अन्यथा घटत्वमित्यत्र द्रव्यत्वादेः, दण्डित्वमित्यादौ दण्डादेश्च तदुत्तरभावप्रत्ययवाच्यताऽऽपत्तेः। नच तन्मते दण्डीत्यादिबोधे सम्बन्धः प्रकारः।

प्रभा

कत्वं कस्यचित्तद्विरवाचकत्वं न युक्तमिरयर्द्धजरतीयन्यायविषयः। तुल्ययोर्भावप्रत्यययोर्विभिन्नार्थकत्वं न युक्तमिति भावः। सम्बन्धानभिधायकत्वेन=सम्बन्धानभिधानेन। दर्शनान्तरगामिनामित्यस्यैवार्थः—मीमांसकानामिति। तदभिधानमिति—सम्बन्धाभिधानमित्यर्थः। न स्यादिति—उक्तन्यायविरोधादिति भावः। ननु 'दामोदरत्वम्' 'घटत्वम्' इत्यादिषु भावपदेन दामोदरादिनिष्ठो धर्मविशेष उच्यते, 'दण्डित्वम्' इत्यादौ तादृशो भावः संयोगादिरेवेति तेन तदभिधाने किं बाधकमित्याशङ्कायामाह—प्रकृतिजन्येति—हि इति। यत उक्तरूपो भावस्तदुत्तरभावप्रत्ययेनाभिधीयते। तत्र (मीमांसकस्य) मते दण्डित्वमित्यादौ दण्डिपदजन्यशाब्दबोधीयप्रकारतायाः संयोगेऽभावेन भावप्रत्ययेन तदभिधानं न स्यादिति भावः। 'प्रकृतिजन्यबोधे प्रकारीभूतः' इति विशेषणाभावे 'घटत्वम्' इत्यनेन प्रकृत्यर्थनिष्ठस्य द्रव्यत्वादेरप्यभिधानं स्यादित्यर्थः। ननु एवम् 'दण्डित्वम्' इत्यनेन दण्डस्येव प्रकृत्यर्थे प्रकारतया भासमानत्वेन तत्प्रत्ययेनाभिधानं स्यात्, न तु संयोगस्य, तस्य तत्र संसर्गतया भानस्वात्। तन्मते=मीमांसकमते। प्रकार इति—दण्ड एव संयोगसम्बन्धेन प्रकारः। शाब्दिकमते तु दण्डस्य प्रकारत्वेऽपि प्रकृत्यर्थे पुरुषादौ समवायसम्बन्धेन वृत्तित्वाभावान्न तस्य भावत्वमिति न तत्र प्रत्यय इति भावः। नचैवम् 'दण्डत्वत्वम्' 'अभावत्वम्' इत्यत्र दण्डत्वे, अभावे च दण्डत्वत्वस्याभावत्वस्य च स्वरूपसम्बन्धेनैव प्रकारतया भावप्रत्ययवाच्यत्वानुपपत्तिः, प्रकृत्यर्थसमवेते-त्यस्य प्रकृत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारताऽवच्छेदकसम्बन्धेन प्रकृत्यर्थनिष्ठेत्यर्थेनादोषात्। ननु यत्र प्रकृतिजन्यबोधे प्रकारः स्वस्मिन् समवायेन नास्ति तत्र स्वसमवेतः सम्बन्धः संयोगादिरेव त्वादिवाच्यः

दर्पणव्याख्या

'प्रकृत्यर्थविशिष्टद्रव्यमात्रवचनता' इति पाठः। मात्रपदेन सम्बन्धव्यवच्छेदः। * तद्धितस्येति * त्वादेरित्यर्थः।
* सम्बन्धानभिधायकत्वेनेति * प्रकृतिजन्यबोधे तस्याप्रकारत्वादिति भावः। * तदभिधानम् * सम्बन्धाभिधानम्।
* न स्यादिति * किन्तु दण्डस्यैवाभिधानं स्यात्, नच तदभिधानमिष्टमिति भावः।
ननु प्रकृतिजन्यबोधविषयत्वे सति प्रकृत्यर्थवृत्तित्वं भावत्वम्। तच्च दण्डसम्बन्धस्याक्षतमिति भावप्रत्ययेन तदभिधानं भविष्यतीत्यत आह—* प्रकृतिजन्यबोध इति * उक्तार्थस्य भावत्वे 'दामोदरत्वम्' इत्यादौ जातिगुणसम्बन्धस्यापि भावार्थता प्रसज्येतेति भावः। क्रमेण दलद्वयव्यावर्त्यमाह—* अन्यथेति * एकतरदलानुपादाने इत्यर्थः।
* तदुत्तरेति * घटदण्डिपदोत्तरेत्यर्थः। तथाच 'घटत्वम्' इत्यादौ द्रव्यत्वस्येव तन्मते दण्डीत्यादौ दण्डसम्बन्धस्याप्रकारत्वादभावत्वेन न तस्य प्रत्ययार्थत्वसम्भव इति भावः।
पदार्थतयाऽप्रकारत्वादभावत्वेन न तस्य प्रत्ययार्थत्वसम्भव इति भावः। मत्वादीनां सम्बन्धार्थकतया दण्डीत्यादिवाक्यजन्यबोधे सम्बन्धस्यैव प्रकारत्वेन
वस्तुतस्त्वन्यदलोपादानं व्यर्थम्, मत्वादीनां सम्बन्धवाचकत्वेऽपि तदाश्रिताश्रय-दण्डादीनां प्रकृत्यर्थेऽप्रकारत्वादेवानतिप्रसङ्गात्। मीमांसकैकदेशिमते मत्वर्थीयानां सम्बन्धवाचकत्वेऽपि तदाश्रिताश्रय-विशेष्यकबोधस्यैव तैरभ्युपगमेन तन्मतेऽपि प्रकृतिजन्यबोधनिवेशोऽयं दण्डादीनामप्रकारत्वेन प्रयोजनविरहादिति विभावनीयम्। *सम्बन्धः प्रकार इति* अस्य येन तस्य त्वादिप्रत्ययवाच्यता स्यादिति शेषः।

यत्तु—यदा स्वसमवेतोऽत्र वाच्यो नास्ति गुणोऽपरः ।
तदा गत्यन्तराभावात् सम्बन्धो वाच्य आश्रितः ॥ इति ॥

तन्न, इनादेः सम्बन्धिवाचकत्वेनोपपत्तौ गत्यभावाभावात्। प्रपञ्चितश्चैतदादावेव वैयाकरणभूषणे।

ननु तवापीदं वैषम्यं कथमित्यत आह—सिद्धान्ते त्विति । 'जायन्ते' इति वक्ष्यमाणविशेषणेऽन्वितम् । सिद्धान्ते प्रकृतिजन्यबोधे प्रकारे त्वादयो जायन्त इत्यर्थः ।

प्रभा

स्यादित्यत आह—यत्त्विति । स्वसमवेतः=प्रकृत्यर्थसमवेतः । अपरः=सम्बन्धाद्भिन्नः । गत्यन्तराभावात्=उपायान्तराभावात् । तथाच प्रकारीभूतस्य पदार्थस्य प्रकृत्यर्थसमवेतत्वाभावे प्रकारतावच्छेदकसम्बन्धस्याभिधानं भावप्रत्ययेनेत्यर्थः । सम्बन्धः=प्रकारतावच्छेदकीभूतः सम्बन्धः । सम्बन्धिवाचकत्वेति—इन्यादितद्धितस्य सम्बन्धप्रकारकबोधजनकत्वस्वीकारेण । उपपत्तौ=त्वादेः सम्बन्धवाचकत्वोपपत्तावित्यर्थः । गत्यभावेति—लिखितपुस्तकेषु 'अगत्यभावात्' इति पाठः । दण्डीत्यादेः सम्बन्धविशिष्टवाचकत्वेन सम्बन्धस्य भावप्रत्ययवाच्यत्वस्वरूपगतेः सत्त्वादित्यर्थः । एतत्=तद्धितानां सम्बन्धिवाचकत्वम् । आदावेवेति—वैश्वदेवीत्यादितद्धितानामित्यादिग्रन्थेनेत्यर्थः । वैषम्यमिति—दामोदरत्वमित्यत्र सम्बन्धो न त्वाद्यर्थः । 'दण्डित्वम्' इत्यादिषु तु सम्बन्धस्त्वाद्यर्थ इति वैषम्यमित्यर्थः । सिद्धान्ते त्वितीति—तत्र हि—'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति श्रुतिः । तत्रायं संशयः—अनया श्रुत्या आमिक्षावाजिनोभयगुणकमेकं कर्म विधीयते—उत आमिक्षागुणकं वाजिगुणकञ्च भिन्नं कर्मेति । ततः सिद्धान्तितम्—वैश्वदेवीत्यत्र तद्धितस्य सम्बन्ध्यर्थकतया वैश्वदेवीपद—आमिक्षापदयोः समानार्थकतया तद्धितरूपश्रुति-(शब्द) कृतः श्रौतः सम्बन्धः । भिन्नार्थकवाजिपदोपस्थापितवाजिनेन तु वाक्यीयः सम्बन्ध इति वाक्यापेक्षया श्रुतेर्बलवत्त्वात् वैश्वदेवयागानुवादेनान्तरङ्गतया श्रौताऽमिक्षारूपद्रव्यगुणकं कर्मैव पूर्वं विहितं स्यादिति निराकाङ्क्षत्वाद् वाजिनस्य तत्र सम्बन्धाभावेन वाजिनगुणकं कर्मान्तरमेव स्यादित्युक्तम् । तथाच श्रौतत्वनिर्वाहाय तद्धितस्य सम्बन्धिवाचकत्वमावश्यकम् । वक्ष्यमाणेति—वक्ष्यमाणेन द्विपञ्चाशत्तमकारिकाघटकेन 'जायन्ते' इत्यनेन 'सिद्धान्ते तु' इति पञ्चाशत्तमकारिकाघटकमन्वितमित्यर्थः । तदाह—सिद्धान्त इति—वैयाकरणसिद्धान्त इत्यर्थः ।

दर्पणव्याख्या

मीमांसकमतमुपन्यस्यति—*यत्त्विति* । *अत्र* दण्डित्वमित्यादौ । *स्वसमवेत*—त्वादिप्रकृत्यर्थसमवेतः । नीलत्वमित्यादौ नीलादिगुणवच्च सम्भवति यतोऽत सम्बन्धस्यैव भावप्रत्ययवाच्यत्वमाभिमतमित्यर्थः । दण्डादे प्रकृत्यर्थांशे प्रकारत्वेऽपि प्रकृत्यर्थासमवेतत्वेनामानत्वादिति भाव ।

*सम्बन्धिवाचकत्वेनेति* "तदस्यास्त्यस्मिन्" (पा० सू० ५ । २ । ९४) इति मतुपः सम्बन्धे विधानेऽपि, "दण्डी पुरुषः" इति सामानाधिकरण्यानुरोधात् सम्बन्धिवाचकत्वस्यावश्यकत्वादिति भाव । *गत्यभावाभावादिति* सम्बन्धस्यैव भावत्वसम्भवादिति भाव । *आदावेवेति* एवम् 'वैश्वदेवी' इत्यादिसामानाधिकरण्यस्योक्तरीत्यैवोपपत्तेरित्यन्तग्रन्थेन भूषणे इत्यर्थः । *तवापीति* वैयाकरणस्यापीत्यर्थः । *इदम्*—क्वचिज्जात्यादिवाचकत्वम्, क्वचित् सम्बन्धवाचकत्वमित्येव रूप वैषम्यमित्यर्थः ।

प्रकृतिजन्यबोधे प्रकार इत्यत्र पचद्वयं स्थितमिति योजना ॥ ५० ॥

तौ पक्षावाह—

प्रयोगोपाधिमाश्रित्य प्रकृत्यर्थप्रकारताम् ।
धर्ममात्रं वाच्यमिति यद्वा शब्दपरा अमी ॥ ५१ ॥
जायन्ते तज्जन्यबोधप्रकारे भावसंज्ञिते ।

प्रयोगे उपाधिर्निमित्तं प्रकृत्यर्थप्रकारताम्=प्रकारतया भासमानं धर्मं वाच्यतया आश्रित्य त्वादयो जायन्ते । प्रकृतिजन्यबोधे प्रकारस्त्वाद्यर्थ इति यावत् ।

प्रभा

प्रकृतिजन्येति—प्रकृतिनिष्ठशक्तिज्ञानजन्येत्यर्थः । तेन गङ्गापदान्न तटत्वे त्वादिः । इत्यर्थ इति—अतः परम् 'प्रकृतिजन्यबोधे प्रकारः सम्बन्धरूपो वा जातिरूपो वा तत्र नाग्रह इति भावः' इति लिखितपुस्तके पाठः । क्वचित् 'समप्रकृतिजन्यबोधप्रकारः क इत्यत्र पक्षद्वयं स्थितमिति योजना' इति पाठः ॥ ५० ॥

तौ पक्षाविति—द्वित्वविशिष्टत्वेन निर्दिष्टयोः पक्षयोः स्वरूपमाहेत्यर्थः । सामान्यतो निर्दिष्टौ विशेषत आहेति यावत् । प्रयोगे=तत्तच्छब्दानामर्थबोधनायोच्चारणे कर्तव्ये । निमित्तमिति—कारणमित्यर्थः । अर्थगतं यं धर्मं दृष्ट्वा त्वादिप्रकृतेः प्रयोगस्तं धर्ममिति यावत् । यथा घटशब्दो जातिमादायार्थबोधनाय प्रवर्तत इति घटत्वं जातिः । गुणमात्रवृत्तिभ्योऽपि रूपादिभ्यो भावप्रत्यये रूपत्वादिशब्देन जातिरेवाभिधीयते । ये तु शुक्लादयो गुणिवाचकास्तेभ्यो गुणे प्रत्ययः । गुणपरत्वे तु जातावेव । अणुमहद्ध्रस्वदीर्घादिभ्यो नित्यं परिमाणवाचिभ्योऽपि परिमाणरूपे गुणे एव । 'पाचकः' इत्यादौ क्रियाप्रकारकबोधात्पाचकत्वमित्यादिना विशेष्यतया क्रियैव वोच्यते । एवमेव सर्वत्र यथानुभवं द्रष्टव्यम् । प्रकारतामापन्नमित्यर्थस्तदाह—प्रकारतयेति ।

दर्पणव्याख्या

ननु प्रकृतिजन्यबोधप्रकारत्वेनैवोपाधेः सङ्ग्रहे तस्य पृथगुपादानं व्यर्थमत आह—*प्रकृतिजन्येति* । तच्च सकलतद्वृत्तित्वम् । सत्यन्तापादाने द्रव्यत्वादेर्घटाप्रकृत्यर्थवृत्तिरसाधारणो धर्मस्तस्मिन्नसाधारणत्वम्—तदितरावृत्तित्वे सति तत्र तत्पदार्थस्य घटादेरसाधारण्यम्, विशेष्योपादानाच्च तद्वृत्तित्वादिनिरासः । तेन रूपेण धर्मो भावप्रत्ययवाच्यः । तत्रापीतरवृत्तित्वमभावः । शाकस्य वृत्तिमच्च दिप्रकृत्यैव लाभादनन्यलभ्य इतरावृत्तित्वादौ भावप्रत्ययस्य शक्तिः । इतरवृत्तित्वप्रतियोगिकाभावस्यातिप्रसक्तत्वादितरवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धत्वाद् विशकलितमर्थं । अत्र च प्रकृतिजन्यबोधे येन सम्बन्धेन प्रतिपाद्यतावच्छेदकधर्मस्य प्रकारता घटत्वादौ बाधाच्च विशिष्टस्य शक्यत्वासम्भवात् । नातः कालादौ कालिकादिसम्बन्धेन घटत्वस्य वृत्तावपि क्षतिः । तथा घटत्वेन सम्बन्धेनेतरावृत्तित्वं वृत्तिमत्त्वञ्च बोध्यम् । प्रमेयत्वमित्यादौ त्वितरावृत्तित्वांशो न भासते, अप्रसिद्धत्वात्, किन्तु सकलप्रमेमित्यादौ कम्बुग्रीवादिमत्त्वस्य भानम् । न च विशिष्टस्यानतिरिक्तत्वमते गुणान्यत्वविशिष्टसत्त्वमित्यादौ यवृत्तित्वमात्रम् । एवम् 'एकत्वम्' इत्यत्र सावाल्यांशोऽपि । सकलमहद्वृत्तित्वस्य महत्परिमाणादौ चासम्भव इति वाच्यम्, विशिष्टसत्त्वे विशिष्टसदितरावृत्तित्वस्य महत्त्वमित्यादौ तदितरत्वव्यापकात्यन्ताभावप्रतियोगितावच्छेदकतद्वृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वे दलद्वयतात्पर्येणादोषात् । तत्रायदरः घटत्वमित्यादौ द्रव्यत्वादेरसाधारण्यवारणायेति भावः ॥ ५० ॥

*प्रयोग इति* शब्दप्रवृत्तावित्यर्थः । *निमित्तमिति* यद्धर्मवत्त्वेन ज्ञातेऽर्थे यच्छब्दः प्रयुज्यते स

सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥

इति वाक्यपदीयात् । उक्तञ्च "तस्य भावस्त्वतलौ" ( पा० सू० ५ । १ । ११९ ) इति सूत्रे वार्तिककारैः—"यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ" इति ।

यस्य गुणस्य=विशेषणतया भासमानस्य, भावात्=आश्रयत्वात्, द्रव्ये = विशेष्ये, शब्दनिवेशः = शब्दप्रवृत्तिः, तस्मिन् वाच्ये त्वतलावित्यर्थः । तथाच रूपादिशब्देभ्यो जातौ, शुक्लगुण-दीर्घमहदादिभ्यो गुणे, पाचकादिशब्देभ्यः क्रियायाम्, घटादिशब्देभ्यो जातौ प्रत्ययः, रूपादिशब्दानां जातिप्रकारकबोधजनकत्वात् । पाचकादिशब्दानां क्रियाप्रकारकबोधजनकत्वे तस्यां प्रत्ययः ।

प्रभा

सम्बन्धिभेदादिति—सम्बन्धिभेदादित्यस्य व्यक्तिभेदादित्यर्थः । भिद्यमाना=व्यक्तिरूपोपाधिना पृथक्त्वेन प्रतीयमाना । तस्याम्=ब्रह्मसत्तायाम् । व्यवस्थिताः= तामेव प्रवृत्तिनिमित्तमादाय स्वार्थबोधेन नियताः । व्यवस्थामेवाह—तामिति । धात्वर्थञ्चेति—धातुवाच्य- पचित्वादिजातिरेव । सा च क्रमिकाधिश्रयणाद्यनेकव्यक्तौ वर्तमाना फूत्काराद्यनेकव्यक्तिभिर्व्यज्यते तदुक्तम्—

तत्तद्व्यक्तिविशिष्टब्रह्मसत्ताया एव जातित्वे प्रमाणमाह—

जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्तिनीम् । इति ।

नित्या=प्रागभावाप्रतियोगिनी । महान्-आत्मा प्रपञ्चाधिष्ठानतया महान् । ताम्=तत्तद्व्यक्तिवर्तिनी त्ताम् । गुणस्येति—गुणशब्दोऽत्रोपकारकपरः । इतरव्यवच्छेदक एवोपकारः । विशेषणतयेति— तदुक्तं त्यटेन—'गुणशब्देन यावान् कश्चित् पराश्रयो भेदको जात्यादिः सर्व इह गृह्यते' इति । शुक्लेति— शुक्लशब्दो गुणपरः 'शुक्लो गुणः' इति ततो गुणत्वव्याप्यजातौ भावप्रत्ययः । शुक्लत्वं जातिः । 'शुक्लो घटः' इति गुणि- परत्वे गुणे शुक्लत्वं गुणः । अश्वादिशब्दास्तु गुणिपरका एवेति तेभ्यो गुणे एव त्वादयः । तस्याम्= क्रियायाम् । पाचकादिशब्दानां क्रियाकारकभावरूपसंसर्गप्रकारकशाब्दिकवादिमते तु क्रियाकारकसंसर्ग

दर्पणव्याख्या

'जाति पदार्थः' इति कल्पे साधकमिदम् । सम्बन्धिभेदात्—अनुयोगिभेदात्, त्वे च मानमाह—*सम्बन्धिभेदादिति* । भिद्यमाना=गवेतरासमवेतत्वे सति सकलगोसमवेतत्वादिना तद्व्यक्त्युपरागेण वा पार्थक्येन प्रतीयमाना गवादिनिष्ठा ब्रह्मसत्तैव जातिरित्युच्यते । तस्या सर्वे शब्दा वाचकत्वेन व्यवस्थिता इत्यर्थः । तदेव व्यक्तीकरोति—*तामिति* ता तत्तद्व्यक्त्युपरक्तां सत्तामित्यर्थः ।

*धात्वर्थमिति* आख्यातधिकरणन्यायेन, "जातिमन्ये क्रियामाहुः" इति पक्षाभिप्रायेण वा । महानित्या- त्मविशेषणम् । क्वचिज्जात्यादिः, क्वचित् सम्बन्धार्थं इत्युक्तार्थे वार्तिकं प्रमाणयति—*उक्तञ्चेति* गुणशब्दस्य वैशेषि- काणां रूपादिष्वेव प्रसिद्धेः । प्रकृतोपयुक्तार्थपरतामाह—*विशेषणतयेति* । तथाच प्रकृते गुणपदमुपसर्जनीभूतार्थपर- मिति भावः । पर्यवसितमाह—*तथाचेति* । रूपादीत्यादिना रसादे . गुणपरशुक्लादेश्च सङ्ग्रहः । *बोधजनकत्व इति* बोधजनकत्वमत इत्यर्थ । व्यपेक्षादे क्रियाका[illegible]त्वेन कर्तृकर्त्रादौ धात्वर्थस्यैव प्रकारतया भानोपगमादिति भावः।

'संसर्गप्रकारकबोधजनकत्वम्' इति मते च संसर्ग इति व्यवस्था सूपपादेति भावः। तत्र जातिवाचकानां व्यक्तय एव शक्यताऽवच्छेदिकाः। तथाच 'घटत्वम्' इत्यत्र 'घटवृत्तिरसाधारणो धर्म्मः' इति बोध इत्यादि द्रष्टव्यम्।

पक्षान्तरमाह—यद्वेति—"यद्वा सर्वे भावाः स्वेनार्थेन भवन्ति, स तेषां भावः" इति वार्तिकोक्तेः। यद्वाशब्दस्तत्सूचनप्रयोजनकोऽपि। भवन्ति=वाचकत्वेन प्रवर्त्तन्ते इति

प्रभा

एव पाचकत्वादिपदवाच्यस्तदाह—संसर्गप्रकारकेति। तत्रेति—घटकत्वं त्रलर्थः। भावप्रत्ययान्तघटकानां जातिवाचकानामित्यर्थः। व्यक्तय एवेति—घटत्वे व्यक्तिरूपघटस्वत्वस्य प्रकारीभूतत्वादिति भावः। शक्यतावच्छेदिका इति—घटत्वादौ स्ववृत्तित्वसम्बन्धस्य सत्त्वात्तेन सम्बन्धेन व्यक्तय एव शक्यतावच्छेदिका इति भावः। तत्र तत्र त्वाद्यर्थं निरूप्य शाब्दबोधप्रकारमाह—तथाचेति। 'घटत्वम्' इत्यादौ स्वेतरासमवेतत्वविशिष्टनिखिलस्वसमवेतसम्बन्धेन प्रत्ययार्थे धर्मे व्यक्ते प्रकारतया तत्राप्यसाधारणधर्मत्वं सुलभम्। एतदभिप्रायेणैवासाधारणो धर्म इति बोधे उक्तम्। तेन न द्रव्यत्वादिनिष्ठशक्तेर्घटावच्छिन्नत्वम्, स्वेतरासमवेतत्वसम्बन्धेन द्रव्यत्वस्य वृत्तित्वाभावात्। नच घटत्वादौ व्यक्तीनां शक्यतावच्छेदकत्वे तदानन्त्यादननुगमः, गोत्वादीनामेवानुगमकस्य सत्त्वात्। असाधारणधर्मत्वेन शक्तिस्तु न त्वादीनाम्, तस्येतरावृत्तित्वविशिष्टसकलप्रकृत्यर्थवृत्तित्वरूपत्वेन गौरवात्। पक्षान्तरमाह—यद्वेति—'यद्वा शब्दपरा अमी' इति कारिकायां यद्वाशब्देन पक्षान्तरमाहेत्यर्थः। वार्तिकोक्तेरिति—'तस्य भावस्त्वतलौ' (५।१।११९) इति सूत्रे वार्तिकोक्तेरित्यर्थः। तत्सूचनेति—कारिकायां यद्वाशब्दः पक्षान्तरं द्योतयन्नपि कारिकाकृता यद्वाशब्दघटितस्य वार्तिकस्याध्ययनाध्यापनकाले स्मरणायोक्त इति भावः। वार्तिकस्वरूपञ्च 'यद्वा सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावस्तदभिधाने' किमेभिस्त्रिभिर्भावग्रहणैः क्रियते। एकेन शब्दः प्रतिनिर्दिश्यते, द्वाभ्यामर्थ इति। यद्वा सर्वे शब्दाः स्वेनार्थेन भवन्ति स तेषामर्थ इति। 'तदभिधाने वा त्वतलौ भवत इति वक्तव्यम्' इति। भावा इति—'भवतेश्चेति वक्तव्यम्' इति कर्तरि णप्रत्ययः। धातूनामनेकार्थत्वात् प्रवृत्त्यर्थकोऽत्र भूधातुः। प्रवृत्तिश्च प्रकृते प्रयोगरूपैव। एवञ्च भावशब्दः शब्दपर्याय इत्याह—

दर्पणव्याख्या

[illegible]सिद्धान्तमनुसृत्याह—*संसर्गप्रकारकेति*। *सूपपादेति* भावप्रत्ययो [illegible]नियमादिति भावः। *तत्रेति* जात्यादि[illegible] मध्ये इत्यर्थः। *जातिवाचकानामिति* अर्थनिष्ठशक्तेरिति शेषः।

[illegible]नां [illegible]शब्दानां मतेः शक्यतावच्छेदकत्वमुपपादयन्नाह—* जातिवाचकानामिति * भावप्रत्ययानामिति शेषः। * अवच्छेदिका इति * [illegible] घटत्वादिजातिनिष्ठशक्तेः स्वेतरावृत्तित्वविशिष्ट निखिल[illegible]शक्त्यवच्छेदिका इत्यर्थः। तेन न द्रव्यत्वादिजातिनिष्ठशक्तेर्घटावच्छिन्नत्वम्। [illegible] [illegible]धर्मेणेति भावः। [illegible]—*घटवृत्तिरिति*। * पक्षान्तरमिति * [illegible] [illegible] इति [illegible]। "[illegible] गौरित्येव हि [illegible]" इति [illegible]। * तत्सूचनप्रयोजनकोऽपीति * यद्वा शब्दघटितस्य वार्तिकस्य [illegible]

भावाः = शब्दाः । स्वेन = रूपेण = अर्थेन भवन्ति = प्रवर्त्तन्ते । अतः स तेषां भावः = प्रवृत्तिनिमि-
त्तमित्यर्थः । अयं भावः—अर्थवच्छब्दोऽपि द्रव्ये प्रकारः । हरिहरनलेदवाकुयुधिष्ठिरवसिष्ठादिशब्देभ्य-
स्तत्तद्वाच्यः कश्चिदासीदिति शब्दप्रकारकबोधस्य सर्वसिद्धत्वात् , अन्यथा वनौषधिवर्गादेर्ना-
गरिकान् प्रत्यबोधकत्वापत्तेश्च । एवमेवाप्रसिद्धार्थकपदेष्वनुभवः सर्वसिद्धः, ननु घटादिपदेष्विव तत्त-
ज्जात्यादिभेदेन (रूपेण) । तथाचोभयमवच्छेदकम् । यस्य तथाशक्तिग्रहस्तस्य जात्यादिरूपेणैवोपस्थितिः ।

प्रभा

भावाः=शब्दा इति । स्वेन रूपेणेत्यत्र स्वशब्द आत्मीयवाची । तथाच भावाः=शब्दाः स्वस्य वाच्यो
योऽर्थस्तेन भवन्ति=तत्रार्थे वाचकत्वेन प्रवर्तन्ते । अर्थप्रत्यायनार्थमेव शब्दप्रयोगाच्छब्दप्रयोगेऽर्थस्य
करणत्वमिति तेनेति तृतीयान्तेन निर्देशः । स चार्थो द्विविधः—वाच्यः, प्रवृत्तिनिमित्तञ्च तत्र वाच्यं
द्रव्यम् ( आश्रयः ) शब्दो वा प्रवृत्तिनिमित्तञ्च घटादिशब्देषु जातिः, पाचकादिशब्देषु क्रिया, राजपुरुषा-
दिशब्देषु सम्बन्धः, डित्थादिषु सञ्ज्ञेति यथानुभवं बोद्धव्यम् । वार्तिके 'सः' इत्यस्य प्रवृत्तिनिमित्तरूपोऽर्थ
इत्यर्थः, तदनुरोधेनैव शब्दानां प्रवृत्तेः । ननु अनेन वार्तिकेन शक्यतावच्छेदकमेव भावप्रत्ययवाच्यमिति
लब्धं तर्हि को विशेष पूर्वपक्षादिति चेदत्रोच्यते—

पूर्वोक्तपक्षे घटत्वादिशब्देषु व्यक्तिरेव शक्यतावच्छेदिका । अत्र मते शब्द एव शक्यतावच्छेदक
इति विशेषः । एवञ्चात्र पक्षे गोत्वमित्यस्य गोशब्दप्रवृत्तिनिमित्तम्, पाचकत्वमित्यस्य पाचकशब्दप्रवृत्तिनि-
मित्तम्, शुक्लत्वमित्यस्य च शुक्लशब्दप्रवृत्तिनिमित्तमिति चार्थ इति कैयटानुसारिणो वार्तिकाभिप्राय-
माह । वस्तुतस्तु सर्वे भावाः=शब्दाः स्वेनात्मरूपेणार्थेन भवन्ति=अर्थकथने प्रवर्तन्तेऽतः स शब्द एव तेषां
भावः=प्रवृत्तिनिमित्तमित्यर्थः । ननु शब्दस्य प्रवृत्तिनिमित्तत्वमशक्यम्, शक्ये प्रकारस्यैव तत्त्वादित्याशङ्का-
यामाह—अयम्भाव इति—जात्यादिरिव शब्दोऽपि द्रव्ये शक्यतावच्छेदकः । कृष्ण-नल-युधिष्ठिरादिशब्देषु
तत्तच्छब्दवाच्यो यः कश्चिदासीदित्येव बोधात् । एवमेव सर्वत्राप्रसिद्धार्थकपदेषु अनुभवः सर्वसिद्ध इति
शब्दोऽपि स्वादिप्रत्ययार्थः । तद्व्यक्तित्वेन रूपेण शक्तिग्रहस्त्वसम्भावित एव, तत्तद्रूपेणानुभवासम्भवात् ,
शब्दप्रकारिकाया एव तज्जन्योपस्थितेः । नागरिकानिति—तेन रूपेणानभिज्ञस्योपलक्षणमिदम् । उभयमवच्छेदक-
मिति—जात्यादिरूपम् शब्दरूपञ्चेत्यर्थः । शब्दस्य शक्तिसम्बन्धेन सङ्केतसम्बन्धेन वा शक्यतावच्छेदक-
त्वम् । जात्यादेस्तु यथार्हं समवायादिसम्बन्धेन । तथाशक्तिग्रह इति=जात्यादिरूपेण शक्तिग्रहः ।

दर्पणव्याख्या

वर्तते इत्यर्थात् कथं पक्षान्तरपरता, कथं वार्तिकोर्धर्मस्य शब्दस्य भावत्वञ्चेत्यस्य आशयं प्रकाशयति—
* अयं भाव इति * । जात्याद्यर्थस्य द्रव्यांशे विशेषणतायाः प्रसिद्धत्वात्तद्दृष्टान्तेन शब्दस्यापि तां साधयति—
* अर्थवदिति * जात्यादिवदित्यर्थः । शब्दस्यार्थविशेषतायामसाधारणस्थलमाह—* हरिहरेति * । 'कश्चिदासीत्'
इत्यनेन जात्यादिप्रकारकबोधाभावो ध्वन्यते । हर्यादौ सन्निकर्षाभावेनानुपस्थितहरित्वाद्यवच्छेदेन शक्तिग्रहाभावेन
तद्धर्मप्रकारकशाब्दबोधासम्भवादुपस्थितपदस्यैव विशेषणत्वमभ्युपगम्य शाब्दबोध उपपादनीय । यथान्य वृत्त्या तदुपस्थि-
तेस्तथोपपादितं नामार्थनिरूपण इति भावः ।
* अन्यथेति * अर्थांशे शब्दस्य प्रकारत्वानभ्युपगम इत्यर्थः । आरण्यकानां सन्निकर्षेण जातिधर्मितावच्छेदक-
शक्तिग्रहसम्भवादुक्तम्—* नागरिकानिति * । * एवमेवेति * पदप्रकारेणैवेत्यर्थः । * अप्रसिद्धेति * । अगृहीत
जातित्वादिविशिष्टशक्तिकपदेष्वित्यर्थः । * जात्यादिभेदेनेति * तद्विशेषेणेत्यर्थः । क्वचित्तु जात्यादिरूपेणैवेत्येव पाठः ।
* अवच्छेदकमिति * शक्यतावच्छेदकमित्यर्थः ।
जात्यादिरूप पदञ्चेत्यर्थः ।

पदाप्रकारकः शक्तिग्रहस्तु विशिष्य नापेक्षितः। किन्तु 'इदं पदं कचिच्छक्तम्, साधुपदत्वात्' इत्यादिरूप एवापेक्ष्यते इति विशिष्यागृहीतशक्तिकेभ्यस्तथैव बोधः। तथाच 'शब्दोऽपि त्वप्रत्ययार्थः' इति प्रपञ्चितं भूषणे ॥ ५१ ॥

इति वैयाकरणभूषणसारे त्वादिभावप्रत्ययार्थनिर्णयः ॥ ६ ॥

प्रभा

विशिष्येति—तद्व्यक्तित्वादिविशेषरूपेणेत्यर्थः। तथाच=शब्दस्यापि शाब्दबोधप्रकारत्वे च। णत्वं कुत्वमित्यादिषु णत्वावच्छिन्नाभिन्नो यो णपदवाच्यस्तत्र शक्तिः, कुपदादेश्च कवर्गाभिन्नो यः कुपदवाच्यस्तत्र शक्तिः। तथाच णत्वावच्छिन्नस्य णकारस्य, कवर्गस्य चाभेदेन प्रकारतया भासमानस्य प्रवृत्तिनिमित्तत्वेन तत्र त्वप्रत्यये णत्वमित्यस्य णकारः, कुत्वमित्यस्य कवर्ग इत्यर्थान्नासङ्गतिः। अत एव 'कुत्वं कस्मान्न भवति' इति 'वृद्धिरादैच्' इति सूत्रस्थं भाष्यं सङ्गच्छते। तस्य कवर्गाभिन्नो यः कुपदवाच्यस्तत्र शक्त्या 'कवर्गः कस्मान्न भवति' इत्यर्थात्। वस्तुतस्तु शब्दब्रह्मवादिनये धर्मी एक एव ब्रह्मरूपः। काल्पनिकजात्यादिधर्मभेदेनैव धर्मिणो भेदेन प्रतीयन्ते इति धर्मा एव शास्त्रविधेयाः, धर्मिणो नित्यतया विधातुमशक्यत्वादिति णत्वं कुत्वञ्च यथाश्रुतमेव साधु।

वस्तुतस्तु शब्दनित्यत्ववादिनये बुद्धिविपरिणामे एव शास्त्रतात्पर्याद् धर्मिणोऽपि तथाप्रतीतौ बाधकाभावः।

भावप्रत्ययभावस्य विस्तरेण निरूपणम्।
भवस्य कृपया पूर्णं प्रभायां बालकृष्णतः॥

"शुभम्भूयात्"

दर्पणव्याख्या

ननु जात्याद्यनुपस्थितिदशायाम् 'अयमर्थ एतत्पदवान्' इति शक्तिग्रहोऽप्यसम्भवदुक्तिकोऽत आह—* पदाप्रकारक इति *। * विशिष्येति * घटत्वादिरूपेणेत्यर्थः। यद्यपि 'सर्वे भावाः' इति सर्वशब्दोपादानादेतत्पक्षे शब्दस्यैव सर्वशब्दप्रवृत्तिनिमित्तत्वमवगम्यते। तथापि घटत्वादिना गृहीतशक्तिकघटादिपदाद् घटत्वप्रकारकबोधस्य सार्वजनीनप्रसिद्धिसिद्धस्यापह्नोतुमशक्यतया प्रायशः प्रसिद्धार्थकस्थले शब्दाप्रकारकोपस्थानानुभवेन चैतत्पक्षेऽपि जात्यादीनां शब्दप्रवृत्तिनिमित्तत्वमङ्गीकरणीयमेव।

यत्किन्तु भावशब्दस्याप्रसिद्धार्थकत्वाच्छब्दपरतया योजनम्, तत्र निमित्तान्तराभावेन वार्तिककारोक्तशब्दस्यैव शब्दप्रवृत्तिनिमित्तत्वावधारणात्। यथा—डित्थादिशब्दानाकृतदे। अत एव "अनुदात्तङित." (पा० सू० १।३।१२) इति सूत्रेऽनुदात्तङितो धात्वात्मनेपदमित्यस्य 'तदाग्नौ तादर्थ्ये' इति तत्र "यथासंख्यमनुदेशः प्राप्नोति" इति यथासंख्यपक्षे भाष्यादुक्तं सङ्गच्छते। अन्यथा न तानौ वर्णत्वेनात्मनेपदत्वेन बोधे भेदाभावेन तत्र च क्रमिकत्वानुपपत्तिः स्पष्टैव। अत एव भाष्यकारोऽपि 'उभयवत्त्वेऽस्त्रम्' इत्युपदेशम्—अनिष्टशब्दोऽपीति तदातत इति। कथं—यदि तत्र शक्तिग्रहोऽस्य आह—* किंत्विति * । * कचिच्छक्तमिति * किञ्चिदर्थनिष्ठशक्तिकमित्यर्थः। तथाच नृपादिशब्दश्रवणे नृपादिशब्दवाच्यत्वादीनां प्रकारत्वे भाने उपस्थितत्वप्रकारकत्वादिना सदर्थे भानमस्त्वित्युक्तम्' इत्येतद्वचनम्' इत्याकारकबोधादिकम्

## ॥ अथ देवताप्रत्ययार्थनिर्णयः ॥

"सास्य देवता" [ पा० सू० ४ । २ । २४ ] इत्यत्र देवताविशिष्टं देयं प्रत्ययार्थः । 'ऐन्द्री' 'वैश्वदेवी' इत्यादौ इन्द्रादेर्देवतात्वोपस्थापकान्तराभावात्,

प्रभा

स्मृतार्थविषयकोपेक्षानर्हत्वरूपप्रसङ्गसङ्गत्या त्यादेस्तद्धिततया तेन स्मृतदेवतादितद्धितार्थेष्वपि मीमांसकादिवैमत्यात् तन्निर्णेतुमाह—सास्य देवतेति—प्रथमोपस्थितापत्याद्यर्थकतद्धितेषु विप्रतिपत्तेरभावात्तदर्थविचारोपेक्षा । देवताद्यर्थकक्वतिपयतद्धितेषु नानापक्षदर्शनात्तन्निर्णय आवश्यक इति भावः । प्रथमान्तार्देवतोपाधिकात्षष्ठ्यर्थेऽणादय इत्यर्थकस्य 'सास्य देवता' इत्यस्योदाहरणे देवताविशिष्टं देयं प्रत्ययार्थः । 'देवता' इत्यत्र तु अत एव निर्देशात् स्वार्थे देवशब्दात्तल् । देये हविरादौ देवतावैशिष्ट्यञ्च 'स्वस्वामिभावसम्बन्धेन' 'स्वोद्देश्यकत्यागकर्मत्वसम्बन्धेन' वा बोध्यम् । मन्त्रे देवतावैशिष्ट्यञ्च स्वोद्देश्यकत्यागकरणत्वेन श्रुतिबोधितत्वेन । नच मन्त्रं विनाऽपि हविःप्रक्षेपादिक्रियासम्भवात्तस्य करणत्वासम्भवः, त्यागाङ्गव्यापारकत्वरूपकरणत्वस्य तत्रापि सम्भवात् । व्यापारश्चोच्चारणरूप एव । अत्र सम्बन्धित्वमेव प्रत्ययार्थतावच्छेदकम् । देयं प्रत्ययार्थ इति मन्त्रस्याप्युपलक्षणम् । अत एव 'ऐन्द्रो मन्त्रः' प्रत्ययार्थश्च क्वचिद्देयं क्वचिन्मन्त्ररूपश्चेति । 'आग्नेयी ऋक्' इत्यादि सङ्गच्छते ।

देवता च मन्त्रेण या स्तूयते सा, वेदबोधितत्यागकर्मीभूतद्रव्यविषयिस्वत्वावच्छिन्नस्वामित्वप्रकारिताविच्छोद्देश्या वा । यथा 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यत्र 'त्यागकर्मीभूतचरुनिरूपितस्वामित्ववान् सूर्यो भवतु' इतीच्छोद्देश्यतायाः सूर्ये सत्त्वात्तस्य देवतात्वम् । अत्र वेदपदस्य श्रुतिपुराणाद्युपलक्षणत्वेन

दर्पणव्याख्या

पदार्थान्तरप्रकारक एवेत्यर्थः । एवकारेण जात्यादिप्रकारकबोधव्यवच्छेदः । इदञ्च कश्चिदर्थो नलादिपदशक्यः, अर्थत्वादित्यानुमानिकशक्तिग्रहाभिप्रायेण । उक्तोपनीतपदशक्तिग्रहे त्वर्थविशेष्यकबोधानुपपत्तिरेव । शक्तिज्ञानपदार्थोपस्थितिशाब्दबोधाना समानप्रकारकत्वनियमादित्यवधेयम् ।

नैयायिकास्तु—नलादिपदानामपि विशिष्य शक्तिग्रहो नानुपपन्नः, यत्र नलत्वादिसम्बन्धेन यत्किञ्चिद्धर्मवत्त्वधीस्तद्विषयीभूतनलत्वादेः शक्तिग्रहे धर्मितावच्छेदकतया भाने बाधकाभावात् । यद्वा यत्र 'प्रमेयत्वेन प्रमेयवान्' इत्याकारकनलत्वादिविशिष्टबुद्धिः, तत्र प्रमेयत्वांशे मोपदशाया स्वरूपतो नलत्वादिप्रकारकनलविशेष्यकस्मरणे बाधकाभावाच्चद्विषयनलत्वादिना विशिष्य नलादौ नलादिपदशक्तिग्रहेण तत्तद्रूपेण नलादिपदान्नलादिबोधस्य सुलभत्वात् । नच प्रमेयत्वादौ मोपकल्पने मानाभावः, अनुभूयमानतत्तद्धर्मप्रकारकशाब्दबोधानुपपत्तेरेव मानत्वात् । कथमन्यथाऽनुभवात्मनस्सनूहालम्बनादेकपदार्थोद्बोधकासमवधानेऽन्यपदार्थस्मृतिः । अक्लृप्तस्यार्थांशे पदविशेषणत्वस्य कल्पनापेक्षया तादृशस्मृतौ मनसत्वांशे मोपकल्पनस्यैव न्याय्यत्वात्, पदस्यार्थधर्मत्वाभावेन तस्य पदांशे विशेषणत्वासम्भवाच्च, तस्य पदस्य इत्थं पदे शक्तिरित्यर्थस्यालौकिकत्वेन पदप्रकारकबोधस्य सार्वत्रिकत्वासम्भवाच्चेत्याहुः ॥ ५१ ॥

इति वैयाकरणभूषणसारदर्पणे भावप्रत्ययार्थनिरूपणम् ॥ ९ ॥

ननु देवताया इन्द्रादिपदालाभेन तदन्तर्भावेण तद्धितशक्तिकल्पनमनर्थकमत आह—* देवताम्बोऽस्य

तेन रूपेणोपस्थितये शक्तिकल्पनाऽऽवश्यकत्वात् । अत एव—

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः ।
आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम् ॥ इति ॥

प्रभा

तद्बोधितमहेश्वरदुर्गादीनामपि देवतात्वं बोध्यम् । मन्त्रत्वञ्च वेदत्वे सति कर्मविधायकभिन्नवाक्यत्वरूपम्, वेदत्वे सति ब्राह्मणभिन्नत्वम्, अनुष्ठानकारकीभूतद्रव्यदेवताप्रकाशकवेदत्वं वा । वेदभिन्नानां मन्त्रत्वञ्च वैदिकमन्त्रमूलकत्वात्, मन्त्रत्वेन शिष्टप्रतीतिविषयवाक्यत्वाद्वा बोध्यम् । ब्राह्मणञ्च कर्मविधायकवेदरूपः, मन्त्रतात्पर्यार्थप्रकाशको वेदभागो वा । तेन रूपेणेति—देवतास्वरूपेणोपस्थितय इत्यर्थः । इन्द्रपदस्येन्द्रत्वेनोपस्थापकत्वेऽपि 'इन्द्राभिन्नदेवोद्देश्यकं हविः' इति शाब्दबोधः, तद्धितप्रत्ययस्य देवतायां शक्तिमन्तरा नोपपद्येतेति भावः । अत एवेति=देवताविशिष्टदेयस्य तद्धितार्थत्वादेव । मीमांसकैरुक्तम्—आमिक्षामित्यादीत्यर्थः । आमिक्षामिति—तप्ते पयसि दधियोगजा विकृतिरामिक्षा ( छेना ) इति लोके प्रसिद्धा । तथाच अमरः—

'आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः' । इति ।

एष तद्धित इति—'सा वैश्वदेवी आमिक्षा' इत्यत्र अण्रूपतद्धित इत्यर्थः । सान्निध्यादिति—सम्बन्धित्वेन तद्धितस्य देये शक्तिस्वीकारेऽपि देयस्यामिक्षात्वेन बोधस्तु आमिक्षापदसान्निध्यादेव, नतु तेन रूपेण तद्धितस्य शक्तिः । तस्यैव=आमिक्षारूपदेयस्यैव । विषयेति—दानविषयीकरणमित्यर्थः । अयम्भावः—'सास्य देवता' इत्यत्र 'अस्य' इति पदस्य विशेषार्थबोधकतया तदर्थे विहितस्य तद्धितस्यापि विशेषार्थबोधकत्वेन भाव्यम् । तत्र कोऽसौ विशेष इत्याकाङ्क्षायामामिक्षारूपद्रव्यस्यैव सान्निध्यात् 'स्वस्वत्वनिवृत्ति—परस्वत्वोत्पत्त्यनुकूलेच्छारूपदानविषयतया प्रतीतिरित्यर्थः । तथाच 'विषयार्पणम्' इत्यत्र विषयस्येति कर्मषष्ठ्यन्तेन त्यागरूपार्थकार्पणशब्दस्य षष्ठीसमासः । तत्रामिक्षया सह विषयस्याभेदेन नित्यसापेक्षतया

दर्पणव्याख्या

इन्द्रत्वेन रूपेण देवतोपस्थितावपि देवतात्वेन रूपेण तदुपस्थापकाभावादित्यर्थः । * तेन रूपेणेति *—देवतात्वेन रूपेणेन्द्रोपस्थितये इत्यर्थः । अन्यथा—

तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः ।
देवतासङ्गतिस्तत्र दुर्बलं च परं परम् ॥

इति मीमांसकसिद्धान्तासङ्गतिरिति भावः । द्रव्यस्य देवतासम्बन्धित्वञ्च तदुद्देश्यकत्यागकर्मत्वं त्यागोद्देश्यत्वमपि वेदबोधितावच्छिन्नद्रव्यस्वामित्वप्रकारेणेच्छाविषयत्वम् । तदेव च देवतात्वम् । नातो घृतादिप्रक्षेपदानभाजनस्य त्यागोद्देश्यत्वेऽपि देवतात्वम् । तस्य तत्स्वामित्वाभावात् 'ऐन्द्रो मन्त्रः' इत्यादौ मन्त्रस्य तद्देवताकत्वञ्च न तदुद्देश्यकत्यागकरणत्वम्, तेनाऽपि मन्त्रभिन्नेऽग्निहोत्रादौ त्यागोद्देश्यत्वाऽव्यभिचारात् । किन्तु त्यागाङ्गोच्चारणकत्वम् । एवञ्च देवतासम्बन्धी प्रत्ययार्थः, नतु तद्देवताकत्वम्, 'ऐन्द्रं हविः' इति सामानाधिकरण्यानुपपत्तेः । न चामिक्षादिपदसमभिव्याहारे तदद्रव्येण प्रतीयते । 'देयं प्रत्ययार्थः' इति तु यत्रामिक्षादिपदसमभिव्याहारे दानकर्मत्वेनापि प्रतीतिरित्यभिप्रेत्योक्तमिति भावः । उक्तार्थे सम्मतिमाह—* अत एवेति * देवतासम्बन्धिनः प्रत्ययार्थत्वादेवेत्यर्थः । * सान्निध्यादिति * सा=आमिक्षा वैश्वदेवीत्यत्रामिक्षापदसमभिव्याहारादित्यर्थः । * विषयार्पणमिति * आमिक्षात्मकद्रव्यस्यैव देवतोद्देश्यकत्याग-

केवलादेवतावाची तद्धितोऽग्नेः समुच्चरन् ।
नान्ययुक्तोऽग्निर्देवत्यं प्रतिपादयितुं क्षमः ॥ इति च

मीमांसकैरप्युक्तमित्याशयेनाह—

प्रत्ययार्थस्यैकदेशे प्रकृत्यर्थो विशेषणम् ॥ ५२ ॥
अभेदश्चात्र संसर्ग आग्नेयादाविय स्थितिः ।
देवतायां प्रदेये च खण्डशः शक्तिरस्तु वा ॥ ५३ ॥

एकदेशे = देवतारूपे । तच्च विशेषणमभेदेनेत्याह—अभेदश्चेति । ननु देवतायाः प्रत्ययार्थैकदेशत्वान्न प्रकृत्यर्थस्य

प्रभा

शब्दशक्तिस्वभावेन तादृशार्थबोधनक्षमत्वात् समासो बोद्धव्यः । तद्धितस्य देवतायाम्, देये च शक्ती मीमांसकोक्त्यन्तरमपि प्रमाणयति—केवलादिति—अयम्भावः—यथा 'आग्नेयोऽष्टाकपालोऽमावास्यायाम्' इत्यत्राष्टसु कपालेषु कम्=जलं पालयतीति कर्तर्यणि कपालेषु यागीयपात्रविशेषेषु संस्कृतः पुरोडाशोऽग्न्यभिन्नदेवतासम्बन्धी उच्यते, तथा अग्नीषोमीयः पुरोडाश आग्नेयशब्देन ग्रहीतुं शक्यते न वेत्याशङ्कायामुक्तम्—केवलादग्नेः=अग्निशब्दात्परः समुच्चरन् देवतावाची तद्धितः सोमादियुक्ताग्निदैवत्यं हविः प्रतिपादयितुं न क्षमः । द्वन्द्वाद्विहितस्तद्धितो व्यासज्य (समुदाय) वृत्तिदेवतात्वमेव प्रतिपादयति । आग्नेयशब्देन च अग्निपर्याप्तदेवतात्वकहविष एव बोध इत्युभयदेवताकस्य हविषो नाग्नेयशब्देन ग्रहणम् । अत एव 'आग्नेयं चतुर्धा करोति' इति वाक्यविहितचतुर्धाकरणस्याग्नीषोमीयेषु हविःषु न प्रवृत्तिरिति तृतीयाध्यायस्य प्रथमपादे निरूपितम् । अनेनापि वचनेन देवताया देयस्य च तद्धितार्थत्वं स्पष्टमेवोक्तमिति । प्रत्ययार्थेति—'देवताविशिष्टं देयं प्रत्ययार्थः' वैशिष्ट्यञ्च—स्वोद्देश्यकत्यागकर्मत्वसम्बन्धेन । एकदेश इति—वृत्तिज्ञानजन्योपस्थितीयप्रकारतया भासमान इत्यर्थः । प्रकृत्यर्थः=अग्न्यादिरूप ॥५२॥ अभेद इति—सामान्यविशेषयोरभेदान्वय इति नियमात् 'आग्नेयः' इत्यादिना 'अग्न्यभिन्नदेवतासम्बन्धि हविः' इत्यादिबोधः । अत्र सम्बन्धश्च स्वोद्देश्यकत्यागकर्मत्वरूपः । देयादेः सम्बन्धित्वेनैव बोधः, न तु विशेषरूपेण । अत एव वैश्वदेवी आमिक्षा इत्यादौ न पौनरुक्त्यम् । एकदेशत्वादिति—'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति न्यायादिति भावः । अत्र पदार्थश्च वृत्तिज्ञानजन्योपस्थितीयमुख्यविशेष्यताश्रयीभूतोऽर्थो ग्राह्य इति न घटत्वादेः 'घटः' इत्यादौ पदार्थत्वम् । अत एव घटत्वादावभेदेन

दर्पणव्याख्या

कर्मत्वप्रतीतिरित्यर्थः । * केवलादिति * सोमादिपदासमभिव्याहृतात् । अग्नेः—अग्निशब्दात्, समुच्चरन्=
प्रत्ययत्वात् अग्निशब्दात् पुरः प्रादुर्भवन् । "आग्नेयोऽष्टाकपालो प्रमावास्यायाम्" इत्यादौ । * नान्येति *
सोमादिसाहित्यापन्नाग्निदेवतोद्देश्यकत्यागविषय द्रव्यं प्रतिपादयितुं नेष्टे, किन्तु तद्देवताकमेवेति तदाशयः । तथा च
देवताविशिष्टदेयस्य तद्धितार्थत्वं तेषामपि सम्मतमिति भावः ।
देवतारूपतद्धितार्थेऽन्वयः । तस्य च स्वोद्देश्यकत्यागकर्मत्वसम्बन्धेन द्रव्यरूपतद्धितार्थपदार्थे इति बोध्यम् ॥ ५२ ॥
* प्रकृत्यर्थेति * 'पदार्थः पदार्थेनान्वेति' इति व्युत्पत्तेरिति भावः । अस्मिन् कल्पे च प्रकृत्यर्थस्याभेदसम्बन्धेन

तत्राभेदेनाप्यन्वय इत्याशयेनाह—देवतायामिति—तथाच पदार्थैकदेशतैव नास्तीति भावः ॥ ५२ ॥

प्रभा

नित्यपदार्थतान्वयाभिप्रायेण 'नित्यो घटः' इति न प्रयोगः। तथाच स्वेतरतद्धिभक्तिभिन्नं पदं तत्प्रयोज्य-प्रकारताविशिष्टविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति स्वविशिष्टविशेष्यतासम्बन्धेन स्वजन्यो-पस्थितिः कारणम् इति कार्यकारणभावो बोध्यः। स्वेतरदित्यत्र स्वपदेन विशेष्यवाचकं पदं ग्राह्यम्। कार्यतावच्छेदकसम्बन्धे प्रकारतावैशिष्ट्यञ्च—स्वनिरूपितत्व—स्वाश्रयनिरूपितत्वाभाववद्वृत्तित्वोभयसम्ब-न्धेन। तथाच 'देवदत्तस्य गुरुकुलम्' इत्यादौ गुरुत्वनिष्ठविशेष्यतायां देवदत्तनिष्ठप्रकारतानिरूपितत्वस्य सत्त्वेऽपि स्वाश्रय (प्रकारताश्रय) देवदत्तनिरूपितत्ववद्गुरुत्ववृत्तित्वस्यैव सत्त्वात्, अगुरुपदार्थस्य गुरावेऽ-न्वयाभिप्रायेण 'अगुरुर्गुरुः' इत्यादौ चोभयसम्बन्धेन गुरुभिन्ननिष्ठप्रकारताया उभयसम्बन्धेन विशेष्यतायां सत्त्वाच्च न दोषः। विभक्तिभिन्नत्वस्य निवेशेन 'प्रकृत्या चारुः' इत्यादौ तृतीयार्थाभेदस्य चारुत्वे स्वरूपेणा-न्वयेऽपि नाव्याप्तिः, विभक्तिप्रयोज्यत्वस्यैव सत्त्वात्। 'कारणतायां स्वजन्योपस्थितिः स्वविशिष्टविशेष्य-तासम्बन्धेन कारणम्' इति कारणदले स्वपदेनोपस्थितिर्ग्राह्या। उपस्थितिवैशिष्ट्यञ्च विशेष्यतायां स्वनिष्ठ-जन्यतावच्छेदकत्व—स्वनिष्ठजन्यतावच्छेदकीभूतप्रकारत्वासामानाधिकरण्योभयसम्बन्धेन। तेन 'घटवान् तरपदशक्यो घटश्च घटपदशक्यः' इति शक्तिज्ञानद्वयजन्यसमूहालम्बनात्मकोपस्थितौ 'नीलो घटः' इति बोधः सिद्ध्यति, घटनिष्ठप्रकारतायाः कास्चित्कत्वेनोपस्थितीयजन्यतावच्छेदकत्वाभावात्। लक्षणसमन्व-यस्तु 'नीलो घटः' इत्यादौ स्वेतरद् (विशेष्यवाचकपदेतरत्) विभक्तिभिन्नं नीलादिपदं तत्प्रयोज्या प्रका-रता नीलादिनिष्ठा तद्विशिष्टा विशेष्यता घटादिनिष्ठा तादृशसम्बन्धेन नीलादिप्रकारकघटादिविशेष्यकः शाब्दबोधो घटादौ। स्व (घटपद) जन्योपस्थितिश्च स्व (उपस्थिति) विशिष्टविशेष्यतासम्बन्धेन घटे, इत्येवं बोद्धव्य इत्यन्यत्र विस्तरः। तत्र=देवतायाम्। देवतायामितीति—एकवृन्तगतफलद्वयन्यायेन देवतात्वेन देवतायाम् सम्बन्धित्वेन देये च शक्तिरिति भावः। नच शक्यतावच्छेदकभेदाच्छक्तेर्भेदः, अवच्छेदक-भेदेऽपि उभयपर्याप्तावच्छेदकताया एकस्या एव स्वीकारेणावच्छेदकताभेदेन शक्तिभेदस्य स्वीकारात्।

भूषणकारास्तु—उद्देश्यस्य प्रकृत्यैव लाभात् 'अग्नये' इत्यादौ यथा उद्देश्यत्वमात्रं चतुर्थ्यर्थस्तथा प्रकृते देवतात्वमेव प्रत्ययार्थः। तत्र प्रकृत्यर्थस्याग्न्यादेराधेयतासम्बन्धेनान्वयः। देवतात्वस्य च निरूप-कत्वसम्बन्धेन प्रदेयेऽन्वयः। तथाच 'आग्नेयः' इत्यादौ 'अग्निनिष्ठदेवतात्वनिरूपकं हविः' इति बोध इत्याहुः। अत एव—

'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवतासङ्गतिस्तत्र दुर्बलन्तु परं परम्॥

इति मीमांसकोक्तिः सङ्गच्छते। 'अग्नये हविः' इत्यादौ पृथक्पदोपस्थितहवीरूपपदार्थे चतुर्थ्या वाक्यादेव-तासम्बन्धलाभः, तद्धितेन शुद्धैव तत्सम्बन्धलाभ इति वाक्याच्छ्रुतेर्बलवत्त्वोपपत्तिः। अथवा देय एव प्रत्ययार्थः। तत्र प्रकृत्यर्थस्य स्वनिष्ठदेवतात्वनिरूपकत्वसम्बन्धेनान्वयः। सम्बन्धविधयैवाग्न्यादेर्देवता-त्वलाभः। तादृशसंसर्ग एव 'सास्य देवता' इति शास्त्रतात्पर्यम्, नतु देवत्वस्य प्रकारविधया भाने। 'देवता-न्तात्तादर्थ्ये यत्' (५-४-२४) इति सूत्रे 'तत्रेदं न सिद्ध्यति—पितृदेवत्यम्' इति। 'नैष दोषः, दिवेरैश्वर्य-कर्मणो देवः, तस्मात् स्वार्थे तल्' इति भाष्यात् देवतात्वं जातिरिति प्रतीयते। अन्यथा 'नहि पितरो देवताः' इत्यत्र पितरोऽपि देवता भवेयुरिति स्यात्। तथा 'दिवेरैश्वर्यकर्मणो देवः' इत्युक्त्या मन्त्रकरणक-

नन्वग्न्यादिदेवस्य प्रकृत्यैव लाभान्न तत्र शक्तिः कल्प्या । नच देवतात्वेन रूपेणोपस्थितये सा कल्प्यते । प्रकृतेर्लक्षणयैव तथोपस्थितिसम्भवात् । उपसर्गाणां द्योतकत्वनये 'प्रजयति' इत्यत्र प्रकृष्टजयप्रत्ययवदित्यभिप्रेत्याह—

प्रदेय एव वा शक्तिः प्रकृतेर्वास्तु लक्षणा ।
देवतायां निरूढेति सर्वे पक्षा अमी स्थिताः ॥ ५४ ॥

प्रभा

विस्यागजन्यस्वर्गादिफलातिरिक्तफलाश्रयत्वोद्देश्यत्वं देवतात्वम् । देवतानिष्ठं फलञ्च 'अस्येदं फलं भवतु'
इतीच्छात्मकप्रीतिरेव । 'क इदं कस्मै अदात्' इति मन्त्रप्रयोज्यस्वामित्वयति प्रतिग्रहीतरि अतिव्याप्तिवार-
णाय हविस्त्यागे मन्त्रकरणकेति विशेषणम् । तथाच तादृगर्थस्य मन्त्रबोधितत्वेऽपि तत्र मन्त्रस्य करणता-
बोधकवचनाभावान्न दोषः । दर्शश्राद्धे मृतपत्नीनां तत्त्ववारणायोद्देश्यत्वनिवेशः, 'न योषिद्भ्यः पृथग्दद्यात्'
इत्यादिना तासामुद्देश्यत्वनिषेधात् । नच दर्शश्राद्धे मन्त्रस्य करणत्वाभावात्पित्रादीनामपि देवतात्वानुप-
पत्तिः, 'अनुमतोऽस्य नमस्कारो मन्त्रः' इति गौतमस्मृतेस्तत्र नमस्कारस्यैव मन्त्ररूपत्वात् । अथवा 'मन्त्र-
स्तुत्यत्वं देवतात्वम्' । यद्वा समुदायशक्त्या देवताशब्दो दर्शपूर्णमासादौ यागे यत्सम्प्रदानत्वेन चोदितं
तत्र सर्वत्र वर्तते न जातिवचन इति । अत एव 'वाय्वृतुपित्रुषसो यत्' 'कालेभ्यो भववत्' इत्युपपद्यते । यस्य
वाक्यं स ऋषिः, याऽनेन बोध्यते सा देवता' इत्यनुक्रमणिकायामुक्तेः ॥ ५३ ॥

देवतात्वेनेति—प्रकृत्या इन्द्रत्वादिरूपेणोपस्थितावपि देवतात्वेन रूपेणानुपस्थितेरिति भावः । तान्
शक्तिः । प्रकृतेः—इन्द्रादिशब्दस्य । लक्षणयैवेति—इन्द्राभिन्नदेवतात्वावच्छिन्ने लक्षणयैवेत्यर्थः । तथोपस्थितीति—
देवतात्वेनोपस्थितीत्यर्थः । द्योतकत्वनय इति—स्वसमभिव्याहृतपदनिष्ठवृत्तिविषयकतात्पर्यग्राहकत्वनये
इत्यर्थः । प्रकृष्टेति—शत्रुपराङ्मुखीकरणं जयः, उत्कर्षेण वर्तनं वा । तत्र प्रशब्दसमभिव्याहाराद्यथा प्रकृष्ट-
जयस्य लक्षणया प्रतीतिर्भवति तथाऽत्रापि स्यादिति भावः । लक्षणेत्युक्तिः पक्षासनया एतन्मतेऽप्रसिद्धा
शक्तिरेव । निरूढेतीति— निरूढेत्यस्य लक्षणायामन्वयः । निरूढा लक्षणेत्यर्थः । लक्षणायां निरूढात्वन्तु अना-
विप्रयोगावच्छिन्नत्वमेव । तथाच लक्षणायाः प्रयोजनस्यापेक्षा नास्तीति भावः । यत्तु—माणवके संकेति-
तादग्निशब्दात् प्रत्ययोत्पत्तिवारणाय निरूढेत्युक्तिरिति तन्न,

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्तव्यो न शब्देषु तदुक्तिषु ॥ इति ॥

वाक्यपदीयेनैव समाहितत्वात् । युक्तञ्चैतत्—पुराणादिप्रसिद्धेषु निरूढेषु साधुषु सूत्रस्य चारितार्थेनासा-
धुषु यत्र कुत्रचित् संकेतितेषु शास्त्राप्रवृत्तेः । अत एव कचित्क्षत्रिये संकेतितब्राह्मणशब्दवाच्यत्वस्य सत्त्वेऽपि
न तद्धनने 'ब्राह्मणो न हन्तव्यः' इत्यस्य विषयता, नापि 'ब्राह्मणमाणववाडवाद्यत्' इत्यस्य तत्र प्रवृत्तिः ।
पक्षा इति—देवताविशिष्टं देयं प्रत्ययार्थः । १ । देवता देयञ्च पृथक्प्रत्ययार्थः । २ । इन्द्राद्यभिन्नदेवतायां
प्रकृतेर्लक्षणा, देयञ्च प्रत्ययार्थः । ३ । देवतात्वं देयञ्च प्रत्ययार्थः । ४ । इन्द्रादिर्देवता प्रकृत्यर्थः, देयं द्रव्यं
प्रत्ययार्थः । ५ । इत्यादिपक्षा इत्यर्थः ।

दर्पणव्याख्या

*द्योतकत्वनय इति* वाचकत्वनये प्रकर्षस्योपसर्गार्थत्वेन तद्विशिष्टे धातोर्लक्षणाया अकल्पनेन दृष्टान्तत्वा-
सम्भवादिति भावः । *प्रकृष्टजयवदिति* प्रकृत्यंशमात्रमादाय दृष्टान्तत्वं बोध्यम् ।

नच 'ऐन्द्रं दधि' इत्यादौ द्रव्यस्य पदान्तराल्लाभात् कुतः पुनः प्रत्ययस्य तत्र शक्तिः कल्प्यत इति वाच्यम्, पदान्तराश्रवणेऽपि तत्प्रतीतेः, 'ऐन्द्रं दधि' इति सामानाधिकरण्याच्च।

अन्यथाऽऽख्यातस्यापि कर्तृकर्मवाचित्वं न स्यात्। मीमांसकानां पुनः प्रत्ययस्य देवतात्वमेवार्थोऽस्तु। द्रव्यं पदान्तराल्लभ्यत एवेति आख्यातस्य कर्तृवद्वाच्यत्वं माऽस्त्विति कुतो न शक्यते वक्तुमिति दिक्।

प्रभा

ऐन्द्रमिति—लक्षणया इन्द्राभिन्नदेवता प्रकृत्यर्थः, देयं द्रव्यं सम्बन्धि प्रत्ययार्थः। संसर्गश्चाकाङ्क्षालभ्यः। तथाच इन्द्राभिन्नदेवतासम्बन्धि (देयम्) हविरिति बोधः। द्रव्यस्य=देयहविरादिद्रव्यस्य। पदान्तरात्– दध्यादिपदात्। अयम्भावः–प्रत्ययस्य सम्बन्धिनि हविरादौ शक्तिर्निष्फला, सम्बन्धमात्रे शक्तिस्वीकारेऽपि सम्बन्धिनो दध्यादिपदादेव लाभात्। सम्बन्धित्वेन रूपेण देयस्य प्रतीतये सम्बन्धे एव शक्तिरुचितेति। पदान्तरेति—दध्यादिपदाश्रवणेऽपि देवतासम्बन्धिदेयप्रतीतेरित्यर्थः। सामानाधिकरण्यादिति—सम्बन्धमात्रार्थकत्वे 'ऐन्द्र दधि' इति सामानाधिकरण्येनान्वयो नतु 'नामार्थयोरभेदान्वय' इति व्युत्पत्त्या प्रत्ययार्थसम्बन्धस्याश्रयतारूपभेदेनान्वयस्य बाधादिति भावः।

ननु सम्बन्धिनी निरूढा लक्षणाऽस्तु, किं सम्बन्धिनि देये शक्तिकल्पनयेति शङ्कायामाह–अन्यथेति–सामानाधिकरण्येनान्वयस्य द्रव्यवाचकत्वागमकसाधकत्वे इत्यर्थः। न स्यादिति—अस्य वैयाकरणानां मते इत्यादिः, मीमांसकनैयायिकानां कर्तृवाचकत्वाभावस्येष्टापत्तेः, 'कृतिरेवाख्यातार्थः' इति नैयायिकस्य भावनैव तदर्थ इति च कस्यचिन्मीमांसकस्य च सिद्धान्तत्वात्। मीमांसकैर्देवतार्थकतद्धिते देवताविशिष्टं सम्बन्धिरूपं देयं प्रत्ययार्थ इति स्वीकृत तन्मतमुक्तरीत्या कटाक्षयन्नाह—मीमांसकानामिति– तन्मते जातिमात्रस्य घटादिशब्दवाच्यत्वेऽपि शाब्दबोधे व्यक्तेराक्षेपाद्यथा भानं भवति तथैव देवतात्वमेव वाच्यमस्तु, आश्रयस्तु प्रकृत्या आक्षेपाद्वा प्रतीयेत। एवं सम्बन्ध एव प्रत्ययार्थोऽस्तु देयरूपसम्बन्धी तु आमिक्षादिपदाल्लभ्येत एव। तथाच न शब्दजन्यसामानाधिकरण्यविरोध इति भावः। पदान्तरादिति—आक्षेपादेरप्युपलक्षणमिदम्। कर्तृवदिति—मीमांसकमते यथा आख्यातस्य भावनैव वाच्या न तदाश्रयः कर्त्ता, तथा

दर्पणव्याख्या

* लाभादिति * समभिव्याहृतदध्यादिपदेन देवतारूपसम्बन्धिभानादित्यर्थः। *कुतः पुनरिति* "अनन्यलभ्यो हि शब्दार्थः" इति न्यायात्। किन्तु सम्बन्धार्थकत्वमेवोचितमिति भावः। *तत्प्रतीतेरिति* देवतासम्बन्धिप्रतीतेरित्यर्थः। तथाच तदनुपपत्त्या तद्धितस्य तदर्थकत्वमावश्यकमिति भाव.।

पदान्तराश्रवणे सम्बन्धिप्रतीतिरप्यर्थनिर्णेयत्वादाह—*ऐन्द्रं दधीति* सम्बन्धमात्रार्थकत्वे सामानाधिकरण्यानुपपत्तिरित्यर्थः। *अन्यथेति* उक्तानुपपत्तेस्तदसाधकत्वे इत्यर्थः। 'पचति देवदत्तः' 'पच्यते तण्डुलः' इत्यत्र सामानाधिकरण्यानुपपत्तिर्हि कर्त्रादिवाचित्वसाधिकेति भाव। वैयाकरणान् प्रतीयमापत्तिः। मीमांसकान् कटाक्षीकृत्याह—*मीमांसकानामिति* तन्मते तद्देवताकत्वरूपप्रत्ययार्थेन धर्मिण आक्षेपाल्लाभेन सामानाधिकरण्योपपत्तेरिति भावः। 'पदान्तरात्' इत्याक्षेपस्याऽप्युपलक्षणम्। *वाच्यं मास्त्विति* आख्यातस्य कर्तेव तद्धितस्य द्रव्यं वाच्यं मास्त्वित्यर्थः। इत्थंसति 'आमिक्षा देवतायुक्ता' इति स्वसिद्धान्तभङ्ग इति भाव।

ननु तेषां कर्तुरनन्यलभ्यत्वात् प्रत्ययवाच्यत्वम्, किन्तु प्राधान्यात्कर्तेव तत्रमत आह—* दिगिति *। तदर्थस्तु

देवतायां देवतात्वेन रूपेण निरूढेति—अनुपपत्तिज्ञानापूर्वकत्वम् , अनादिप्रयोगावच्छिन्नत्वं

प्रभा

तन्मते तद्धितेऽपि स्यादिति कुतो न वक्तुं शक्यते इति भावः। तद्धितस्थले तथात्वस्येष्टापत्तिस्तु वैः कर्तुमशक्याः,

'आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः'

इति तद्वचनविरोधात्। नन्वाख्यातस्थले 'प्रकृतिप्रत्ययौ' इति न्यायबलेन कर्तुः प्राधान्यापत्तिवार-
णाय वाच्यत्वं नेष्यतेऽत्र तु 'प्रकृतिप्रत्ययौ' इति न्याये 'भावप्रधानमाख्यातम्' इति निरुक्तानुरोधेन संख्याद्य-
न्वये तस्य व्यभिचारदर्शनेन च प्रत्ययार्थे आख्यातार्थातिरिक्तत्वेन . संकोचात्प्राधान्यापत्तिवारणमन्मथः।
अत एव तद्धितेन देवत्वोपस्थितिः प्रबला, चतुर्थ्या त्यज्यमानद्रव्योद्देश्यप्रतिग्रहीतुर्बोधेनार्थतो देवताप्रतीता-
वपि श्रुत्याऽनुपस्थितत्वेन दुर्बलत्वम् , चतुर्थ्या सम्प्रदानमात्रस्य बोधात्। एवं मन्त्रवर्णनरूपयाऽन्यार्थेन
देवतात्वप्रतीतावपि तद्धितमात्रेण देवतात्वप्रतीतेर्मन्त्रवर्णनापेक्षया बलवत्तरम्। तदुक्तम्—

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवतासङ्गतिस्तत्र दुर्बलञ्च परं परम्॥ इति।

'देवतायां निरूढा लक्षणा' इत्युक्तिरसङ्गतेत्याशङ्कायामाह—
नन्वग्न्यादिपदैः शक्त्यैव देवतार्थलाभे देवतात्वेऽग्न्यादिपदानां शक्त्यभावेन देवता-
देवतात्वेनेति—अग्न्यादिपदेनाग्नित्वादिना देवताया भानेऽपि निरूढात्वे प्रवाहस्य घोषेऽन्व-
त्वप्रकारकबोधार्थं सा स्वीक्रियत इति भावः। नन्वनुपपत्तिज्ञानापूर्विकाया एव निरूढात्वे प्रवाहस्य घोषेऽन्व-
यानुपपत्त्या लक्षणायाम् 'गङ्गायां घोषः' इत्यादौ निरूढा लक्षणा' इति व्यवहारानुपपत्तिरत आह—अना-
दीति—अनादिर्यः प्रयोगः कर्मतासम्बन्धेन तदवच्छिन्नलक्ष्यार्थबोधिका लक्षणा निरूढेत्यर्थः। प्रयोगश्च
ज्ञानानुकूलः शब्दोच्चारणरूपो व्यापारः। स च व्यापारः स्वजन्यफलाश्रयत्वरूपकर्मतासम्बन्धेन लक्ष्यार्थे

दर्पणव्याख्या

"प्रकृतिप्रत्ययार्थयोः" इति न्यायस्य लक्षणादौ व्यभिचारेण तेन प्राधान्यावश्यभावात्। 'भावप्रधानमाख्यातम्" इति
निरुक्तात्त्वाख्यातार्थातिरिक्तप्रत्ययार्थविषयकत्वेऽपगमाच्चेति। अत्रेदं बोध्यम्—तद्धितस्य देवतात्वाद्यर्थकत्वे "तद्धितेन
चतुर्थ्या वा" इति न्यायस्य सर्वसिद्धस्यानुपपत्तिः। न च तद्धितस्य तदर्थकत्वेऽपि कथं तदपेक्षया चतुर्थ्या जघन्यत्वम्, त्यागो-
द्देश्यत्वरूपदेवताबोधकत्वस्योभयत्राविशिष्टत्वादिति वाच्यम्, नहि देवतासम्बन्धिदेयमात्रं तद्धितार्थः, किन्तु वेदबोध्यदेवता-
त्वघटितः। एवञ्च तद्धितार्थेन यागस्य देवतात्वांशे वेदबोध्यत्वावगाहित्वेन तदंशे अप्रामाण्यशङ्काया अनुदयाच्छङ्कि-
विनियोजकतया बलवत्त्वं चतुर्थ्या तदंशे वेदबोध्यत्वानवगाहिबोधस्यैव जननेन तत्राप्रामाण्यशङ्कानिरासार्थमुपायान्तर-
स्यापेक्षणाज्जघन्यत्वम्।

यद्वा तद्धितेन देवतात्वेन रूपेण देवताबोधे "साऽस्य देवता" ( पा० सू० ४। २। २४ ) इति स्मरणमस्ति।
चतुर्थ्यास्तु देवतात्वे न स्मरणम्, "चतुर्थी सम्प्रदाने" इति ( पा० सू० २। ३। १३ ) इति सम्प्रदान एव तत्स्मरणात्।
सम्प्रदानत्वञ्च—त्यज्यमानद्रव्योद्देश्यकत्वे सति प्रतिग्रहीतृत्वम्। एवञ्च ततः सम्प्रदानत्वघटकतया देवतात्वप्रतीतावपि
तद्धितादिव मुख्यतया देवतात्वानधिगमात् तस्यास्तद्धितापेक्षया जघन्यत्वम्। एवं मन्त्रवर्णादधिष्ठानप्रतीतावपि देवता-
त्वस्य साक्षादप्रतीतेर्मन्त्रवर्णस्य चतुर्थ्यपेक्षया जघन्यत्वं बोध्यम्। तद्धितस्य देवतार्थकत्वानभ्युपगमे तु तदसङ्गतिः स्पष्टैवेति।
नन्विन्द्रादिपदाच्छक्त्यैव देवतालाभे तत्र लक्षणाऽभ्युपगमो व्यर्थोऽत आह—* देवतात्वेन रूपेणेति *। तथाच
"शक्यादन्येन रूपेण ज्ञाते भ... तथा" इति वृद्धोक्तेर्देवताया इन्द्रत्वरूपायाः शक्यत्वेऽपीन्द्राभिन्नदेवतात्वेन तज्ज्ञानार्थं

वा तत्त्वमिति भावः ॥ ५४ ॥

अनयैव रीत्याऽन्यत्राप्यवधेयमित्याह—

क्रीडायां णस्तदस्यास्तीत्यादावेषैव दिक् स्मृता ।
वस्तुतो वृत्तिरेवेति नात्रातीव प्रयत्यते ॥ ५५ ॥

"तदस्यां प्रहरणमिति क्रीडायां णः" ( पा० सू० ४ । २ । ५७ ) इत्यत्र प्रहरणविशिष्टा क्रीडा, प्रहरणक्रीडे, क्रीडामात्रं वाऽर्थः । आदिना "सोऽस्य निवासः" ( पा० सू० ४ । ३ । ८९ )

प्रभा

इति तेन सम्बन्धेन तदवच्छिन्नत्वं तस्य । प्रयोगेऽनादित्वञ्च स्वसदृशपूर्वपूर्वव्यापारध्वंसाधिकरणक्षणवृत्तित्वरूपम् । तत्त्वम्=निरूढात्वम् ॥ ५४ ॥

अनयैवेति—देवतार्थकतद्धितस्थले यथा प्रकृत्यर्थस्य एकदेशेऽन्वयाङ्गीकारे देवतादेवतात्वान्यतरविशिष्टे देये शक्तिः । एकदेशेऽन्वयानङ्गीकारे देवतायां देवतात्वे वा देये ( सम्बन्धिनि ) च खण्डशः शक्तिः=पृथगुपस्थापिका यथा शक्तिस्तथाऽन्यत्र तद्धितेऽपि शक्तिर्बोध्येत्यर्थः । तदस्यामिति—प्रहरणोपाधिकात् प्रथमान्तात्क्रीडारूपसप्तम्यन्तार्थेन इत्यर्थः । इत्यत्रेति—एतत्सूत्रविहितणप्रत्ययघटितदाण्डादिशब्दे इत्यर्थः, सूत्रे वक्ष्यमाणार्थस्यासम्भवात् । प्रहरणविशिष्टेति—प्रहरणम्=प्रहरणसाधनं दण्डादि, तद्वैशिष्ट्यञ्च क्रीडायां जन्यत्वसम्बन्धेन, प्रकृत्यर्थदण्डादेरभेदेन प्रत्ययार्थैकदेशे प्रहरणेऽन्वयः । तथाच दण्डाभिन्नप्रहरणजन्या क्रीडेत्यर्थः । पदार्थैकदेशेऽन्वयस्य 'पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेन' इति न्यायविरोधादाह—प्रहरणक्रीडे इति—प्रहरणं क्रीडा च पृथक्प्रत्ययार्थ इत्यर्थः । तेन नैकदेशान्वयविरोध इति भावः । क्रीडामात्रमिति—मात्रपदेन प्रहरणार्थस्य निरासः । नचैवं प्रहरणत्वेन बोधानुपपत्तिः, दण्डादिप्रकृत्यर्थस्य स्वनिष्ठप्रहरणतानिरूपकत्वसम्बन्धेन क्रीडायामन्वयाद् दण्डादेर्दण्डप्रहरणे लक्षणास्वीकाराद्वा तदर्थलाभात् ।

वस्तुतस्तु प्रहरणत्वं क्रीडा च प्रत्ययार्थः । तत्र प्रकृत्यर्थदण्डादेराधेयतासम्बन्धेन प्रहरणत्वे, तस्य च निरूपकत्वसम्बन्धेन क्रीडायामन्वयः । तथाच दण्डनिष्ठप्रहरणत्वनिरूपकक्रीडेति बोधः । अत्रैव च सूत्रस्थं प्रहरणपदं तात्पर्यग्राहकम् । सोऽस्येति—प्रथमान्तादस्य निवास इत्यर्थेऽण् स्यादित्यर्थात् निवासः, सम्बन्धी च प्रत्ययार्थ इति लभ्यते । तत्र निवसन्त्यस्मिन्नित्यधिकरणे घञा निष्पन्ननिवासशब्दस्य निवासाधिकरणमर्थः । न्युपसर्गेण च वासे नैरन्तर्यरूपातिशयो द्योत्यते इति न कादाचित्कवासकर्तरि स्रौघ्नादिप्रयोगः । सूत्रेऽस्येति कर्तरि षष्ठ्या सम्बन्धिरूपप्रत्ययार्थश्च प्रत्यासत्त्या वासकर्त्तैवोच्यते । तथाच निवासविशिष्टाधिकरणम्, निवासः, अधिकरणं वा सम्बन्धी च प्रत्ययार्थ इत्यादिपूर्वोक्तमुन्नेयम् ।

दर्पणव्याख्या

बोचितैवेति भावः । अनुपपत्तिज्ञानपूर्विकायामपि तीरनिष्ठगङ्गापदलक्षणायां निरूढत्वव्यवहारादाह—* अनादीति * एतत्तत्त्वमभिहितं प्राक् ॥ ५४ ॥

एकदेशान्वयप्रसङ्गमाशङ्क्याह—* प्रहरणक्रीडेति * व्युत्पत्तिवैचित्र्यादेकपदोपस्थितयोरपि तयोः परस्परमन्वय इति भावः । प्रहरणस्यापि प्रकृत्यैव लाभमभिप्रेत्याह—* क्रीडामात्रञ्चेति * क्रीडारूपसम्बन्ध्येवेत्यर्थः । मात्रपदेन तत्प्रहरणस्य तद्धितार्थत्वव्यवच्छेदः । तथाच दण्डाभिन्नप्रहारसाधनविशिष्टा क्रीडेति बोधः । * सोऽस्येति * एतत्सूत्रविहितप्रत्ययस्य निवासः सम्बन्धी चार्थः । अत्र [illegible] निशब्देन च वासे नैरन्तर्यरूपातिशयः

प्रभा

ननु यस्मिन्वर्षे मार्गशीर्षे शुक्लाष्टम्यां धनुः संक्रमणम्, मकरसंक्रान्तिश्च पौषनवम्यां सञ्जाता, तस्मिन वर्षे सौरपौषेऽपि पौषव्यवहारो दृश्यते लोके तदुपपत्तये तत्तद्राशिस्थरविविशिष्टकालत्वमेव रूढ्यर्थतावच्छेदकमस्त्विति चेन्न, तत्र पौष्यादिपदस्य गौणार्थत्वात्। नच संज्ञाशब्दानामन्यद् व्युत्पत्तिनिमित्तमन्यत्प्रवृत्तिनिमित्तं रथन्तरादिशब्दवदिति वाच्यम्, केवलरूढिस्वीकार एव तथात्वात्। अत्र केवलरूढिसंज्ञास्वीकारे 'सास्मिन् पौर्णमासी' इति सूत्रविरोधापत्त्या पङ्कजादिवत् योगरूढित्वस्यैव तत्र स्वीकर्तुमुचितत्वाद्वाद्यमस्मत्वाच। नच यत्र पुनर्वसुनक्षत्रयुक्तशशियुक्ता पूर्णिमा तत्र व्यभिचार इति वाच्यम्, पुष्यादिकतिपयनक्षत्रवाचकैर्लक्षणया नक्षत्रान्तरस्यापि ग्रहणेनादोषात्। तथाचोक्तम्—

अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो यतः।
शेषा मासा द्विभा ज्ञेया. कृत्तिकाऽऽदिव्यवस्थया॥ इति॥
कार्त्तिक्यादिषु संयोगे कृत्तिकादि द्वयं द्वयम्।
अन्त्योपान्त्यौ पञ्चमश्च त्रिधा मासत्रयं स्मृतम्॥ इति च॥

अयमर्थः पर्यस्याद्यो मासः कार्त्तिक इति अस्माकं गुर्जरदेशे प्रसिद्ध इति पक्षे आश्विनो पर्यान्त्यः, भाद्रपदश्चोपान्त्यः। पञ्चमश्च फाल्गुनः सर्वे व्यवह्रियमाणाः कार्त्तिकादिशब्दास्तत्तन्नक्षत्रयुक्तचन्द्रयुक्तपौर्णमासीवाचकशब्दप्रकृतिकाण्प्रत्ययेन निष्पन्नाः। यथा कृत्तिकानक्षत्रयुतचन्द्रेण युक्ता पूर्णिमा अस्मिन् मासे इति कार्त्तिको मासः, मृगशिरोनक्षत्रयुक्तचन्द्रेण युता पूर्णिमा अस्मिन् मासे इति मार्गशीर्ष इत्यादिः। तत्र तत्तन्मासघटकनक्षत्राणां लक्षणया स्वोत्तरनक्षत्रद्वयत्रयबोधकत्वम्। तथाच कार्त्तिकादिचतुष्टयघटककृत्तिकादिशब्दानां स्वस्य, स्वोत्तरनक्षत्रस्य च बोधकतया कृत्तिकया युक्तेत्यस्य कृत्तिकया रोहिण्या वा युता पूर्णिमा कार्त्तिकी। मृगशिरसा युक्तेत्यस्य मृगशिरसा, आर्द्रया वा युता 'मार्गशीर्षी' इत्याद्यर्थो बोध्यः। फाल्गुने च फल्गुनीशब्दः पूर्वफल्गुन्यामुत्तरफल्गुन्यां हस्ते वा लाक्षणिक इत्यन्यतमनक्षत्रेण युक्ताऽपि पूर्णिमा फाल्गुनीशब्दबोध्या। एवञ्च उक्तान्यतमनक्षत्रयुक्तपूर्णिमा विशिष्टोऽपि मासः फाल्गुन एव। रेवत्यश्विनीभ-

दर्पणव्याख्या

"तदस्यास्त्यस्मिन्" (पा० सू० ५।२।९४) इति सूत्रेण प्रथमान्तादस्त्यर्थोपाधिकात् सम्बन्धिन्यधिकरणे च मतुप् विधीयते। मतुब्विधेस्तुत्वं नत्वर्थमात्रस्य एव भूमादिविधानमामाति तथाऽपि 'गोमदीनोऽयः' इति सामानाधिकरण्यानुरोधात् सम्बन्धिवाचकत्वेनोक्तं प्राक्। एवञ्च 'गोमान्' इत्यादौ गोनिरूपितस्वामित्वसम्बन्धवानित्यन्वयबोधः। नच—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः॥

दुक्तो विचारः शास्त्रान्तरीयैः सह तद्रीत्यैवोक्तः । आरोपितप्रकृतिप्रत्ययार्थमादाय वा । वस्तुतो विशिष्टशक्त्यैवार्थोपस्थितिरित्याह—वस्तुत इति ॥ ५५ ॥

इति वैयाकरणभूषणसारे देवताप्रत्ययार्थनिर्णयः ॥ १० ॥

---

प्रभा

करण्येनान्वयानुरोधात् 'सम्बन्धी'। यद्वा सम्बन्धः, आश्रयश्च प्रत्ययार्थः। नच अन्यतरार्थे प्रत्ययविधानेन सिद्धेऽन्यतरग्रहणं व्यर्थम्, 'गावः सन्त्यस्मिन्' इति विवक्षायां क्रियाकारकभावमूलकशेषस्य (सम्बन्धस्य) अभावेऽपि मतुप्सिद्ध्यर्थम् 'अस्मिन्' इति। एवमाधाराधेयभावस्य कारकत्वाविवक्षायामाधाराधेयभावाभावे सम्बन्धत्वेन विवक्षायाञ्च मतुबर्थम् 'अस्य' इत्यप्यावश्यकम्।

ननु 'सम्भवे व्यभिचारे च सति विशेष्यविशेषणभावो भवति' नीलोत्पलवत्। नच सत्तां पदार्थो व्यभिचरति, सत्तामन्तरा पदस्योच्चारयितुमशक्यत्वात्, यावद्बुद्ध्या पदार्थो न विषयीकृतस्तावत्पदस्य प्रयोगाभावेन बुद्धिसत्तासमाविष्टार्थस्यैव बहिः सत्त्वासत्त्वप्रतिपादनाय 'गौरस्ति, गौर्नास्ति' इत्यादिशब्दप्रयोगात्। एवञ्च सत्ताया व्यभिचाराभावेन 'अस्ति' इत्युपाधिग्रहणं व्यर्थमेवेति चेन्न, या सम्प्रति मुख्या वर्तमानलक्षणा बाह्या सत्ता तस्यां यथा स्यात् भूतभविष्यतोरतीतानागतवस्तुपरामर्शिन्या बुद्ध्योत्प्रेक्षितोपचरितरूपा या सत्ता तस्यां मा भूत्। तेन 'गावोऽस्याऽसन्' 'गावोऽस्य भवितारः' इत्यर्थे 'गोमान्' इति प्रयोगाभावः। नन्वेवं विद्यमाने एव देवदत्ते तद्गवीनामतीतानागतत्वप्रतिपादनाय 'गोमानासीत्' 'गोमान् भविता' इति प्रयोगो जायते स न स्यात्, प्रकृत्यर्थस्य सम्प्रति सत्ताया अभावादिति चेन्न, तत्र साक्षाद् गोसत्ताया अकथनेन गोमत एव सत्तायाः कथनात्। यदि तत्र गवां सत्ता विवक्षिता स्यात्तदा गावोऽस्य सन्तीति 'गोमान्' इत्यत्र यथा मतुबन्तेन सहास्तीति न प्रयुज्यते, प्रत्ययेनैवास्त्यर्थस्य प्रतीतत्वात्, तथेहापि 'गोमानासीत्' 'गोमान् भविता' इत्यत्रास्तेः प्रयोगो न स्यात्।

सत्यपि वा प्रयोगे यथेह बहुवचनं भवति 'गावोऽस्यासन्' 'गावोऽस्य भवितारः' इति, एवमिहापि स्याद् बहुवचनम् 'गोमानासीत्' गोमान् भविता' इत्यत्र। तस्मान्नैषा गवां सत्ता कथ्यते किन्तु गोमत एव। तत्र गोमत्स्वरूपं तु तस्यातीतानागतमिति भूतभविष्यत्प्रयोगः। यथा 'ईश्वरोऽयमासीत्' 'दरिद्रोऽयं भविष्यति' इत्यत्रेदमर्थस्य सत्त्वेऽपि ईश्वरत्वदारिद्र्यांशमादाय भूतभविष्यत्प्रयोगः। सा वाक्यार्थवशादुपजायमाना बहिरङ्गेति नान्तरङ्गं शब्दसंस्कारं निवर्तयति। यथा—'ग्रामं न गच्छति' इत्यत्र फलाश्रयत्वेनोद्देश्यत्वाभावेऽपि जातं कर्मत्वं न निवर्तयति, इति भूतभविष्यत्सत्तायां 'मा भूत्' इत्यस्तिग्रहणम्।

---

दर्पणव्याख्या

* तद्रीत्यैवेति * शास्त्रान्तरीयरीत्यैवेत्यर्थः। ननु वैयाकरणमते जहत्स्वार्थवृत्त्याश्रयणे "न पूजनात्" "तेन रक्तं रागात्" इत्यादिसूत्राणां का गतिरत आह—* आरोपितेति *। * विशिष्टशक्त्यैवेति *। विशिष्टार्थस्यैवेति शेषः। वृत्तौ पदद्वयाभ्युपगमेन जहत्स्वार्थपक्षे तदुपपादकत्वार्थनिरूपणस्यानुपयोगेऽपि अजहत्स्वार्थपक्षे विशिष्टशक्तिग्रहस्य प्रत्येकशक्तिनिरूपणोपजीव्यतया तन्निरूपणस्यावश्यकत्वात् एतत्सूचनायैव मूलेऽनादिरुपाधिमिति तु रहस्यम् ॥ ५५ ॥

इति वैयाकरणभूषणसारदर्पणे देवताप्रत्ययार्थनिरूपणम् ॥ १० ॥

प्रभा

करणतायामन्वयः। तथाच 'माञ्जिष्ठम्' इत्यनेन मञ्जिष्ठानिष्ठकरणतानिरूपकरञ्जनकर्म वस्त्रादि इति बोधः।

परीक्षाकृतस्तु—अत्र यद्यपि 'तेन' इति करणे तृतीया । तदर्थस्य धात्वर्थेऽन्वयेन तत्र तज्जन्यत्वप्रतीतिर्न्याय्या । सा नोपपद्यते, पूर्वस्थितपदसमवेतरूपध्वंसं विना रूपवति रूपान्तरानुपपत्तेः । अत एव 'तेन रक्तम्' इत्यस्य तत्सम्बन्धाधीनतदीयरूपारोपविषयोऽर्थः । प्रकृत्यर्थस्य मञ्जिष्ठायाः सम्बन्धेऽन्वयः प्रतियोगितया । 'तेन' इति तु तृतीयान्तात्प्रत्ययोत्पत्तिं बोधयितुमुपात्तमिति । मञ्जिष्ठासम्बन्धाधीनतदीयरूपारोपविषयो वस्त्रमिति बोधः । पित्तपीतिम्ना यत्र 'पीतः शङ्खः' इति भ्रमः, तत्र तस्य भ्रमस्य न पीतरक्तमिति प्रत्यय इति तत्सम्बन्धाधीनत्वं विशेषणमित्याहुः ।

'नक्षत्रेण युक्तः कालः' अत्र भाष्यम्—अयुक्तोऽयं निर्देशः । योगो हि नाम स भवति ययोः सन्निकर्षे—विप्रकर्षौ स्तः । नित्ये हि कालनक्षत्रे……………………नैष दोषः, पुष्यसमीपगते चन्द्रमसि पुष्यशब्दो वर्तते इति । अयम्भावः—चैत्र्यादिशब्दाः 'नक्षत्रेण युक्तः कालः' इति सूत्रविहिताणन्तप्रकृतिकङीबन्तः । तत्र चित्रादिशब्दश्च स्वार्थतत्तन्नक्षत्रयुक्तचन्द्रपरो लक्षणया, अन्यथा सर्वेषां नक्षत्राणां सर्वदैव सत्त्वेन सर्वदैव 'अद्य चैत्रमहः' इति प्रयोगापत्तेः । अत्र युक्त एव प्रत्ययार्थः, नतु कालोऽपि, लाघवेन वस्तुसत एव तस्य प्रत्ययोत्पत्तिनिमित्तत्वौचित्यात्, अहरादिपदेन तल्लाभसम्भवाच्च । तथाच 'चैत्री पूर्णिमा' इत्यनेन 'चित्रानक्षत्रयुक्तचन्द्रयुक्ता पौर्णमासी' इति बोधः । 'चैत्रो मासः' इत्यनेन तु तादृशपौर्णमास्यधिकरणं मास इति बोधः । कस्याञ्चित्पूर्णिमायां चित्रादिनक्षत्रयुक्तचन्द्रयोगाभावेऽपि चित्रादिपदानां स्वसमीपनक्षत्रे लक्षणया नक्षत्रान्तरयुक्तचन्द्रयोगेऽपि तादृशव्यवहार उपपाद्य इति पूर्वोक्तमनुसन्धेयम् ।

'संस्कृतं भक्षाः' अत्र प्रत्ययार्थः संस्काराश्रयः । संस्कारश्च सम्बन्धाधीनमार्दवादिविशेषः, विशेषप्रकारकानुभवविषयो वा । एवञ्च 'दाधिक ओदनः' इत्यनेन 'दधिसम्बन्धाधीनमार्दवादिविशेषविशिष्ट ओदनः' इति बोधः । 'शूल्यम्' 'उख्यम्' इत्यादौ संस्कारः पाकादिरूपः । तत्राधिकरणतानिरूपकत्वसम्बन्धेन शूलादेरन्वय इति शूलादिनिष्ठाधिकरणतानिरूपक पाकाश्रयो मांसमित्यादिबोधः । 'तदस्मिन्नस्तीति' प्रत्युपाधिकात् प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थेऽणादय अणाद्यन्तनामादेशश्चेत्। देशश्चेति शब्दबलात् लोकप्रसिद्ध एव ग्राह्यः । एवञ्च 'औदुम्बरो देशः' इत्यनेन वर्तमानकालिकसत्तावदुम्बराधिकरणं देश इति बोध ।

'तेन क्रीतम्' तृतीयान्तात् क्रीतार्थे यथाविहितं प्रत्ययाः—ठक्ठञ्कनादयः स्युः । क्रीतञ्च क्रयणकर्म । क्रयणञ्च स्वस्वत्वोत्पत्त्यनुकूलद्रव्यदानक्रियानुकूलव्यापारः । तथाच 'सौवर्णं वस्त्रम्' इत्यनेन सुवर्णकरणकक्रयणकर्मीभूतं वस्त्रमिति बोधः ।

'तेन प्रोक्तम्' अत्र प्रोक्तत्वं नाध्यापनेन प्रकाशितत्वम्, सुशर्मणाऽध्यापिते काठके 'सौशर्मणम्' इति प्रयोगापत्तेः । नापि कृतत्वम्, 'कृते ग्रन्थे' इत्यनेनैव सिद्धावेतस्य वैयर्थ्यापत्तेः ।

ननु वेदस्य नित्यतया कृतत्वाभावेन 'तैत्तिरीयम्' 'काठकम्' इत्याद्यसिद्धिरिति चेन्न, 'यद्यप्यर्थो नित्यो या त्वसौ वर्णानुपूर्वी साऽनित्या' इति भाष्येणैव समाहितत्वात् । महाप्रलयेषूच्चारयितृपुरुषाभावेनानुपूर्वीविनाशात्पुनरुत्पन्न ऋषयः संस्कारातिशयाद्वेदार्थं स्मृत्वा शब्दरचनां विदधति, ततश्च कठादयो वेदानुपूर्व्याः कर्तारः, प्रवक्तारश्चेति वैयटः, अत्र प्रोक्तत्वञ्च प्रथमप्रकाशितत्वरूपत्वात् । तच्च स्वकृतापरकृतसाधारणम् । एवञ्च माधुर्येण प्रथमप्रकाशितायां तेनाकृतायां वृत्तौ 'माधुरी' इति प्रयोगनिर्वाहाय 'तेन प्रोक्तम्' इत्यस्यावश्यकत्वात् । सुशर्मणा काठकन्तु न प्रथमं प्रकाशितमिति नातिप्रसङ्गः । एतत्सर्वं भाष्ये स्पष्टम् । भाष्ये 'वर्णानुपूर्वी' इत्यत्र वर्णशब्दः पदपरः । तेन छन्दसि पदानामभेद इति सूचितम्, कठादिना प्रथमप्रकाशितत्वञ्च । तथाच स्मृतिः—

प्रभा

प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते । इति ।
स्वयम्भूरेव भगवान् वेदो गीतस्त्वया पुरा ।
शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः ॥
युगान्तेऽन्तर्हितान् वेदान् सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥ इति ॥

इति स्मृतिद्वयमुक्तरीत्या सङ्गमनीयम् । 'तस्य पूरणे डट्' 'षष्ठ्यन्तात्सङ्ख्यावाचिशब्दात्स्वप्रवृत्तिनि-
मित्तसंख्याया पञ्चत्वादेः पूरणे डट् इत्यर्थः । पूरणत्वञ्च—स्वनिष्ठसंख्यापूर्तिनिमित्तत्वम् । तथाच 'पञ्चमः'
इत्यादिना पञ्चनिष्ठपञ्चत्वसंख्यापूर्तिनिमित्तमिति बोधः । गणनायां क्रियमाणायां चरमबुद्धिस्थेन येन
प्रकृतिप्रवृत्तिनिमित्तसंख्या पूर्यते स पूरणः । तत्र पूरणत्वस्य स्वनिष्ठसंख्यापूर्तिनिमित्तत्वरूपत्वे द्वितीया-
नामपि पञ्चमत्वव्यवहारापत्तिः, तत्रापि तादृशनिमित्तत्वसत्त्वात्, इति नेत्र, तत्रापि तादृशव्यवहारस्येष्ट-
त्वात् । अत एव व्युत्क्रमेणाष्टाध्यायेषु गण्यमानेषु 'समर्थः पदविधिः' इत्यस्याध्यायो यदा चरमो
गण्यते तदा निर्माणक्रमेण द्वितीयस्यापि गणनाक्रमेणाष्टमत्वव्यपदेशो भवत्येव । अत एव नारदेन
सर्वेषामेव देवकीपुत्राणामष्टमत्वं व्यवस्थापितम् ।

'प्रकारवचने थाल्' अत्र थाल्प्रत्ययः प्रकारवदर्थकः' सामानाधिकरण्यानुरोधात्, वचनमहणाच ।
'तज्जातीयकः' इत्यादिभाष्यप्रयोगात्, थला जातीयरादेर्न बाधः । प्रकारश्च सामान्यस्य भेदको विशेषधर्मः।
तथाच 'यद्विशेषधर्मवान् हरिस्तद्विशेषधर्मवान् हरः' इति बोधात् यत्सदृशो धर्मयो' रुयावगतौ हरिसादृश्यं
हरे फलति 'हरिसदृशो हरः' इति ।

'समासाच्च तद्विषयात्' अत्र तत्पदेनेवार्थो निर्दिश्यते । तथाच 'इवार्थविषयात्समासाद्दियार्थे छप्रत्ययः'
इत्यर्थः । 'काकतालीयो देवदत्तस्य वधः' इत्यत्र काकपदं काकागमनपरम् । इवश्चोपमानम्, अस्योपमेयं
देवदत्तागमनम्, तालपदं पूर्वपदार्थसमानाधिकरणतालपतनपरमुपमानम्, अस्योपमेयश्च दस्यूपनिपातः ।
तथाच काकागमनसमानाधिकरणतालपतनप्रयोज्यं काकमरणम्' काककर्तृकदलिततालफलोपभोगो वा
समासार्थ उपमानम् । उपमेयभूते देवदत्तागमनसमानाधिकरणदस्यूपनिपातप्रयोज्यदेवदत्तकर्मको वधः
छप्रत्ययार्थ इवार्थः । एवञ्च पूर्वपदार्थस्य उत्तरपदार्थैकदेशे सामानाधिकरण्येऽन्वयसत्त्वात्रासमर्थसमासः
शङ्कनीयः ।

सामानाधिकरण्यस्योत्तरपदार्थत्वमस्वीकृत्याऽऽकाङ्क्षाभास्यसामानाधिकरण्यमस्यान्वयेनोत्तरपदार्थान्व-
ये सामर्थ्योपपादनन्तु न युक्तम्, सामानाधिकरण्यस्य सम्बन्धत्वाभावात् । अत एव 'चैत्रस्य भ्राता' इत्या-
दौ षष्ठ्यर्थसम्बन्धो न सम्भवति । एकोदरशायित्वस्य सम्बन्धत्वे पाथयोरेकदेशे रात्रावुषितयोरपि सम्बन्धः
स्यात् । तथाच तत्रापि 'देवदत्तस्य यज्ञदत्तः' इति प्रयोगः स्यादित्याशङ्क्य काल्पनिकोऽवयवावयविभावः
षष्ठ्यर्थ इति 'अनेकमन्यपदार्थे' इति भाष्ये समाहितं सङ्गच्छते । सामानाधिकरण्यस्य सम्बन्धत्वे त्विदं
भाष्यं विरुद्ध्येत ।

अन्येतु—छप्रत्ययान्तविषये काकतालशब्दस्य काकतालसमागमप्रयोज्ये निरूढा लक्षणा । प्रयोज्यञ्च—
कचित्काककृततालफलोपभोगरूपम्, कचित्तालकृतकाकवधरूपञ्चोपमेयवाचकवत्तत्समभिव्याहारवशादुन्ने-
यम् । प्रयोज्यस्य सादृश्ये प्रतियोगित्वेनान्वयः । तथाच काकतालसमागमप्रयोज्यसदृशो देवदत्तस्य वध

प्रभा

इति बोधः । उपमानोपमेयभावश्च अकस्मादुपनतत्वेन बोध्यः । उपमानतावच्छेदकतादृशकाककृततालफलोपभोगत्व—तादृशवधत्वादिरूपेणाबोधात् छप्रत्ययोपमायामुपमानलोपमलङ्कारिकाः स्वीकुर्वन्ति । वाक्यस्य लक्षणानङ्गीकारे तु तालादिपदस्यैवोक्तप्रयोज्ये लक्षणा बोध्या ।

अतिरिक्तशक्तेरिति—'जहत्स्वार्थावृत्ति.' इति मते समुदाये समासादौ शक्तिस्वीकारादिति भावः । सूत्रादिति—यद्यपि सूत्राभावेऽपि 'तस्यापत्यम्' इत्यादौ तत्सम्बन्ध्यपत्येऽणादय इत्यर्थस्वीकारे 'वस्त्रमुपगोरपत्यं चैत्रस्य' इत्यर्थविवक्षायाम् उपगुशब्दात् प्रत्ययप्राप्त्यावदोषः, तथापि 'ऋद्धस्योपगवः' 'घनश्यामः ऐन्द्रः' इत्यादिवारणाय 'समर्थ' इतिसूत्रस्यावश्यकत्वात् ।

शास्त्रान्तरीयैः—नैयायिकादिभिः । तद्रीत्यैव=नैयायिकादिरीत्यैव । ननु वैयाकरणैर्यदि 'जहत्स्वार्था वृत्ति.' इति पक्ष आश्रीयते तर्हि 'तेन रक्तं रागात्' 'न पूजनात्' 'तत्पुरुषः समानाधिकरणः' इत्यादिसूत्राणामनुपपत्तिः, मञ्जिष्ठादिपदे रागादिवाचकत्वाभावात्, एवं समासघटकपदानां समानाधिकरणत्व—पूजनार्थकत्वादिव्यवहारस्याप्यनुपपत्तिश्चेत्यत आह—आरोपितेति—इदमुपलक्षणम्—शब्दनित्यत्ववादिनां मतेऽवयवानां कल्पिततया उपसर्ग-निपात-धात्वादिविभागः, स्थानिनो लादय आदेशास्तिबादयस्तेषामर्थाश्च कल्पिता एवेत्यग्रे वक्ष्यमाणस्य समासादिघटकपूजनार्थकत्वादेश्च ।

ननु वैयाकरणनये यदि जहत्स्वार्थावृत्तिरेव तत्र समासे पूर्वोत्तरपदार्थविभागस्तद्धिते प्रकृतिप्रत्ययार्थविभागश्च काल्पनिक एवेत्येव कारिकायां वक्तुमुचितमिति 'नात्यन्तीव प्रयस्यते' इत्युक्तिरसङ्गता । किञ्च वृत्तौ सर्वत्रैवैकार्थीभावात्मिका शक्तिश्चेत्तदा 'जहत्स्वार्था तु तत्रैव रूढिर्यत्र विरोधिनी' इति सिद्धान्तविरोधश्चेति चेन्न, शब्दनित्यत्ववादिनये तत्तदवयवार्थप्रदर्शनस्य काल्पनिकत्वं विनाऽनुपपत्त्या तज्ज्ञाभात् रूढ्यतिरिक्तस्थलेऽवयवशक्तिसहकृतसमुदायशक्त्योपस्थितिदर्शनेनावयवानामपि शक्तिनिरूपणस्यावश्यकत्वात्, पृथगनुपस्थापकत्वरूपजहत्स्वार्थात्वस्य सर्वत्र सत्त्वेऽपि समुदायशक्तावसहकृतत्वरूपजहत्स्वार्थात्वस्य रूढावेवेत्याशयेन तादृशोक्तेश्चेति दिक् ।

देवतानां प्रभावेण देवताद्यर्थनिर्णयः ।
प्रभायां बालकृष्णेन तद्विदानां समर्पितः ॥

॥ शुभमभूयात् ॥

## ॥ अथाभेदैकत्वसङ्ख्यानिर्णयः ॥

वृत्तिप्रसङ्गात् तत्राभेदैकत्वसङ्ख्या प्रतीयते इति सिद्धान्तं दृष्टान्तेनोपपादयति—

अभेदैकत्वसङ्ख्याया वृत्तौ मानमिति स्थितिः ।
कपिञ्जलालम्भवाक्ये त्रित्वं न्यायाद् यथोच्यते ॥ ५६ ॥

सङ्ख्याविशेषाणामविभागेन सत्त्वम्=अभेदैकत्वसङ्ख्या । उक्तञ्च वाक्यपदीये—

यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।

प्रभा

ननु प्रातिपदिकनिरूपणे प्रस्तुते तद्घटकस्यैव निरूपणमुचितमित्यभेदैकत्वसङ्ख्यानिरूपणमसङ्गतमत आह—वृत्तिप्रसङ्गादिति—अर्थविशिष्टवृत्तिनिरूपणस्यापि प्रस्तुतत्वात् स्मृतस्योपेक्षानर्हत्वरूपोपोद्घातसङ्गत्या अभेदैकत्वसङ्ख्यानिरूपणमपि सङ्गतमेव । किञ्च 'तदस्यास्त्यस्मिन्' इति सूत्रे 'अस्ति' इत्येतस्यापि विवक्षित-त्वेन सङ्ख्याया अपि वृत्तौ प्रस्तुतत्वमिति भावः ।

यद्यपि वक्ष्यमाणक्रमानुरोधेऽपि वृत्तित्वसत्त्वात्तन्निरूपणोत्तरमेव सङ्ख्यानिरूपणमुचितम्, तथापि कृत्वा-सुबन्तवृत्तेरेवोपस्थितत्वाच्च कृत्तद्धितसमासवृत्तिनिरूपणा-न्ते सङ्ख्याया अभानादाकाङ्क्षाविच्छेदनियमः, पूर्वं सुबन्तवृत्तेरेवोपस्थितत्वाच्च 'कपिञ्जलानालभेत' इति श्रौतवाक्ये प्रागपि सङ्ख्यानिरूपणमुचितमेव । स्थितिः=मर्यादा । कपिञ्जलेति—'कपिञ्जलानालभेत' इत्यत्र प्रत्यासत्तिन्यायात् त्रित्वस्य इत्यर्थः । शसा बहुत्वेनैव तद्व्याप्यत्रित्वादीनामुपस्थित्या बहुत्वव्याप्येषु त्रित्वस्य प्रथमोपस्थितत्वे न्यायात्= प्रथमोपस्थितत्वरूपप्रत्यासत्तिन्यायात् । यथा 'कपिञ्जलानालभेत' इत्यत्र उपस्थितसङ्ख्यासु एकत्वस्यैव प्राथम्याद् भानम्, तथा वृत्तौ सङ्ख्यात्वेनैव एकत्वादिसङ्ख्यानामुपस्थित्या एकत्वस्यैव प्राथम्याद् तदाश्रयणमस-भानमिति भावः । वस्तुतस्तु—'णिजां त्रयाणां गुणः श्लौ' इत्यत्र त्रयाणां ग्रहणेन व्याकरणे तदाश्रयणमस-भानमिति भावः । ( अभेदेन ) इति क्वचित्पाठः । इतम् । अभेदैकत्वसङ्ख्यास्वरूपे मतद्वयम् । तत्रैकमाह—सङ्ख्याविशेषाणामिति । स च उपसर्जनपदार्थत्वावच्छेदकराजत्वादि-अविभागेन=अविरोधेन । अभेदैकत्वेति—अभेदो भेदाभावः । यद्वा—भेदस्य=एकत्वत्वभेदस्याभावो यत्र सङ्ख्यायां साऽभेदैकत्व-धर्मावच्छिन्नप्रतियोगिताकभेदाभावः । यद्वा—भेदस्य=एकत्वत्वभेदस्याभावो यत्र सङ्ख्यायां साऽभेदैकत्वसङ्ख्येत्यर्थः ।

सङ्ख्या सङ्ख्यात्वेन प्रतीयमानैकत्वसङ्ख्याऽभेदैकत्वसङ्ख्येत्यर्थः । यथौषधीति—यथा मधुनि सर्वरसानां रसत्वेन तादृशसङ्ख्याप्रतीतौ वाक्यपदीयं प्रमाणयति—यथौषधीति—यथा मधुनि सर्वरसानां रसत्वेन भानं तथा वृत्तौ सर्वसङ्ख्यानां सङ्ख्यात्वेन भानम्, विभक्त्यभावेन सङ्ख्याविशेषाणां तत्तद्रूपेणानुप-स्थितेः । यत्र द्वित्वादिसङ्ख्याविषयकं तात्पर्यग्राहकं किञ्चिदस्ति तत्र द्वित्वादिकमपि प्रतीयते । अत एव सर्वरसानां दृष्टान्तप्रदर्शनं सङ्गच्छते । आहितेति—यद्यपि आहितशब्दस्य स्थापितार्थकत्वमन्यत्र प्रसिद्धम्,

दर्पणव्याख्या

ननु प्रक्रान्ते प्रातिपदिकघटकप्रत्ययार्थनिरूपणेऽभेदैकत्वसङ्ख्यानिरूपणमसङ्गतमत आह—* वृत्तिप्रसङ्गादिति * इति भावः । यद्यपि वक्ष्य-तथात्र वृत्तिनिरूपणे क्रियमाणे स्मृतिपथप्राप्ततद्धर्मापेक्षाऽनुचितेति प्रसङ्गसङ्गतिसत्त्वान्नोक्तदोष इति भावः । यद्यपि वक्ष्य-माणक्रमानुरोधेऽपि वृत्तित्वसत्त्वात्तदनन्तरमेव सङ्ख्यानिरूपयितुमुचिता, तथापि तदर्थस्यार्थे सङ्ख्याया अभानादाकाङ्क्षा-विच्छेदः स्यादित्यत्रैव तन्निरूपितमिति बोध्यम् । अभेदैकत्वसङ्ख्यापदार्थं मतभेदेन द्विधा निर्वक्ति—* सङ्ख्या-विशेषाणामिति * एकत्वत्वाद्यवच्छिन्नानामित्यर्थः । अविभागेन=अभेदेन—अविरोधेनेति यावत् । उक्तार्थे हरिवाक्यं प्रमाणयति—* उक्तञ्चेति * । * आहितशक्तयः * आहिता=समर्पिता तत्तद्दोषविभेदनिबन्धना विरोधरूपा शक्तिर्यैरित्यर्थः ।

अविभागेन वर्तन्ते सङ्ख्यां तां तादृशीं विदुः ॥ इति ॥

परित्यक्तविशेषं वा सङ्ख्यासामान्यं तत्। उक्तञ्च—

भेदानां वा परित्यागात् सङ्ख्यात्मा स तथाविधः ।

### प्रभा

तथापि दार्ष्टान्तिके सङ्ख्यारूपे 'आहितशक्तयः' इत्यस्य आहिता=त्यक्ता विरोधशक्तिः परस्परप्रतिबन्ध्य-प्रतिबन्धकभावरूपा 'नहि त्रिपुत्रो द्विपुत्रव्यवहारं लभते' इत्यादिभाष्यादिबोधिता यैरित्यर्थः। दृष्टान्तेऽपि तत्तद्दोषविपर्ययिका या बुद्धिवृत्तिस्तत्प्रयुक्तो यो विरोधस्तस्य त्यागो बोध्यः । ताम्=अविरोधेन वर्तमानाम्। तादृशीम्=अभेदैकत्वपदवाच्याम्। यद्वा मधुरसस्थितितुल्यस्थितिकर्त्रीम्।

एवञ्चैतन्मते एकत्वद्वित्वादेः सत्त्वेऽपि भेदकार्ये ये धर्मा एकत्वत्वद्वित्वत्वादयस्तत्परित्यागेन सर्वासां स्थितिकर्तृत्वमात्रम्, सङ्ख्याया जात्यखण्डोपाध्यतिरिक्ततया स्वरूपतो भानासम्भवात्। तथाच 'राजपुरुषः' इत्यनेन 'राज्ञः' 'राज्ञोः' 'राज्ञाम्' वा पुरुष इत्येवं लौकिकविग्रहस्थलेऽपि 'राजसम्बन्धी पुरुषः' इत्येव बोधः। नन्विदमयुक्तम् – 'द्वित्व-बहुत्वादीनां विरोधादेवैकत्र स्थित्यसम्भवात्। अत एव 'नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते' इति भाष्यं सङ्गच्छते। किञ्च मधुदृष्टान्तोपादानमप्यसङ्गतम्, तत्र नानाजातीयरस-वदवयवारब्धे मधुनि रसान्तरोत्पत्तेरभ्युपगमात्। यथा नानाजातीयरूपवदवयवारब्धेऽवयविनि-पटादौ चित्ररूपम्। किञ्च मधुनि सर्वरससत्तया नानारोगनाशः फलम्, इह तु संख्याविशेषाणां सद्भावमात्र-स्वीकारे फलाभाव इत्यत आह–परित्यक्तेति–परित्यक्तो विशेषः=एकत्वत्वादिरूपो धर्मो येन तत्। संख्यासामा-न्यम्=एकत्वत्वाद्यग्रहणकालिकसंख्यात्वप्रकारकप्रतीतिविषयः सङ्ख्या । तत्=अभेदैकत्वसङ्ख्यारूपम्। अनेकत्वत्वादिरूपविशेषधर्मपरित्यागश्च ज्ञातवादृशधर्मवत्त्वेन प्रतीतिविषयीभवनाभाव एव । अत्र पक्षे सङ्ख्यात्वेन सङ्ख्यासामान्यं भासते, नत्वेकत्वादिविशेष इति पूर्वपक्षाद्विशेषः। तदुक्तं हरिणा—

अभेदैकत्वसंख्यायास्तत्रान्यैवोपजायते ।
संसर्गरूपं संख्यानामविभक्तं तदुच्यते ॥ इति ॥

अयमर्थः—वृत्तावुपसर्जनपदानां सत्वभूतत्वात्सङ्ख्यायोगस्यावश्यकत्वेन 'अन्या संसर्गरूपा' सङ्ख्या जायते, इति ।

अत्र हरिसम्मतिमाह—भेदानामिति—भेदानाम्=सङ्ख्याभेदकानामेकत्वत्वादिधर्माणामिति भैरव-मिश्राः । वस्तुतस्तु भेदानाम्=एकत्वादिसंख्याविशेषाणाम् । परित्यागात्=अप्रतीतेः । सङ्ख्यात्मा=संख्यात्वेन प्रतीयमानासंख्या । तथाविधः=अभेदैकत्वसङ्ख्यापदव्यवहार्यः ।

### दर्पणव्याख्या

त्यक्तविरोधा इति यावत्। अत एव अविभागेन=अविरोधेनेत्यर्थ ।ताम्=अभेदैकत्वसङ्ख्याम्। तादृशीं=मधुनिष्ठरसस्थि-तितुल्यामित्यर्थः । नन्वेकत्वद्वित्वादीनामेकत्र सत्त्वमनुपपन्नम्। नहि द्वावेकत्वेन व्यवह्रियते, नाप्येको द्वाविति,' नहि द्विपुत्रः" इति भाष्यात्। किञ्च दृष्टान्तोऽपि न समञ्जसः, तत्तद्रसवदारब्धेऽवयविनि माक्षिकेऽवयवसजातीयरसान्तरस्यैवोत्पादा-भ्युपगमादत आह—* परित्यक्तेति * वाशब्दः पक्षान्तरे। अगृहीतविशेषधर्मकं संख्यामात्रमित्यर्थः। पूर्वकल्पे उक्ता-र्थस्याभिसन्धिकं वाक्यपदीय तत्पक्षेऽपि प्रमाणत्वेनोपन्यस्यति—* भेदानामिति * भेदानाम्=एकत्वत्वद्वित्वत्वादिविशेष-धर्माणां परित्यागात्=अग्रहात्। इदञ्च व्यापारपदार्थे अभेदेनान्वयि। संख्यात्मा=संख्यास्वरूपः। सः=एकत्वादिः। तथाविधः=अभेदैकत्वव्यवहार्य इत्यर्थः।

व्यापाराज्जातिभागस्य भेदापोहे ( हो ) न वर्त्तते ॥
अगृहीतविशेषेण यथा रूपेण रूपवान् ।
प्रख्यायते न शुक्लादिर्भेदापोहस्तु गम्यते ॥ इति ॥
अस्या वृत्तौ=समासादौ भानं न्यायसिद्धमिति शेषः । इति मतस्थितिर्वैयाकरणानाम् ।

प्रभा

जातिभागस्य=एकत्वत्व-द्वित्वत्वादिरूपस्य । एकत्वत्वादिरूपजातिभागस्य
तत्र हेतुमाह—व्यापारादिति ।
भेदापोहरूपव्यापारात्, सः=संख्यात्मा तथाविधो वर्तत इत्यर्थः ।
जातिभागस्य व्यापारमाह—भेदापोहेनेति—'प्रकृत्यादिभ्य उपसङ्ख्यानम्' इत्यनेनाभेदे तृतीया ।
तथाच भेदस्य=एकत्वादिसंख्यारूपस्य योऽपोहः=अग्रहस्तद्रूपव्यापारादित्यर्थः, भेदापोहपदार्थस्याभेदेन
व्यापारेऽन्वयात् । तथाच 'राजपुरुष.' इत्यनेन 'सङ्ख्यावद्राजसम्बन्धी' इति बोध एतन्मते ।
वस्तुतस्तु राजसम्बन्धी' इत्येव शाब्दो बोधः । संख्याविशेषस्तु तात्पर्यादिवशान्मानसबोधविषय
एव । अन्यपक्षे दृष्टान्तमाह—अगृहीतेति—न गृहीतो विशेषः=शुक्लत्वादिरूपधर्मो यस्मिंस्तेन रूपत्वेन
गृहीतरूपेण रूपवानिति प्रख्यायते । भेदापोहो न वर्तते' इति भेदरूपो योऽपोहः—अतद्व्यावृत्तत्वरूपः=न
तत् अतत्, अतस्मात् व्यावृत्तम् अतद्व्यावृत्तम्=एकत्वभिन्नभिन्नमेकत्वम्, तस्य भाव एकत्वत्वमतद्व्यावृ-
त्तत्वं प्रकृते तत्र प्रतीयते इत्यर्थः । यथा दूरस्थितो घटादिः शुक्ल सन्नपि शुक्लत्वादिप्रकारकमहासमानका-
लिकरूपत्वप्रकारकग्रहविशेष्येण रूपेण 'अयं रूपवान्' इत्येव भासते, नतु शुक्लो घट इति, तथा वृत्तावुप-
सर्जनपदार्थः 'सङ्ख्यावान्' इत्येव भासते, नतु 'एकत्वादिमान्' इति । रूपगतोऽपोहः=विशेषधर्मो न
प्रतीयते । अपोहोऽतद्व्यावृत्तिर्विशेषधर्म एव, समनियतत्वात् ।
न्यायसिद्धमिति—'उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावः' इति न्यायसिद्धमित्यर्थः । ननु
सङ्ख्यात्वेन सङ्ख्याप्रकारकबोधस्य नैयायिकाद्यनभिमतत्वादिदमसङ्गतमत आह—वैयाकरणानामिति—
तथाच वैयाकरणानामेवैतन्मतं नान्येषामिति भावः । सङ्ख्यात्वेन सङ्ख्याभानं समर्थयति—

दर्पणव्याख्या

* जातिभागस्येति * एकत्वत्वादेरित्यर्थ ।
तदेव विशदयति—* भेदापोहेनेति * भेदस्य विशेषणस्य योऽपोहोऽग्रहस्तेनेत्यर्थः । यद्वा भेदापोहेनेत्यस्य व्यापारादित्यनेनान्वयः,
प्रकृत्यादित्वात् तृतीया । तथाचैकत्वत्वादेर्जातिविशेषस्य भेदाग्रहरूपो यो व्यापारो विशेषणाऽत्मा ततो वर्तत इत्यर्थः ।
"भेदापोहो न वर्त्तते" इति वा पाठे तु भेदरूपो योऽपोहोऽतद्व्यावृत्तं स न वर्त्ततेऽन्न भासते इत्यर्थोऽवसेयः । पक्षान्तरा-
वलोकनेनैतत्पाठस्यैव हरिसम्मतत्वमध्यवसीयते । द्वित्वत्वाद्यग्रहकालिकसङ्ख्यात्वप्रकारकप्रतीतिगोचरः सङ्ख्यापदार्थोऽ-
भेदैकत्वव्यपदेश्यो भवतीति समुदितार्थः । तत्र दृष्टान्तरमाह—* अगृहीतविशेषेणेति * शुक्लत्वादिप्रकारकग्रहाप्रमान-
कालिकरूपत्वप्रकारकप्रतीतिविषयेण शुक्लादिनैव यथा घटादी रूपवानिति प्रतीयते । शुक्लादेर्यो भेदरूपोऽपोहः शुक्लत्वादि-
रतद्व्यावृत्तिरूप. स तु न प्रतीयते । तद्वद्राजपुरुष इत्यादौ राजादिपदार्थः सङ्ख्यावानिति प्रतीयते, न तत्र सङ्ख्यांऽशो
एकत्वत्वादि भासते इत्यर्थः ।
तादृशसङ्ख्याभानस्य परानभ्युपेतत्वात् कथमिव स्थितिरत शेषपूरणेन व्याचष्टे—*वैयाकरणानामिति* । ननु
तादृशसङ्ख्याया वृत्तौ भाने किं प्रमाणमत आह—

अयं भावः—'राजपुरुषः' इत्यादौ राज्ञः, राज्ञोः, राज्ञां वाऽयं पुरुष इति जिज्ञासा जायते। विशेषजिज्ञासा च सामान्यज्ञानपूर्विकेति - सामान्यरूपेण तत्प्रतीतिः शब्दादावश्यकी। अतस्तत्रां शक्तिरिति। तस्या एकत्वत्वेन प्रतीतौ न्यायमाह—कपिञ्जलेति—बहुत्वगणनायां त्रित्वस्यैव प्रथमोपस्थितत्वात् तद्रूपेणैव भानवत् एकत्वस्य सर्वतः प्रथमोपस्थितत्वमस्तीति भावः।

प्रभा

अयम्भाव—इत्यादिना। 'राजपुरुष.' इति—एतज्जन्यबोधानन्तरमित्यर्थः। राज्ञ इति—एकस्य, द्वयोः, त्रयाणां वेत्यर्थः। सामान्यज्ञानपूर्विकेति—समभिव्याहृतपदार्थतावच्छेदकावान्तरधर्मप्रकारकज्ञानेच्छासामान्यज्ञानपूर्विकैवेत्यर्थ। यदा 'अयं ब्राह्मण.' इति ज्ञानं नास्ति तदा 'कोऽयं ब्राह्मण' इति ब्राह्मणत्वव्याप्यजातिविशेषजिज्ञासा न जायते। 'सामान्यज्ञानसत्त्वे तु विशेषजिज्ञासा जायते' इत्यन्वयव्यतिरेकाभ्यां विशेषधर्मप्रकारकजिज्ञासां प्रति सामान्यधर्मप्रकारकज्ञानस्य कारणत्वं कल्प्यते।

एवञ्च, प्रकृतेऽपि यदि 'राजपुरुष' इत्येतज्जन्यबोधानन्तरमेकत्वादिसङ्ख्याविशेषजिज्ञासा जायते, तदा तत्कारणीभूतसङ्ख्यासामान्यज्ञानमावश्यकमिति वृत्तिवाच्या सामान्यसङ्ख्याऽवश्यं स्वीकार्या। 'द्विपुत्रः' इत्यादौ तु वृत्तेर्न सङ्ख्यायां शक्तिः, पूर्वपदेनैव प्रतीते। तस्याम्=सङ्ख्यात्वेन सङ्ख्यायाम्। शक्तिरिति—वृत्तेरिति शेष.। तस्या इति—वृत्तिघटकोपसर्जनीभूतव्यक्तेरित्यर्थः। एकत्वेनेति—एकत्वत्वेनेत्यर्थः। एकत्वस्येति—अस्य सङ्ख्यायामिति शेष। प्रथमोपस्थितत्वादिति—अत्र भूषणकारः—नित्यस्य प्रथमोपस्थितौ न नियम, दशत्वादीनामपि प्रथमोपस्थितत्वात्, गणनायाश्चानियमात्', विपरीतगणनायामपि कस्यचिद् व्युत्पन्नत्वाच्च। अन्यथा एकत्वस्य गणनायां प्रथमोपस्थितत्वेन न्यायेनैव तदुपस्थितिसम्भवादेकवचनेन पश्वेकत्वविवक्षा मीमांसकोक्ताऽसङ्गता स्यात्।

ननु न्यायेनैकत्वस्योपस्थितावपि द्वयोरालम्भनेऽपि साङ्गयागानुष्ठानं दुर्वारमिति चेन्न, 'पशुना यजेत'

दर्पणव्याख्या

अयं भाव इति *। * सामान्यज्ञानपूर्विकेति * तद्धेतुकेत्यर्थः। * आवश्यकीति * तां विनोक्तजिज्ञासाया अभावादिति भाव। सा च सङ्ख्यापूर्वोत्तरपदार्थयोः सम्बन्धवद् वृत्तिवाच्यैव। अजहत्स्वार्थावृत्तिपक्षे पूर्वपदस्य सङ्ख्याविशेषवाचकत्वे गमकाभावे, तेन 'द्विपुत्र', 'मौद्गिक', 'मासजात.' 'सप्तर्षय.' 'भक्तद्विमयूर' इत्यादौ वृत्तावभेदैकत्वसङ्ख्यायां अभानेऽपि न क्षतिः।

आद्ये—सङ्ख्याविशेषस्यैव पूर्वपदार्थत्वात्। द्वितीये—एकमुद्गस्य क्रयकरणासम्भवाद् बहुत्वावगतिः। तृतीये—विशिष्टकालावगमाय मासपदप्रयोगात् सङ्ख्याऽप्यवगता। चतुर्थे—तत्कार्यादेशादेकत्वावगतिः। पञ्चमे—प्रकरणाद् द्वित्वावगतिः। एवम्—'कारकमध्ये' इत्यादावप्यूह्यम्, एकस्य मध्यासम्भवात्। सति प्रकरणे 'राजपुरुष' इत्यादावपि सङ्ख्याविशेषप्रकारेणैव भानम्। तदा तत्रापि न तस्य वृत्त्यर्थत्वमिति भेदो भेदसहिता द्वित्वादिसङ्ख्या, तदभावसहितमेकत्वमभेदैकत्वमिति व्युत्पत्त्या सङ्ख्यात्वेनैकत्वमेवोपसर्जनपदार्थे भासते। तथा—"एकवचनमुत्सर्गतः करिष्यते" इति वचनात् 'राजन्-अम्-पुरुष-सु' इत्यलौकिकविग्रहे एकवचनं प्रयुज्यते। यत्र तु प्रकरणादिना सङ्ख्याविशेषभानं तत्र बहुत्वावगतिः। यथा—निष्कुरित्यादौ, निशा-अस्-गो-अम्-इत्यभियोगोच्चरमन्यमवगमयति—* तस्या इति * वृत्तिघटकपदार्थोपसर्जनव्यक्तेरित्यर्थः। * प्रतीतावपीति * सङ्ख्यात्वावच्छिन्नैकत्वप्रकारतानिरूपितविशेष्यत्वको बोध इत्यर्थ। उपसर्जनपदार्थे सङ्ख्यात्वेनैकत्वमेव प्रतीयते, न द्वित्वादीत्यत्र दृष्टान्तमाहेति यावत्। *गणनायामिति* बहुत्वविशिष्टगणनेकसंख्याने इत्यर्थः।

प्रकारकत्वेनैव हेतुहेतुमद्भावात्तद्रूपेणैव वाच्यता स्यादिति ध्येयम् ॥ ५६ ॥

इति वैयाकरणभूषणसारे अभेदैकत्वसङ्ख्यानिरूपणम् ॥ ११ ॥

प्रभा

गुर्जरोदीच्यत्वादिज्ञानं जायतामितीच्छा भवति स्वीयतादृशजिज्ञासाबोधनाय 'कस्य ब्राह्मणस्येदं गृहम्' इति पृच्छति। तथाचोक्तेच्छाया न विशेषधर्मविषयकत्वम्, किन्तु इच्छायाः कारणीभूतं यत् 'ब्राह्मणत्वव्याप्यधर्मज्ञानं मदिष्टसाधनमिति ज्ञानं तस्य विषयो ब्राह्मणत्वव्याप्यो धर्म इतीच्छायाः स्व-(इच्छा) विषय (ज्ञान) विषय (व्याप्यधर्म) कत्वेनैव व्याप्यधर्मविषयकत्वम्, न स्वातन्त्र्येणेति 'याचितमण्डन' न्यायेनैव व्याप्यधर्मविषयकत्वम्।

अत्रेदमवधातव्यम्—यदुक्तं मूले (ज्ञानेच्छयोः समानप्रकारकत्वेनैव हेतुहेतुमद्भावात्' इति तद्युक्तमेव। अत एव यस्य पुरुषस्य 'सद्यः शुक्रकरम्पयः' इति ज्ञानं जायते, तस्य 'पयो मे जायताम्' इतीच्छोत्पद्यते। तथाच 'तद्धर्मप्रकारकेच्छाम्प्रति तद्धर्मप्रकारकज्ञानत्वेन कार्यकारणभावः' सर्वसिद्धः। परन्तु इच्छाया यत्र स्वातन्त्र्येण तद्धर्मप्रकारकत्वं तत्रैवोक्तकार्यकारणभावः 'राजपुरुषः' एतज्जन्यसङ्ख्याबोधानन्तरं या जिज्ञासा तत्र तूक्तरीत्या याचितमण्डनन्यायेनैव व्याप्यधर्मप्रकारकत्वमिति न तत्र समानविषयकत्वेन कार्यकारणभावः, किन्तु व्याप्यव्यापकविषयकत्वेनैवेति प्रकृते ज्ञानेच्छयोः समानविषयकत्वेन कार्यकारणभावमाश्रित्य सङ्ख्यासामान्यभानखण्डनमयुक्तमेव। अत एव दीधितिकृता 'अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयोऽर्थः सङ्गतिः' इति सङ्गतिलक्षणस्योपजीव्यत्वादौ सङ्गमनसमये 'जायते च कार्ये, कारणे वा विज्ञाते 'किमस्य कारणम्, कार्यं वेति जिज्ञासा' इत्युक्तं सङ्गच्छते। 'जिज्ञासैव नोत्पद्यते' इतिरीत्यैव संख्यासामान्यभानखण्डनं युक्तम्। अत एव 'राजपुरुषः' इत्यनेन तत्र तत्र 'राज-

दर्पणव्याख्या

प्रकारकज्ञानस्यावश्यकता स्यादिति दोष। 'अभेदैकत्वसंख्याया वृत्तौ भानम्' इति मूले तु प्राचीनमतानुवाद एवेति भावः।

अनुभवसिद्धत्वस्य शपथनिर्णेयत्वं मत्वाऽऽह—*तथाचेति* वादिनोऽनास्थायाम्, अनुभवसिद्धत्वे चेत्यर्थः।

* समानप्रकारकत्वेनैवेति *। एवकारेण विभिन्नप्रकारकत्वव्यवच्छेदः। तद्धर्मप्रकारकेच्छाम्प्रति तद्धर्मप्रकारकत्वज्ञानस्य हेतुताया गुर्वादीनामपि स्वीकरणात्। प्रकृते विशेषधर्मप्रकारकजिज्ञासायाः स्वविषयविषयकत्वेन ज्ञानप्रकारीभूतविशेषधर्मप्रकारकत्वस्यावश्यकत्वेन तत्तदर्थविशेषधर्मप्रकारकज्ञानकार्यताऽवच्छेदकाक्रान्तत्वादिति भाव।

* तत्तद्रूपेणैवेति * एकत्वत्वादिविशेषरूपेणैवेत्यर्थः। एवकारेण संख्यासामान्यधर्मत्वव्यवच्छेदः। इतरथा चेन्न, तथा सति शब्दादेर् विशेषधर्माऽगतौ तत्र जिज्ञासाया असम्भवादिति भाव।

अत्र वदन्ति, तद्धर्मप्रकारकज्ञानस्य कार्यतावच्छेदककोटौ स्वातन्त्र्येण तद्धर्मप्रकारकत्वं सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासाजनकत्वानुरोधान्निवेशनीयम्। अन्यथा सामान्यधर्मप्रकारकज्ञानस्योक्तजिज्ञासां प्रति हेतुत्वं विरुध्येत।

ननु तत्र मानाभाव, "जायते च कार्ये कारणे वा ज्ञाते किमस्य कार्यं कारणं वा" इति दीधितिकृतामुक्तत्वेन मानत्वात्। प्रकृते विशेषधर्मस्य वाच्यतावच्छेदकत्वेऽपि प्रकारत्वात्तद्धर्मप्रकारकज्ञानं विनापि सामान्यधर्मप्रकारकज्ञानात् तादृशजिज्ञासायाः सुलभत्वात्। सामान्यधर्मप्रकारकज्ञानं तु विशेषधर्मप्रकारकत्वाभिन्नाभिन्नविशेषव्याप्यत्वमिति न गुरुत्वं, सामान्यज्ञानात् गुर्वादीनामपि स्वीकृतकार्यकारणभावानुरोधात्। तथाचात्र जिज्ञासायाः सर्वसिद्धत्वे तद्गुरुत्वेऽभेदैकत्वे

उत्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि।
तदा सर्वैर्विशिष्येत द्वन्द्वोत्पन्नसुबर्थवत्॥ इति॥

शब्दान्तराधिकरणे भट्टपादैरभिधानाच्च, "आर्द्धधातुकस्येड् वलादेः" (पा० सू० ७।२।३५) इत्यत्रानुवाद्यार्द्धधातुकविशेषणस्य वलादित्वस्य विवक्षितत्वाच्च।

प्रभा

ग्रहं सम्मार्ष्टि' इति तत्र गृह्यते सोमोऽनेनेति ग्रहो यज्ञीयपात्रविशेषः, तस्य सोमस्थापनार्थत्वेनार्थतः प्राधान्याद् विधेयसम्मार्जनान्वयित्वाच्चोद्देश्यत्वम्। अविवक्षितमिति—यज्ञीयसर्वपात्राणां सम्मार्जनस्याभिमतत्वादविवक्षितमित्यर्थः। अस्माकम्=वैयाकरणानाम्। उद्देश्यविशेषणेति—संख्यारूपविशेषणेत्यर्थः, 'राजपुरुषः सुन्दरः,' इत्याद्यावुद्देश्ये पुरुषे राजादिरूपविशेषणस्य वैयाकरणानामपि विवक्षितत्वात्। धातोरिति—'धातोः' (पा० सू० ३।१।९१) इत्यधिकारसूत्रे धातोरित्यंशस्य='धातोः' इतिसूत्रजन्यबोधीयविषयता यद्धातुपदार्थगतैकत्वस्य। 'धातोः' इति पदजन्यबोधविषयीभूतैकत्वस्य व्याकरणशास्त्रे विवक्षायां मीमांसकानामपि सम्मतिमाह—उत्पद्येतेति—यद्येकत्वस्य विवक्षा स्यात्तदा समस्तेभ्यो धातुभ्यः='गा' 'जि' 'ध्या' इत्यादिधातुसमुदायादित्यर्थः। सर्वैरिति=सर्वैर्धात्वर्थैः प्रत्ययार्थो विशिष्येत='गानकर्म' 'जयकर्म' 'ध्यानकर्म' इत्येवं प्रत्ययार्थे कर्मादौ गानादिधात्वर्था विशेषणीभूताः स्युरित्यर्थः—द्वन्द्वेति—यथा 'धवखदिरौ छिन्धि' इत्यत्र सुबर्थकर्मणि धवादयो विशेषणतां यान्ति तथेत्यर्थः। 'शब्दान्तरेति—मीमांसायामपूर्वभेदाधिकरणे शब्दान्तराधिकरणे=शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्' इति सूत्रघटितापूर्वभेदाधिकरणे इत्यर्थः। (२ अ० २ पा० १ सू० १ अधि०) तत्र हि 'यजति' 'ददाति' 'जुहोति' एषु प्रत्ययेन भिन्ना भावनाऽभिधीयते एकैव वा? एकप्रत्ययप्रतिपाद्यत्वादेकैवेति पूर्वपक्षे सिद्धान्तितम्। यदि सर्वधातुभ्य एक एव प्रत्ययः स्यात्तदा एकैव भावना सर्वधात्वर्थानुरक्ता प्रतीयेत। तत्रैवोक्तम्—

निष्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि।
ततः सर्वविशिष्टा स्याद् द्वन्द्वोत्पन्नसुबर्थवत्॥ इति॥

अत्र तु 'यजतेः' 'ददातेः' जुहोतेश्च पृथक् पृथक् प्रत्ययो दृश्यते इति नानाधात्वर्थानुरक्ता भिन्नैव भावनाऽभिधीयत इति। भट्टैरिति=कुमारिलभट्टैः। अभिधानादिति—'श्लोकवार्तिके' इति शेषः।

ननु 'धातो' इत्यत्र धातुरूपोद्देश्यविशेषणैकत्वस्याविवक्षितत्वमित्यर्थसाधकत्वेनोपन्यस्ता भाट्टयुक्तिनार्थ·

एवम्—'पशुना यजेत' इतिवद् विधेयविशेषणं विवक्षितमित्यपि नियमो न, "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" ( ८ । २ । ४२ ) इत्यत्र नकारद्वयविधानानापत्तेः । तथाच 'भिन्नः' इत्यत्र नकारद्वयलाभो न स्यात् । "आद् गुणः" ( ६ । १ । ८७ ) इत्यादावेक-त्वविवक्षयैवोपपत्तौ "एकः पूर्वपरयोः" ( ६ । १ । ८४ ) इत्येकग्रहणवैयर्थ्यापत्तेश्चेति भावः ।

प्रभा

इत्यादावविभागमापत्तिः । उद्देश्यगतसंख्याया एवाविवक्षाऽङ्गीकारे वक्षितत्वे 'अवश्यपाच्यम्' 'अवश्यलाव्यम्' इत्यादावविभागमापत्तिः । उद्देश्यगतसंख्याया एवाविवक्षा- पत्ताद्ग्रिहणवैयर्थ्योपत्त्या विवक्षितत्वे च दूषणं चिन्त्यम् । एवम्-अनुवाद्यविशेषणस्य विवक्षाऽविवक्षा- नियमाभाववत् । पशुनेति—( मी० द० अ० ४ पा० १ सू० ११ अधि० ५ ) पश्वेकत्वाधिकरणे, ज्योतिष्टोमे श्रूयते—'अग्निषोमीयं पशुमालभते' तत्र स्वर्गकामो यजेत इत्यादिवाक्यान्तरेण यजधात्वर्थयागस्य विहित- तया तत्र करणाकाङ्क्षायाम् 'पशुना यजेत' इत्यनेन साधनत्वेन पशुर्विधीयते । तथाच लोके यथा 'पशुमानय' इत्युक्ते एकवचने सति एकत्वविशिष्टपशुकर्मकमानयनं प्रतीयते । पशू आनय' इत्युक्ते द्वित्व- विशिष्टं प्रतीयते । तत्र हि एकत्वमपैति, द्वित्वमुपजायते । यस्यागमे यदुपजायते स तस्यार्थ इति गम्यते । यथा 'अश्वमानय' इत्युक्ते अश्वानयनं प्रतीयते, 'गामानय' इत्युक्ते गवानयनम् । तत्राश्वोऽपैति गोत्वोप- जायते । तेन ज्ञायते अश्वशब्दस्याश्वोऽर्थो गोशब्दस्य गौरिति । तथाच मीमांसासूत्रम्—'शब्दवत्तूपलभ्यते तदागमे हि तद् दृश्यते तस्य ज्ञानं यथाऽन्येषाम्' इति । 'तद्वच्च लिङ्गम्' इति, तथाच लिङ्गम्' इति च ।

अयम्भावः—विधेयसमर्पकस्य 'पशुना' इत्यस्य पशुत्वपुंस्त्वैकत्वविशिष्टपशुबोधकतया पशुत्वपुंस्त्व- योर्विवक्षया न पशुभिन्नस्य नापि छाग्या यथा यागाङ्गत्वं तथैकत्वस्यापि विवक्षिततया नानेकपशूनां यागाङ्गत्वम्' इति विधेयविशेषणविषये मीमांसकसिद्धान्तः । तद्दर्शनेन नास्माकं सर्वत्र विधेयविशेषण- विवक्षानियमः, किन्तु लक्ष्यानुसारात् क्वचिद्विवक्षा, क्वचिदविवक्षा चेति । सर्वत्र विधेयविशेषणस्य विवक्षि- तत्वे दोषमाह—रदाभ्यामिति—'नः' इत्यत्र विधेये एकत्वस्य विवक्षितत्वे 'भिन्नः' इत्यत्र तकारदकारयोः स्थाने एक एव नकारः स्यात्, नतु नकारद्वयमिति तत्रैकत्वस्याविवक्षयेति स्थानिद्वयानुरोधान्नद्वयं सिद्ध्यतीति भावः । यदि तु 'रदाभ्याम्' इति सूत्रे चग्रहणाद् वाक्यद्वयम्—'रदाभ्यां निष्ठातो नः' इत्येकम् 'पूर्वस्य च दः' इत्यपरं तदा द्वितीयवाक्येन एकत्वविशिष्टनकारस्य पृथग्विधानेनोक्तदोषः । तदुक्तम्—'एकः पूर्वपरयोः' इति सूत्रे भाष्ये—'इह तावत् 'रदाभ्यां निष्ठातो नः' 'पूर्वस्य च दः' इति द्वे वाक्ये । कथं योगविभागः करिष्यते । रदाभ्यां निष्ठातो नः' ततः पूर्वस्य च द इति—इत्युच्यते तदाह—आद् गुण इति । वैयर्थ्यापत्तेरिति—यदि विधेय- विशेषणं नियमेन विवक्षितं स्यात्तदा पूर्वपरयोः द्वयोः स्थानिनोरेकस्यैव गुणादेशस्य सिद्धतया एकग्रहणस्य

दर्पणव्याख्या

नियमितम् । अत्राविवक्षाकारणविरहादिति मीमांसकरीत्यैकत्वविशिष्टेन शुकरणयागादहष्टसिद्धिः । एवमन्यत्रापि विधेयविशेषणं निर्णीतम् । अत्राविवक्षाकारणविरहादिति मीमांसकरीत्यैकिना सरणिस्तदनुसरणनियमो नास्माकमित्यर्थः । एतच्छास्त्रे तदाश्रयणेऽनिष्टं प्रदर्शयति—*रदाभ्यामिति* । * विधाना- नापत्तेरिति * 'न' इत्येकवचनोपस्थितैकत्वस्यापि विधेयविशेषणतया तद्विवक्षायां नकारद्वयविधानं न स्यादित्यर्थः । ननु मास्तु नद्वयविधानमत आह—* तथाचेति * इदञ्चैकवाक्यतया विधानमभिप्रेत्य, वाक्यभेदेन विधानपक्षे स्यादेव—*आद् गुण इत्यादाविति* । *एकत्वविवक्षयैवेति* विधेयगुणगतैकत्वविवक्षयैवेत्यर्थः । तथाचैकग्रहणेनोक्तार्थे ज्ञापकमिति भावः । —विवक्षा— मीमांसकदर्शन- ननु पश्वेकत्वादिविवक्षाहेतूनां जैमिनिसम्मतत्वात् तदाश्रयणस्यानाकरत्वमित्याह

शब्दार्थस्तु—सङ्ख्याया लक्ष्यानुरोधात्तन्त्राऽतन्त्रे यतो मते, अतः पश्वेकत्वाधिकरणोक्तहेतूनामाश्रयणं नास्मत्सिद्धान्तसिद्धमिति । आदिना ग्रहैकत्वसंग्रहः ॥ ५७ ॥

ननु विधेयविशेषणविवक्षा आवश्यकी, अन्यथा 'सुद्ध्युपास्यः' इत्यादावनन्तयकाराद्यापत्तेः । 'भिन्नः' इत्यत्र नकारद्वयवदन्येषामप्यापत्तेः, 'एकः पूर्वपरयोः' इत्यत्रैकग्रहणञ्च स्थानिभेदादादेशभेदवारणायेत्यभिप्रेत्याह—

प्रभा

वैयर्थ्यं स्पष्टमेव । तस्मादेकग्रहणमेव विवक्षानियमाभावे ज्ञापकम् । तथाच 'उपेयिवाननाश्वाननूचानश्च' (३।२।१०६) इति सूत्रे उपेत्यस्याविवक्षा, नञोऽनोश्च विवक्षेत्युभयं सिद्ध्यति । यत इति—यतो लक्ष्यानुरोधरूपहेतोरित्यर्थः । मते=इष्टे प्रथमाद्विवचनान्तं नपुंसकमिदम् । पश्वेकत्वाधिकरणेति—(४ अध्याये १ पादे पञ्चमाधिकरणोक्तेरित्यर्थः । हेतूनामिति—यदि 'पशुना यजेत' 'पशुमालभेत' इत्यादावेकत्वमविवक्षितं स्यात्तदा एकस्यैव पशोः सत्त्वे पश्वन्तरालाभे प्रयोगप्राशुभावस्य बाधेन यागवैगुण्यापत्तिः, साङ्गयागासिद्धिरिति यावदित्येकः, यागासिद्धिफलं न पशोरिति पशोर्यागोपकारकत्वेन यागाङ्गतया बहुपश्वनुरोधेन यागावृत्तौ यागस्य प्राधान्यभङ्ग इति द्वितीयः; पशुत्वावच्छेदेन यागविधाने सकलपशुलाभासम्भवेन तावत्करणकयागासम्भवश्चेति तृतीय इत्यादिहेतूनाम् । एवम् 'ग्रहं सम्मार्ष्टि' इत्यत्र एकत्वं यदि विवक्षितं स्यात्तदा 'प्राजापत्या नवग्रहाः' इति वाक्यविहितनवग्रहोद्देशेन सम्मार्गो विधीयते, इत्युत्पत्तिवाक्यप्रतिपादनवत्वसंख्याविरोध एकः, 'ग्रहं सम्मार्ष्टि' इति वाक्यस्य नवावृत्त्या तत्तद्ग्रहविशेष्यकबोधजनकत्वकल्पने सम्मार्गविधायकवाक्यस्य ग्रहभेदेन नवभेदापत्तिरिति द्वितीयः, यद्वा 'प्राजापत्या' इत्यनेन विहितग्रहोद्देशेन सम्मार्गविधाने 'ग्रहं सम्मार्ष्टि' तच्चैकमिति वाक्यभेदः, सर्वस्यैकत्वविशिष्टत्वात् । को ग्रहः सम्मार्ष्टव्यः, को नेति विशेषानवगमात्सामान्यावगमाच्च सर्वसम्प्रत्ययं इति तृतीयः' इत्यादिहेतूनामित्यर्थः । सिद्धान्तेति—सिद्धान्तपदस्य सिद्धान्तप्रतिपादकभाष्ये लक्षणया भाष्यादिसिद्धमित्यर्थः । आदिनेति—कारिकायाम् 'पश्वेकत्वादि' इत्यत्रादिनेत्यर्थः ॥ ५७ ॥ इत्यादाविति—'आदिना मध्वरिः' इत्यादीनां संग्रहः । यकारादीति—अस्य 'इको यणचि' इति सूत्रेणेति शेषः । आदिना वकारादीनां ग्रहणम् । ननु विधेयविशेषणीभूतसंख्याया विवक्षितत्वे 'एकः पूर्वपरयोः' इत्यत्रैकग्रहणवैयर्थ्यापत्तिरित्याशङ्कायामाह—एकग्रहणञ्चेति । स्थानिभेदादिति—स्थानिनोः पूर्वपरयोः परस्परं भेदादित्यर्थः । यद्वा स्थानिविशेषादित्यर्थः । पूर्वपररूपभिन्नभिन्नस्थानिसत्त्वादिति यावत् । एकमादेश इत्यस्याप्यर्थो बोध्यः । इदं सूत्रकाराशयवर्णनमात्रम् । वस्तुतस्तु 'अनयोः

दर्पणव्याख्या

भिन्नेगाऽन्त्यपदार्थं व्याचष्टे—*शब्दार्थस्त्वित्यादि* । *पश्वेकत्वाधिकरणोक्तहेतूनामिति* 'पशुना यजेत' इत्यत्र विधेयगतैकत्वस्याविवक्षणे पश्वन्तरालम्भे प्रयोगप्राशुभावबाधेन, यागवैगुण्यापत्ति गुणानुरोधेन यागाऽऽवृत्तौ प्रधानभङ्गापत्तिर्यावत्पशुकरणकयागासम्भवश्चेत्येवमादयो दोषा हेतवस्तेषामित्यर्थः । *सिद्धान्तसिद्धमिति* सिद्धान्तार्थप्रतिपादकमहाभाष्यादिसिद्धमित्यर्थः ॥ ५७ ॥

*आदेशभेदवारणायेति* । वस्तुतस्तु नैकग्रहणं विधेयगतविशेषणाविवक्षायां तन्त्रम्, 'अनयोः पूर्वयोः' इत्यादावपि 'आद् गुणः' इत्यादावपि 'पूर्वपरयोः' इति द्वन्द्वनिर्देशेनैकवाक्यतयोभयोः स्थाने एकनिर्धारणसम्भावनाभेदाभावेनो गुण इत्येकग्रहणस्य भाष्ये प्रत्याख्यानादिति रहस्यम् ।

त्राश्रयणमनाकरम् । एकत्वविशिष्टं धातुम्, वलादित्वविशिष्टमार्द्धधातुकञ्चोद्दिश्य प्रत्ययेडागमादेर्विधिसम्भवादिति भावः ॥ ५८ ॥

प्रभा

ननु ग्रहैकत्ववत् 'धातोः' इत्येकत्वस्य 'आर्धधातुकस्येड् वलादेः' इत्यादौ वलादित्वादेश्चाविवक्षा स्यादत आह—एकत्वविशिष्टमिति—धातुसमुदायस्य क्रियावाचकत्वाभावेन धातुत्वाभावाद् धातुत्वपर्याप्त्यधिकरणादेव प्रत्ययविधानाच्चैकत्वविशिष्टस्यैव धातोः प्रत्ययोद्देश्यत्वमिति भावः । यदि तु धातुत्वपर्य्याप्त्यधिकरणादेव प्रत्ययविधानात् एकत्वस्याविवक्षितत्वेऽपि दोषाभावस्तदाह—वलादित्वेति—वलादिग्रहणसामर्थ्यात्तत्र वलादित्वस्य विवक्षितत्वमेवेति भावः ।

केचित्तु—एकत्वविशिष्टाद् धातोः प्रत्ययविधाने एकस्मादेव धातोः प्रत्ययः स्यात्, नतु धात्वन्तरादिति तु न, सर्वस्यैव धातोरेकत्वविशिष्टतया विनिगमनाविरहेण सर्वेभ्य एवोद्देश्यताऽवच्छेदकाक्रान्तेभ्यो धातुभ्यः प्रत्ययविधानसम्भवात् । नचोक्तरीत्या ग्रहैकत्वविवक्षायामपि दोषाभावः, इष्टत्वात् । नच तथा सति 'एकं ब्राह्मणं भोजयेत्' इति विधावपि बहुब्राह्मणभोजनाऽपत्तिः, सर्वस्यैव ब्राह्मणस्यैकत्वविशिष्टतया विनिगमनाविरहेण बहुब्राह्मणग्रहणसम्भवादिति वाच्यम्, तत्रैकपदोपादानसामर्थ्येन भोजयितुरिच्छाया एव विनिगमकायाः सत्त्वेन चोक्तदोषाभावात् । विधेयगतसंख्याऽन्वये मीमांसकाः—संख्यायाः समानप्रत्ययोपात्तत्वप्रत्यासत्त्या कारके एवान्वयः, नतु प्रकृत्यर्थे, विभक्त्यर्थस्य चारुणाधिकरणन्यायेन क्रियाविशेषणत्वम् । एवञ्च 'पशुना यजेत' इत्यनेन पश्वेकत्वोभयकरणको याग इति बोधः । 'एकत्वविशिष्टः पशुः' इति तु पाक्षिको मानसबोधः । तथाच टाविभक्त्यर्थैकत्वस्य यागाङ्गत्वावगमान्न तद्विवक्षाऽऽवश्यकीति तत् 'स्वौजसमौट्' इति सूत्रस्य 'कर्मणि द्वितीया' इत्यादिभिः 'द्व्येकयोः' इत्यादिभिश्चैकवाक्यत्वे एकत्वविशिष्टे कर्मणि द्वितीयैकवचनविधानेन प्रकृत्यर्थातिरिक्तान्वयेऽसाधुत्वप्रसङ्गात्, किञ्च भिन्नपदोपात्तक्रियान्वयापेक्षया समानपदोपात्तप्रकृत्यर्थान्वय एव उचितः, प्रत्यासत्तेः । एतेन यत्तु, सूत्रत्रयस्यैकवाक्यत्वेऽपि नैकत्वादेः कर्मादौ विशेषणत्वम्, किन्तु विधेयतया प्रधाने एव, 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्' इति न्यायात् । तथाच 'प्रातिपदिकात् कर्मणि एकत्वे च द्वितीयैकवचनम्' इत्याकारक एव वाक्यार्थबोधः, नोक्ताकारक इति विभक्त्यर्थकारकान्वये न किञ्चिद्बाधकमिति तत्परास्तम् । यागान्वयापेक्षया प्रत्यासत्त्या प्रकृत्यर्थान्वये बाधकाभावात् । कारकान्वयेऽपि प्रकृत्यर्थस्य तदभिन्नतया तत्रान्वयस्यापि लब्धत्वाच्च । अत एव 'प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्' इति व्युत्पत्तिरपि सङ्गच्छते । भगवतो जैमिनेरपि एकत्वविशिष्टपशुबोधे एव तात्पर्य्यम् । तथाहि—तत्रैकत्वमयज्ञाङ्गम्, अर्थस्य गुणभूतत्वात् (४ । १ । ११ । ५) इति भाष्यम्, तत्र='पशुना यजेत' इत्यत्र एकत्वमयज्ञाङ्गम्=यज्ञाङ्गत्वेन अविवक्षितम्, अर्थस्य=एकत्वस्य, गुणभूतत्वात्=न आलम्भस्य गुणभूता संख्या, नियोजनस्य वा, कस्य तर्हि ? पशोः, विभक्तिर्हि श्रुत्या प्रातिपदिकार्थगतां संख्यां ब्रूते इति पूर्वपक्षे 'शब्दवत्तूपलभ्यते तदागमे हि दृश्यते तस्य ज्ञानं यथाऽन्येषाम्' (४ । १ । १५।५) इति सिद्धान्तसूत्रम् । शब्दवत्=शब्दयोर्ध्वं

दर्पणव्याख्या

—यत्तु ग्रहपदार्थस्य परिच्छिन्नत्वात्परिच्छेदकाङ्क्षाभावस्य 'ग्रहम्' इति द्वितीयया संस्कार्यत्वलक्षणप्राधान्यबोधनात् 'प्रधानं गुणाकृति' इति न्यायाद्विनिगमनाविरहात् सोमापरोक्षनिराकरणस्य सम्भावस्य सर्वग्रहेद्देश्यपेक्षणाद्विधेयत्वादि- ‡ नियामकाभावेन तद्विवक्षप्रयुक्त्यादेरप्रसङ्गेऽसि तद्विरहविरहबीजस्य न संग्रहः, ‡ अनाकरमिति ‡—

नन्वेवम् 'भिन्नः' इत्यत्र नकारद्वयलाभो न स्यादित्यत आह—

रदाभ्यां वाक्यभेदेन नकारद्वयलाभतः ।
क्षतिर्नैवास्ति तन्त्रत्वे विधेये भेदकस्य तु ॥ ५९ ॥

चकारस्त्वुचितम्—निष्ठातस्य नः, पूर्वस्य दकारस्य च न इति वाक्यभेदमादाय नकारद्वयलाभ इत्यर्थः ॥ ५९ ॥

※ इति वैयाकरणभूषणसारे सङ्ख्याविवक्षानिर्णयः ॥ १२ ॥

प्रभा

यथा भवति तथोपलभ्यते एकत्वम् । हि=यतः, तदागमे=एकवचनागमे, दृश्यते=बुद्ध्यते एकत्वम्, तस्य=एकत्वस्य, ज्ञानम्=यज्ञाङ्गत्वेन ज्ञानम्, यथाऽन्येषाम्=पशुशब्दबोध्यपुंस्त्व—पशुत्वादीनां पशौ विशेषणानां यज्ञाङ्गत्वम्, तथैकत्वस्यापि । पशौ विशेषणानामिति भाष्योक्त्या एकत्वस्यापि पशुविशेषणत्वं स्पष्टमेवोक्तम् । हरिणाप्युक्तम्—'यजेत पशुना' इत्यत्र सस्कारस्यापि सम्भवे यथा जातिस्तथैकत्वं साधनत्वेन गम्यते इति । नन्वेकवचनमौत्सर्गिकम्, नतु संख्यार्थकं तत्राह—'न केवला प्रकृतिः प्रयोक्तव्या' इति न्यायाद्विभक्तेः शब्दसंस्कारार्थत्वसम्भवेऽपि जातेरिव सङ्ख्याया. क्रियासाधनत्वम, विशिष्टस्यैवोपस्थितेरिति हेलाराजः । किञ्च संख्याया अमूर्तत्वात्साक्षात्क्रियासाधनत्वासम्भवात् परम्परया क्रियासाधनत्वकल्पनापेक्षयोत्पत्त्युक्त्या प्रकृत्यर्थान्वयकल्पनमेव युक्तम् । नचारुणाधिकरणविरोधः, आरुण्यस्य प्रातिपदिकार्थतयाऽगत्या परम्परया क्रयणक्रियाकरणत्वकल्पनात् । किञ्चैकत्वाविवक्षायामेकेनैव पशुना यागसिद्धौ पश्वन्तरालम्भनस्य वैयर्थ्यापत्तिः, तथापि मध्ये पश्वन्तरालम्भने प्रयोगविध्यवगतप्रयोगप्राशुभावबाधः स्यात् । तदुक्तं हरिणा—

प्रत्याश्रयं समाम्नायां जातावेवेन चेत्क्रिया । पशुना न प्रकल्पेत न स्यादेतत्प्रकल्पना ॥
एकेन तु प्रसिद्धायां क्रियायां यदि सम्भवात् । पश्वन्तरमुपादेयमुपादानमनर्थकम् ॥
यथैवाहितगर्भायां गर्भाधानमनर्थकम् । तथैकेन प्रसिद्धायां पश्वन्तरमनर्थकम् ॥ इति ॥

अविवक्षा विवक्षा च सङ्ख्याया वर्णिता मया ।
प्रभायां बालकृष्णेन तेन प्रीयात्परेश्वरः ॥
॥ शुभम्भूयात् ॥

दर्पणव्याख्या

पूर्ववत् । 'इडागमादे' इत्यादिना—'उदीचामातः स्थाने यकपूर्वायाः', इति विहितेत्त्वसंग्रहः । तत्राऽऽकारस्थानिकाऽतम् द्विधेत्यभिधानात् । अत एवेण्निषेधविधायकेकाजिति सूत्रे 'श्रॅचः' इत्येकत्वविवक्षादरेणानेकाच्कोपदेशव्यावृत्तिर्ग्रन्थकृद्भिर्व्याख्याता । वस्तुतस्तु ग्रहैकत्वदृष्टान्तेनाप्यनुवादविशेषणानाम्, सङ्ख्यादीना कचिदविवक्षाऽस्तु, तदितरविशेषणानाम् विवक्षायान्तु न किञ्चिद्बाधकम् । मीमांसायामनुवाद्यांशे जातिलिङ्गसङ्ख्यातिरिक्तविशेषणस्यादर्शनात् । तेषाञ्चोत्पत्तिवाक्यादेवागमेनानुपक्षिप्तत्वादविवक्षा युज्यते । प्रकृते तु न तथेति बोध्यम ॥ ५९ ॥

इति वैयाकरणभूषणसारदर्पणे सङ्ख्याविवक्षाऽऽदिनिर्णयः ॥ १२ ॥

## ॥ अथ क्त्वाद्यर्थनिर्णयः ॥

क्त्वाप्रत्ययादेरर्थं निरूपयति—

अव्ययकृत इत्युक्तेः प्रकृत्यर्थे तुमादयः ।
समानकर्तृकत्वादि द्योत्यमेषामिति स्थितिः ॥ ६० ॥

तुमादयः=तुमुन्नादयः । प्रकृत्यर्थे=भावे ।

### प्रभा

उद्देश्यगतैकत्वविवक्षायाम 'धातोरित्येकत्वस्य' इत्युक्तम् । तेन तत्प्रकृतिकसूत्रानुक्तार्थकक्त्वादीनां स्मरणात् स्मृतिकालावच्छिन्नोपेक्षानर्हतावच्छेदकधर्मवत्त्वरूपप्रसङ्गसङ्गत्या आह—क्त्वाप्रत्ययादेरिति— 'रदाभ्याम्' इति कारिकोपस्थापित 'रदाभ्यां निष्ठातः'—इति सूत्रस्य निष्ठापदेन स्वप्रकृतिभूतधातोः स्मरणात् तत्प्रकृतिकसूत्रानुक्तार्थकतुमुन्नादीनाञ्च स्मरणादाह—अव्ययकृत इति । तुमादय—'अव्ययकृतो भावे' इति वार्तिकात् प्रकृत्यर्थे भावे भवन्ति । एषाम्=क्त्वादीनाम्, द्योत्यम्=व्यञ्जनादिना बोध्यम्, नत्वभिधेयम् । अयम्भावः—क्त्वाद्यर्थो भावः साध्यावस्थापन्न एव । स च धातुनैव लब्धः, तत्र क्त्वाप्रकृत्यर्थ-क्रिया, क्रियान्तरविशेषणम्, तयोर्यः सम्बन्धः सामानाधिकरण्यादिस्तत्र तात्पर्य्यग्राहकाः क्त्वादयः । प्रकृत्यर्थयोः क्रिययोः सम्बन्धे तात्पर्य्यग्राहकत्वमेव द्योतकत्वं क्त्वादीनाम् । नैयायिकादयस्तु सामानाधिकरण्यादीनां क्त्वादिवाच्यत्वं मन्यन्ते । अनेकसम्बन्धनिरूपितशक्तिकल्पने गौरवादाकाङ्क्षाभास्यत्वमेव सामानाधिकरण्यादीनाम्, तत्र तात्पर्यग्राहकास्तुमुन्नादय इति वैयाकरणाः ।

तुमुन्नादय इति—यद्यपि 'क्त्वादेरर्थं निरूपयति' इत्युक्तेः कारिकायाम् 'तुमादय इत्यनेन सह वैषम्यम्, तथापि भाष्यकृता तुमर्थो भाव इति व्यवस्थाप्य 'तुमर्थे सेसेनसेऽसेन्क्सेकसेन्' इति सूत्रात् क्त्वाद्यव्ययकृद्विधायकेषु 'तुमर्थे, इत्यनुवृत्त्या तेषां भावे विधानसिद्धेः 'अव्ययकृतो भावे' इति वार्तिकं प्रत्याख्यातं तद् द्योतनाय कारिकायाम् 'तुमादय.' इत्युक्तम् । तथाहि—'तुमर्थे इत्युच्यते, कस्तुमर्थो नाम, कर्ता तुमर्थः, यद्येवं नार्थस्तुमर्थग्रहणेन । येनैव खल्वपि हेतुना कर्तरि तुमुन्भवति तेनैव हेतुना क्त्वादयोऽपि भविष्यन्ति ( अस्य 'कर्तरि कृत्' इत्यनेन कर्तरि इति शेषः ) । एवं तर्हि सिद्धे सति यत्तुमर्थग्रहणं करोति, तज्ज्ञापयत्याचार्योऽस्त्यन्यः कर्तुस्तुमुनोऽर्थ इति । कः पुनरसौ ? भावः । कुतो नु खल्वेतद्भावे तुमुन्भविष्यति, न पुनः कर्मादिषु स्यादिति । ज्ञापकात्तावदयं कर्तुरपकृष्यते, नचान्यस्मिन्नर्थे आदिश्यते, 'अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति' इति स्वार्थे भविष्यति । तद्यथा—'गुप्तिज्किद्भ्यः सन्' 'यावादिभ्यः कन्' इति । सोऽसौ स्वार्थे

### दर्पणव्याख्या

अवसरसङ्गतिं क्त्वाद्यर्थनिरूपणे दर्शयति—*क्त्वाप्रत्ययादेरिति* । प्रकृत्यर्थत्वस्य फलेऽपि सत्वादाह—*भाव इति* तथापि साध्यभूते व्यापारे एव, नतु पूर्वकालादावित्यर्थः । 'पाक' इत्यादाविव 'पक्तुम्' पक्त्वेत्यादिजन्यबोधे भावांशे लक्षण्यस्यानुभवादिति भाव । वस्तुतस्तु पक्त्वा इत्यादिजन्यबोधे भावे लिङ्गसङ्ख्यानन्वयित्व तदनुभूयत एव । एवं पक्तुम्' इत्यादौ फलार्थकतुमुना साध्यत्वेन तद्बोधाच्चेत्युक्तप्रायमिति ।

आदिना—क्त्वादेः संग्रहः । भावे इत्यत्र मानमाह—अव्ययकृत इति—'अव्ययकृतो भावे'
इति वार्त्तिकादित्यर्थः । ननु 'समानकर्तृकयोः पूर्वकाले' इत्यादिसूत्राणां का गतिस्तत्राह—
समानकर्तृकत्वादीति । अयं भावः—'भोक्तुं पचति' 'भुक्त्वा व्रजति' इत्यादावेकवाक्यता

प्रभा

भवन् भावे भविष्यति । किमेतस्य ज्ञापने प्रयोजनम् । अव्ययकृतो भावे भवन्तीति एतन्न वक्तव्यं भवतीति ।
यद्वा मूले 'तुमादयः' इत्युक्त्या तुमाद्यर्थे निरूपयतीति वक्तव्ये क्त्वाद्यर्थमित्युक्तिस्तद्विषये बहु-
वक्तव्यार्थानुरोधात् । धातुरूपप्रकृत्यर्थस्वस्य फलेऽपि सत्त्वादाह—भाव इति भावश्चात्रासत्त्वभूत एव ग्राह्यः,
तुमुन्नादिना तथैव प्रतीतेः । आदिनेति—तुमादय इत्यत्रादिनेत्यर्थः । क्त्वादेरिति—आदिना णमुलादेः सङ्ग्रहः ।
अव्ययकृत इति—अव्ययसंज्ञाप्रयोजकाः कृत्प्रत्यया असत्त्वभूते भावे भवन्तीत्यर्थः । नच 'पाकः' इत्यादौ
घञादेरपि भावार्थकत्वदर्शनादव्ययेति विशेषणेन तेषामसङ्ग्रह इति वाच्यम्, लिङ्गानन्वयिरूपासत्त्वभू-
तार्थप्रतिपादककृतामेव वार्तिके ग्रहणात् । घञादीनाञ्च 'घञजपः पुंसि' इति लिङ्गानुशासनानुरोधा-
ल्लिङ्गान्वय्यर्थप्रतिपादकत्वात् । एवञ्च धात्वर्थानुवादक एव क्त्वादिरिति फलितम् । ननु क्त्वादीनां भाव-
मात्रार्थकत्वाङ्गीकारे समानकर्तृकत्वादेस्तदर्थत्वाभावेन 'समानकर्तृकयो' पूर्वकाले' इति सूत्रविरोध इत्याह—
समानकर्तृकयोरिति—अत्र समानशब्द एकवाची । तुल्यार्थकत्वे तु विभिन्नकर्तृकयोरपि क्रिययोः कर्त्रोस्तुल्यत्वे
क्त्वाद्यापत्तिः । अत्र 'समानकर्तृकयोः' इति द्विवचनमतन्त्रम् । तेन 'स्नात्वा भुक्त्वा पीत्वा व्रजति' इत्या-
द्यपि सिद्धम् । तदुक्तम्भाष्ये 'नान्तरीयकत्वाद् द्विवचनेन निर्देशः क्रियते । नह्यत्र निर्देशस्तन्त्रम्' इति ।
समानकर्तृकत्वस्य, पूर्वकालत्वस्य च भेदाधिष्ठानत्वाद् भेदनिबन्धनयोर्द्विवचनबहुवचनयोर्मध्ये द्विवचनस्य
प्राथम्यात्तेन निर्देशः । नत्वत्र द्वित्वं विवक्षितं प्रयोगनिमित्तत्वेन । नन्वेवमपि 'अमीषां ब्राह्मणानां पूर्व
आनीयताम्' इत्युक्ते सर्वपूर्व एवानीयते । एवमिहापि सर्वपूर्वायाः क्रियायाः प्राप्नोति, नतु, मध्यस्थाया
इति चेत् । नैष दोषः, सर्वेषामत्र व्रजिक्रियाम्प्रति पौर्वकाल्यम् । स्नात्वा व्रजति, भुक्त्वा व्रजति, पीत्वा
व्रजतीति । आख्यातवाच्यायाः क्रियायाः विशेष्यत्वात् । प्राधान्यात्ताम्प्रति सर्वासां विशेषणत्वात् परस्परे-
णासम्बन्धः, 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्' इति न्यायादिति कैयटः । अत एव उक्तार्थे
'पीत्वा' भुक्त्वा स्नात्वा व्रजति, इत्येवं प्रयोगानियमोऽपि उपपद्यते । तथाच 'एककर्तृकयोर्धात्वर्थयोः
पूर्वकालावच्छिन्नार्थप्रतिपादकाद् धातोः क्त्वादिप्रत्यय इति सूत्रबोधे जातेऽर्थाकाङ्क्षायाम् 'कर्तरि कृत्'
इत्यस्यानुपस्थित्यर्थम् 'अव्ययकृतो भावे' इति वार्तिकारम्भे सति समानकर्तृकत्वादेः शाब्दबोधे भानं द्योत्य-
त्वेनैव, नतु वाच्यत्वेनेति सूचितम् । वस्तुतस्तु—द्योत्यत्वेऽपि व्यञ्जनावृत्त्यादिस्वीकारे गौरवात् संसर्गविध-
यैव भानं स्वीकार्यमित्याह—अयम्भाव इति—वक्ष्यमाणभाव इत्यर्थः । एकवाक्यता=साक्षात्परम्परया वा
विशेष्यविशेषणभावापन्नविषयताप्रयोजकत्वरूपा, 'धातुसम्बन्धे' इत्यस्यात्राधिकारात् ।

दर्पणव्याख्या

* का गतिरिति * तत्र 'पूर्वकाले' इत्याद्युपादानात् पूर्वकालादीनां वाच्यता प्रतीयते । भावमात्रार्थकत्वे तु
तदनुपपत्तिरिति भावः । * समानकर्तृकत्वादीति * । तथाच समानकर्तृकयोर्धात्वर्थयोर्मध्ये पूर्वकालसम्बन्धी योऽर्थ-
स्तद्वाचकात् क्त्वेत्यर्थेऽर्थाकाङ्क्षायाम् 'कर्तरि कृत्' इत्यस्य प्रसक्तौ तद्बाधनार्थं वार्त्तिकारम्भेण भावस्यैव वाच्यता निर्धार्यते ।
कर्तुः प्रत्ययविशेषणत्वे तु समानकर्त्तरीत्येव ब्रूयात् । सूत्रोपात्तानां तु द्योत्यत्वमेव, वर्त्तमानत्वादिवदिति भावः ।
वस्तुतस्तु न द्योत्यतायामपि निर्भरं, संसर्गमर्यादयैव तद्भानसम्भवादित्याह—* अयं भाव इति * ।

सर्वसिद्धा भोजनपाकक्रिययोर्विशेष्यविशेषणभावमन्तरेणानुपपन्ना । अन्यथा 'भुङ्क्ते' 'व्रजति' इत्यादावप्येकवाक्यताऽऽपत्तेः । तथाच तयोर्विशेष्यविशेषणभावनिरूपकः संसर्गः, जन्यत्वम्, सामानाधिकरण्यम्, पूर्वोत्तरभावः, व्याप्यत्वञ्चेत्यादिरनेकविधः । तथाच—'भोक्तुं पचति' 'भुक्त्वा तृप्तः' इत्यादौ भोजनजनिका पाकक्रिया, भोजनजन्या तृप्तिरिति बोधः । अत एव जलपानानन्तर्यस्य

## प्रभा

सर्वसिद्धा=सर्वानुभवसिद्धा । अत्र 'धातुसम्बन्धे'—इत्यस्याधिकारे अनुभवः, 'सर्वेषां व्रजन्क्रियाम्प्रति पौर्वकाल्यम्' इति भाष्यम्, 'आख्यातवाच्याया क्रियाया विशेष्यत्वात् प्राधान्यात्ताम्प्रति सर्वासां विशेषणत्वात्' इति कैयटश्चैकवाक्यत्वे मानम् । अनुपपन्नेति—एकवाक्यत्वस्य विशेष्यविशेषणभावघटितत्वादिति भावः । अन्यथेति—विशेष्यविशेषणभावमन्तरा पदसमूहमात्रस्यैकवाक्यत्वे इत्यर्थः । भुङ्क्ते इति यत्किञ्चित्कर्तृका भुजिक्रिया यत्किञ्चित्कर्तृका व्रजनक्रिया च । अत्र पदसमुदाये एकमुख्यविशेष्यताशालिबोधजनकत्वरूपमेकवाक्यत्वं नास्तीत्यर्थः । यद्यप्यत्रैकवाक्यत्वेऽपि दोषाभावस्तथापि सर्वजनानुभवविरोध एव दोषो बोध्यः । किञ्च पदसमूहमात्रस्यैकवाक्यत्वे 'समानवाक्ये निघात' इति वार्तिकवैयर्थ्यापत्तिः, सर्वत्रैवोक्तैकवाक्यत्वस्य सत्त्वात् । यद्यपि क्त्वाप्रत्ययस्य कर्त्रर्थकत्वं भाष्यवार्तिकादिविरुद्धम्, तथापि कर्त्रर्थकत्वं स्वीकृत्य उभयक्रियाकर्त्रोरभेदान्वयेन भोजनकर्त्रभिन्नकर्तृवृत्तिभुजिक्रियेति 'भुक्त्वा व्रजति' इत्यादिना बोधे एकवाक्यत्वसम्भवेऽपि सर्वानुभवविरुद्धत्वात्तदुपेक्ष्यमेव । तथाचेति—एकवाक्यत्वे चेत्यर्थः ।

तयोरिति—निष्ठत्वं षष्ठ्यर्थस्तस्य विशेष्यविशेषणभावेऽन्वयः । यद्वा प्रतियोग्यनुयोगिभावः षष्ठ्यर्थस्तस्य निरूपकतासम्बन्धेन संसर्गेऽन्वयः । जन्यत्वमिति=इदमुपलक्षणं जनकत्वस्य । इदं नैयायिकरीत्या जनया । तन्मते जन्यत्वस्य संसर्गे तस्य विशेषणनिष्ठत्वं जनकतया विशेष्यनिष्ठत्वञ्चाश्रयतया, जनकत्वस्य तथात्वे आश्रयतया विशेष्यनिष्ठत्वं जन्यतया च विशेषणनिष्ठत्वमभ्युपेत्य द्विष्ठत्वं समर्थनीयम् । शाब्दिकनये जन्यजनकभाव एव संसर्गः । तस्य स्वरूपसम्बन्धेनैव द्विष्ठत्वम् । जन्यतया, जनकतया च द्विष्ठत्व चिन्त्यम्, तयोर्वृत्तित्वानियामकत्वात् । वृत्तितानियामकत्वस्यैव संसर्गत्वात् । सामानाधिकरण्यमिति—एकाधिकरणवृत्तित्वमित्यर्थः । तच्च समानकर्तृकत्वमेवेति न पृथक् तद् द्योत्यम् । पूर्वोत्तरेति—पूर्वोत्तरकालिकत्वमित्यर्थः । आनन्तर्यमिति यावत् पूर्वक्रियाया उत्तरक्रियायामानन्तर्यञ्च—पूर्वक्रियाधिकरणकालिकप्रागभावप्रतियोगिस्वरूपम् । तदधिकरणसमयध्वंसाधिकरणसमयोत्पत्तिमत्स्वरूपं वा । स एव पूर्वोत्तरभावः । अत एव जलपानानन्तर्यस्य सत्त्वेऽपि' इति मूलोक्तिः सङ्गच्छते । अन्यथा आनन्तर्यसम्बन्धस्य द्योत्यताया अनुक्तत्वादसङ्गतमेव तत्स्यात् । आनन्तर्यस्येति—आनन्तर्यम्=अव्यवहितत्वम्, तच्च क्रियायाः क्रियायाम्

## दर्पणव्याख्या

'समानकर्तृकयो' इत्यादिसूत्राणां धातुसम्बन्धाधिकारीयत्वादिति भावः । * अनुपपन्नेति * विशेष्यविशेषणत्वयोः संसर्गविषयतानिरूप्यत्वेन संसर्गं विना विशिष्टबुद्धेरसम्भवात्सम्बन्धमानं तद्वाच्यतां विनाऽनुपपन्नमिति भावः । * अन्यथेति * विशेष्यविशेषणभावमन्तरेणाप्येकवाक्यताभ्युपगमे इत्यर्थः । * सामानाधिकरण्यमिति * एकाऽऽश्रयवृत्तित्वमित्यर्थः । पूर्वोत्तरभाव =पौर्वापर्यसमयावच्छिन्नत्वम्, स्वपूर्वसमयवृत्तित्वं वा । व्याप्यत्वम्=अविनाभावित्वम् । तुमुनाद्यन्ते शाब्दबोधं दर्शयमाह—* तथाचेति * ।

* भोजनजनिकेति * जनकत्वस्यात्र संसर्गतेति स्फुटीकर्तुमियमुक्तिः । बोधाकारस्तु भोजनविशिष्टेत्येव, जनकत्वस्यात्र संसर्गतयाऽप्रकारत्वात् । क्रिययोर्जन्यजनकभावस्यापि सम्बन्धत्वे युक्तिमाह—अत एवेति । जन्यत्वस्य

प्रभा

स्वविशिष्टत्व—स्वविशिष्टत्वैतदन्यतरसम्बन्धेन स्वविशिष्टत्वम् । आद्यवैशिष्ट्यञ्च स्वध्वंसाधिकरण-
क्षणध्वंसाधिकरणक्षणध्वंसानधिकरणक्षणावृत्तित्व—स्वाधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वैतदुभयसम्ब-
न्धेन । आद्यसम्बन्धेनाऽव्यवहितत्वं पूर्वक्रियाया उत्तरक्रियायाम् । तथाहि—क्रियाया ध्वंसोत्पत्त्यधिकरणीभूतो
यः क्षणः स क्रियाध्वंसाधिकरणक्षणः तत्क्षणस्य यो ध्वंसस्तदधिकरणीभूतस्तदुत्तरक्षणस्तद्ध्वंसानधिक-
रणीभूतः क्षणः पूर्वक्षणध्वंसाधिकरणीभूतस्तत्क्षणावृत्तित्वमुत्तरक्रियायाम् । आद्यवैशिष्ट्यघटकद्वितीय-
सम्बन्धस्त्वेवम्—स्वपदबोध्या पूर्वक्रिया तदधिकरणीभूतक्षणस्य यो ध्वंसस्तदधिकरणक्षणवृत्तित्वमनु-
त्तरक्रियायाम् । पूर्वक्रियानिरूपिताव्यवहितत्वं यथोत्तरक्रियायान्तथोत्तरक्रियानिरूपिताव्यवहितत्वम्पूर्व-
क्रियायां द्वितीयस्वविशिष्टत्वसम्बन्धेन । तत्र वैशिष्ट्यञ्च—स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोगिक्षणवृत्ति-
त्व—स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोगिक्षणवृत्तिध्वंसप्रतियोगिक्षणावृत्तित्वोभयसम्बन्धेन । अत्र स्वपदेनो-
त्तरक्रिया ग्राह्या । तथाच स्वा ( उत्तरक्रिया ) धिकरणक्षणवृत्तिध्वंसः पूर्वक्रियाधिकरणक्षणप्रतियोगिक-
स्तत्प्रतियोगी पूर्वक्षणस्तद्वृत्तित्वं पूर्वक्रियायाम् । एवं स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोगी पूर्वक्रियाधिक-
रणक्षणस्तद्वृत्तिध्वंसस्तनोऽपि पूर्वक्षणस्येति तादृशक्षणावृत्तित्वमपि पूर्वक्रियायामिति लक्षणसमन्वयः । ।
यद्वा प्रागभावस्वीकर्तृनैयायिकमते द्वितीयस्वविशिष्टत्वे वैशिष्ट्यम्—स्वप्रागभावाधिकरणक्षणवृत्तित्वस्वप्राग-
भावाधिकरणक्षणप्रागभावाधिकरणक्षणावृत्तित्वोभयसम्बन्धेन । व्याप्यत्वम्=नियतसाहचर्यम् । इत्यादिरिति—
आदिना अव्यवहितत्वस्य सङ्ग्रहः । तत्र योग्यता । सा च तात्पर्यादिभिर्दण्डयाममुहूर्तादिरूपा ।
तथाच 'अद्य भुक्त्वा श्वो व्रजति' इत्यादौ यथायथं व्यवधानेऽपि न दोषः । क्त्वोपस्थाप्यकालस्या-
धेत्यनेनाभेदेनान्वयादिति नैयायिकाः । पूर्वकालिकत्वं न शक्यम्, 'भुक्त्वा व्रजति' इत्यादौ भोजनोत्तरं
व्रजनीत्यन्वयबोधात्, 'व्रजनपूर्वकालिकं भोजनम्' इत्यबोधाच्च । एवं नाव्यवहितत्वमपि शक्यम् । नच
पर्यान्तरीयव्रजनमादाय 'भुक्त्वा व्रजिष्यति' इत्यापत्तिः, सति तात्पर्ये इष्टापत्तेः । सति तात्पर्ये
योग्यताया अभावस्य वक्तुमशक्यत्वादिति नवीनाः । पूर्वकालिकत्वस्य प्रत्ययार्थत्वे 'प्रकृतिप्रत्ययौ'
इति न्यायेन प्रत्ययार्थस्यैव प्राधान्ये 'भोजनपूर्वकालिकत्वविशिष्टं व्रजनम्' इत्यन्वयबोधापत्तिस्तु न,
'क्रियाभेदाय कालः स्यात्' इत्यभियुक्तोक्त्या पूर्वकालिकत्वस्य विशेषणतयैव भानात् भोजनस्य निष्ठत्वसम्ब-
न्धेन पूर्वकालिकत्वेऽन्वये दोषाभावाच्चेति पञ्चोलिनः । भोजनजनिकेति—जनकत्वस्य संसर्गविधया भाने
जनकत्वसम्बन्धेन भोजनविशिष्टा पाकक्रियेति बोधः । एवं जन्यत्वसम्बन्धेन भोजनविशिष्टा कृतिः ।
अत एव—जन्यत्वस्य भानस्वीकारादेव ।

भोजनजनिकेति—'तुमुन्ण्वुलौ' ( ३।३।१० ) अत्र 'भविष्यति' इत्यनुवर्तते, धातोरिति च ।
तथाच क्रिया अर्थः फलं यस्याः क्रियाया इत्यर्थे बहुव्रीहिणा स्त्रीलिङ्गनिर्देशात् 'क्रियायाम्' इत्यस्य लाभे
क्रियाग्रहणसामर्थ्यात् साध्यमात्रस्वभावा इतराविशेषणत्वेनोपस्थितिविषयीभूता क्रिया गृह्यते । तथाच
तादृशक्रियावाचके उपपदे फलीभूतभविष्यत्क्रियावाचकाद् धातोस्तुमुन्' इत्यर्थान् 'भोक्तुं पाकः'
इत्यादेर्न साधुत्वम्, आद्ये घञर्थक्रियायां साध्यक्रियाया विशेषणत्वात्, अन्त्ये ण्वुलर्थकर्तरि विशेष-
णत्वात् । एवञ्च तिङन्तस्यैव तादृशोपपदत्वमिति नान्यत्र तुमुनः साधुत्वम् । 'भोक्तुं पचति पश्य'
इत्यत्र तु नासाधुत्वम्, पाकस्य दर्शने कर्मतयाऽन्वयेऽप्युपस्थितौ साध्यक्रियाया मुख्यविशेष्यत्वरूप-
प्राधान्याक्षतेः । स्पष्टञ्चेदम् 'उपपदमतिङ्' ( २।२।१९ ) इति सूत्रभाष्ये । 'भोक्तुं पचति' इत्यत्र
पचिभोजनक्रिययोर्जन्यजनकभावः सम्बन्धः, समानकर्तृकत्वञ्च तुमुन्द्योत्ये भासेते, 'तुमुन्ण्वुलौ क्रियायां
क्रियार्थायाम्' इत्युक्तेः, शब्दशक्तिस्वभावाच्च । तेन विभिन्नकर्तृकक्रियाद्वयतात्पर्येण 'देवदत्ताय भोक्तुं

प्रभा

पचति मैत्रः' इति न प्रयोगः । नच समानकर्तृकत्वस्य तुमुन्नादिद्योतकत्वं मास्तु 'अव्ययकृतो भावे' इति च मास्तु 'कर्तरि कृत्' इत्यनेन कर्तर्येव तुमुन्नादयः सन्तु, उपपदभूतक्रियाकर्तुस्तुमुन्नर्थकर्तुश्चाभेदान्वयान्न दोष इति वाच्यम्, पच्यते भोक्तुं भोक्तुं स्थीयते इत्यादावाख्यातार्थकर्तुरभावे तदसम्भवात् । नच कर्तुरध्याहारेण निर्वाहः, अध्याहारमभेदान्वयञ्च विनाऽपि बोधदर्शनात् भाष्यादिविरुद्धत्वाच्च । केचित्तु क्रियायां क्रियार्थत्वं भविष्यत्क्रियेच्छाधीनेच्छाविषयत्वरूपम्, नतु जन्यजनकभावरूपम् । तथाच 'भोजनेच्छाधीनेच्छाविषयो यानम्' इति 'भोक्तुं याति' इत्यनेन बोधः, तेन यानान्तरं भोजनाभावेऽपि न तादृशप्रयोगबाध इत्याहुः । 'समानकर्तृकेषु तुमुन्' ( ३ । ३ । १५८ ) अत्र 'इच्छार्थेषु लिङ्लोटौ' इत्यत इच्छार्थेषु इत्यनुवर्तते, तथाच 'तुमुन्प्रकृतिभूतधात्वर्थकर्तृकर्तृकेच्छार्थकेषु उपपदेषु इच्छाकर्तृकर्तृकक्रियार्थकाद् धातोस्तुमुन भावे' इति तदर्थः । 'इच्छति भोक्तुम्' अत्र तुमुन्नर्थस्येषधात्वर्थेच्छायामिति विषयितासम्बन्धेन विशेषणतया 'भोजनविषयिणी भोजनकर्तृकर्तृकेच्छा' इति, स्वनिरूपितविषयित्वस्वकर्तृकर्तृकत्वोभयसम्बन्धेन 'भोजनविशिष्टेच्छा' इति वा बोधः । नत्वत्र क्रियार्थत्वस्य प्रतीतिरित्यप्राप्तस्तुमुन् विधीयते । एवमेव 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति सूत्रविहितसन्नन्तेन 'पिपक्षति' इत्यादिनापि बोधः । 'शकधृष' ( ३ । ४ । ६५ ) अयमप्यक्रियार्थोपपदार्थः । शक्यर्थश्च अनुकूलसामर्थ्यविषयकनिश्चयः । निरूपितत्वसम्बन्धेन तद्घटकानुकूलत्वे भुजादिधात्वर्थस्यान्वयः, तथाच 'शक्नोति भोक्तुम्' इत्यादिना 'भोजननिरूपितानुकूलत्ववत्सामर्थ्यविषयकनिश्चय इति बोधः । यद्वा अनुकूलत्वसम्बन्धेन भोजनस्य सामर्थ्येऽन्वय इति अनुकूलत्वं न शक्यम्, संसर्गमर्यादयैव तल्लाभसम्भवात् । धृषेरपि सामर्थ्यविषयकनिश्चय एवार्थो बोधोऽपि पूर्ववत् । ग्लाधात्वर्थः—सामर्थ्याभावनिश्चयः, हर्षक्षयो वा । भोक्तुं ग्लायति, भोजनसम्बन्धिहर्षः क्षीयत इत्यर्थः । 'कालसमयवेलासु' इत्यत्र धात्वर्थस्य कालिकसम्बन्धावच्छिन्नप्रकारतानिरूपितकारणत्वात्मकयोग्यत्व-स्वानुकूलप्रवर्तनाप्रयोजकनिश्चयविषयत्वैतदुभयसम्बन्धेन कालेऽन्वये तुमुन् इत्यर्थः । एवञ्च 'भोक्तुं कालः' इत्यनेन कालिकसम्बन्धेन भोजनकारणीभूतः, भोजनानुकूलप्रवर्तनाप्रयोजकनिश्चयविषयः काल इति बोधः । 'परावर' ( ३ । ४ । २० ) इत्यत्र अवरशब्दोऽत्र पूर्ववृत्तिवाची । परशब्दश्चोत्तरवाची । योग= सम्बन्धः । तथाच परक्रियार्थस्य पूर्वसाकाङ्क्षतयाऽवरार्थस्य चोत्तरसाकाङ्क्षतया तयोर्द्वयोरप्यर्थयोर्निमित्तत्वं लभ्यते । दाक्षिणात्यानां काशीमुद्दिश्य गमनसमये यादृशी व्यवस्था तदनुसारेणोदाहरणम्— 'अप्राप्य नदीं पर्वतः' इति । नदीपदेनात्र गङ्गा विवक्षिता । पर्वतोऽत्र विन्ध्यः । दाक्षिणात्यानामागमने पूर्वं विन्ध्यलाभस्ततो गङ्गोपलब्धेः पूर्वेण परयोगश्च—स्वकर्मकप्राप्तिप्रागभावाधिकरणक्षणवृत्तिप्राप्तिक्रियाकर्मत्वरूपः । स्वार्थो नदी । अत्र 'पर्वतः' इत्यस्य वाक्यैकदेशन्यायेन पर्वतकर्मकप्राप्तिक्रियार्थः । नञः प्रागभावोऽर्थः, एवञ्च 'दक्षिणदेशस्थपुरुषकर्तृका गङ्गाकर्मकप्राप्तिप्रागभावसमानकालिका पर्वतकर्मकप्राप्तिक्रियेति बोधः । 'अतिक्रम्य पर्वतं स्थिता नदी' अत्र अतिक्रमणञ्च प्राप्तिक्रियाध्वंसः । पूर्वपर्वतयोगोऽत्र गङ्गायाः । 'दक्षिणदेशस्थपुरुषकर्तृकपर्वतकर्मकप्राप्तिक्रियाध्वंससमानाधिकरणस्थितिकर्त्री नदी' इति बोधः । अत्र पूर्वपर्वतस्य परतया सम्बन्धश्च स्वकर्मकपुरुषकर्तृकप्राप्तिक्रियाध्वंससमानकालिकस्थितिकर्तृनदी' इति बोधः । अत्र पूर्वपर्वतस्य परतया सम्बन्धश्च स्वकर्मकपुरुषकर्तृकप्राप्तिक्रियाध्वंससमानकालिकस्थितिकर्तृत्वरूपः । सम्बन्धश्च प्रायः क्रियाद्वारक एव । क्वचित्साक्षात्क्रिययोरपि । तथाहि 'द्विगोर्लुगनपत्ये ( ४।१।८८ ) इति सूत्रभाष्ये 'अवेर्मांसम्' इति विगृह्य अविकशब्दादुत्पत्तिर्भविष्यति आविकमिति भाष्ये । निपदश्च विभिन्नत्वेन [illegible]

व्याप्यत्वम्, सामानाधिकरण्यञ्च संसर्गः।

प्रभा

करणकालस्यैव संसर्गतया विवक्षितत्वात्। नच देवदत्तीयनिद्रादिकाले तत्स्थितेः सत्त्वादध्ययनस्य चासत्त्वात् स्थित्यध्ययनव्याप्यत्वं बाधितमिति वाच्यम्, निद्रादिशून्यकालिकस्थितित्वस्यैव व्याप्यताऽवच्छेदकधर्मत्वात्। अत्र स्थाधातुरपि तादृशस्थितिपर एवेति देवदत्तस्थितित्वसामान्यनिरूपितव्यापकताया अध्ययनेऽभावेऽपि न क्षतिः।

सामानाधिकरण्यमिति—नच व्याप्यत्वस्य सामानाधिकरण्यघटिततया इदं व्यर्थमिति वाच्यम्, सामानाधिकरण्याघटितमेवात्र व्याप्यत्वं ग्राह्यमित्यत्र तात्पर्यग्राहकत्वात्, तदघटितस्यैव व्याप्यत्वस्य विवक्षितत्वाद्वा। यद्वा विभिन्नकर्तृकक्रिययोरपि कालिकसम्बन्धसम्भवात्तत्र 'अधीत्य तिष्ठति' इत्यादिवारणाय सामानाधिकरण्यस्यावश्यकत्वात्। एवञ्च क्त्वाद्यन्तस्थले समानकर्तृकत्वस्य, सामाधिकरण्यस्य च संसर्गत्वमावश्यकम्। तदतिरिक्तजन्यत्वादीनान्तु क्वाचित्कत्वमेव संसर्गत्वं भासते इति बोध्यम्। नच

'अवजानासि मां यस्मादतस्ते न भविष्यति। मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा'।

इत्यत्र मत्प्रसूतिमनाराध्य ते प्रजा न भविष्यति, इत्यर्थे प्रजाकर्तृकभवनक्रियानिरूपितपूर्वकालिकदिलीपकर्तृकाराधनार्थकात् क्त्वादर्शनात् समानकर्तृकत्वसम्बन्धोऽपि क्वाचित्क एवेति वा 'स्थितस्य' इत्यध्याहारेण तत्समानकर्तृकत्वसत्त्वात्। भाष्यकृता तु 'स्वप्नस्यापरकालत्वात्' व्यादानोत्तरकालभाविस्वपनापेक्षया व्यादानस्य पूर्वकालतेति पूर्वोत्तरभावस्यैव संसर्गत्वं स्वीकृतम्, नतु व्याप्यत्वस्य। एतेन स्वापानन्तरमेव मुखव्यादानमिति व्यादानस्य पूर्वकालत्वं चिन्त्यमिति परास्तम्, तदुत्तरभाविस्वापापेक्षया पूर्वकालत्वस्य सत्त्वात्। नचैवमंशिपोत्तरकालभाविक्रियामादाय पूर्वकालिकत्वोपपादने भुञ्जाने देवदत्ते उत्तरकालभाविक्रियांशमादाय पूर्वकालिकभुजिक्रियांशस्य पूर्वकालिकत्वात् 'भुक्त्वा भुङ्क्ते' इति प्रयोगापत्तिरिति वाच्यम्, तत्र ओष्ठपुटविभागजनकस्वापविशेषरूपव्यापारानन्तरं मुखावयवविशेषजनकव्यापारान्तरस्यापि सत्त्वेन क्रमजन्मावयवसमूहरूपतत्क्रियापूर्वत्वस्यैव व्यादाने सुलभत्वात्। भुजिक्रियांशे तत्क्रियांशो निरूपितपूर्वत्वस्य सत्त्वेऽपि क्रियान्तरनिरूपितपूर्वत्वाभावेनोक्तापत्तेरभावात्। भुजिक्रियायान्तु तृप्तिरूपफलजनकव्यापारस्यैव सत्त्वेन व्यापारान्तरनिरूपितपूर्वत्वाभावान्नोक्तापत्तिः, प्रयोगानुसारित्वात्कल्पनायास्तत्र तादृशकल्पनायां मानाभावात्। 'मध्याह्ने भुक्त्वा रात्रौ भुङ्क्ते' इति विरलप्रयोग एव, विवक्षितकालानिरिक्तव्यवधानशून्यत्वस्यैवाव्यवहितत्वात्।

नैयायिकास्तु—प्रागभावावच्छिन्नकालवृत्तित्वरूपं पूर्वकालिकत्वं कर्ता च क्त्वार्थः। प्रागभावे चोत्तरकालिकक्रियायाः प्रतियोगितयाऽन्वयः, क्त्वार्थकर्तरि उत्तरक्रियाकर्तुरभेदेनान्वयः, कर्तृत्वस्याभवतया। तथाच 'भुक्त्वा व्रजति' इत्यादिना 'व्रजनप्रागभावावच्छिन्नकालवृत्तिभोजनानुकूलकृतिमान् व्रजनकर्त्राभिन्न

नतु विषये इति भाव इति कैयटः ।

## प्रभा

क्त्वाप्रत्ययो द्योतकः । धात्वर्थक्रियाणां सम्बन्धे' इत्येतदर्थके 'धातुसम्बन्धे' इत्यधिकारस्थत्वात् 'समानकर्तृकयोः' इत्यादीनाम् , अत्र चेदमेव भाष्यं मानम् । भोजनकर्त्रोः, व्रजनकर्त्रोश्च पौर्वापर्यस्य पूर्वादिशब्दा वाचका इति क्त्वाप्रत्ययस्य, पूर्वादिशब्दस्य च प्रयोगसार्थक्यमिति भाष्याशयः ।

विषय इति—प्रकृतवाक्यघटकयत्किञ्चित्पदवाच्ये पौर्वापर्ये इत्यर्थः, 'उक्तार्थानामप्रयोगः' इति न्यायात् । 'समानकर्तृकयोः' इति निर्धारणे षष्ठी, सौत्रत्वाद्द्विवचनम् । पूर्वः कालो यस्येत्यर्थे बहुव्रीहिणा पूर्वकालिकव्यापारवाचकः, तथाच 'पूर्वकालिकभावे विद्यमानाद्धातोः क्त्वा' इत्यर्थः । वस्तुतस्तु पूर्वकाल इति कर्मधारयः । नचैवं पूर्वकाल इत्यनेन भूतकाल इत्युपलभ्यते, तथाच लाघवात् 'भूते' इत्येव वक्तुमुचितमिति वाच्यम् , पर्यायवाचकेषु लाघवानादरात् , पूर्वकालत्वेन प्रतीतये तथोक्तेराशयस्यत्वाच्च । तथाच पूर्वकाले द्योत्ये क्त्वेत्यर्थः । अत एव 'इह कस्मान्न भवति 'पूर्वं भुङ्क्ते पश्चाद् व्रजति' इति स्वशब्देन पूर्वकालस्योक्तत्वान्नेति' भाष्योक्तिः सङ्गच्छते, अन्यथा पूर्वकालिकक्रियायाः क्त्वार्थत्वे पूर्वकालस्य विशेषतया विशेष्यार्थविषयकस्य 'उक्तार्थानामप्रयोग ' इति भाष्योक्तन्यायस्यासङ्गत्यापत्तेः, 'पूर्वं भुङ्क्ते' इत्यत्र पूर्वशब्देन कालस्यैवाभिधानात् । केचित्तु पूर्वकालः क्त्वावाच्य, धात्वर्थश्च तत्र प्रकारः, कृत्प्रत्ययस्थले प्रत्ययवाच्यस्यैव विशेष्यतया भानदर्शनात् । अत एव 'इह कस्मान्न भवति 'आस्यते भोक्तुम्' इत्यत्रासेः क्त्वाप्रत्ययशङ्कापरं भाष्यं सङ्गच्छते । अन्यथा तुमुना आसिक्रियायां पूर्वकालत्वस्य द्योतनात् भाष्यासङ्गतिः । तुमुन्प्रकृत्यर्थक्रियायाः फलत्वेनोत्तरकालभावितया आसौ पूर्वकालत्वस्य प्रतीतौ बाधकाभावात् । तथाच षष्ठ्याः सम्बन्धवाचकत्ववत् क्त्वादीनामपि सम्बन्धवाचकत्वमेवेति । अन्ये तु पूर्वकालस्य धातुवाच्यत्वं एव क्त्वादीनां द्योतकत्वं सम्भवति, तन्न दुर्वचम् , तत्र मानभूतस्य 'आस्यते भोक्तुम्' इति भाष्यस्यान्यथा-

## दर्पणव्याख्या

पश्चाद् व्रजति' इति, स्वशब्देनोपात्तत्वात्' इति भाष्यम् । तत्र समानकर्तृकत्वेन पूर्वकालत्वेन, च क्त्व आपादनम् । * ननु विषय इति * ननु प्रयोगघटकयत्किञ्चित्पदबोध्य इत्यर्थः, 'उक्तार्थानामप्रयोगः' इति न्यायादिति भावः । तथाच 'समानकर्तृकयो ' इति निर्धारणे षष्ठी, 'पूर्वकाल' इति च षष्ठ्यर्थे बहुव्रीहिरिति कैयटाशय । वाक्यार्थस्तु पूर्वमेवोक्तः । ननु पूर्वकालस्य पूर्वादिशब्देनाभिधाने क्त्वोऽसाधुत्वे 'पूर्वं भुक्त्वा पश्चाद् 'व्रजति' इत्यत्र क्त्वोऽनुपपत्तिस्तदवस्थैवेति चाच्यम्, भाष्यकृतैव तत्समाधानात् । तथा च भाष्यम्—'नैतत् क्रियापौर्वकाल्यम् , किं तर्हि कर्तृपौर्वकाल्यमेतत्—पूर्वमसौ भुक्त्वाऽन्येभ्यो व्रजितुम्य पश्चाद् व्रजतीति । अन्येभ्यो भोक्तृभ्य पूर्वं भुक्त्वाऽपरेभ्यो गन्तृभ्य पश्चाद् व्रजतीत्यर्थे साधनान्तरक्रियाऽपेक्षं 'पौर्वकाल्यमादाय—'विभाषा ग्रह' इति क्त्वः सम्भव इति तदाशयः । नव्यास्तु—'पूर्वकाल' इति कर्मधारय', भूत इति तु नोक्तम्, पर्यायशब्दत्वात्, तेन रूपेण बोधाननुभवाच्च । तथाच समानकर्तृकयोरर्थयोर्मध्ये पूर्वकालविशिष्टार्थवृत्तिधातोः क्त्वेति सूत्रार्थं । तथाच पूर्वकालः क्त्वार्थो धात्वर्थप्रकार एव । अत एव समानकर्तृकत्वेन 'पूर्वं भुङ्क्ते पश्चाद् व्रजति' इत्यत्र क्त्वाप्रत्ययमाशङ्क्य—'स्वशब्देनोपात्तत्वान्न' इति परिहृतं भाष्ये । पूर्वशब्दस्य पूर्वकालोऽर्थः , ननु धातोस्तत्र वृत्तिरिति तदर्थो नतूक्तार्थानामप्रयोग इति । अत एव इह कस्मान्न भवत्यास्यते भोक्तुम्' इत्यभिमशङ्काग्रन्थः सङ्गच्छते । अन्यथा फलार्थकतुमुना पूर्वकालस्यासिक्रियायां द्योतनात्तदसङ्गतिः स्पष्टैव । पूर्वकालस्य ततोऽप्रतीतौ तु कथं क्त्व आपादनम्, धाऽसम्बन्धेन स्य साधितमित्यन्यत् । एतेन षष्ठ्याः सम्बन्धवाचकत्ववत् क्त्वादीनामपि सम्बन्धवाचकत्वं मन्तव्यमित्याहुः ।

यत्तु—'समानकर्तृकयोः' इति सूत्रात्समानकर्तृकत्वं क्त्वावाच्यम्, अन्यथौदनं पक्त्वाऽहं भोक्ष्ये' इत्यत्र मयेति तृतीयाप्रसङ्गश्च। नचाख्यातेन कर्तुरभिधानान्न सेति वाच्यम्, भोजनक्रियाकर्तुरभिधानेपि पाकक्रियाकर्तुस्तदभावात्।

## प्रभा

तत्त्वेऽपि तेनासिक्रियायां पूर्वकालिकत्वस्याद्योतनात् द्योतकत्व-
पत्तेः। तथाहि—तुमुनः फलीभूतक्रियावाचकत्वेऽपि तेनासिक्रियायां पूर्वकालिकत्वस्याद्योतनात् द्योतक-
त्वेऽपि भाष्योक्तशङ्काया उत्थानसम्भवात्। तस्मात् क्रियानिरूपितपौर्वापर्यादिसम्बन्धविशेषद्योतक-
त्वेय क्त्वादीनां कर्मप्रवचनीयवदिति कैयटोक्तं सम्यगेवेति।

समानकर्तृकत्वमिति—अत्र समानकर्तृकपदं धर्मपरम्। नच समानकर्तृकत्वरूपधर्मस्यैकत्वेन द्विवच-
नासङ्गतिः, क्रियारूपधर्मिगतद्वित्वस्यारोपेण सामानाधिकरण्येन वा धर्मेऽपि द्वित्वप्रतीतिसम्भवात्।
समानेतिपदस्य धर्मिपरत्वेऽपि क्रियारूपधर्मिणो धातुतो लाभादनन्यलभ्यन्यायेन, लाघवेन च
च धर्ममात्रं क्त्वावाच्यम्। तत्र समानशब्द एकार्थकस्तथाच कर्तृकर्तृकत्वं समानकर्तृकत्वम्। पूर्वकालि-
कक्रियाया निरूपितत्वसम्बन्धेन प्रथमे कर्तृत्वेऽन्वयः। भोजनादिक्रियानिरूपितकर्तृत्वाश्रयाभिन्नकर्तृ-
वृत्तिव्रजनादिक्रियेति 'भुक्त्वा व्रजति' इत्यादिना बोधः। अन्यथा—समानकर्तृकत्वस्यावाच्यत्वे। ननु
'अनभिहिते' इत्यत्र प्रसज्यप्रतिषेधाश्रयणेन प्रकृते कर्तुस्तिङाभिधानात् तृतीया न स्यादित्यभिप्रेत्याह—
नचेति। भोजनेति—भोजनक्रियाकर्तृत्वस्येत्यर्थः। पाकेति—पाकक्रियाकर्तृत्वस्येत्यर्थः। यथाश्रुतन्तु न युक्तम्,
उभयोरेककर्तृकत्वेन भोजनक्रियाकर्तुरभिधानेऽपि पाकक्रियाकर्तृतया भोजनकर्तुरभिधाने पाककर्तुरप्य-
भिहितत्वेन 'अभिहिते तृतीया न' इति निषेधस्य दुर्वारत्वात्। कर्तृत्वधर्मस्य तु क्रियाभेदेन भेदादेकस्याभि-
धानेऽपि पाककर्तृत्वस्यानभिधानात्तत्र निषेधाप्रवृत्त्या तृतीयापत्तेर्वक्तुं शक्यत्वात्। वस्तुतस्तु प्रसज्यप्रति-
षेधे एकाधिकरणिकायां कस्याञ्चिच्छक्तावभिहितायाम् 'अभिहितायां शक्तौ तदाश्रयवाचकात् कारक-
विभक्तिर्न' इति निषेधस्य दुर्वारतया 'अनभिहिते' इति पर्युदास एव, 'शक्तिः कारकम्' इति पक्षश्च श्रेयान्।

## दर्पणव्याख्या

इत्यग्रिमशङ्कानुपपत्तेरुपष्टम्भकत्वेनोपन्यस्तन
अत्रेदं चिन्त्यम्—ननु धातोस्तत्र वृत्तिरित्यर्थे—'आस्यते भोक्तुम्' इत्यग्रिमशङ्कानुपपत्तेरुपष्टम्भकत्वेनोपन्यस्त-
शिथिलम्, यतः कैयटमतेऽपि प्रतीयमानस्यार्थे पूर्वकालसम्बन्धित्वस्य केनचिदनभिधानेनोक्तार्थानामप्रयोग इति न्यायानव-
तारादाशङ्कोत्थानसम्भवात्। प्रत्ययवाच्यस्य कृत्प्रत्ययस्थले धात्वर्थविशेष्यताया नव्यानामपि सम्मतत्वेन 'पूर्वकालः क्त्वार्थो
धात्वर्थप्रकार एव' इति पूर्वग्रन्थविरोधाच्च। नच द्योतकत्वाभ्युपगमादुक्तसङ्गतिः, षष्ठ्याः सम्बन्धवाचकत्ववदमीषामपि
सम्बन्धवाचकत्वम्' इत्युत्तरग्रन्थविरोधात्। नच तदपि सुवचम्, समानकर्तृकत्वादीनां वाच्यतायाः सूत्रादलाभात्।
तस्मात् कर्मप्रवचनीयवत् क्रियासम्बन्धविशेषकत्वमेव क्त्वादीनामिति कैयटोक्तमेव सम्यगिति।

मतान्तरं दूषयितुमुपन्यस्यति—* यत्त्विति *। * क्त्वावाच्यमिति * 'समानकर्तृकयोः पूर्वकाले' इत्युभयोः
पदयोर्बहुव्रीहित्वाविशेषेण पूर्वकालस्य वाच्यत्वमितरार्थस्य द्योत्यत्वमिति वैषम्ये बीजाभावादिति भावः। वैषम्ये बाधकमाह—
* अन्यथेति * तस्य वाच्यत्वाभावे इत्यर्थः। * तृतीयाप्रसङ्गश्चेति * क्त्वाप्रत्ययेन कर्तुरनभिधानादिति
भावः। ननु 'अनभिहिते' इति सूत्रे नञः प्रसज्यप्रतिषेधार्थकतया प्रकृते कर्तुराख्यातेनाभिधानान्न तृतीयाप्रसङ्ग इत्याशङ्कां
निराचष्टे—* नचेति * 'अनभिहिते' इति न प्रसज्यप्रतिषेधः, वाक्यभेदादिदोषात्। नचानुपपत्त्या तत्स्वीकारः,
तथाचैकेनाभिधानेप्यन्येनानभिधाना तृतीया दुर्वारेत्यभिप्रायेणाह—* पाकक्रियाकर्तुरित्यादि *
अग्रिमभाष्यविरोधात्।

अनभिहिते भवति इति पर्युदासाश्रयणात्। अत एव 'प्रासादे आस्ते' इत्यत्र प्रसादनक्रियाधिकरणस्याभिधानेऽप्यासितक्रियाधिकरणस्यानभिधानात्सप्तमीति भाष्ये स्पष्टम्। तस्मात् क्त्वाप्रत्ययस्य कर्तृवाचित्वमावश्यकमिति, तन्न, सूत्रात्तस्य वाच्यत्वालाभात्, 'समानकर्तृकयोः क्रिययोः पूर्वकाले क्त्वा' इत्येव तदर्थात्। अन्यथा 'समानकर्त्तरि' इत्येव सूत्रन्यासः स्यात्। तृतीयापादनन्तु—आख्यातार्थक्रियायाः प्रधानभूतायाः कर्तुरभिधानात्प्रधानानुरोधेन गुणे कार्यप्रवृत्तेर्न सम्भवति। उक्तञ्च वाक्यपदीये—

प्रभा

तथा च अभिहितशक्तिभिन्नशक्त्याश्रयवाचकात्कारकविभक्तेर्विधाने एकगतयोः शक्त्योरन्यतराभिधानेऽपि अभिहितशक्तिभिन्नत्वस्यापरस्यां शक्तौ सत्त्वेन ततः कारकविभक्तिर्निष्प्रत्यूहा सिद्ध्यति। तदुक्तं भाष्ये—'प्रसज्यप्रतिषेधपक्षे 'कुतो नु यन्येतत्सत्यभिधाने चानभिधाने चानभिहिताश्रया सप्तमी 'प्रासादे आस्ते' 'शयने आस्ते' इत्यादौ भविष्यति। न पुनरभिहिताश्रयः प्रतिषेध इति। पर्युदासाभिप्रायेण समाहितम्—'अनभिहिते विधानम्' अनभिहिते हि सप्तमी विधीयते। 'नाभिहिते प्रतिषेध. इति' इत्याह—अनभिहिते भवतीव—अभिहितभिन्ने कर्तृत्वादिधर्मे तदाश्रयवाचकात्कारकविभक्तयो भवन्तीति पर्युदासाश्रयणादित्यर्थः। अत एवानुलापवान् पर्युदासाश्रयणादेव। प्रसदने ते—प्रसदनक्रियाधिकरणस्येत्यर्थः। प्रसदनेति पाठः, प्रसदेरेवाधिकरणे घञि 'उपसर्गस्य घञि' इति दीर्घे प्रासादशब्दसिद्धेः। आसीति—आसितक्रियाधिकरणस्येत्यर्थः। आसीति पाठ, आसेः क्तिनपि 'अस्ति' इति रूपासम्भवात्। तस्मात्—तृतीयापत्तिप्रसङ्गात्। समानकर्तृकत्वस्य। वाच्यत्वालाभात्=प्रत्ययवाच्यत्वालाभात्। समानकर्तृकयोरिति—धात्वर्थयोः पदार्थे षष्ठीतत्पुरुषः—'क्रिययोरिति—निर्धारणे षष्ठी सौत्रत्वाद् द्विवचनम्। अत एव 'समानकर्तृकयोरिति समानकर्तृकयोः' द्विवचनमर्थं निर्देशः क्रियते। तेन क्रिययोरेव पौर्वकाल्ये स्यात्, धात्वोर्न स्यात्, किन्तु क्रियाप्रधानत्वात्' इति भाष्ये सङ्गच्छते। अन्यथा=समानकर्त्तरि क्त्वाविधाने। तृतीयेति—तृतीयापादनम्=तृतीयापत्तिः। अस्य 'न सम्भवति' इत्यनेनान्वयः। आख्यातार्थेऽ—'भोक्तुं' इति सूत्रप्रधानीभूतभोजनक्रियानिरूपितकर्तृत्वस्याऽभिहितत्वेन धात्वर्थपाकक्रियानिरूपितकर्तृत्वस्यानभिधानेऽपि 'स्वादुमि णमुल्' इति सूत्रभाष्यमूलवाक्यपदीयकारिकाभिहितम् 'प्रधानानुरोधेन गुणे कार्यप्रवृत्तिः' इति न्यायात् प्रधानक्रियानिरूपितकर्तृत्वादिगताभिहितत्वानभिहितत्वयोर्गुणक्रियानिरूपितकर्तृत्वादावारोपेण तत्प्रयुक्तकार्यस्य स्वीकारात् गुणक्रियानिरूपितकर्तृत्वादौ पारमार्थिकाभिहितानभिहितत्वयोरकिञ्चित्करत्वेन तृतीयायाः

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् शक्तिर्गुणाश्रया तत्र प्रधानमनुरुद्ध्यते ।
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते । यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते । इति ।

किञ्चान्यथा कर्मणोऽपि क्त्वार्थताऽऽपत्तिः, 'पक्त्वौदनो मया भुज्यते' इत्यत्र द्वितीयायाः प्रकारान्तरेणावारणादित्यास्तां विस्तरः ॥ ६० ॥

इति वैयाकरणभूषणसारे क्त्वाद्यर्थनिर्णयः ॥ १२ ॥

प्रभा

क्रिययोरिति—निरूपितत्वं
तेरभावात् । प्रधानेतरयोरिति—यत्र=वाक्ये प्रधानेतरयोः=प्रधानाप्रधानयोः । तथाच यद्वाक्यघटकपदयोध्यप्रधानाप्रधानक्रियानिरूपिता एक-
सप्तम्यर्थः । द्रव्यस्येति—निष्ठत्वं षष्ठ्यर्थः । प्रधानम्=प्रधानक्रियानिरूपितकर्तृत्वधर्ममनु-
द्रव्यनिष्ठा पृथक्शक्तिस्तत्र गुणाश्रया—गुणक्रियानिरूपिता शक्तिः प्रधानक्रियावाचिनो धातोरुत्पन्नेन प्रत्ययेन यदा प्रधान-
रुद्ध्यते। अनुरोधमेव विशदयति—प्रधानविषयेति—प्रधानक्रियावाचिनो धातोरुत्पन्नेन प्रत्ययेन यदा प्रधान-
क्रिया विषया ( निरूपिता ) शक्तिरभिधीयते तदा गुणक्रिया विषया शक्तिः साक्षादनुक्ताऽपि तद्वत्—
क्तावत्प्रकाशात इत्यर्थः । इदमुपलक्षणम्—प्रधानशक्तिरनुक्ता चेत्तदा गुणाश्रया शक्तिरुक्ताऽपि अनुक्ता-
त्प्रतीयते । यथा 'प्रासादे शेते' इत्यत्र । गुणे इत्यत्र निरूपितत्वं सप्तम्यर्थः । तस्य शक्तावन्वये गुणनिरूपिता
शक्तिरित्यर्थः । तेनाप्रधानक्रियानिरूपितशक्त्यभिधायकोऽनभिहिताधिकारस्थः प्रत्ययो नेति सिद्धम् । एवञ्च
पक्त्वा ओदनो भुज्यते' इत्यादौ कदाऽपि द्वितीया न भवति । तदेवाह—किञ्चेति । अन्यथा='प्रधानेतरयोः'
इति न्यायानङ्गीकारे । यदा तु गुणक्रियानिरूपितकर्मत्वादेरेव विवक्षा, न तु प्रधानक्रियानिरूपितकर्म-
त्वादेस्तदा 'पक्त्वा ओदनं भुज्यते' इत्यपि साधु । तथाच 'प्रधानेतरयोः' इति न्याय उभयनिरूपित-
शक्तेर्युगपद्विवक्षायामेव नियामक इति बोध्यम् । अत्रेदमपि बोध्यम्—यत्र प्रधानीभूता क्रियैका 'अप्रधानी-
भूताश्च बहवस्तत्र सर्वाः पूर्वकालिकाः क्रियाः पूर्वोक्तसम्बन्धेन प्रधानीभूतक्रियायामेव विशेषणतयाऽन्वयं
लभन्ते, न तु परस्परम्, 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्' इति न्यायात् । तेन क्त्वान्तापेक्षया
न क्त्वान्तस्य विशेषणत्वमिति 'भुक्त्वा, स्नात्वा पीत्वा गतः' इति 'स्नात्वा पीत्वा भुक्त्वा गतः' इति च
यथेच्छक्रमेण प्रयोगो जायते । यत्र च समानकर्तृकक्रियावाचकात् भावेऽपि क्त्वान्तप्रयोगस्तत्रान्वययोग्या-
प्रधानक्रिया अध्याहार्य्या, यथा—

दर्पणव्याख्या

चोक्तभाष्यप्रामाण्येनाभ्युपगमाच्च
क्तैरनभिहिताया अप्यभिहितत्वातिदेशस्य, अनभिधाने त्वनभिहितत्वातिदेशस्य गुणप्रधानक्रियानिरूपितशक्तिद्वय यत्रैकस्मिन् द्रव्ये तत्र
तृतीयापत्तिः प्रकृते इति भावः । * प्रधानेतरयोरिति * गुणप्रधानक्रियानिरूपितशक्तिधर्ममनुरुणद्धीत्यर्थः । उक्तातिदेशेऽपि तत्सम्मतिमाह—* प्रधानविष
गुणक्रियानिरूपितशक्तिः प्रधानक्रियानिरूपितशक्तिधर्ममनुरुणद्धीत्यर्थः । तदा गुणक्रियावाचकधातूत्तरप्रत्ययेना
येति * प्रधानम्–विषयः=निरूपक यस्याः सा शक्तिर्यदा प्रत्ययेन तिङाऽभिधीयते । तत्र 'प्रासादे आस्ते'
नभिहिताप्यभिहितवत् प्रतीयते इत्यर्थ । इदमुपलक्षणम्—अभिहिताया अपि अनभिहितत्वप्रतीतेः । तत्र 'प्रासादे आस्ते'
इत्युदाहार्य्यम् । अवश्य चेत्थमभ्युपेतव्यम्—अन्यथा कर्तुः क्त्वार्थत्वाभ्युपगमेनोक्तस्थले तृतीयापत्तिवारणेऽपि 'पक्त्वौदनो
मया भुज्यते' इत्यत्रौदनपदोत्तर द्वितीयाऽऽपत्तिर्दुर्वारा । तत्र पाकक्रियानिरूपितकर्मत्वशक्ते कृतानभिधानादुक्तरीतेरसम्भवा
दित्याह—* किञ्चेति * अत्रेदं बोध्यम्–यदौदने पाकक्रियानिरूपितकर्मत्वस्यैव शाब्दविषयत्वमभिप्रेतम्, न तु प्रधान-
क्रियानिरूपितकर्मत्वस्यापि, तदा 'ओदन पक्त्वा भुज्यते' इत्यपि साधु. ओदनस्य भोजनकर्मताया आर्थिकत्वात् । यदा

प्रभा

अवजानासि मां यस्मादतस्ते न भविष्यति, मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा।

इत्यत्र आराधनकर्तृकर्तृका अन्या क्रिया नास्तीति 'स्थितस्य ते' इत्यध्याहृत्य व्याख्येयम्। एवम् 'स्नात्वा कनखले तीर्थे पुनर्जन्म न विद्यते' प्रातःकाले शिवं दृष्ट्वा निशि पापं व्यपोहति' इत्यादावप्यूह्यम्, विद्यते इति कर्मणि प्रत्यये लभ्यते इत्यर्थकत्वेन वा समानकर्तृकत्वमुपपाद्यम्। ननु प्रागभावो घटादिकपालतत्संयोगादिवत्सामग्रीवशादुत्पन्नस्य घटस्य पुनरुत्पादाभावाय घटं प्रति कारणत्वेन स्वीक्रियते। यदि तु तत्कार्योत्पत्तिम्प्रति समवायादिना तत्कार्यस्य प्रतिबन्धकत्वकल्पनेन उत्पन्नस्य पुनरुत्पादं निराकृत्य प्रागभावो न स्वीक्रियते तदा ध्वंस एव क्त्वाप्रत्ययार्थो वाच्यः। तथाच क्त्वाप्रकृत्यर्थयत्किञ्चित्क्रियायाः प्रतियोगितया ध्वंसम्प्रति विशेषणत्वम्, क्रियासामान्यस्य वा। नाद्य', काशीं गत्वा काशीं रमते' इति प्रयोगापत्तेः, आद्यक्रियाध्वंसवैशिष्ट्यस्य रमिक्रियायां सत्त्वात्। नान्त्यः, स्थित्वा पश्यति पुस्तकम्' 'स्थित्वा जक्षिति जमेनम्' इत्यादिप्रयोगानुपपत्तेः, स्थितिक्रियाया दर्शनोत्तरं भोजनोत्तरञ्च सत्त्वेन स्थितिक्रियासामान्यप्रतियोगिकध्वंसवैशिष्ट्यस्य दर्शनादनयोरभावादिति चेदुच्यते—क्त्वाप्रत्ययस्य पूर्वकाले एव शक्तिः। शक्यतावच्छेदकञ्च लाघवात्कालत्वमेव। तत्र कालिकसम्बन्धावच्छिन्नाधारतासम्बन्धेन प्रकृत्यर्थक्रियाया अन्वयः। कालस्य तु स्वध्वंसाधिकरणक्षणोत्पत्तिकत्वसम्बन्धेनोत्तरक्रियाम्प्रति विशेषणता। कालश्च पूर्ववत्तात्पर्यविषयघट्यादिरूपो ग्राह्यः। 'ईश्वरो ज्ञात्वा सृजति' इति तु तज्ज्ञानस्य नित्यत्वेन ध्वंसासम्भवेऽपि खण्डकालगतध्वंसारोपेण कथञ्चिन्निर्वाह्यम्। प्रकारान्तरेणेति—क्त्वाप्रत्ययस्य कर्तरि शक्त्यङ्गीकारेण तृतीयावारणेऽपि पक्त्वा भुज्यते ओदनः' इत्यत्र पाकक्रियाकर्मत्वस्यानभिधानात् द्वितीयापत्तिर्दुष्परिहरैव। तत्परिहाराय कर्मण्यपि शक्तिस्वीकारे गौरवं मानाभावश्च। 'प्रधानेतरयोः' इति न्यायानुसरणे तु न कश्चिद् दोषः। अपिच क्त्वादीनां वाचकत्वं न युक्तम्, अन्यत्वानन्तर्यव्याप्यत्वादनेकार्थकल्पेन नानार्थकत्वापत्तेः। किञ्च जन्यत्वादीनां प्रत्ययार्थतया विशेष्यत्वापत्त्या 'भुक्त्वा भुक्त्वा व्रजति' इत्यत्र 'आभीक्ष्ण्ये द्वे वाच्ये' इति द्वित्वानापत्तिः, क्रियाप्रधानार्थकत्वाभावात्। विशेषणीभूतक्रियावाचकस्यापि द्वित्वाङ्गीकारे तु 'पाचकः' इत्यादावपि तदापत्तिः, साक्षाद् धात्वर्थानां सम्बन्धे प्रत्ययविधेयताप्रयोजकस्य 'धातुसम्बन्धे' इत्यधिकारस्य 'लुनीहि लुनीहि' इत्येवायं लुनाति' इत्यादौ दृष्टस्य प्रत्ययार्थद्वारकपरम्परासम्बन्धमादाय प्रवृत्त्या तद्बाधापत्तिश्चेति द्योतकत्वमेव न्याय्यम्॥ ६०॥

ईश्वरानुगृहीतैव क्त्वादीनामर्थनिर्णये।
प्रभा स्वप्रभया पूर्णा बालकृष्णविनिर्मिता॥
॥ शुभम्भूयात्॥

दर्पणव्याख्या

तूभयकर्मत्वस्यैव शाब्दविषयत्वमभिप्रेतं तदौदनपदाद् द्वितीया अवाप्स्येत, उक्तन्यायविषये। परन्तु प्रधानक्रियायाः प्राधान्यात्तां प्रत्येव कृदन्तोपस्थिताः सर्वाः क्रिया गुणीभवन्ति, न तु तासां परस्परं विशेष्यविशेषणभावः, 'गुणानाञ्च परार्थत्वात्' इति न्यायात्। एवञ्च 'स्नात्वा पीत्वा भुक्त्वा व्रजति' इत्यविरोधेन प्रयोगाः। तुमुनन्तादप्ययं तुमुन्प्रत्ययमपि द्योतकम् 'क्रियार्थायां क्रियायाम्' इत्युक्ते। तन्निष्पन्नं च पूर्ववदेव। तुमुन्प्रत्ययार्थोऽस्तादर्थ्यं समानकर्तृकत्वादिकमपि तात्पर्यः। तथाच,—'हरिं द्रष्टुं याति' इत्यत्र हरिकर्मकभविष्यद्दर्शनोद्देश्यक दर्शनकर्तृकर्तृकं यानमिति शाब्दबोधः। अनयैव दिशा 'प्रधानादारको भवति' इति बोध ऊहनीयः॥ ६०॥

॥ इति वैयाकरणभूषणसारदर्पणे क्त्वाद्यर्थनिरूपणम्॥

## प्रभा

न्यायमूलभूता वैशेषिका इत्थं शब्दस्यानित्यत्वं समर्थयन्ति । तथाहि—कर्माप्याशु विनश्यति शब्दोऽप्याशु विनश्यति, सोऽयं गुणस्य सतोऽपवर्गः—आशुविनाशः, स खलु कर्मभिः साधर्म्यम्। अनित्यस्य कर्मण साधर्म्याच्छब्दोऽप्यनित्य इति भावः । तथाच सूत्रम्—'गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम्' ( वै० अ० २ आ० २ सू० २५ ) इति। सतः=नित्यस्य शब्दस्य लिङ्गाभावात्=शब्दनित्यत्वसाधकप्रमाणाभावादनित्यत्वम्। यदा खसौ नोपलभ्यते, तदैतस्य सत्त्वे न किञ्चित्प्रमाणमस्ति । नित्यत्वे प्रमाणाभावादनुपलब्धिकाले नास्तीति प्रतीयते । नच नित्यस्यापि शब्दस्यावरणेनावृतत्वान्नोपलब्धिः, यथाऽऽवृतरूपादिघटिति वाच्यम्, रूपावरणवदावरणानुपलब्धेरिव शब्दावरणानुपलब्धेः । तदुक्तम्—'सतो लिङ्गाभावात्' इति ( अ० २ आ० २ सू० २६) । 'चैत्रो वक्ति' 'मैत्रो वक्ति' इति कुड्यादिनाऽऽवृतोऽपि चैत्रादिर्वचनेनानुमीयते, तत्तद्वचनस्य भिन्नरूपत्वात्। शब्दस्य नित्यत्वे तु तस्यैक्याद् भिन्नभिन्नवक्त्रनुमित्यनुपपत्तिः । तदुक्तम्—'नित्यवैधर्म्यात्' ( वै० अ० २ आ० २ सू० २७ ) इति। यत्तु नित्यः शब्दः, अनित्यत्वे द्वयोर्गुरुशिष्ययोरध्यापनेऽध्ययने च या प्रवृत्तिस्तस्या अभावप्रसङ्गात् । आचार्यस्थः शब्दो यदन्तेवासिनमापद्यते तदध्यापनम्, यदि नित्यः शब्दस्तदा विद्यमानस्य शिष्यस्य देशान्तरप्राप्तिरुत्पद्यते, अनित्यत्वे नास्य

## दर्पणव्याख्या

मानिद्रलोपादौ दोषतादवस्थ्यात् । छत्रन्यायेन तु भगवत्तात्पर्यमादायैव गतिरित्याहुः । वस्तुतस्तु तत्तदर्थतात्पर्यज्ञाने पदतात्पर्यज्ञानविलम्बेन शाब्दबोधविलम्बात् 'वृत्त्या पदजन्यपदार्थानामव्यवधानेनोपस्थितिरेवासत्ति' इत्युक्तरूपासत्तिरन्वयबोधे हेतुः । नहि पदार्थानामनुपस्थितान्वयधीः केनाप्यनुभूयते इति । अर्थतात्पर्यं त्विदं पदमेतदभिन्नार्थेऽपदार्थान्वयं बोधयत्वित्यभिसन्धानविशिष्टा । वेदादिवाक्ये तु भगवत एव सा । विप्रलापिनि तु शिक्षयितुरेव । अस्य सत्त्वे व्यतिरेकनिश्चये चान्वयबोधात्, तद्भ्रमेणान्वयबोधदर्शनाच्च तज्ज्ञानमेवान्वयबोधे हेतुः । अधिकमग्रे वक्ष्यते ।

'शाब्दबोधे योग्यताया ज्ञानं कारणम्' इति पक्षे । सा चैकपदार्थेऽपरपदार्थस्य बाधकप्रमाणाभावः, प्रकृतशाब्दबोधविषयसंसर्गवत्त्वमिति यावत् । अस्ति च 'पयसा सिञ्चति' इत्यत्र सेके पयःकरणत्वस्य संसर्गः । अत एव वक्त्रभिप्रायप्रयुक्तपयसा सिञ्चतीति वाक्यं न योग्यम्, पयःपदार्थकरणतायां सेककरणत्वाभावात् । वह्निनेति विशेषः । 'आकाशं शब्दः' इति वाक्यं समवायसंसर्गमादाय नाभेदान्वये योग्यम् । अयोग्येऽप्येतद्भ्रमेणान्वयदर्शनादेतस्याज्ञानस्यापि हेतुता । ननु संसर्गस्य वाक्यार्थत्वेन तद्बोधात् प्रागनुपस्थित्या कथं तद्बोधस्य तत्र कारणमिति चेत्, नहि योग्यताज्ञानस्य शाब्दबोधे निश्चयत्वेन हेतुतां ब्रूमः, येनोक्तदोषोऽवकाशमासादयेत् । किन्तु संशयनिश्चयसाधारणज्ञानत्वेन, तच्च न दुर्लभम्, पयसा सिञ्चतीत्यादौ सेके पयःकरणको न वेति संशयात्मकस्य सत्त्वे घटोऽस्तीत्यादौ च

### प्रभा

प्रयोगः । ते च वर्णाः परमाणुवन्निरवयवाः । एते च एकत्वविशिष्टा एव । यथा एक एव अकारः, इकारः, उकारश्चेत्येवं रूपेण । अवर्णादेरेकत्वे तत्र अत्वकत्वादिजातयोऽपि न सन्त्येव । अत एव 'सोऽयं गकारः' इति व्यक्त्येकत्वप्रत्यभिज्ञाऽपि सङ्गच्छते । नन्वकारादीनामैक्ये ह्रस्वदीर्घप्लुतोदात्तादिभेदो न स्यादिति चेन्न, व्यञ्जकध्वनिधर्माणां ह्रस्वत्वादीनामेव वर्णेष्ववभासात् । एवमेव कत्वादीनामवभासोऽपि बोध्यः । एवञ्च परमार्थतो न वर्णधर्मा ह्रस्वत्वकत्वादयः, किन्तु ध्वनिधर्मास्त्वेते वर्णे केवलमाभासन्ते । ननु वायवीयानां ध्वनीनां श्रोत्रेन्द्रियाग्राह्यत्वात्कथं वर्णेषु कत्वादिधर्मावभासः ? उच्यते— द्विविधः शब्दः— वर्णो ध्वनिश्च । शब्दत्वमुभयानुगतम् । वर्णविशेषाः ककारादयः, ध्वनिविशेषाः शङ्खघोषादयः । ध्वन्यात्मकश्च शब्दो वायुः । स च वायौ कर्णविवरं प्राप्ते संयुक्तसमवायेन श्रोत्रेन्द्रियं संस्कृत्य तेन ( श्रोत्रेण ) गृह्यमाणः कदाचित्कत्वादिधर्मरहितः शङ्खघोषादिषु केवलो गृह्यते । कदाचिच्च वर्णानभिव्यञ्जयन् वर्णोपश्लिष्ट एव प्रतीयते । अथवा नास्त्येव ध्वनीनां ग्रहणम् , वायवीयत्वात् । परन्तु द्रुतादिसंस्कृतं श्रोत्रेन्द्रियमेकस्मिन्नपि गकारादौ संस्कारानुसारेण भेदप्रत्ययं जनयति । यथैव हि गत्वादिजातिवादिवैशेषिकनयेऽविद्यमानमेव शब्देऽल्पत्वं महत्त्वञ्च ध्वनिसंस्कारानुसारिण्या बुद्ध्या प्रतीयते तथा द्रुतादिकमपि श्रोत्रं प्राप्य क्षिप्रमन्यतः प्रयातेषु ध्वनिषु तत्संयोगरूपसंस्कारस्य श्रोत्रेऽल्पकालमवस्थानाच्छब्दोऽपि तत्क्षण एवाविर्भूय तिरोभवन् द्रुत इति गृह्यते । तथा मध्यमो विलम्बित इति । युक्तो व्यञ्जकधर्माणां द्रुतादीनां व्यङ्ग्ये शब्दे भ्रान्त्या समारोप इति । न च कथमन्यगतेषु नादेषु तद्धर्मप्राप्तिर्व्यङ्ग्येषु शब्देषु इति वाच्यम् , यथा पित्तदोषदूषितं रसनेन्द्रियं मधुरगतं मधुरत्वमगृह्णदेव मधुरं तिक्तत्वेन गृह्णाति, यथा वा चक्षुरिन्द्रियं पित्तगतं पीतत्वमगृह्णदेव शङ्खगतं श्वेतत्वं पीतत्वेन गृह्णाति, तथा ध्वनिगतान् द्रुतादीनगृह्णदेव श्रोत्रं द्रुतादित्वेन

### दर्पणव्याख्या

सा च पदपदे पदान्तरसमभिव्याहारप्रयुक्ता यद्विशेष्यकयत्संसर्गकयत्प्रकारकबोधजनकत्वं तत्पदे तत्पदनिरूपिताकाङ्क्षा । यथा 'घटमानयति' इत्यत्र घटपदे कर्मताविशेष्यकाधेयतासंसर्गकघटीया कर्मतेति बोधोपयिकाम्पदनिरूपिताकाङ्क्षा, तां विना घटः कर्मत्वमित्यत्र घटपदेन तादृशबोधाजननात् । एवं धातुपदेऽप्याख्यातनिरूपिताकाङ्क्षोह्या । अत एवानयनं कृतिरित्यत्र नानयनानुकूला कृतिरिति बोधः, धात्वाख्यातासमभिव्याहारात् । इयमेवाकाङ्क्षा व्याकरणेन प्रतिपाद्यते । तथाच तत्तत्पदे तत्तत्पदपूर्वापरीभावरूपसमभिव्याहारः सेति फलति, तां विना घटमानयतीत्याकाङ्क्षे कर्मत्वपदेऽम्पदसत्त्वदशायां घटीया कर्मतेति बोधोदयेन तज्ज्ञानं हेतुर्न तु स्वरूपसती सा । न च जनितान्वयबोधादास्यात् पुनरपि तादृशबोधापत्तिः, उक्ताकाङ्क्षायाः सत्त्वादिदानीमप्यविकलत्वादिति वाच्यम् , प्रकृतान्वयबोधसमानाकारबोधानुत्पादकत्वस्यापि स्वरूपसत आकाङ्क्षात्वेन जनितान्वयबोधस्थले तदभावेनासम्भवात् , तात्पर्यविषयत्वरूपप्रकृतत्वेन बोधविशेषणाच्च । बोधद्वयं जायतामिति तात्पर्यसत्त्वेन जनितान्वये बोधस्य द्वितीयबोधे निराकाङ्क्षत्वं दृश्यमानेऽपि सुखेन न जनितान्वयबोधस्य महावाक्यार्थबोधे तत्त्वम् । अत एव "अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्" इत्यादौ राज्ञ पुरुषेण सहान्वयबोधजनने सर्वदा निराकाङ्क्षत्वम् ।

नव्यास्तु— पदार्थस्य पदार्थान्तरव्यतिरेकप्रयुक्तात्पर्यविषयीभूतान्वयाननुभावकत्वं तेन सह तस्याकाङ्क्षा । 'अयमेति पुत्रो राज्ञः पुरुषः' इतिवाक्ये राजपुत्रान्वयतात्पर्येणोच्चरिते राज इत्यस्य पुरुषेण साकाङ्क्षत्वमन्वयबोधे तात्पर्यविरहे निराकाङ्क्षत्वम् । पुत्रेणान्वये तात्पर्यसत्त्वे तु साकाङ्क्षत्वमेव, एतच्च न तात्पर्यज्ञानस्य शाब्दबोधे कारणत्वेऽपि अनुपपत्तिः, तात्पर्यस्य निश्चयाऽभावाद्वाऽऽकाङ्क्षाभावादेव तत्र बोधाभावोपपत्तेरित्याहुः । एतच्च शाब्दबोधात् प्रागवश्यं ज्ञातव्यत्वात् ज्ञायमानकारणं, न तु स्वरूपसदित्याकाङ्क्षायाः शाब्दबोधे ज्ञायमानस्यैव कारणत्वमिति नैयायिका वदन्ति ।

प्रभा

शब्दं प्रतिपद्यते। एवं वर्णैक्यनित्यत्ववादिमीमांसकानाम्मते वर्णातिरिक्तं पदं वाक्यञ्च नास्त्येव, गकारादी-
नामयोगपद्यात्, सर्वगतत्वाच्च। गोपदादिरूपावयव्यारम्भकं सामर्थ्यमपि नोपपद्यते, युगपदवस्थितैरेवाने-
कावयवैरवयवव्युत्पत्तिदर्शनात्। वर्णानां विभिन्नप्रयत्नाभिव्यङ्ग्यत्वेनोपलब्ध्या यौगपद्याभावात्। किञ्च
तन्तुपटयोरिव कारणपरिमाणादधिकं परिमाणं कार्यस्य। नच विभुभ्यो वर्णेभ्यो परिमाणाधिक्यं पदादि-
रूपकार्यस्य सम्भवतीत्यतो नावकल्प्यतेऽवयवी। नच वर्णमात्रस्वीकारेऽर्थबोधानुपपत्तिः, प्रत्यक्षरं बोधा-
दर्शनात्। नच वर्णसमुदायादर्थधीः, युगपदभिव्यक्तिरहितानां समुदायस्याप्यसम्भवादिति वाच्यम्,
क्रमवर्तिनां वर्णानां क्रमिकसंस्कारेण साहित्यकल्पनात्। यथा 'स्वर्गकामो यजेत' इत्यत्र क्रियारूपयागस्य
क्रमिकत्वेन समुदायासम्भवाद्विनाशित्वाच्च कालान्तरभाविस्वर्गं प्रति वेदबोधितकारणत्वानुपपत्त्या चिर-
स्थायि यागजन्यमदृष्टं कल्प्यते, तथैकवर्णेनार्थबोधादर्शनात् सकलोच्चारणेऽर्थबोधदर्शनाच्च संहत्यकारित्वे
नश्चिते युगपदनवस्थानात् स्वरूपतो वर्णसमुदायासम्भवेन संस्कारतः समुदायकल्पनम्। तत एव चार्थ-
.धोपपत्तिः। अत्र स्फोटवादिनो वैयाकरणाः—शब्दानित्यत्ववादिनामनन्तवर्णानन्त्यतद्द्वारा तद्ध्वंसप्रागभा-
धकल्पनम्, पदादीनां बोधकत्वसिद्धये तत्प्रयोजकसंस्कारस्मृतिस्वीकारे च महद्गौरवम्। एवं मीमांसकादीनां
मते वर्णानां विभुत्वनित्यत्वस्वीकारे यद्यपि अनन्तवर्णतद्ध्वंसप्रागभावाकल्पनया वर्णानित्यत्ववादिनाऽपेक्षया
लाघवं वर्तते, तथापि नवस्वराणां त्रयस्त्रिंशद्व्यञ्जनानां विसर्गादीनाञ्च नित्यानां स्वीकरणे तद्व्यञ्जकानां
ध्वनीनां क्रमेणाभिव्यक्तिमता प्रत्येकवर्णेनार्थाबोधात् सकलोच्चारणानन्तरं बोधदर्शनात् संहत्यकारितोपपत्तये
तत्प्रयोजकभावनाऽऽख्यसंस्कारस्मृतिकल्पने च गौरवात् सर्वानुभूतपदवाक्यादीनां मिथ्यात्वकल्पनस्यानु-
चितत्वाच्च तन्मतं चिन्त्यम्। अतोऽव्यक्तत्वादिधर्मवन्तो वर्णरूपा ध्वनय एवार्थप्रत्यायकं स्व (ध्वनि)
रूपमर्पितं कालत्रयाबाधितं शब्दब्रह्मैव व्यञ्जयन्ति। तदेव शब्दब्रह्म स्फोट इत्युच्यते। स्फुटत्यर्थोऽनेना-
स्माद्वेति स्फोटः। करणेऽपादाने वा 'अकर्तरि च कारके संज्ञायाम्' इति घञि साधुः। स एव स्फोटस्तत्त-
दर्थनिरूपिततच्छक्तिमान्। कत्वादिविशिष्टवर्णातिरिक्तः पूर्वपूर्ववर्णानुभवसहचरितान्त्यवर्णानुभवव्यङ्ग्योऽ-
र्थप्रत्यायकः शब्द इति यावत्। तत्तदर्थनिष्ठविषयतानिरूपकशक्तिमत्त्वं स्फोटत्वम्। नच शब्दस्य
श्रोत्रेन्द्रियरूपप्रत्यक्षप्रमाणग्राह्यत्वाच्छ्रोत्रेण च वर्णातिरिक्तस्य शब्दस्यानुभवाभावात्स्फोटासिद्धिः, 'गौः'
इत्येकं पदम् 'गामानय शुक्लाम्' इत्येकं वाक्यम्' इत्येकपदवाक्यानुभवस्य, 'सोऽयं ककारः' 'सोऽयं गकारः'
इति प्रत्यभिज्ञायाश्च प्रमाणत्वात्। नच वर्णविषयकत्वेनैव तदुपपत्तिः, वर्णानां नानात्वेनैकत्वानुभवस्य तत्र
बाधितत्वात्। नच वर्णसमुदायविषयकं तत्, वर्णोत्पत्तेस्तदभिव्यक्तेर्वा क्षणस्थायित्वेन, क्रमिकत्वेन च
समुदायासम्भवात्। नच प्रत्येकवर्णानुभवभावितैः संस्कारैः संहत्य सर्ववर्णविषया एका स्मृतिर्जायते इति
स्मृतिगतैकत्वमादाय तथाव्यवहारः, असति बाधके 'एकं पदमेकं वाक्यम्' इत्यनुभवे मिथ्यात्वस्य वक्तु-
मशक्यत्वात्। नच वर्णेष्वेवौपाधिकैकत्वग्रहः, तादृशोपाधेर्वक्तुमशक्यत्वात्। उपाधिः खलु एकधीविषय-
त्वम्, एकार्थबोधकारणत्वं वा। तथाहि—चरमवर्णप्रत्यक्षानन्तरं बोधदर्शनान्यथानुपपत्त्या नानावर्ण-
विषयकसंस्कारकल्पनया एका स्मृतिः कल्प्यते इति एकस्मृतिरूपधीविषयत्वस्योपाधेः सत्त्वेनैकत्वं वाच्यम्,
तच्च न सम्भवति, एकधीविषयाणां शशकुशपलाशानामैक्यापत्त्या 'शशकुशपलाशाः' इति बहुवचनानापत्तेः।
नाप्येकार्थबोधकारणत्वस्योपाधित्वम्, प्रतिवर्णं बोधादर्शनेन वर्णेषु बोधहेतुत्वस्याभावात्। नच चरम-
वर्णानुभवानन्तरं दृष्टबोधान्यथानुपपत्त्योक्तसाहित्यकल्पनया समूहे च बोधहेतुत्वस्य सत्त्वात्तादृशोपाधि-
कृतमेकत्वं वर्णेषु सुलभमिति वाच्यम्, बोधहेतुत्वे सति साहित्यकल्पनं साहित्ये सति बोधहेतुत्वसिद्धिरित्य-
न्योन्याश्रयस्य दुष्परिहरणीयत्वात्। तस्मादनुपाधिकोऽबाधितश्च पदवाक्यैकत्वप्रत्ययो वर्णातिरिक्त-

प्रभा

वाचकमन्तरा न सम्भवतीति तादृशप्रत्ययविषयः स्फोटः स्वीकार्यः। ननु तव मतेऽपि प्रत्येकवर्णाभिव्यक्तस्फोटेनार्थबोधादर्शनाद् वर्णसमुदायाभिव्यक्तस्फोटस्यैव वाचकता वाच्येति समुदायस्यावश्यकत्वे तेनैवार्थप्रतीतिसिद्धौ स्फोटो व्यर्थ इति चेन्न, प्रत्येकवर्णाभिव्यक्तस्फोटस्य वाचकत्वेनैवोपपत्तौ वर्णसमुदायकल्पनस्यानावश्यकत्वात्। अन्तिमवर्णातिरिक्तपूर्ववर्णेनाभिव्यक्तात्स्फोटादर्थबोधस्तु न, रत्नपरीक्षणन्यायात्। यथा—वस्त्रादिरत्नानां परिचयो बहुवारं चाक्षुषप्रत्यक्षे कृते जायते। एवं पूर्वपूर्ववर्णेनाभिव्यक्तस्फोटविषयकप्रत्ययेनाहितसंस्कारे चित्तदेशेऽन्तिमवर्णाभिव्यक्तस्फोटेनैवार्थप्रत्ययो न, पूर्ववर्णाभिव्यक्तेन, शब्दशक्तिस्वाभावात्। यथा दूरेऽवस्थितः सहकारतरुः हस्ति-नतालरा शिरूपेण प्रतिभाति, ततोऽपि सामीप्ये वृक्षत्वेन, ततः सहकारात्मना प्रतीयते, तथैवान्तिमवर्णाभिव्यक्तः सम्यक् प्रतीतः स्फोटोऽर्थबोधं जनयति। तथाच 'ऋलृक्'सूत्रे भाष्ये उक्तम्—'उभयतः स्फोटमात्रं निर्दिश्यते—रश्रुतेर्लश्रुतिर्भवति' इति। 'तपरस्तत्कालस्य' इति सूत्रे भाष्येऽपि 'एवं तर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः (शब्दव्यञ्जकत्वेनोपकारकः)। कथम्? भेर्याघातवत्' तद्यथा भेर्याघातः (भेरीताडकः) भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति कश्चित्त्रिंशत् कश्चिच्चत्वारिंशत् स्फोटस्तावानेव भवति, ध्वनिकृता वृद्धिः।

ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते। अल्पो महांश्च केषाञ्चिदुभयं तत्स्वभावतः॥ इति॥

ननु भेर्याघातस्थलेऽर्थबोधकस्फोटाभावात्स्फोटस्तावानेवेति भाष्यासङ्गतिरत आह भाष्ये ध्वनिरिति—भेर्याघातस्थले ध्वनिः स्फोटश्च स्तः। व्यञ्जको ध्वनिर्व्यङ्ग्यश्च स्फोटश्च स इत्यर्थः, परन्तु व्यङ्ग्यानां स्फोटरूपाणां शब्दानां व्यञ्जकत्वेन सम्बन्धी यो ध्वनिः स एवाल्पो महांश्च प्रतीयते। व्यङ्ग्यः स्फोटस्तु अभिन्नकाल एवेत्यर्थः। अयम्भावः—ध्वनिर्द्विविधः—प्राकृतो वैकृतश्च। तत्र प्राकृतः कत्वह्रस्वत्वाद्युदात्तत्वानुनासिकत्वादिधर्मविशिष्टः। स्फोटः स्वयं प्रकाशोऽपि स्तिमित (पिण्डीभूत) वायुना प्रतिरुद्ध इति तदवरोधनिराकरणद्वारा स्वाभिन्नत्वेनैव स्फोटं प्रकाशयति। अत एको नित्यो व्यापकः स्फोटः नानारूपध्वनिरूपाक्रान्तो ज्ञातवृत्तिकोऽनेकरूपेण भासमानोऽन्तिमवर्णाभिव्यक्तोऽर्थं प्रत्याययति। प्राकृतध्वनिरेव वर्णशब्देन व्यवह्रियते। वर्णरूपानाक्रान्तः स्फोटः पृथग् नैव प्रतीयते इति सूक्ष्मेक्षिकयाऽपर्यालोचयन्तो नैयायिकादयः स्फोटो नैवास्तीति ब्रुवन्ति। वैकृतो ध्वनिश्च प्राकृतध्वनिनाभिव्यक्तस्फोटस्योपलब्धौ (प्रतीतौ) चिराचिरकालत्वसम्पादकः। अत एव 'एक एवाकारोऽनेन द्रुतमुच्चारितोऽनेन विलम्बितम्' इति वृत्तेर्भेदेऽपि वर्णस्यैकत्वव्यवहारः सङ्गच्छते। द्रुतत्वादेर्वृत्तिगतत्वादेव 'अभ्यासार्थे द्रुता वृत्तिर्मध्या वै चिन्तने स्मृता। शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बिता' इत्युक्तम्। भाष्ये 'ध्वनिकृता वृद्धिः' इत्यस्य वैकृतध्वनिकृतोपलब्धिकालवृत्तिरित्यर्थः इत्यलमतिविस्तरेण। स्फोटशब्दश्च योगरूढः। योगमात्रस्वीकारे तु अर्थेभ्योऽपि अर्थान्तरं व्यज्यते इत्यर्थस्यापि स्फोटत्वापत्तिः। किञ्च चेष्टयाऽप्यर्थबोधनाच्चेष्टायामतिव्याप्तिः। नापि केवलरूढत्वं तस्य, व्याकरणकल्पितप्रकृतिप्रत्ययजन्यबोधाभावसमानाधिकरणसमुदायशक्तिनिरूपकार्थविषयकबोधजनकत्वरूपरूढलक्षणाक्रान्तत्वात्। स च स्फोटोऽष्टविधः—वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोटः, अखण्डपदस्फोटः-अखण्डवाक्यस्फोटश्चेति। वर्णस्फोटस्य सखण्डाखण्डभेदेन द्वैविध्यन्तु न, सुबन्ततिङन्ततदादिभिन्नस्य, वाक्यभिन्नस्य च प्रकृतिप्रत्ययसमुदायरूपस्य, प्रकृतिरूपस्य, प्रत्ययरूपस्य चैकवर्णमात्रवर्णस्फोटघटकवर्णशब्देन ग्रहणात्। तदवयवानाञ्चार्थाप्रत्यायकतयाऽर्थप्रत्यायकस्यैव खण्डस्य सखण्डस्फोटपदेन ग्रहणान्न सखण्डवर्णस्फोटानुक्तिरित्याशयः। १—तथाच वर्णपदबोध्यचरमवर्णाभिव्यक्तस्फोटेन यत्र बोधस्तत्रैव वर्णस्फोटपदव्यवहार्यत्वम्। २—एवं सुबन्ततिङन्ततदादिघटकान्त्यवर्णाभिव्यक्तस्फोटेनार्थप्रतीतौ पदस्फोट इति व्यव-

## ॥ अथ स्फोटनिरूपणम् ॥

सिद्धान्तनिष्कर्षमाह—

प्रभा

हार । ३—सुबन्ततिङन्तपदजन्यबोधपूर्वकवाक्यचरमवर्णाभिव्यक्तस्फोटस्य बोधकत्वे वाक्यस्फोट इति व्य-
वह्रियते । ४—प्रकृतिप्रत्ययजन्यबोधाभावे सति पदस्फोटेन बोधेऽखण्डपदस्फोट । यथा—मणि-नूपुरादि,
'च' 'न' इत्यादि च ५—पदजन्यबोधाभावे सति वाक्यस्फोटेन बोधेऽखण्डवाक्यस्फोट । यथा—हयारुण-
ज्ञानशून्यानां वाक्यतो बोधे वाक्यम् । वर्णपदवाक्यगतजातिव्यङ्ग्यस्फोटेर्बोधे क्रमशः ६—वर्णजातिस्फोट ।
७—पदजातिस्फोट । ८—वाक्यजातिस्फोट इत्युच्यते । तत्र वाक्यस्फोटज्ञानार्थमेवेतरेषां स्फोटानामुपयोग ।
नच स्फोटस्य प्रतीयमानत्वात् 'उच्चरित शब्द सम्प्रत्यायको भवति न प्रतीयमान' इत्यणुदित्सूत्रभाष्य-
विरोधात्स्फोटेन बोधानापत्तिरिति वाच्यम्, 'न प्रतीयमान' इति भाष्यस्य अश्रूयमाण सन् प्रतीयमान
प्रत्यायको न भवतीत्यर्थात् स्फोटस्य च व्यञ्जकरूपेण श्रोत्रग्राह्यत्वेन भाष्यविरोधाभावात् । स प्रासङ्गि-
भावेन प्रतीयमानस्यैवानुच्चारित याप्रत्यायकत्व मति तदर्थाद्धा । नैयायिकमीमांसकमतं खण्डयितु स्वमतं
स्थापयितुमुपक्रमते—सिद्धान्तेति—वैयाकरणसिद्धान्तेरयर्थ ।

नैयायिका वाक्ये शक्तिं नाङ्गीकुर्वन्ति । तथाहि—शक्तं पदम् । पदसमुदायो वाक्यम् । तथाच 'पचति'
इति वाक्यम्, पाके 'पच' इति, कृतौ 'ति' इति शक्तम्, तयो समुदायरूपत्वात् । पाकस्य कृतौ जनकता-
रूपो य सम्बन्ध स स्वस्वार्थाभिधानसमर्थयो प्रकृतिप्रत्ययो पौर्वापर्यरूपसमभिव्याहाररूपाकाङ्क्षया
लभ्यते । एवञ्च जनकत्वसम्बन्धावच्छिन्नपाकत्वावच्छिन्नप्रकारतानिरूपितकृतित्वावच्छिन्नविशेष्यताशाली
बोध. 'पचति' इत्यनेन जायते । तत्र प्रकृतिप्रत्ययार्थयो सम्बन्धभानप्रयोजिका प्रकृतिप्रत्ययो समभिव्याहा-
ररूपाकाङ्क्षैव । एवम् 'घटम्' इत्यत्र घटस्याधेयतासम्बन्धेनाम्बर्थकर्मतायामन्वयेन आधेयत्वसम्बन्धाव-
च्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितकर्मतात्वावच्छिन्नविशेष्यताकबोधेऽपि सम्बन्धभानप्रयोजिका घट-
दाव्यवहितोत्तरत्वविशिष्टाम्पदत्वरूपाकाङ्क्षैव । अन्यथा घट, कर्मत्वम्, आनयनम्, कृति, इतिपदसमु-
दायेनापि 'आधेयत्वसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितकर्मत्वत्वावच्छिन्नविशेष्यताक', निरू-
पकत्वसम्बन्धावच्छिन्नकर्मत्वत्वावच्छिन्नप्रकारतानिरूपितानयनत्वावच्छिन्नविशेष्यताक, अनुकूलत्वसम्ब-
न्धावच्छिन्नानयनत्वावच्छिन्नप्रकारतानिरूपितकृतित्वावच्छिन्नविशेष्यतानिरूपको बोध स्यात् । यादृशसम-
भिव्याहारप्रयुक्तं यत्प्रकारकयत्संसर्गकयद्विशेष्यकबोधोऽनुभवसिद्ध, तादृशपदसमभिव्याहाररूपाकाङ्क्षा
तादृशशाब्दबोधप्रयोजिका । अस्ति च 'घटमानय' इत्यत्र घटनिष्ठकर्मतानिरूपकानयनजनिका कृतिरिति
बोधप्रयोजिकाकाङ्क्षा । घट, कर्मत्वम्, आनयनम्, कृति, इत्यत्र तु सा नास्त्यतो न तादृशो बोधोऽनेन ।
सैव शाब्दबोधप्रयोजिकाकाङ्क्षा व्याकरणेन प्रकृतिप्रत्ययादिबोधनद्वारा प्रतिपाद्यते । सा चाकाङ्क्षा ज्ञाता

दर्पणव्याख्या

मीमांसकादयस्तु वाक्यस्य तत्र लक्षणैव नतु तत्र शक्तिरिति तन्मतं खण्डयितु स्फोटनिरूपणमित्याशयेन मूलम्
वतारयति— * सिद्धान्तेति * । यद्वा ननूक्तरीत्या व्याकरणस्य प्रकृतिप्रत्ययेषु तत्तदर्थवाचकत्वशक्तिप्रतिपादकत्वमनुपपन्नम्,
प्रकृतिप्रत्ययानां क्रमिकाशुविनाशिनानावर्णात्मकतयाऽस्थिरत्वेन अप्रत्यक्षतया तत्र शक्तिग्रहस्य कथमप्यसम्भवेन
तत्प्रतिपादकस्यास्य शास्त्रस्याप्रामाण्यशङ्का स्यादित्याशङ्कानिराकरणाय स्फोटनिरूपणमित्याशयेन मूलमवतारयन्नाह—
* सिद्धान्तनिष्कर्षमिति * तथाचोपोद्घातसङ्गतिरनेनावधेयम् । तच्च मतनिराकरणन्तु मूल एव सुव्यक्तम् । अगना

वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः ।
साधुशब्देऽन्तर्गता हि बोधका नतु तत्स्मृताः ॥ ६१ ॥

प्रभा

सती शाब्दबोधप्रयोजिका, दाहं प्रति वह्निरिव न स्वरूपसती प्रयोजिका । घटः, कर्मत्वम्, इति केनचित्प्रयुक्तम् । तत्र यदा कर्मत्वपदे घटपदाव्यहितोत्तरत्वपदत्वभ्रमः कस्यचिच्छ्रोतुर्जातस्तदा तस्य सतो 'घटनिष्ठं कर्मत्वम्' इति बोधो जायते । यस्य तु अम्पदे कर्मत्वपदभ्रमस्तस्य तादृशो बोधो न जायते इत्यन्वयव्यतिरेकाभ्यां ज्ञाताया एव तत्तच्छाब्दबोधकारणीभूताकाङ्क्षायाः कारणत्वं न स्वरूपसत्याः । नच 'प्रथमक्षणे घटमानय' इत्याकाङ्क्षाज्ञानं जातं द्वितीयक्षणे 'घटकर्मकानयनम्' इति शाब्दबोधोऽपि निष्पन्नः, तृतीयक्षणे उक्ताकारः शाब्दबोधः पुनरपि स्यात्ततः प्राक्क्षणे आकाङ्क्षाज्ञानस्य सत्त्वादिति वाच्यम्, आकाङ्क्षायां तात्पर्यविषयान्वयबोधानुपहितत्वस्यापि विवक्षितत्वात् । जातबोधस्थलेऽजनितान्वयबोधत्वरूपस्य तात्पर्यविषयान्वयबोधानुपहितत्वस्याभावेनोक्तदोषानवकाशात् । यदि तु अनेन वाक्येन शाब्दबोधद्वयं जायतामिति तात्पर्यन्तदा तत्र बोधद्वयस्य तात्पर्यविषयतया प्रथमशाब्दबोधे जातेऽपि स्वरूपतः शब्दनिष्ठस्य बोधद्वयानुपहितत्वस्य सत्त्वात्पुनरपि शाब्दबोधो जायत एव, तात्पर्यविषयबोधसमानाकारबोधानुपहितत्वस्यैव शाब्दबोधजनकशब्दे प्रविष्टत्वात् । नन्वेवमपि वाक्यसमुदायरूपमहावाक्यतो बोधानुपपत्तिः, तात्पर्यविषयबोधसमानाकारबोधोपहितत्वस्यैव सत्त्वादिति चेन्न, बोधे समानाकारकत्वस्य अन्यूनानतिरिक्तविषयकत्वरूपस्य विवक्षितत्वेन महावाक्यजन्यबोधस्य चाधिकविषयकतया तज्जन्यबोधे बाधकाभावात् । तथाच साकाङ्क्षपदसमुदायादेव शाब्दबोधोपपत्तेः पदसमूहस्य वाक्यस्य पदार्थसंसर्गरूपवाक्यार्थे शक्तिकल्पनमप्रामाणिकं विफलं गौरवग्रस्तञ्च । पदार्थसंसर्गस्तु वृत्त्या अनुपस्थित एवोक्ताकाङ्क्षातात्पर्याभ्यां भासते, नतु तत्र शक्तिः कल्पनीयेत्याहुः । मीमांसकास्तु संसर्गे वाक्यस्य लक्षणा । नच पदसमुदायरूपवाक्यस्य क्वचिदप्यशक्ततया शक्यसम्बन्धरूपलक्षणाया असम्भवः, 'ज्ञाप्यसम्बन्धो लक्षणा' इत्यस्यैव तैः स्वीकारात् । भवति च वाक्यार्थोऽपि वाक्यज्ञाप्य इति 'वाक्यस्य लक्षणा' इति नासङ्गतम् । अत एव 'गभीरायां नद्यां घोषः' इत्यत्र गभीराभिन्ननदीसम्बद्धतीरे घोषः' इति बोधः । शक्यसम्बन्धस्य लक्षणात्वस्वीकारे तु 'गभीरायां नद्याम्' इति द्वयोः पदयोः समानविभक्तिकतयाऽभेदेनान्वयस्यावश्यकत्वेन नदीपदस्य तीरे लक्षणायां गभीरपदार्थानन्वयापत्तिः, तदभेदस्य तीरे बाधात्, गाम्भीर्यस्य जलगुणत्वात् । गभीरपदस्य तीरलक्षकत्वे तीराभेदस्य नद्यां बाधादनन्वयापत्तिस्तदवस्थैवेति 'गभीरायां नद्याम्' इति समुदायस्य लक्षणया 'गभीराभिन्ननदीपदसम्बद्धतीरे घोषः' इति शाब्दबोध उपपद्यते । तदुक्तम्—'सर्वत्रैव वाक्यार्थो लक्ष्य एवेति च स्थितम्' इति मन्यन्ते तत्सर्वं नैयायिकमीमांसकोक्तं खण्डयितुमाह—वाक्यस्फोट इति । यद्वा—उपायाः शिक्षमाणानां बालानामुपलालनाः । असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते । इत्यभियुक्तोक्त्या कल्पितेन प्रकृतिप्रत्ययादिविभागेन तत्तदर्थविभागेनच परमार्थतः शक्तस्य वाक्यस्फोटस्यैव बोधने व्याकरणतात्पर्येण प्रकृतिप्रत्ययादिनिरूपणमपारमार्थिकमिति सूचयितुमाह—वाक्यस्फोट इति । ननु वर्णस्फोटादिभेदेनाष्टौ स्फोटा अत्रैवावतरणे उक्ता वाक्यस्फोटमात्रोक्तिरसङ्गतेत्यत आह—अतिनिष्कर्षे इति—प्रमाणैर्निर्णीतः संक्षिप्तोऽर्थो निष्कर्ष इत्युच्यते । स्फोटीति—स्फुटति=प्रकाशते=ज्ञातो भवत्यर्थोऽनेनास्माद्वेति व्युत्पत्त्याऽर्थनिष्ठविषयतानिरूपकोपस्थितिजनकतावच्छेदकशक्तिमतः शब्दस्य स्फोटपदार्थतया वर्णस्फोटशब्देन कल्पितसुप्तिङन्ततदादिरूपपदतत्समुदायरूपवाक्येतरो यः प्रकृतिप्रत्ययादिस्तद्व्यङ्ग्यस्फोटस्यैव ग्रहणं बोध्यम् । यथा 'पचति' इत्यत्र

प्रभा

यात्मकत्वेन वाक्ये संशयजनकत्वस्यासम्भवात्। 'संशयजनकं वाक्यं विप्रतिपत्तिः' इत्यस्य वक्तुमशक्यत्वात्। वस्तुतस्तु प्रत्यक्षातिरिक्तज्ञानमात्रस्य निश्चयात्मकमनुभवविरुद्धं निर्मूलञ्च। अत एव गौतमेन 'समानाऽनेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः' इति सूत्रेण (अ० १ आ० २३) संशयलक्षणे वदता विप्रतिपत्तेः संशयजनकत्वमुक्तम्। संशयस्य चत्वारि कारणानि प्रदर्शितानि। तथाहि—१—समानाः=सदृशा येऽनेके धर्माः आरोह (उन्नतत्व) परिणाहा (विस्तार) दयस्तेषामुपपत्तेः=ज्ञानात् संशयो जायते। यथा स्थाणुपुरुषयोः सदृशौन्नत्यविस्तारादीनां ज्ञानात् स्थाणुर्वा पुरुषो वेति संशयः। २—विप्रतिपत्तेः—परस्परविरुद्धधर्मप्रकारकमेकधर्मिकं ज्ञानं विप्रतिपत्तिस्ततोऽपि संशय इति। एवञ्च परस्परविरुद्धधर्मज्ञानजनकवाक्यद्वयस्यापि विप्रतिपत्तित्वमुक्तप्रायम्। नचैवं संशयविप्रतिपत्त्योरैक्यापत्त्या जन्यजनकभावानुपपत्तिः, संशये विरुद्धधर्मद्वयज्ञानस्यैकात्मसमवेतत्वम्। विप्रतिपत्तौ तु भिन्नात्मसमवेतत्वमिति विशेषात्। वस्तुतस्तु 'साधारणधर्मावगाहि' विशेषधर्मानवगाहि' किंस्विदिदम्' इति ज्ञानमेव संशयः। अत एव 'विशेषापेक्षो विमर्शः संशयः' इत्युक्तं गौतमेन। अत्र स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन् पूर्वदृष्टञ्च तयोर्विशेषं बुभुत्समानः तदनवधारणं ज्ञानं संशयः' इति वात्स्यायनः। आधिकार्थन्तराद्य एकधर्मिकं विरुद्धकोटिद्वयावगाहि ज्ञानं संशयः' इत्युक्तं नैयायिकैः। विप्रतिपत्तिः, व्याघातः, असहभावः, इत्यनर्थान्तरम्। यथा केचिदात्मनो विभुत्वमाहुः, केचिदणुत्वम्। ततो विरुद्धज्ञानात् संशयो जायते। 'आत्मा विभुर्वाऽणुर्वा' इति। ३—उपलब्ध्यव्यवस्थातः—उपलब्धिर्ज्ञानं तस्या अव्यवस्थातः=अनियमादपि संशय उत्पद्यते। यथा तडागादिषु सदुदकमुपलभ्यते मरुमरीचिषु असदुदकमुपलभ्यते इति सत एव ज्ञानम्, असत एवाज्ञानमिति नियमो नास्ति इति 'सदुपलभ्यतेऽसद्वा' इति संशयो जायते। ४—अनुपलब्ध्यव्यवस्थातः=अनुपलब्धिः=अप्रतीतिः, तस्या अव्यवस्थातः—अनियमात्। यथा पृथिव्यन्तर्गतं स्तम्भमूलं सदपि नोपलभ्यते। एवं काष्ठाद्यन्तर्गतं जलं सदपि नोपलभ्यते। तथा असदप्यनुत्पन्नं विनष्टं वा वस्तु नोपलभ्यते। एवञ्च सत एव ज्ञानाभावोऽसत एव इति अनुपलब्धेरपि नियमाभावात्संशयोत्पत्तिः। किं सन्नोपलभ्यते उतासन्नपि' इति संशयः। ननु साधुशब्दान्तर्गता वर्णाः प्रकृतिप्रत्ययान्यतररूपाः वाचका नवेत्यनेन साधुशब्दान्तर्गतवर्णा वाचकत्ववन्तः, तत्स्मृतास्तु वाचकताभाववन्त इति—लभ्यते। तथाचैकत्र साधुशब्दान्तर्गतवर्णानां धर्मित्वम्, अपरत्र तत्स्मृतवर्णाना-

इत्येकम्, 'शब्दोऽनित्यः' इत्यपरम्, इति वाक्यद्वयरूपा विप्रतिपत्तिः। एवञ्चैकस्मिन् धर्मिणि सामानाधिकरण्येनासम्भवद् यद्धर्मद्वयन्तद्बोधकवाक्यद्वयस्यैव विप्रतिपत्तित्वमिति। किञ्च साधुशब्दान्तर्गतवर्णत्वरूपपक्षतावच्छेदकावच्छेदेन वाचकत्वं साध्यम्, तादृशपक्षतावच्छेदकसामानाधिकरण्येन वा। नाद्य, विकरणानां निरर्थकत्वस्य वैयाकरणानां नैयायिकानाञ्च सम्मतत्वे विकरणे वाचकत्वाभावरूपबाधसत्त्वेन पक्षतावच्छेदकावच्छेदेन वाचकत्वस्य साधयितुमशक्यत्वात्। नान्त्यः, घटादिशब्दघटकप्रकृतिप्रत्ययानां वाचकत्वस्य नैयायिकादीनामपि सम्मतत्वेन अंशतः सिद्धसाधनताऽऽपत्तेः। तस्मात्साधुशब्दान्तर्गता इत्यस्य साधुशब्दान्तर्गतस्मारिता इत्यर्थकत्वेनोक्तदोषा निरसनीयाः। वस्तुतस्तु तादृशस्मारितेषु लक्षणायामपि विकरणानां निरर्थकत्वे सिजाद्यादेशस्मारितत्वे बाधो दुर्वार एव। तस्माद्वैयाकरणनये 'प्रत्ययः' इति महासंज्ञाकरणसामर्थ्यात् प्रत्येत्यर्थं बोधयति यस्तस्यैव प्रत्ययसंज्ञा विधानेन प्रत्ययमात्रस्य

विधिकोटिरन्येषाम् , नेति वैयाकरणानाम् । साधुशब्दे 'पचति' 'रामः' इत्यादिप्रयुज्य-
मानेऽन्तर्गतास्तिब्विसर्गादय एव

प्रभा

रत्वप्रकृत्यन्यतरार्थप्रत्यायकत्वेन विकरणानामपि प्रकृत्यर्थेनार्थवत्त्वादुक्तदोषो निरसनीय इति
गुरवः । तथाच साधुशब्दान्तर्गतस्मारितानां लादीनां वाचकत्वं नवेति तात्पर्य्यम् । अयम्भावः—
नैयायिकादीनाम्मते साधुशब्दान्तर्गतादेशानां स्थानिस्मारकत्वेनैवोपयोगो नत्वर्थप्रत्यायने । अर्थप्रत्या-
यकत्वन्तु 'लः कर्मणि' 'स्वौजसमौट्' इत्यादिसूत्रविहितलादीनामेव । वैयाकरणनये प्रयोगान्त-
र्गतास्तिब्विसर्गादय एवार्थप्रत्यायकाः, नतु लाघवेन शास्त्रप्रक्रियानिर्वाहाय कल्पिता लकारसका-
रादयः, कल्पनामूलकतया तेषामनियतत्वात् । किञ्च णलादिना तिबादिस्मरणम् । तेन च लस्मरणम् ,
एवं विसर्गाविना रोः स्मरणम् , तेन च सकारस्मरणम् । तथाचातिगौरवम् । किञ्च स्थान्यादेश-
भावमजानतामवैयाकरणानामादेशमात्रश्रवणाद् बोधदर्शनेन स्मारितानां बोधकत्वं दुर्वचम् । एवञ्च साधु-
शब्दान्तर्गतवर्णस्मृतिवर्णा वाचका नवेति विप्रतिपत्तिः । एवञ्च 'वटो भिक्षामट, गाञ्चानय'
इति समुच्चये एकत्र वटौ भिक्षाकर्मकप्राप्तिकर्तृत्वम , गोकर्मकानयनकर्तृत्वञ्च यथा भासते न तथा संशये
इति तद्व्यावृत्ता कोटिताख्या विषयतेति सूचयन्नाह—विधिकोटिरिति—अत्र प्रकृताभावप्रतियोगिसत्ताबोधनं
विधिकोटिः ( पक्षः, कोटिः' इति पर्य्याय ) पक्षश्च—'एकाधिकरणस्थः विरुद्धो धर्मः । यथा 'अस्त्यात्मा'
नास्त्यात्मा' इति । नानाधिकरणस्थस्तु विरुद्धो धर्मो न पक्षः । यथा 'नित्य आत्मा' 'अनित्या बुद्धिः' इति ।
अयमेव च प्रतिपक्षः, प्रत्यनीकभावात् । तथाच स्मृतानां वाचकत्वमित्यन्येषाम्=नैयायिकानाम्मतम् ।
नेतीति— स्मृताः=वाचकत्वाभाववन्त इत्यभावसत्ताबोधनरूपा निषेधकोटिर्वैयाकरणानान्तदेव वैयाकरणमतं
विशदयति—साधुशब्द इति । ननु साध्वन्तर्गतानामादेशानां परम्परया बोधजनकत्वेऽपि न शक्तिमत्त्वरूपवाच-

दर्पणव्याख्या

प्राचीनप्रवादेन संशयजनकत्वस्य वाक्ये
वाक्यमित्यर्थः । ननु संशयजनकं वाक्यमेव सा । परोक्ष ज्ञान निश्चयात्मकमेवेति प्राचीनप्रवादेन संशयजनकत्वस्य वाक्ये
असम्भवात् । वस्तुतस्तु संशयजनकवाक्यत्वमेव विप्रतिपत्तित्वम् । तत्तद्भावसहचरितधर्मवद्धर्मिज्ञानस्यैव समानानेकेति सूत्रेण
विप्रतिपत्तेरप्याहत्यैव संशयहेतुत्वोत्कीर्त्तनादित्यवधेयम् । मूले असाधुशब्दान्तर्गतवर्णवाचकताविचारस्याप्रस्तुतत्वं मत्वा-
* साध्विति * अत्र साध्वन्तर्गतवर्णत्वसामानाधिकरण्येन वाचकत्वादिसाधने तद्वाक्यस्य विप्रतिपत्तित्वासम्भवः
नैयायिकैरपि साध्वन्तर्गताना केषाञ्चिद् वाचकत्वाभ्युपगमात् । तादृशवर्णत्वावच्छेदेन वाचकत्वादिसाधने तु वैयाकरणाना
परेषां निकरणेषु बाधश्चेत्यत आह—*तत्स्मृता इति* । ननु यथाश्रुते साधुशब्दान्तर्गता वाचकास्तदन्तर्गतवर्णस्मारिता
नेत्यर्थलाभादेतद्वाक्यस्य भिन्नधर्मिबोधकत्वाद्विप्रतिपत्तित्वस्यैवासम्भव, एकधर्मिकविरुद्धकोटिकसंशयजनकस्यैव तत्त्वा-
दतो व्याचष्टे सारे- * साधुशब्दान्तर्गता इति * साध्वन्तर्गतवर्णस्मारिता इत्यर्थः । यथाश्रुते साध्वन्तर्गतविपरी-
तानुपूर्वीकवर्णाना वाचकत्वस्य केनाप्यनभ्युपगमाद् बाधसिद्धसाधनयोरापत्तेः । तत्स्मारितत्वञ्च—शास्त्रबोधितादेशादे-
शिभाव-निमित्तनिमित्तिभावान्यतरसम्बन्धेन । तेन अस्यापत्यम् 'इ' 'इयान्' इत्यादेर्नासंग्रहः । * विधिकोटिरिति
* समुच्चयव्यावृत्ता कोटिताख्या विषयता संशये आवश्यकीति सूचनायोक्तम्—कोटिरिति । अन्येषाम्—नैयायिकानाम् ।-
तैः "लः कर्मणि' 'स्वौजसमौट्" इत्यादिविहितप्रत्ययानामेव वाचकत्वम् , तिब्विसर्गादीना लादेशिस्मृतिद्वारा बोधकत्व-
मेव लिप्यादिवदभ्युपगमात् । तथाच साध्वन्तर्गतवर्णस्मारितवर्णत्वावच्छेदेन मतभेदेनोभयसाधनाल्लोक्तदोष इति भावः ।
यथाश्रुतमूलोक्तविप्रतिपत्तिमनुसरन्नाह—* साधुशब्द इत्यादि * । ननु साध्वन्तर्गतवर्णानां बोधकत्वसाधनेऽपि न

बोधकाः=वाचकाः, तस्यैव शक्तत्वस्य प्राग्व्यवस्थापितत्वात्। नतु तैः स्मृताः लादयः, स्वादयश्चेत्यर्थः॥६१॥
ये तु प्रयोगान्तर्गतास्तिब्विसर्गादयो न वाचकाः, तेषां बहुत्वेन शक्त्यानन्त्यापत्तेः, 'एधाञ्चक्रे'

## प्रभा

त्वमत आह—वाचका इति। अत्र हेतुमाह—तस्यैवेति—बोधजनकत्वस्यैवेत्यर्थः। शक्तत्वस्य=वाचकत्वस्य। प्रागिति—शक्तिनिरूपणे 'इन्द्रियाणां चक्षुरादीनां स्वविषयेषु=चाक्षुषेषु=घटादिषु यथाऽनादिर्योग्यता=तदीयचाक्षुषादिकारणतां, तथा शब्दानामपि अर्थैः सह तद्बोधकारणतैव योग्यता सैव शक्तिः' इत्युक्तम्, शक्तिर्न बोधकतारूपा,-किन्तु पदार्थान्तरमिति मतेऽपि बोधकत्वान्यथानुपपत्त्या कल्प्यमाना शक्तिर्बोधकत्वसमानाधिकरणैव स्यात्। एवञ्च स्मृतेषु बोधकत्वाभावे सिद्धे शक्त्यभावोऽपि तत्र सिद्ध्यत्येवेति भावः। तैः=तिबादिभिः। नैयायिकाभिमतं स्मृतानां बोधकत्वं दूषयितुमाह—ये त्विति—तिबादीनां वाचकत्वाभावे हेतुमाह—तेषामिति=तिबादीनामित्यर्थः। बहुत्वेनेति=लादिरूपस्थान्यपेक्षया तिबाद्यादेशानां बहुसंख्याकत्वेनेत्यर्थः। अस्य शक्त्यानन्त्यापत्तौ हेतुत्वात्तृतीया। शक्त्यानन्त्येति—शक्तेरानन्त्यञ्च—'तिप्पदं कर्तृत्वावच्छिन्नविषयकबोधजनकतावत्' 'तस्पदं कर्तृत्वावच्छिन्नविषयकबोधजनकतावत्' इत्येवंरूपेण शक्तेरनन्तपदघटिततया बोध्यम्। एवं शक्ततावच्छेदकतिप्त्वादीनामप्यानन्त्येन शक्त्यानन्त्यम्। यद्यप्यादेशाः परिगणिता एवेत्यानन्त्योक्तिरसङ्गता, तथापि लादिस्थान्यपेक्षयाऽऽदेशानां बहुत्वेन आनन्त्यपदं तदपेक्षबहुत्वपरकमेव। ननु स्थानिनां वाचकत्वपक्षेऽपि शाब्दबोधात् प्रागनेकस्मृतिकल्पनायां लाघवाभावः। किञ्च स्थानिनो लकारस्यापि कालरूपार्थभेदेन लट्त्व—लिट्त्वादिनैव शक्तत्वं वाच्यमित्यत्रापि पक्षेऽवच्छेदकभेदेन शक्तिबाहुल्यम्। किञ्च लिड्त्वादीनां शक्ततावच्छेदकत्वेऽर्थोपस्थितिम्प्रति तद्धर्मप्रकारकशक्तिज्ञानस्य कारणता वाच्या, सा च न सम्भवति, लत्वेनोपस्थितशक्त्याऽर्थोपस्थितौ तज्ज्ञानस्य व्यभिचरितत्वादित्यरुचेराह—एधामिति—ननु अनुप्रयुज्यमानकृञाद्युत्तरलिडादेशेनैव कालकारकादिबोधोपपत्तिः, नचानुप्रयुज्यमानधातूत्तरलिडादेशार्थस्य स्वप्रकृतिकृञाद्यर्थे एवान्वयेनाम्प्रकृत्यर्थे कालकारकाद्यप्रतीत्यापत्तिः, अनुप्रयुज्यमानकृञाद्यर्थक्रियासामान्ये कालकारकप्रतीतौ तत्राभेदेनान्वयिनि आम्प्रकृत्येधाद्यर्थे व्यापारविशेषेऽपि आर्थिककालकारकादिप्रतीतिसम्भवात्। तदुक्तं कौमुद्याम्—'तेषाम् (कृञादीनाम्) क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वयः' इति। शाब्दबोधश्चेत्थम्—एधादयो वृद्ध्यादितत्तत्फलानुकूलव्यापारवाचकाः, कृञ्तु उत्पत्त्यनुकूलव्यापारवाची, भ्वस्ती च सत्तानुकूलव्यापारवाचकौ अनुप्रयुज्यमानधात्वर्थसत्तोत्पत्ती च प्रत्यासत्त्या आम्प्रकृत्येधादिधात्वर्थफलनिष्ठे एव ग्राह्ये। तथाच 'एधाञ्चक्रे' इत्यतः 'एककर्तृकवृद्ध्यनुकूलव्यापाराभिन्नपरोक्षानद्यतनभूतकालिकोत्पत्त्यनुकूलो व्यापार इति बोधः। यत्राकर्मकधातुप्रकृतिकामन्तात्कृञोऽनुप्रयोगस्तत्रानुप्रयुज्यमानस्य फलसमानाधिकरणव्यापार-

## दर्पणव्याख्या

वाचकत्वसिद्धिरत आह—*बोधका वाचका इति*।*तस्यैवेति* बोधकत्वस्यैवेत्यर्थः। *प्रागिति*। शक्तिनिरूपणावसर इत्यर्थः। नन्विति—बोधकत्वसिद्धौ च तदन्यथानुपपत्त्या पदार्थान्तररूपा शक्तिरपि सिद्ध्येत्, तदभावे तु साऽपि नेति वाचकत्वसामान्याभावसिद्धिरिति भावः॥६१॥ नैयायिकमतं दूषयितुमुपन्यस्यति—*ये त्विति*। वाचकत्वाभावे प्रयोजकमाह—*तेषामिति*। बहुत्वेन—इत्युपलक्षणम्—अनुगमकधर्माभावस्यापि, तिप्त्वसुप्त्वादीनामेकवचनत्वादिवदनुगमकत्वासम्भवाल्लिड्त्वाद्युपस्थितिं विनाऽपि कृत्याद्यर्थोपस्थितेर्व्यभिचारेण शक्ततानवच्छेदकत्वाच्चेति बोध्यम्। ननु तिबाद्यादेशानामपि तत्तदनुबन्धभेदेन नानात्वाङ्गीकारीत्या तेषां वाचकत्वमत आह—*एधामिति*।

'अग्र' इत्यादावादेशलुगादेरभावरूपस्य बोधकत्वासम्भवाच्च । किन्तु तैः स्मृता लकाराः, स्थादयश्च वाचकाः, लत्वस्य जातिरूपतया शक्ततावच्छेदकत्वौचित्यात्,

प्रभा

वाचकतयाऽकर्मकत्वेन भावकर्त्रोरेव लिट् । यत्र तु ईक्षादिभ्य सकर्मकेभ्य आम्, तत्रानुप्रयुज्यमानस्यापि सकर्मकतया कर्मण्यपि लिट् सिद्ध्यति । नच नव्यमते कर्मणि तिङ्प्रत्यये फलस्यैव प्राधान्येन आम्प्रकृत्यनुप्रयुज्यमानोभयधात्वर्थफलयोः प्राधान्येनाभेदान्वयानुपपत्तिः, फलत्वेनाम्समभिव्याहारे उभयधात्वर्थव्यापारयोरेव कर्मणि प्रत्ययेऽपि प्राधान्यस्वीकारेणाभेदान्वयोपपत्तिः । फलव्यापारयोः पृथक्शक्तिस्वीकर्तृमते तु कर्तरि कर्मणि वा तिङ्प्रत्यये व्यापारस्यैव प्राधान्यस्वीकारेण दोषाभावः । एवञ्चानुप्रयुज्यमानोत्तरलिडादेशेन भावरूपेण कालकारकादिबोधः स्यादत आह—अग्रेत्यादाविति—अग्निना तिष्यनक्षत्रेण युक्तः कालः 'अद्य तिष्यः' इत्यत्र कालार्थकस्याणो 'लुबविशेषे' इत्यनेन लुपि, 'लिट्' इत्यादौ कर्त्रर्थकस्य क्विपो लोपे तत्तदर्थबोधानुपपत्तेः सङ्ग्रहः, लुब्लोपयोरप्यभावरूपत्वात् । एवम् 'वारि' 'आनय' 'अपाचि' इत्यादिष्वपि बोधानुपपत्तिरूपो दोषो बोध्यः । नच 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन प्रकृत्यैव प्रत्ययार्थस्यापि बोध इति वाच्यम्, प्रकृते शक्त्यन्तरकल्पनापेक्षयाऽन्यत्र श्रूयमाणप्रत्ययस्थले दृष्टेन प्रत्ययस्य वाचकत्वेन लुगादिस्थलेऽपि प्रकृत्या प्रत्ययस्य स्मरणकल्पनाया एव युक्तत्वादर्धजरतीयानौचित्यात्, शाब्दबोधकत्वस्य अभावरूपस्येति—हेतुगर्भं विशेषणमिदम्, यतो लुकोऽभावरूपत्वमतस्तस्य बोधकत्वासम्भवः, अभावस्य शाब्दबोधजनकत्वे यत्किञ्चिच्छब्दाभावेऽपि बोधाभावनिश्चयाऽभावेन कुत्रापि बोधाजननात् । 'उच्चरितः शब्दः प्रत्यायको भवति नानुच्चरितः' इति भाष्या[illegible]परोक्ष । असम्भवाच्चेति—शाब्दिकमते उच्चरितशब्दानामेव बोधकत्वम् । तथाच प्रकृते अग्रेत्यादावादेशानामश्रवणेन बोधो न स्यादिति भावः । तैः=आदेशैः । आदेशानां वाचकत्वपक्षे तिप्त्वादीनां बहूनां शक्ततावच्छेदकापेक्षया स्थानिनो वाचकत्वपक्षे शक्ततावच्छेदके लाघवमप्यस्तीत्याह—लत्वस्येति—लडादिघटकेषु 'ल' इत्यनुगतप्रतीत्या लत्वरूपजातिसिद्धिः । तदुक्तं सरूपसूत्रे भाष्ये (१।२।६४) 'कथं पुनर्ज्ञायते एकाकृतिरिति, प्रत्ययाऽविशेषात्' इति । प्रत्ययः=बुद्धिस्तस्याः अविशेषः=एकरूपता । भिन्नभिन्नव्यक्त्यवगाहिन्यामपि बुद्धौ 'घटः' इति प्रतीतिरेकरूपैव । तत्र बुद्धेरैक्यं तद्विषयजातेरैक्यादेव । गौतमेनापि 'समानप्रसवात्मिका जातिः' (न्या० द० २-२-७१) इति वदता अनुगतप्रतीतेर्जातिसाधकत्वं सूचितम् । एतेन 'कारणताऽवच्छेदकतया कार्यताऽवच्छेदकतया वा जातिसिद्धि'रिति नैयायिकोक्तमपास्तम् । यदि तु 'लकारः दन्त्यस्थानवायुसंयोगविशेषजन्य' इति प्रतीत्या लकारे जन्यता, तदा नैयायिकाभिमतकार्यतावच्छेदकतयाऽपि लत्वजातिसिद्धिः । नच लत्वस्य धातु-प्रातिपदिक-प्रत्यय-घटकसकललकारवृत्तितया कृतिनिरूपितशक्ततायाश्च दशलकारमात्रवृत्तित्वेनातिप्रसक्तत्वान्न लत्वं शक्ततावच्छेदकमिति वाच्यम्, लट्त्वादिसमानाधिकरणलत्वस्यानतिप्रसक्तत्वेनावच्छेदकत्वसम्भवादतिप्रसक्तधर्मस्याप्यवच्छेदकत्वस्वीकाराच्च । नव्यनैयायिकास्तु लत्वस्य कृतिनिरूपितशक्तताया अधिकवृत्तितया लट्त्वादिसमानाधिकरणलत्वस्य कृतिनिरूपितशक्तत्वाभाववति कर्त्रर्थकशास्त्रस्थेऽपि लकारे सत्त्वेन व्यभि-

दर्पणव्याख्या

अनुप्रयुज्यमानधातूत्तरैणादिनापि तदर्थं वाचकत्वेनोक्तदोषात आह—* अग्रेति * । आदिना 'अत्र तिष्यो लिट्, धुक्' इत्यादिसंग्रहः । लुगादेरित्यादिना लुब्लोपयोः सं० * तैरिति * आदेशैरित्यर्थः । उक्तदोषमपाकर्तुमाह—* लत्वस्येति * । * जातिरूपतयेति * लडादिषु ल-इत्यनुगतप्रतीत्या तत्सिद्धिरित्यभिमानः ।

अव्यभिचाराच्च । आदेशानां भिन्नतया परस्परव्यभिचरितत्वात् । लः कर्मणीत्याद्यनुशासनानुगुण्याच्च । नह्यादेशेऽर्थवत्त्वाबोधकमनुशासनमुपलभामहे इत्याहुः । तान् स्वसाधकयुक्तिभिर्निराचष्टे—

प्रभा

चाराच्च न लत्वं शक्ततावच्छेदकम्, किन्तु तिप्त्वादिकमेवेत्याहुः।तथाच उक्तविप्रतिपत्तौ प्राचीननैयायिकैः सहैव विवादो बोध्यः । अव्यभिचाराच्चेति—यत्र यत्र तिपा, तसा, झीत्यादिना च यत्र यत्रात्मनि कृतिविषयकोपस्थितिस्तत्र तत्रात्मनि तादृशोपस्थित्यव्यवहितपूर्वक्षणावच्छेदेन 'लपदं कृतिविषयकबोधजनकवत्' इति शक्तिज्ञानस्य सत्त्वेन कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वरूपकारणत्वं लकारनिष्ठशक्तिज्ञाने सिद्ध्यति । तिबादिपदनिष्ठशक्तिज्ञानन्तु यत्र तिपा कृतिबोधः, तत्र तत्पदनिष्ठशक्तिज्ञानं नास्तीत्यभावस्य सत्त्वेन तत्पदनिष्ठशक्तिज्ञानत्वमभावीयप्रतियोगितावच्छेदकमेवेति तज्ज्ञानस्य कारणत्वं न स्यात्, व्यभिचारात् । एवं यत्र तसादिना कृतिबोधस्तत्र तिप्पदनिष्ठशक्तिज्ञानं नास्तीत्यभावमादाय तिप्पदनिष्ठशक्तिज्ञानत्वमप्यभावीयप्रतियोगितावच्छेदकमेवेति तस्यापि व्यभिचारात् कारणत्वासिद्धिरिति चालनिन्यायेनैकेन शक्तिज्ञानेन कृतिबोधेऽपरशक्तिज्ञानस्यासत्त्वात्कस्यापि तिबादिपदनिष्ठशक्तिज्ञानस्य कारणत्वं न स्यात् । लकारस्य वाचकत्वे तु केनाऽपि लादेशेन कृतिबोधस्थले आदेशस्मृतलपदनिष्ठशक्तिज्ञानं नास्तीत्यस्य वक्तुमशक्यतया लकारनिष्ठशक्तिज्ञानस्याव्यभिचारित्वम् । व्यभिचारित्वादिति—यत्रैकमेव कार्यम्, तत्कारणञ्चानेकं तत्रैकस्मात्कारणात्कार्यसिद्धौ कारणान्तरस्याभावाद् व्यभिचारः । यदि तु कार्यमपि प्रतिकारणं भिन्नं तदा व्यभिचाराभावः । एवञ्च यदा कृतिविषयकोपस्थितिरूपमेकमेव कार्यं तदा व्यभिचारः । यदि तु तिप्पदनिष्ठशक्तिज्ञानविशिष्टकृतिविषयकोपस्थितिम्प्रति तिप्पदनिष्ठशक्तिज्ञानं कारणम् । उपस्थितौ शक्तिज्ञानवैशिष्ट्यञ्च—स्वाव्यवहितोत्तरत्व—स्वसामानाधिकरण्योभयसम्बन्धेन । एवं तसपदनिष्ठशक्तिज्ञानविशिष्टकृतिविषयकोपस्थितिम्प्रति तसपदनिष्ठशक्तिज्ञानं कारणम् । वैशिष्ट्यञ्च—पूर्ववत्तदा व्यभिचाराभावादाह—लः कर्मणीति—अनेन लत्वस्य शक्ततावच्छेदकत्वे पाणिनिसम्मतिरपि सूचिता । आदेशेऽर्थेति—आदेशानामर्थवत्ताबोधकं किमपि पाणिनिसूत्रं नोपलभ्यते इति भाव । यद्यपि शब्दत आदेशानामर्थवत्त्वं पाणिनिना न बोधितन्तथापि 'स्थानेऽन्तरतमः' इति सूत्रनिर्माणेन, भाष्यकृता चास्य सूत्रस्य प्रयोजनम् 'तस्थस्थमिपां तान्तंतामः' इत्यत्र 'एकार्थस्यैकार्थः' 'द्व्यर्थस्य द्व्यर्थः' बह्वर्थस्य बह्वर्थो यथा स्यात्' इत्युक्त्या यदर्थाभिधानसमर्थः स तदादेश इति प्रयोजनं प्रदर्शयता, आदेशानामर्थवत्त्वं सूचितन्तथापि तदजानतामियमुक्तिः । तान्=नैयायिकादीन् । स्वसाधकेति—स्वकीयं तन्मतं प्रयोगान्तर्गतश्रूयमाणादेशानामेव वाचकत्वमिति तन्मतपोषकयुक्तिभिर्नैयायिकादीन् । तन्मतं निराचष्टे—प्रत्याचष्टेत्यर्थः ।

दर्पणव्याख्या।

नव्यास्तु—शक्तताऽवच्छेदकतया न लसिद्धिः । सर्वलकारसाधारणलत्वस्यातिप्रसक्तत्वाद्दशलकारमात्रवृत्तेः शक्तिमदात् पूर्वमनुसरियते वचनित्यादौ कृतिबोधापत्त्या तस्य शक्तताऽवच्छेदकत्वासम्भवाच्च तिप्त्वतस्त्वादिकमेव तदवच्छेदकमित्याहुः । तथाचोक्तविप्रतिपत्तौ प्राचीनैः सह विवाद एवेति बोध्यम् ।

* अव्यभिचाराच्चेति * लत्वार्थावच्छिन्नशक्तिग्रहस्य कृतिबोधात् पूर्वं नियमेन सत्त्वात् तिप्त्वादीनां शक्यतावच्छेदकत्वे तु तदवच्छिन्नशक्तिग्रहं विनाऽपि तसादिशक्तिग्रहवत् कृतिबोधेनाऽऽदेशवाचकतावादिमते व्यभिचारो दुर्वार इति भावः । ननु कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशाद्वैयर्थ्यमाचरित आह—* लः कर्मणीतीति * । * इत्याहुरिति * तथाचादेशानामेव वाचकत्वं अप्रमाणमिति तद्भावः । * स्वसाधकेति * । स्वमतपरिपोषकेत्यर्थः । व्यवस्थितेरित्यादि·

व्यवस्थितेर्व्यवहृतेस्तद्धेतुन्यायतस्तथा ।
किञ्चाऽख्यातेन शत्राद्यैर्लडेव स्मार्यते यदि ॥ ६२ ॥
कथं कर्तुरवाच्यत्त्ववाच्यत्वे तद्विभावय ।

व्यवस्थानुरोधात् प्रयोगान्तर्गता एव वाचकाः, नतु तैः स्मृता इत्यर्थः । तथाहि—पचती-त्यादौ लकारमविदुषो बोधात्र तस्य वाचकत्वम् । नच तेषां तिङ्क्षु शक्तिभ्रमाद् बोधः, तस्य भ्रमत्वे मानाभावात्, आदेशिनामपि तत्तद्वैयाकरणैः स्वेच्छया भिन्नानामभ्युपगमात्, कः शक्तः को नेति

प्रभा

व्यवस्थितेरिति—हेतुत्वद्योतकस्य व्यवस्थितेरित्यादिपञ्चम्यन्तत्रयस्य पूर्वकारिकोत्तरार्द्धगते 'बोधकाः' इत्यत्रान्वयः । तथाच व्यवस्थित्यादिहेतोः साधुशब्दान्तर्गता आदेशा एव वाचकाः, नतु तत्स्मृताः स्थानिनो लादय इति दर्शयन्नादौ व्यवस्थितेरिति प्रथमं पञ्चम्यन्तं विवृणोति-व्यवस्थानुरोधादिति-प्रमाणैर्वस्तुतत्त्वावधारणं व्यवस्था । अविदुष इति—तद्धर्मावच्छिन्नविषयकबोधम्प्रति तद्धर्मावच्छिन्नार्थ-निरूपितवृत्तिविशिष्टज्ञानं हेतुः । ज्ञाने वृत्तिवैशिष्ट्यञ्च—स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्य—स्वाश्रय-पदविषयकत्वोभयसम्बन्धेन । तथाच लकारादिस्थानिनो वाचकत्ववादिनये 'लपदं कृतित्वावच्छिन्न-विषयकबोधजनकतावत्' इत्याकारिका या वृत्तिस्तस्या व्यवहारादिना यदा कदाचिज्ज्ञानं जातम् । तज्ज्ञानञ्च तृतीयक्षणे नश्यति । परन्तु तस्माज्ज्ञानादुक्तवृत्तिविषयकः संस्कार उत्पन्नः, स च स्थायी उच्चारितपदश्रवणे-नोद्बुद्धात् तस्मात्संस्कारात्स्मरणात्मकं वृत्तिज्ञानं जायते । तदेव च ज्ञानं वृत्तिविशिष्टम् । पदश्रोतृनिष्ठवृत्ति-स्मरणात्मकज्ञाने वृत्तिविषयकोद्बुद्धसंस्कारसामानाधिकरण्यं वृत्त्याश्रयपदविषयकत्वञ्च वर्तत इति तादृश-ज्ञानात्कृतिविषयोपस्थितिरपेक्ष्यते । लकारस्यैव वृत्त्याश्रयत्वत्वयादिमते वृत्त्याश्रयं लकारमजानतस्तित्रादिकञ्च शृण्वतोऽवैयाकरणस्य बोधानापत्तिः । तस्यापि बोधदर्शनेनान्वयव्यतिरेकाभ्यां तिबाद्यादेशानामेव शक्तत्वम्, नतु लादिस्थानिन इत्यनुमीयते इति भाव. । तस्य=स्थानिनो लकारस्य । तेषाम्=लकारमविदुषाम् । भ्रमादिति-कृतिनिरूपितशक्त्यभाववत्सु तिङ्पु तादृशशक्तिमत्ताज्ञानादित्यर्थः । तस्य=तिङि शक्तिमत्वज्ञानस्य । मानाभावादिति=बोधोत्तरकाले 'तिङ्पदं न कृतिबोधकम्' इति भ्रमत्वसाधकबाधरूपमानाभावादित्यर्थः । स्थानिनां शक्तिमत्त्वे बाधकमत आह—आदेशिनामिति—स्थानिनामित्यर्थः । लाघवेन प्रक्रियानिर्वाहार्थमेव स्थानिनां कल्पनया भिन्नभिन्न-न्नादेशानां बाहुल्यमेव तिङादिपु शक्तिमत्त्वे बाधकमत आह—तत्तदिति—शाकटायनापिशल्यादिभिरित्यर्थः । लाघवेन प्रक्रियानिर्वाहार्थमेव स्थानिनां कल्पनया भिन्नभिन्न-वैयाकरणाः स्वस्वेच्छया लङ्लिङादिवत् 'कङ्—किट्, खट्—खिट्', गङ्—गिट्, इत्यादिरूपेण स्थानिनां कल्पनासम्भवेन स्थानिनामप्यनियततया लकारो वाचकः, ककारादयः स्थानिनो न वाचका इत्यत्र इदमेव वाचकमिति निर्णयो न स्यात् । किञ्च विनिगमनाविरहेण सर्वेषां वाचकत्वे लाघवाभावः । अष्टादशतिङः, शतृशानचौ कसुकानचौ' इति द्वाविंशतिलादेशाः, स्थानित्वस्य च सर्वेषां वर्णानां कल्पयितुं शक्यतया प्रत्युत

दर्पणव्याख्या

व्यवस्थितेरित्येतद्विवृणोति-* व्यवस्थानुरोधादिति * पञ्चम्यन्तत्रयस्य पूर्वकारिकास्थबोधकपदार्थेऽन्वयं प्रदर्शयन्नादौ 'प्रमाणेन पदार्थनिर्द्धारण व्यवस्था' तदन्यथाऽनुपपत्तेरित्यर्थः । *शक्तिभ्रमादिति* लत्वावच्छिन्ननिष्ठवाचकत्वस्य तनारो-पादित्यर्थः । * मानाभावादिति * विषयबाधस्यैव भ्रमत्वे तन्त्रतया प्रकृते बोधकत्वव्यवस्थाबाधादिति भावः । *वैयाकरणैः*—शाकटाय-नन्यादेशानां बहुत्वमेव तत्र शक्तिस्वीकारे बाधकमत आह-*आदेशिनामपीति* ।

व्यवस्थानापत्तेश्च । सर्वेषां शक्तत्वे गौरवम् , व्यभिचारश्चास्त्येव।आदेशानां प्रयोगान्तर्गततया नियतत्वाद् युक्तं तेषां शक्तत्वम्। तथाचादेशिस्मरणकल्पना नेति लाघवम्। साधकान्तरमाह—व्यवहृतेरिति—व्यवहारस्तावच्छक्तिग्राहकेषु मुख्यः ।

प्रभा

स्थानिनां वाचकत्वे एव गौरवमित्याह—सर्वेषां शक्तत्वे गौरवमिति। व्यभिचार इति—यथा बहूनां तिबाद्यादेशानां वाचकत्वे त्वया ( नैयायिकेन ) व्यभिचार उक्तस्तथा तव मतेऽपि बहूनां स्थानिनां वाचकत्वेऽपि यदा एकेन स्थानिना बोधस्तदा स्थान्यन्तरं नास्तीति 'चालनि'न्यायेन व्यभिचारात् कस्यापि स्थानिनो वाचकत्वं न स्यादिति भावः । कारणतावच्छेदककोटौ स्थानित्वं निवेश्य व्यभिचारवारणे तु गौरवादिदोषपतनमस्य तत्परिहारस्य चोभयोः स्थान्यादेशवाचकतावादिनोः समत्वेऽपि स्थानिस्मरणकल्पनाऽभावरूपं लाघवम् , प्रयोगघटकत्वेन शीघ्रोपस्थितिकत्वं स्थानिज्ञानशून्यानां तिबादेशं च शृण्वतामवैयाकरणानां बोधदर्शनाच्चादेशानां वाचकत्वे विनिगमकमित्यादेशानां वाचकत्वमेव न्याय्य इत्याह—तथाचेति । ननु बोधकत्वरूपा यदि शक्तिस्तदा तिङाद्यादेशादिभिरेव बोधात् तेष्वेव बोधकत्वरूपा शक्तिः सिद्ध्यति। परन्तु नैयायिकमते ईश्वरसंकेतरूपा शक्तिः, पदार्थान्तरं वा। तस्याश्च शक्तेः पाणिन्यादिसूत्रेण स्थानिष्वेव प्रतिपादनात् ईश्वरसंकेतरूपा पदार्थान्तररूपा वा सा कल्प्यतेति तिबादिषु शक्त्यसिद्धिः । यद्यपि स्थानिस्मरणरूपकल्पनागौरवमत्र पक्षेऽतिरिच्यते। तथापि प्रमाणतः सिद्धार्थे गौरवस्यादोषत्वमित्यत आह—प्रयोगान्तर्गतेति—प्रयोगान्तर्गतादेशानां वाचकत्वे मानं हेत्वन्तरमित्यर्थः। व्यवहृतेरिति—व्यवहृतिर्व्यवहारस्तत इत्यर्थः। व्यवहारश्च प्रकृते प्रतिपादकश्रावकयोः शब्दद्वारा परस्पराभिप्रायावेदनरूपः। व्यवहार इति—'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः' इत्यभियुक्तोक्ते व्यवहारस्य शक्तिग्राहकत्वम्। धातुप्रकृतिप्रत्ययादीनां शक्तिज्ञानं व्याकरणाज्जायते। उपमानम्=उपमितिकरणम्=सादृश्यज्ञानम्। अज्ञातशक्तिकपदे सादृश्यज्ञानेन यच्छक्तिज्ञानं तदेवोपमितिः। यथा 'गौरिव गवयः' इति वाक्यार्थज्ञानानन्तरं गवयदर्शनेन यद्गोसादृश्यज्ञानं तेन 'गवयपदं पुरो दृश्यमानार्थनिरूपितशक्तिमत्' इति यच्छक्तिज्ञानं तदुपमानात्=सादृश्यज्ञानात्। कोशः=शब्दतदर्थप्रतिपादको ग्रन्थविशेषः। तत्र शक्तिज्ञानं यथा 'हर्म्यादिर्धनिनां वासः, प्रासादो देवभूभुजाम्' इत्यतः। वस्तुतस्तु कोशस्याप्तवाक्यत्वेनैव गतार्थत्वात्पृथगुपादानं 'ब्राह्मणवसिष्ठ' न्यायेनेति गुरवः। आप्तवाक्याच्छक्तिग्रहः।

प्रभा

आप्तोऽत्र शब्दप्रयोगहेतुभूतयथार्थज्ञानवान् । यथा 'कोकिलः पिकपदवाच्यः' इत्याप्तवाक्यात् कोकिले
पिकपदशक्तिग्रहः । व्यवहारतः शक्तिग्रहो यथा—आज्ञापकप्रयोजकवृद्धेन 'घटमानय' इत्युक्तम् । ततः
आज्ञाप्यप्रयोज्यवृद्धेन घटः आनीतः, ततो 'गामानय' इत्युक्ते गौरानीयते इति गोघटशब्दयोरन्वयव्यतिरेकाभ्यां
गोत्वावच्छिन्ने, घटत्वावच्छिन्ने च शक्तिरवधार्यते । वाक्यशेषात्=प्रकृतार्थोपपादकान्तिमवाक्याच्छक्ति-
ग्रहो यथा—'यवमयश्चरुर्भवति' इति यज्ञप्रकरणे उक्तम् । तत्र यवपदस्य क्व शक्तिरित्याकाङ्क्षायां वाक्य-
शेषेण 'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमानास्तिष्ठन्ति' इति । 'वसन्ते सर्वसस्यानां जायते
पत्र शातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ॥' इति वाक्यशेषे दीर्घशूकस्य वर्णनाद् दीर्घशूके
एव शक्तिर्न तु म्लेच्छप्रसिद्धेऽर्थे प्रियङ्गौ । तत्र तु म्लेच्छानां शक्तिभ्रमात्प्रयोग इति मुक्तावलीकारादयः ।
वस्तुतस्तु यवशब्दस्य दीर्घशूके शिष्टानां व्यवहारदर्शनात्तत्र शक्तिः । प्रियङ्गौ 'सर्षपविशेषे' म्लेच्छानां
व्यवहारात्तत्रापि शक्तिः, इत्थं नानाशक्तिकत्वात् । 'यवमयश्चरुः' इत्यत्र कस्य ग्रहणमित्याशङ्कायां
सिद्धान्तसूत्रम्—'शास्त्रस्था वा तन्निमित्तत्वात्' ( मी० द० १ अ० ३ पा० ५ अ० ) शास्त्रस्था शिष्टा हि
अर्थनिर्णायका इति शेषः । तन्निमित्तत्वात्=शिष्टनिमित्तत्वात् । वदार्थस्येति शेषः अत्र भाष्यम्—'यः
शास्त्रस्थानां स शब्दार्थः । के शास्त्रस्थाः ? शिष्टाः 'कः पुनरार्यावर्तः ? प्रागादर्शात् प्रत्यक् कालकवनात्
दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम् । एतस्मिन्नार्यावर्ते निवासा ये ब्राह्मणाः कुम्भीधान्या अलोलुपा
किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारङ्गतास्तत्रभवन्तः शिष्टाः' इति महाभाष्ये ( ६।३।१०९ ) पतञ्जलिः ।
'तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु ( वदार्थेषु ) च । तत्र शिष्टा निमित्तं श्रुतिस्मृत्यवधारणे । तर्हि एत
समामनन्ति यवमयेषु करम्भपात्रेषु वाक्यशेषम्—'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्ति-
ष्ठन्ति' इति दीर्घशूकान् यवान् दर्शयति वेद इति । शिष्टा हि वाक्यशेषेण 'यत्रान्या' इत्यादिना यवपदवाच्या
दीर्घशूका एवेति निर्णयन्ति । एवञ्च 'तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्' इत्यादिसूत्रार्थपर्या-
लोचनेन मञ्जूषाकारसम्मत्या च शक्तिविषयकतात्पर्यनिर्णायकोऽयं वाक्यशेषो न तु शक्तिग्राहक इति
प्रतीयते । तस्माद्वाक्यशेषाच्छक्तिग्रहस्य नैयायिकोक्तमिदमुदाहरणं चिन्त्यम् । तदुदाहरणन्तु—'अश्ववाल
प्रस्तरः' इति वैदिकवाक्ये अश्वस्य वालः ( केशः ) इति प्रतीयते । परन्तु अश्ववालपदमत्र काशनिर्मितः
शक्तिमत् 'यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत्सोऽपः प्राविशत् । स वालधौ गृहीतस्तान् वालान्मुक्त्वा
विवेश ह । ते वाला काशता प्राप्ता कार्य्योऽतः प्रस्तरस्तु तैः' इति वाक्यशेषात् ।

एवम् 'एक्षश्यो विधृतो' इति वादकथायां ऐक्ष्वाकुवंश लोकाद् 'व्यवहारात्' इत्यवयवपरम्, वाक्यशेषात्
प्रकाशमूलके इति बोध्यम् । विवृते=विवरणात् शक्तिग्रहः । विवरणञ्च—तत्समानार्थकशब्दान्तरेण तदर्थक-
थनम्, तत्समानार्थकवाक्येन वा । यथा सुत्रामा-इन्द्रः । पचति=पाकं करोति' इति । सिद्धपदस्य सान्निध्यात्=
प्रसिद्धार्थकपदसम्बन्धात् । यथा 'इह सहकारतरौ मधुरं पिको रौति' इत्यत्र सहकारतरौ रौति' इत्यादि-
सान्निध्यात् पिकपदस्य कोकिले शक्तिग्रहः । वस्तुतस्तु सिद्धपदसमभिव्याहारोऽपि अनुमानविधयैव शक्ति-
ग्राहकः । तद्यथा—'इह आम्रवृक्षे मधुररावकर्ता पिकपदवाच्यः' इत्येव सान्निध्याद् बोधः । पिकपदस्य
शक्तिग्रहाभावात्कोकिलत्वेन रूपेण बोधासम्भवात् । आम्रतरौ रुवन्तं कोकिलं चक्षुषा दृष्ट्वा 'कोकिलः पिक-
पदवाच्यः, सहकारतरौ मधुररावकर्तृत्वात्' इत्यनुमानादेव कोकिलत्वेन शक्तिग्रहः । तत्र शक्तिग्राहकेषु व्यव-
हारो मुख्यः । तत्रान्यापेक्षया मुख्यत्वञ्च—शक्तिग्राहकान्तरानपेक्ष्य शक्तिग्राहकत्वम् । व्याकरणादीनां शक्ति-
ग्राहकत्वं तु व्यवहारज्ञानमपेक्ष्यते । तथाहि—'तस्यापत्यम्' इत्यादिना अणादिपदस्य शक्तिग्रहेऽपत्यादिपद-
शक्तिज्ञानमपेक्ष्यते, अपत्यपदस्य शक्त्यज्ञानेऽणपदस्य शक्तिग्रहासम्भवात् । अपत्यपदस्य शक्तिज्ञानन्तु नाहि

स च श्रूयमाणतिङादिष्वेवेति ते एव वाचका इत्यर्थः। किञ्च तद्धेतुन्यायत इति—

### प्रभा

सदर्थकपदान्तरशक्तिज्ञानेन, पदान्तरशक्तिज्ञाने पदान्तरशक्तिज्ञानस्यापेक्षणेऽनवस्थाप्रसङ्गात्। किन्तु अपत्यपदे व्यवहारेणैव शक्तिज्ञानं वाच्यम्। व्यवहारेण शक्तिज्ञाने च नहि शक्तिग्राहकान्तरापेक्षेति व्यवहारे शक्तिग्राहकान्तरानपेक्षत्वरूपं मुख्यत्वं सिद्धम्। स च=व्यवहारशक्तिग्रहश्च। ते=तिबाद्यादेशाः। यत्तु प्रवर्तकवृद्धस्य प्रवृत्तिप्रयोजकलिङादिप्रत्ययघटितपदप्रयोगद्वारा आज्ञाप्यवृद्धस्य प्रवृत्तिनिवृत्तिरूपव्यवहारेणोदासीनबालानां शक्तिज्ञानसम्भवेऽपि लिङाद्यघटितपदघटितवाक्यघटकपदानां शक्तिज्ञानासम्भवः, तेषां व्यवहाराविषयत्वादिति तन्न, प्रवर्तनार्थकप्रत्ययघटितवाक्ये 'घटमानय' पटं नय, इत्यादौ व्यवहारतः कार्य्यान्विते घटादौ शक्तिग्रहेऽपि आवापोद्वापाभ्यां तादृशवाक्यघटकपदानां शुद्धघटाद्यर्थेऽपि शक्तिग्रहे बाधकाभावात्, कार्य्यान्वितघटविषयकशाब्दत्वावच्छिन्नं प्रति कार्य्यान्वितघटत्वावच्छिन्नविषयकशक्तिज्ञानं कारणमिति कार्य्यकारणभावमादाय कार्य्यान्वितघटशाब्दबुद्धित्वस्य कार्यतावच्छेदकत्वापेक्षया घटविषयकशाब्दबुद्धित्वस्य कार्य्यतावच्छेदकत्वे घटशक्तिज्ञानत्वस्य कारणतावच्छेदकत्वे लाघवाच्च। किञ्च कार्य्यान्वितघटादिविषयकबोधम्प्रति कार्य्यान्वितघटादिविषयकशक्तिज्ञानस्य कारणत्वे 'चैत्र ? पुत्रस्ते जातः 'कन्या ते गर्भिणी' इत्यादिप्रवृत्तिप्रयोजकक्रियावाचकपदाघटितवाक्येन शाब्दबोधानापत्तौ श्रोतुश्चैत्रादेः सुखदुःखानापत्तिः। नचात्मान्तरस्थसुखदुःखयोर्ज्ञातुमशक्यतया तादृशवाक्यार्थबोधजन्यसुखदुःखे नैवोत्पद्येते इति वाच्यम्, मुखप्रसादमुखमालिन्यादिदर्शनेन लिङ्गेन सुखदुःखयोरनुमानस्यानुभवसिद्धत्वात्। नचोक्तस्थलेऽपि 'तं पुत्रं पश्य' इति कार्य्यत्वबोधकपदाध्याहारेण कार्य्यान्वितस्यैव बोध इति वाच्यम्, पुत्रो जातः, मृतः, दग्धश्च इत्युक्तौ तद्दर्शनासम्भवेन 'तं पश्य' इत्यध्याहारस्य कर्तुमशक्यत्वात्। एतेन व्यवहारे लोडाद्यादेशाघटितप्रयोगस्यैव दर्शनेन तत्रादेशेषु व्यवहारतः शक्तिसिद्धावपि प्रवर्तकक्रियारहितेषु 'देवदत्तः पचति' रामस्य, आगत्य, इत्यादीनां व्यवहाराविषयत्वेन तद्घटकादेशेषु 'लः कर्मणि' इत्याद्यनुशासनेनैवार्थनिर्णयस्यावश्यकतया लादिरूपस्थानिनां वाचकत्वसिद्धौ कार्य्यान्वितार्थबोधकवाक्यघटकपदेष्वपि स्थानिनामेवानुशासनानुगुण्याद् वाचकत्वमस्तु, अर्धजरतीयस्यानौचित्यादित्यपास्तम्, व्यवहारेणैवोक्तरीत्या सर्वत्र पदान्तर्गतानामेव शक्त्यवधारणात्। नन्वाद्यशक्तिग्रहस्य व्यवहारेण वाक्येऽनेव सम्भवेऽपि पश्चादावापोद्वापाभ्यां लाघवात् पदशक्तिग्रहे वाक्यशक्तेस्त्यागस्तथा व्यवहारादादेशेषु शक्तिग्रहे ऽपि स्थान्यर्थबोधकानुशासनानुरोधेन लाघवेन चादेशेषु शक्तिग्रहस्याप्रामाण्यकल्पनेन स्थानिनामेव वाचकत्वसिद्धिरत आह—किञ्चेति। तद्धेतुन्यायत इति—तस्य=कारणीभूतस्य हेतुस्तद्धेतुः, सचासौ न्यायश्च तद्धेतुन्यायस्तस्मादित्यर्थः। तद्धेतोरेव कारणत्वमस्तु किं तेन (तस्य कारणत्वे-

### दर्पणव्याख्या

* सचेति * व्यवहारजन्यशक्तिग्रहश्चेत्यर्थः * तिङादिष्वेवेति * व्यवहारेण पूर्वं वाक्ये तद्ग्रहेऽप्यावापोद्वापाभ्यां पश्चात्तद्घटकतिङादिष्वेव तन्निर्णयादिति भाव। ननु प्रयोगान्तर्गतवर्णेषु सर्वेसिद्धव्यवहारेण शक्तिग्रहे 'घटमानय' इत्याद्यन्तर्गतशबादीनामपि वाचकत्वापत्तिः। नच सेष्टा, विकरणानां नैरर्थक्यमिति सिद्धान्तव्याकोपात्। किञ्चानयनादिव्यवहारस्य लोडाद्यन्तप्रयोगं विनाऽसम्भवेन तादृशप्रयोगान्तर्गतवर्णानां तेन तद्ग्रहसिद्धावपि तद्रहितवाक्यान्तर्गतवर्णेषु वाचकत्वमनुशासनेनैवेष्टव्यम्। 'स्थान संवादेशिनां वाचकत्वसिद्धावन्यथाप्यादेशेषु सा कल्प्येत्यस्वरसादाह— * किञ्चेति * । * तद्धेत्विति * "तद्धेतोरेव तत्त्वे किं तेन" इति न्यायाकारः। लाघवमूलकश्चायं न्यायः। उभयोर्हेतुत्वे

लकारस्य बोधकत्वे 'भू ल्' इत्यतोऽपि बोधापत्तिः स्यात्। तादृशबोधे भवतीति सम
भिव्याहारोऽपि कारणमिति चेत् तर्ह्यावश्यकत्वादस्तु तादृशसमभिव्याहारस्यैव वाचकत्वशक्तिः।

प्रभा

न) इति न्यायाकारः। अयम्भावः—यथा समाप्तिं प्रति मङ्गलस्य कारणत्वं वदतां मते भोगादिना
नाश्यविघ्नध्वंसपूर्वकसमाप्तौ विघ्नध्वंसस्य नियतपूर्ववर्तित्वेन कारणतायाः क्लृप्तत्वेन मङ्गलस्य-
लेऽपि विघ्नध्वंसेनैव समाप्त्युपपत्तौ मङ्गलस्यान्यथासिद्धत्वेन कारणत्वाभावः। नच विघ्नध्वंसस्य
मङ्गलव्यापारत्वेन व्यापारेण व्यापारिणो नान्यथासिद्धिः, अन्यथा दण्डकुलालादिव्यापारस्यैव घटं
प्रति कारणत्वे दण्डादीनामप्यन्यथासिद्धत्वापत्तिरिति वाच्यम्, यत्र व्यापारिणः प्रमाणबोधितकारण-
त्वोपपत्तये व्यापारस्य कारणत्वमुपेयते तत्रैव व्यापारेण व्यापारिणोऽन्यथासिद्धत्वाभावकल्पनात्। यथा
'स्वर्गकामः सोमेन यजेत' इति श्रुत्या बोधितकारणताकक्रियारूपयागस्य चतुःक्षणमात्रस्थायितया कतिपय-
वर्षानन्तरं सम्भावितमरणोत्तरभाविस्वर्गंप्रति प्रागव्यवहितक्षणवर्तित्वाभावेन कारणत्वासम्भवात् तत्कारण-
त्वोपपत्तये स्वर्गाव्यवहितप्राक्क्षणस्थायपूर्वरूपव्यापारेण यागरूपव्यापारिणो नान्यथासिद्धिः। लाघव-
मूलकं 'तद्धेतुन्यायतः' इति न्यायं सङ्गमयति—लकारस्येति। भू ल् इति—नच 'ल्' इत्यतोऽपीत्येव वक्तव्ये
भूग्रहणं व्यर्थम्, न केवला प्रकृतिः प्रयोक्तव्या नापि केवलप्रत्ययः' इति भाष्योक्तन्यायानुसारेणोभयोक्तेः।
तिबाद्यादेशैः स्मृतस्य लकारस्य बोधकत्वे प्रत्यक्षश्रुतस्य बोधकत्वं सुतरां सिद्ध्येदिति भावः। नच भू ल् इत्यत्र
निरयविध्युद्देश्यतावच्छेदकानाक्रान्तत्वे सति शास्त्रजन्यबोधीयविधेयताश्रयघटितस्वरूपस्य तदुव्यङ्ग्यजाति-
रूपस्य वा साधुत्वस्याभावेनासाधुत्वज्ञानं बोधप्रतिबन्धकम्, असाधुनाऽपभ्रंशेनापि बोधदर्शनादसाधुत्व-
ज्ञानस्याप्रतिबन्धकत्वात्। स्मृते लकारेऽपि असाधुत्वस्य सत्त्वेन ततोऽपि बोधानापत्तेश्च। बोधापत्तिरिति—
कर्त्रीयबोधापत्तिरित्यर्थः। नचेष्टापत्तिः, अन्यथा लकारस्याबोधकत्वे 'यदर्थाभिधानसमर्थः स तस्यादेशः' इति
न्यायविरोध इति वाच्यम्, प्रक्रियालाघवाय कल्पितबोधकत्वमादाय प्रक्रियानिर्वाहार्थमेव वैयाकरणैः स्वी-
कारेण तात्त्विकबोधकत्वस्य लकारेऽभावेऽपि न्यायविरोधाभावात्। तादृशबोध इति—'भू ल्' इत्यत एककर्तृक-
वर्तमानकालिकभवनानुकूलव्यापारविषयक इत्यर्थः। समभिव्याहार इति—पूर्वापरीभावापन्नपरिनिष्ठितसमुदा-
यघटकयावद्वर्णोच्चारणमित्यर्थः। आवश्यकत्वादिति। परिनिष्ठितसमुदायघटकयावद्वर्णोच्चारणं विना के
वललकारेण बोधादर्शनेन समभिव्याहारज्ञानस्य कारणताया आवश्यकत्वादित्यर्थः। समभिव्याहारस्यैवेति—
एवकारेण लकारव्यवच्छेदः। तद्धेतुन्यायतः=तस्य=कार्यजनकत्वेनाभिमतनिष्ठकारणत्वस्य हेतुत्वेनाभिमतो यः
समभिव्याहारादिस्तेनैव लाघवमूलकन्यायेन समभिव्याहारस्यैव कारणत्वं स्यात्, लकारस्य त्वन्यथासिद्धत्वं
स्यादिति भावः। वाचकत्वशक्तिः=बोधजनकत्वरूपा शक्तिः। पौर्वापर्यभावरूपस्य समभिव्याहारस्य वाचक-

दर्पणव्याख्या

गौरवाच्च सङ्गमयति —* लकारस्येति *। * बोधापत्तिरिति * भवनकर्तृबोधापत्तिरित्यर्थः। न केवलेति न्यायात्
केवलकारस्य प्रयोगानर्हत्वात् 'भू' इत्युक्तम्। लकारदशायां बोधोऽसम्भवान्न भवतीत्युक्तम्। तथाच 'भवति इत्यत्रानु-
संहितालकाराद्यथा कर्तृबोधस्तथा प्रत्यक्षश्रुतलकारादपि कर्तृबोधापत्तिरिति भावः।
नचासाधुत्वज्ञानं प्रतिबन्धकम्, शक्तस्वरूपसाधुताया अपि सत्त्वादपभ्रंशादपि बोधोदयेन तदीयज्ञानस्याप्रतिबन्ध
कत्वाच्चेति भाव। * तादृशेति * आपादितकर्तृबोधे इत्यर्थः। समभिव्याहार इति * पूर्वापरीभावापन्नवर्णसमुदाय
इत्यर्थः, आवश्यकत्वाच्च विना लकारेणापि बोधजनने नोक्तसमभिव्याहारस्यापेक्षत्वादित्यर्थः। * वाचकत्वशक्तिरिति *

अन्यथा लकारस्य वाचकत्वम्, समभिव्याहारस्य कारणत्वञ्चेत्युभयं कल्प्यमिति गौरवं स्यात्। तथाच तादृशसमभिव्याहृता वर्णा वेत्यत्र विनिगमनाविरहात् प्रयोगान्तर्गता वर्णा वाचका इति सिद्ध्यतीति भावः।

प्रभा

स्वसाधनं वक्ष्यमाणवर्णस्फोटोपयोगीति नादौ प्रतिज्ञा तेन स्फोटस्य वाचकत्वेन विरुद्ध्यत इति भावः। एतेन साध्वन्तर्गतवर्णानां वाचकत्वसाधनमप्राप्तकालिकमित्यपास्तम्, तादृशवाचकत्वसाधनस्य वर्णस्फोटोपयोगित्वात्। तिबाद्यादेशानां वाचकत्वमनभ्युपगच्छतां स्थानिनां वाचकत्वञ्च वदतां मते गौरवं द्रढयति—अन्यथेति-तिबाद्यादेशसमभिव्याहारस्य वाचकत्वानङ्गीकार इत्यर्थः। ननूक्तरीत्या वर्णानां पूर्वापरीभावविशिष्टवर्णसमुदायरूपसमभिव्याहारस्य वाचकत्वं सिद्धम्, न तु साधुप्रयोगान्तर्गतवर्णानामत आह—तथाचेति। तादृशसमभिव्याहारे इति—अव्यवहितोत्तरत्वसम्बन्धेन धातुविशिष्टो यो विकरणस्तद्विशिष्टो यस्तिस्तद्रूपः=भवति शब्दरूप इत्यर्थः। पौर्वापर्यविशिष्टवर्णसमुदाय इति यावत्। समभिव्याहृता इति पूर्वापरीभावापन्नपरिनिष्ठितप्रयोगघटका इत्यर्थः। विनिगमनेति—द्वयोः पक्षयोर्मध्ये एकस्यैव पक्षस्य साधिका युक्तिर्विनिगमनेत्यर्थः। वस्तुतस्तु वर्णा एव वाचकाः, प्रत्येकावृत्तिनो धर्मस्य समुदायावृत्तित्वनियमाद् वर्णानामवाचकत्वे समुदायस्य वाचकत्वासम्भवात्तद्धेतुन्यायतस्तेषामेव वाचकत्वौचित्यात्। न च प्रत्येकावृत्तिनोऽपि द्वित्वधर्मस्य समुदायवृत्तित्वदर्शनाद्वाचकत्वस्य प्रत्येकवर्णावृत्तित्वेऽपि समुदायस्य वाचकत्वे बाधकाभाव इति वाच्यम्, द्वित्वस्यापि समवायेन प्रत्येकवृत्तित्वात्। केचित्तु आदेशेन स्थानी स्मार्यते स्मृतश्च स्थानी वाचक इति मते ये आदेशाना वाचकत्वपक्षे वाचकतावच्छेदेनाभिमतास्तिबादयस्त एव तन्मते स्मारकतावच्छेदका वाच्या इति तद्धेतुन्यायेन ते तिबादयो वाचकतावच्छेदका एव सन्तु। नचादेशानां येन केनापि रूपेण स्मारकत्वमस्त्विति न तद्धेतुन्यायावसर इति वाच्यम्, अतिप्रसङ्गात्, यत्किञ्चिद्रूपेण स्मारकत्वे यथेच्छरूपाणां स्मारकतावच्छेदकत्वे गौरवात्। किञ्च एकत्वादिबोधकत्व शास्त्रेणापि एकवचनादिष्वेव बोध्यते, 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति पाणिन्युक्तेश्च। एतेन स्थानिनो लकारादय एव वाचका इति मतं निरस्तम्। नचादेशानां वाचकत्वे तेषां बहुत्वाद्गौरवम्, स्थानिनां यथेच्छकल्पना-

दर्पणव्याख्या

अर्थबोधकरत्वशक्तिरित्यर्थः। नचाप्राप्तकालता, वर्णस्फोटोपयोगित्वात् तस्या इति भावः। वाचकत्वानभ्युपगमे आदेशिनामित्यादिमते गौरवं प्रदर्शयति—* अन्यथेति * उक्तसमभिव्याहारस्य वाचकतानभ्युपगमे इत्यर्थः। * गौरवमिति * यच्चादेशावाचकतावादिमते 'भू ति' इत्यतो विद्यमानभवनकर्तृबोधवारणाय तादृशबोधे 'भवति' इति समभिव्याहारस्य हेतुताया अवश्यकल्प्यत्वाद्, गौरवसाम्येऽपि, तथाप्यादेशिस्मृत्यपेक्षानप्रयुक्तलाघवमक्षुण्णमेवेति भावः। नन्वेतावता समभिव्याहारस्य वाचकत्वमायातम्, न प्रयोगान्तर्गतधातुप्रत्ययघटकानां वर्णानामत आह—* तथाचेति * विनिगमनाविरहादिति * न च वर्णानां बाहुल्येन विनिगमकम्, उक्तानुपूर्व्यास्तदनुगमकत्वादिति भावः। वस्तुतस्तु समभिव्याहारस्य वाचकत्वे तद्घटकानां वर्णानामवच्छेदकतया गौरवम्, वर्णानां वाचकत्वे तूक्तानुपूर्व्या एकस्या एव तत्त्वमिति लाघवमेव विनिगमकमिति बोध्यम्। ननु प्रयोगान्तर्गतवर्णस्मारितवर्णतावच्छेदेन वाचकत्वसिद्धौ प्रकृतायां वाचकत्वाभावमादाय 'भू ति' इत्यतो भवनकर्तृबोधापादनमनुचितम्, तादृशवर्णस्य प्रयोगान्तर्गतवर्णस्मारितत्वात्। तथाच नोक्तयुक्तिः समभिव्याहारस्य वाचकत्वसाधिका। नाप्यत्र तद्धेतुन्यायावकाशः, समभिव्याहारस्य स्वावाचकतावच्छेदकोपयोगितया शाब्दबोधे हेतुत्वेऽपि तद्वाचकताया मानाभावेन तेन तद्धेतुन्यायस्य दुर्वचत्वात्। लकारस्य वाचकत्वे त्वनुशासनस्यैव मानत्वादित्यर्थ-

अपिच लकारस्यैव वाचकत्वे कृतिङोः कर्तृभावनावाचकत्वव्यवस्था स्वसिद्धान्तसिद्धा न स्यादित्याह—किञ्चेति—आदेशानां वाचकत्वे च तिङ्त्वेन भावनायाम्, शानचादिना कर्तरि शक्तिरित्युपपद्यते विभाग इति भावः। नच शानजादौ कृतिलकारार्थः, आश्रयः शानजर्थ इत्यस्तु, "कर्तरि कृत्" इत्यनुशासनादिति शङ्क्यम्, स्थान्यर्थेन

प्रभा

विषयत्वेनादेशानाञ्च नियतत्वेन स्थानिनां ततोऽपि बोधसम्भवात्। अत्र वर्णपदेनादेशानामेव ग्रहणम्।
ननु कत्वगत्वाद्यवच्छिन्नानां समुदायघटकानां तेषामानर्थक्यात्। नर्थवमवयवावृत्तिनो धर्मस्य समुदाया-
वृत्तित्वमिति न्यायविरोधः, तादृशनियमाभावात्। अत एव भाष्येऽर्थवन्तो वर्णा' इति प्रतिज्ञाय
'अनर्थका वर्णाः' इत्यप्युक्तम्। पुनः 'उभयमिदं वर्णोपृन्तम् अर्थवन्तोऽनर्थका इति च। किमत्र
न्याय्यम्, उभयमित्याह। कुतः स्वभावतः। तद्यथा समानमीहमानानामधीयानानां केचिदर्थैर्युज्यन्ते,
अपरे न। नचेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुम्, कश्चिदनर्थक इति कृत्वा
सर्वैरनर्थकैः। तत्र किमस्माभिः शक्यं कर्तुम्। यद्धातुप्रत्ययप्रातिपदिकनिपाता एकवर्णा अर्थवन्तोऽन्यो-
न्येऽनर्थका इति। स्वाभाविकमेतत्। इत्थम् अर्थवत्समुदायघटकवर्णानामानर्थक्यं सिद्धान्तितम्।
तस्मात् 'प्रयोगान्तर्गता वर्णा वाचकाः' इति मूले वर्णपदेनादेशा एव ग्राह्याः। अन्यथा उक्तभाष्यविरोधा-
पत्तिः, स्थानिनां वाचकत्वमादेशानां वेत्यस्यैव प्रकृतत्वाच्च। ननु परिनिष्ठितप्रयोगान्तर्गतादेशस्मारित-
स्थानित्वावच्छेदेन स्थानिनां वाचकत्वस्यैवास्मन्मते प्रकृतत्वेन 'भू ल्' इत्यतो बोधापादनमसङ्गतम्,
स्थानिनो लकारस्यात्रादेशस्मारितत्वाभावात्। तथाच नोक्ता युक्तिरादेशानां वाचकत्वसाधिका। किञ्च
स्थानिनो वाचकत्वसाधकम् 'लः कर्मणि' इत्यनुशासनमुपलभ्यते, आदेशानां वाचकत्वसाधकञ्च न
किञ्चिच्छास्त्रम्। किञ्च पूर्वापरीभावापन्नवर्णसमुदायतिबाद्यादेशरूपसमभिव्याहारस्य लकाररूपस्थानिगत-
शक्तिज्ञानोपयोगितया शाब्दबोधे हेतुत्वेऽपि आदेशाना शक्तिमत्त्वे मानाभावः, नापि तद्धेतुन्यायावसर
इत्यत आह—अपि चेति। कृतिङोरिति— नैयायिकनये तिङः कृत्यर्थकत्वेनात्र भावनापदं कृत्यर्थकम्।
लादेशशतृशानजादिस्मारितस्य लस्य कृत्याश्रयरूपकर्तृबोधकत्वम्, तिङ्स्मारितस्य कृतिबोधकत्वमिति
स्वदभिमता व्यवस्था न सिद्ध्येत्, स्वन्मतेऽनुशासनेन कृतावेव लकारस्य शक्तेर्बोधनात्। आदेशानां
वाचकत्ववादिमते तु आदेशानां भिन्नतया तिङः कृतौ शक्तिः, कृतश्च कर्तरीति व्यवस्था स्वरसः सङ्गच्छते
इति भावः। प्राचीननैयायिकमते एव स्थानिना वाचकत्वम्, नव्यानान्तु नेयमापत्तिः, तैरपि वैयाकरणाभि-
मतादेशवाचकत्वस्यैव स्वीकारात्। लकारार्थ इति—शानजादिना स्मारितलकारेण 'लः कर्मणि' इति शास्त्र-
बोधितार्थस्य कृतेरेवोपस्थितिः, शानचा तु 'कर्तरि कृत्' इत्यनुशासनेन कृत्याश्रयरूपकर्तरि विधानेऽपि
कृतेर्लकारेणैव लभ्यतया 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायेनाश्रयमात्रमर्थः। कृतेर्गुणतया समवाय-

दर्पणव्याख्या

* अपिचेति *। * न स्यादिति * स्थानिनो लकारस्याभयत्रैक्यादिति भावः। नव्यनैयायि-
५ रीत्या मूलमवतारयति—प्रयोगान्तर्गततिबादीनामेव वाचकताया अभ्युपगमात्। धातुप्रत्ययलोपस्थले तत्तदर्थबोधोप-
पत्तये तु नेयमापत्तिः, तैः * इत्यस्त्विति * तथाच तदुभयशक्त्यैव कर्तृलाभः। कृत्याश्रयस्यैव कर्तृत्वादिति
पादनन्तूभयोः समप्रयुक्तकमित्यवधेयम्।

निराकाङ्क्षतया शानजादौ कर्तरीत्यप्रवृत्तेः । अन्यथा घञादावपि प्रवर्तेत ॥ ६२ ॥

'देवदत्तः पचमानः' इत्यादिसामानाधिकरण्यानुरोधाच्छानचः कर्ता वाच्यः स्यादित्याशङ्क्याह–

प्रभा

सम्बन्धेनाश्रयेऽन्वये कृत्याश्रयः कर्ता लभ्येतेति भावः। निराकाङ्क्षतयेति—'यदर्थाभिधानसमर्थः स तस्यादेशः' इत्यभियुक्तोक्त्या 'स्थानेऽन्तरतमः' इति परिभाषया च कर्त्रर्थकलकारस्थाने कर्त्रर्थकः शानजादेशः, कर्मार्थकलकारस्थाने कर्मार्थक इत्येवमादेशशास्त्रार्थविषयकाऽऽकाङ्क्षाया निवृत्तया 'कर्तरि कृत्' इत्यस्यानुपस्थितिरिति भावः। अन्यथा=अर्थाकाङ्क्षाभावेऽपि शास्त्रप्रवृत्तौ। प्रवर्तेतेति–'भावे' इत्यधिकारेण घञोऽर्थाऽऽकाङ्क्षाया निवृत्तावपि 'कर्तरि कृत्' इति सूत्रं प्रवर्ततेत्यर्थः। ननु नैयायिकस्य मते शानजादेः कर्तृवाचकत्वे मानान्तरमप्यस्तीत्याह—देवदत्त इति—देवदत्तादिनामार्थस्य शानजाद्यन्तार्थेन सममभेदान्वयस्य सर्वानुभवरूपव्यवहारदर्शनात् लकारस्य कृतिवाचकत्वेऽपि शानजादीनां कर्तृवाचकत्वं स्यादिति भावः। न च शतृशानचोः कर्त्रर्थकत्वे 'कर्तरि कृत्' इत्यनेन तृजादिवत् स्वातन्त्र्येण कर्तरि विधानेनैव सिद्धे लटः स्थाने आदेशत्वविधानं व्यर्थम्, लटो वर्तमानकालार्थकतया शतृशानचोरपि तदर्थकत्वलाभार्थमादेशत्वकल्पनात्। नन्वेवं 'वर्तमाने लट्' इत्यतो 'वर्तमाने' इत्यनुवर्त्य स्वातन्त्र्येण कर्तरि विधानेऽपि तदर्थलाभः स्यादिति वाच्यम्, लटः कर्मार्थकत्वे शानचोऽपि कर्मार्थकत्वोपपत्तये आदेशत्वस्यावश्यकत्वात् स्वातन्त्र्ये तु कर्मणि शानचो विधायकाभावात्कर्मार्थकत्वासिद्धेः। किञ्च लटः स्थाने आदेशविधाने लडादेशात्प्रागेव लटः कृत्प्रत्ययत्वात्प्रातिपदिकत्वे सुपि च सति 'सिद्धन्तु प्रत्ययोत्तरपदयोश्चेति वचनात्'। सिद्धमेतत्, कथम्? प्रत्ययोत्तरपदयोश्च शतृशानचौ भवत इति वक्तव्यम्, इति भाष्यात्प्रत्यये तद्धिते समासे च कृते तयोः परतः शतृशानचौ भवत। तथाच कुर्वतः पचतो वा, कुर्वाणस्य पचमानस्य वाऽपत्यम् 'कौर्वत' 'पाचतः' इति, 'कौर्वाणिः' 'पाचमानिः' 'कुर्वतो भक्तिः कुर्वद्भक्तिः, कुर्वाणभक्तिः' इत्यादि सिद्ध्यति। स्वातन्त्र्येण तद्विधाने शतृशानचः पूर्वं तद्धितप्रत्ययस्य, समासस्य चासम्भवात्पूर्वोक्तप्रयोगासिद्धिः। अयम्भावः—'कुर्वतः पचतो वा देवदत्तस्य अपत्यं भक्तिर्वा' इत्यर्थे तद्धितसमासौ न प्राप्नुतः, शत्राद्यन्तस्याप्रथमान्तत्वेन देवदत्तादिना सामानाधिकरण्यादपत्यभक्त्योर्योगाभावेनासामर्थ्यात्। यदि तु भक्त्यपत्ययोरेव सम्बन्धस्तदाऽपि सामानाधिकरण्याभावात् तौ न स्याताम्। प्रथमाया अन्याऽप्रथमा=द्वितीयादिविभक्तिस्तदन्तेन समानार्थके लटि शतृशानचोर्विधानात्। उक्तवार्तिकबलात्तु प्रत्यये उत्तरपदे च परतो विधानसामर्थ्याद् वैयधिकरण्येऽपि, सामर्थ्याभावेऽपि च प्रवर्तते। तदुक्तं भाष्ये—नवा एष दोषः, किं कारणम्, लकारस्य प्रातिपदिकत्वम्, लकारः कृत्, कृत्प्रातिपदिकमिति प्रातिपदिकसंज्ञा। प्रातिपदिकसंज्ञाश्रया स्वाद्युत्पत्तिर्भविष्यति। 'तस्मादुत्तरपदसिद्धिः' इति। यद्यप्यत्र पक्षे 'कौर्वाणि' इत्यादि न सिद्ध्येत्, लडन्तस्यादन्तत्वाभावेन 'अत इञ्' इत्यस्याप्राप्तेः। तत्सिद्ध्यर्थञ्च व्यवस्थितविभाषाया

दर्पणव्याख्या

भावः। * अन्यथेति * अनाकाङ्क्षेऽपि शास्त्रप्रवृत्तावित्यर्थः। शक्ततावच्छेदकभेदस्य तत्रापि सत्त्वादिति भावः॥ ६२॥

* सामानाधिकरण्यानुरोधादिति * शानचः कृतिवाचकत्वे सर्वानुभवसिद्धाभेदान्वयबोधानुपपत्तेरित्यर्थः। लडादेशत्वबोधनफलं धात्वर्थे वर्तमानत्वप्रतीतिरेवेति बोध्यम्। * पचतिकल्पमिति * इदञ्च स्याद्यन्तं नामेति मतमनुसृत्य। 'सत्त्वप्रधानानि नामानि' इति निरुक्तात् द्रव्यविशेष्यकबोधजनकत्वं नामत्वम्। तदेव च नामार्थयोरिति व्युत्पत्तिघटकम्। अत एव निपातार्थस्य भेदान्वय इति मतेनेदं दूषणमिति तु परे। लडणेत्यस्य लस्येति शेषः।

तस्याद्यन्ततिङन्तस्ति नामता कृत्स्विव स्फुटा ॥ ६३ ॥
नामार्थयोरभेदोऽपि तस्मात्तुल्योऽवधार्यताम् ।

'पचतितरां मैत्रः' 'पचतिकल्पं मैत्रः' इत्यादिषु नामार्थयोरभेदान्वययोः सम्भव एवेति कर्तृवाचकता स्यादिति भावः । नच पचतिकल्पमित्यत्र सामानाधिकरण्यानुरोधात् कर्तरि लक्षणा, 'पचमानः' इत्यत्राप्यापत्तेरिति ।

प्रभा

आश्रयणं कृतम् । तदाश्रयणाच्च यथेष्टं प्रयोगसिद्धिः, तथापि यत्र गत्यन्तराभावस्तत्रैव तदाश्रयणमुचितम्-
दुपायस्योपायान्तरादूषकत्वाच्च तत्पक्षे शतृशानजादेर्लडाद्यादेशत्वमावश्यकम् । नन्वेवमपि कथं लटो
द्वितीयाद्यन्तेन सामानाधिकरण्यम्, यतो लकारः क्रियाम्प्रति गुणीभूते कर्तृकर्मणी प्रतिपादयति । द्विती-
याद्यन्तादयश्च क्रियान्तरयोगात्कर्मादिवाचकाः । नहि भवति 'पचत्योदनं देवदत्त पश्य' 'पच्यते ओदनेन गम्'
इति, इति चेत्सत्यम्, तिङ्भाविनो लकारस्यायं स्वभावो यत्क्रियां प्रति गुणभूते कर्तृकर्मणी प्रतिपाद-
पति । शत्रादिभाविनो लकारस्य चायं स्वभावो यत्क्रियोपसर्जनकं कर्तृकर्माणमभिधत्तेति तत्र क्रियान्तर-
योगयोग्यतायाः सत्त्वात् द्वितीयाद्यन्तसामानाधिकरण्यमुपपद्यते । यद्यपि अधिकरणम्=अभिधेयम-
र्थ, इति यावत्, समानमधिकरणं यस्य तत्समानाधिकरणं समानार्थकमित्यर्थः । अप्र-
थमान्तेन समानाधिकरणम् अप्रथमासमानाधिकरणम् । 'सुप्सुपा' इति समासः । 'यस्य च भावेन भाव-
लक्षणम्' इति षष्ठ्यर्थे सप्तमी, द्वितीयाद्यन्तेन समानार्थकस्य लटः शतृशानजावादेशौ । तथाच लटः
क्वापि प्रयोगाभावादप्रथमान्तेन सामानाधिकरण्यं दुर्लभम्, तथापि तदादेशयोः शतृशानचोः सामाना-
धिकरण्यं सूत्रारम्भसामर्थ्यात्काल्पनिके लकारे आरोप्य अप्रथमान्तेन सामानाधिकरण्यमुपपादनीयम् ।
'वर्तमाने लट्' इत्यतो लडित्यनुवर्त्य षष्ठ्यन्तेन विपरिणम्य विधानेनादेशान्ते लब्धे 'पुनर्लड्ग्रहणं प्रथमा-
सामाधिकरण्ये 'सन् ब्राह्मणः' इत्यादौ, 'कीर्यतः' कुर्वद्भक्तिः' इत्यादौ अप्रथमासामानाधिकरण्याभावेऽपि
शतृशानज्विधानार्थम्, भाष्यकृता तु व्यवस्थितविभाषया एतत्सर्वं साधितमित्यलं प्रसङ्गान्तरेण ।
सामानाधिकरण्यदर्शनेनार्थनिर्णये 'पचतितराम्' पचतिकल्पम् 'पठतिकल्पम् देवदत्त' इत्यादौ
सामानाधिकरण्यानुरोधात्तिङोऽपि कर्त्राद्यर्थकत्वमस्तीत्याह—तस्याद्यन्तेति—'पचतितरां मैत्रः' इत्यत्र
अतिशयिता या विक्लित्तिस्तदनुकूलभावनया, 'पचतिकल्पं मैत्रः' इत्यत्र ईषदसमाप्ता या विक्लित्ति-
स्तदनुकूलभावनया समं मैत्रस्याभेदान्वयासम्भवात्तदर्थं तिङामपि कर्ता वाच्यः स्यान्नैयायिकानाम् ।
तच्च तेषामनिष्टम्, 'कृतिराख्यातार्थः' इत्यत्रैव तैः स्वीकृतत्वादिति भावः । इदञ्च दूषणम् 'सुबन्तनाम' इति
मताभिप्रायेण । यदि तु 'नामाख्यातोपसर्गनिपाताः' इति भाष्योक्तवाक्ये उपसर्गनिपातयोरपि प्रातिपदि-
कत्वेन सुबन्तत्वेनैव वा ग्रहणे सिद्धे पृथगुपादानसामर्थ्यात्, सत्त्वप्रधानानि' इति निरुक्ताच्च द्रव्यनि-
शेष्यकबोधजनकस्यैव 'नामार्थयोरभेदान्वयः' इति व्युत्पत्तौ गृह्येत तदा नेयमापत्तिः, तिङन्तप्रकृतिकतद्धि-
तानां साध्यक्रियाविशेष्यकबोधजनकत्वात् । लक्षणेति—कर्त्रर्थकस्य लस्य लक्षणेत्यर्थः । स्थानिनां वाचक-
त्वनये शानचः शक्त्यभावेन शक्यसम्बन्धरूपलक्षणायास्तत्रासम्भवादिति भावः । नच 'नामार्थयोरभे-

दर्पणव्याख्या

* आपत्तेरिति * नच सा तवेष्टेति भाव । लकारादेशानां वाचकत्वे आदेशविधायकविधायक 'लः कर्मणि' इत्यादि-

लः कर्मणीत्यनुशासनञ्च लाघवात् कल्पिते लकारे कर्त्रादिर्वाचित्वं कल्पितमादयेत्युक्तम्।
॥ ६३ ॥ इति वर्णस्फोटनिरूपणम् ॥

प्रभा

द्वान्वयः' इति व्युत्पत्तौ नामजन्यप्रतीतिविशेष्ययोरेव ग्रहणम्। इत्थञ्च वैयाकरणनयेऽपि 'पचतितरां मैत्रः' 'पचतिकल्पं मैत्रः' इत्यत्र भावनायां विशेषणीभूतस्य तिङर्थकर्तुर्मैत्रे कथमभेदान्वयः, एकत्र विशेष्यतयाऽन्वितस्यापरत्र विशेषणत्वायोगात्। नच लक्ष्यानुरोधात् तिङन्तप्रकृतिकतद्धितान्ते नामजन्यप्रतीतिविषययोरेवाभेदान्वयः, नतु विशेष्यभूतयोरिति व्युत्पत्तेः संकोचः, अस्मन्मतेऽपि लक्ष्यानिकटस्थप्रत्ययस्थलानुरोधेन तथा संकोचसम्भवादिति वाच्यम्, नामपदेन 'नामार्थयोः' इति व्युत्पत्तौ निपातेतरस्य प्रातिपदिकमात्रस्य सुबन्तमात्रस्य ग्रहणात्। द्रव्यमुख्यविशेष्यकबोधजनकस्यैव ग्रहणे तु न मानम्। 'नामाख्यात' इति पदविभाजकभाष्यवाक्येऽपि तथैव। सत्त्वप्रधानस्यैव ग्रहणे स्वरादिगणपठितानां पुनरादीनामसङ्ग्रहापत्तिः। उपसर्गनिपातग्रहणन्तु गोबलीवर्दन्यायेन। नच नामत्वेन सामानाधिकरण्यात् 'स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मव्याप्यमिथोविरुद्धधर्मबोधनरूपविभागानुपपत्तिः, प्रातिपदिकस्वरूपनामत्वेन समसुपसर्गत्वनिपातत्वयोर्विरुद्धत्वाभावादिति वाच्यम्, निपातभेदविशिष्टनामत्वेनैव विभागस्य विवक्षितत्वात्। 'पचतितराम्' 'पचतिकल्पम्' इत्यादितद्धितान्तवृत्तावेकार्थीभावात्मकवृत्तिस्वीकारेण कर्त्रायर्थविशेष्यकबोधजनकतया न सामानाधिकरण्येनान्वयानुपपत्तिः। 'नामजन्यप्रतीतिविशेष्ययोरेवाभेदान्वयः' इत्यत्र प्रतीतिः शक्तिज्ञानजन्योपस्थितिरूपा ग्राह्या। तथाच 'पचतितराम्' इत्यादावेकार्थीभावाभावेऽपि न दोषः, तिङ्‌ कर्तुर्मुख्यविशेष्यतयैवोपस्थितिसत्त्वात्। शाब्दबोधे भावनायां विशेषणमित्यन्यत्। नचादेशानां वाचकत्वे 'ल कर्मणि' इति सूत्रविरोध इत्यत आह—लः कर्मणीति। उक्तमिति—आख्यातार्थनिरूपणे इति शेषः। एतच्च पदघटकप्रकृतिप्रत्ययादिरूपवर्णितः स्फोटो वर्णस्फोट इति तत्त्वम्।

वादिभिर्दूषितान्नीतो वर्णस्फोटश्चिकित्सया।
व्यशोधि बालकृष्णेन मानभेषजसूरिणा॥

॥ शुभम्भूयात् ॥

वर्णपदवाक्याखण्डपदाखण्डवाक्यस्फोटरूपाः पञ्चव्यक्तिस्फोटाः, मीमांसकमते लाघवादर्थगतजातेरेव यथा शक्यत्वं तथा शक्तत्वमपि शब्दगतशक्तताचच्छेदकजातेरेवेति वर्णजातिस्फोटपदजातिस्फोटवाक्यजातिस्फोटभेदेन त्रयो जातिस्फोटाः पूर्वं परिगणिताः। तत्र यथा पारमार्थिकब्रह्मज्ञानाय आनन्दवल्ल्याम् 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयरूपाः पञ्चकोशा अपारमार्थिकब्रह्मत्वेऽपि उपयोगित्वेन प्रदर्शिताः। तेषु पूर्वपूर्वकोशस्य ब्रह्मज्ञानाय बहिरङ्गत्वम्, उत्तरोत्तरस्यान्तरङ्गत्वम्, तथा पारमार्थिकस्फोटात्मकब्रह्मज्ञानायाष्टौ स्फोटा अपारमार्थिका उपायत्वेन प्रदर्शिता हर्यादिभिः। तेष्वपि पूर्वपूर्वस्फोटस्य बहिरङ्गत्वमुत्तरोत्तरस्यान्तरङ्गत्वम्। अत एव वाक्यस्फोटस्य सर्वापेक्षयाऽन्तरङ्गत्वेन 'वाक्यस्फोटोऽतिनिष्कर्षे' इत्यु-

दर्पणव्याख्या

[५]राणां वैयर्थ्यमत आह—* लः कर्मणीति *। * उक्तमिति * आख्यातशक्तिनिरूपणावसर इति शेषः। एवञ्च प्रयोगे श्रूयमाणप्रकृतिप्रत्ययघटकवर्णेषु शक्तिर्वर्णस्फोटमिति पर्यवसन्नम्॥ ६३ ॥ इति वर्णस्फोटनिरूपणम्॥ १३ ॥

अथादेशा वाचकाश्चेत् पदस्फोटस्ततः स्फुटः ॥ ६४ ॥

एवमादेशानां वाचकत्वे सिद्धे पदस्फोटोऽपि सिद्ध एवेत्याह—अथेत्यादि । आदेशाः=
तिब्विसर्गादयः। अयं भावः—समभिव्याहृतवर्णानां वाचकत्वे सिद्धे तादृशवर्णसमभिव्याहाररूपपदस्य
वाचकता सिद्ध्यति, प्रतिवर्णमर्थस्मरणस्यानुभवविरुद्धत्वात्, प्रत्येकं वर्णानामर्थवत्त्वे प्रातिपदि-
कत्वाऽऽपत्तौ "न लोपः प्रातिपदिकान्तस्य" इत्यादिभिः 'धनम्' 'वनम्' इत्यादौ नलोपाद्यापत्तेश्च ।

प्रभा

निरुपाधिकं निखिलनामरूपात्मकप्रपञ्चकारणीभूतं शब्दब्रह्म तु स्फोटाष्टकाद्भिन्नमेव। तत्रैतावता
कम्। ग्रन्थेन सर्वबहिरङ्गभूतो वर्णस्फोटो वर्णितः, अतः परं तदपेक्षयाऽन्तरङ्गभूतं पदस्फोटं निरूपयितुमाह—अथा-
रेत्या इति । एवम्— पूर्वोक्तरीत्या। सिद्ध इति— साधुप्रयोगान्तर्गतानां प्रकृतिरूपाणां प्रत्ययरूपाणाञ्च पूर्वापरी-
भूतवर्णसमुदायरूपाणां वर्णस्फोटानां वाचकत्वे सिद्धे तुल्ययुक्त्या प्रकृतिप्रत्ययसमुदायरूपपदस्फोटस्यापि वाच-
कत्वस्य सिद्धिरेव, तेषामवाचकत्वे पदस्यापि वाचकत्वं न स्यादिति भावः। एतेनादेशानां वाचकत्वमुपजीव्य-
म्, पदस्य वाचकत्वमुपजीवकमिति सूचनादुभयोरुपजीव्योपजीवकभावात्मिका हेतुताऽऽख्यसङ्गतिर्ध्वनिता।
अभावरूपा अपि लुग्लोपादय आदेशाः सन्ति तन्निरासायाह—तिबिति। इदमुपलक्षणम् प्रयोगान्तर्गतादेशानाम्।
ननु यावद्वर्णानामेव वाचकत्वे कथं प्रकृतिप्रत्ययसमुदायरूपपदस्य प्रकृतिप्रत्ययरूपादेशानाञ्च वाचकत्वसिद्धि-
रत आह—अयम्भाव इति। पूर्वापरीभावविशिष्टवर्णानां प्रकृतिरूपाणां प्रत्ययरूपाणाञ्च समभिव्याहृतवर्णानां
वाचकत्वं ननु प्रत्येकवर्णानान्तरत्वम्। तथाच आनुपूर्वीविशिष्टवर्णसमभिव्याहाररूपपदस्य वाचकता सिद्ध्यति,
पदस्य प्रकृतिप्रत्ययसमुदायरूपत्वादिति भावः। ननु समुदायस्य वाचकत्वे तस्यावयवानतिरिक्ततया प्रत्येक-
वर्णानामपि वाचकत्वं स्यादत आह—प्रतिवर्णमिति। अनुभवविरुद्धत्वादिति। घकारादर्थबोधो जायते इति नानु-
भवः, किन्तु घटशब्दादर्थप्रत्ययो भवति, इत्येवानुभवः। स च प्रतिवर्णमर्थानुभवे विरुद्ध्येतेति भावः। प्रत्येक
वर्णानां वाचकत्वे दोषान्तरमाह—प्रत्येकमिति। अर्थवत्त्वे=अर्थवत्त्वापत्तौ। न लोपेत्यादिना जस्त्वादि-
संग्रहः। सुपः श्रवणन्तु नापादितम्, सुब्घटितसमुदायस्यापि प्रातिपदिकत्वेन 'सुपो धातुप्रातिपदिकयोः' इति
लुका निवृत्तेः। नच प्रत्येकवर्णात्सुपि समासग्रहणकृतेन 'यत्र संघाते पूर्वो भागः पदन्तस्य चेत्समासस्यैव'
इति नियमेन समुदायस्याप्रातिपदिकत्वे लुगभावः, समाससाजात्येन विभिन्नप्रवृत्तिनिमित्तकपदघटितवाक्यस्यैव
नियमप्रवृत्त्या पचघटकवर्णानामेकप्रवृत्तिनिमित्ताश्रयपदार्थस्यैव बोधकत्वेन नियमाप्रवृत्तेः। प्रातिवर्णं संख्या-
र्थफल्याभावे औत्सर्गिकैकवचनस्यापि प्रमाणसत्त्वे एव प्रवृत्तिस्वीकारे तु सुपोऽनुत्पत्तेर्नैयमापत्तिः। नचान्य-

दर्पणव्याख्या

पदस्फोटनिरूपणे उपजीव्योपजीवकभावस्यापि सङ्गतित्वं सूचयन् मूलमवतारयति—* एवमिति * उक्तरीत्येत्यर्थः।
आदेशानामपि केषाञ्चित् प्रयोगान्तर्गतत्वादाह—* तिब्विसर्गादय इति * प्रयोगान्तर्गतवर्णा इति यावत्। ननु
तादृशयावद्वर्णानां वाचकत्वे कथं पदस्फोटसिद्धिरतो भावार्थमाह—* अयमिति * समभिव्याहृत इत्युक्तार्थम्। * सिद्ध
इति * आनुपूर्वीविशिष्टतावता वर्णानामवाचकत्वे आनुपूर्वीरूपपदस्य वाचकत्वाशा दुराशेति भावः। ननु समुदायस्य प्रत्ये
कावयवानतिरिक्तत्वेन वाचकतायाः प्रत्येकवर्णे विश्रामो वाच्यः, तथाच कथं समुदिततादृशवर्णरूपपदस्य वाचकतेत्यत प्रत्येकव-
र्णवाचकतां निरस्यति—* प्रतिवर्णमिति *।* अनुभवविरुद्धत्वादिति * घटशब्दादमुमर्थं प्रत्येमीत्येव प्रतीतेरित्यर्थः।
बाधकान्तरमप्याह—* प्रत्येकमिति* । *अर्थवत्त्व इति* तदभ्युपगम इत्यर्थः। नलोपादीत्यादिना जस्त्वादि परिग्रह।

एतच्च चरमवर्णे एव वाचकत्वशक्तिः,

प्रभा

येभ्य इव संख्याया अभावेऽप्येकवचनोत्पत्तिः, 'अव्ययादाप्सुपः' इति ज्ञापकात्ततः सुप्यपि अत्रोत्पत्तौ मानाभावात्। संख्याभाववदर्थबोधकात्संख्यावाचकत्वाभाववतोऽव्ययाज्ज्ञापकात्सुबुत्पत्तिस्वीकारेऽपि संख्यावदर्थबोधकात्संख्यावाचकत्वाभाववतो वर्णादुत्पत्तौ मानाभावाच्च। नच धातुघटकवर्णानां प्रातिपदिकत्वे सुपः श्रवणं स्यात्। धात्ववयवत्वेन लुक् तु न, सुब्घटितस्य भ्वादित्वाभावेन धातुत्वाभावादिति वाच्यम्, प्रातिपदिकसंज्ञाविधायकेऽधातुरित्यस्य धात्ववयवभिन्नार्थकत्वेन धात्ववयववर्णानाम्, व्यपदेशिवद्भावेन धातोरपि धात्ववयवत्वात्प्रातिपदिकत्वाप्राप्तेरित्यन्यत्र विस्तरः। एवञ्चोक्तदोषवारणाय प्रकृतीनां प्रत्ययानां तत्समुचितपदानाञ्च वाचकत्वमुपेयमिति भावः। एवञ्च प्रकृतेः, प्रत्ययस्य च बोधजनकत्वे तत्समुदायरूपपदस्य बोधजनकत्वं सुतरां सिद्धमिति भावः। ननु प्रकृतिप्रत्ययसमुदायात्मकपदस्य वाचकत्वोपपत्तये आदेशानां वाचकत्वस्य हेतुत्वोपन्यसनं व्यर्थम्, पदघटकप्रत्येकवर्णानामर्थवत्त्वस्य गौरवेणैव पराहतत्वेन निरस्तत्वादित्याशङ्कायामाह—एतच्चेति—प्रकृतिप्रत्ययरूपसमभिव्याहारस्य वाचकत्वसमर्थनञ्च। चरमेति—प्रकृतेः, प्रत्ययादेश्च चरमवर्णे एव वाचकत्वम्, नतु वर्णसमुदाये। अयमेव वर्णस्फोट इति यत्केषाञ्चिद्वर्णस्फोटवादिनाम्मतं तद्दूषणायोक्तम्। समुदायस्य वाचकत्वसमर्थनेन चरमवर्णस्य वाचकत्वं दूषितं यथा स्यात्तथोक्तमित्यर्थः। इदञ्च न स्फोटरहस्यविदाम्मतमिति सूचनायैव 'केषाञ्चित्' इत्युक्तम्। तत्त्वविदान्तु प्रकृतिप्रत्ययात्मकसमुदायस्याभिव्यङ्ग्यस्य तद्रूपापन्नस्य स्फोटस्यैव वर्णस्फोटत्वमिति। प्रकृतिप्रत्ययोरेव वाचकत्वम्, नतु तच्चरमवर्णयोः। स्फोटस्य प्रत्येकवर्णाभिव्यङ्ग्यत्वेऽपि चरमवर्णेनाभिव्यक्तौ सत्यामेवार्थोपस्थापकत्वमिति त्वन्यत्। यदि तु 'चरमवर्णे एव वाचकत्वम्' इत्यस्य 'चरमवर्णाभिव्यङ्ग्यस्फोटे' एव वाचकत्वमित्यर्थस्तदा न विवादः। चरमवर्णस्यैव वाचकत्ववादिनः, प्रथमादिवर्णे तु न वाचकत्वम् तदव्यवहितोत्तरं बोधाभावात्, तदुत्तरवर्णानुभवजन्यसहकारीभूतसंस्काराणां तदानीमभावात्। नचोत्तरोत्तरवर्णानुभवजन्यसंस्कारसहकृतप्रथमवर्णानुभवजन्यसंस्कारस्य हेतुत्वमस्तु, उत्तरोत्तरवर्णानुभवजन्यसंस्कारकाले बोधात्पूर्वकाले च प्रथमादिवर्णानुभवजन्यसंस्कारस्य सत्त्वादिति वाच्यम्, विनिगमनाविरहेण तादृशवर्णसमुदाये एव वाचकत्वशक्तिसिद्धेः। शक्तिरिति—चरमवर्णश्रवणमन्तरा बोधाभावेनान्वयव्यतिरेकाभावेन तत्रैव शक्तिः कल्प्यत इति भावः। किञ्च बोधजनकतारूपा शक्तिः स्वरूपसम्बन्धात्मिका, तस्याश्च पर्याप्तिसम्बन्धेन वृत्तित्वासम्भवः। अपेक्षाबुद्धिजन्यानां द्वित्वादीनामेव पर्याप्तिप्रतियोगित्वात्। समुदायत्वस्य तु अवयवगतापेक्षाबुद्धिजन्यतया पर्याप्तिप्रतियोगित्वमक्षतमेव। ननु वर्णानां समभिव्याहारो न समूहरूपः, क्रमेणोत्पत्तिशीलानामाविर्भावशीलानां वाऽऽशुविनाशितया, तिरोहिततया च तदसम्भवात्। नाप्यव्यवहितोत्तरत्वसम्बन्धेन पूर्वपूर्ववर्णवत्त्वमुत्तरोत्तरवर्णे, विनष्टानां तेषां तादृशसम्बन्धासम्भवात्, सतोरेव सम्बन्धस्यानुभवसिद्धत्वात्, द्विष्ठस्यैव सम्बन्धत्वाच्च। नाप्यनेकवर्णसमवेतं किञ्चिदनुगतधर्मान्तरम्, घटत्वे-

दर्पणव्याख्या

तथाच समुदितानामेव तेषां वाचकत्वमभ्युपेयम्। तत्र चोक्तयुक्त्या तत्समुदायस्य वाचकत्वं निराबाधम्। स एव चाखण्ड(?) पदस्फोटादेरिव इति भावः। ननु प्रत्येकवर्णानां वाचकत्वस्य गौरवग्रस्ततयादेशानामपि समुदायस्यैव तत् तेऽस्त्वतीत्यादेशा[illegible] वाचकत्वमिति समभिव्याहृतवर्णानां वाचकताया हेतुत्वोपन्यासो विफलः, उन्मत्तप्रलपितत्वशङ्कया अवसरेणैव निराकरोति आह—• एतच्चेति • समभिव्याहृतवर्णानां वाचकत्वोपन्यसनञ्चेत्यर्थः। • चरमवर्णे एवेति • पदान्ते भूयमा

पूर्वपूर्ववर्णानुभवजन्यसंस्काराश्चरमेणार्थधीजनने सहकारिण
शक्तेर्व्यासज्यवृत्तित्वे मानाभावात् । रामोऽस्तीति
इति न तन्मात्रोच्चारणादर्थधीरिति वर्णस्फोटवादिनां मतान्तरस्य दूषणायोक्तम् । ताडशानुपूर्व्या एव
वक्तव्ये राम् इत्यनन्तरं घटिकोत्तरमोकारोच्चारणेऽर्थबोधापत्त्या

प्रभा

वर्णानां वाचकत्वे सिद्धे तस्माच्चरमवर्ण एव
नानुगतीकृतघटानामिव ताडशधर्मेणानुगतप्रतीतिविषयीकृतवर्णानां स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदक-
शक्तिरित्याह—शक्तेर्व्यासज्येति-समुदायवृत्तित्वेत्यर्थः व्यासज्यवृत्तित्वञ्च इत्यपेक्षाबु-
धर्मत्वरूपम् । यथा द्वित्व—त्रित्वादिकम् । तथाहि—'घटपटौ द्वौ' इत्यत्र घट एकः, पटश्चैकः, प्रत्येकं
द्धया उत्पन्नं द्वित्वं पर्याप्तिसम्बन्धेन घटपटसमुदाये वर्तते, परन्तु तदेव द्वित्वं समवायसम्बन्धेन पर्याप्तिसम्ब-
घटे पटे च विद्यते । तथाच समवायसम्बन्धेन द्वित्वाश्रयो घटः, पटो वा, तन्निष्ठो भेदो घटः स्वाश्रय-
न्धेन द्वित्ववान्नेत्याकारकः । तदीया प्रतियोगिता द्वित्ववन्निष्ठा, तदवच्छेदको धर्मो द्वित्वमिति तत्र मानाभावादिति—
निष्ठभेदप्रतियोगितावच्छेदकधर्मत्वं सुलभम् । यस्य व्यासज्यवृत्तित्वं चिकीर्षितं तत्त्वम् । पूर्वपूर्वेति—
अन्तिमवर्णोच्चारणोत्तरमेवार्थविषयकबोधजननात्तत्रैव बोधजनकतारूपा शक्तिरिति भावः । सहकारिण.—सहायकाः ।
उच्चरितपदघटकपूर्वपूर्ववर्णेत्यर्थः । अत एव न पूर्वपूर्ववर्णानां नैरर्थक्यम् ।
तन्मात्रेति चरमवर्णमात्रेत्यर्थः । मतान्तरस्येति=अवयवानामवाचकत्वे तत्समुदायरूपपदस्यापि वाचकत्वमिति-
यन्मतान्तरम्—ग्रन्थकारमताद्भिन्नं केषाञ्चित्स्फोटवादिनां मतं तद्दूषणाय समुदायस्य वाचकत्वमुक्तमित्य-
र्थः । स्थानिनां वाचकत्वपक्षे दोषनिकरणस्योक्ततया समुदायस्य वाचकत्वव्यवस्थापनं चरमवर्णस्य वाचकत्वं
निराकर्तुमेवोपन्यस्तमिति तत्त्वम् । अर्थबोधापत्त्येति— इदञ्च दूषणं चरमवर्णश्रवणसमये पूर्वपूर्ववर्णविषयक-
संस्काराणामुद्बोधकसमवधानात्समुद्बोधनेन तावतां वर्णानां स्मरणे सत्येव । वस्तुतस्तु संस्कारोद्बोधकस्य
फलानुमेयतया चरमवर्णमात्रश्रवणेन बोधरूपफलाभावात्ताडशस्थले उद्बुद्धसंस्काराभाव एवेति नायं दोषः ।
आनुपूर्व्या एवेति=एवशब्देन चरमवर्णवादिनां मते वाचकतावच्छेदकत्वेनाभिमतस्य चरमवर्णवृत्तित्वद्रव्य-
त्तित्वस्य व्यवच्छेदः । नन्वेवमपि घटवृत्त्यानुपूर्व्या धकारोत्तराकारोत्तरटकारोत्तरात्वरूपाया अपि चरमेऽ-
कारे एव सत्त्वेन समुदाये तदभावेन तस्यं वाचकत्वासिद्धिरिति चेन्न, अव्यवहितोत्तरत्वसम्बन्धेन पूर्वपूर्व-
वर्णविशिष्टोत्तरोत्तरवर्णसमुदायस्वरूपानुपूर्व्याः समुदाये एव सत्त्वात् । तथाव्यवहितपूर्वत्वसम्बन्धेनोत्तरो-
त्तरवर्णविशिष्टपूर्वपूर्ववर्णसमुदायस्वरूपाया आनुपूर्व्याः विनिगमनाविरहेण शक्ततावच्छेदकत्वे गौरवम्,
शाब्दबोधाव्यवहितप्राक्काले पूर्वोक्तानुपूर्व्या एव सत्त्वेन तस्या एव शक्ततावच्छेदकत्वस्यौचित्यात् । चरम-
वर्णनिष्ठा या घटत्वरूपाऽऽनुपूर्वी तत्प्रतियोगिका या विषयिता ताडशविषयिताव्यापिका या घटशब्दघटक-

दर्पणव्याख्या

तत्र हेतुमाह—* शक्तेरिति * स्वरूपसम्बन्धात्मिकायाः
णवर्णे एवेत्यर्थः । एवकारेण पदघटकतत्प्राक्तनवर्णव्युदासः । मानाभावादिति वार्यं ।
बोधकारणतायाः पर्याप्तत्वाभावाच्चरमवर्णादेव बोधोदयेनान्यत्र तत्सत्त्वे आह—* पूर्वपूर्ववर्णेति * वाक्यघटकपूर्वपूर्ववर्णेत्यर्थः ।
ननु तस्यैव वाचकत्वे तन्मात्रश्रवणादर्थबोधापत्तिरत यन्मतान्तरं तत्खण्डनायेत्यर्थः ।
* मतान्तरेति * समभिव्याहृतवर्णानामवाचकत्वे तत्समुदायरूपपदस्य सुतरामवाचकत्वमिति
उक्तमित्यस्य मूल इति शेषः । वस्तुतस्तु नेयमापत्तिः । उद्बोधकसत्त्वे दूषणान्तरमप्याह—* रामोऽस्तीत्यादि * ।
* अर्थबोधापत्त्येति * उद्बोधकसमवधानस्य फलानुमेयत्वेन ताडशस्थले फलाभावेनोद्बुद्धसंस्काराभावादिति बोध्यम् ।

शक्तताऽवच्छेदकत्वौचित्यादिति दिक् ॥ ६४ ॥

## प्रभा

वर्णविषयकज्ञाननिष्ठा विषयिता तत्प्रतियोगित्वरूपानुपूर्वीघटकत्वस्य समुदायनिष्ठवाचकतावच्छेदकत्व स्वीकारात्, तादृशघटकत्वसम्बन्धेन आनुपूर्व्या वा शक्ततावच्छेदकत्वेनादोषाच्च। विषयिता च ज्ञाननिष्ठो धर्मविशेषः। तथाच यत्र यत्र घटत्वरूपानुपूर्वीज्ञाननिष्ठा विषयिता, तत्र तत्र घत्वादिरूपेण घकारादिवर्णविषयिता। तत्र स्वसमानाधिकरणात्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वरूपं व्यापकत्वं घकारादिज्ञाननिष्ठविषयितायां वर्तते, घटत्वानुपूर्वीज्ञाने घकारादिविषयिता नास्तीत्यस्य वक्तुमशक्यत्वात्। तादृशविषयितासम्बन्धेन घकारादिविशिष्टं घकारादिज्ञानमिति विषयितासम्बन्धप्रतियोगित्वरूपमानुपूर्वीघटकत्वं घकारादिषु सुलभमिति तेन सम्बन्धेनानुपूर्व्याः सकलवर्णेषु सत्त्वात् समुदायनिष्ठवाचकतावच्छेदकताऽपि तत्र सुलभेत्यलं पल्लवितेन। दिगिति--दिगर्थस्तु समुदायस्य वाचकत्वाभावेऽर्थवत्त्वाभावात्प्रातिपदिकत्वानापत्तिः, यदि तु पूर्वपूर्ववर्णानां सहकारितामात्रेण समुदायस्यार्थवत्त्वात्प्रातिपदिकत्वमित्युच्यते तदा चरमवर्णमात्रस्यापि प्रातिपदिकत्वापत्तिर्दुर्वारा। वस्तुतस्तु चरमवर्ण एव शक्तिरिति मते समुदायस्य स्वपर्याप्तवृत्त्याऽर्थविषयकबोधजनकत्वाभावात्प्रातिपदिकत्वं दुर्वचम्। किञ्च चरमवर्णस्यैव वाचकत्वे समुदायस्य प्रातिपदिकत्वेन विभक्त्युत्पत्तौ 'घटं पश्य' इत्यादौ विभक्त्यर्थकर्मत्वान्वयानुपपत्तिः, घटरूपार्थस्य प्रकृत्यर्थत्वाभावेन 'प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्' इति व्युत्पत्तिविरोधात्। किञ्च चरमवर्णस्यैव प्रातिपदिकत्वात्तत एव सुपि चरमवर्णरूपतदादिसुबन्तस्यैव पदतया 'अस्ति घटः' इत्यादौ समुदायस्यापदत्वाच्चरमस्य व्यवहितत्वाच्च 'तिङतिङः' इति निघातानुपपत्तिः। किञ्च चरमस्यैव वाचकत्वे यौगिकं रूढं योगरूढं यौगिकरूढञ्चेति पदविभागानुपपत्तिः। तथाहि—रूढम्—गौः, यौगिकम् पाचकः, योगरूढम्—पङ्कजम्। यौगिकरूढम्—'अश्वकर्णः' इति। तच्च चरमवर्णस्यैव वाचकत्वेऽसम्भवि। ननु यत् स्वघटकप्रकृत्यादिचरमवर्णशक्त्यैवार्थोपस्थापकं तद्यौगिकम्। यत् स्वघटकचरमवर्णशक्त्यैवार्थोपस्थापकं तद्रूढम्। यत् स्वप्रकृत्यादिचरमवर्णशक्त्या, स्वीयचरमवर्णशक्त्या चार्थोपस्थापकं तद्योगरूढम्। यत् स्वप्रकृत्यादिचरमवर्णशक्त्याऽर्थान्तरोपस्थापकत्वे सति स्वीयचरमवर्णमात्रशक्त्यैवार्थान्तरोपस्थापकं तद्यौगिकरूढम्, इति चेन्न, पाचकादिपदे यौगिकलक्षणासम्भवापत्तेः, स्वीयचरमवर्णशक्त्याप्यर्थोपस्थापकत्वात्। तथाचोक्तदोषकदम्बनिरासाय समुदायशक्तिरुपेया। किञ्च घटपटादिस्थले घकारादिवर्णसमुदायः पदं न वर्ण इति प्रतीतेः पूर्वापरीभूतावयवात्मकसमुदायरूपं पदमावश्यकम्। अत एव 'पदे वर्णाः' इति सर्वजनीनव्यवहारस्य नासङ्गतिः। न च वर्णानामाशुविनाशितया पौर्वापर्यासम्भवः, वैयाकरणनये वर्णानां नित्यत्वस्य सिद्धान्तितत्वात्। पौर्वापर्यञ्चात्र पक्षे उत्पत्तिकालानवच्छिन्नस्वज्ञानाधिकरणकालोत्पत्तिकज्ञानविषयत्वरूपम् तथाहि—घटशब्दे घस्याविर्भावानन्तरं घविषयकज्ञानमुत्पद्यते। तज्ज्ञानं द्वितीयक्षणे

## दर्पणव्याख्या

ननु समभिव्याहारो न समूहः, वर्णानां क्रमिकाणामाशुविनाशिनाञ्च तदसम्भवादत एवाव्यवहितोत्तरत्वसम्बन्धेन न पूर्वपूर्ववर्णवत्त्वम्, सम्बन्धाभावात्। नापि वर्णसमवेतं पदार्थान्तरम्, मानाभावात्, अन्यथा तादृशधर्मानुगतीकृतवर्णानां वाचकत्वेनैवोपपत्तौ पदस्फोटस्य निरालम्बनताऽऽपत्ते, पदप्रयुक्तकार्याणां वर्णेष्वेव दर्शनाच्चेति कथं पदस्फोटसिद्धिरित्यत आह—"दिगिति"। तदर्थस्तु वर्णसमुदायः पदम्, न वर्ण इति प्रतीतेर्वर्णातिरिक्तपूर्वापरीभूततत्समुदायात्मकपदस्वीकार आवश्यकः। अत एव 'पदे वर्णाः' इति व्यवहारोऽपि स्वरसत सङ्गच्छते। नित्याश्च वर्णास्तेषु पौर्वापर्यञ्च—पूर्वपूर्ववर्णानुस-

'सुप्तिङन्तं पदम्' इति पारिभाषिकपदस्य वाचकत्वस्वीकर्तॄणां मतमाह—

घटेनेत्यादिषु नहि प्रकृत्यादिभिदा स्थिता ।
वस्नसादावविवेहापि सम्प्रमोहो हि दृश्यते ॥ ६५ ॥

घटेनेत्यादौ 'घटे' इति प्रकृतिः, 'न' इति प्रत्ययः, 'घट्' इति प्रकृतिः, 'एनं' इति प्रत्यय इति विभागस्य, 'सर्वे सर्वपदादेशाः' इति स्वीकारे विशिष्य

प्रभा

तिष्ठति, तृतीयक्षणे नश्यति । अकारश्च घज्ञानस्योत्पत्तिकालेनानवच्छिन्ना घज्ञानाधिकरणकालिकी या उत्पत्तिस्तादृशोत्पत्तिकज्ञानविषय इत्येवमुक्तपौर्वापर्यं वर्णस्य वर्णान्तरे सुलभम् । तथाच वर्णसमुदायो वाचक इति तद्व्यङ्ग्यः पदस्फोटः सिद्ध्यति । विभजनीयप्रकृतिप्रत्ययात्मकसमुदायरूपः पदस्फोटो एतावतोक्तः । सम्प्रति 'अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तसुप्तिङन्तरूपपदस्य वाचकत्वपक्षमाह—सुप्तिङन्तमिति । पारिभाषिकमिति—इदं पदमेतदर्थविषयकबोधजनकं भवतु' इतिपदविशेष्यिका, अस्माच्छब्दादयमर्थो बोद्धव्य.' इत्यर्थविशेष्यिका या शरीरिणामिच्छा परिभाषा,तद्विषयीभूतं पदं पारिभाषिकम् । 'सुप्तिङन्तं पदम्' इति सूत्रप्रणयनात् 'पदपदं सुप्तिङन्ततदादिविषयकबोधजनकं भवतु' इति पाणिनेरिच्छाऽनुमीयते । तादृशेच्छाविषयतया सुप्तिङन्तपदस्य पारिभाषिकत्वमिति भावः । वाचकत्वेति— पूर्वोक्तप्रकारेण तादृशसमुदायस्यैव वाचकत्वं स्यादित्याशङ्कायादृशसमुदायस्यावयवानां प्रकृतिप्रत्ययादिरूपाणां वाचकत्व वाचकत्वस्वीकर्तॄणां मतमित्यर्थः । सर्वपदादेशा इति—'युष्मदस्मद्भ्यां ङसोऽश्' निरासायाखण्डपदस्फोटस्य वाचकत्वस्वीकर्तॄणां मतमित्यर्थः । नैतदस्ति प्रयोजनम् , अक्रियमाणेऽपि शका- (पा० ७।१।२७) इति सूत्रभाष्ये 'किमर्थः शकारः ? सर्वादेशार्थः, नैतदस्ति प्रयोजनम् , अक्रियमाणेऽपि शकारेऽलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्याकारादेशे त्रयाणामकाराणामतो गुणे पररूपत्वे सिद्धं रूपं स्यात् । किं कायचेतत् 'सकारस्याकार.' लभ्येत कृतं ( सिद्धम् ) स्यात् । तत्तु ( सकारस्याकाररूपन्तु ) न लभ्यम् । अत उत्तरं पठति अकारस्या ( आ- रणाम् ? अत्र हि 'आदेः परस्य' इत्यकारस्य ( ङसोऽकारस्य ) प्रसज्येत । प्रयोजनं नास्तीति कृत्वाऽन्तरेणापि शकारं ( अकारस्य स्वघाकारस्य ) कार वचने ( अकारस्याकारादेशे ) सर्वादेश एव स्यात् ) सर्वादेशो भविष्यति । अकारस्याघात एव सत्त्वेन तदादेशविधानवैयर्थ्येन सामर्थ्यात्सर्वादेश एव स्यात् ) 'अनादेशे आत्वादिना बाधाद् आदेशे 'शेपे कारादेशफलमाशङ्क्य खण्डयति—'अर्थवत्तु आदेशे लोपार्थम्' । नतु 'अनादेशे' इत्यस्य आदेशभिन्ना या विभक्तिस्तत्रात्वालोपः' इति लोपार्थम् अकारस्याकारादेश, इति' । ननु 'अनादेशे' इत्यस्य बाधात् शेपे लोप इति न स्यादित्यादेशविधि इत्यकारस्याकारादेशेऽपि ङस्विभक्तेरादेशभिन्नत्वेनात्वादिना बाधात् शेपे लोप इति न स्यादित्यादेशविधानं व्यर्थीभूय कल्पयति—सर्वे आदेशा सर्वपदादेशा इति । सर्वे आदेशा अर्थवतः समुदायस्य स्थाने

दर्पणव्याख्या

न्धानस्याव्यवहितोत्तरत्वसम्बन्धेनोत्तरवर्णानुसन्धाने वाक्यस्फोटवक्ष्यमाणरीत्या सत्त्वाचेन स्वविषयकानुसन्धानविशिष्टानुसन्धानियतत्वरूपमिति नानुपपत्तिरिति । यथा चैतत् तथा वाक्यस्फोटनिरूपणे वक्ष्यत इति । तथाच 'वर्णसमुदायो वाचकः' इति पदस्फोटपक्षे पर्य्यवस्यति ॥ ६४ ॥ ❀पारिभाषिकेति❀ पाणिन्यादिसङ्केतितेत्यर्थः । पूर्वं आदेशस्मारितवर्णानां बोधकत्वनिरासेन प्रकृतिघटकवर्णसमुदायरूपस्य, प्रत्ययघटकवर्णसमुदायरूपस्य च तस्य वाचकतोक्ता । इदानीन्तूभयघटकवर्णसमुदायस्यैव सेति भेद । 'घट्' इति प्रकृतिः, एनेति प्रत्यय इति प्रकृतिप्रत्यययोर्विभागस्य ज्ञानासम्भवादिति योजनीयम् । ❀...प्रतिपादक भाष्यमेतत् । वस्नसादेरपि पश्लादाह—❀व्याजेनेति❀ तयाच निश्चित- ❀सर्वे सर्वपदेति❀

प्रकृतिप्रत्यययोर्ज्ञानासम्भवान्न वाचकत्वमित्यर्थः। वैयाकरणैर्विभागः सुज्ञेय इत्यतो दृष्टान्तव्याजेनाह—वस्नसादाविति—'बहुवचनस्य वस्नसौ' इति समुदायस्याऽऽदेशविधानान्नात्र तद्विभागः सम्भवतीत्यर्थः ॥ ६५ ॥

प्रभा

आदेशाः, शब्दानां नित्यतया विकाररूपादेशासम्भवाद् बुद्धिविपरिणामेनैवादेशत्वं वक्तव्यम्। बुद्धेश्चार्थयच्छब्दमात्रविषयकत्वाद् आदेशानां समुदायादेशत्वमावश्यकम्। तथाच अस् इत्यस्य 'अस्' इत्यादेशे विभक्तेरादेशाभिन्नत्वाभावेनात्वादिना बाधाभावात्, 'शेषे लोपः' इत्यस्य प्रवृत्त्यर्थमादेशविधानं चरितार्थमिति भावः। एवञ्च शित्त्वाभावे अस् इत्यस्य 'अस्' एव स्यात्तन्मा भूत् किन्तु असः स्थाने शित्त्वाय अशि कृते 'तव मम' इति सिद्ध्यर्थं शित्करणम्। तदुक्तं भाष्ये—'आदेशो एषा विभक्तिः। कथम्? सर्वे 'सर्वपदादेशा दाक्षिपुत्रस्य पाणिनेः। एकदेशविकारे हि नित्यत्वं नोपपद्यते' इति। तदुक्तं भाष्ये—'तस्माच्छित्करणम्' सर्वादेशार्थं कर्त्तव्यमिति शेषः। अग्रे शित्त्वं भाष्ये प्रत्याख्यातम्। तथाहि—न कर्त्तव्यः। क्रियते न्यास एव। प्रश्लिष्टनिर्देशोऽयम्। 'अ-अ' इति। तथाचानेकाल्त्वात्सर्वस्य भविष्यतीति शित्त्वं न कर्त्तव्यमिति। अत्र इदमर्थवत्तरम्। एकार इति—'आद्गुणः' इत्यनेनापि 'घट इन' इत्यस्य स्थाने 'घटेन' इति बुद्धिः कर्त्तव्या, इत्यस्यैव बोधनाद्विशिष्टादेशे प्रकृतिप्रत्यययोः पार्थक्येन ज्ञानासम्भवात्सुबन्तस्यैवाखण्डस्य वाचकत्वं स्वीकरणीयमित्यखण्डपदस्फोटः सिद्ध्यतीति भावः। ज्ञानासम्भवादिति—पूर्वपरवर्णयोः स्थाने एक एकार आदेश इति पक्षे स एकारः पूर्वस्थान्यकारघटितसमुदायावयवः परस्थानीकारघटितसमुदायावयवो वेति संशयकृतः प्रकृतिप्रत्ययविभागसंशयः। 'सर्वे सर्वपदादेशाः' इति पक्षे तु प्रकृतिप्रत्ययं दूरीकृत्य समुदायस्यादेशत्वेन बीजे शाखापत्रादीनां लय इव प्रकृतिप्रत्यययोः सम्मोहाज्ज्ञानाभाव एव। कश्चिद्भागः प्रकृतिः, कश्चिन भागः प्रत्यय इत्येवं भागत्वरूपसामान्येन सम्भवेऽपि विशिष्य=तत्तदानुपूर्वीरूपेण न सम्भवतीति विशिष्य ज्ञानासम्भवादित्युक्तमिति भावः। वाचकत्वमिति—पार्थक्येनार्थनिरूपितं वाचकत्वमित्यर्थः। गत्यन्तराभावात् समुदायस्यैव वाचकत्वमुपेयमिति भावः। व्याजेनेति=अन्यप्रदर्शनेनान्यगतधर्मस्यान्यत्र बोधनमत्र व्याजः। तथाहि—घटेनेत्यादिसमुदायः, घटाद्यभिन्नकरणाद्यर्थे शक्ताः, घटाद्यभिन्नकरणादिप्रतीत्यन्वयव्यतिरेकानुविधायिज्ञानविषयत्वादित्येवं वस्नसादिवदित्यनुमित्या प्रकृतिप्रत्ययविभागाभावबोधनेनेत्यर्थः। नच वस्नसादीनामपि पक्षताऽवच्छेदकतादृशसमुदायत्वाक्रान्तत्वाद् दृष्टान्तत्वेनोपादानमसङ्गतमिति वाच्यम्, निश्चितसाध्यवत एव दृष्टान्तत्वस्य सम्भवेन तस्य चात्र सत्त्वेन तदुपादानमित्याशयात्। अत एव 'व्याजपदमुपात्तम्। समुदायस्येति—पदात्परयोरपादादौ स्थितयोः षष्ठीचतुर्थीद्वितीयाश्रूयमाणबहुवचनान्तयोर्युष्मदस्मदोर्वस्नसौ स्याताम्' इत्यर्थकेन बहुवचननिष्ठचरमावयवतानिरूपकयोर्युष्मदस्मदन्यतरनिष्ठाद्यावयवतानिरूपकयोः समुदाययोः स्थाने आदेशविधानादित्यर्थः। अत्र='वः' 'नः' इत्यत्र। विभाग=प्रकृतिप्रत्ययविभागः। सम्भवतीति=तथाच यथा—वस्नसादौ वैयाकरणानामपि विभागज्ञानासम्भवस्तथा 'सर्वे सर्वपदादेशाः' इति

दर्पणव्याख्या

साध्यवत्त्वस्यैव दृष्टान्तत्वे तन्त्रत्वेन तस्य पक्षभिन्नत्वाभावेऽपि न दृष्टान्तत्वमनुपपन्नमिति भावः। *तत्र*=वस्नसादिस्थले। *विभाग*=प्रकृतिप्रत्यययोः पार्थक्येन निर्णय इत्यर्थः। अस्य वैयाकरणानामपीति शेषः। परे तु आमादौ प्रत्ययत्वस्य दृष्टत्वेन साभित्यादावामो व इत्यादेर्वसादेः प्रत्ययत्वमितरांशस्य प्रकृतित्वमनुमातुमशक्यमित्युक्तरीत्या न प्रकृतिप्रत्ययसमुदायरू-

'हरेऽव' विष्णोऽव' इत्यादौ पदयोः "एङः पदान्तादति" इत्येकादेशे सति न तद्विभागः सुज्ञानः। तथाच प्रत्येकं पदाज्ञानेऽपि समुदायशक्तिज्ञानाच्छाब्दबोधात् समुदायेऽप्यतिरिक्ता शक्तिः। एवञ्च प्रकृतिप्रत्ययेषु विशिष्याज्ञायमानेष्वपि समुदायव्युत्पत्त्या बोधात् तत्राप्यतिरिक्तैव शक्तिरिति

प्रभा

पचति' इति। तदाहेति—वाचकत्वमाहेत्यर्थः। कारिकायामादिशब्दग्राह्यमाह—विष्णोऽवेति। इत्यादावितिः—आदिना 'पतञ्जलि' 'मनीषा' इत्यादीनां संग्रहः। पदयोरिति—अस्य 'एकादेशे' इत्यत्रान्वयः। तथाच 'हरे अव' इत्यस्य स्थाने 'हरेऽव' इत्यानुमानिकैकादेशे इत्यर्थः। यद्वा पदद्वयावयववर्णयोरेकादेश इत्यर्थः। तद्विभागः=पूर्वोत्तरपदविभागः। समुदाय इति='हरेऽव' इति समुदाये 'हरिनिष्ठाभिमुखीभावरूप-व्यापारानुकूलेच्छाविषय' सकर्मकं त्वन्भिन्नकर्तृवृत्तिप्रवर्तनाविषयो रक्षणम्' इत्यतदर्थनिरूपिता शक्तिराव-श्यिकेत्यर्थः। विशिष्य-सूत्रोपात्तरूपेण। ज्ञायमानेष्विति=लिङ्ढो, लिहम्' इत्यादौ ज्ञायमानेष्वपि प्रकृति-प्रत्ययष्वित्यर्थः। वस्तुतस्तु वाक्यस्फोटस्य प्रकृतत्वेन 'प्रकृतिप्रत्ययेषु' इत्यस्य पार्थक्येन ज्ञायमानपदघटितेषु 'पुस्तकं पठति' इत्यादिवाक्येषु इत्यर्थो युक्तः। समुदायव्युत्पत्त्येति—समुदायस्य वाचकत्वज्ञानेत्यर्थः। यद्वा 'पङ्क्तिविंशति' इति सूत्रनिपातितानां पङ्क्तिविंशत्यादिशब्दनिष्ठसमुदायशक्तिबोधकत्वन्यायेनेत्यर्थः। पञ्च परिमाणमस्येति पङ्क्तिः। पञ्चन्शब्दस्य टेर्लोपे तिप्रत्ययः च निपात्यते। पङ्क्तिशब्दश्च नानार्थकः। यथा क्रमनिवेशे—ब्राह्मणपङ्क्तिः, दशसंख्यायाम् पङ्क्तिरथः, पञ्च पादाः परिमाणमस्य छन्दसः सा पङ्क्तिश्छन्दः। छन्दोविशेषे एवावयवार्थानुगमो नान्यत्र। यद्यपि पाणिन्याद्याचार्येणोच्चारितस्य समुदायस्योपप-त्तये यत्रावयवा अनुमीयन्ते तन्निपातनम्=विपरीतविधिः। यथा द्वौ दशतौ परिमाणमस्य दशद्वयरूपसमु-दायस्येति विंशतिः, दशद्वाचिद्विशब्दात् शतिच् प्रत्ययः द्विशब्दस्य विंभावे साधुः। त्रयो दशतः परिमाणमस्य दशत्रयात्मकसमूहस्येति त्रिंशत्, दशद्वाचित्रिशब्दस्य त्रिंभावे शत्प्रत्यये च साधुः। चत्वारो दशतः परि-माणमस्य दशच्चतुष्टयात्मकसमूहस्येति चत्वारिंशत्, दशद्वाचिचतुःशब्दस्य चत्वारिंभावे शत्प्रत्यये च साधुः। एवम्पञ्चशब्दस्य 'पञ्चा' इत्यादेशे शत्प्रत्यये पञ्चाशत्, एवम् षड्, सप्त, अष्ट, नव, दशतः परिमाण-मस्येति विग्रहे तिप्रत्यये षष्टिः, सप्तति, अष्टशब्दस्य 'अश्यादेशे च 'अशीति' नवतिरेते शब्दा बोध्याः। विंशत्यादितो नवत्यन्ता स्त्रीलिङ्गा एव संख्यायां संख्येये च। दश दशतः परिमाणमस्येति शतम्, दशशब्द-स्य शादेशे तप्रत्यये च शतम्। शतं दशतः परिमाणमस्येति सहस्रम्, शतशब्दस्य सहादेशे स्रप्रत्यये च सहस्रम्। दश सहस्राणि परिमाणमस्येति अयुतम् दशशब्दस्य सहस्रवाचकस्य 'अयु' इत्यादेशे तप्रत्यये च अयुतमिति। एवमेव लक्षादयः शब्दाः पृषोदरादित्वान्निपातनीयाः। शतादिपरार्द्धान्ताश्च नित्यनपुंसकाः संख्यायाम्, संख्येये चालमतिप्रसक्तेन। प्रकृतमनुसरामः—ननु यत्र पदविभागज्ञानं न सम्भवति, तत्र वाक्यस्य

दर्पणव्याख्या

वाचकत्वम्। *समुदाय इति*पदसमुदायरूपे वाक्य इत्यर्थः। *एवमिति* वाक्यशक्तिवदित्यर्थः। विशिष्य=सूत्रो-पात्तरूपेण। अज्ञायमानेष्वित्यनेन तन्निष्ठबोधकत्वज्ञानासम्भवः। सूच्यते—समुदायव्युत्पत्त्येति* समुदायस्य वाचकत्व-ग्रहणेत्यर्थः। बोधात्=प्रकृत्यर्थविशिष्टप्रत्ययार्थबोधादित्यर्थः। तत्रापि=सुप्तिङन्तरूपपदेऽपि। *शक्तिरिति* तत्कल्प-नेत्यर्थः। ननु घटेन इत्यादिमूलेन समयुक्तिकस्फोटद्वयोपादानात् कथं पदस्फोटे साध्ये वाक्यस्फोटस्य दृष्टान्तत्वम्। किञ्च प्रथमं पदस्फोटसिद्धौ तदर्थसम्बन्धः

भावः। वस्तुतः पदैः पदार्थबोधवद्वाक्येन वाक्यार्थबोध इति पदार्थशक्तिः पदेष्विव वाक्यार्थशक्तिर्वाक्येऽभ्युपेयेति पदस्फोटवाक्यस्फोटौ व्यवस्थितौ। अन्यथा 'घटः कर्मत्वमानयनं कृतिः' इत्यादौ तादृशव्युत्पत्ति-

प्रभा

वाचकत्वसम्भवः। किञ्च तुल्ययुक्त्या पदस्फोटवाचकत्वे सिद्धेऽपि विभागज्ञानसम्भवेऽपि वाक्यस्य न वाचकत्वसम्भवः। संसर्गरूपार्थवाक्यस्फोटयोर्व्यवस्थापनमसङ्गतम्, पदस्फोटे सिद्धे वाक्यार्थत्वेनाभिमतस्य पदार्थयोः संसर्गरूपार्थस्याप्रसिद्ध्या वाक्ये तद्वाचकत्वसाधनप्रयासो विफल एवेत्याशङ्क्य पदस्फोटदृष्टान्तेन वाक्यस्फोटं साधयितुमाह—वस्तुतस्त्विति। पदैरिति=घटादिप्रातिपदिकरूपशक्तैः पदैः सुबन्तैर्वा। यथा घटादिरूपोऽर्थः प्रत्याय्यते, तथा 'घटमानय' इत्यादिवाक्यैः संसर्गरूपोऽर्थः प्रत्याय्यते। यद्यपि वाक्येन पदार्थस्यापि प्रतीतिस्तथापि 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायेन पदैरेव पदार्थस्य प्रतीतत्वात्संसर्ग एव वाक्यशक्तिः पर्यवस्यति। यत्तु यत्र पार्थक्येन पदज्ञानं तत्र पदशक्त्यैव वाक्यार्थबोधान्न वाक्ये शक्तिः। यत्र तु 'हरेऽव' इत्यादौ पदज्ञानाभावस्तत्र पदैर्वाक्यार्थबोधासम्भवेनागत्याऽस्तु वाक्ये शक्तिरिति तन्न, अर्द्धजरतीयस्यानौचित्यात्। पदानां नानात्वेन विनिगमनाविरहात्सर्वत्र शक्तिकल्पने गौरवाच्च। नच कारकविभक्त्यैव क्रियाकारकभावसम्बन्धस्य शेषषष्ठ्या, उपपदविभक्त्या च तदितरसम्बन्धस्य बोधनाद्वाक्ये शक्तिकल्पनं व्यर्थमिति वाच्यम्, विभक्त्या विशेष्यविशेषणभावरूपसम्बन्धस्यालाभेन वाक्ये तन्निरूपितशक्तेरावश्यकत्वात्। नच विभक्तिप्रकृत्यर्थविशेषणत्वे विभक्तेः शक्तिकल्पनया तद्बोधनिर्वाह इति वाच्यम्, विशेष्योत्तरविभक्त्या तद्बोधोपपत्तिः, प्रातिपदिकार्थव्यत्वस्य तादृशविभक्त्या बोधनासम्भवात्। नच विशेष्योत्तरविभक्त्या तद्बोधोपपत्तिः, प्रथमान्ते तदसम्भवात्। नच विशेष्यविशेषणभावस्य सर्वत्रापि शाब्दबोधविषयत्वे मानाभाव इति वाच्यम्, 'यद्विशेषे' इत्यस्य 'पदार्थसंसर्गरूपे वाक्यार्थे इत्यर्थः' इति कैयटात्, 'वीरपुरुषः' इत्यादौ विशेषणविशेष्यभावरूपं यदाधिक्यं स वाक्यार्थः' इति षष्ठी शेषे इति सूत्रे भाष्याच्च। अत एव समासग्रहणस्य नियमार्थत्वपरं भाष्यं संगच्छते। नन्वाकाङ्क्षादिसहकारेण पदान्येव वाक्यार्थबोधकानि भविष्यन्तीति चेन्न, गुरुभूताकाङ्क्षायोग्यतादिज्ञानस्य कारणत्वे मानाभावात्। व्यवस्थिताविति—यत्र पदविभागसम्मोहस्तत्रैव वाक्यशक्तिर्यथा—'हरेऽव' इत्यादौ। यत्र न सम्मोहो यथा 'घटमानय' इत्यादौ तत्र न वाक्यशक्तिरिति न, किन्तु तत्रापि वाक्यशक्तिरेवेति व्यवस्थेति भावः। अन्यथेति—पदविभागासम्मोहस्थले पदानामेव वाक्यार्थबोधकत्वे इत्यर्थः। तादृग्व्युत्पत्तीति—व्युत्पत्तिरत्र ज्ञानम्। 'घटः, कर्मत्वम्' आनयनं कृतिः' इति वाक्यम्—'घटकर्मकानयनजनककृतिविषयकबोधजनकतावत्' इति वाक्यविशेष्यकबोधजनकत्वप्रकारकशक्तिज्ञानरहितस्यापीत्यर्थः। एतेन ताद-

दर्पणव्याख्या

दृष्टान्तीकृत्य वाक्यशक्तिं साधयति—*वस्तुत इति* तथाच तत्र पदेष्वेव पदार्थशक्तिग्रहात् पदोपस्थित्या पदशक्तिग्रहस्थलस्तत्र पदशक्त्यैव वाक्यार्थबोधः। यत्र तदसम्भवो हरेऽवेत्यादौ, तत्रानायत्या वाक्यशक्त्यैव तद्बोध इति। यद्यपि व्यवस्थिताविति पदमहिम्ना पक्षद्वयं व्यवस्थितमिति लभ्यते, तथापि आवश्यकवाक्यस्फोटेनैवोपपत्तौ पदस्फोटकल्पनं नावश्यकमिति सिद्धान्ते वाक्यस्फोट एव पर्य्यवस्यतीति बोध्यम्। वाक्यस्फोटस्यावश्यकतामेव दर्शयति—*अन्यथेति* वाक्यशक्त्यनभ्युपगमे इत्यर्थः। *तादृशेति* वाक्यार्थबोधजनकत्वरूपवाक्यशक्तिज्ञानरहितस्यापीत्यर्थः। तत्सत्त्वे तु तत्रापि बोध इष्ट

रहितस्यापि बोधप्रसङ्गः । 'घटमानय' इत्यत्रैव पदार्थानामुपस्थितौ सत्यपि तात्पर्यज्ञाने बोधाभावाच्च । तत्रैव घटकर्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तरं कर्मत्ववाचकविभक्तेस्ततो

प्रभा

शवाक्ये बोधजनकत्वप्रकारकशक्तिभ्रमवतस्तु बोधो भवत्येवेति सूचितम् । बोधप्रसङ्ग इति—घटकर्मकानयनजनककृतिविषयकबोधापत्तिरित्यर्थः, पदानामेव वाक्यार्थे शक्तिरिति ज्ञानवतां पदजन्यपदार्थोपस्थितिसत्त्वात् वाक्ये शक्तिस्वीकर्तृणान्तु न दोषः, तद्वाक्ये तादृशबोधजनकशक्त्यभावात् । तत्र शक्तिज्ञानसत्त्वे तु तादृशबोध इष्ट एव । घटमानयेत्यत्रेव—वाक्ये शक्तिमनङ्गीकुर्वतः पुंसो यथा 'घटमानय' इत्यनेनापि पदशक्तिज्ञानादेव पदार्थानामुपस्थितौ बोधस्तथा 'घटः कर्मत्वम्' इत्यादिनाऽपि बोधः स्यादिति भावः । ननु शाब्दबोधे वक्तुस्तात्पर्यज्ञानस्यापि कारणत्वात् 'घटः कर्मत्वम्' इत्यत्र 'इदं वाक्यं घटकर्मकानयनविषयकबोधजनकं भवतु' इत्याकारकेच्छारूपं यद्वक्तुस्तात्पर्यं तज्ज्ञानाभावादेव बोधो न स्यादत आह—सत्यपीति । बोद्धुरुक्तवक्तृतात्पर्यज्ञानसत्त्वेऽपि बोधादर्शनाद्वाक्ये शक्तिरुपेयेति भावः । बोधाभावादिति- घटकर्मकानयनविषयकबोधाभावादित्यर्थः । ननु तादृशबोधजनकतात्पर्यज्ञानसत्त्वेऽपि कारणान्तरमपि किञ्चिदपेक्ष्यते तदभावादेव न बोध इत्याशयेन कारणान्तरं दर्शयति—तत्रैवेति—'घटमानय' इत्यत्रैवेत्यर्थः । अत्र वाक्ये शक्तिज्ञानाभावेऽपि यथाऽत्र पदार्थानामुपस्थितिस्तथा 'घटः कर्मत्वमानयनं कृतिः' इत्यत्रापि, परन्तु अव्यवहितोत्तरत्वसम्बन्धेनाम्पदे घटपदस्वरूपायाः, अव्यवहितोत्तरत्वसम्बन्धेन घटपदेऽम्पदस्वरूपाया वा, एवमम्पदविशिष्टमानयपदं तद्विशिष्टमम्पदं तत्स्वरूपाया आकाङ्क्षाया अभावेन 'घटमानय' इत्यत्र च तादृशाकाङ्क्षायाः सत्त्वेन बोधो जायते । 'घटः कर्मत्वम्' इत्यनेन तदभावादेव बोधो न जायते इति 'यदभावे कार्याभावो यत्सत्त्वे कार्यसत्ता, इत्यन्वयव्यतिरेकाभ्याम् 'घटादिपदाव्यवहितोत्तरत्वविशिष्टामादिपदस्वरूपायाः, आङुपसर्गविशिष्टनयपदस्वरूपायाश्चाकाङ्क्षायाः कारणत्वमवगम्यते । वाक्यशक्त्यस्वीकारेऽपि दोष । घटार्थकेति—बहुव्रीहिणा कलशादिसंग्रहः । विभक्तेरिति—अम्, औ, शस्, इत्यस्यैकरूपेण संग्रहः । गतो नत आख्यातस्येति—एतेन 'आहर' इत्यादेरपि संग्रह । एकविधकार्यकारणभावेनैव 'घटम्' 'घटौ' 'घटान्' 'कलशम्' 'कलशौ' 'कलशान्' 'आनय' आनयतम्' 'आनयत' 'आहर' 'आहरतम्' 'आहरत' इत्यादिघटितवाक्यानामप्येकरूपेण कार्यकारणभावः सूचितः । यद्यपि प्रातिपदिकत्वेन, धातुत्वेन, आख्यातत्वेन च ज्ञानशून्यानां घटमानय' इत्याद्यानुपूर्वीमात्रेण बोधदर्शनात्तद्घटितकार्यकारणभावोऽसङ्गतस्तथापि वैयाकरणानां बोध्यबोधकभावाभिप्रायेण तदुक्तिर्नेया । वस्तुतस्तु तत्तदानुपूर्वीरूपेणैव कार्यकारणभाव इति कार्यकारणभावानन्त्यमगत्या

दर्पणव्याख्या

एवेति भावः । *बोधप्रसङ्गः*=घटकर्मकानयनानुकूलकृतिबोधापत्तिः, पदवृत्तिज्ञानजन्यपदार्थोपस्थितेः सत्त्वादिति भावः । *घटमानयेत्यत्रेवेति* । अत्र तादृशानुपूर्वीरहितस्ये यदुपपद्यते । ननु शाब्दबोधकारणार्थतात्पर्यज्ञानरूपसहकार्यन्तराभावादेव न बोधोऽत आह—*सत्यपीति* । *बोधाभावादिति* तादृशबोधाभावादित्यर्थः । तथाच यदभावात् कार्याभावस्तस्य तद्धेतुतया वाक्यशक्तिरावश्यकी । भाव । एतेन व्यतिरेकसहचारकारणताग्राहकः प्रदर्शितः । अन्वय प्रदर्शयन् वाक्यशक्ति व्यवस्थापयति—*तत्रैवेति* घटमानयेत्यत्रैवेत्यर्थः । बोधादित्यनेन स्वरूपसतो हेतुत्वस्य व्यवच्छेदः । तादृशाकाङ्क्षाज्ञानविशिष्टबोधहेतुत्वस्यैवास्मन्मते वाक्यशक्ति

युक्तञ्चैतत्—विषयतासम्बन्धेन शाब्दबोधमात्रे वृत्तिज्ञानस्य लाघवेन हेतुत्वसिद्धेः। विवेचितञ्चैतद् भूषणे।

प्रभा

आधेयता यस्य ज्ञानकारणत्वस्य तादृशं बोधजनकत्वमेव शक्तिः। शाब्दस्थलेऽर्थोपस्थापकं ज्ञानं द्विविधम्। 'घटपदं घटत्वप्रकारकघटविशेष्यकबोधजनकतावत्' इत्याकारकरूपं पदविशेष्यकम्, 'घटमानय' इति वाक्यं त्वत्कर्तृकघटकर्मकानयनविषयकबोधजनकतावत्' इति वाक्यविशेष्यकमपरम्। तत्राद्यज्ञानविषयः पदरूपः शब्दः, द्वितीयज्ञानविषयश्च वाक्यरूपः शब्दः। उभयविधशब्दवृत्ति च बोधजनकत्वं शक्तिः। तत्र संसर्गविषयकबोधजनकत्वरूपा शक्तिर्वाक्ये, प्रकारताश्रयविशेष्यताश्रयविषयकबोधजनकत्वरूपा शक्तिः पदे। अत्र बोधशब्देनोपस्थितिर्गृह्यते, अत एव ज्ञाने 'अर्थोपस्थापकेति विशेषणं सङ्गच्छते। अन्यथा 'नीलो घटः' इत्यत्र घटविषयकशाब्दम्प्रति स्वरूपसम्बन्धरूपाया घटविषयकबोधजनकताया नीलादिशब्देऽपि सत्त्वादतिप्रसङ्गः स्यात्। उपस्थापकत्वस्य निवेशे तु उपस्थितिकारणतारूपाया उपस्थापकताया घटशब्दे एव सत्त्वेन नातिप्रसङ्ग। एतत्=वाक्यनिष्ठबोधजनकतायाः शक्तित्वकल्पनम्। युक्तत्वे लाघवरूपहेतुमाह—विषयतेति। शाब्दबोधमात्रेति—मात्रपदं साकल्यपरम्, पदजन्ये वाक्यजन्ये च सकले शाब्दबुद्धित्वावच्छिन्न इत्यर्थः। विषयतासम्बन्धेनेत्यत्र विषयता—प्रकारता—विशेष्यता—संसर्गतान्यतमरूपा ग्राह्या। तत्र संसर्गतया संसर्गेऽपि शाब्दबोधस्य सत्त्वात्तन्निर्वाहाय संसर्गनिरूपिता शक्तिर्वाक्ये कल्पनीयेति भावः। वृत्तिज्ञानस्येति—स्वविषयवृत्तिनिरूपकत्वसम्बन्धेन वृत्तिज्ञानं शाब्दबोधे कारणम्। स्वम्=वृत्तिज्ञानं तद्विषयो वृत्तिस्तन्निरूपकत्वमर्थे इति पूर्वोक्तकारणतावच्छेदकसम्बन्धेन वृत्तिज्ञानमर्थे, कार्यतावच्छेदकविषयतासम्बन्धेन शाब्दबोधोऽपि तत्रैवेति शाब्दबोधरूपकार्यस्य वृत्तिज्ञानरूपकारणस्य च सामानाधिकरण्यनियमः संगच्छते। शब्दस्यापि शाब्दबोधविषयत्वनये तु विषयतासम्बन्धेन शाब्दबोधम्प्रति स्वविषयवृत्तिविशिष्टत्वसम्बन्धेन वृत्तिज्ञानस्य कारणत्वं वाच्यम्, वृत्तिविशिष्टत्वञ्च-स्वनिरूपकत्व-स्वाश्रयत्वान्यतररूपम्। एवञ्च शब्दस्यापि स्वाश्रयतया शाब्दे भानोपपत्तिः। यदा तु वृत्तिज्ञानपदं स्वजन्योपस्थितिपरम्, तदा कारणतावच्छेदकसम्बन्धोऽपि विषयतैव। लाघवेनेति। घटादिपदशक्तिमजानतो घटादिपदञ्च जानतः पुंसः

दर्पणव्याख्या

भानेन तज्ज्ञानस्य शाब्दबोधप्रयोजकत्वेऽपि शक्तिःनाऽऽश्रये। बोधकशब्दस्य शब्दत्वेन निवेशाच्चापभ्रंशस्यापि संग्रह इति भावः। ननु वाक्यशक्तिवादिमते संसर्गरूपवाक्यार्थस्य नानात्वात्तद्भेदेन शक्त्यानन्त्यम्। किञ्च पदवृत्त्या वाक्यशक्तिं विनाऽपि वाक्यार्थबोधजननाद्वाक्यशक्तिग्रहस्य तद्धेतुताया व्यभिचार। अखण्डवाक्यपक्षस्तु नेदानीं प्रक्रान्त। कार्यतावच्छेदकेऽस्य प्रदर्शितोत्तरस्तन्निवेशेन तद्वारणेऽप्यनुपस्थितसंसर्गे वाक्यशक्तिग्रहस्य शाब्दबोधात् प्रागसम्भवेन कथं तद्ग्रहस्य शाब्दबोधकारणतेति चेत् सत्यम्, संसर्गस्य विशिष्यानुपस्थितावपि तदादिवत् कारकविभक्तिविशिष्टधातुपदं कारकविशिष्टक्रियाबोधकमिति सामान्यतस्तद्ग्रहात्। तात्पर्यग्रहस्य त्वयाऽप्येवमेव वाच्यत्वात्। अनन्तरं पदविशेषसमभिव्याहारेण तात्पर्यवशात् संसर्गविशेषेण तत्कारकविशिष्टक्रियाभानम्। नापि संसर्गाऽऽनन्त्यप्रयुक्तशक्त्यानन्त्यम्, सम्बन्धत्वस्यानुगमकस्य नियामकताप्युभयोः समैवेति तन्मतनिष्कर्षः। ननु स्यादेवोक्तप्रकारा यदि वाक्यनिष्ठबोधकतायाः शक्तित्वे प्रमाणं स्यात्, तदेव तु नेत्यत आह—* युक्तं चैतदिति *। * एतद् * वाक्यनिष्ठबोधकत्वस्य शक्तित्वम्। युक्तिमेवाह—* विषयतेति * शाब्दबोधमात्रे तत्सामान्य इत्यर्थः. * वृत्तिज्ञानस्येति * वृत्तिज्ञानजन्योपस्थितेरित्यर्थः। विषयतासम्बन्धेनेत्यनुषज्यते। * लाघवेनेति * अन्यथा घटपदशक्तिमविदुषस्तत्पद-

प्रभा

घटाद्यर्थकपदनिष्ठवृत्तिज्ञानजन्यो-
'घटमानय' इत्यादिवाक्याच्छाब्दबोधवारणाय घटादिविषयकशाब्दबोधे
परिथतेः कारणत्वं वाच्यमिति पदतदर्थभेदेनोक्तरीत्या कार्य्यकारणभावकल्पने गौरवम्। वाक्यशक्तिवादिन-
स्तु स्वविषयवृत्तिनिरूपकत्वसम्बन्धेन वृत्तिज्ञानस्य, विषयतासम्बन्धेन तज्जन्योपस्थितेर्वोऽर्थे घटादिपदश-
क्तिमजानतः पुंसोऽभावेन न शाब्दबोध इत्येकविधकार्य्यकारणभावेनैव सर्वत्र निर्वाह इति महल्लाघवम्।
वृत्तिज्ञानजन्योपस्थितेः कारणतावच्छेदकविषयतासम्बन्धेनाभावादेव शब्दाश्रयतयोपस्थिताकाशस्य शब्दोप-
रणकर्तृतयोपस्थितचैत्रादेश्च न शाब्दे भानापत्तिः। लाघवमूलकोक्तकार्य्यकारणभावानुरोधेन संसर्गस्यापि
शाब्दबोधोपपत्तये संसर्गनिरूपितवृत्तेर्वाक्ये कल्पनमावश्यकम्। ननु विषयतासम्बन्धेन शाब्दबुद्धित्वावच्छि-
न्नम्प्रति विषयतासम्बन्धेन वृत्तिज्ञानस्य कारणत्वेऽपि संसर्गविषयकबोधो वाक्यशक्त्या न सम्भवति, वाक्यश-
त्तिज्ञानजन्यसंसर्गोपस्थितेः प्रतियोग्यनुयोगिविशिष्टविषयकत्वेन शाब्दबोधरूपतया तादृशशाब्दबोधम्प्रति शाब्द-
बोधस्य कारणत्वासम्भवादिति चेन्न, 'घटमानय' इत्यादिवाक्यं घटकर्मकानयनविषयकबोधजनकतावत्' इति
वृत्तिज्ञानविषयबोधीयविषयताया एव कारणतावच्छेदकविषयतासम्बन्धेन वृत्तिज्ञानस्य कारणतास्वीकारेण तस्य
च शाब्दबोधभिन्नतयोक्तदोषाप्रसक्तेः, घटत्वादिनिर्विकल्पकज्ञानवत्। केवलसंसर्गविषयकोपस्थितौ बाधका-
भावाच्च। न च कलशपदवृत्तिज्ञानवतो विषयतासम्बन्धेन घटे वृत्तिज्ञानस्य सत्त्वाद् घटपदवृत्तिमजानतोऽपि
घटपदाद् बोधवारणाय विशेषतो घटादिपदात् घटत्वादिविशिष्टविषयकबोधे घटादिपदवृत्तिज्ञानस्य कारणतेति
प्रातिस्विकः कार्य्यकारणभावो वाच्य इति विशेषकार्य्यकारणभावेनैवोपपत्तौ सामान्यतो विषयतासम्बन्धेन
शाब्दबोधम्प्रति विषयतासम्बन्धेन वृत्तिज्ञानस्य कारणत्वमिति कार्य्यकारणभावो व्यर्थ इति वाच्यम्,
कारणाभावस्य कार्य्याभावप्रयोजकतया सामान्यतः शाब्दबुद्धित्वावच्छिन्नाभावे वाच्ये विशेषकारणाभाव-
कूटस्य प्रयोजकत्वस्वीकारे महागौरवेण विषयतासम्बन्धेन सामान्यतो वृत्तिज्ञानरूपकारणाभावस्यैकस्य
प्रयोजकत्वस्वीकारे महालाघवरूपफलसत्त्वात्। न च संसर्गविषयकशाब्दबोधं प्रति वाक्यनिष्ठशक्तिज्ञानस्य
कारणत्वासम्भवः, शाब्दबोधात्प्राक् संसर्गस्याज्ञानेन तन्निरूपितशक्तिज्ञानासम्भवादिति वाच्यम्, तात्पर्य्य-
ज्ञानरूपामुपस्थितिमादायैव तात्कालिकस्य वाक्यशक्तिग्रहस्य सम्भवात्। यद्वा वृद्धव्यवहारेण प्राथमिक-
शक्तिग्रहो यथा मनसा, तथाऽत्रापि पदैः पदार्थोपस्थितौ सत्यां मनसा सम्बन्धोपस्थितिर्नानुपपन्नेति वाक्ये
शक्तिग्रहः। परन्तु मानसं ज्ञानं प्रायः संशयरूपमिति तन्निवृत्तये वाक्यशक्त्यादरः। तदग्रेऽ वक्ष्यते
लक्षणादित्यादिना। किञ्च यथा घटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यतायाः शाब्दे भाननिर्वाहाय
प्रकारताविशेष्यतयोरपि घटपदस्य शक्तिः। अत एव 'घटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यताकज्ञानवा-
नहम्' इत्यनुव्यवसायः। अनुभवाविषयस्य, स्वरूपतोऽनुभवविषये विद्यमानस्यानुव्यवसाये भानाङ्गीकारे
आम्रफलादिविषयकज्ञानानुव्यवसाये माधुर्य्यादीनामपि भानापत्तिः। किञ्च विषयतायाः शाब्दाविषयत्वे
'कुब्जराज्ञः' 'राज्ञकुब्जः' इत्यादौ प्रतीयमानस्य बोधे विशेषस्यासिद्धिः परिहर्तुमशक्या। अत एव
समर्थसूत्रे भाष्ये जहत्स्वार्था वृत्तिरिति पक्षे 'राजपुरुषमानय' इत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति ? इत्याश
ङ्क्य सिद्धान्तिनोक्तम्। नैष दोषः, जहदप्यसौ स्वार्थं नात्यन्ताय जहाति, यः परार्थविरोधी स्वार्थस्तं
जहाति 'तद्यथा—तक्षा राजकर्मणि प्रवर्तमानः स्वं तक्षकर्म जहाति, नतु हिक्कितहसितकण्डूयितानि।
नचायमर्थः परार्थविरोधी विशेषणं नाम। तस्मान्न हास्यति। अयम्भावः 'राज्ञः पुरुषः' इति वाक्ये राजपदार्थे
विशेषणत्वं वृत्तावपि तत्र तन्न हीयते। परन्तु 'ऋद्धस्य राज्ञः पुरुषः' इत्येवं राज्ञि ऋद्धनिरूपितं यद्विशेष्यत्वं
वाक्यार्थभूतं तस्य वृत्तौ त्यागः। 'वृत्तस्य विशेषणयोगो न' इति न्यायेन ऋद्धादेर्वृत्तावन्वयो नेति विशेष्यत्व-
स्य त्याग इति यावत्। एतेन शाब्दे विषयताया भानं तस्या वाक्यशक्यत्वञ्च सूचितम्। विशेष्यविशेषणभाव-

प्रभा

रूपे सम्बन्धे वाक्यशक्तेरभावे विशेष्यत्वस्य त्यागः, विशेषणत्वस्य चोत्याग इति भाष्योक्तिरसङ्गता स्यात्। तादृशविषयतायाः स्वरूपेणैव शक्यत्वं न विषयतान्तरेणेति नानवस्था। 'जात्याकृतिव्यक्तयस्तु पदार्थः' इति सूत्रे न्यायवार्तिककृताऽपि विषयतायाः शब्दशक्यत्वम्' 'प्रधानोपसर्जनभावस्यानियमेन पदार्थत्वम्' इत्युक्त्या स्पष्टमेव सूचितम्। प्रातिपदिकार्थसूत्रे भाष्ये 'वीरपुरुषः' इत्यत्र प्रथमा न प्राप्नोति, आधिक्यात्। 'व्यतिरिक्तः प्रातिपदिकार्थः' इति प्रथमा न प्राप्नोति, नवा वाक्यार्थत्वात्। यदत्राधिकम्—'विशेष्यविशेषणभावो वाक्यार्थः स इत्युक्तम्। ननु संसर्गस्य वाक्यार्थत्वे 'राज्ञः पुरुषः' इत्यत्र राजपुरुषयोः सम्बन्धस्य षष्ठी वाचिका' 'कष्टं श्रितः' इत्यत्र क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिका, इति समर्थसूत्रस्थभाष्यविरोधः, प्रकारतया भासमानसम्बन्धाभिप्रायेण तदुक्त्या विरोधाभावात्, विशेष्यविशेषणभावरूपसम्बन्धस्यैव वाक्यशक्यत्वेनाङ्गीकाराच्च। यद्यपि विभक्तिप्रकृत्यर्थगतविशेषणत्वमपि विभक्तिवाच्यमेव, तथापि विशेष्यनिष्ठमितरपदार्थनिष्ठविशेषणतानिरूपितविशेष्यत्वं वाक्यशक्यमेव। वाक्यार्थभूतश्च विशेष्यविशेषणभावो न ज्ञाननिरूप्य इति शाब्दबोधात्पूर्वमनुपस्थितत्वाच्छक्तिग्रहासम्भव इति तन्त्रान्तरोक्तिः शाब्दिकसिद्धान्तानवबोधप्रयुक्ता। तथाहि विशेषणत्वम्—तदधीनस्थितिकत्वरूपम्। विशेष्यत्वञ्च—तत्स्थितिनियामकत्वरूपं वस्तुधर्म एव। गुणकर्मसामान्यविशेषसमवायानां द्रव्यं प्रति विशेषणत्वमेव, द्रव्याधीनस्थितिकत्वात्तेषाम्। गुणादीनान्तु परस्परमव्यवस्थितो विशेष्यविशेषणभावः, आश्रयद्वारैव तेषामुक्तधर्मवत्त्वात्। अभावस्य तु सर्वान्प्रति विशेषणत्वमेव। द्रव्याणान्तु यस्य यदधीनस्थितिकत्वं नास्ति तयोर्धर्मपर्यालोचनया विशेष्यविशेषणभावो भवति। 'राज्ञः पुरुषः' इत्यत्र राज्ञः पुरुषाधीनस्थितिकत्वाभावेऽपि तन्निष्ठस्वामित्वस्य पुरुषाधीनस्थितिकत्वाद्विशेषणत्वम्। 'पुरुषाणां राजा' इत्यत्र पुरुषनिष्ठस्वत्वस्य राजाधीनस्थितिकत्वाद्विशेषणत्वम्। एवम् 'घटे रूपम्' इत्यत्र द्रव्यस्य गुणाद्यनपेक्षणत्वेऽपि आधारत्वस्य गुणापेक्षणाद्विशेषणत्वम् इति तदधीनस्थितिकत्वं यत्र विवक्ष्यते तद्विशेषणम्। तत्स्थितिनियामकत्वविवक्षणे विशेष्यत्वम्। तज्ज्ञाननियामकश्च 'घटपदं घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाश्रये शक्तम्' इत्याकारकशक्तिग्रह एव। 'नीलो घटः' इत्यादौ वाक्ये च नीलनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यताभानप्रयोजको वाक्यशक्तिग्रहः। ज्ञानमात्रे शब्दभानाङ्गीकारेण प्रत्यक्षादिज्ञानप्रयोजकसामग्र्या एव तत्तज्ज्ञाने भासमानशब्दप्रयोज्यबोधसमानाकारकबोधजनकत्वस्यैव नियमेन तत्तत्सामग्र्येव सम्बन्धभानप्रयोजिका। ज्ञानानपेक्षपूर्वोक्तविशेषणतासन्निकर्षस्यैवाभावप्रत्यक्षे कारणत्वं नैयायिकैरप्यङ्गीकृतम्। अन्यथा ज्ञानात्पूर्वं विशेषणतासन्निकर्षस्यासत्त्वादभावप्रत्यक्षानुपपत्तिर्दुर्वारैव स्यात्। नन्वाकाङ्क्षादिसहकारेण पदान्येव वाक्यार्थबोधकानि भविष्यन्तीति वाक्यशक्त्यङ्गीकारोऽजागलस्तनसम एवेति चेन्न, गुरुभूतानन्ताकाङ्क्षायोग्यतादिज्ञानस्य कारणत्वकल्पने एव गौरवात्। अथ 'घटमानय' इत्यत्र घटपदाम्पदयोः प्रत्येकं गृहीतशक्तिकस्य तादृशानुपूर्वीज्ञानतात्पर्यज्ञानादिमतश्च घटकर्मकमानयनमिति बोधाभावात् तादृशबोधे घटपदोत्तरं द्वितीयादेः, ततो धातोस्तत आख्यातादिप्रत्ययस्य समभिव्याहारः कारणमिति कार्यकारणभावज्ञानवतश्च बोधदर्शनात्तादृशबोधे तादृशकार्यकारणभावज्ञानस्य हेतुत्वावश्यकत्वात्सैवाकाङ्क्षा। 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यत्र विपरीतबोध-

दर्पणव्याख्या

ज्ञानवतां यत्किञ्चिद्वृत्तिज्ञानवतां घटमानयेति वाक्याद् बोधाभावात् घटशाब्दबोधे घटार्थकपदवृत्तिज्ञानजन्योपस्थितित्वेन हेतुता वाच्येत्यर्थभेदेनानन्तकार्यकारणभावकल्पने गौरवम्। यत्तन्मते निरूपतासम्बन्धेन घटवृत्तिज्ञानजन्योपस्थितेः

## प्रभा

रूपे सम्बन्धे वाक्यशक्तेरभावे विशेष्यत्वस्य त्यागः, विशेषणत्वस्य चात्याग इति भाष्योक्तिभङ्गता स्यात्। तादृशविषयतायाः स्वरूपेणैव शक्यत्वं न विषयतान्तरेणेति नानवस्था। जात्याकृतिव्यक्तयस्तु पदार्थः' इति सूत्रे न्यायवार्तिककृताऽपि विषयतायाः शब्दशक्यत्वम् 'प्रधानोपसर्जनभावस्यानियमेन पदार्थत्वम्' इत्युक्त्या स्पष्टमेव सूचितम्। प्रातिपदिकार्थसूत्रे भाष्ये 'वीरपुरुषः' इत्यत्र प्रथमा न प्राप्नोति, आधिक्यात्। 'व्यतिरिक्तः प्रातिपदिकार्थः' इति प्रथमा न प्राप्नोति, नवा वाक्यार्थत्वात्। यदत्राधिकम्—'विशेष्यविशेषणभावो वाक्यार्थः स इत्युक्तम्। ननु संसर्गस्य वाक्यार्थत्वे 'राज्ञः पुरुषः' इत्यत्र राजपुरुषयोः सम्बन्धस्य षष्ठी वाचिका' 'कष्टं श्रितः' इत्यत्र क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिका, इति समर्थसूत्रस्थभाष्यविरोधः, प्रकारतया भासमानसम्बन्धाभिप्रायेण तदुक्त्या विरोधाभावात्, विशेष्यविशेषणभावरूपसम्बन्धस्यैव वाक्यशक्यत्वेनाद्योपाद्य। यद्यपि विभक्तिप्रकृत्यर्थगतविशेषणत्वमपि विभक्तिवाच्यमेव, तथापि विशेष्यनिष्ठमितरपदार्थनिष्ठविशेषणतानिरूपितविशेष्यत्वं वाक्यशक्यमेव। वाक्यार्थभूतश्च विशेष्यविशेषणभावो न ज्ञाननिरूप्य इति शाब्दबोधात्पूर्वमनुपस्थितत्वाच्छक्तिग्रहासम्भव इति तन्त्रान्तरोक्तिः शाब्दिकसिद्धान्तानवबोधप्रयुक्ता। तथाहि विशेषणत्वम्—तदधीनस्थितिकत्वरूपम्। विशेष्यत्वञ्च—तत्स्थितिनियामकत्वरूपं वस्तुधर्म एव। गुणकर्मसामान्यविशेषसमवायानां द्रव्यं प्रति विशेषणत्वमेव, द्रव्याधीनस्थितिकत्वात्तेषाम्। गुणादीनान्तु परस्परमव्यवस्थितो विशेष्यविशेषणभावः, आश्रयद्वारैव तेषामुक्तधर्मवत्त्वात्। अभावस्य तु सर्वान्प्रति विशेषणत्वमेव। द्रव्याणान्तु यस्य यदधीनस्थितिकत्वं नास्ति तयोर्धर्मपर्यालोचनया विशेष्यविशेषणभावो भवति। 'राज्ञः पुरुषः' इत्यत्र राज्ञः पुरुषाधीनस्थितिकत्वाभावेऽपि तन्निष्ठस्वामित्वस्य पुरुषाधीनस्थितिकत्वाद्विशेषणत्वम्। 'पुरुषाणां राजा' इत्यत्र पुरुषनिष्ठस्वत्वस्य राजाधीनस्थितिकत्वाद्विशेषणत्वम्। एवम् 'घटे रूपम्' इत्यत्र द्रव्यस्य गुणाद्यनपेक्षणात्वेऽपि आधारत्वस्य गुणानपेक्षणाद्विशेषणत्वम् इति तदधीनस्थितिकत्वं यत्र विवक्ष्यते तद्विशेषणम्। तत्स्थितिनियामकत्वविवक्षणे विशेष्यत्वम्। तद्भाननियामकश्च घटपदं घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाश्रये शक्तम्' इत्याकारकशक्तिग्रह एव। 'नीलो घटः' इत्यादौ वाक्ये च नीलनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यताभानप्रयोजको वाक्यशक्तिग्रहः। ज्ञानमात्रे शब्दभानाङ्गीकारेण प्रत्यक्षादिज्ञानप्रयोजकसामग्र्या एव तत्तज्ज्ञाने भासमानशब्दप्रयोज्यबोधसमानाकारकबोधजनकत्वस्यैव नियमेन तत्तत्सामग्र्येव सम्बन्धभानप्रयोजिका। ज्ञानानपेक्षपूर्वोक्तविशेषणतासन्निकर्षस्यैवाभावप्रत्यक्षे कारणत्वं नैयायिकैरप्यङ्गीकृतम्। अन्यथा ज्ञानात्पूर्वं विशेषणतासन्निकर्षस्यासत्त्वादभावप्रत्यक्षानुपपत्तिर्दुष्परिहरैव स्यात्। नन्वाकाङ्क्षादिसहकारेण पदान्येव वाक्यार्थबोधकानि भविष्यन्तीति वाक्यशक्त्यङ्गीकारोऽजागलस्तनसम एवेति चेन्न, गुरुभूतानन्ताकाङ्क्षायोग्यतादिज्ञानस्य कारणत्वकल्पने एव गौरवात्। अथ 'घटमानय' इत्यत्र घटपदाम्पदयोः प्रत्येकं गृहीतशक्तिकस्य तादृशानुपूर्वीज्ञानतात्पर्यज्ञानादिमतश्च घटकर्मकमानयनमिति बोधाभावात् तादृशबोधे घटपदोत्तरं द्वितीयादेः, ततो धातोस्तत आख्यातादिप्रत्ययस्य समभिव्याहारः कारणमिति कार्यकारणभावज्ञानवतश्च बोधदर्शनात्तादृशबोधे तादृशकार्यकारणभावज्ञानस्य हेतुत्वावश्यकत्वात्स एवाकाङ्क्षा। 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यत्र विपरीतबोध-

---

## दर्पणव्याख्या

ज्ञानवतो यत्किञ्चिद्वृत्तिज्ञानवतो घटमानयेति वाक्याद् बोधापत्त्या घटशाब्दबोधे घटार्थकपदवृत्तिज्ञानजन्योपस्थितित्वेन हेतुता वाच्येत्यर्थभेदेनानन्तकार्यकारणभावकल्पने गौरवम्। अस्मन्मते तु विषयतासम्बन्धेन घटवृत्तिज्ञानजन्योपस्थितेर

प्रभा

वारणाय तात्पर्यज्ञानमपि हेतुरिति चेत्तथापि सिद्धो वाक्यस्फोटः । पदज्ञानकार्यकारणभावरूप-
पदशक्तिज्ञानस्येव तत्समुदायरूपवाक्यज्ञानकार्यकारणभावरूपवाक्यशक्तिज्ञानस्य नैयायिकादिभिरपि
शाब्दे हेतुतायाः स्वीकृतत्वात् । एवञ्च वाक्यशक्तिरेवाकाङ्क्षेति परेषां नाममात्रकृत एव
भेदः । वाक्यशक्त्यङ्गीकारादेव समासग्रहणस्य नियमार्थत्वपरं भाष्यमपि सङ्गच्छते । अन्यथा
वाक्यरूपसमासे शक्त्यभावेन 'अर्थवत्' सूत्रेण प्रातिपदिकत्वाप्राप्त्या भाष्योक्तनियमत्वानुपपत्तिः
स्पष्टैव । ननु विषयतासम्बन्धेन शाब्दबोधम्प्रति विषयतासम्बन्धेन वृत्तिज्ञानस्य कारणत्वस्वीकारे घटादौ
चैत्रीयवृत्तिज्ञानस्य सत्त्वदशायां घटपदवृत्तिमजानतो मैत्रस्यापि बोधापत्तिः । कारणस्य तत्र सत्त्वादिति
वाच्यम्, तत्पुरुषीयशाब्दबोधम्प्रति विषयतया तत्पुरुषीयवृत्तिज्ञानस्य हेतुत्वकल्पनेनादोषात् । नच पुरुषा-
णामानन्त्यात् कार्यकारणभावानन्त्यमिति समवायेन शाब्दं प्रति समवायेन वृत्तिज्ञानस्य कारणत्वे त्वदुक्त-
कार्यकारणभावासिद्ध्या वाक्यशक्त्यसिद्धिरिति वाच्यम्, विषयमनिवेश्य समवायेन शाब्दम्प्रति समवा-
येन वृत्तिज्ञानस्य कारणत्वे अन्यविषयकवृत्तिज्ञानसमवायिनश्चैत्रादेरन्यविषयकशाब्दवारणाय घटविषय-
कशाब्दम्प्रति घटविषयकवृत्तिज्ञानस्य कारणत्वमिति एकस्यैव चैत्रस्य सहस्रशो बोधे सहस्रविषयाणां
निवेशेन कार्यकारणभावकल्पनापेक्षया विषयतासम्बन्धेन चैत्रीयशाब्दबोधं प्रति विषयतासम्बन्धेन
चैत्रीयवृत्तिज्ञानत्वमित्येकेनैव कार्यकारणभावेन यत्र विषयतासम्बन्धेन वृत्तिज्ञानं तत्रैव विषयतासम्बन्धेन
शाब्दबोधस्य कार्यतावच्छेदककारणतावच्छेदकसम्बन्धेन कार्यकारणयोः सामानाधिकरण्यनियमेनोप-
स्याऽनन्तविषयनिवेशाभावेऽप्यन्यविषयकवृत्तिवृत्तिज्ञानेनान्यविषयकशाब्दबोधासम्भवेन तत्पुरुषीयत्वनिवे-
शेऽपि सहस्रशो विषयमनिवेश्यैव कार्यकारणभावेनानन्तविषयकृतानन्तकार्यकारणभावस्य तत्तत्पुरु-
षम्प्रति अनपेक्षणेन विषयतासम्बन्धेनैव कार्यकारणभावे महालाघवस्य सत्त्वादित्यन्यत्र विस्तरः । एवञ्चो-
क्तरीत्या वाक्यशक्तेः प्रमाणैर्युक्तिभिश्च सिद्धौ 'अत्र वदन्ति' इत्यादिना दर्पणकारोक्तं वाक्यस्फोटखण्ड-
नमपास्तम् । तथाहि—प्रकृतिप्रत्ययादिरूपपदस्यार्थे सम्बन्धं विनाऽर्थोपस्थापकत्वासम्भवादर्थनिरूपितो
वृत्त्यात्मकः सम्बन्ध आवश्यकः । ननु प्रकृतिप्रत्ययात्मकसमुदायस्य सुबन्ततिङन्तरूपस्य तत्समुदायरूप-
वाक्यस्य वा विशिष्टार्थे शक्तिः, वाक्ये शक्तिं विनाऽपि आकाङ्क्षादिरूपकारणसमवधानादेव विशिष्टार्थ-
बोधसिद्धेरिति तन्न, समभिव्याहाररूपाकाङ्क्षाया वाक्यशक्तिरूपत्वेन तदखण्डनायोगात् । यत्तु—वाक्यज-
न्योपस्थितेः शाब्दबोधात्मकत्वेन तस्याः शाब्दबोधम्प्रति कारणत्वासम्भव इति तन्न, 'घटमानय' इति वाक्यं घट-
कर्मकानयनविषयकबोधजनकतावत्, इति वृत्तिज्ञानविषयबोधीयविषयताया एव वृत्तिज्ञाननिष्ठकारणतावच्छे-
दकतया तस्य चोपस्थितिरूपत्वेन शाब्दबोधभिन्नतयोक्तदोषाप्रसक्त्वस्योक्तत्वात् । घटत्वादिनिर्विकल्पक-
ज्ञानवत् शब्दातिरिक्तकेवलसंसर्गविषयकोपस्थितेः सम्भवस्योक्तत्वाच्च । वाक्यशक्तिमविदुषो विवरणादि-
ना घटादिपदशक्तिमजानतः आकाङ्क्षादिना बोधोदयेन व्यभिचारप्रदर्शनन्तु समभिव्याहाररूपाकाङ्क्षा-
या वाक्यशक्तितोऽभिन्नत्वेनैव परिहृतम् । यदपि वाक्यस्य समभिव्याहाररूपाकाङ्क्षारूपत्वे 'घटः कर्म-
त्वम्' 'घटीया कर्मता' इत्यर्थे निराकाङ्क्षम्, 'घटमानय' इति वाक्यञ्च तत्र साकाङ्क्षम्' इति व्यवहारा-
नुपपत्तिरिति तदपि न, पौर्वापर्यरूपसमभिव्याहारस्य शक्तिरूपत्वेन 'निराकाङ्क्षम्' इत्यस्य निःशक्ति-
कत्वार्थकतया निःशक्तिकमित्यर्थेन 'साकाङ्क्षम्' इत्यस्य सशक्तिकत्वार्थकतया सशक्तिकत्वमित्यर्थेन चोक्त-
दोषानवकाशात् । एतेन वाक्यस्य समभिव्याहाररूपत्वे 'पदयोः समभिव्याहारः' इत्यर्थे 'पदयोर्वाक्यम्'
इति व्यवहारस्यापत्तिरित्यप्यपास्तम्, समभिव्याहारस्य वाक्यशक्तिरूपत्वेनोक्तापत्तेरज्ञानविजृम्भि-
तत्वात् । यत्र क्वचन समभिव्याहाररूपाकाङ्क्षैव वाक्यमिति शाब्दिकानामुक्तौ समभिव्याहारपदम्-

प्रभा

धिकरणपजन्तमिति पदसमुदायपरकतया न दोषावहम् । समभिव्याहारस्य वाक्यशक्तिरूपतया तज्ज्ञानस्य शाब्दबोधहेतुत्वं नैयायिकानामपि सम्मतमिति शाब्दे वाक्यशक्तिज्ञानं हेतुरिति शाब्दिकानां रीतिः यच्च इति त्वदुक्तिरेव रिक्तेति बोध्यम् । शाब्दबोधात् प्राक् संसर्गस्य यथोपस्थितिस्तथानुपदमेवाभिहितम् । शाब्दबोधात् प्राक् मनसा वाक्यार्थोपस्थित्यभ्युपगमे वाक्यार्थोपस्थितेः शाब्दबोधरूपतया अनधिगतार्थज्ञानकारणत्वरूपप्रमाणत्वस्य शाब्दे बाध इति न वाच्यम् , स्वज्ञानविषयबोध्यविषयतया स्मृतिज्ञानस्यैव शाब्दे कारणत्वस्वीकारेण स्मृतिज्ञानस्य च शाब्दबोधाविच्छिन्नतया शाब्दे तत्प्रामाण्यस्याक्षतत्वात् , एतेन 'अनधिगतार्थगन्तृता चेदस्य मीमांसाद्युपसिद्धान्तिदर्शितलक्षणम् , स्मृतिज्ञानजन्योपस्थितिमन्तरेव शाब्दोपपत्तेः , निर्विकल्पकज्ञानवत् केवलसंसर्गस्यैवोपस्थित्या शाब्दबोधस्य वक्तुं शक्यत्वाच । 'सामयिकः शब्दादर्थप्रत्ययः' इति कणादोक्तेः वाक्यशक्तिग्राहकानुशासनाभावेन तद्ग्रहासम्भवाच वाक्यस्फोट आपातरमणीय इत्यप्यापातरमणीयम् , शक्तिग्राहकशिरोमणेः व्यवहारस्यैव वाक्यशक्तिग्राहकत्वात् । कोशे धातूनां प्रत्ययानाञ्चार्थानामबोधनेऽपि तच्छक्तिग्रहवत् वाक्येऽपि शक्तिग्रहसम्भवात् , अवयवशक्तिबोधनद्वारा वाक्यशक्तिबोधने एवानुशासनतात्पर्यात् । अत्र वदन्तीत्यारभ्य वाक्यस्फोट आपातरमणीय एवेत्यन्तेन वाक्यस्फोटं निराकुर्वन्तो दर्पणकारा उक्तरीत्या प्रमाणोपपत्त्यादिभिर्वाक्यस्फोटसाधनेन परास्ताः । वाक्यशक्त्यङ्गीकारे तदानन्त्यापत्तिरपि न, 'घटमानय' 'पटमानय' इत्याद्यनन्तपदसमभिव्याहृतानयादिपदघटितसकलवाक्येष्वेकैव वाक्यशक्तिः शक्तिविषयताधेयत्वनिरूपितत्वादिकर्मत्वादिसम्बन्धस्यैकत्वात् । 'घटमानय' इत्यत्र पटस्य पदजन्योपस्थित्यभावेन न पटादिकर्मकानयनबोधापत्तिः । घटपदे गृहीतशक्तिकस्य कलशपदे शक्त्यज्ञानतो निराकाङ्क्षघटपदाद् घटोपस्थितौ 'कलशमानय' इति वाक्याद् घटकर्मकानयनबोधापत्तिस्तु न, कार्यकोटौ कारणाव्यवहितोत्तरत्वस्य निवेशेन तत्सामर्थ्यसिद्धेः । एतेनोक्तदोषनिरासाय तत्तत्पदमन्तर्भाव्यैव कार्यकारणभावकल्पनमावश्यकमिति काशिकोक्तं नादरणीयम् । नन्वेवमपि वाक्यनिष्ठबोधकतायाः शक्तित्वे मानाभाव इति चेन्न, शाब्दधीविषयताया वृत्त्या पदजन्योपस्थितिविषयताप्रयोज्यत्वनियतत्वेन शाब्दबोधे सम्बन्धभानान्यथानुपपत्तेरेव मानत्वात् । नच संसर्गताख्यविषयतातिरिक्तविषयतायामेव तादृशोपस्थितीयविषयताप्रयोज्यत्वनियम इति वाच्यम् , तादृशसंकोचे कार्यकारणभावे गौरवात् तद्भानाय कारणान्तरकल्पने गौरवतरत्वादनुमित्यादिस्थलेषु सम्बन्धभानस्यानुमित्यादिप्रयोजकप्रमाणप्रयोज्यत्वस्यैव दर्शनाज्ज्ञानरूपाया विषयताया विशेष्यादित्रयसाधारण्या ऐक्यात्तद्भेदनिवेशस्य वक्तुमशक्यत्वाज्ज्ञानातिरिक्तत्वेऽपि तस्या ऐक्येनैवोपपत्तौ त्रैविध्यकल्पने प्रमाणाभावात् विषयरूपत्वे त्रैविध्यसम्भवेन भेदस्य निवेशयितुं शक्यत्वेऽपि तत्र पूर्वमेव गौरवदोषस्यावेदितत्वाच्च । किञ्च वाक्यशक्त्यनङ्गीकारे 'संसर्गं शाब्दयामि' इत्यनुव्यवसायानुपपत्तिः, शब्दसम्बद्धबोधस्यैव तथाविधानुव्यवसायविषयत्वात् । नच शब्दजन्यबोधविषयप्रकारविशेष्यनिरूपितत्वेन संसर्गस्यापि शब्दप्रयोज्यतया तथाविधानुव्यवसायोपपत्तिः, शब्दप्रयोज्यत्वेन 'शाब्दयामि' इत्यनुव्यवसायस्वीकारे धूमपदोपस्थितधूमलिङ्गकाया अनुमितेरपि शब्दप्रयोज्यतया तथानुव्यवसायापत्तेः । शब्दनिष्ठवृत्तिनिरूपितार्थविषयकशाब्दविषयस्यैव 'शाब्दयामि' इत्यनुव्यवसायविषयत्वस्य सर्वसम्मतत्वात् । ननु शाब्दत्वजातिरेव तथाविधानुव्यवसायप्रयोजिकेति नानुमितेः पदप्रयोज्यत्वे तदापत्तिः । सा च जातिराकाङ्क्षाज्ञानादिसामग्रीजन्यशाब्दप्रयोज्यबोधनिष्ठैवेति चेन्, तथापि वाक्ये शक्त्यस्वीकारे 'इमे वाक्ये परस्परं सम्बद्धे' इति व्यवहारानुपपत्तिर्दुष्परिहरैव, शब्दानामर्थद्वारकसम्बन्धस्यैवाङ्गीकारेण वाक्ययोस्तदसम्भवात् । नच बोधरूपप्रयोजनद्वारक एव वाक्ययोः सम्बन्ध इति वाच्यम् , ईश्वरपरम्परासम्बन्धस्य सम्बद्धत्वव्यवहारप्रयोजकत्वे स्वनिष्ठद्रव्यत्वादिमत्त्वमादाय तदा-

प्रभा

स्ताचलयोरपि 'सम्बद्धाविमौ' इत्यस्यापत्तेरित्यलं विस्तरेण। यत्र शास्त्रेण वाक्यस्यैव संस्कारस्तत्र वाक्यादेवार्थबोध इति तत्र वाक्यस्फोट एव नतु पदस्फोटः, 'ङः सि धुट्' इति भाष्यात्तथैव प्रतीतेः। तथाहि—ङः सि धुट्, नश्च, शि तुक्, ङ्णोः कुक् टुक् शरि, ङमो ह्रस्वादचि ङमुण्नित्यम्, इह केचित्पूर्वान्ताः क्रियन्ते, केचित्परादयः। यदि सर्वे पूर्वान्ताः किताः स्युः—धुगादिषु ष्टुत्वणत्वप्रतिषेधो न सिद्ध्यति। मधु लिट् सायं, कुर्वन्नास्ते, इत्यादौ। परादित्वे टिति कुर्वञ्छेते इत्यादौ पदान्तझलोऽभावाच्छत्वं न प्राप्नोति। प्रत्यङ्क्सिञ्च, इत्यत्र षत्वनिषेधो न सिद्ध्यति, पदाद्सिकाराभावात्, इत्युक्तम्भाष्ये। अत्र धुगादिषु किन्तु 'षट्त् सन्तः' इत्यत्र 'षट्त्' इत्यस्यैव षट्त्वावच्छिन्नवाचकत्वं स्वीकार्य्यम् तकारस्य तदवयवत्वात्, धुटि तु 'त्सन्तः' इत्यस्य वाचकत्वम्, षट्त्वावच्छिन्नवाचकत्वन्तु 'षट्' इत्यस्यैवेति वाचकत्वावाचकत्वरूपफलभेदस्यापि सत्त्वात् ष्टुत्वादिमात्रलोपदानं भाष्यकृतोऽसङ्गतं स्यात्। तत्र वाक्यस्यैव वाचकत्वे तु किरवे टिरवे वा वाक्यगतानुपूर्व्या भेदाभावेन ष्टुत्वादिमात्रलोपदानपरं भाष्यं स्वरसतः सङ्गच्छते। एतेन 'षट्त्सन्तः' इत्यादौ टित्किद्विकल्पपरभाष्यप्रामाण्यादागमरहितानुपूर्वीमत्पदानामेव वाचकत्वमित्यपास्तम्, सर्वत्रागमविशिष्टपदस्थले आगमविशिष्टेष्वेव शक्तत्वदर्शनेनात्र तद्विपरीतत्वे मानाभावात्। तत्प्रमाणत्वेनाभिमतस्य भाष्यस्यान्यथानुपपत्तिर्योजितत्वात्। ननु वाक्यस्य शाब्दबोधजनकत्वे शक्तिग्रहासम्भवः, संसर्गरूपवाक्यार्थस्य शाब्दबोधमात्रविषयतया ततः प्रागनुपस्थितेरित्याशङ्क्य समाधत्ते—

दर्पणव्याख्या

तत्रापि शाब्दे तस्य भानमित्येक एव कार्य्यकारणभावः कल्प्यत इति लाघवेनेत्यर्थः। ननु पदपदार्थयोर्विशिष्यविशेषणभावे विपरीतव्युत्पन्नस्य पदमानयेत्यतो पदत्वविशिष्टबोधवारणाय पदत्वविशिष्टबोधे उपस्थितेर्घटपदवृत्तिज्ञानजन्यत्वविशिष्टाया हेतुताया अवश्यवाच्यतया तत एवातिप्रसङ्गे उक्तकार्य्यकारणभावे मानाभावोऽत आह—* विवेचितश्चैतदिति * पदपदार्थभेदेनानन्तकार्य्यकारणभावेषु वृत्तिप्रवेशमपेक्ष्य उपस्थितेः पदज्ञानजन्यत्वेनैव शाब्दसामग्रीरूपो मतेदा उचितः। तथा सति समवायेनाकाशस्य जनकतयोपस्थितस्य देवदत्तादेश्च शाब्दे भानवारणाय विषयतया शाब्दसामान्ये वृत्तिजन्योपस्थितेर्विषयतया हेतुत्वं वाच्यम्। एवञ्च संसर्गस्य शाब्दे भानानुरोधेन संसर्गेऽपि वृत्तिज्ञानमावश्यकम्। तथाच पदैः पदार्थानां वाक्येन वाक्यार्थस्य बोध इति न विशेष्यविशेषणव्यत्यासेन शाब्दबोधे पदार्थानां भानम्। पदोपस्थितानामेव संसर्गस्य वाक्यशक्त्या बोधादिति वृत्तिज्ञानस्यैति यथाश्रुतार्थकमेव तत्र निर्धारितम्। वस्तुतस्तु वृत्तिज्ञानपद यथाश्रुतार्थकमेव। वृत्तिज्ञानस्येत्यनन्तरम् अनुपदकविषयतासम्बन्धेनेत्यस्य वृत्तिज्ञानविषयबोधकत्वघटकबोधविषयतासम्बन्धेनेत्यर्थः। अन्यथा वाक्यवृत्तिज्ञानजन्योपस्थितेरेव शाब्दबोधत्वेन तस्मिंस्तेन सम्बन्धेन तद्धेतुत्वासम्भवेन वाक्यशक्तेर्गर्भस्रावादिति बोध्यम्। अत्र वदन्ति—पदजन्यपदार्थोपस्थितिमन्तरेण शाब्दबोधानुदयात्तादृशपदार्थोपस्थितेः शाब्दबोधे हेतुतेति तावन्निर्विवादम्। पदस्य च प्रकृत्याद्यात्मकस्यार्थे सम्बन्धं विना तदुपस्थापकत्वासम्भवात्तस्मिन् वृत्त्यात्मकसम्बन्धोऽप्यावश्यक एव, नतु तत्समुदायरूपपारिभाषिकपदस्य तत्समूहरूपवाक्यस्य विशिष्टार्थे च, तं विनाऽपि तेभ्य आकाङ्क्षादिरूपकारणसमवधानादेव विशिष्टबोधोपपत्तेः। एकपदार्थविशिष्टापरपदार्थशाब्दत्वस्यैव तत्कार्य्यतावच्छेदकत्वात्। यत्तु लाघवाद् वृत्तिज्ञानजन्योपस्थितेर्विषयतासम्बन्धेन हेतुत्वमेव वाक्यशक्तौ प्रमाणमिति, तन्न, स्वातन्त्र्येण तद्धेतुत्वस्यैवासिद्धेः। तथाहि—तादृशकार्य्यकारणभावे वृत्तित्वेन पदवृत्तेर्निवेशः, किं वाक्यवृत्तेः, किं वा वृत्तिसामान्यस्य ? । न तावदाद्यः, पदवृत्तिज्ञानजन्योपस्थिते शाब्दबोधहेतुत्वस्य सर्वैरेवाभ्युपगमात्। न द्वितीयः, वाक्यवृत्तेस्तत्र प्रागसिद्धेः। अत एव न तृतीयः, किञ्च तव मते वाक्यशक्तिजन्योपस्थितेः शाब्दबोधात्मकत्वेन तस्मिंस्तद्विषयत्वासम्भवादपि नोक्तरीतिः साधीयसी। अपिच वाक्यवृत्तिज्ञानस्य शाब्दसामान्ये न स्वातन्त्र्येण हेतुत्वं यतः कदाचिद्विरत्यादिना घटादिपदशक्ति

ननु वाक्यार्थस्यापूर्वत्वात् कथं तत्र शक्तिग्रह इत्याशङ्क्याह—अर्थ इति—वाक्यस्येति शेषः वाक्यस्य वाक्यार्थे विशिष्य शक्त्यग्रहणञ्चेत्तर्हि पदेऽपि समम् । पदे एवान्वयांशे शक्तिरिति पक्षेऽपि

## प्रभा

अर्थे इति—संसर्गरूपवाक्यार्थे। निरूपितत्वं सप्तम्यर्थः, तेन सम्बन्धेन सम्बन्धाग्रहणैकपदार्थे सम्बन्धेऽन्वयोऽर्थस्य । विशिष्य=तत्तद्रूपेण । तथाच शाब्दबोधात्प्राग् वाक्यार्थनिरूपितशक्तिरूपसम्बन्धस्य अग्रहणम्=ज्ञानाभावश्चेद्वाक्ये इति शेषस्तदा पदेऽपि समम्=संसर्गरूपवाक्यार्थनिरूपिता वृत्तिः पदनिष्ठैवेति मतेऽपि वाक्यार्थबोधात्प्राक् संसर्गानुपस्थित्या संसर्गनिरूपितशक्तिरूपसम्बन्धज्ञानाभावः पदेऽपि तुल्यपरिहार इत्यर्थः। अयम्भावः—येषां मते संसर्गः पदेन लक्षणया बोध्यः, येषां वा पदे एवान्वयांशेऽपि शक्तिस्तेषामपि शाब्दबोधात्प्राक् संसर्गानुपस्थित्या तदंशे पदे लक्षणायाः शक्तेश्च ज्ञानासम्भवात्कथं निस्तारः। यदि पदैः पदार्थोपस्थितौ तत एव समभिव्याहाररूपाकाङ्क्षावशात् संसर्गोपस्थितावपि वृत्त्याऽनुपस्थितत्वान्न स बोधः शाब्दः स्यादिति शाब्दत्वोपपत्तये पदे शक्तिं लक्षणां वाऽऽश्रित्य यथा पदनिष्ठवृत्तिज्ञानं जायते इत्युच्यते तदा 'वाक्यार्थः संसर्गः' इति मतेऽपि वाक्ये शक्तिज्ञानं तथैव सम्भवेत्। यथा प्रागविज्ञातहरिद्रानामकनदीविशेषेण पुंसा 'हरिद्रायां नद्यां घोषः' इति वाक्ये श्रुते नदीपदसमभिव्याहारेण तदानीमेव हरिद्राशब्दे नदीविशेषनिरूपितां शक्तिं गृहीत्वा लक्षणया तत्सम्बन्धितटे घोष इत्यवगम्यते तथैव वाक्येऽपि शक्तिग्रहे बाधकाभाव इति। अपूर्वत्वादिति—शाब्दबोधात्प्रागनुपस्थितत्वादित्यर्थः। पदशक्त्यभास्यसम्बन्धस्य शाब्दबोधमात्रगम्यत्वादिति भावः। यद्यपि क्वचित् 'भूतले घटः' इत्यादौ संयोगादिसम्बन्धस्य शाब्दबोधात्प्रागपि चक्षुरादिसन्निकर्षेण ज्ञानमादाय शक्तिग्रहसम्भवस्तथापि इन्द्रियायोग्यस्य तथात्वासम्भवात्सर्वत्र तदभावाच्च 'अपूर्वत्वा'दित्युक्तिः। तत्र=वाक्यार्थे। निरूपितत्वं त्रलर्थः वाक्यार्थनिरूपितशक्तिग्रह इत्यर्थः. विशिष्य=तत्तत्संसर्गतावच्छेदकरूपेण । अन्वयांश इति—अयम्भावः—तत्तत्पदेन वृत्त्या पदार्थज्ञानं जायते। तच्च पदार्थज्ञान-

## दर्पणव्याख्या

शाब्दबोधात्प्रागुपस्थितिदशायां घटमानयेति वाक्यशक्तिमित्युक्त आकाङ्क्षादिमच्छब्दजन्यबोधत्वेन व्यभिचारात् । यदि समभिव्याहाररूपाकाङ्क्षैव वाक्यमिति तदपि न, तथा सति 'घटीया कर्मता' इत्यादिबोधे घटमानयेति वाक्यं साकाङ्क्षम् । निराकाङ्क्ष—घटः कर्मत्वमिति सर्वमिदन्व्याहारानुपपत्तिः । 'पदयोः समभिव्याहार.' इतिवत् पदयोर्वाक्यमिति व्यवहार प्रसङ्गश्चेति समभिव्याहृतपदानामेव वाक्यत्वमुपगन्तव्यम् । तथाच समभिव्याहारस्य शाब्दबोधहेतुत्वेऽपि वाक्यस्य तस्य दुरुपपादमेवेति क्व वाक्यशक्तिसिद्धिः । समभिव्याहारनिष्ठबोधजनकत्वग्रहणतो बोधे तज्ज्ञानं हेतुरित्यपि रिक्तं वचः । अन्वयव्यतिरेकाभ्यां समभिव्याहारज्ञानस्यैव शाब्दधीहेतुत्वेन तन्निष्ठबोधजनकत्वज्ञानस्य हेतुताया एवाभावात् । न च तदपि सम्भवति, शाब्दबोधात् प्राक् संसर्गस्यैवानुपस्थितेः । सामान्यतस्तदुपस्थितावपि विशेषरूपेण भानार्थं तात्पर्यज्ञानापेक्षणे च गुरुत्वाधिक्यात् तत्र वाक्यशक्तेरेवासिद्ध्यापत्तिः । वक्ष्यमाणरीत्या शाब्दबोधात् प्राक् तदुपस्थित्यभ्युपगमे वाक्यवृत्तिज्ञानजन्योपस्थित्यनन्तरं शाब्दबोधाभ्युपगमे वा शाब्दप्रामाण्यभङ्गापत्तिः, अनधिगतार्थग्राहकस्यैव प्रमाणत्वात् । अत एव गुरुभिः "शब्दविषयमानम्" इत्यत्र समासग्रहणं कृतम् । वाक्यशक्तौ तु तद्वैयर्थ्यं स्पष्टमेव । "सामर्थ्यं समभिव्याहारः" इति वैयाकरणसंकेतग्रहणाभावेन तद्ग्रहासम्भवाच्चेति वाक्यस्फोटं भावतरमपीष्टेति पूर्वोक्तनियमप्रकारस्य दौर्बल्यं मनसि निधाय तस्मिन् प्रकारान्तरं वक्तुमभिसन्धाय इत्याशयेनाह—॰नन्विति॰। ॰अपूर्वत्वात्॰—शाब्दबोधात् प्रागनुपस्थितत्वात् । ननु शाब्दबोधात् पूर्वं पदे प्रत्ययादुपस्थितसंसर्गनिरूपितशक्तिग्रहः सुगम एवेति पदे समभिति गुरुमतमुपगम्य आशयं प्रकाशयति—॰पदे एवेति॰ पदानामेवान्वितार्थे

तद्ग्रहासम्भवस्तुल्य इत्यर्थः । यदि च पदशक्तिः पदार्थांशे ज्ञाता, अन्वयांशे चाज्ञातोपयुज्यत इति
कुब्जशक्तिवादस्तदा ममापि वाक्यस्य :

प्रभा

मुपस्थितिशब्देन व्यवह्रियते । तत उपस्थितयोः पदार्थयोर्वक्तृतात्पर्यविषयसम्बन्धेन यद्विशिष्टज्ञानं
तदेव शाब्दबोध इत्युच्यते । तथाच 'घट' इत्यत्र घटशब्देन घटस्य प्रथमया एकत्वस्य चोप-
स्थितिः । तत्रैकत्वं समवायसम्बन्धेन घटे विशेषणतया भासते 'समवायसम्बन्धेन एकत्ववान्
घटः इति । स एव शाब्दबोधः' अन्वयबोध इति वा व्यवहारविषयः । तत्र समवायस्य यद्भानं तत्कीदृश-
शब्दप्रयोज्यम् ? इति जिज्ञासायां नैयायिकैः उपस्थापकघटपदसुपदयोः पौर्वापर्यरूपसमभिव्याहारप्रयोज्यम्
इति । माध्वैस्तु सम्बन्धविशिष्टैकत्वे सुपदस्य, एवमन्विते एव घटे घटपदस्य शक्तिरिति तत्तत्पदप्रयोज्यम्,
इति मीमांसासिद्धान्तसिद्धिः, तत्तत्पदानां स्वबोध्यार्थसम्बन्धरूपलक्षणाप्रयोज्यमिति, वैयाकरणैर्वाक्यशक्ति-
प्रयोज्यमिति चाख्यायते । तथाच यथा 'अन्वयांशेऽपि पदस्यैव शक्तिः, इति मते शाब्दबोधात्प्रागनुपस्थिते-
ऽपि सम्बन्धविशेषे सामान्यतः शक्तिं स्वीकृत्य 'गाम्' इति पदं सम्बन्धविशिष्टं गां प्रतिपादयति, 'आनय'
इति पदमपि सम्बन्धविशिष्टमानयनं बोधयति 'गामानय' इति परस्परसमभिव्याहारे जाते च 'गोकर्मका-
नयनम्' इति अमादिसमभिव्याहारबलेन कर्मत्वादिसम्बन्धविशेषस्यावगतिः । अत एवैकपदार्थे ज्ञाते अन्ना-
न्विताभिधानवादिनः - न वाक्यार्थबोधकतया वाक्यस्फोट', पदानामेवान्विताभिधायकत्वात् । पदानाम-
न्वयसामान्ये शक्तौ समभिव्याहृतपदोपस्थापितपदार्थविशेष्यनिरूपितान्वयविशेषः सेत्स्यति । किञ्चैकपदम-
योगेऽपि अन्वयविशेषस्य नियमेनाकाङ्क्षादर्शनात् तस्याश्चान्वयसामान्यज्ञानपूर्वकत्वनियमात्तत्र सामान्या-
न्वयज्ञानस्यान्यतोऽसम्भवाच्छक्त्र एवान्वितघटादिकमभिधत्त इति तन्न, 'घटमानय' इत्यत्र चतुष्टयबोधाप-
त्तेः । 'इतरान्वितो घट.' 'इतरान्वितं कर्मत्वम्' 'इतरान्वितमानयनम्' 'इतरान्विता कृतिरिति । वाक्यशक्ति-
नये तु घटप्रकारककर्मविशेष्यकशाब्दबोधे घटपदोत्तरद्वितीयाया इत्यादिकार्यकारणभावनानात्वविरहान्न
दोषः । एवम् 'पदमेव लक्षणया सम्बन्धरूपं वाक्यार्थत्वेन वैयाकरणैरभिमतं बोधयति' इत्यस्यायमाशयः—
'गामानय' इत्यत्र गोपदं गोकर्मकं लाक्षणिकं सत् आनयनादिकं प्रतिपादयति । एवमानयतिरपि लक्षणया
तत्तद्व्यक्तिं बोधयति । यत्र यत्र वाक्ये यो योऽर्थो विशेष्यत्वेन विवक्षितस्तमेवार्थं स्वपदेन सामान्य-
वाचिना लक्षितं सन्तमितराणि पदानि स्वार्थाभिधानद्वारेण तत्सम्बन्धिरूपेण लक्षयन्ति इति तथैव रीत्या
एतन्मतद्वयेऽपि शाब्दबोधात्प्राक् सम्बन्धार्थनिरूपितं शक्तिज्ञानं लक्षणाज्ञानं वा सम्भवेत्तथैव वाक्येऽपि
शक्तिग्रहो वैयाकरणनयेऽपि । 'यश्चोभयोः समो दोषः परिहारस्तयोः समः' इति न्यायेन स्यात्तदुक्तम्—'शक्ति-
ग्रहासम्भवस्तुल्यः' इति ॥ कुब्जशक्तिवाद इति—हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक्' क्रुद्धो वायुर्यदा

दर्पणव्याख्या

शक्ति, अन्वयश्च—सामान्यरूपेण ज्ञानम्, अत एव घटादिपदादन्वितघटाद्युपस्थितौ नियमेन तत्प्रतियोग्याकाङ्क्षा भवति—
किमन्वितो घट, किमन्वितं कर्मत्वमित्याद्याकारा, सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासाजनकत्वात् । विशेष
रूपेण भाने त्वमादिपदसमभिव्याहारो नियामकोऽत एव तस्य शाब्दे भानम्, पदवृत्तिविषयत्वात्, अशक्यस्यापि भानेऽति-
प्रसङ्गात् । नन्वेव घटमानयेत्यत्रेतरान्वितं कर्मत्वमितिरीत्याऽनेकधा संसर्गस्य भानापत्तिः, तत्तत्पदेभ्यस्तथार्थोपस्थिता-
वाकाङ्क्षावशादेकधैव तद्भानप्रसङ्गात् । नचाकाङ्क्षायास्तद्भाननियामकत्वावश्यकत्वेन तत्र वृत्तिकल्पनाऽपार्थेति वाच्यम्,
अशक्यभानभियैव तदभ्युपगमात् । तथाच पदशक्त्यैव संसर्गभानोपपत्तौ तत्र न वाक्यशक्ति', पदत्वापेक्षया वाक्यत्वस्य
गुरुत्वाच्चेति तन्मतम् । तथाचान्विताभिधानमतेऽपि पदे वाक्यार्थशक्तिग्रहासम्भवः समान इत्यर्थः । * ज्ञातेति *

शक्तिरज्ञातैवोपयुज्यत इति वादाभ्युपगमस्तुल्य इति भावः ।) ननु वृद्धव्यवहारं पश्यतो मनसा पदार्थवद्वाक्यार्थेऽपि तद्ग्रह इति चेत् तुल्यमित्याह—लक्षणादिति—लक्ष्यते=तर्क्यतेऽनेनेति लक्षणम्=मनस्तस्मात् । अपिपदं पदपदोत्तरं बोध्यम् । पदेऽपि लक्षणात्तद्ग्रहश्चेत्तर्हास्तु वाक्येऽपीति शेषः । वस्तुतस्तु समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं

## प्रभा

कुर्यात्तथा त कुब्जमादिशेत् , इत्युक्तलक्षणः कुब्जो यथा विकृताङ्गेन किञ्चित्कर्तुमशक्तोऽविकृतेन चक्षुरादिना कार्यं कर्तुं समर्थश्च, तथा शाब्दबोधात्प्रागनुपस्थितत्वात् पदेऽन्वयांशनिरूपिता शक्तिरज्ञाता सत्यनुपकारिका पदार्थांशे च ज्ञाता शाब्दबोधोपकारिकेति भावः । शक्तिरिति—वाक्यार्थनिष्ठाऽन्वयांशनिरूपिता शक्तिरित्यर्थः । अभ्युपगम इति—सदसद्विवेकेन स्वीकारोऽभ्युपगम इति तदुक्तिरज्ञातशक्तेरनुपयोगान्निर्मूलत्वं तत्पक्षस्य सूचयति । पश्यत इति—अस्य पुंस इति शेषः । अज्ञातायाः शक्तेरनुपयोगाच्च कुब्जशक्तिवादः साधुरित्याशयेन प्रकारान्तरमाह—लक्षणादिति—यद्यपि लक्षणशब्दश्चिह्ने योगरूढस्तथापि प्रकृतानुरोधेन लक्षणशब्दो मनःपर एवेति व्याचष्टे—लक्ष्यत इत्यादिना । अयम्भावः—एक आज्ञापकवृद्धोऽपर आज्ञाप्यवृद्धस्तयोः 'गामानय' इत्यादिना गोकर्मकानयनादिव्यवहारदर्शनात् व्युत्पित्सुर्बालो यथा प्रथम वाक्ये एव गोकर्मकानयननिरूपितां शक्तिं मनसा गृह्णाति, तथा पदैः पदार्थोपस्थितौ मनसाऽन्वयांशेऽपि पदानां शक्तिग्रहः स्यादित्याह—पदेऽपीति—अस्य तद्ग्रह इत्यत्रान्वय । लक्षणात्=मनसः । तद्ग्रहः=अन्वयांशे शक्तिग्रहः । वाक्येऽपीति—वाक्येऽपि मनस एव शक्तिग्रहोऽस्त्वित्यति भावः । वस्तुतस्तु तात्पर्यज्ञानरूपामुपस्थितिमादाय वाक्येऽन्वयांशे शक्तिग्रहस्तात्कालिक एवेति न शक्तिग्रहानुपपत्तिरिति ध्येयम् । एतावता प्रघट्टकेन पूर्वं पदे शक्तिग्रहस्ततः पदार्थोपस्थितौ मनसा सम्बन्धांशे शक्तिग्रह इत्युक्तम् । अधुना प्रयोज्यप्रयोजकवृद्धव्यवहारदर्शनसहकृतमनसा प्रथमं वाक्ये एव शक्तिग्रहस्तदनन्तरम् 'गामानय' इत्यनुक्त्वा 'घटमानय' इत्युक्ते घटकर्मकानयनप्रतीत्या घटपदस्यावापे 'योजने' गोपदस्योद्वापे 'निष्कासने' अन्वयव्यतिरेकाभ्यां तत्तत्पदस्य तत्तदर्थे शक्तिग्रह इत्याह—वस्तुतस्त्विति । वाक्यस्यैवेति— तत्तत्पदसमभिव्याहारविशिष्टवाक्यस्यैवेत्यर्थः । अस्य वृद्धव्यवहारदर्शनेनेति शेषः । तेन वाक्यशक्तिग्रहात्पूर्वं कोशादितः शक्तिग्रहेऽपि न दोषः । पदानामेवान्वये शक्तिकल्पनं तु न युक्तम् , सामान्यतोऽन्वितार्थे

## दर्पणव्याख्या

पदार्थानां प्रागुपस्थित्या तत्र पदार्थशक्तिग्रहसम्भवादिति भाव । * अज्ञातैवेति * इत्यभ्युपगमस्तु शाब्दे भानानुपपत्त्यैवेति भाव । * पदार्थवदिति * सप्तम्यन्तादिति , उपमेये सप्तमीदर्शनात् । * वाक्यार्थेऽपि * संसर्गेऽपीत्यर्थः । इदञ्च बोध्यत्वं शक्तिरित्यभिप्रेत्य * तद्ग्रहः *=शक्तिग्रहः । लक्षणशब्दस्य चिह्नादौ प्रसिद्धेः प्रकृतोपयोग्यर्थपरतया तं व्याचष्टे—* लक्ष्यत इति * । मूले * अर्थे इति * निरूपितत्व सप्तम्यर्थं । तच्छब्दार्थो शक्तिज्ञानेऽन्वेतीत्यभिप्रेत्य व्याचष्टे—* पदेऽपीत्यादि * * तद्ग्रह इति * वाक्यार्थनिरूपितशक्तिग्रह इत्यर्थः । अय भाव —घटमानयेत्यादि वृद्धव्यवहारात्तत्पदे पदार्थशक्तिनिर्णयस्तरश्च तद्वाक्यश्रवणे पदैः पदार्थोपस्थित्यादिसमवधाने मनसा तत्संसर्गोपस्थितिर्नानुपपन्ना । परन्तु मानसस्य प्रायः संशयात्मकस्यापि सम्भवाच्चित्तियार्थं शब्दाऽऽदरः । तत्र शक्तिग्रहहेतुलिङ्गादेर्निर्णायकस्य मनसेन संशयवत्ताकम्भवादिति । ननु शब्दनिष्ठशक्तिनिर्णयस्यैव शाब्दबोधे हेतुताऽवधारणेन तस्य शाब्दबोधात् प्रागुपस्थित्यऽसम्भवेन वाक्यार्थे शाब्दबोधहेतुत्वं दुर्घटमेवेत्यत आह—* वस्तुतस्त्विति * ।

तद्ग्रहः । आवापोद्वापाभ्यां परं प्रत्येकं तद्ग्रह इति बोध्यम् ॥ ६६ ॥
इयमेव मीमांसकानां वेदान्त्येकदेशिनाञ्च गतिरित्याह—

प्रभा

पदानां शक्तिस्वीकारेऽपि सम्बन्धविशेषबोधाय तत्तत्समभिव्याहारे तत्तत्सम्बन्धबोधकारणत्वमभ्युपेयम् ।
'गामानय' इत्यादौ चतुष्टयादिबोधापत्ति-
अज्ञाते कारणत्वे बोधादर्शनेन तज्ज्ञानस्यापि कारणत्वमिति गौरवम् । संसर्गस्य कथञ्चिच्छाब्दविषयत्वोपपादनेऽपि विशिष्टबुद्धौ भास-
श्चेति वाक्यशक्तिस्वीकारे एव लाघवम् । तद्ग्रहः=विशेष्यविशेषण-
मानस्य विशेष्यविशेषणभावनिरूपितैव वाक्यशक्तिरिति पूर्वोक्तं न विस्मर्तव्यम् । वृत्तिवैशिष्ट्य-
भावापन्नवाक्यार्थशक्तिग्रहः । तथाच शाब्दबोधम्प्रति वाक्यवृत्तिविशिष्टज्ञानमेव कारणम् । वृत्तिवैशिष्ट्य-
श्च—स्वाश्रय ( वाक्य ) विषयकत्व—स्व 'वाक्यशक्ति' विषयकोद्बुद्धसंस्कारसामानाधिकरण्योभयसम्बन्धे-
न । तादृशवृत्तिविशिष्टज्ञानस्येदानीन्तनवाक्येऽपि सुलभत्वाच्च शाब्दबोधहेतुत्वे व्यभिचारसम्भवः । शाब्द-
बोधात्प्राग् वाक्यार्थोपस्थितेरनपेक्षणाच्च नोक्तदोषावकाशः । नन्वेवं यदि तर्हि पदस्फोटासिद्धिरत आह—
आवापोद्वापाभ्यामिति—योजनवियोजनाभ्यामित्यर्थः । परम्=केवलम् । तद्ग्रहः=प्रत्येकपदे पदार्थनिरूपित-
शक्तिग्रहः । एवञ्च प्रत्येकपदशक्तिज्ञानसहकृताऽऽकाङ्क्षादिवशेन यदा वाक्यार्थबोधस्तदा पदस्फोट इति
व्यवह्रियते । प्रकृतिप्रत्ययज्ञानमन्तरा 'वः' 'नः' इत्यादौ पदस्फोटवत् । यदा तु प्रत्येकपदशक्तिनिरपेक्ष्यैव
वाक्यशक्तिज्ञानं बोधं जनयति तदा वाक्यस्फोट एव । यथा 'पदत्सन्तः' इत्यत्र । यत्तु उपस्थिताः पदार्थास्त-
दुपस्थितिर्वा शाब्दबोधहेतुर्नतु पदज्ञानं वाक्यज्ञानं वा, तद्विनाऽपि शाब्दबोधदर्शनेन व्यभिचारात् । उक्तं हि—
'पश्यतः श्वेतिमारूपं हेषाशब्दञ्च शृण्वतः । खुरनिक्षेपशब्दञ्च श्वेतोऽश्वो धावतीति धीः' इति ।
तन्न, तथा सति चक्षुरादिना पदार्थोपस्थितौ शाब्दबोधापत्तेः । नचेष्टापत्तिः, केनाप्यननुमतत्वात्, 'पश्यामि'
इत्यनुव्यवसायविरुद्धत्वाच्च । चाक्षुषस्थले शाब्दत्वव्यवहाराभावाच्च तथात्वमिति चेत्प्रकृतेऽपि तथात्वस्य
वक्तुं शक्यत्वात् । श्वेतोऽश्वो धावति' इति धियोऽनुमानेनैवोपपत्तेः । एतेन पदार्था एव वाक्यार्थबोधका इ-
त्यपि परास्तम्, प्रत्यक्षेण गवाद्युपस्थितौ कस्येयमिति जिज्ञासमानस्यापि सन्निहितं देवदत्तं पश्यतश्च पुंसस्तत्र
शाब्दत्वाभावात् । तस्मान्निर्मूला 'पदार्था एव वाक्यार्थप्रत्यायका इति । किञ्च शाब्दबोधो नानु-
भवरूपोऽपि, स्वर्गनरकादिकं शाब्दयतः पुरुषस्य स्वर्गादिकमनुभवामीत्यप्रतीतेः । किन्तु स्मृत्यनुभवभिन्नं
ज्ञानस्वरूपं शाब्दत्वं जात्यन्तरमेव, तादृशव्यवहारदर्शनात् ॥ ६६ ॥

इयमेवेति—स्फोटस्वीकाररूपैवेत्यर्थः । गतिः=उपाय ।

दर्पणव्याख्या

* तद्ग्रहः * विशिष्टवाक्यार्थशक्तिग्रहः । तथाच शक्तिग्राहकशिरोमणिना व्यवहारेण पूर्वं वाक्ये एव शक्तिग्रहेण तस्यैव शा-
ब्दबोधहेतुत्वावधारणात्तादृशवृत्तेश्च—स्वाश्रयविषयकत्व—स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्योभयसम्बन्धेन वैशिष्ट्यस्ये-
दानीन्तनवाक्यज्ञानेऽप्यक्षतत्वान्न वृत्तिज्ञानस्य शाब्दबोधे हेतुताया व्यभिचारः, मध्ये वाक्यार्थोपस्थितेरनपेक्षणाच्च नोक्तदोषा-
वसर इति भावः । ननु तर्हि पदस्फोटस्य निरालम्बनतापत्तिरत आह—* आवापोद्वापाभ्यामिति * आनयनापसारणा-
भ्यामेकपदोपादानापरापदानुपादानाभ्यामित्यर्थः । * तद्ग्रहः *=प्रत्येकपदे प्रत्येकपदार्थशक्तिग्रहः । तथाच प्रत्येकपद-
शक्तिसाचिव्येनाऽऽकाङ्क्षादिवशात् पदाद्वाक्यार्थशाब्दबोधस्तदा पदस्फोटः, यदा तु तन्निरपेक्ष्यैव स बोध जनयति तदा
वाक्यस्फोट इति मतद्वयं पर्य्यवस्यतीति भाव । केचित्तु—उपस्थिताः पदार्थास्तदुपस्थितिर्वा शाब्दबोधहेतुर्नतु पदज्ञानमपि,
तद्विनाऽपि शाब्दबोधोदयेन व्यभिचारात् । तदुक्तम्—'पश्यतः श्वेतमारूपं हेषाशब्दञ्च शृण्वतः । खुरनिक्षेपशब्दञ्च

सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति ये विदुः ।
भाट्टास्तेऽपीत्थमेवाहुर्लक्षणाया ग्रहे गतिम् ॥ ६७ ॥

भाट्टा इति–इति तदनुयायिनां वाचस्पति–कल्पतरुप्रभृतीनामुपलक्षणम् । ननूक्तपक्षद्वयमनुपपन्नम्, उत्पत्ते

प्रभा

सर्वत्र=सर्वविधिवाक्यजन्यबोधस्थले । वाक्यार्थः=संसर्गरूपः । लक्ष्य एव=लक्षणाया बोध्य एव । भाट्टा =कुमारिलभट्टानुयायिनो मीमांसकाः । अयमाशयः—तन्मते पदाभिहितैः प्रत्यासत्त्याऽऽकाङ्क्षायोग्यत्ववशात् पदार्थैर्लक्षणया वाक्यार्थः प्रतिपाद्यते । तत्र 'गामानय' इत्यत्रानयतिरानयनत्वमभिधाय नयनव्यक्तिं लक्षयति । गोपदमपि गोकर्मके लक्षणया स्वार्थद्वारेणानयनमेव प्रतिपादयति । एवं यत्र यत्र वाक्ये यो योऽर्थो विशेष्यत्वेन विवक्ष्यते तमेवेतराणि पदानि स्वार्थाभिधानद्वारेण तत्सम्बन्धिरूपेण लक्षयन्तीति । एतन्मते 'गभीरायां नद्यां घोषः' इत्यत्र प्रत्येकपदस्य तीरे लक्षणा न सम्भवति । तथाहि न नदीपदं तीरलक्षकम्, गभीरत्वस्य नदीधर्मतया तीरे गभीरपदार्थानन्वयापत्तेः । न गभीरं तीरम् । नापि गभीरपदं तथा, तीरे नद्यामित्यापत्तेः । नहि तीरं नदी, गभीरनदीतीरे घोषः इत्यर्थालाभाच्च । नापि गभीरपदं नदीपदं वा गभीरतीरे लाक्षणिकमन्यतरत्तात्पर्यग्राहकञ्चेति कस्य तात्पर्यग्राहकत्वं कस्य लक्षकत्वञ्चेत्यत्र विनिगमनाविरहेण यथात्वासम्भवादिति 'गभीरायां नद्याम्' इति वाक्यबोध्यस्य गभीराभिन्ननदीरूपार्थस्य स्वबोध्यसंयुक्तत्वसम्बन्धेन वाक्यस्यैव यथा लक्षणा तथा सर्वत्र वाक्यार्थभूतसंसर्गे उक्तरीत्या लक्षणा । एवञ्च यथा तन्मते वाक्यार्थज्ञानं तथा वैयाकरणमतेऽपि वाक्यात्मकः स्फोटः सिद्ध्येदिति भावः । उपलक्षणमिति=वस्तुतस्तु 'भाट्टाः' इत्यस्यैव भट्टानुयायिन इत्यर्थकतया शक्त्यैव वाचस्पत्यादिसंग्रहसम्भवेनोपलक्षणोक्तिश्चिन्त्येति गुरवः । लक्षणाया इति–पदसमूहात्मकस्य वाक्यस्य वाक्यार्थे (संसर्गे) शक्त्यभावात्तद्बोधोपपत्तये वाक्यस्य या लक्षणा तस्याः ग्रहे=ज्ञाने । इत्थमेव वैयाकरणाभिमतस्फोटरीत्यैव गतिम्=उपायं विदुरित्यर्थः । पक्षद्वयमिति=पदवाक्यस्फोटद्वयमित्यर्थः । यद्वा वाक्यलक्षणपक्षः, वाक्यस्फोटपक्षश्चेत्यर्थः । उत्पत्तेरिति=आगसत्त्वे सति सत्त्वरूपाया उत्पत्तेरित्यर्थः । वर्णानित्यत्ववादिमतेनेदम् । तन्मते हि प्रथमक्षणे वर्ण उत्पद्यते । द्वितीयक्षणे तस्य स्थितिः । तत्रैव क्षणे वर्णान्तरस्योत्पत्तिः । तृतीयक्षणे वर्णस्य द्वितीयक्षणोत्पन्नवर्णेन नाशः, प्रत्यक्षयोग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वात्, शब्दस्य चाकाशरूपविभुविशेषगुणत्वात् । वैयाकरणनये तु 'परः सन्निकर्षः' (१।४।१०९) इति सूत्रे भाष्ये 'गौः' इत्यत्र 'यावद्गकारे वाग् वर्तते न तावदौकारे' इत्युक्त्या येनैव यत्नेनैको वर्ण उच्चार्यते तेन यत्नेन सहैव विनष्टे तस्मिन् वर्णे वर्णान्तरमुत्पद्यते इत्यर्थलाभेन न पूर्ववर्णस्थितिकाले उत्तरवर्णोत्पत्तिरिति प्रतीयते इति । वैयाकरणाभिमतवर्णनित्यतापक्षे आह—

दर्पणव्याख्या

स्वेतोऽश्वो धावतीति धी' इति, तत्र, शब्दं विना जायमानस्य घटादिज्ञानस्यापि शाब्दत्वापत्तेः । तत्र पश्यामि, न शाब्दयामीत्यनुव्यवसायान्न शाब्दत्वं यदि तदा प्रकृतेऽपि समम्, उक्तप्रतीतेरनुमानेनैव निर्वाहात् तत्र शाब्दप्रत्यय असिद्ध एवेत्यादि स्वयमूह्यम् ॥ ६६ ॥ * उपलक्षणमिति * तन्मते 'गभीरायां नद्यां घोषः' इत्यादौ प्रत्येकपदशक्त्या स्वशक्यसम्बन्धरूपलक्षणया नोक्तदिशाऽभीप्सितार्थान्वये बोधासम्भवात् स्वबोध्यसम्बन्धस्य लक्षणत्वाभ्युपगमेन वाक्यार्थमात्रे वाक्यलक्षणास्वीकारादिति भावः । * पक्षद्वयमिति * पदवाक्यभेदेन व्यवस्थितं स्फोटद्वयमित्यर्थः । अनुपपत्तिमेवाह—

रभिव्यक्तेर्वैकदाऽसम्भवेन उत्पन्नानामभिव्यक्तानां वर्णसमूहरूपपदज्ञानासम्भवात् । तथा च सुतरां तत्समूहरूपवाक्यज्ञानासम्भव इति चेन्न, उत्तरवर्णप्रत्यक्षसमये तस्मिन्नव्यवहितोत्तरत्वसम्बन्धेनोपस्थितपूर्ववर्णवत्त्वम्, तथा तदुत्तरप्रत्यक्षकाले उपस्थितविशिष्टतद्वर्णवत्त्वं तस्मिन् सुग्रहमिति तादृशानुपूर्वीघटितपदत्वस्येव वाक्यत्वस्यापि सुग्रहत्वात् ॥ ६७ ॥

प्रभा

अभिव्यक्तेरिति—प्रत्यक्षाविषयीभूतस्य सतोऽप्यर्थस्य प्रत्यक्षात्मकज्ञानविषयीभवनरूपाया अभिव्यक्तेरित्यर्थः । सा च वर्णोत्पादकत्वेन पराभिमता या कण्ठताल्वाद्यभिघातवायुसंयोगादिघटितसामग्री तया जन्यते । तथा चाभिव्यक्तेरपि योग्यविभुविशेषगुणज्ञानघटिततया उत्तरया तया पूर्वस्या नाशादेकदाऽनेकवर्णाभिव्यक्तेरसम्भवः । ज्ञानविशेषविषयतारूपाभिव्यक्तिविशिष्टानेकवर्णानामपि युगपदवस्थानासम्भव एवेति भावः । तथा चानेकवर्णघटितपदस्य, तादृशपदघटितवाक्यस्य च श्रावणप्रत्यक्षात्मकज्ञानासम्भवः, विषयतासम्बन्धेन ज्ञानं प्रति तादात्म्येन विषयस्य कारणतया पदवाक्यरूपविषयाभावेन तदसम्भवादिति भावः । उत्पन्नानामिति—अन्य मेलनासम्भवेनेति शेषः । तत्समूहेति—पदसमूहरूपेत्यर्थः, अवयवाभावेऽवयविनोऽवस्थानासम्भवात् । अभिव्यक्तिपक्षे पदवाक्ययोः प्रत्यक्षप्रकारमाह—उत्तरवर्णेति—येषां क्रमेणोत्पत्तिस्तेष्वेव पूर्वोत्तरत्वं वक्तुं शक्यम् । वर्णनित्यत्वपक्षे तु वर्णानां सर्वैव सत्त्वात् पौर्वापर्यं न सम्भवतीति तदभिव्यक्तेरुत्पत्तिमत्तया तद्गतं पूर्वोत्तरत्वं वर्णेष्वारोप्यते, परम्परया गृह्यते वा । अत एव मूले 'उत्तरवर्णप्रत्यक्षसमये' इति उपस्थितपूर्ववर्णवत्त्वमिति चोक्तम् । अभिव्यक्ता उच्चारिता वा वर्णा इति व्यवहारो नतूत्पादिता इति । अभिव्यक्तिश्च ज्ञानात्मकं स्वाविषयत्वे सति स्वविषयत्वसम्बन्धेन । तथा— चाव्यवहितत्वं येषां मते प्रागभावकालो न ध्वंसाधिकरणमिति ध्वंसाधिकरणकालश्च न प्रागभावाधिकरणमिति तन्मते अव्यवहितत्वम्—स्वध्वंसानधिकरणक्षणवृत्तित्वरूपम् । प्रकृते पदशब्दे पकाराकारयोर्यथा—पकाराव्यवहित अकारः, अकाराव्यवहितो दकारः । वर्णस्य नित्यत्वेन स्वविषयकाभिव्यक्तिविशिष्टाभिव्यक्तिविषयत्वरूपमेवाव्यवहितत्वं वर्णयोः । वैशिष्ट्यञ्च—स्वध्वंसानधिकरणक्षणवृत्तित्वसम्बन्धेन । अभिव्यक्तिज्ञानरूपैव प्रथमक्षणे कण्ठताल्वादिना पकारस्य ज्ञानमुत्पन्नं द्वितीयक्षणे तस्य स्थितिरन्यक्षणे एवाकारस्य ज्ञानमुत्पन्नम् । तृतीयक्षणे पूर्वज्ञाननाशः उत्तरज्ञानस्य स्थितिः । एवञ्च पूर्वज्ञानस्थितिक्षणे उत्तर-

दर्पणव्याख्या

* उत्पन्नानामिति * वर्णानित्यतावादिमते वर्णानां योग्यविभुविशेषगुणत्वेन स्वाधारोत्पन्नगुणनाश्यत्वादेकदाऽवस्थानासम्भव । तन्नित्यतावादिमते त्वाह—* अभिव्यक्तानामिति * वर्णा नित्याः किन्तु तदभिव्यक्तिरेवानित्या, वर्णोत्पादकत्वेनान्याभिमतानामेव कण्ठाद्यभिघातादीनां तदभिव्यञ्जकत्वाभ्युपगमात् । तथा चाभिव्यक्तेरपि योग्यविभुविशेषगुणतया स्वोत्तरोत्पन्नगुणनाश्यत्वाविशेषात् क्षणिकत्वात्तद्विशिष्टवर्णानामपि युगपदवस्थानासम्भव एवेत्यर्थः । नन्वस्तु वर्णानां युगपदनवस्थानं किमस्माकमनिष्टमत आह—* वर्णसमूहेति * । वाक्यस्फोटकल्पेऽपि तदाह—* तथा चेति * । आशुविनाशिनां क्रमिकाणां मेलकासम्भवादन्तिमवर्णोत्पत्तिकाले, तदभिव्यक्तिकाले वा पूर्वपूर्ववर्णानां तावदभिव्यक्तानां वाऽवस्थानासम्भवेन तत्समूहरूपपदस्य, वाक्यस्य वा तादात्म्येन प्रत्यक्षकारणस्याभावात् प्रत्यक्षस्यैवाऽसम्भवेन तत्रोक्तशक्तिग्रहस्य गगनकुसुमायमानत्वादित्याशङ्कार्थः * ज्ञानासम्भव इतीति * । अभिव्यक्तिपक्षमादाय समाधत्ते—* उत्तरवर्णप्रत्यक्षेति * । * अव्यवहितोत्तरेति * एतन्मते वर्णानां नित्यत्वेन सर्वेषामेव वर्णानामवस्थानेन स्वाधिकरणक्षणो-

इदानीमखण्डपक्षमाह—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥ ६८ ॥

पदे=पचतीत्यादौ, न वर्णाः, नातो वर्णसमूहः पदमिति शेषः । दृष्टान्तव्याजेनाह—वर्णेष्विति—एकारौकारऋकारादिवर्णेऽप्यवयवाः प्रतीयमाना अपि यथा नेत्यर्थः ।

प्रभा

ज्ञानस्योत्पत्त्या स्वध्वंसानधिकरणीभूतोत्पत्तिस्थितिक्षणयोश्चान्यतरस्मिन् पूर्वस्य स्थित्या उत्तरस्योत्पत्त्या च वृत्तित्वेन उभयोरभिव्यक्त्योः परस्परविशिष्टत्वाद् वर्णयोरपि स्वविषयकाभिव्यक्तिविशिष्टाभिव्यक्तिविषयतयाऽव्यवहितत्वं सिद्धम् । वर्णनित्यत्वे च घकारस्थितिक्षणे एव द्वितीयवर्णोत्पत्तिरिति ध्वंसानधिकरणक्षण उत्पत्तेः स्थितेश्च । अव्यवहितत्वेनाभिमतयोर्वर्णयोर्वृत्तित्वस्य सत्त्वादव्यवहितत्वं सिद्धम् । एवञ्चाव्यवहितत्वं पूर्ववर्णे उत्तरवर्णे च सिद्धम् । यन्मते प्रागभावाधिकरणकालोऽपि ध्वंसानधिकरणम्, तन्मतेऽव्यवहितत्वञ्च स्वविशिष्टत्वम्, वैशिष्ट्यञ्च—स्वाधिकरणक्षणोत्पत्तिकत्व—स्वोत्पत्त्यधिकरणस्थितिकत्वैतदन्यतरसम्बन्धेन । यन्निरूपितमव्यवहितत्वं तत्तत्पदमाह्यम् । पूर्वत्वञ्च स्वोत्पत्तिप्रागभावाधिकरणक्षणोत्पत्तिकत्वम् । उत्तरत्वञ्च—स्वोत्पत्तिक्षणवृत्तिप्रागभावप्रतियोगित्वरूपम् । प्रागभावानङ्गीकर्तृमते च पूर्वत्वम्—स्वोत्पत्त्यधिकरणक्षणध्वंसानधिकरणक्षणोत्पत्तिकत्वम्, उत्तरत्वञ्च—स्वोत्पत्तिक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वरूपमन्योन्यम् । वर्णनित्यत्वपक्षे तु स्वोत्पत्तिस्थाने स्वविषयकाविर्भावोत्पत्तिं निवेश्य पूर्वत्वोत्तरत्वाव्यवहितत्वानि ऊह्यानि । प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिकालावच्छिन्नावश्यकत्वरूपावसरसङ्गत्या शिष्याजिज्ञासितसखण्डस्फोटनिरूपणानन्तरमखण्डस्फोटनिरूपणमारभते—इदानीमिति—सखण्डस्फोटनिरूपणानन्तकाल इत्यर्थः । अखण्डेति—लाघवादिति शेषः । अखण्डत्वञ्चावयवाघटितत्वम् । ननु 'वर्णेषु अवयवा न च' इति प्रकृतानुपयुक्तमत आह—दृष्टान्तेति—दृष्टोऽन्तो निश्चयः=यादिप्रतिवादिनो बुद्धिसाम्येन सम्मतिर्यत्र स दृष्टान्त इत्युच्यते । न्यायनये निश्चितसाध्यको दृष्टान्तः । प्रकृते एकारादिवर्णेषु अवयवप्रयुक्तकार्यस्यादर्शनेनाखण्डत्वस्य वादिप्रतिवाद्युभयसम्मतत्वात् दृष्टान्तत्वम् । व्याजेनेति—वर्णानामवयवशून्यत्वसाधयितुमिष्टमिति सूचयितुं व्याज-

दर्पणव्याख्या

[illegible] । तदारोपादेव वर्णेष्वव्यवहितोत्तरत्वव्यवहारः । अत एव [illegible] निवेशः । [illegible] । अव्यवहितत्वञ्च—[illegible] । तेन 'घटेन घट' इत्यादौ नातिप्रसङ्गः । [illegible] । तेन, 'दिव, मधु, दीप्यम्' इत्यादौ न [illegible] पदत्वम् । [illegible] पूर्वपूर्ववर्णाभिव्यक्तिध्वंसानधिकरण[illegible] । [illegible] पूर्वपूर्ववर्णोऽशोऽलौकिकस्य [illegible] निराकरोति भावः ॥ ६७ ॥

इति पदवाक्यस्फोटनिरूपणम् ॥ १४ ॥

[illegible] इदानीमिति • [illegible] । [illegible] वर्णानाम[illegible] —

• [illegible] • [illegible]

• [illegible] • [illegible]

वैजात्यमादायैव ककारो गकार इत्यादिप्रतीतिवैलक्षण्यसम्भवात्। स्पष्टं हि भामत्याम्—"तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यते" इत्युक्तं देवताधिकरणे। नचैवं वायुसंयोग एव वाचकोऽपि किं न

### प्रभा

तत्स्फोटे आरोप्याकारादिप्रतीतिवैलक्षण्यसम्भव इति न सा पदवाक्यात्मकस्फोटस्य वर्णादिघटितत्वसाधिके त्याह्—वैजात्यमादायेत—आदायेत्यस्य समवायेन स्फोटे आरोप्येत्यर्थः। तथाचारोपितकत्वादिना स्फोट एव 'क', 'ग', इत्यादिप्रतीतिविषयो नतु ककारादिवर्णान्तरमित्याशयः। नचोत्पन्नः ककार इत्यादिप्रतीतेः सर्वानुभूतत्वात् कत्वेन प्रतीयमानस्य स्फोटस्यानित्यत्वापत्तिः, 'सोऽयं ककारः' इति प्रत्यभिज्ञादर्शनेनोत्पत्ति प्रतीतेर्भ्रमत्वकल्पनात्, अभिव्यञ्जकगतोत्पत्तिनाशाद्यारोपेण तत्प्रतीत्युपपत्तेश्च। नच घटादेरपि कपालसंयोगविशिष्टस्फोटरूपत्वापत्त्या नित्यत्वापत्तिरिति वाच्यम्, सत्कार्य्यवादिना तन्नित्यताया स्वीकृतत्वात्। अविद्याकल्पितस्य मृद एवावस्थाविशेषस्य घटादेराधिेयकजलाहरणादिकार्य्यानुरोधेन स्वीकारस्यावश्यकत्वात्। भामत्याम्—वाचस्पतिमिश्रकृताया भामतीनाम्न्या शाङ्करभाष्यटीकायाम्। तारत्वादि=उच्चैस्त्वनीचैस्त्वादीत्यर्थः। आरोप्यत इति—भामत्याम् 'आरोप्यते' इत्युक्ते मूले 'आदाय' इत्यस्यारोप्येति व्याख्यातम्। देवताधिकरण इति—विद्यायज्ञादौ देवानामधिकारित्वतदभावान्यतरसाधको न्यायः=देवताधिकरणम्। तदुक्तम्—'नाधिक्रियन्ते विद्यायां देवाः, किं वाधिकारिणः, विदेहत्वेन सामर्थ्यहाने नैषामधिक्रिया। 'आनर्थक्यार्थवादादिमन्त्रादेर्देहसत्त्वतः। अर्थित्वादेश्च सौलभ्याद्देवाद्या अधिकारिणः' इति। विषयसंशय पूर्वपक्षोत्तरपक्षनिर्णयबोधकवाक्यसमूहोऽधिकरणम्। तदुक्तम्—'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्' इति। वायुसंयोग एवेति—'तद्धेतो' इति न्यायेन आरोपित कत्वादेर्वाचकतावच्छेदकत्वकल्पनापेक्षया वायुसंयोगानिष्ठस्यारोपितस्य तस्य वाचकतावच्छेदककल्पने लाघवाद्वायुसंयोग एव वाचकोऽस्त्विति भावः। 'पदं वाक्यं वा शृणोमि' इत्यनुभवात् स्फोटात्मकवाचक प्रत्यक्षमनुभवसिद्धम्। यदि वायुसंयोग एव वाचकः स्यात् तदा तस्यातीन्द्रियतया प्रत्यक्षं न स्यात्। नच स्फोटवादिनयेऽपि अतीन्द्रियवायुसंयोग एव वाचकः स्यात् तदा तस्यातीन्द्रियतया प्रत्यक्षं न स्यात्। नच स्फोटवादिनयेऽपि अतीन्द्रियवायुसंयोगगतकत्वादेः प्रत्यक्षं स्यादिति वाच्यम्, 'सुरभि चन्दनम्' इति चाक्षुषप्रत्यक्षे चक्षुरयोग्यस्यापि सौरभस्य भानवच्छ्रवणायोग्यस्यापि अभिव्यञ्जकगतकत्वादिधर्मस्य श्रावणप्रत्यक्षत्वसम्भवात्। वायुगतस्य, वायुसंयोगगतस्य वा कत्वादेः स्फोटे भानाभ्युपगमे पक्षद्वयेऽपि कादिवर्णा अनर्थका इति शब्दकौस्तुभे स्पष्टम्। नच कत्वादेः स्फोटेऽभावेऽपि समवायेन प्रतीतौ भ्रमत्वं स्यादिति वाच्यम्, स्वाश्रयाभिव्यङ्ग्यत्वसम्बन्धेनैव कत्वादेः स्फोटे भानाङ्गीकारात्। तेन सम्बन्धेन च तत्र तस्य सत्त्वेन भ्रमत्वासम्भवात्। नच स्वाश्रयाभिव्यङ्ग्यत्वस्य सम्बन्धत्वे मानाभावः, कादिविषयकविशिष्टबुद्धेरेव मानत्वात्, प्रतियोग्यनुयोगिभ्यां भिन्नो विशिष्टबुद्धिनियामकश्च सम्बन्ध इति नियमात्

### दर्पणव्याख्या

तथाच स्फोटे वैजात्यं समवायेन स्फोटेन आरोप्याकारप्रतीतिवैलक्षण्योपपत्तौ न तदुपरागविरहितः ककारादिवर्णो मानम्। नाप्युत्पन्नः क इत्यादिप्रतीतिः साधिका, सोऽयं क इत्यभेदप्रत्यभिज्ञारूपबाधकसत्त्वेन तादृशप्रतीतेर्भ्रमत्वात्। नापि गुणादीनां नित्यानां... ...स्य ... ...त्वादिति भावः। भामत्याम्... ...। आरोप्यत इतीति एतदनुरोधेनादायेति पदमारोपपरतया व्याख्यातम्। मतान्तरं तु वक्ष्यते ... एवेति। वायुसंयोग एवेति ... ...वायुसंयोग एव... । एवञ्च वर्णात्मकस्फोटस्य...च्छेद

तेषां स्फोटातिरिक्तत्वाभावात्। यत्तु वर्णानां प्रत्येकं वाचकत्वे प्रत्येकादर्थबोधापत्तिः। समुदायस्य तु क्रमवतामाशुतरोत्पन्नानां तथैवाभिव्यक्तानां वा ज्ञानमसम्भाव्यमेव। पूर्वपूर्ववर्णानुभवसंस्कार-

प्रभा

भावेन तस्य वाचकत्वं दूरापास्तमेवेति सूचितम्। तेषाम्=गकारादिवर्णानाम्- अतिरिक्तत्वाभावादिति—परम्परया प्रतीयमानवायुसंयोगगतगत्वादिप्रकारकप्रतीतिविषयस्फोटस्यैव वाचकत्वस्वीकारेणातिरिक्तस्वतन्त्रवर्णानामभावादित्यर्थः। कैयटोक्तं स्फोटसाधनप्रकारं दूषयितुं तन्मतमुपन्यस्यति—यत्त्विति—वर्णानां प्रत्येकं वाचकत्वं समुदायभावमापन्नानां वेति विकल्प्याद्यं दूषयति—वर्णानामिति। द्वितीयपक्षं निरस्यति—समुदायस्येति—'समुदायस्य 'ज्ञानमसम्भाव्यम्' इत्यन्वयः। क्रमवतामिति—क्रमः=पौर्वापर्यम्। तेनोत्पत्तिमतामाविर्भवतां वेत्यर्थः। ननु क्रमेणोत्पन्नां ज्येष्ठमध्यमकनिष्ठपुत्रादीनामिव समूहवद्वर्णानामपि तत्सम्भव इत्यत आह—आशुतरेति—क्रमेणोत्पन्नानां सहोत्पन्नानां वा स्थायित्वे एव समुदायत्वसम्भवादाशुतरोत्पन्नानां पूर्ववर्णस्थित्यधिकरणद्वितीयक्षणोत्पन्नानां समुदायस्य ज्ञानमसम्भवि। एकक्षणोत्पन्नानां मुरज-मृदङ्ग-वीणादिशब्दानां समुदायप्रत्यक्षस्यानुभवसिद्धत्वादत्राशुतरोत्पन्नपदमाशुतरविनाशिनाम् तृतीयक्षणवृत्तिध्वंसप्रतियोगिनामुपलक्षणम्। तृतीयादिक्षणे पूर्वपूर्ववर्णानां नाशेन वर्णद्वयसमुदायस्य प्रत्यक्षसम्भवेऽपि वर्णत्रयादिसमुदायस्य ज्ञानमसम्भाव्यमेव। तदुक्तम्—ज्ञानमसम्भाव्यमिति। अभिव्यक्तेरपि तृतीयक्षणवृत्तिध्वंसप्रतियोगितया सैव गतिरिति भावः। विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्यसम्बन्धेन विषयस्य कारणतया वर्णसमुदायरूपविषयस्यैवासत्त्वे प्रत्यक्षासम्भवादित्याशयात्। वर्णसमूहस्यैव वाचकत्वसमर्थने केनाप्युक्तं खण्डयन् कैयट आह—पूर्वपूर्ववर्णेति—वर्णस्यानित्यत्वनये वर्णस्य श्रावणप्रत्यक्षात्मकानुभवासम्भवात् तज्जन्यसंस्कारासम्भवः। तथाहि—प्रथमक्षणे वर्ण उत्पद्यते, द्वितीयक्षणे तस्य स्थितिः, वर्णान्तरस्य चोत्पत्तिः, तृतीयक्षणे उत्पन्नेन वर्णान्तरेण पूर्ववर्णस्य नाशः, योग्यविभुविशेषगुणानां स्वोत्तरवर्तिविशेषगुणनाश्यत्वनियमात्। तथा च द्वितीयक्षणे एव वर्णस्य श्रावणानुभवो वाच्यः। स च न सम्भवति, गत्वादिधर्मविशिष्टव्यक्तिविषयात्मकस्य तस्य विशिष्टबुद्धित्वेन तत्र च विशेषणज्ञानं कारणमिति नैयायिकैः स्वीकृतत्वात्। तथा च ततः पूर्वं गत्वादिधर्ममात्रस्य निर्विकल्पं ज्ञानमपेक्ष्यते। तस्य चोत्पत्तिक्षणे गत्वरूपविषयाभावेनासम्भवः, विषयतासम्बन्धेन प्रत्यक्षम्प्रति तादात्म्येन विषयस्य कारणतया विषयस्यैवासत्त्वे प्रत्यक्षासम्भवात्। तदुक्तम्—'सम्बद्धं वर्तमानञ्च गृह्यते चक्षुरादिना' इति गकाराद्युत्पत्तिक्षणोत्पन्नतया गत्वादिस्मृत्यैव द्वितीयक्षणे एव सविकल्पकज्ञानसम्भव इति तु न वाच्यम्, पूर्वं जातकादाचित्कगत्वाद्यनुभवजस्मृत्या विशिष्टबुद्धिसम्भवेऽपि प्राथमिकगत्वादिविशिष्टबुद्धेरुपपादनस्य वक्तुमशक्यत्वादिति चेदत्रोच्यते—संसारस्यानादितया कस्यापि गत्वादिज्ञानस्य प्राथम्यासम्भवेन नवजातशिशोर्जीवनादृष्टवशात् प्रबुद्धसंस्कारजन्यस्तनपानप्रवृत्तिप्रयोजकेष्टसाधनत्वविषयकस्मृतेरिव तज्जन्मनि प्राथमिकगत्वादिविशिष्टबुद्धिजनकगत्वादिस्मृतेः कल्पनेनोक्तानुपपत्तेरभावात्। गत्वादिस्मृति-

दर्पणव्याख्या

तथा च तत्रैव प्रमाणाभावेन वाचकत्वं दुरुपपादमिति भावः। * तेषाम् * गकारादिवर्णानाम्। * स्फोटातिरिक्तेति * गत्वप्रकारकप्रतीतिविषयत्वादिस्फोटस्यैवास्माभिर्वाचकत्वाभ्युपगमादिति भावः। आशुतरविनाशिनां सहोत्पन्नानां समुदायासम्भवादुक्तम्—* क्रमवतामिति *। [illegible] स्थायिनां सहावस्थानादुक्तम्—* आशुतरेति * तृतीयक्षणवृत्तिध्वंसप्रतियोगिनामित्यर्थः। * * असम्भाव्यमिति * प्रत्यक्षे तादात्म्येन विषयस्य हेतुतया समूहरूपविषयस्यैवाभावादिति भावः। * पूर्वपूर्वेति * ननु वर्णानित्यत्वादिमते तृतीयक्षणवृत्तिध्वंसप्रतियोगिनां तेषां प्रत्यक्षस्यैव

सहकारेणैकदा समूहालम्बनरूपसकलज्ञानसम्भवस्तु सरो रसः, राज-जरा, नदी-दीनादिसाधारण इत्यतिप्रसङ्ग

प्रभा

प्रयोजकसंस्कारस्योद्बोधकल्पने मानन्तु गत्वादिविशिष्टानुभव एव। केचित्तु प्रतियोगितासम्बन्धेन योग्य-
विभुविशेषगुणनाशं प्रति स्वसामानाधिकरण्य—स्वाव्यवहितपूर्ववर्तित्वोभयसम्बन्धेन योग्यविभुविशेष-
गुणः कारणम्, इति सामान्यतः कार्यकारणभावो यदि स्यात्तदोक्तरीत्या गत्वादिविशिष्टस्य प्रत्यक्षं न
स्यात्। परन्तु मरणाव्यवहितप्राक्कालोत्पन्नशब्दनाशे, सुषुप्तिप्राक्कालोत्पन्नज्ञानादिनाशे चोक्तोभयसम्बन्धेन
योग्यविभुविशेषगुणस्याभावेनोक्तकार्यकारणभावे व्यभिचारवारणाय कार्यतावच्छेदककोटौ चरमगुणा-
तिरिक्तत्वेन योग्यविभुविशेषगुणे संकोचकल्पनवत् प्राथमिकगत्वादिविशिष्टबुद्धिविषयवर्णातिरिक्तत्वेनापि
कोचात् प्राथमिकगत्वादिविशिष्टबुद्धिविषयवर्णस्य तृतीयक्षणस्थायित्वस्यापि स्वीकारेण द्वितीयक्षणस्थग-
गादिनिर्विकल्पकज्ञानमादाय तृतीयक्षणे सविकल्पकज्ञानकल्पने न काचिदनुपपत्तिः। गुणे योग्यत्वञ्च—
लौकिकप्रत्यक्षविषयत्वम्, निर्विकल्पकस्य प्रत्यक्षाविषयत्वेन स्वोत्तरोत्पन्नज्ञानादिना नाशानुपपत्तेः।
किन्तु 'लौकिकसाक्षात्कारविषयत्व—निर्विकल्पकान्यतरत्वरूपम्। प्राथमिकगत्वादिविशिष्टबुद्धिनाशम्प्रति
वोत्तरचतुर्थक्षणवृत्तित्वविशिष्टं स्वयमेव कारणम्। एवमेव चरमज्ञाननाशम्प्रति स्वोत्तरक्षणवृत्तित्वविशिष्टं
वयमेव कारणमिति सर्वं सुस्थम्। समूहालम्बनेति—'गौः' इत्यत्र 'गकारः' औकारः 'विसर्गश्च' इत्येवंरूपः,
गत्वौत्वविसर्गत्वादिनानाधर्मनिष्ठप्रकारताकनानात्तद्व्यक्तिनिष्ठमुख्यविशेष्यतारूपसमूहालम्बनात्मकेत्यर्थः।
प्रकारताद्वयादिनिरूपितमुख्यविशेष्यताद्वयादिनिरूपकज्ञानत्वस्यैव समूहालम्बनत्वात् समूहः उक्तरूपः,
आलम्बनं विषयो यस्य ज्ञानस्य तत्समूहालम्बनम्। सकलेति—तत्तत्पदघटकसर्ववर्णेत्यर्थः। सरः रसः, इत्युभ-
यत्रापि सकाराकाररेफाकारविसर्गात्मकवर्णसंस्कारसहकारेण तादृशवर्णसमूहस्य ज्ञानसत्त्वेन सरोरसयोः, जरा
राजा, नदी दीनादिपदानां समानार्थत्वापत्तिरित्याह—अतिप्रसङ्ग इति – सरःशब्दादिघटकसकलवर्णानुभव-
जन्यसंस्कारसहकारेण तादृशवर्णसमुदायविषयकसमूहालम्बनात्मकज्ञानेन तत्तदर्थबोधापत्त्या पर्याया-
पत्तिरूपातिप्रसङ्ग इति भावः। नच येन क्रमेण वर्णानुभवस्तेनैव क्रमेण स्मरणेऽपि वर्णभाने न दोष
इति वाच्यम्, पूर्वं ज्ञातस्य पश्चात्, पश्चाज्ज्ञातस्य पूर्वमपि स्मरणदर्शनेन तादृशनियमासिद्धेः।
नचान्यत्र घटपटादिविषयेऽनुभवस्मरणयो क्रमनियमाभावेऽपि वर्णविषयेऽनुभवस्मरणयोः क्रमनियम
इति वाच्यम्, परश्वो ज्ञातपदस्य प्रथमं श्वो ज्ञातपदस्य पश्चादपि स्मरणदर्शनेन क्रमेणैव वर्णस्मरण-

दर्पणव्याख्या

सहकारितासम्भवः। तथाहि—कादिप्रतीतिः ककारादौ विशेषणतया कादित्वमवगाहते।
सम्भवात् कथं तज्जन्यसंस्कारस्य निर्विकल्पकमभ्युपेत्य तृतीयक्षणे विशिष्टज्ञानं वाच्यम्,
विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुतया ककारोत्पत्तिद्वितीयक्षणे 'सम्बद्धं वर्तमानञ्च दृश्यते चक्षुरादिना' इति वृद्धोक्तेः। प्रत्यक्षे विषयस्य कार्यसहभावेन हेतुतया
सत्त्वं न सम्भवति, नच ककारोत्पत्तिक्षणोत्पन्नकत्वादिस्मृत्यैव द्वितीयक्षणे एव सविकल्पकमस्त्विति
तृतीयक्षणे तद्वर्णरूपविषयस्याभावात्। अत्र वदन्ति—संसारस्यानादितया बालस्य स्तनपानप्रवृत्ति-
वाच्यम्, एवमपि प्राथमिकविशिष्टबुद्धेर्दुरुपपादत्वादिति चेत्। सम्भवान्न तदनुपपत्तिः। ककारोत्पत्त्यनन्तरं ककारे
हेतुबुद्धेरेव च तादृशकल्पने मानमिति। अन्ये तु—प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशं प्रति
गकार इति विशिष्टबुद्धेरेव च तादृशकल्पने मानमिति।
स्वसामानाधिकरण्य—स्वाव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेन—यदि सामान्यतस्तादृशविशेषगुणस्य कारणता स्यात्तदा ककार-
दिप्रत्यक्षानुपपत्तिः प्रसज्येत अपि, सैव न, अन्तिमशब्दनाशे सुषुप्तिप्राक्कालोत्पन्नज्ञानादिनाशे च व्यभिचारात्। किन्तु
विजातीयगुणनाशे वैजात्य चरमशब्दादिव्यावृत्तमिव प्राथमिकविशिष्टबुद्धिविषयवर्णव्यावृत्तमपि। नच तादृशवैजात्ये मान-

इति स्फोट एवाखण्डो नादाभिव्यङ्ग्यो वाचक इति कैयटः, तत्तुच्छम्, पदज्ञानस्यासम्भवस्योपपादितत्वात्। वर्णानां प्रत्येकं व्यञ्जकत्वं समुदितानां वेत्यादिविकल्पग्रासाच्च।

प्रभा

स्याप्यनुभवविरुद्धत्वात्। इतीति—अतिप्रसङ्गरूपहेतोरित्यर्थः। अखण्डः—वर्णावयवशून्यः। नादाभिव्यङ्ग्य इति—नादो ध्वनिस्तदन्तर्गतवर्णाभिव्यङ्ग्य इत्यर्थः। तुच्छमिति—पौर्वापर्यभावापन्नसकलवर्णज्ञाने सत्येवोक्तातिप्रसङ्गभीत्या स्फोटसाधनं सङ्गच्छेत। तच्च न सम्भवति, पौर्वापर्यभावापन्नवर्णघटितपदज्ञानस्य सम्भवेन स्फोटसाधकातिप्रसङ्गरूपहेतोरसिद्धिः, स्फोटासिद्धिप्रसङ्गादित्युक्तम्—तुच्छमिति। उपपादितत्वादिति—उत्तरवर्णप्रत्यक्षसमये तस्मिन्नव्यवहितोत्तरत्वसम्बन्धेनोपस्थितपूर्वपूर्ववर्णवत्त्वम्, इत्यादिग्रन्थेन खण्डस्फोटनिरूपणावसरे उपपादितत्वादित्यर्थः। स्वाव्यवहितोत्तरत्वसम्बन्धेन प्रथमवर्णवैशिष्ट्यं द्वितीयवर्णे, प्रथमवर्णविशिष्टद्वितीयवर्णवत्त्वमुक्तसम्बन्धेन तृतीयवर्णे इत्येवंरीत्या चरमवर्णविषयकश्रावणप्रत्यक्षेण तदन्यवर्णविषयकज्ञानलक्षणसन्निकर्षेण पदज्ञानमुपपादितमिति भावः। यदुक्तं 'नादाभिव्यङ्ग्यो वाचकः' ध्वन्यन्तर्गतवर्णाभिव्यङ्ग्यः स्फोटो वाचक इत्येव तदर्थस्तद्विकल्प्य दूषयति—वर्णानामिति। विकल्पग्रासाच्चेति—एवञ्च प्रत्येकं व्यञ्जकत्वे प्रथमवर्णाभिव्यक्तस्फोटेनार्थबोधे सिद्ध इतराभिव्यक्तेर्वैयर्थ्यम्। समुदितानां व्यञ्जकत्वन्तु न सम्भवति, वर्णानां नित्यत्वानित्यत्वयोरुभयोरपि पक्षयोः समुदायासम्भवस्य पूर्वमुपपादितत्वादिति कैयटमतं खण्डयितुर्ग्रन्थकारस्याशयः। अपरे तु कैयटमतमेव समर्थयन्ति—पूर्वं पदज्ञानं निराक्रियते। तथाहि—पूर्वपूर्ववर्णस्थित्यधिकरणद्वितीयक्षणे यदि द्वितीयादिवर्णोत्पत्तिः स्यात्तदा यथाकथञ्चित् पदवाक्यप्रत्यक्षमपि स्यात्तदेव तु न सम्भवति, शब्दानित्यत्वपक्षे पूर्ववर्णज्ञाननाशानन्तरमेव द्वितीयवर्णोत्पत्तेर्वैयाकरणाभिमतत्वात्। तदुक्तम्—'परः सन्निकर्षः संहिता' इति सूत्रे भाष्ये 'यावद्गकारे वाग्वर्तते न तावदौकारे' येनैव यत्नेनैको वर्ण उच्चार्यते तेनैव विच्छिन्ने तस्मिन्वर्णे उपसंहृत्य तं यत्नमन्यं यत्नमुपादाय द्वितीयः प्रवर्तते' इति। एवञ्च पूर्ववर्णाभावेऽव्यवहितोत्तरत्वेन वैशिष्ट्यमप्यसम्भवि। किञ्च वर्णानां क्षणिकत्वमते तेषामुच्चरितप्रध्वंसित्वेन तदुत्पत्तेरभिव्यक्तेर्वा क्षणिकत्वेन बाह्येन्द्रियक्षणावच्छिन्नत्वाद्वर्णप्रत्यक्षानुपपत्तौ सुतरां पदादिप्रत्यक्षं दुर्वचम्। किञ्च नष्टविद्यमानयोर्यथा कालिकसम्बन्धो न सम्भवति तथा अव्यवहितोत्तरत्वादिरप्यसम्भव्येव। अन्यथा 'नष्टो घटो जलवान्' इति व्यवहारस्यापि प्रमात्वापत्तिः। ननु 'नष्टो घटो जलवान्' इति नावादयितुं शक्यते, 'तदस्यास्त्यस्मिन्' इति सूत्रविहितमतुपा वर्तमानसम्बन्धस्यैवाभिधानादिति चेन्न, तत्रास्तिग्रहणस्य भाष्यकृता 'अस्तिमान्' इति प्रयोगोपपत्तये स्वीकृतत्वात्। तदुक्तं भाष्ये—'अस्तिसामानाधिकरण्ये मतुब्विधीयते। नचास्तेरस्तिना सामानाधिकरण्यम्, तदेतत्क्रियमाणमपि प्रत्ययविध्यर्थम्, नोपाध्यर्थम्' इति। यद्यपि

दर्पणव्याख्या

मात्र, नावयवावच्छेदकत्वादिप्रतियोगितयैव तच्छिदेः। तथाचान्तिमशब्दनाशे तद्द्वितीयक्षणस्यैव तादृशवर्णनाशेऽपि न तत् तृतीयक्षणस्यतदुत्पत्तिकेन हेतुलक्षणाना तृतीयक्षणस्याविनस्तस्य प्रत्यक्षानुपपत्तिरुक्त हेतुमद्भावस्वीकारेऽपीत्याहुः। * अतिप्रसङ्ग इति * सदृशशब्दघटकसकारककारयोरविशेषानुभवमन्यथकारे स्वनाधावत्तिरित्यर्थः। * अखण्ड *= वर्णापटित-। * नादाभिव्यङ्ग्य इति * ध्वन्यन्तर्गतवर्णाभिव्यङ्ग्य इत्यर्थः। उपपादितत्वादित्यस्य खण्डस्फोटनिरूपणावसर इति शेषः। तादृशप्रत्यक्षस्यान्तिमवर्णांशे लौकिकत्वातीतवर्णांशेऽलौकिकत्व सरो स्व इत्या नतिप्रसक्त्योपपादितत्वादित्यर्थः। अतिरिक्तस्य वाचकत्वे दूषणमाह—* वर्णानामिति *। * विकल्पग्रासादिति *। प्रत्येकव्यञ्जकत्वे आद्यवर्णादेव तदभिव्यक्तिसम्भवे इतरोच्चारणवैयर्थ्यापत्तेरतिप्रसङ्गाच्च। समुदायस्य पूर्वरीत्या दुरुपपादकत्वेन तद्व्यञ्ज

प्रभा

'अस्त्यत्र वर्तमानकालोऽस्ति, कथं तर्हि भूत-भविष्यत्सत्ता गम्यते 'धातुसम्बन्धे प्रत्ययाः' इति भाष्यात् मतुपा वर्तमानकालिकसत्ताया एव प्रत्यायकत्वबोधनात् 'नष्टो घटो जलवान्' इत्यादिप्रयोगापत्तेर्न सम्भवस्तथापि यथाकथञ्चित्प्रत्यादिप्रत्ययस्योपपादनेऽपि तत्र वृत्त्याश्रयत्वज्ञानासम्भवः, पदादेरविद्यमानत्वात् । ननु इदानीम् अतीते पदादौ वृत्त्याश्रयत्वाभावेऽपि पूर्वकालावच्छेदेनातीते घटे रूपाश्रयत्ववत् अतीते पदे वृत्त्याश्रयत्वं सुवचमिति चेन्न, वर्णसमुदायात्मकपदस्य कदाप्यसत्त्वात् । न च बुद्धिविषयवर्णसमुदायात्मकपदे वृत्त्याश्रयत्वाङ्गीकारे बाधकाभाव, 'अतीतं घटं जानामि' इति सर्वजनीनप्रतीतिविषयत्वाश्रयत्ववदिति वाच्यम्, पदवाक्ययोरभावेन शब्दार्थसम्बन्धस्यैव हान्यापत्तेः । तदुक्तं वाक्यपदीये—'असाधुर्यदि वाक्यार्थः पदार्थोऽपि तथा भवेत्' इति । एतस्यायमर्थः—यदि पदसमूहरूपवाक्यासम्भवेन तेन वाक्यार्थस्य शक्तिग्रहासम्भवाद् वाक्यार्थो न शब्दशक्यस्तर्हि वर्णसमूहरूपपदस्याप्यसम्भवेन तेन पदार्थस्यापि शक्तिग्रहासम्भवात्पदार्थोऽपि शब्दजन्यबोधविषयो न स्यात् । तथा च शब्दस्य प्रमाकरणत्वानुपपत्तिः । किञ्च गृहीतशक्तिकस्यैव उच्चारणभेदाद् भिन्नानामनन्तानामानन्त्याद् व्यक्तिष्विव शक्तिग्रहासम्भवः । एवञ्च गृहीतशक्तिकस्यैव बोधकत्वमिति नियमेनाश्रुतपूर्वात्पदान्तरात्पदार्थोपस्थितेरनुपपत्तिः । न च सामान्यलक्षणप्रत्यासत्त्या घटबोधकत्वावच्छेदकघटत्वाश्रयघटपदानुपूर्वीरूपानुगतधर्मपुरस्कारेण कालान्तरोत्पन्नेष्वपि शक्तिग्रहः स्यादिति वाच्यम्, आनुपूर्व्याः कालघटितत्वात् कालभेदेन भेदादननुगमासम्भवेन प्रकृते सामान्यलक्षणप्रत्यासत्तेरसम्भवात् आनुपूर्व्या शक्यतावच्छेदकत्वासम्भवात् । किञ्च इदमेकं पदमेकं वाक्यमिति बुद्धेः 'तदेवेदम्पदमिति' बुद्धेश्चानुपपत्तिः, अतश्चानुपपत्त्या स्फोटः स्वीकार्यः । स्वीकृते तु तस्मिन् नित्ये ब्रह्मणि अन्तःकरणोपाधिभेदेनानेकजीवव्यवहारवत्, नानारञ्जनसाधनद्रव्याहितनानावर्णोपरागेण पटादेर्नानावर्णोपरागवत् वर्णक्रमेणैव तत्तद्वर्णाभिव्यञ्जकध्वन्यादिनाऽभिव्यक्ते तत्र शक्तिग्रहः आरोपितवर्णानुपूर्व्याश्रये सिध्यति । तथा च भिन्नभिन्नरूपेणाभिव्यक्ते स्फोटे शक्तिग्रहात् सरो रस इत्यादिषु विपरीतबोधापत्तिः । पर्यायान्तरे शक्त्यग्रहेऽपि बोधः, पर्यायान्तर्गतवर्णाभिव्यक्ते स्फोटे नाप्येकपर्यायाभिव्यक्तस्फोटे शक्तिग्रहात्पर्यायान्तरे शक्त्यग्रहेऽपि बोधः, पर्यायान्तर्गतवर्णाभिव्यक्ते स्फोटे शक्तिग्रहाभावाद् गृहीतशक्तिकस्यैव बोधकत्वनियमात् । तस्य च स्फोटस्य तत्तदानुपूर्व्यन्तर्गतप्रथमादिवर्णाभिव्यक्तिसत्त्वेऽपि रत्नपरीक्षान्यायेन चरमवर्णाभिव्यक्तस्फोटस्यैव बोधकत्वनियमान्न प्रत्येकवर्णाभिव्यक्ताद् बोधापत्तिः । न चैवमपि चरमवर्णातिरिक्तवर्णानां वैयर्थ्यम्, पूर्वपूर्ववर्णरूपेण स्फोटानुभवजन्यसंस्काराणामपि चरमवर्णाभिव्यक्तस्फोटेनार्थबोधजनने सहकारित्वात् । चरमत्वञ्चानतिदिष्टं ग्राह्यमिति एकवर्णाभिव्यक्तस्फोटेनार्थबोधेऽपि न क्षतिः । यथा 'अ' शब्दादिना वासुदेवादिबोधे । अनुभवश्च चरमवर्णाभिव्यञ्जनीयस्फोटविषयकस्तदानीन्तनो ग्राह्य इति न कालान्तरीयानुभवजन्यसंस्कारसहकारेण प्रथमवर्णाभिव्यक्तस्फोटादर्थबोधापत्तिः । किञ्च पूर्वानुभवजन्यसंस्कारसत्त्वेऽपि तस्य सहकारित्वासम्भवोऽनुद्भूतत्वात्तदुद्बोधनार्थमेव प्रथमादिवर्णानां चारितार्थ्यात् । नचैवं स्फोटवैयर्थ्यम्, अतिरिक्तानन्तवर्णनाशप्रागभावध्वंसाकल्पनेन लाघवात् । तदेवेदम्पदमित्यादिप्रत्यभिज्ञोपपत्तये च स्फोटस्यावश्यकत्वादित्यन्यत्र विस्तरः । स्फोटस्यैकत्वादेकं पदमेकं वाक्यमित्यादिव्यवहारोऽप्युपपद्यते । भिन्नं पदं भिन्नं वाक्यम् इत्यादिव्यवहारस्तु अभिव्यञ्जकभेदादेवोपपादनीय इति कैयटोक्त—वर्णसमुदायस्य बोधकत्वासम्भवः स्वतन्त्रवर्णस्वीकाररूपं लाघवञ्चास्याखण्डस्य वाचकत्वस्वीकारे बीजमित्याहुः । स्फोटस्तु भूषणकारमते सकलशब्दार्थप्रपञ्चात्मकविवर्तकारणीभूतं ब्रह्मैव शब्दब्रह्मपदेनाभिधीयते इति मूले एव वक्ष्यते । शेखरकारास्तु परा पश्यन्ती मध्यमा वैखरीति चतुर्विधवाङ्मये या मध्यमा वाक् तस्या यो नादांशस्तदात्मकः । तदुक्तं मञ्जूषायाम्—'तत्र मध्यमायां यो नादांशस्तस्यैव स्फोटात्मनो वाचकत्वेन' इति 'स्फोटपदस्य च तत्तद्वर्ण—

प्रभा

पदादिरूपेण ताल्वाद्यभिघाताज्ज्ञानविषयो मध्यमावस्थोऽर्थः' इति च। तादृशनादांशस्य जन्यत्वेऽपि पारिभाषिकं नित्यत्वमुक्तं तत्रैव। 'नित्यत्वञ्चैषां सृष्ट्यादिकालोत्पत्तिकत्वं प्रलयकालनाश्यत्वञ्चेत्येतावदेव' इति। तत्र भूषणकारमतमेव समीचीनम्, पारिभाषिकोक्तनित्यत्वस्य भाष्यकाराद्यनुक्तेः, 'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः' इति हर्युक्तेश्च। यत्र कुत्रचिदुत्पत्तिमत्त्वेन वर्णानन्तु अभिव्यञ्जकगतानित्यत्वमादायैव तेषामिति गुरवः। 'परः सन्निकर्षः संहिता' इति सूत्रे भाष्ये उक्तम्—'नहि वर्णानां पौर्वापर्यमस्ति। किं कारणम्। एकवर्णवर्तित्वाद्वाचः (वागिन्द्रियस्य)। उच्चरितप्रध्वंसित्वाच्च वर्णानाम्। एकैकवर्णवर्तिनी वाक्। न द्वौ युगपदुच्चारयति। गौरिति यावद् गकारे वाग्वर्तते नौकारे न विसर्जनीये। यावद्विसर्जनीये न गकारे नौकारे,' उच्चरितप्रध्वंसित्वात्। उच्चरितप्रध्वंसिनः खल्वपि वर्णाः। एवं तर्हि 'बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तत्वन्नीतिः। शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम्। स्फोटात्मकशब्दव्यञ्जकध्वन्यपेक्षया चेदमुक्तम्—पूर्वं भाष्ये 'येनोच्चरितेन (अभिव्यक्तेन) सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः' इत्यनेन स्फोटात्मकं नित्यं शब्दमुक्त्वा 'अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। तद्यथा—शब्दं कुरु' मा शब्दं कार्षीः, इत्यादिना लोके व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः श्रोत्रेन्द्रियमात्रग्राह्यवर्णरूपध्वनिसमूहः शब्द उक्तः। तस्याविचारितरमणीयस्यार्थबोधकताऽपि लोके प्रसिद्धा। तादृशध्वनेरेव शास्त्रेणान्वाख्यानमिति तात्पर्यम्। अन्यथा 'अइउण्' सूत्रे भाष्ये 'नित्याश्च शब्दा नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः' इत्यनेन नित्यत्वोक्तिरसङ्गता स्यात्। तथाच ध्वनिगतकल्पनारोपेणैव स्फोटात्मकशब्दस्य नित्यात्वस्तनया वर्णानां नित्यत्वम्, नित्येषु च शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यम्, इत्यनेन प्रदर्शितम्। एतच्च युगपदवस्थितानामेव देशकृतं पौर्वापर्यं दृष्टम्। ध्वन्यात्मकवर्णास्त्वेकैकश उपलभ्यमाना यौगपद्येनानभिधानात् कथं पौर्वापर्यमनुभवेयुः। इत्यतः धीरः=धियं राति=ददातीति धीरः शब्दतत्त्वज्ञः, तत्वन्नीतिः=तत्त्वं तत्त्वज्ञानिः, तद्वा नीतिः=नीयते=ज्ञायतेऽनयेति नीतिर्बुद्धिरन्तःकरणवृत्तिविशेषः सकलपोदृव्यविषयकज्ञानिमती बुद्धिर्यस्य स तत्त्वन्नीतिः। कर्ता=ध्वनिकर्ता सर्वाश्चेष्टाः=चेष्टन्त इति चेष्टाः शासन्तमेताम्। कण्ठाभिघातव्यापारजन्यशब्दान्, बुद्धौ=अन्तःकरणरूपदेशे प्रतिबिम्बितान् कृत्वा शब्देनेति तदर्थं दर्शयता, शब्देन मदीय वाच्यान्, अर्थान् बुद्धिदेशे एव दृष्ट्वा=ज्ञात्वा तदेवान्तःकरणे क्रमशः प्रतिबिम्बितेषु वर्णेषु पौर्वापर्यव्यवहारं कुर्यादिति तदर्थः। तदुक्तं भाष्ये—'बुद्धिविषयमेव शब्दानां पौर्वापर्यम्' बुद्धि-

दर्पणव्याख्या

परन्त्वव्यवहितोत्तरत्वं स्वज्ञानाधिकरणक्षणोत्पत्तिकज्ञानविषयत्वं वाच्यम्। अत एव घज्ञानानन्तरटज्ञानविषयत्वरूपानुपूर्व्यादिर्नैयायिकवृद्धानां व्यवहारः। एवञ्च न कश्चिद्दोषः। एतेन पर्य्यायस्थलेऽप्येक एव स्फोटो नाना वा ? नाद्यः, घटपदे एव गृहीतशक्तिकस्य कलशादेर्बोधप्रसङ्गात्। नच तत्पर्य्यायाभिव्यक्ते शक्तिग्रहस्तत्पर्य्यायश्रवणेऽर्थधीहेतुरिति वाच्यम्,

## प्रभा

परस्य वाऽव्यवहितोत्तरत्वस्य नित्ये टकारेऽभावेन कथं तेन सम्बन्धेन घवत्त्व टकारे इत्याशङ्कायामाह—परमिति—वस्तुतस्तु उक्तसम्बन्धेन घवत्त्व टकारे इत्यसङ्गतम्, घकारटकारयोर्मध्येऽकारस्य सत्त्वेन घकारटकारयोरव्यवहितत्वस्य दुर्वचत्वात्। नच घवत्त्वमित्यस्य उक्ताव्यवहितोत्तरघकारविशिष्टो योऽकारस्तद्वत्त्वमित्यर्थः, तथा सति घवत्त्वमकार इत्यस्यैव प्राथम्येन वक्तुमुचितत्वात्। स्वज्ञानेति—स्व=घत्वावच्छिन्नाभासमानस्फोट। प्रथमक्षणे ज्ञानमुत्पद्यते। द्वितीयक्षणे तस्य स्थितिस्तृतीयक्षणे नाश इति क्रममादाय घविषयकज्ञानाधिकरणक्षणोत्पत्तिकज्ञानविषयत्वरूपमव्यवहितोत्तरत्व टकारे सुलभमिति न पदज्ञानकारणताऽसङ्गता, वर्णानां नित्यत्वेऽपि तदभिव्यक्तेरनित्यतया तामादाय स्वविषयकाभिव्यक्त्यधिकरणक्षणोत्पत्तिकाभिव्यक्तिविषयत्वरूपाव्यवहितोत्तरत्वस्य तदुत्तरवर्णेऽबाधेन पदज्ञानोपपत्तेरिति भाव। ननु एतादृशाव्यवहितोत्तरत्व न दृष्टिगोचरमित्याशङ्कायामाह—अत एवेति—ईदृशाभिव्यक्तिघटिताव्यवहितोत्तरत्वस्य शक्ततावच्छेदकानुपूर्वीनियामकत्वादेवेत्यर्थः। एवञ्चेति—अभिव्यक्ते ज्ञानरूपत्वेन ज्ञानघटितत्वयाव्यवहितोत्तरत्वस्य निर्वचने चेत्यर्थः। दोष इति—पदज्ञानासम्भवादिरूपदोष इत्यर्थः। एतेन=उक्तानुपूर्व्यवच्छिन्नवर्णात्मकस्फोटस्य वाचकत्वव्यवस्थापनेन। इदञ्चापास्तमित्यनेनान्वेति। स्फोट इति—वाचकत्वेनाभिमतोऽखण्डनित्यस्फोट इत्यर्थः। नाद्य इति—एक एव स्फोट इति नेत्यर्थः। घटपदे इति—घटत्वरूपानुपूर्व्यवच्छिन्नस्फोटे गृहीतशक्तिकस्येत्यर्थः। कलशादेरिति—षष्ठ्यन्तमेतत्, अगृहीतशक्तिककलशत्वादिरूपानुपूर्व्यवच्छिन्नस्फोटात्मककलशादेरित्यर्थः। बोधप्रसङ्गादिति—घटरूपार्थबोधजनकत्वेन क्लृप्तकारणताके कलशपदाभिव्यक्तस्फोटे गृहीतशक्तिकत्वात्तादृशस्फोटस्य नित्यात्वेऽकस्यैवेत्यादिति भाव। वर्णसमुदायरूपपदस्य वाचकत्वे तु नोक्तदोष, वर्णसमुदायरूपपदस्य घटपदभिन्नतया तत्रागृहीतशक्तिकत्वादित्याशय। तत्पर्य्यायेति—तत्पर्य्यायश्रवणजन्यशाब्दबोध प्रति तत्पर्य्यायाभिव्यक्तिशक्तिज्ञान कारणमिति कार्य्यकारणभावो घटरूपपर्य्यायाभिव्यक्त्यवच्छिन्नशक्तिग्रहस्थले च

## दर्पणव्याख्या

स्फोटे घत्वप्रकारकप्रतीतिविषयाव्यवहितत्वादेः स्व पदव्यवहारविषयतेति स्वरूपात्मकस्फोटस्य स्वरूपतेति भावः। ननु स्व मते गकारादिवर्णस्य नित्यस्फोटरूपतया नित्यत्वेन तदुत्पत्त्यधिकरणक्षणानुत्पत्तिकत्वविशिष्टतदधिकरणक्षणोत्पत्तिकत्वरूपाव्यवहितोत्तरत्वासम्भवात् कथमुक्तप्रकारसम्भवोऽत आह—* परन्त्विति *। तथाच वर्णानां नित्यत्वेऽपि तदभिव्यक्तेर नित्यत्वस्य सांख्यानामपि सम्मतत्वेन तदव्यवहितोत्तरत्वस्य वर्णान्तराभिव्यक्त्यबाधेन तदादाय घटादिपदप्रत्ययाव्यवस्थितिरिति भाव। * अत एवेति * अभिव्यक्तिनिरूपिताव्यवहितोत्तरत्वस्यानुपूर्वीव्यवहारनियामकत्वादेवेत्यर्थः। नवीनैस्तथाऽनभ्युपगमादाह—* वृद्धेति *। * एतेनेति * आनुपूर्व्यवच्छिन्नवर्णात्मकस्फोटस्य वाचकत्वव्यवस्थापनेनेत्यर्थः। अपास्तमित्यनेनान्वयि। * स्फोट इति * वाचकत्वेनाभिमतोऽखण्डपदार्थ इत्यर्थः। * नाद्य इति * नैक इत्यर्थः। तत्र हेतुमाह—* घटपद इति * घट इत्यानुपूर्व्यवच्छिन्नस्फोटे गृहीतशक्तिकस्येत्यर्थः। कलशपदादित्यस्यागृहीत शक्तिक पदस्य शक्तिग्रहाभावादित्यादि। * बोधप्रसङ्गादिति *। घटबोधकत्वेन सकारणताकत्वाय इत्यानुपूर्व्यवच्छिन्नस्फोटस्य तदानीं कलशादिपदेऽपि ऐक्यात्, तस्य वर्णसमुदायरूपपदस्य वाचकत्वे तु नायं दोष इति भावः। * अर्थधीहेतुरिति *

तदवच्छेदकानुपूर्व्याः प्रागुपपादनादिति दिक् ।

### प्रभा

आरोपितकत्वादिविशिष्टाः स्फोटा एव वर्णाः पर्य्यायाश्चेति स्फोटास्वीकर्तॄणामनन्तवर्णादिस्वीकर्तॄणां परेषां मत इव पर्य्यायस्थलेऽपि समान एव कार्य्यकारणभावः । इयानेव विशेषो यदतिरिक्तवर्णवादिनये स्वरूपतो भिन्न एव पर्य्यायः, स्फोटस्वीकर्तृमते तु स्फोटस्यैक्येऽपि भिन्नभिन्नपर्य्यायरूपकल्पितत्वेनौपाधिकः स्फोटभेदः पर्य्यायानतिरिक्त इति नास्ति कार्य्यकारणभावे वैषम्यम् । वायुसंयोगादिगतकत्वादिवैशिष्ट्येन स्फोटस्य एव वर्णादिव्यवहारस्याप्युपपत्तौ अतिरिक्तनाम् अनन्तवर्णानान्तत्प्रागभावध्वंसादीनाञ्च स्फोटवादिनयेऽभावेन तत्प्रयुक्तं महल्लाघवं तन्मत इति । नच पर्य्यायभेदेन स्फोटभेदेऽपि तत्त्वतः स्फोटैक्यमते घटपदात्मके स्फोटे गृहीतशक्तिकस्य पुंसः कलशादिपदाच्छाब्दबोधापत्तिरूपदोषतादवस्थ्यम्, स्फोटस्यैक्यादिति वाच्यम्, वर्णवादिमते घटत्वप्रकारकघटविशेष्यकबोधम्प्रति घटपदनिष्ठशक्तिज्ञानस्य कारणत्वे कलशादिपदाद् घटबोधस्थले प्राप्तव्यभिचारवारणाय घटपदनिष्ठशक्तिज्ञानाव्यवहितोत्तरजायमानघटत्वप्रकारकघटविशेष्यकबोधम्प्रति घटपदनिष्ठशक्तिज्ञानं कारणम्, इत्येवं कार्य्यदले कारणाव्यवहितोत्तरत्वस्य निवेशवत्, स्फोटवादिमतेऽपि उक्तरीत्या कारणाव्यवहितोत्तरत्वस्य निवेशेन दोषस्य वारणीयत्वात् । कार्य्ये कारणाव्यवहितोत्तरत्वनिवेशप्रयुक्तगौरवमपि स्फोटवादिनामतिरिक्तवर्णवादिमततुल्यमेव । ननु स्फोटस्य नानात्वे नानावर्णैरेव निर्वाहे स्फोटवैयर्थ्यम्, एकत्वे शक्तेरप्यैक्येन पर्य्यायस्थलोक्तदोषप्रसङ्ग इत्यत आह—तदवच्छेदकेति—शक्ततावच्छेदकेत्यर्थः । स्फोटस्यैक्येऽपि शक्ततावच्छेदिका तत्तत्पदघटकानुपूर्व्येव । तथाच शक्यतावच्छेदकभेदेन पीलुशब्दादौ शक्तिभेदवत् शक्ततावच्छेदकानुपूर्वीभेदात्स्फोटेऽपि शक्तिभेदान्नोक्तदोषावकाश इति भावः । ननु स्फोटस्य नित्यतया तदभिन्ना वर्णा अपि नित्या एवेत्युत्पत्तिध्वंसघटिताव्यवहितोत्तरत्वघटितानुपूर्व्यपि वक्तुमशक्येति तस्या अवच्छेदकत्वमपि दुर्वचमित्यत आह—प्रागुपपादनादिति—'स्वविषयकाभिव्यक्त्यधिकरणक्षणोत्पत्तिकाभिव्यक्तिविषयत्वसम्बन्धेन वर्णविशिष्टवर्णरूपाया आनुपूर्व्याः प्रागुपपादनादित्यर्थः । ननु यदि वर्णा नित्यास्तदा नित्यानां तेषामानुपूर्व्यपि ग्रन्थकृतैवोपपादिता । तथाच तादृशानुपूर्वीविशिष्टानामेव तेषां पदत्वम्, तद्विशिष्टानां वाक्यत्वञ्चास्तु । नित्यत्वादेव सोऽयं ककारः, तदेवेदम्पदम्, तदेदं वाक्यम्, इति प्रत्यभिज्ञाऽप्युपपत्स्यते कृतं स्फोटेनेत्यत आह—दिगिति—तदर्थस्तु यदि अनारोपितकत्वादिविशिष्टा वर्णास्तदा तेषां बहुत्वाद् गौरवम् । यदि आरोपितं कत्वादिकं वर्णस्त्वेक एव तर्हि वर्णः, स्फोट इति शब्दमात्रे भेद इति स्फोटपक्ष एव सिद्धः । यदि तु न नित्या वर्णाः, नापि नित्यः

### दर्पणव्याख्या

वर्णाः स्फोटाऽभिव्यञ्जका इति स्वीकारे भवदुक्तदूषणस्यावसरः, ननु स्फोटस्य वर्णानतिरेकपक्षे, तत्र पृथक्शक्तिकल्पनाया अभावेन गौरवासम्भवात् । पर्य्यायशक्तिग्रहकार्य्यताऽवच्छेदककोटावव्यवहितोत्तरत्वनिवेशेन व्यभिचारवारणन्तूभयोः सममिति । ननु त्वन्मते स्फोटानतिरेकेण वर्णानां नित्यत्वादुत्पत्तिघटिताव्यवहितोत्तरवर्णेषु पूर्वपूर्ववर्णवत्त्वरूपशक्ततावच्छेदकानुपूर्व्यसम्भवोऽत आह—* तदवच्छेदकेति * शक्ततावच्छेदकेत्यर्थः । *प्रागिति* स्वाभिव्यक्त्यधिकरणक्षणोत्पत्तिकाभिव्यक्तिविषयत्वमिति ग्रन्थेनेति शेषः । ननु वर्णानां नित्यत्वाभ्युपगमे नित्यवर्णैरेव स्फोटकार्योत्पत्तौ स्फोटस्यैवासिद्धिः । तथाहि—आनुपूर्व्या मन्द्रितोरदितत्वादिविशिष्टानामेव तेषां पदत्वेन तत्प्रत्ययस्य सौलभ्येन शक्तिग्रहस्य सुगमत्वाच्चदेवेदं पदं वाक्यमिति प्रत्यभिज्ञासम्भवेत्यत आह—* दिगिति * तदर्थस्तु यदि स्वतन्त्रा नित्या वर्णाः स्युस्तदा स्यादेव तैः स्फोटान्यथासिद्धिः । किन्तु कत्वादिना प्रतीयमानः स्फोट एव ककारादिवर्ण इत्यभ्युपगमेनोक्तान्यथासिद्धयसम्भवादत एव

शब्दकौस्तुभे तु वर्णमालायां पदमिति

प्रभा

कश्चन स्फोटः, किन्तु अनित्या ध्वनय एव सन्तीत्युच्यते तदा द्रुतमध्यमविलम्बितवृत्तिभेदेन भिन्नेषु ध्वनिषु अन्यतमस्मिन् 'अतो भिस ऐस्' इत्यादिषु तपरकरणे तद्भिन्नेषु अकारादिषु ऐसाद्यनापत्तिः। स्फोटस्वीकारे तु वृत्तिभेदेन ध्वनिभेदेऽपि वायुसंयोगादिगतेन एकमात्रकत्वविशिष्टत्वेन प्रतीयमानस्फोटस्यैक्यात् तत्रैव तपरकरणात् सर्वासु वृत्तिषु तस्यैक्यादैसादिः सिध्यति। तदुक्तं भाष्ये—तपरसूत्रे 'सिद्धन्तु अवस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते' इति 'ये द्रुतायां वृत्तौ वर्णाः' 'ते त्रिभागाधिका मध्यमायाम्' 'ये च मध्यमायां वर्णाः त्रिभागास्ते तु विलम्बितायामिति च। अत्र कैयटः द्रुतं श्लोकम्, अर्थं पौनरुक्त्यं यत्कारि नाडिकाया (जलघटिकातः) यस्या नवपानीयपलानि (जलबिन्दवः) स्रवन्ति, तस्या एव मध्यमायां वृत्तौ द्वादशपलानि स्रवन्ति'.....'विलम्बितायां तु षोडशपलानि स्रवन्ति' इति। तत्रान्तःकरणस्य परिणामविशेष एव वृत्तिरुपलब्धिरिति चोच्यते। पूर्वोक्तबिन्दुस्रवणकालपरिच्छिन्ना वृत्ति द्रुतमध्यमविलम्बितादिशब्देन व्यवह्रियते। उद्योतकारस्तु—नाडिकापदेन सुषुम्नां नाडीमाह। 'सुष्' इत्यव्यक्तं या मनति=शब्दायते सा सुषुम्ना, म्ना अभ्यासे इत्यतः के रूपम्। ग्रीवास्थमेरुदण्डबाह्यस्था, इडापिङ्गलानाड्योर्मध्यगता या सूक्ष्मा नाडी सा सुषुम्ना। सा हि योगक्रियया ब्रह्माण्डसम्बद्धा सती अमृतबिन्दुस्राविणीति योगिनां प्रसिद्धिः। एवञ्च हृदयप्रदेशगतेन वायुसंयोगेन जनितो नादः प्राकृतध्वनिरुच्यते। तेनाभिव्यक्ता सूक्ष्मा मध्यमा वाक् वाचकस्फोटशब्देनोच्यते। तत आस्यपर्यन्तमागच्छता तेन वायुना स्फोटस्योपलब्धि (ज्ञान) जनको वैकृतो ध्वनिर्जायते। तस्या ध्वने र्यावत्कालं सत्ता तावता कालेन व्यक्तस्य स्फोटस्योपलब्धिः परिच्छिद्यते, नतु स्फोटः। स तु यादृशप्राकृतध्वनिना व्यक्तो ह्रस्वत्वादिरूपस्तादृश एव वैकृतध्वनिगतकालभेदेन स्फोटे कालभेदाभाव एव। यथा गन्तृणामाशुत्वादिभेदाद्गतिभेदेऽपि न मार्गभेदस्तथा चिराचिरकालोच्चारणजनकत्वनाजायमानवैकृतध्वनेरुपलब्धीनामेव कालभेदो नतु स्फोटकालभेदस्तदुक्तं भाष्ये—'स्फोटस्तु तावानेवेति'। दीक्षितमतमाह—शब्दकौस्तुभ इति—कुम्=पृथ्वीम्, स्तुम्नाति=रुणद्धीति कुस्तुभः=समुद्रः मूलविभुजादित्वात्के रूपम्। तत्र भवः कौस्तुभो मणिः अण्। तदुक्तम्–'कौस्तुभस्तु महातेजाः सूर्यकोटिसमप्रभः' इति। कौस्तुभ इव कौस्तुभः। शब्दानां प्रकाशकत्वेन, सर्वश्रेष्ठत्वेन स्पृहणीयत्वेन च लक्षणया ग्रन्थविशेषपरः। वर्णमालायामिति–

दर्पणव्याख्या

नानावर्णकल्पनाप्रयुक्तगौरवशङ्कापि नेति। ननु कोऽसौ स्फोटो यदनतिरिक्ता वर्णा इति चेदत्राहुः—ईश्वरसिसृक्षात्मकमायाबिन्दुपरपर्यायत्रिगुणात्मकाव्यक्तप्रभवः शब्दब्रह्मापरनामा चेतनाधिष्ठितोऽनभिव्यक्तवर्णविशेषो यः परादिशब्दैर्व्यवह्रियमाणो नादः स्फोट इत्युच्यते। स च सर्वगतोऽपि पुरुषस्य ज्ञातार्थविवक्षाधीनप्रयत्नाधिष्ठितमूलाधारस्थपवनेनाभिव्यक्तः परेति व्यवह्रियते। नाभिपर्यन्तमागच्छता तेनाभिव्यक्त पश्यन्तीति। पुनर्हृदयमागच्छता तेनैवाभिव्यक्तस्तत्तद्योगिनिश्चयज्ञानविषयः परश्रोत्राग्राह्यत्वात् सूक्ष्मो मध्यमा वागिति। वक्त्रा तु कर्णपिधाने सूक्ष्मतरवाय्वभिघातेनोपांशुशब्दप्रयोगे च श्रूयते। स एव चाऽऽस्यपर्यन्तमागच्छता तेन वायुना कण्ठदेशे गत्वा मूर्धानमाहत्य परावृत्य तत्तत्स्थानेष्वभिव्यक्तः परश्रोत्रेणापि ग्रहीतुं शक्यो वैखरीति व्यवह्रियते। उक्तार्थे प्रमाणञ्च—"चत्वारि वाक्परिमिता (नि)पदानि, तानि विदुर्ब्राह्मणा ये मनीषिणः, गुहा त्रीणि निहिता नेङ्गयन्ति, तुरीयं वाचो मनुष्या वदन्ति" इति श्रुतिः, 'बिन्दोस्तस्माद्भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत्। स एव श्रुतिसम्पन्नः शब्दब्रह्मेति गीयते' इति पुराणवाक्यञ्च। भागवतेऽप्येकादशस्कन्धादौ स्फुटोऽयमर्थः। शिक्षायामपि—आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णान् जनयते—इत्यनेन। तथाच हृदयावच्छिन्नमध्य-

प्रतीतेर्वर्णातिरिक्त एव स्फोटः। अन्यथा कपालातिरिक्तघटासिद्धिप्रसङ्गश्चेति प्रतिपादितम्॥६८॥

प्रभा

वर्णपरम्परारूपसमूहे इत्यर्थः। प्रतीतेरिति—आधाराधेयभावावगाहिप्रतीतेरित्यर्थः। अयन्तदाशयः—वर्णसमूहात्मकपदस्यैव स्फोटरूपत्वे वर्णमालापदयोर्भेदाभावादाधाराधेयभावो न स्यात्, चैत्रे चैत्र इति व्यवहारादर्शनेनाधाराधेयभावस्य परस्परभेदनियतत्वात्। अभेदेऽपि आधाराधेयभावस्वीकारे 'कपाले घटः' इति प्रतीत्या नैयायिकैः साधितं घटस्य कपालातिरिक्तत्वं विरुद्ध्येतेत्याह—अन्यथेति—प्रतीतेः पदार्थसाधकत्वाभावे इत्यर्थः। न च कपालातिरिक्तघटाभावे घटे कपालसंयोगः कारणम् इति व्यवहारानुपपत्तिः, कपालसमूहात्मकघटसाधकतयैव तदुपपत्तेः। 'शब्दकौस्तुभे तु' इत्यत्र तुनाऽरुचिः सूचिता। तथाहि—स्फोटस्य वर्णसमूहानतिरिक्तत्वेऽपि 'वर्णमालायां पदम्' इति प्रतीतिर्नानुपपन्ना, वर्णमालापदेनानुपूर्व्यवच्छिन्नवर्णानाम्, पदशब्देनानुपूर्व्याश्च ग्रहणे आधाराधेयभावे बाधकाभावात्। कपालस्याल्पपरिमाणवद्द्रव्यजन्यतया घटस्य तु तदधिकपरिमाणवद्द्रव्यजन्यतया वैजात्येन 'कपाले घटः' इति प्रतीतेरपि नानुपपत्तिः, कारणभेदेन कार्यभेदस्य सर्वसम्मतत्वात्। ननु कोऽसौ नित्यः स्फोटः? यमाश्रित्योक्तव्यवस्थोपपादनाय व्यापृतोऽस्मीति चेत् सूक्ष्मं प्रणवरूपम्ब्रह्मतत्त्वमेव स्फोट इति गृहाण। तथाहि—ईश्वरस्य सिसृक्षात्मिका या माया चिद्रूपापरपर्याया अव्यक्तरूपा तत्प्रभवः शब्दब्रह्मापरनामा चेतनाधिष्ठितोऽनभिव्यक्तवर्णविशेषो ध्वन्यादिशब्देन व्यवह्रियमाणो नाद एव स्फोटशब्देनाभिधीयते। स च यद्यपि सर्वगतस्तथापि पुरुषस्य ज्ञानार्थविवक्षया जायमानप्रयत्नविशेषेण मूलाधारस्थपवनेनाभिव्यक्तः सूक्ष्मः 'परा' इति व्यवह्रियते। नाभिलिङ्गयोर्मध्यगतस्य प्रदेशस्य शरीरस्थसकलनाडीनां मूलस्थानत्वात् मूलाधारत्वेन व्यवहारः। षण्णवत्यङ्गुलो देहायामः। तत्राङ्गुलार्द्धसहितं सप्तचत्वारिंशदङ्गुलात्मकम् अध उपरि च परित्यज्यैकाङ्गुलपरिमितं मध्यं मूलाधार इत्युच्यते। तदुक्तम् 'पाय्वन्ताद् द्व्यङ्गुलादूर्द्ध्वं लिङ्गाच्च द्व्यङ्गुलादधः। मध्यमेकाङ्गुले यत्र देहमध्यं प्रचक्षते॥' इति। मूलाधारादुत्थितः पवनो नाडीद्वारेण कार्याणि करोति, इति योगपातञ्जले स्पष्टम्। नाभिपर्यन्तमागच्छता पवनेनाभिव्यक्तः सूक्ष्मतरः पश्यन्तीशब्देनोच्यते। हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्तः परपुरुषश्रोत्रेन्द्रियाग्राह्यत्वात् सूक्ष्मः मध्यमा वागुच्यते। स एव च वक्त्रा कर्णपिधाने, सूक्ष्मतरवाय्वभिघातेनोपांशुशब्दप्रयोगे च श्रूयते। तत आस्यपर्यन्तमागच्छता तेन वायुना कण्ठदेशङ्गत्वा मूर्द्धानमाहत्य परावृत्य च तत्तत्स्थानेष्वभिव्यक्तः स्थूलः परपुरुषेणापि ग्राह्यो वैखरी वागित्यभिधीयते। तत्र परा पश्यन्ती च योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय ईश्वराधिदैवा। मध्यमा बुद्धिविषयो हिरण्यगर्भ-

दर्पणव्याख्या

माया यो नादोऽव्यक्तप्रणवरूपः स एव वाचकः। "ओंकार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना नानारूपा भवति" इति श्रुतेः। सर्वप्राणिहृद्देशस्थत्वाच्च ब्रह्मादव्यवहार्योऽपीत्यन्यत्र विस्तरः। * इति प्रतीतेरिति * अन्यथा वर्णपरम्परारूपमालायास्तत्समूहरूपपदानतिरिक्ततयाऽऽधाराधेयभावावगाहिप्रतीत्यनुपपत्तेरिति भावः। *अन्यथेति* प्रतीतेः पदार्थासाधकत्व इत्यर्थः। 'कपाले घटः' इति प्रतीत्या भेदावगाहिन्या तत्सिद्धिः, प्रतीतेस्तदसाधकत्वे तु घटासिद्धिः स्पष्टैव। कपालतत्संयोगनाशादेव तादृशप्रतीत्युपपत्तेरिति भावः। कौस्तुभे त्विति तुशब्देनारुचिः सूचिता। तद्बीजन्तु वर्णातिरिक्तस्फोटानङ्गीकारेऽपि नोक्तप्रतीत्यनुपपत्तिः। आनुपूर्व्यवच्छिन्नवर्णानां मालापदार्थत्वेन तत्रानुपूर्वीरूपस्याधाराधेयभावसम्भवात्। घटकपालादीनां विजातीयद्रव्यजन्यत्वेन तद्भेदस्यापलपितुमशक्यत्वेनोक्तातिप्रसङ्गाभावा-

न्नार्थत्वादित्याशङ्कां समाधत्ते—

पञ्चकोशादिवत्तस्मात् कल्पनैषा समाश्रिता । उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः ॥ ६६ ॥

उपेयप्रतिपत्त्यर्था इत्यन्तेनान्वयः । अयं भावः—यथा भृगुवल्याम् "भृगुर्वै वारुणिः वरुणं ब्रह्म पृष्टवान् । स उवाच 'अन्नम्' इति, तस्योत्पत्त्यादिकं बुद्ध्वा पृष्टे—प्राणमनोविज्ञानाऽऽनन्दा-

प्रभा

दितत्तदर्थतदन्वयादिविषयकज्ञानमात्रफलादित्यर्थः । एवञ्च प्रकृतिप्रत्ययादिविभागेन पदवाक्यार्थवाचकत्वबोधकस्यास्य शास्त्रस्य पदादेरखण्डत्वेऽप्रामाण्यापत्तिरिति भावः । तस्मात्—पदे न वर्णाः' इति पूर्वकारिकया पदस्य वाक्यस्य चाखण्डत्वप्रतिपादनेनाखण्डपदादिरूपस्य स्फोटस्य निरूपयितुमशक्यत्वात्पञ्चकोशादिवत् उपेयप्रतिपत्त्यर्था एषा कल्पना समाश्रिता । एषा कल्पना=असतोऽपि प्रकृतिप्रत्ययादेरूहः । 'उपेयप्रतिपत्त्यर्था' इत्यस्यैकवचनेन स्त्रीत्वरूपलिङ्गेन च विपरिणमय्य 'उपेयप्रतिपत्त्यर्था' इति योऽन्तस्तेनान्वयः कार्यः । अस्य कारिकापूर्वार्द्धस्येति शेषः । यद्वा उत्तरत्र यत इत्यध्याहार्य्य यतो हेतोरुपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः, तस्मात्=अव्यवस्थितत्वात् पञ्चकोशादिवदेषा कल्पना समाश्रितेत्यन्वयः । उपेयस्य=प्राप्तुं योग्यस्यार्थस्य प्रतिपत्तिः=प्राप्तिः, ज्ञानं वा । समाश्रितेत्यस्य पाणिनिमुनिनेति शेषः । अयम्भाव इति—तैत्तिरीयोपनिषद्गता अनुवाकसमूहात्मिका भृगुप्रश्नाश्रिता भृगुवल्ली । तत्र वरुणपुत्रो भृगुः स्वपितरं वरुणं ब्रह्म पृष्टवान् । वरुणश्च तस्मै 'अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति' ब्रह्मोपलब्धौ द्वाराण्युक्तवान् । 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति' इति ब्रह्मलक्षणञ्चोक्तवान् । स च भृगुः पितुर्ब्रह्मोपलब्धिद्वाराणि ब्रह्मलक्षणञ्च श्रुत्वा तपोऽतप्यत । तपसि प्रवृत्तौ चेदं कारणं यद् भृगुणा विचारितं यत् पिता स्वरूपतो ब्रह्म नोपदिष्टवानतोऽवगम्यते नूनं तत्प्रापकं साधनान्तरमप्यपेक्षते पिता । सर्वेषां हि साधनानां तप एव साधकतमं साधनमिति तपश्चचार भृगुः । तच्च तपोऽन्तःकरणसमाधानम्, तद्द्वारकत्वाद् ब्रह्मप्रतिपत्तेः ।

तदुक्तम्—'मनसश्चेन्द्रियाणाञ्चैकाग्र्यं परमं तपः । तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ इति ॥

स च तपस्तप्त्वा 'अन्नं ब्रह्मेति व्यजानात्' यतोऽन्नाद् जायन्ते । तेन जीवन्ति । तत्राभिसंविशन्ति इति ब्रह्मलक्षणदर्शनात् । अत्र अद्यते=भुज्यते=उपलभ्यते सर्वैरिति सर्वप्रतिपत्तृसाधारणं स्थूलदेहकारणं भूतपञ्चकं विराट्संज्ञकमन्नशब्देनोच्यते । अन्नपदवाच्यस्य भूतपञ्चकस्य विराज उत्पत्त्यादिदर्शनात्पुनः तपस्तप्त्वा प्राणो ब्रह्मेति व्यजानात्' अत्र प्राणशब्देन लक्षणया प्राणकारणं क्रियाशक्तिविशिष्टतया हिरण्यगर्भ उच्यते । तस्याप्युत्पत्त्यादिदर्शनात् । मनो ब्रह्मेति व्यजानात् । अत्र मनः शब्देन संकल्पात्मकशक्तिविशिष्टं चैतन्यमुच्यते । ततस्तस्याप्युत्पत्त्यादिदर्शनात् 'विज्ञानं ब्रह्मेति व्यजानात्' तपसैव तस्यापि ब्रह्मलक्षणानाक्रान्तत्वं

दर्पणव्याख्या

ताभ्यां यद् व्युत्पादनम्=शक्तिबोधनं तन्मात्रप्रयोजनत्वादित्यर्थः । तथाच प्रकृतिप्रत्ययविभागेन पदार्थवाचकत्वबोधकस्यास्य शास्त्रस्य पदस्याखण्डत्वेऽप्रामाण्यापत्तिरिति भावः । * उपेयप्रतिपत्त्यर्थेति * वचनविपरिणामेन उत्तरत्रान्वेति । उपेयस्य=बोधनीयस्य प्रतिपत्तये एषा कल्पना श्रिता=स्वीकृता मुनिनेति शेषः । तत्र दृष्टान्तमाह—*पञ्चकोशादिवदिति* । दृष्टान्तमेव स्फुटयति—*अयम्भाव इति* तत्र हि "भृगुर्वै वारुणिर्वरुणं ब्रह्म पृष्टवान्, स उवाचान्नं ब्रह्म" इति तस्योत्पत्त्यादि बुद्ध्वा पुनस्तेन पृष्ट "प्राणो ब्रह्म" इति तस्यापि तथात्वं बुद्ध्वा पृष्टः "मनो ब्रह्म" इति । तत्राऽप्यधितमन त्रेधा भाति—"यत्स्थूलं तत्पुरीषम्, यन्मध्यमं तन्मांसं यदणीयस्तन्मनः" इति श्रवणादनित्यत्वमवधार्य

त्मकपञ्चकोशोत्तरं "ब्रह्मपुच्छं प्रतिष्ठा" इति ज्ञेयं ब्रह्म प्रतिपादितम् । तत्र कोशपञ्चकव्युत्पादनं शुद्धब्रह्मबोधनाय । यथा वा आनन्दवल्लीस्थपञ्चकोशव्युत्पादनं वास्तवशुद्धब्रह्मबोधनाय । एवं प्रकृतिप्रत्य-

प्रभा

बुद्ध्या 'आनन्दो ब्रह्मेति व्यजानात्' एवं तपसा विशुद्धात्मा प्राणादिषु ब्रह्मलक्षणमपश्यत् शनैः शनैरन्तरनुप्रविश्यान्तरतममानन्दं ब्रह्म विज्ञातवान् । बाह्यान्तःकरणसमाधानलक्षणं परमं तपोऽनुष्ठेयमिति प्रकरणतात्पर्यम् । पञ्चकोशोत्तरमिति=असिकोशवदात्माच्छादकत्वं कोशत्वम् , पञ्चीकृतेभ्यो भूतेभ्य उत्पन्नः स्थूलो देहोऽन्नमयः कोशः । तदुक्तम् १—स्यात्पञ्चीकृतभूतोत्थो देहः स्थूलोऽन्नसंज्ञकः' इति । २—कर्मेन्द्रियपञ्चकविशिष्टवायुपञ्चकरूपः प्राणमयाख्यः कोशः । तदुक्तम्—'लिङ्गे तु राजसैः प्राणैः प्राणः कर्मेन्द्रियैः सह' इति । ३—ज्ञानेन्द्रियपञ्चकविशिष्टमनोरूपो मनोमयः कोशः । 'सात्त्विकै र्धीन्द्रियैः साकं विमर्शात्मा ( संशय स्था ) मनोमय इति । ४—ज्ञानेन्द्रियपञ्चकविशिष्टबुद्धिरूपो विज्ञानमयः कोशः । तदुक्तम्—'तैरेव साकं विज्ञानमयो धीर्निश्चयात्मिका' इति । ५—कारणशरीरभूतायामविद्यायां यन्मलिनसत्त्वं तदेव प्रियमोदप्रमोदाख्याभिः, इष्टदर्शनलाभभोगजन्यसुखात्मिकाभिरन्तःकरणवृत्तिभिः सममानन्दमयकोश इत्युच्यते । तदुक्तम्-'कारणे सत्त्वमानन्दमयो मोदादिवृत्तिभिः' इति तत्तत्कोशतादात्म्यापन्न आत्माऽपि अन्नमयादिशब्देनोच्यते । अत एव 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तरात्मा प्राणमयोऽन्योऽन्तरात्मा मनोमयः' इति श्रुतिः सङ्गच्छते इति पञ्चकोशात्मकातात्त्विक ब्रह्म यथा वरुणेन वास्तविकब्रह्मज्ञानोपायतया उपदिष्टम् । तथैव व्याकरणे पाणिनिना अखण्डनित्यस्फोटरूपपदवाक्यज्ञानोपायतया प्रकृतिप्रत्ययादय उपदिष्टा इति भाव. । ततः परम् 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युक्तम् । 'प्रतिष्ठा' इति 'ह्रस्वोऽनस्तिङः' इति दीर्घः । सर्वस्याविद्याकल्पितस्य द्वैतस्य पुच्छम्=अवसानभूतम् आधारभूतं वा ब्रह्म प्रतिष्ठ' इत्येवमद्वैतं ब्रह्म उपदिष्टम् । वस्तुतस्तु वरुणेनोपदिष्टस्य कोशचतुष्कस्योत्पत्त्यादिकं बुद्ध्वा पुनः पृष्टो वरुणः 'तपसा ब्रह्म विजिज्ञासस्व' इत्युक्तवान् । ततस्तपस्तप्त्वा 'आनन्दो ब्रह्मेति व्यजानात् तदनन्तरं नापि प्रश्नो नाप्युत्तरम् । नापि 'पुच्छं ब्रह्म प्रतिष्ठा' इति वाक्यं भृगुवल्ल्यां वर्तते । अतस्तत्रानन्दपदं न आनन्दमयकोशपरम् , किन्तु शुद्धब्रह्मपरमेवेति । पञ्चकोशादिव त्' इति कारिकायां यो दृष्टान्तः स आनन्दवल्लीस्थपञ्चकोशाभिप्रायेणैव । अत एव 'भृगुर्वै वारुणिः वरुणं पितरं ब्रह्म पृष्टवान् । वरुण उवाच—'अन्नम्' इति । अस्योत्पत्त्यादिकं समीक्ष्य पुनः पप्रच्छ । तत्र उत्तरम्= 'प्राणो ब्रह्म' इति । तस्यापि अतथात्वावधारणानन्तरं पुनः प्रश्ने आह—मन इति—तस्यापि 'अशितमन्नं त्रेधा भवति—यत्स्थूलं तत्पुरीषं यन्मध्यमं तन्मांसम् यदणीयस्तन्मनः, इति श्रुतावुत्पत्तिश्रवणात् पुनः प्रश्ने आह—विज्ञानमयमिति । तस्यापि मृत्युपहितत्वेनातथात्वं बुद्ध्वा पुनः पृष्टवान् । ततः 'आनन्दो ब्रह्म' इत्युत्तरिते वस्तुतत्त्वं प्राप्तः स्थितो भृगुः । एवञ्च पञ्चमस्य शुद्धब्रह्मपरकत्वा-

तस्माद् भृगुवल्ली नोदाहरणम् , किन्तु

ह्वै प्रजायन्ते । याः काश्च पृथिवीं श्रिताः

॥ अन्नमयः कोशः । 'तस्माद्वा एतस्मा-

दर्पणव्याख्या

पुनः पृष्टः, "विज्ञानं ब्रह्म" इति तस्यापि मृत्युपहितत्वं ज्ञात्वा पुनः पृष्टेनोपदिष्टम्-"आनन्दो ब्रह्मेति व्यजानात्" । ततो वस्तुतत्त्वं प्राप्य स्थित इति प्रतिपादितम् । ननु नेयं वल्ली पञ्चकोशप्रतिपादिका । पञ्चमस्यानुपायत्वादकोशत्वात्तस्यैव तत्र ब्रह्मस्वबोधनादित्याशङ्क्यानन्दवल्लीस्थपञ्चकोशोदाहरणमाह—* यथा चेति * तत्रत्या हि पञ्चकोशा उपाया एव

यादिव्युत्पादनं वास्तवस्फोटव्युत्पादनायैवेति। ननु प्रत्यक्षस्य स्फोटस्य श्रवणादितोऽपि बोधसम्भवात्

प्रभा

दन्नरसमयादन्योऽन्तर आत्मा प्राणमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। 'प्राणं देवा अनुप्राणन्ति। मनुष्याः पशवश्च ये''सर्वमेव त आयुर्यन्ति ये प्राणं ब्रह्मोपासते॥२॥ प्राणकोशः। 'तस्माद्वा एतस्माद्वा एतस्मात्प्राणमयादन्योऽन्तर आत्मा मनोमयः॥३॥ इति मनोमयः कोशः। 'तस्माद्वा एतस्मान्मनोमयात्। अन्योऽन्तर आत्मा विज्ञानमयः॥४॥ इति विज्ञानमयकोशः। 'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्मा आनन्दमयः॥५॥ इति आनन्दमयकोशः। नन्वानन्दवल्ल्यामपि यदानन्दपदं तदपि मुख्यब्रह्मपरमेव। अत एव 'आनन्दमयोऽभ्यासात्' (अ० १ पा० १ अ० ६ सू० १२) इत्यादिसूत्रकदम्बैस्तत्रत्यानन्दपदस्य आनन्दमयकोशतादात्म्यापन्नजीवपरकत्वं ब्रह्मसूत्रकृता खण्डितमिति चेन्न, यद्यन्नमयादिभ्य इवानन्दमयादन्योऽन्तर आत्मेति न श्रूयते, तथापि नानन्दमयस्य ब्रह्मत्वम्, यत आनन्दमयं प्रकृत्य श्रूयते तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा' (तै० २।५) इति तत्र यद् ब्रह्मान्तरवर्णं प्रकृतम्। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति। तदिह ब्रह्मपुच्छं प्रतिष्ठा' इत्युच्यते। तद्विजिज्ञासाविषयैवान्नमयाद्य आनन्दमयपर्यन्ताः पञ्चकोशाः कल्प्यन्ते' इति शारीरिकभाष्यकृतैव समाहितत्वात्, सूत्रे 'आनन्दमयपदस्य तद्वाक्यशेषे श्रूयमाणब्रह्मपदे एव तात्पर्य्यमित्यन्यत्र विस्तरः। अप्यादिशब्देन पूर्वोक्त एव कोशो ग्राह्यः। आनन्दशब्देनात्र 'करणे सत्त्वमानन्दमयो मोदादिवृत्तिभिः' इत्युक्त एव ग्राह्यः, उत्तरत्र शुद्धब्रह्मोक्तेः। ततो 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युक्तम्। अत्र पुच्छमविद्याकल्पितस्य सर्वस्यावसानम्, सर्वाधार वा ब्रह्म प्रतिष्ठा, इत्युक्त्या अनेनैव वास्तविक ब्रह्म उपदिष्टम्। अत्र श्रूयमाणं यद् ब्रह्मपदं तदेव मुख्यब्रह्मपरम्। अत एव जगदाधारार्थकपुच्छपदोपादानं सङ्गच्छते। लाङ्गूलात्मकमुख्यार्थस्य तत्र बाधादाधारे लाक्षणिकमत्र पुच्छपदम्। ब्रह्म तु पञ्चकोशतादात्म्यापन्नचैतन्यादन्यदेव। तदुक्तम्—

'अन्वयव्यतिरेकाभ्यां पञ्चकोशविवेकतः। स्वात्मानं तत उद्धृत्य परं ब्रह्म प्रपद्यते'॥ इति।

एवञ्च यथा पञ्चकोशाः [illegible]धारणब्रह्मप्रतिपादनाय औपायिकत्वेनोक्ता, ननु तेषां वास्तवब्रह्मत्वम्। तथैवापि अवास्तवयोः प्रकृतिप्रत्यययोर्वाचकत्वव्युत्पादनं वास्तवस्फोटनिष्ठवाचकत्वबोधनायेति निर्गलितोऽर्थः। प्रत्यक्षस्य त—स्वरूपेण श्रवणेन्द्रियगोचरस्येत्यर्थः। श्रवणादित इति—आदिना मनननिदिध्यासनयोः सङ्ग्रहः। श्रवणञ्चात्र न कर्णेन्द्रियजन्यज्ञानपरम्, प्रत्यक्षस्येत्युक्त्या पौनरुक्त्यापत्तेः। किन्तु 'उपक्रमादिभिः षड्भिर्लिङ्गैः वाक्यानामद्वितीये स्फोटाख्ये ब्रह्मणि तात्पर्यावधारणम्। तात्पर्यनिश्चायकोपक्रमादियुक्त्यनुसन्धानमित्यद्वैतिनः। वाक्यानां कुत्र तात्पर्यमिति जिज्ञासायां तन्निर्णयानुकूलो व्यापार इति केचित्। मननञ्च—श्रुतार्थस्योपपत्तिभिश्चिन्तनम्। अथासत्त्वशङ्कानिवर्तकयुक्त्यनुसन्धानमित्यद्वैतिनः। शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणाय तर्कात्मकज्ञानजनको मानसो व्यापार इति अध्वरीन्द्रधर्मराजः। बाधकसाधकप्रमाणोपन्यासरूपयुक्तिभिर्वाक्यार्थानुचिन्तनमिति तार्किकाः। निदिध्या-

दर्पणव्याख्या

उपदिष्टान्नमानन्दकोषस्यापि वैषयिकत्वयाऽनित्यत्वेनाब्रह्मत्वात् किन्तु 'ब्रह्म पुच्छं प्रतिष्ठा'' इत्यत्र श्रूयमाणब्रह्मपदस्यैव मुख्यब्रह्मपरत्वम्। अत एवाऽधारार्थकः पुच्छशब्दोऽप्युपपद्यते, तस्य लाङ्गूलरूपमुख्यार्थस्य बाधात्। एवञ्चानन्दमयान्ता यथा पञ्चकोशाः सर्वाधारब्रह्मबोधनायौपायिकत्वेनोक्ताः, ननु तेषां वास्तवब्रह्मत्वम्, तथैवाप्यवास्तवप्रकृति—प्रत्यययोः वाचकत्वव्युत्पादनं वास्तवस्फोटनिष्ठवाचकत्वबोधनायेत्यभिप्रायः। *श्रवणादित इति* आदि 'मन- निदि-'।

न शास्त्रं तदुपाय इत्यत आह—उपाया इति। उपायस्योपायान्तरादूषकत्वात्। तथाच व्याकरणाभ्यासजन्य-
ज्ञाने वैजात्यं कल्प्यते। मन्त्रजन्यमिवार्थस्मरणे। वेदान्तजन्यमिव ब्रह्मज्ञाने। तस्य च ज्ञानस्य यज्ञादीना-

प्रभा

सानञ्च निपूर्वकाद् ध्यायतेः सनि बाहुलकाल्ल्युटि रूपम्। तथापरोक्षनिश्चयत्वसम्पादकस्तर्कः। विजातीयप्रत्यय-
तिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणमिति वेदान्तिनः। श्रुतार्थस्य नैरन्तर्येण दीर्घकालमनुसन्धानमिति
नैयायिकाः। न शास्त्रमिति-व्याकरणशास्त्रं विनापि श्रवण-मनन-निदिध्यासनैः स्फोटबोधसम्भवेन व्यभि-
चारात् स्फोटज्ञानसाधनत्वं व्याकरणे न सम्भवतीति भावः। नन्वेकं कार्यम्प्रति यत्रानेकस्य कारणता तत्र का-
र्यतावच्छेदकदले कारणान्यवहितोत्तरत्वनिवेशाद् व्यभिचाराभाव इत्याशयेनाह-उपाय इति-ननु गुरुसाध्य-
श्रवणादिना स्फोटज्ञानसम्भवे ब्रह्मायाससाध्यव्याकरणज्ञानजन्यस्फोटज्ञाने गौरवमित्यत आह—तथाचेति—
अन्यथासिद्धस्फोटज्ञानार्थं व्याकरणारम्भो चेत्यर्थः। कल्प्यत इति—व्याकरणाध्ययनस्य स्फोटज्ञानत्वमात्रं न
कार्यतावच्छेदकम्, किन्तु वैजात्यसमानाधिकरणस्फोटज्ञानत्वम्। एवञ्च तादृशज्ञानत्वावच्छिन्नम्प्रति श्रवणा-
दिसाध्यमिति न गौरवस्य दोषावहत्वं प्रकृते, लघुसाध्यस्य गुरुसाध्यत्वस्वीकारे एव गौरवस्य दोषत्वात्।
वस्तुतस्तु श्रवणादीनामनेकजन्मसाध्यत्वेन दुष्करत्वाल्लाघवेन स्फोटज्ञाने एव व्याकरणस्योपयोग इति
बोध्यम्। नच वैजात्यविशिष्टस्य कार्यतावच्छेदकत्वे प्रमाणाभावः, व्याकरणशास्त्रारम्भस्यैव प्रमाणत्वात्।
तच्च वैजात्यं पुण्यजनकतावच्छेदकधर्मविशेषरूपम्। नच स्फोटज्ञानरूपकार्यगतवैजात्यस्य कार्योत्पाग-
नुपस्थितेः कार्यकारणभावग्रहासम्भवः, स्फोटज्ञानानुत्तरकालावृत्तित्वस्यैव स्फोटज्ञानत्वसामानाधिकरण्येन
स्वीकारादित्यन्यत्र विस्तरः। जन्यतावच्छेदकवैजात्यकल्पनायां दृष्टान्तमाह—मन्त्रजन्यमिवेति—तत्र तत्र हवि-
रादिदाने मन्त्राणां विनियोगो दृश्यते। तत्र मन्त्रं विनाऽपि हविर्दानादिकं स्यात् किं मन्त्रेणेति संशयेऽर्थ-
स्मरणार्था हि मन्त्रा इत्युत्तरितम्। प्रकारान्तरेणापि मन्त्रार्थस्मरणं स्यात् किं मन्त्रेणेति पुनराक्षेपे सम-
हितं मीमांसायाम्—मन्त्रजन्यार्थस्मरणे किञ्चिद्वैजात्यं स्मरणे कल्प्यते। तथाच वैजात्यविशिष्टमन्त्रार्थस्मृ-
तित्वं मन्त्रजन्यतावच्छेदकम्, नतु मन्त्रार्थस्मृतित्वमात्रमिति तादृशकार्यकारणभावस्वीकारे यथा न
व्यभिचारः। एवं ब्रह्मज्ञानस्य भाषाग्रन्थतोऽपि निष्पत्त्या व्यभिचारेण वेदान्तवाक्यानां ब्रह्मज्ञानम्प्रति कार-
णत्वं न स्यादिति तत्र तादृशकारणत्वोपपत्तये व्यभिचारवारणाय यथा वेदान्तवाक्यजन्यतावच्छेदकं
वैजात्यविशिष्टब्रह्मज्ञानत्वम्, नतु ब्रह्मज्ञानत्वमात्रम्। तथा व्याकरणजन्यस्फोटज्ञानेऽपि वैजात्यं कल्प-
यित्वा कार्यकारणभावस्वीकारे नास्ति व्यभिचार इति भावः। वेदान्तजन्यमवेति—अत्रापि 'वेदान्तजन्य-
पदम्' वैजात्यविशिष्टवेदान्तजन्यतावच्छेदकपरम्। नन्वेवमपि पुरुषार्थचतुष्टयान्यतमसाधनस्यैव फलतया
व्याकरणजन्यस्य स्फोटज्ञानस्य चतुर्विधपुरुषार्थेषु कस्याप्यसाधनतया वैयर्थ्यमत आह—तस्य चेति-व्याकर-
णशास्त्राभ्यासजनितस्फोटज्ञानस्येत्यर्थः। यज्ञादीनामिति—फलमनुद्दिश्येश्वरार्पणबुद्ध्या कृतानां यज्ञादीना-

दर्पणव्याख्या

*न शास्त्रमिति* एतच्छास्त्रं विनाऽपि श्रवणाऽऽदिना तद्बोधेन व्यभिचारादिति भावः। उपायस्योपायान्तरादूषकत्वे
सदृष्टान्तां युक्तिमाह—*तथाचेति* व्याकरणाध्ययनस्य स्फोटज्ञानत्वं न कार्यतावच्छेदकम्, किन्तु तादृशज्ञानगतवैजात्यम्
तद्वच्छिन्नम्प्रति नोपायान्तरादिति न व्यभिचारः। वैजात्यस्य प्रागनुपस्थितावपि कारणताग्रहो विधिवादोक्तदिशाऽत्रैव इति
भावः। *मन्त्रजन्यमिवेति* मन्त्रजन्यतावच्छेदकमिवेत्यर्थः। एवमग्रेऽपि। ननु पुरुषार्थासाधकस्य तस्य सम्पादनवैय-
र्थ्यमत आह—*तस्य चेति* स्फोटज्ञानस्य चेत्यर्थः। *यज्ञादीनामिति* कामनापरित्यागेन विधीयमानाना

मन्तकरणशुद्धाविव शरीरादिशुद्धावुपयोगः, साक्षात्परम्परया वा स्वर्गमोक्षादिहेतुत्वञ्च। तदुक्तं वाक्यपदीये— तद्द्वारमपवर्गस्य वाङ्मलानां

प्रभा

मित्यर्थः। तदुक्तम्—'ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम्' इति। आदिना विधिपूर्वकदानादिपरिग्रहः। तथाच श्रुतिः—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवति' इति (बृ० अ० ४ अ० ४ ब्रा० २२ म०) वेदानुवचनेन=वेदाध्ययनेन। अनाशकेन=उपवासरूपव्रतविशेषेण। उपवासस्य तपसैव गतार्थत्वात् कामानशनेन=कामत्यागेनेति वार्थः। अनया श्रुत्या यथा यज्ञादीनां परम्परया मोक्षसाधनत्वं तथा शास्त्रजन्यस्फोटज्ञानस्यापि परम्परया मोक्षसाधनत्वं ध्वन्यते। अन्तःकरणेति—साक्षादित्यादिः। शरीरादिशुद्धाविति—स्फोटज्ञानस्यापि शरीरशुद्धौ साक्षादुपयोग इत्यर्थः। आदिनेन्द्रियपरिग्रहः। एवञ्च न शास्त्रवैयर्थ्यमिति भावः। ननु शरीरादिशुद्धेरप्यपुरुषार्थतया तत्साधने स्फोटज्ञाने प्रवृत्तिर्न स्यादत आह—साक्षादिति—साक्षात्स्वर्गहेतुत्वम्, परम्परया च मोक्षहेतुत्वमिति भावः। अत एव 'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग्भवति' इति भाष्योक्ता श्रुतिः सङ्गच्छते। अत्र कामधुगित्यस्य ग्रहणात् कामफलकत्वमप्युक्तम्। मोक्षसाधनत्वमपि 'चत्वारि शृङ्गाः त्रयोऽस्य पादाः द्वे शीर्षे सप्त हस्तासोऽस्य। त्रिधाबद्धो वृषभो रोरवीति। महो देवो मर्त्यामाविवेश, इति श्रुत्या स्पष्टमेव भाष्यकृतैव प्रदर्शितम्। अत्र भाष्यम्—'महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्' इति। कैयटोऽपि 'महता=परब्रह्मणेत्यर्थः'। इति 'द्वे ब्रह्मणी वेदितव्ये' इति स्मृतिरपि तत्र मानं बोध्यम्। परम्परयेति—यज्ञाद्यनुष्ठानद्वारा चेत्यर्थः, यज्ञेऽपभाषणस्य निषेधात्। तदुक्तम्—'आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सरस्वतीमिष्टिं निर्वपेदिति' इति। परम्परा च आत्मज्ञानघटिता बोध्या 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुत्या मोक्षस्यात्मज्ञानैकसाध्यत्वबोधनात्। तत्र हरिं प्रमाणयति—तदुक्तमिति=स्फोटज्ञानस्य मोक्षम्प्रति हेतुत्वं हरिणाप्युक्तमित्यर्थः। तद्=व्याकरणम्। द्वारं=उपायः। अपवर्गस्य=आत्यन्तिकमोक्षस्य। वाङ्मलानामिति=वाचां मलाः—'ग्रस्तं निरस्तमविलम्बितं निर्हतमम्बूकृतं ध्मातमथो विकम्पितम्। संदष्टमेणीकृतमर्द्धकं द्रुतं विकीर्णमेताः स्वरदोषभावना इति। अतोऽन्ये व्यञ्जनदोषा, इति भाष्योक्तग्रस्तादयः, अपभ्रंशा वा। व्याकरणतो हि प्रत्यवायहेतुभूतानपशब्दान्न प्रयुङ्क्ते। ज्ञानं हि तस्य शरणम्। यद्वा वाचां मलाः=अप्रभेदरूपाः। तदुक्तम्भाष्ये 'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि' इति। अस्यार्थः—यथा तितउना=चालनिना सक्तोस्तुषाद्यपनीयते, तथा व्याकरणेन वाचोऽपशब्दा अपनीयन्ते इत्यर्थः। तदाह=‘धीराः=ध्यानवन्तो वैयाकरणाः।

दर्पणव्याख्या।

हेतुमित्यर्थः। यज्ञादीत्यादिना 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुत्युक्तदानादिपरिग्रहः। शरीरादीत्यादिना वागिन्द्रियपरिग्रहः। ननु शरीरादिशुद्धेरप्यपुरुषार्थतया तदुद्देशेनापि प्रवृत्तिदुर्घटेत्यत आह—*साक्षादिति*स्वर्गादीत्यादिनाऽपवर्गपरिग्रहः। साक्षात्स्वर्गहेतुत्वम्, परम्परयाऽपवर्गहेतुत्वञ्चेत्यर्थः। स्वर्गहेतुत्वे "एकः शब्दः" इति भाष्यघटितश्रुतिः, परम्परया मोक्षहेतुत्वे च, 'द्वे ब्रह्मणी वेदितव्ये" इति स्मृतिः प्रमाणम्। परम्पराघटकं चात्मतत्त्वज्ञानम् "तमेव विदित्वा" इति श्रुत्या तदतिरिक्तस्य साक्षान्मोक्षहेतुत्वस्य स्फुटबोधनादिति बोध्यम्। उक्तार्थे हरिसम्मतिमाह—*तदुक्तमिति*। तत्—नादात्मकस्फोटप्रतिपादकं शास्त्रम्। *अपवर्गस्येति* मोक्षस्येत्यर्थः। *द्वारमिति* तदुपायोऽर्थः। हेत्वन्तरमाह—*वाङ्मलानामिति*।

इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः । अत्रातीतविपर्यासः केवलामनुपश्यति ॥ इति ।

नचालीकया प्रकृतिप्रत्ययकल्पनया कथं वास्तवस्फोटबोधः, तस्या अलीकत्वासिद्धेर्वैदयमा गुरुत्वात् । एवम् 'रेखागवयन्यायः' आदिपदेन गृह्यते ॥ ६६ ॥

ननु स्फोटस्य वर्णजातीनाञ्च नित्यतया ककार उत्पन्न इति

प्रभा

रसर्यनाम पर्य्यायेण तत्तल्लिङ्गभाग्भवति' इति । मोक्षमार्गाणाम्=मुमुक्षूणाम् । अजिह्मा=अवक्रा । राजपद्धतिः=राजमार्गः । अत्र=व्याकरणाख्ये स्फोटरूपे राजमार्गे । अतीतेति=अतीतः=अपास्तो विपर्य्यासः=भ्रमो यस्य पुंसः स भ्रमशून्य इति यावत् । केवलाम्=परां वाचम् । अनुपश्यति=योगजधर्मसाहाय्येन जानातीत्यर्थः । एवं योगित्वसिद्धौ तत्त्वज्ञाने न कोऽपि प्रतिबन्धक इति भावः । तदुक्तं भागवते—समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः । हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥ ३७ ॥ यदुपासनया ब्रह्मन् योगिनो मलमात्मनः । द्रव्यक्रियाकारकाख्यं धूत्वा यान्त्यपुनर्भवम् ॥ ३८ ॥ इति । अस्यार्थः—समाहितात्मनः=कृतसमाधेः, परमे ब्रह्मणि तिष्ठति=लीयते इति परमेष्ठिनस्तथाभूतस्य ब्रह्मणो हृदि य आकाशस्तस्मान्नादोऽभूत् । यः कर्णपुटपिधानेन श्रोत्रवृत्तिनिरोधात्स्वस्मादपि विभाव्यते=वितर्क्यते । यस्य नादस्य परास्योपासनयाऽऽत्मनो मलं द्रव्यमधिभूतम्, क्रिया=अध्यात्मम्, कारकम्=अधिदैवम्, इत्याख्यं मलं पाप धूत्वा=अपोह्य योगिनोऽपुनर्भवम्=मोक्षं यान्ति इति । अलीकत्वासिद्धेरिति—प्रकृतिप्रत्ययविभागस्य शशशृङ्गादिवत् नात्यन्तिकासत्त्वम्, किन्तु भ्रमयत्किञ्चित्कोशादिवन्मायिकत्वादनिर्वचनीयत्वमेवास्य वक्ष्यमाणप्रायत्वादित्यर्थः । नच वास्तविकदर्पणस्थसूर्यप्रतिबिम्बेनान्धकारनाशो यथा न भवति तथाऽवास्तवेन प्रकृत्यादिना वास्तवस्फोटबोधो न स्यादिति वाच्यम्, अयथार्थमणिप्रभाबिम्बेन प्रभामन्वेषयतः पुरुषस्य मणिप्राप्तिवदयथार्थत्वेनापि वास्तवोपलब्धिसम्भवात् । रेखागवयन्यायेति—रेखालिखितेनावास्तवेन गवयाकारेण यथा वास्तविकगवयस्य बोधस्तथाऽवास्तवेनापि प्रकृत्यादिना वास्तविकस्फोटज्ञानं स्यादिति भावः । आदिपदेनेत्यस्य प्रकारादिरित्यादिपदेनेत्यर्थः । ननु वर्णानां स्फोटात्मकत्वे ककारत्वादिकं स्फोटनिष्ठं तद्व्यञ्जकवायुनिष्ठं वा? आद्ये स्फोटस्यैकत्वाद्विशिष्टतया तस्य च नित्यत्वात् 'ककार उत्पन्नः' इति न स्यादित्याह—ककार उत्पन्न इति । कत्वविशिष्टस्यानित्यत्वे 'सोऽयं ककारः' इति प्रतीतिर्न स्यात्, तस्या नित्यत्वेन व्यक्तिभेदात् । ननु जातेराश्रयकधर्म-

न स्यात् । वायुसंयोगनिष्ठजातेः स्फोटे माने कादिप्रतीतीनां भ्रमत्वापत्तिश्चेत्यत आह—
कल्पितानामुपाधित्वं स्वीकृतं हि परैरपि । स्वरदैर्घ्यादपि ह्यन्ये वर्णेभ्योऽन्यस्य मन्वते ॥ ७० ॥

प्रभा

विशेषरूपतयाऽनित्यतयोत्पत्तिप्रतीतिनिर्वाह इत्याह—वायुसंयोगेति—अन्त्ये (व्यञ्जकवायुसंयोगनिष्ठत्वे)
कत्वाभाववति स्फोटे कत्वप्रतीत्या भ्रमत्वं ककारो गकार इत्येवं रूपाणां कादिप्रतीतीनां दुर्वारमित्याह—
भ्रमत्वापत्तिश्चेति—इदञ्च दूषणं प्रतीतेः समावायसम्बन्धावच्छिन्ना या वायुसंयोगनिष्ठजातिवृत्तिप्रकारता
तन्निरूपकत्वाभिप्रायेण । ननु स्वसमवेताभिव्यञ्जकसमवायस्य प्रत्यक्षप्रयोजकता न क्वापि दृष्टेत्यत आह—
कल्पितानामिति—समवायेन वायुसंयोगवृत्तीनामपि स्वाश्रयाभिव्यङ्ग्यत्वसम्बन्धेन स्फोटे प्रतीतानामित्यर्थः ।
स्वं कत्वादि तदाश्रयो वायुसंयोगस्तदभिव्यङ्ग्यत्वं स्फोटे । उपाधित्वम्=स्वाश्रयाभिव्यङ्ग्यत्वसम्बन्धेन
कत्वादिप्रकारकप्रतीतिजनकत्वम् । एवञ्चैतादृशसम्बन्धस्य वायुसंयोगसत्त्वकाले एव सत्त्वमिति तस्या-
नित्यतयोत्पत्तिप्रतीतिर्नानुपपन्नेति भावः । वायुसंयोगगतधर्मस्य कत्वादेः श्रोत्रेन्द्रियग्राह्यत्वमपि स्वसमवे-
ताभिव्यञ्जकसमवेतत्वसम्बन्धेन । स्वम्=श्रोत्रम्, तत्समवेतः स्फोटस्तदभिव्यञ्जको वायुसंयोगस्तत्सम-
वेतत्वं कत्वादौ । नच षड्विधसन्निकर्षान्यतमसन्निकर्षेण जायमानप्रतीतेरेव लौकिकप्रत्यक्षतयोक्तसन्निकर्ष-
स्य तत्राभावेन कत्वादिलौकिकप्रत्यक्षत्वानुपपत्तिरिति वाच्यम्, प्रत्यक्षानुरोधेन वायुसंयोगगतधर्मत्वेन 'कत्वं
साक्षात्करोमि' इति प्रतीतेरेव तन्मते कल्पनेनादोषात्, अनेकत्र भ्रमत्वप्रतीतिकल्पनापेक्षया तेन रूपेण एक-
विधायाः प्रतीतेरेव कल्पने लाघवात् । कल्पितानामित्यत्र मीमांसकाभिमतं दृष्टान्तमाह—स्वरदैर्घ्यादपीति—अय-
म्भावः—मीमांसकमते अकारादयो वर्णा नित्या एकत्वविशिष्टा एव ध्वनिगतोदात्तत्वादीनामारोपादुदात्तादि-
भेदेन भिन्ना इति मन्यन्ते । वेदान्तिनोऽप्येवाहुः । इयान् विशेषस्तन्मते यद् ब्रह्मातिरिक्तस्य सर्वस्याप्यनित्य-
तया सृष्ट्याद्यकालिकोत्तरकालिकत्वविशिष्टप्रलयकालिकनाशप्रतियोगित्वरूपमेव नित्यत्वं वर्णेषु, तत्वनुत्पत्ति-
कत्वे सति ध्वंसाप्रतियोगित्वरूपम् । मीमांसकमते तु इदमेव नित्यत्वं वर्णेष्विति । तदाह—स्वरदैर्घ्यादपीति—
वर्णेभ्योऽन्यस्य=भिन्नस्य ध्वनेः ध्वनिनिष्ठोदात्तत्व—दीर्घत्वाद्यपि नित्येषु वर्णेषु मीमांसकादयो यथा
मन्यन्ते तथा नित्ये एकस्मिन् ब्रह्मरूपे स्फोटे वायुसंयोगनिष्ठाः कत्वादय उत्पत्तिविनाशाश्च प्रतीयन्ते ।
तद्वशाद्धोकव्यवहाराणामुत्पत्तिस्तन्मत इव स्यादिति न स्फोटवादिमते किञ्चिदनुपपन्नम् ।

दर्पणव्याख्या

कत्वादिजातीनाञ्चेत्यर्थः । * न स्यादिति * अय भावः—'उत्पन्नो नष्टो वा ककारः' इत्यादिप्रतीतिः ककारादिवर्णात्मकः
स्फोटमन्तरेण विजातिर्नोत्पत्त्यादिमत्त्वेन विषया वाच्यः । तथाच न सम्भवति, द्वयोरेव नित्यत्वाज्जायमानायास्तस्या विषयबाधेन
भ्रमत्वापत्तेरिति तादृशप्रतीतेर्भ्रान्तत्वे इष्टापत्त्याह—*वायुसंयोगेति* । * कादिप्रतीतीनाम्, *=ककारो गकार इत्या-
दिबुद्धीनाम् । *भ्रमत्वापत्तिरिति* यथाश्रुताभिप्रायेणेदम् पूर्वोक्तान्तिमकल्पे भ्रमत्वाप्रसङ्गात् । नच तन्मतेऽपि कत्वादीना
लौकिकविषयत्वानुपपत्तिस्तद्व्यञ्जकश्रोत्रसमवेतसमवायस्य लौकिकसन्निकर्षस्याभावादिति वाच्यम्, तन्मते कत्वादीनां वायुसं-
योगवृत्तिधर्मत्वेन 'कत्वं साक्षात्करोमि' इति प्रतीत्या स्वसमवेतव्यञ्जकसमवायस्यैव संसर्गतोपगमेन लौकिकविषयत्वानपायात् ।
तादृशानेकप्रतीतीनां भ्रमत्वकल्पनापेक्षया एतत्कल्पनाया एवोचितत्वात् । 'आरोपे सति निमित्तानुसरणम्' इति न्यायात् ।
मूलं तु तन्मते इत्थमवतारणीयम्, ननु स्वसमवेताभिव्यञ्जकगतसमवायस्य सम्बन्धता न केनाप्यादृतेत्यत आह—*कल्पिता-
नामिति * कल्पितानां समवायसम्बन्धेन तद्वृत्तीनामप्युक्तसम्बन्धेन तत्र कल्पितानां वायुसंयोगगतधर्मविशेषाणामुपाधित्व-
मुदात्तत्वादिप्रकारप्रतीतिजनकत्वमित्यर्थः । अधिकं स्वयं वक्ष्यते । दृष्टान्तस्फुटीकरणाय मीमांसकमतमाह—

स्वीकारस्थलमाह—स्वरदैर्घ्याद्यपीति। आदिनोत्पत्तिविनाशसंग्रहः। उदात्तत्वादि न वर्णनिष्ठम्, तस्यैकत्वात्, नित्यत्वाच्च। तच्च, स एवायमिति प्रत्यभिज्ञानात्। नच गत्वावच्छिन्नप्रतियोगिताकभेदाभावस्तद्विषयः। व्यक्त्यंशाभेदस्यापि भासमानस्य विना बाधकं त्यागायोगात्। नचोत्पत्तिप्रतीतिर्बाधिका, प्रागसत्त्वे सति सत्त्वरूपाया

प्रभा

आदिनेति-दैर्घ्यादीत्यत्रादिनेत्यर्थः। भूषणे तु 'आदिना ह्रस्वत्वादिकमपि गृह्यते' इत्युक्तम्। मीमांसकमतमाह-उदात्तत्वादीति-आदिनाऽनुदात्तत्वादिसंग्रहः। उदात्तत्वानुदात्तत्वादयो विरुद्धधर्मा एकस्मिन्नकारादौ न सम्भवन्ति। किन्तु वर्णभेदे एव। वर्णभेदश्च तेषामनित्यत्वे अकारादीनामनेकत्वे वा स्यात्, तदेव तु न सम्भवतीत्याह-तस्येति—अकारादेरित्यर्थः। एकत्वादिति-अकारादेरेकत्वादुदात्तत्वादिविरुद्धधर्माणां सन्निवेशासम्भवः। एकत्र सन्निवेशे तेषां सामानाधिकरण्याभावरूपो विरोधो विहन्येतेति भावः। तच्च=मीमांसकाभिमतं वर्णानां नित्यत्वमेकत्वञ्च। प्रत्यभिज्ञानादिति-तत्तेदन्तावगाहि, संस्कारेन्द्रियसन्निकर्षोभयजन्यं वा ज्ञानं प्रत्यभिज्ञानं तस्मादित्यर्थः। यदि तूक्तप्रत्यभिज्ञायाम् 'तदेवेदं रजतम्' इति भ्रमेऽतिव्याप्तिः, तदा अभिज्ञाम्=अनुभवं प्रतिगता प्रत्यभिज्ञेति प्रतीत्या 'अनुभवरूपं तज्जन्यसंस्कारसहकृतसन्निकर्षजन्यं ज्ञानं प्रत्यभिज्ञेति परिष्करणीयम्। अनुभवानुरूपत्वाभावान्नोक्तभ्रमेऽतिव्याप्तिः। सा च 'सोऽयमकारः' 'सोऽयं चैत्रः' इत्यादिरूपा। या व्यक्तिः पूर्वमनुभूता सैव व्यक्तिः पुनः प्रत्यक्षविषयीभूता चेत्तदा प्रत्यभिज्ञाशब्देन व्यवह्रियते। तथाच तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदावगाहिन्या बुद्धेरेव तद्रूपतया भेदस्य प्रतियोगितावच्छेदकेन सह विरोधात्प्रत्यभिज्ञायां व्यक्तिभेदे प्रतियोगितावच्छेदकाभूततद्व्यक्तित्वस्य व्यक्त्यन्तरेऽभावेन तत्र भेदस्यैव सत्त्वेन प्रत्यभिज्ञानुपपत्तिः। तद्व्यक्तेरेव तद्विषयत्वे तु तद्व्यक्तित्वेन सह तद्भेदस्य विरोधेन तद्व्यक्तित्वसत्त्वे तद्भेदाभावसत्त्वेन प्रत्यभिज्ञोपपद्यत इति भावः। तद्विषय इति—'सोऽयं गकारः' इति प्रत्यभिज्ञाविषय इत्यर्थः। तथा च पूर्वगकाराद् भिन्नेऽपि गकारे गत्वरूपप्रतियोगितावच्छेदकस्य सत्त्वेन तद्विरुद्धस्य भेदस्य तत्राभावेन व्यक्तिभेदेऽपि प्रत्यभिज्ञा न विरुध्येतेति भावः। व्यक्त्यंशाभेदस्येति—अतीतकालवृत्तिव्यक्तेर्वर्तमानकालवृत्तिव्यक्तौ तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावस्येत्यर्थः। त्यागायोगादिति—तत्प्रतीत्यविषयत्वकथनस्यायुक्तत्वादित्यर्थः। उत्पत्तिप्रतीतिरिति-'उत्पन्नो गकारः' इति प्रतीतिर्नित्यत्वे बाधिका=व्यक्त्यभेदांशप्रतीते भ्रमत्वसाधिकेत्यर्थः। प्रागसत्त्वे सतीति=स्वाधिकरणक्षणध्वंसाधिकरणत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्समयवृत्तित्वरूपायाः स्वाधिकरणक्षणप्रागभावाधिकरणम्, स्वाधिकरणक्षणप्रागभावाधिकरणक्षणप्रागभावानधिकरणञ्च यः क्षणस्तद्वृत्तित्वरूपाया उत्पत्तेरित्यर्थः। स्वम्=उत्पद्यमानं वस्तु। यथा 'इदानीं घट उत्पद्यते' इत्यत्र इदानींपदवाच्यसमये घटोत्पत्त्यधिकरणक्षणोत्तरक्षणो घटाधिकरणम्, तत्क्षणध्वंसाधिकरणत्वसम्बन्धस्तदुत्तरक्षणे तेन सम्बन्धेन घटाभाववाँस्तदुत्पत्तिक्षणः तद्वृत्तित्वं घटस्यास्तीति लक्षण-

दर्पण-व्याख्या

* उदात्तत्वादीति * आदिनाऽनुदात्तत्वपरिग्रहः। उदात्तत्वानुदात्तत्वयोः परस्परविरोधाद्वर्णभेदेन तत्सत्ता वाच्या। वर्णभेदश्च तदनित्यत्वे, अनेकत्वे वा स्यात्, तदेव तु न सम्भवतीत्याह—* तस्यैकत्वादित्यादि * नित्यत्वे प्रमाणमाह—* तच्चेति * नित्यत्वम्, एकत्वञ्चेत्यर्थः। * त्यागायोगादिति * अविषयत्वायोगादित्यर्थः। * बाधिकेति * व्यक्त्यभेदे प्रतीतिर्भ्रमत्वे गमिकेत्यर्थः। * प्रागसत्त्वे सतीत्यादि * स्वाधिकरणक्षणध्वंसवत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्क्षणावच्छिन्नसत्त्वविशिष्टसम्बन्धरूपाया इत्यर्थः। द्वितीयादिक्षणसम्बन्धस्य निरुक्तसम्बन्धेन सत्त्वान्न तत्रातिप्रसङ्गः।

उत्पत्तेर्वर्णेष्वनुभवविरुद्धत्वात् । अत एव वर्णमुच्चारयतीति प्रत्ययः, नतूत्पादयतीति प्रत्ययो व्यवहारश्च। उच्चरितत्वञ्च—ताल्वोष्ठसंयोगादिजन्याभिव्यक्तिविशिष्टत्वम् । किञ्च व्यञ्जकध्वनिनिष्ठोत्पत्त्यादेः परम्परया वर्णनिष्ठत्वविषयत्वेनाऽप्युपपत्तेर्न साऽतिरिक्तवर्णसाधिका । परम्परया वर्णनिष्ठत्वाभ्युपगमाच्च न भ्रमत्वम् । साक्षात्सम्बन्धांशे भ्रम इत्यवशिष्यते ।

प्रभा

समन्वयो बोध्यः । यदि तु उत्पत्त्यधिकरणक्षणनिरूपितवृत्तित्वं घटे नास्तीत्युच्यते तदा पूर्वोक्ता प्रागभावघ-
टितोत्पत्तिर्बोध्या । अनुभवविरुद्धत्वादिति=उत्पत्तिपदार्थघटकप्रागसत्त्वरूपविशेषणांशस्य वर्णेष्वभावेन उत्पत्ति-
विषयकानुभवविषयताया अभावादित्यर्थः । ननु 'उत्पन्नो गकारः' इत्यनुभवस्य सत्त्वाद्विरुद्धत्वोक्तिरसङ्गते-
ति चेन्न, तादृशानुभवस्य 'अभिव्यक्तो गकारः' इत्यर्थविषयकत्वात् । अत एवेति=अनुभवविरुद्धत्वादेवेत्यर्थः।
प्रत्ययः=प्रतीतिः । व्यवहार=अर्थविशेषबोधनाय शब्दविशेषोच्चारणम् । ननूच्चरितत्वमपि प्रयत्नविशेष-
जन्यत्वमेवेति कथं नित्यत्वमत आह—उच्चरितत्वञ्चेति । अभिव्यक्तिविशिष्टत्वमिति— अभिव्यक्तिः=ज्ञानम्,
तद्विषयत्वमित्यर्थः । ननु 'उत्पन्नो घटः' इतिवत् 'उत्पन्नो गकारः' इति प्रतीतेरपि प्रागसत्त्वविशिष्ट-
सत्त्वरूपोत्पत्तिरेव विषयो वाच्यः, समानाकारकप्रतीत्योर्विभिन्नविषयकत्वस्यानुचितत्वात् । किञ्च
वर्णाभिव्यक्तिजनकः कण्ठताल्वाद्यभिघात एवोच्चारणपदार्थो ननु वर्णोत्पत्त्यनुकूल इत्यत्र मानाभावः ।
किञ्च शब्दानित्यत्ववादिनये 'उत्पद्यते वर्णः' 'वर्णमुत्पादयति' इत्यादिव्यवहार इष्ट एवेति नानु-
भवविरोधोऽपीत्यत आह—किञ्चेति । उत्पत्त्यादेरिति—आदिना 'विनष्टो वर्णः' इति प्रतीतिसाक्षिको विनाशो
ग्राह्यः । परम्परया=स्वाश्रयध्वनिव्यङ्ग्यत्वसम्बन्धेन । स्वः=उत्पत्तिः । नाशस्य च स्वप्रतियोगिव्यङ्ग्यत्वरूपा पर-
म्परा । स्वः=नाशः, तत्प्रतियोगी ध्वनिः । सा 'उत्पन्नो वर्णः' विनष्टो वर्णः, इत्यादिरूपा प्रतीतिः । अतिरिक्तवर्णेति-
अनित्यवर्णेत्यर्थः । अतिरिक्तवर्ण इत्यस्य 'स्फोट' इत्यर्थस्तु न, वर्णनित्यत्ववादिमीमांसकमते स्फोटानङ्गी-
कारात् । ननु ध्वनिनिष्ठोत्पत्त्यादेरुक्तपरम्परया नित्यवर्णेष्वपि प्रतीतौ भ्रमत्वापत्तिरत आह—परम्परयेति—
स्वाश्रयसंयोगसम्बन्धेन स्फटिके जपाकुसुमगतरक्तत्वावगाहिन्याः 'रक्तः स्फटिकः' इति प्रतीतेर्यथा न भ्रमत्वं
तेन सम्बन्धेन रक्तत्वस्य स्फटिके सत्त्वात्, तथोक्तपरम्परया नित्यवर्णेष्वप्युत्पत्त्यादेः सत्त्वाद् भ्रमत्वाभाव
इति भावः । ननु परम्परया प्रतीतौ भ्रमत्वाभावेऽपि साक्षात्सम्बन्धेन उत्पत्तेः स्वाश्रयत्वेन नाशस्य स्वप्रति-
योगित्वेन नित्यवर्णेष्वभावाद् भ्रमत्वं तदवस्थमेवेत्यत आह—भ्रम इत्यवशिष्यत इति— साक्षात्सम्बन्धेन

दर्पणव्याख्या

*अत एवेति* अनुभवविरुद्धत्वादेवेत्यर्थः । *प्रत्ययः*=ज्ञानम् । *व्यवहारः*=शब्दप्रयोगः । ननूच्चारणमपि तदुत्प-
त्त्यनुकूलो व्यापार एव । तथाच सर्वप्रतीतिर्वर्णानित्यत्वसाधिकेत्यत आह—* उच्चरितत्वञ्चेति * अभिव्यक्तिविशिष्टत्व
तद्विषयत्वम् । तथाच तादृशप्रत्ययाभिव्यक्तिनिष्ठ वर्णनिरूपितविषयित्वमेव विषयीक्रियते, न तूत्पत्त्यादिर्वर्णवृत्तित्व मति न
साऽनित्यत्वसाधिकेति भावः । ननु वर्णाभिव्यक्तिजनक कण्ठताल्वाद्यभिघात एवोच्चारणपदार्थ, ननु वर्णोत्पत्तिजनक इत्यत्र
किं प्रमाणम् । किञ्च वर्णानित्यत्ववादिनामुत्पद्यते वर्णो वर्णमुत्पादयतीत्यादिप्रयोगा इष्टा एवेति नानुभवविरोधोऽपीत्यत
आह—* किञ्चेति * उत्पत्त्यादेरित्यादिना 'विनष्टो वर्णः' इति प्रतीतिसाक्षिकविनाशः परिगृह्यते । * परम्परया *=
स्वाश्रयध्वनिव्यङ्ग्यत्वरूपया । * नातिरिक्तेति *—वर्णानित्यत्वसाधिकेत्यर्थः । ननु स्फोटातिरिक्तेति तदर्थः, तैः स्फोटा-
नङ्गीकारात् । नन्वेवं ध्वन्युत्पत्त्यादेस्तादृशप्रतीत्या वर्णेष्ववगाहने भ्रान्तत्वापत्तिरत आह—* परम्परया वर्णेति *
स्वाश्रयसंयोगावगाहिन्या 'लोहितः स्फटिकः' इति प्रतीतेर्यथा न भ्रमत्वम्, तथाऽस्या अपीति भावः । * अवशिष्यते *

तदपि सोऽयमित्यत्र व्यक्त्यभेदांशे तव भ्रमत्ववत्तुल्यम्। परन्तु ममातिरिक्तवर्णतत्प्रागभावध्वंसकल्पना नेति लाघवमतिरिच्यते। नच वर्णस्थले ध्वनिसत्त्वे मानाभावः, तदुत्पादकशङ्खाद्यभावेन तदसम्भवश्चेति वाच्यम्, ककाराद्युच्चारणस्थले तत्तत्स्थानस्य जिह्वाया ईषदन्तरपाते वर्णानुत्पत्तेर्ध्वन्युत्पत्तेश्च दर्शनात्, जिह्वाभिघातजवायुकण्ठसंयोगादेर्ध्वनिजनकत्वकल्पनात्।

प्रभा

नित्यवर्णपूत्पत्त्याद्यवगाहिनी या प्रतीतिस्तस्या भ्रमत्वरूपदूषणमवशिष्यत इत्यर्थः। तदपि=नित्यवर्णवादिनये उक्तभ्रमत्वरूपदूषणमपि। व्यक्त्यभेदांश इति–'अनित्यो वर्णः' इति नैयायिकमते कालान्तरे उच्चरितस्य अधुना उच्चरितस्य च गकारस्य तद्व्यक्तित्वेन भेदोऽपि 'सोऽयं गकारः' इत्यभेदावगाहिनी या प्रतीतिस्तस्या अभेदांशविषये इत्यर्थः। तव भ्रमत्ववदिति—तस्याः प्रतीतेर्यथा तव नैयायिकस्य मते भ्रमत्वं तथा साक्षात्सम्बन्धेन नित्यवर्णपूत्पत्त्यादिप्रतीतेर्भ्रमत्वं मम (मीमांसकस्य) मते तुल्यमित्यर्थः। एकस्याः प्रतीतेर्भ्रमत्वापत्तिरूपं दूषणमुभयोः समानमिति फलितोऽर्थः। तथाच 'यस्तूभयोः समो दोषः परिहारस्तयोः समः' इति न्यायेन तद्दूषणमुभाभ्यां सोढव्यमिति भावः। ननु मतद्वयेऽपि दूषणसाम्ये 'अनित्या वर्णाः साक्षादुत्पत्त्यादिमन्तश्च' इति मतोपेक्षा मीमांसकानां निर्बीजा स्यादित्याशङ्कामाह—परन्त्विति। मम=नित्यवर्णवादिनः। अतिरिक्तेति=नित्यवर्णवादे एक एव ककारः, एको गकारः, इत्येवं रूपेण परिगणिता वर्णाः। अनित्यवर्णवादे अनन्ताः ककारगकारादयस्तदुक्तम्—अतिरिक्तवर्णेति=अधिकवर्णेत्यर्थः। तथाचानित्यत्वेऽनन्ता वर्णास्तत्प्रागभावास्तद्ध्वंसाश्च। नित्यत्वे परिगणिता एव वर्णाः। नापि तत्प्रागभावो नापि तद्ध्वंस इति लाघवम्। तदुक्तम्—लाघवमतिरिच्यत इति–अधिकं लाघवमस्तीति भावः। एवञ्चानन्तवर्णतत्प्रागभावतद्ध्वंसकल्पनापेक्षया परम्परासम्बन्धेन नित्यवर्णेपूत्पत्त्यादिप्रतीतिकल्पनायामतिलाघवं वर्णनित्यतावादिनयेऽस्तीति भावः। ननु नित्यवर्णस्थले ध्वने नैयत्यं यदि स्यात् तदा परम्परासम्बन्धेन तद्गतोत्पत्त्यादिकमादाय 'उत्पन्नो गकारः' विनष्टो गकारः, इत्यादिप्रतीतीनामुपपत्तिः स्यात्, तदेव तु न सम्भवति वर्णस्थले ध्वनिसत्त्वे मानाभावादित्याशङ्क्य निराचष्टे—नचेति–वर्णस्थले पार्थक्येन ध्वनेरनुपलम्भादिति भावः। ननु लाघवाद् वर्णानां नित्यत्वे सिद्धे 'उत्पन्नो गकारः' इत्यादिप्रतीत्यन्यथानुपपत्तिरेव तत्र ध्वनिसत्त्वे मानं स्यादत आह-तदुत्पादकेति—शङ्खायोष्ठाभिघातजवायुसंयोगरूपस्य ध्वनिकारणस्याभावादित्यर्थः। तदसम्भव इति=वर्णस्थले ध्वन्युत्पत्तेरसम्भव इत्यर्थः। वर्णस्थले ध्वनिनैयत्यं समर्थयति—ककाराद्युच्चारणेति–ककाराद्युच्चारणस्वरूपयोग्यतासत्त्व इत्यर्थः। वर्णानुत्पत्तेरिति=वर्णानभिव्यक्तेरित्यर्थः। नित्यत्वपक्षे वर्णोत्पत्तेरभावात्। ध्वन्युत्पत्तेरिति—ध्वनेः श्रावणप्रत्यक्षविषयत्वेन तद्गतोत्पत्तेरपि श्रावणप्रत्यक्षविषयत्वमित्यभिप्रायेणेदम्। दर्शनादिति–दृशिरत्र ज्ञानसामान्ये। तेन न श्रावणज्ञानविषयत्वेऽपि तदसङ्गतिः। जिह्वाभिघातजेति–संयोगजसंयोगाभिप्रायेणेदम्। जिह्वातत्तत्स्थानयोरभिघाताख्यसंयोगस्तज्जन्यो यो वायुकण्ठसंयोगादिस्तस्य

दर्पणव्याख्या

इत्यपीत्यत्र वर्णं इति प्रतीतेरपि दोषः। ननु लाघवप्रतीतेर्नियमेन परम्पराकल्पनविषयत्वकल्पने गौरवमत आह— • परन्त्विति •। • अतिरिक्तेति • अधिकेत्यर्थः। तथाचानेकवर्णतद्ध्वंसादिकल्पनापेक्षया तत्प्रतीतेर्नियमतस्ताद्रूप्यसम्बन्धाभ्युपगमे लाघवमेव अस्तीति भावः। यदि वर्णस्थले ध्वनिनैयत्यं स्यात् स्यादेव तदोत्पत्त्यादिप्रतीतेः परम्परासम्बन्धेन वर्णविषयता। तदेव च मानाभावादसम्भवमित्याशङ्क्य निराचष्टे-• नचेति • वर्णस्थले पार्थक्येन ध्वनेरनुपलम्भादिति भावः। [illegible] • तदुत्पादकेति• शङ्खोष्ठाभिघातजवायुसंयोगादेरित्यर्थः।

तस्य च वर्णोत्पत्तिस्थलेऽपि सत्त्वात्तत्रैव प्रतिबन्ध्यप्रतिबन्धकभावकल्पना निष्प्रमाणिकी स्यादिति विपरीतगौरवम् । एवं परस्परविरोधादुदात्तत्वानुदात्तत्वह्रस्वत्वदीर्घत्वादिकमपि न वर्णनिष्ठं युक्तमिति तेषामभिप्रायः । एवञ्चोत्पत्त्यादिप्रतीतीनां तत्प्रमात्वस्य च निर्वाहः परेषामपि

प्रभा

ध्वनिनिष्ठजन्यतानिरूपितजनकत्वानुमानादित्यर्थः । तथाहि—तत्तत्स्थानजिह्वाभिघातजवायुकण्ठसंयोगा-व्यवहितोत्तरजायमानध्वनिं प्रति तत्तत्स्थानजिह्वाभिघातजवायुकण्ठसंयोगः कारणम् , तादृशसंयोगस्य तादृशध्वन्यव्यवहितपूर्वक्षणवृत्त्यन्ताभावाप्रतियोगित्वात् , इत्याद्यनुमानेन कार्य्यकारणभावः सिद्ध्यति । तस्य=तादृशवायुसंयोगादेः । वर्णोत्पत्तिस्थले=वर्णाभिव्यक्तिस्थले । सत्त्वादिति=एवञ्च वर्णतः पार्थक्येनानुभूय-मानाया ध्वनिप्रतीतेः, तत्तत्स्थानजिह्वाभिघातजवायुकण्ठसंयोगादिरूपस्य कारणस्य च सत्त्वात् । 'वर्णोत्पत्ति-स्थले न ध्वनिनैयत्यम्' इति केषाञ्चिदुक्तिः परास्ता । नच वर्णाभिव्यक्तिस्थले ध्वनेः पार्थक्येनानुपलम्भात् तादृशध्वन्युत्पत्तिम्प्रति वर्णाभिव्यञ्जकसामग्र्या अवच्छेदकतासम्बन्धेन, ध्वनिम्प्रति समवायेन वायुकर्ण-संयोगस्य वा प्रतिबन्धकत्वकल्पनाद् ध्वनिनैयत्याभाव इत्याशङ्कायामाह—तत्रैवेति—वर्णस्थले ध्वन्यसत्त्ववा-दिन एवेत्यर्थः । निष्प्रमाणिकेति=निर्गतं प्रमाणं यस्याः सा निष्प्रमाणिका इत्येव पाठः । 'निष्प्रमाणिकी' इति त्वपपाठः । विपरीतेति=लाघवविपरीतेत्यर्थः । वर्णाभिव्यक्तिस्थलेऽध्वनिसत्त्ववादापेक्षया स्वकारणबलाज्जा-यमानध्वनौ वर्णाभिव्यञ्जकसामग्र्याः प्रतिबन्धकत्वकल्पनायामेव गौरवमिति भावः । एवम्=वर्णानां नित्यत्वे एकत्वे चेत्यर्थः । परस्परेति=एकस्मिन्नकारादौ घटत्वपटत्वयोरिवोदात्तत्वानुदात्तत्वादीनां सामानाधिकरण्या-भावरूपविरोधादित्यर्थः । वर्णनिष्ठमिति—नित्यवर्णनिष्ठमित्यर्थः, किन्तुध्वनिनिष्ठमेव । वर्णे तु सम्बन्धान्तरेण प्रतीयते । तेषाम्=मीमांसकानाम् । नच कुड्यादिव्यवधानादिना शब्दे श्रुते प्रमदाशब्दोऽयम्' बालोच्चारित-शब्दोऽयम्' इति भेदज्ञानानुपपत्तिः, अकारादिवर्णानामैक्यात् , अनित्यत्वे तु न दोषः, वर्णानां भेदादिति वाच्यम् , तन्मते बालोच्चरितत्वाद्यनुमापकस्य तत्तदुच्चारितवर्णे वैजात्यस्यासम्भवेऽपि बालाद्युच्चरितत्वताल्वो-ष्ठसंयोगादिगतवैजात्यस्य वर्णेऽध्यारोपेण बालाद्युच्चरितत्वानुमित्युपपत्तेः, धूमत्वेन ज्ञायमानधूल्यादिपदा-र्थान्तरेणापि वह्न्यनुमितेर्दृष्टत्वात् । नच 'सोऽयं गकारः' इति प्रत्यभिज्ञानुरोधेन वर्णानां नित्यत्वमिव 'सेयं दीपकलिका' इति प्रत्यभिज्ञया दीपकलिकाया अपि नित्यत्वमेकत्वञ्च सिद्ध्येदिति वाच्यम् , तत्र प्रत्यक्षप्र-माणेन दीपकलिकाया नाशप्रतियोगित्वे सिद्धे अगत्या प्रत्यभिज्ञाया भ्रमत्वस्य, सादृश्यमूलकाभेदालम्बनस्य वा स्वीकारात् । वर्णानामेकत्वे 'घटिकः' इत्यत्र द्व्यच्लक्षणठन् , 'घटेन' इत्यादौ 'सावेकाचः' इति एका-च्लक्षणमुदात्तत्वादिकञ्च आवृत्तिगतद्वित्वसङ्ख्यया अकारगतैकत्वस्य बाधाद्वारणीये । स्पष्टञ्चेदमइउण् सूत्रे भाष्ये । एतच्चेति=उत्पत्त्यादीनां वर्णावृत्तित्वे चेत्यर्थः । प्रतीतीनामिति=नित्यवर्णेषूत्पत्त्यादिप्रतीतीनां निर्वाह इत्यर्थः । तत्प्रमात्वस्येति—वर्णानां नित्यत्वेऽपि 'उत्पन्नो गकारः' 'विनष्टो गकारः' इत्यादिप्रतीतीनां प्रमा-त्वस्य च निर्वाह इत्यर्थः, नित्येऽपि वर्णे परम्परयोत्पत्त्यादेः सत्त्वात् । परेषाम्=वर्णनित्यत्ववादिनां मीमां-

दर्पणव्याख्या

*वर्णानुत्पत्तेरिति* वर्णानभिव्यक्तेरित्यर्थः । *दर्शनादिति* दृशिर्ज्ञानसामान्यार्थः । सत्त्वादिति–तथाच पार्थक्येना-नुभूयमानायाः प्रतीतेर्जिह्वाभिघातजकण्ठवायुसंयोगादेर्हेतोश्च सत्त्वात् वर्णाभिव्यक्तिस्थले ध्वन्यनैयत्यमित्युक्तमप्रामाणिकमिति भावः । * तत्रैवेति * वर्णस्थले ध्वन्यसत्त्ववादिन एवेत्यर्थः । * विपरीतगौरवमिति * स्वकारण-बलाज्जायमाने ध्वनौ वर्णोत्पादकसामग्र्याः प्रतिबन्धकत्वकल्पनाध्वन्यकल्पनाप्रयुक्तलाघवापेक्षया विपरीतगौरवप्रसक्तेति यावत् । तेषामिति वर्णनित्यतावादिनां मीमांसकानामित्यर्थः । * एवञ्चेति * उत्पत्त्यादीनां वर्णावृत्तित्व इत्यर्थः ।

इत्थञ्च पञ्चधा व्यक्तिस्फोटाः।

प्रभा

भाष्यादिसम्मतेऽखण्डस्फोटवादे न किञ्चिद्बाधकमिति तत्त्वम्। इत्थञ्चेति=उक्तप्रकारैरित्यर्थः। पञ्चेति—१ वर्णस्फोटः, २ सखण्डपदस्फोटः, ३ सखण्डवाक्यस्फोटः, ४ अखण्डपदस्फोटः, ५ अखण्डवाक्यस्फोटश्चेति पञ्च व्यक्तिस्फोटा इत्यर्थः। वर्णस्फोटे सखण्डभेदस्तु न, वर्णावयवानां निरर्थकत्वात्, सार्थकस्यैव स्फोटत्वात्। ननु स्फोटवादिनये मीमांसकसिद्धान्तो विरुध्येत। तथाहि—'स्वर्गकामो यजेत' इत्यत्र यागे साधनाकाङ्क्षायां यस्य कस्यचन द्रव्यस्याक्षेपे प्राप्ते 'व्रीहिभिर्यजेत' इति श्रुतिर्नियमयति—'व्रीहिभिरेव यजेत नान्यैः' इति। तत्र कश्चन यागे आरब्धे व्रीहेरलाभे सति नित्यकर्मणः प्रारब्धकर्मणश्च लोपो मा भूदिति प्रतिनिधिरुपादीयते। नच प्रतिनिधेरुपादाने व्रीहिश्रुतिविरोधः, तत्र श्रुतौ व्रीहे र्यागसाधकशक्त्युपलक्षणत्वेन शक्तिमतः प्रतिनिधेरपि श्रौतत्वात्। तथाच स्फोटवादिनये 'व्रीहिभिर्यजेत' इति श्रुत्या अखण्डार्थस्यैव बोधेन व्रीहेः पृथगनुपस्थितया प्रतिनिधिर्नोपपद्यते। मुख्यस्यालाभे तत्सदृशो य उपादीयते स प्रतिनिधिरित्युच्यते। प्रकृते च वाक्यार्थस्याखण्डतया मुख्यस्य नृशृङ्गतुल्यत्वेन श्रुतेर्नियमार्थत्वस्य प्रतिनिधित्वस्य चानुपपत्तिः। व्रीहिभिर्यजेत' इत्यखण्डवाक्यार्थस्य अखण्डवाक्यार्थः नीवारककरणयागः प्रतिनिधिः क्रियते चेत्तर्हि व्रीहिश्रुतिबोधितयागक्रियातः नीवारकरणकयागक्रियाया भिन्नतया 'क्रिया न प्रतिनिधीयते द्रव्यन्तु प्रतिनिधीयते एव' इति सिद्धान्तभङ्गः। एवम् 'श्वेतछागमालभेत' इति श्रुत्या आलम्भनं विधीयते। तत्र छागस्यालम्भनक्रियया श्रौतः सम्बन्धः, द्वितीयाश्रुत्या (शब्देन) बोधितत्वात्। श्वेतगुणस्य त्वालम्भनासम्भवाद् वाक्यप्राप्तद्रव्यद्वारा सम्बन्धः। तत्र श्वेतच्छागालाभे श्वेतगुणविशिष्टो मेषो नालभ्यते, किन्त्वन्यवर्णविशिष्टोऽपि छाग एवालभ्यते, आलम्भनक्रियया छागसम्बन्धस्य छागपदोत्तरद्वितीयारूपश्रुत्या बोधितत्वादिति द्रव्यान्तरसम्बन्धस्य वाक्येन प्रापितत्वात् 'श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां पारदौर्बल्यम्, अर्थवि-

दर्पणव्याख्या

अभिव्यक्तिः सती, असती वा। नाद्यः, घटानुत्पत्तिदशायां घटस्येव तस्या अपि सत्वाद् घट इति प्रतीत्यापत्तेः। अभिव्यक्तेरप्यभिव्यक्त्यङ्गीकारे तु तस्या अपि कार्यत्वेन सत्त्वानुक्तदोषो दुरुद्धर एव। अन्त्ये—स्वसिद्धान्तव्याघातः युक्तितौल्येन पदार्थान्तरस्याप्युत्पत्तिसिद्धेरिति। किञ्चोत्पन्नो घटो नष्टो घट इति प्रतीत्या घटादीनामनित्यत्ववदुत्पन्नः ककारो नष्टः स ककार इत्यविलक्षणप्रतीत्या ककारादीनामनित्यत्वमेवावधार्यते। ककारादीनां संयोगधर्मत्वन्तु दुरुपपादमेव। वर्णसमवेतत्वेन नच तत्सम्बन्धस्य श्रोत्राग्राह्यत्वप्रसङ्गात्। न चात्रसन्निकर्षादेव तत्प्रत्ययोपपत्तिः, तथा सति शब्दत्वादिप्रत्यक्षानापत्तेः। शब्दं शृणोमीति प्रतीतेः समवायविषयकत्वदुक्तप्रतीतेरपि तद्विषयकत्वेनोपपत्तेः। ककारं शृणोमीति प्रतीतौ भाने प्रमाणमस्ति, वर्णसमवेतत्वस्य तत्राभ्युपगमेन विषयाबाधात्। एवञ्च सेयं। समवायादौ सर्वत्र तादृशप्रतीतीनां भ्रमत्वमित्यपि न सङ्गच्छेत इति दृष्टान्तदौर्भिक्ष्यमेव। एवञ्च वर्णप्रागभावध्वंसानां वर्णानामनेकत्वेन तत्रोदात्तत्वादिप्रतीतिरपि स्वरसतः तत्कल्पनागौरवमपि। नच वर्णानित्यतावादिमते सोऽयं गकार इति प्रत्यभिज्ञानुपपत्तिः, प्रमाणसिद्धानामपलपितुमशक्यत्वाच्च यत्र प्रत्यभिज्ञाया गत्वादेर्जातित्वेन तस्यास्तज्जातीयत्वविषयत्वेनोपपादने तु तज्जातीयोऽयमित्येवाकारः स्यादिति वाच्यम्, तत्र तु स्वरूपेण तत् तत्र सोऽयमित्याकार इत्यभ्युपगमात्, तज्जातीयाभेदावगाहित्वात्तदेवौषधमित्याकारायाः प्रत्यभिज्ञायाः सर्वसिद्धत्वाच्च। तस्माद् वर्णात्मकस्फोटस्य वाचकत्वमसम्भवदुक्तिकमेव। मानं तत्रैव तस्यास्तज्जातीयोऽयमित्याकार, तत्र स्फोटस्य ध्वन्यतिरिक्तत्वाभावाच्च योगशास्त्रादौ तस्य निरूपणं तूपासनार्थमेवेति प्रागुक्तप्रायम्। सखण्डस्फोटस्तु प्रागेव निरस्त इत्यानुपूर्व्यवच्छिन्नवर्णानां वाचकत्वमूह्यमिति वदन्ति। * इत्थमिति * पूर्वोक्तप्रकारैरित्यर्थः। * पञ्चधेति * वर्णात्मकवाक्यखण्डपदाखण्डवाक्यभेदभिन्ना इत्यर्थः॥ ७०॥ इति भूषणसारदर्पणे व्यक्तिस्फोटनिरूपणम्॥

प्रभा

प्रकर्षात्' इति न्यायेन श्रुत्यबोधितगुणसम्बन्धस्यैव त्याग इति गुणान्तरविशिष्टच्छागालम्भनं युक्तमित्युक्तं तत्सर्वं विरुद्ध्येत। किञ्च व्याकरणसिद्धान्तविरोधोऽपि स्यात्। तथाहि—समानाधिकरणपदार्थयोरभेदान्वयः, पूर्वपदार्थोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, इत्यादिवैयाकरणनिकायप्रसिद्धव्यवहारानुपपत्तिः, अखण्डपक्षे पूर्वोक्तस्य सर्वस्यासम्भवात्। पदार्थनिबन्धनमीमांसकोक्तस्य 'श्रुति-लिङ्ग' इति न्यायस्यासङ्गत्यापत्तेश्चेति चेन्न, यथा पदेषु कल्पितप्रकृतिप्रत्ययविभागमादाय प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्प्रत्ययानामित्यादिव्यवहारस्तथाऽखण्डेषु वाक्येषु वस्तुतः पदानामसत्त्वेऽपि आवापोद्वापाभ्यां कल्पितपदान्यादाय मीमांसाभिमतस्य वैयाकरणसम्मतस्य च सकलप्रकृतिप्रत्ययपदाद्याश्रितविचारस्य निर्बाधमुपपादयितुं शक्यत्वात्। बलाबलाधिकरणेषु श्रुति-लिङ्गादीनां बलाबलाभावविचारो जैमिनीयैरेवमेवोपपाद्य। यद्यपि वस्तुतो वाक्यस्याखण्डत्वे तादृशकल्पनाया भ्रमरूपत्वाद् ऋषीणां तत्त्ववेत्तृत्वेन तदसम्भवः (कल्पनाऽसम्भवः) तथापि व्यवहारकाले तत्त्वज्ञैरपि तैरतत्त्वज्ञैरिव तत्त्वभूतेन वस्तुना व्यवहारासम्भवात् कल्पितैरेव पदपदार्थैर्वाक्यार्थविचारः क्रियते इति स्वीकारेण तेषां वचनावलम्बेनैव तदीयानां विचारसरणिरिति सर्वमनवद्यम्। नैयायिकास्तु उत्पत्त्यादिप्रतीतिदर्शनाद् वर्णानामनित्यत्वमेव। भेरीदण्डादीनां ध्वन्यात्मकशब्दं प्रति कारणत्वमिव कण्ठादिस्थानवायुसंयोगादीनामपि अन्वयव्यतिरेकाभ्यां वर्णोत्पादकत्वमेव प्रतीयते। न चोत्पत्तिस्वीकारेऽस्मन्मते तन्नाशकसामग्र्यभावात् उत्पन्नस्य वर्णस्य तृतीयक्षणे नाशायोगः, प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशम्प्रति स्वाव्यवहितोत्तरत्व–स्वसामानाधिकरण्योभयसम्बन्धेन योग्यविभुविशेषगुणस्यैव हेतुताया ज्ञानादिस्थले क्लृप्तत्वात्। न च वर्णोत्पादकत्वेनाभिमतसामग्र्या वर्णाभिव्यक्तिरेव जायते, नतु वर्णोत्पत्तिरिति वाच्यम्, वर्णाभिव्यक्तित्वस्य कार्यतावच्छेदकत्वे गौरवेण वर्णवृत्तिकत्वादिजातेरेवावच्छेदकत्वकल्पने लाघवात्। न चाभिव्यक्त्युत्पत्तिवादेऽपि स्वविषयकत्वादिजातेरेव विषयितासम्बन्धेनावच्छेदकत्वेन गौरवाभाव इति वाच्यम्, एवं स्वीकारे कोलाहलादौ कत्वादेरभावेन तदप्रत्यक्षत्वापत्तेः। नहि कोलाहलप्रत्यक्षं कत्वादिविषयकं येन लौकिकविषयतया कार्यतावच्छेदकं स्यात्। किञ्चैवं घटाद्युत्पादकसामग्र्या अपि तदभिव्यक्तिजनकत्वस्यैव कार्यतावच्छेदकत्वापत्तौ घटादिजन्यमात्रस्य नित्यत्वापत्तेः। न च सांख्यमताभिप्रेतसत्कार्यवादिसिद्धान्तेन भावमात्रे नित्यत्वस्येष्टतया नापत्तिरिति वाच्यम्, सूक्ष्मेक्षिकया पर्यालोचनेन तन्मतस्याप्यापातरमणीयत्वात्। तथाहि—कारणेन कार्यस्याभिव्यक्तिरेव, नतूत्पत्तिरिति तन्मतम्, तच्चानुपपन्नम्, कार्याणामभिव्यक्तिः कारणव्यापारात्प्राक् सती, असती वा। नाद्यः, त्वन्मते घटोत्पत्तेः प्रागपि घटस्य सत्त्वेन अभिव्यक्तिरूपकार्यस्यापि सत्त्वस्यावश्यकतया घटस्य प्रत्यक्षत्वापत्तेः। न च कारणव्यापारात्प्रागनभिव्यक्ताया एवाभिव्यक्तेः सत्त्वेनाभिव्यक्ताया अभिव्यक्तेरेव प्रत्यक्षत्वप्रयोजकतया नोक्तापत्तिरिति वाच्यम्, अभिव्यक्तेरप्यभिव्यक्त्यङ्गीकारेऽनवस्थापत्तेः। नान्त्यः, कारणव्यापारात्प्राक् कार्यमात्रस्य सत्त्वमते अभिव्यक्तेरपि कार्यतया तदसत्त्वाङ्गीकारे स्वसिद्धान्तभङ्गापत्तेः। किञ्च 'उत्पन्नो घटः' 'नष्टो घटः' इति प्रतीत्या घटादीनामनित्यत्ववत् 'उत्पन्नः ककारः' नष्टः ककारः' विनष्टः ककारः इति प्रतीतिबलाद्वर्णानामनित्यत्वमेवोचितम्, प्रतीतेः समत्वे वैषम्ये बीजाभावात्। किञ्च वायुगतस्य, तत्संयोगगम्यस्य वा कस्यचिद् वर्णे स्फोटे वा मानाङ्गीकारे तत्प्रत्यक्षानुपपत्तिः, स्वसमवेतसमवायसन्निकर्षेणैव कत्वादिप्रत्यक्षप्रयोजकतया कत्वादेर्वर्णासमवेतत्वेन प्रत्यक्षत्वस्य दुरुपपादत्वात्। स्वम्=श्रोत्रेन्द्रियम्। न च स्व (श्रोत्र) संयुक्त (वायु) समवायसन्निकर्षेण स्वसमवेतस्य तत्समवायसन्निकर्षेण वा तत्प्रत्यक्षसम्भव इति वाच्यम्, तथा सति गन्धत्वादेरपि प्रत्यक्षत्वापत्तेः। न च 'ककारं शृणोमि' इति प्रतीतौ शब्दत्वसम्बन्धावच्छिन्या न शब्दत्वभानमिति वाच्यम्, 'शब्दं शृणोमि' इति प्रतीतेः सत्त्वात्, 'शब्दं शृणोमि' इति प्रतीतेः

जातिस्फोटमाह —
शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम् । औपाधिको वा भेदोऽस्तु वर्णानां तारमन्दवत् ॥ ७१ ॥
शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम् । उक्तरीत्या च 'सोऽयं गकारः' इतिवत् ,
अयं भावः—वर्णास्तावदावश्यकाः । उक्तरीत्या च 'सोऽयं गकारः' इतिवत् ,

प्रभा

समवायविषयकत्वदुक्तप्रतीतेरपि समवायविषयकत्वस्यौचित्याच्च । नच 'ककारं शृणोति' इति प्रतीतेः समवायविषयत्व-
समवायविषयकत्वांशे भ्रम, सर्वत्र तादृशप्रतीतेर्भ्रमत्वकल्पने मानाभावेन प्रतीतेः समवायविषयत्व-
कल्पनस्यैवौचित्यात् । एवञ्च वर्णानामेकत्वे उदात्तत्वादीनां साक्षात् वर्णधर्मत्वेऽपि बाधकाभावेनान्यगत-
धर्मारोपे दैर्घ्यादिदृष्टान्तस्यापि दौर्भिक्ष्यमेव । प्रामाणिकगौरवस्यादोषावहत्वादनित्यत्वे अनन्तवर्णतत्प्राग-
भावध्वंसकल्पनमपि न दोषाधायकम् । न चानित्यत्वे 'सोऽयं गकारः' इति प्रत्यभिज्ञानुपपत्तिः, 'तदेवेदं
शकटम्' इति वत्तज्जातीयविषयकत्वेनापि प्रत्यभिज्ञोपपत्तेः । नचैवं 'तज्जातीयोऽयम्' इति व्यवहारस्या-
प्यापत्तिरिति वाच्यम्, यत्राभिज्ञायां गत्वादेर्जातिरनेन भानं तत्रैव प्रत्यभिज्ञायाः- 'तज्जातीयोऽयं
गकारः' इत्याकारकत्वनियमेन स्वरूपतो गत्वाद्यभिज्ञाने एव स्वरूपतो गत्वाद्यभिज्ञाया एव नियमात् ।
एवञ्च नित्यवर्णसमुदायात्मकपदादेः स्फोटस्य च वाचकत्वं दुर्वचम् । पुराणादौ योगादिशास्त्रे च स्फोट-
निरूपणन्तूपासनार्थमेव, इत्यानुपूर्व्यवच्छिन्नानां वर्णानामेव वाचकत्वं युक्तियुक्तमित्याहुः ॥ ७० ॥
जातिस्फोटमिति—अत्रेदं तत्त्वम् , यथा घटादिशब्दानामर्थगता जाति ( धर्म ) रेव वाच्या, लाघवा-
द्व्यभिचाराच्चेति शक्तिनिरूपणे उक्तम्; तथा जातेर्वाचकघटादिशब्दस्तद्गता घटत्वादिजातिरेति
विकल्पे व्यक्तिवाद इव घटशब्दानामानन्त्याद् व्यभिचाराच्च शब्दगता जातिरेव वाचिका-लाघवादव्यभि-
चाराच्च । तथाहि व्यक्तिरूपस्य घटाद्यर्थस्य यथाऽऽनन्त्यम् , तथा व्यक्तिरूपस्य घटशब्दस्याप्यानन्त्यम् ।
तथाच तस्य वाचकत्वं न सम्भवति प्रत्युच्चारणं शब्दभेदेन इदानीमुच्चरिते एतदुच्चरिते वा शक्तिस्वीकारे
कालान्तरे उच्चरिते भिन्नपुरुषेण वोच्चरिते शक्तिर्न सिद्ध्येत् , वृद्धव्यवहारादिनैकत्रैव शक्तिग्रहात् । बोधस्तु
एकत्र शब्दे शक्तिग्रहे कृते घटादिशब्दमात्रादिष्यते । किञ्च सर्वेषां शब्दानां शक्तिमत्त्वे वाचकानन्त्यं
तज्ज्ञानासम्भवश्चेति घटादिशब्दगता जातिरेव वाचिका न जात्याश्रयः शब्दः । तदयं निर्गलितोऽर्थः—
जातिरूपकल्पित एव स्फोटो वाचको न तु जात्याश्रयरूपकल्पितः, अनन्तस्फोटानां वाचकत्वापत्तेः ।- जाति-
स्फोटस्य वाचकत्वे तु जातेरैक्यात्तत्तादात्म्यापन्नस्फोटस्याप्यैक्यमिति न दोषः । यद्यपि घटत्वपटत्वजाति-
भेदेन स्फोटस्यापि भेदस्तथापि व्यक्तिकृतभेदो नास्तीति हि तत्त्वं तदाह—जातिस्फोटमाहेति । शब्दगता या
जातिः सैव नैयायिकादिभिरानुपूर्वीशब्देन व्यवह्रियते । शक्यत्व इवेति—जातेः शक्यत्वे लाघवमिव शब्द-
गतजातेः शक्तत्वे लाघवम्—ईक्ष्यताम्=द्रष्टव्यम् । वाशब्द एवार्थे । भेदस्तु=स्फोटभेदस्तु—औपाधिक एव—
नानाजातिरूपोपाधिकृत एवास्त्वित्यर्थः । वर्णानाम्=मीमांसकाभिमतानां नित्यानां वर्णानाम् । तारत्वम्=
उच्चैस्त्वम् । मन्दत्वम्=अल्पत्वं यथाऽऽरोपितं भासते, नतु वास्तविकम् । यथा वा परम्परया भासते न तु
साक्षादिति भाव. । ननु स्फोटस्य ब्रह्मरूपत्वेनाखण्डत्वान्निर्धर्मत्वाच्च तत्र जातेरभावेन तद्वाचकत्व
विचारो गगनकुसुमायमान इत्याशङ्कामपनेतुमाह—अयम्भाव इति । आवश्यका इति—गत्वविशिष्टव्यक्तयो
गकारादय अवश्यं स्वीकार्याः । उक्तरीत्येति—अस्य 'अन्यथा' इत्यादिः । वर्णमस्वीकृत्य स्फोटाङ्गीकाररीत्ये-

दर्पणव्याख्या

क्रमप्राप्तं जातिस्फोटं निरूपयति—* शक्यत्व इवेति * ननूक्तरीत्या स्फोटातिरिक्तवर्णानामसत्त्वात्तद्गतजातेर्वा-
चकत्वविचारः काकदन्तपरीक्षासमोऽत आह सारे—*अयम्भाव इति* हकारगकारयोरभेदे साधकमाह—

योऽयं गकारः श्रुतः सोऽयं हकार इत्यपि स्यात्, स्फोटस्यैकत्वात्, गकारोऽयं न हकार इत्यनापत्तेश्च। किञ्च स्फोटे गत्वाद्यभ्युपेयम्, न वा ? आद्ये तदेव गकारोऽस्तु। वर्णनित्यतावादिभिरतिरिक्तगत्वानङ्गीकारात्। तथाऽत्यतिरिक्तस्फोटकल्पने एव गौरवम्। अन्त्ये—गकारादिप्रतीतिविरोधः। वायुसंयोगवृत्ति, ध्वनिवृत्ति वा वैजात्यमारोप्य तथा प्रत्यय इति चेन्न, प्रतीतेर्विना बाधकं भ्रमत्वायोगात्। अस्तु वा वायुसंयोग एव गकारोऽपि।

प्रभा

त्यर्थः। सोऽयं गकार इति—यथापूर्वमुच्चरितगकारविषयिका इयं प्रत्यभिज्ञा स्फोटस्यैक्येनोपपद्यते। तथा वर्णाभावे स्फोटमात्राङ्गीकारे गकारहकारयोरप्यैक्येन गकाराभिज्ञानेऽपि हकारविषयिणी प्रत्यभिज्ञा प्रमात्मिका स्यादित्याह—इत्यपि स्यादिति। स्फोटस्यैकत्वादिति—एकस्यैवाखण्डस्फोटस्य सकलवर्णरूपत्वादित्यर्थः। यत्तु दर्पणकारादयः—'तदभिन्नाभिन्नस्य तदभिन्नत्वम्' इति नियमेन हकाराभिन्नस्फोटाभिन्नगकारे तद् (हकार) अभेदावगाहिबुद्धेः प्रमात्वापत्तिरित्यर्थ इति तन्न, स्वाभिन्नद्वारकस्वस्वरूपानुगमस्थले एव तन्न्यायविषयत्वात्। यथा कार्यकारणयोरभेदवादिनये प्रकृतेः कार्यं महत्तत्त्वमिति तयोरभेदः, महतः कार्यमहङ्कार इति तयोरप्यभेदः। तथाचाहङ्कारे प्रकृत्यभिन्नमहदभिन्नत्वेन प्रकृत्यभिन्नत्वम्। नहि प्रकृते हकाराभिन्नस्फोटद्वारकगकारस्वरूपानुगमः, स्फोटे हकाराभेदाज्ञानेऽपि गकारे स्फोटाभेदानुगमात्। ननु स्फोटमात्रवादिनये 'योऽयं गकारः श्रुतः सोऽयं हकारः' इति प्रतीतिरिष्टैव, अद्वैतवादिमते 'योऽयं देवदत्तः स यज्ञदत्तः' इति यदिष्यत आह—अनापत्तेश्चेति—स्फोटात्मकगकारहकारयोरैक्येन भेदावगाहिबुद्धेर्बाधादिति भावः। ननु स्फोटैक्येऽपि कत्वगत्वादिविरुद्धधर्माध्यासमूलकभेदानुभवेन नोक्तापत्तिः। नचाऽध्यस्तकत्वादिमादाय भेदावगाहित्वे तत्प्रतीते. प्रमात्वानुपपत्तिः, प्रमात्वस्य तन्मते दूरापास्तत्वादित्यत आह—किञ्चेति। गत्वादीति—उपाधित्वेनाभिमतमनारोपितं गत्वादीत्यर्थः, आरोपितगत्वादेर्नित्यानेकवर्णवादिनाप्यङ्गीकाराद्यथाश्रुतासङ्गतेः। आद्ये—स्फोटे गत्वाद्यङ्गीकारे। तदेव=अनारोपितगत्वाद्येव। गकारोऽस्त्विति—नच गत्वं जातिर्नतु वर्ण इतीदमसङ्गतम्, वर्णनित्यतावादिना मीमांसकेन धर्मधर्मिणोरभेदेन गत्वाद्यतिरिक्तवर्णानङ्गीकारात्। तदाह—अतिरिक्तेति। एवेति=एवेन स्फोटनिरासः। गकारोऽपीति—गत्वेन प्रतीति विषयोऽपीत्यर्थः। तथाच

दर्पणव्याख्या

•स्फोटस्यैकत्वादिति• तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेन हकारात्मकस्फोटाभिन्नगकारे तदभेदावगाहिबुद्धेः प्रमात्वापत्तिरित्यर्थः। •अनापत्तेश्चेति• अभेदादेव च तादृशभेदावगाहिबुद्धेः प्रमात्वानुपपत्तेरित्यर्थः। ननु वर्णात्मकस्फोटस्यैकत्वेऽपि गत्वादिविरुद्धधर्माध्यासमूलकभेदप्रतीतेर्नोपपत्तिः। प्रामाण्यन्तु यथा वर्णैक्यवादिमते दूरापास्तमेवेत्यत आह—•किञ्चेति• उपाधित्वाभिमतगत्वादीत्यर्थः। •आद्ये•—स्फोटे गत्वाद्युपगमपक्षे। •तदेव•=गत्वमेव। ननु गत्वादेर्वर्णधर्मतया भेदेन कथं तस्य तदात्मकत्वम् [illegible] आह—•वर्णनित्यतावादिभिरिति• मीमांसकादिभिरित्यर्थः। •अतिरिक्तेति• धर्मधर्मिणोरभेदाभ्युपगमादित्यर्थः। •'गौरवमिति• गकारादिप्रतीतीनां गत्वादिविशिष्टगकारादिविषयकत्वेनोपपत्तिसम्भवादिति भावः। •अन्त्ये•—स्फोटे गत्वाद्यनभ्युपगमपक्षे इत्यर्थः। •विरोध इति•। गादिप्रतीत्यनुपपत्तिरित्यर्थः। [illegible] स्फोटवृत्तित्वेन तद्विशिष्टविषयकप्रतीत्यनुपपत्तिरिति भावः। वायुसंयोगवृत्तीति •—तन्मते •ध्वनिवृत्तीति•—[illegible]। पूर्वोक्तरीत्या [illegible] प्रतीतेः [illegible] आह—• आरोप्येति •। •भ्रमत्वायोगादिति• [illegible] प्रमाणाभावादिति भावः। [illegible] आह—•अस्तु वेति• [illegible]

इदं हरिपदमित्यनुगतप्रतीत्या हर्युपस्थितित्वावच्छेदेन हरिपदज्ञानत्वेन हेतुत्वात्तदवच्छेदकतया च जातिविशेषस्यावश्यकल्प्यत्वात् । नच वर्णानुपूर्व्यैव प्रतीत्यवच्छेदकत्वयोर्निर्वाहः, घटघटत्वादेरपि संयोगविशेषविशिष्टमृदाकारादिभिश्चान्यथासिद्ध्यापत्तेः ।

प्रभा

रनयेति जातेरेवात्राभिधानात् । तदुक्तम्—'द्रव्यगुणकर्मणां सामान्यमाकृतिः' इति । एवं पदानामानन्त्याद् व्यभिचाराच्च पदगता जातिरेव वाचिका, जातिरूपेण भासमानः स्फोट एव वाचक इति यावत् । ननु तादृशवर्णगतपदत्वजातिसत्त्वे मानाभाव इत्यत आह—इदमिति—उच्चारणभेदेन पदानामानन्त्याद् 'इदं हरिपदम्' इत्येकाकारकसकलश्रावणप्रत्यक्षात्मकप्रतीतेर्जातिविषयकत्वं विना नोपपद्यत इत्यनुगतप्रतीत्या जातिः सिध्यति । नन्वनुगतप्रतीतेर्जातिसाधकत्वे विभुत्वादेरपि जातित्वापत्तिरिति कार्यकारणतावच्छेदकतयैव जातिसिद्धिरिति नैयायिकसिद्धान्तः । प्रकृते च तदभावान्न पदत्वजातिरित्यत साधकान्तरमाह—हर्युपस्थितीति—शाब्दत्वव्याप्यहर्युपस्थितित्वावच्छिन्नं प्रतीत्यर्थः । तेन चक्षुरादिना हर्युपस्थितिमादाय न व्यभिचारः हरिपदज्ञानस्य कारणत्वे ज्ञाते विषयित्वसम्बन्धेन पदस्य विशेषणतया पदावच्छिन्ना कारणता वाच्या । पदनिष्ठाऽवच्छेदकता यदि तद्व्यक्तित्वावच्छिन्ना तदा तद्व्यक्तित्वस्यानन्त्येन कारणतावच्छेदकतावच्छेदकत्वे आनन्त्यव्यभिचारयोरापत्तिः । पदगतजातेः कारणतावच्छेदकतावच्छेदकत्वे च जातेरैक्याद् व्यभिचारानन्त्ययोरभाव इत्याह—तदवच्छेदकतयेति=हेतुतावच्छेदकतावच्छेदकतयेत्यर्थः । यद्वा तदवच्छेदकतया=स्वाश्रयावच्छिन्नत्वसम्बन्धेन हेतुतावच्छेदकतयेत्यर्थः । जातिविशेषस्य=पदगतजातिविशेषस्य । आवश्यकत्वादिति—साधयादिति शेषः । ननु हरिपदत्वादिजातेर्घटपदादिष्वतिप्रसक्तिवारणाय हरिपदादिगतानुपूर्व्यास्तन्नियामकत्वं वाच्यमित्येवरया आनुपूर्व्या एवावच्छेदकत्वेनानन्त्यव्यभिचारापत्तिरित्याशङ्कां निराचष्टे—नचेति । प्रतीतिरिति=पदभेदभेदेऽपि 'हरिपदम्' इत्येकरूपा प्रतीतेः, एकस्या अवच्छेदकतायाश्च निर्वाहे जातिकल्पना व्यर्थेति भावः । अन्यथा घटघटत्वादेरिति=अवयवानां संयोगविशेषविशिष्टा मृदेव घटः । तथा आकारादिभिः=अवयवसंस्थानविशेषैश्च 'घटः' इत्यादिप्रतीतिसिद्धौ अवयवाद्भिन्नोऽवयवी न सिद्ध्येदिति भावः । न च दण्डादिकार्यतावच्छेदकतया घटत्वादिजातेरावश्यकता, संयोगविशेषावच्छिन्नमृत्तिकात्वस्यैव दण्डादिकार्यतावच्छेदकत्वस्य वक्तुं शक्यत्वात् । यद्यवयवसंयोगविशेषाणामानन्त्येनाननुगमाद्, एवं संयोगविशेषविशिष्टावयवानां नानात्वात् 'घटः' इति प्रतीतेस्तद्विषयकत्वे गौरवात् 'एको घटः' इति प्रतीत्यनुपपत्तेश्च घटत्वादिजातेराश्रयणमिति चेत्तदा प्रकृतेऽपि तथैव पदादिगतजातिसिद्धिस्तुल्या ।

दर्पणव्याख्या

निरूपणे प्रपञ्चितं । ननु तादृशजातौ मानाभावोऽत आह—* हरिपदमिति * अनुगतधर्मं विना सकलतादृशपदेष्वेकाकारतादृशप्रतीत्यनुपपत्तेरिति भावः । नन्वनुगतप्रतीतिमात्रस्य जातिसाधकत्वे विभुत्वादेरपि जातित्वापत्तिरतः कारणतावच्छेदकत्वादिनैव तत्सिद्धिर्वाच्या, तदभावात् प्रकृते कथं तस्य जातित्वमत आह—* हर्युपस्थितित्वावच्छेदेनेति * कार्यतावच्छेदकप्रदर्शनमिदम् । * अवश्येति * अन्यथा तावत्पदानां तत्तद्व्यक्तित्वेन हेतुतया व्यभिचारेणाप्रभावादिति भावः । * प्रतीत्यवच्छेदकत्वयोरिति * अनुगतप्रतीत्यवच्छेदकत्वयोरित्यर्थः । * वर्णानुपूर्व्यैवेति * तादृशजात्यविषयकत्वेनावश्यकल्प्यया तयेत्यर्थः । * निर्वाह इति * तथाऽवयवस्थाननियतपूर्वोत्तरचिताऽवच्छेदकतानुपूर्व्यैवानुगतप्रतीतिकारणतावच्छेदकत्वयोः सम्भवेन तद्रूपविशिष्टपदोपस्थितित्वेन हेतुत्वमन्यथासिद्धिरिति भावः । * अन्यथासिद्ध्यापत्तेरिति * न च ऐक्य,' प्रत्यक्षादिप्रमाणविरोधादिति भावः । ननु भावे घटत्वे जातित्वं कार्यतावच्छेदकं मान्यम्,

तस्मात् सा जातिरेव वाचिका, तादात्म्येनावच्छेदिका चेति। ननु सरो रस इत्यादौ तयोर्जात्योः सत्त्वेऽर्थ-बोधभेदो न स्यादित्यत आह–औपाधिको वेति। वा त्वर्थे उपाधिरानुपूर्वी, सैव जातिविशेषाभिव्य-ञ्जिकेति भेदः कारणीभूतज्ञानस्येति नातिप्रसङ्ग इति भावः। उपाधिप्रयुक्तज्ञानवैलक्षण्ये दृष्टान्तमाह–वर्णानामिति ॥७१॥ ननु जातेः प्रत्येकं वर्णेष्वपि सत्त्वात् प्रत्येकादर्थबोधापत्तिः स्यादित्यत आह–

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता। कैश्चिद् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ॥७२॥

अनेकाभिर्वर्णव्यक्तिभिरभिव्यक्तैव जातिः स्फोट इति स्मृता । योगार्थतया बोधिकेति

प्रभा

तस्मात्=उक्तरीत्या जातिस्वीकारात्। ननु पदगतजातेर्वाचकत्वे घटपदत्वत्वं वाचकतावच्छेदकं वाच्यम्, तच्च सकलघटपदसमवेतत्वे सति तदितरासमवेतत्वरूपमिति जगतः प्रवेशादतिगौरवमत आह–तादात्म्येनेति–अभेदेनेत्यर्थः। अवच्छेदिकेति–पदत्वजातिगतवाचकताया अवच्छेदिकेत्यर्थः। तथा च जातिगतवाचकताया जातिरेवावच्छेदिकेति न गौरवमिति भावः। तादात्म्यस्य वृत्त्यनियामकत्वेऽपि अवच्छेदकतावच्छेदकत्वे नानुपपत्तिः, स्वाधिकरणसम्बद्धत्वस्यैवावच्छेदकतानियामकत्वात्। जात्योरिति–पदद्वयेऽपि जात्याश्रयीभूत-वर्णानां तुल्यतया रसविषयकोपस्थापिकायाः, सरोविषयकोपस्थापिकायाश्च जातेरेकत्र सत्त्वे विरोधाभावे-नोभाभ्यामुभयबोधापत्तिरितिभावः। उक्तापत्तिं निराकरोति–औपाधिको वेति। प्रकृते विकल्पार्थस्यासङ्गततया-दाह–त्वर्थ इति। त्वर्थोऽत्रावधारणमित्याह–सैवेति=आनुपूर्व्येवेत्यर्थः। तथा च वर्णानां तुल्यत्वेऽपि पौर्वापर्य-रूपानुपूर्वीभेदेनोभयत्रोभयार्थवाचकजातिसत्त्वे मानाभाव इति भावः। अभिव्यञ्जिकेतीति–इतिर्हेतौ। यतोऽभि-व्यञ्जकभेदोऽत एकस्या एव जातेर्व्यक्त्या रसोपस्थितेः सर उपस्थितेश्च कारणीभूतजातिज्ञानस्य भेद इति योजना। एकया आनुपूर्व्या भिन्नं जातिज्ञानम्, अपरया आनुपूर्व्या भिन्नं जातिज्ञानमिति भावः। तारम-न्द्रवदिति=तारत्वमन्दत्ववदित्यर्थः। यथैकेन वायुसंयोगेन तारत्वस्य=उच्चैस्त्वस्य, अपरेण तेन मन्द्रत्वस्य=शनैस्त्वस्य ज्ञानम्। तेन तीव्रं-मन्दमिति ज्ञानभेदः॥ ७१ ॥ जातेरिति=घटपदादिवृत्तित्वेनाभिमतजातेरित्यर्थः, बोधकजातेःसमुदायवृत्तित्वात्समुदायस्यावयवानतिरेकाज्जाते. समुदायावृत्तित्वस्य स्वभावसिद्धत्वात्प्रत्येकाद-र्थबोधः स्यादिति भावः। वर्णव्यक्तीति–आनुपूर्वीविशिष्टवर्णव्यक्तिभिरित्यर्थः। स्फुटति=बोध-र्णाभिव्यञ्जकजात्या बोधः स्यादिति भावः। वर्णव्यक्तीति--आनुपूर्वीविशिष्टवर्णव्यक्तिभिरित्यर्थः। स्फुटति=बोध विषयो भवत्यर्थोऽस्मादिति व्युत्पत्त्या स्फोटपदं बोधकपरमित्याह—योगेति। एतेन=पदघटकयावद्वर्णाभिव्य-

दर्पणव्याख्या

तस्य च तदितरावृत्तित्वविशिष्टसकलवृत्तित्वरूपतया तस्याप्यतो गौरवादत आह—*तादात्म्येनेति* अभेदेनेत्यर्थः। तथाच नाक्तदोष इति भावः। एतत्तत्त्वमभिहितं प्राक्। * जात्योरिति * तयोः पदयो रेफाकारसकारविसर्गघटितत्वा-विशेषाद्रसत्वविशिष्टाप्रत्यायकतावच्छेदकजात्योरेकतरस्या एव सत्त्वात् विनिगमनाभावापत्तौ विलक्षणार्थबोधानुपपत्तिरित्यर्थः। वाशब्दस्य पक्षान्तरपरत्वभ्रमं निराकरोति—* वा त्वर्थ इति * अवधारणे इत्यर्थः। * भेद इति * तथाच तत्र वर्णतौल्येऽप्यानुपूर्वीवैलक्षण्येन रसत्वविशिष्टप्रत्यायकतावच्छेदकजातेर्निष्ठत्वाद्... सम्बन्धेन रविशिष्टरसादिरूपानुपूर्व्या एव व्यञ्जकतया तदभावेन न सरः—पदादुपस्थितिरिति भावः। मूले तारमन्द्रवदित्यत्र तारमन्द्रशब्दौ धर्मपरौ। तथाच यथा वर्णानां नित्यैकत्वमते ... सत्त्वे तारत्वादिना भेदप्रतीतिस्तद्वदित्यर्थः॥ ७१ ॥ वर्णगतिस्फोटमभिप्रेत्य प्रकृते वारे—*नन्विति*। *जातेरिति* सर्वबोधकजातेरित्यर्थः। *प्रत्येकमिति* पदान्तर्गततत्तद्वर्णेष्वित्यर्थः। एवमग्रेऽपि। * अर्थबोधापत्तिरिति * तदभि-व्यञ्जकवर्णत्वादिति भावः। * योगार्थतयेति * स्फुटत्यर्थोऽस्मादिति वक्ष्यमाणव्युत्पत्त्येत्यर्थः।

व्यवहारः कृतः" इति ॥ ७२ ॥ ननु का सा जातिस्तत्राह—

सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः ॥७३॥

सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ॥ सत्यं यत्तत्र सा जातिरसत्या व्यक्तयः । तत्तद्व्यक्तिविशिष्टं ब्रह्मैव प्रतिभावम्=प्रतिपदार्थम् । सत्यांशो जातिः, असत्या व्यक्तयः । तत्तद्व्यक्तिविशिष्टं ब्रह्मैव जातिरिति भावः । उक्तञ्च कैयटेन "असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यमित्यर्थः" इति । "ब्रह्मतत्त्वमेव शब्दस्वरूपतया भाति" इति च । कथं तर्हि, ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्वाद- नित्यत्वम्, "आत्मैवेदं सर्वम्" इति श्रुतिवचनादिति कैयटः सङ्गच्छताम् । अविद्या=आविद्यको

प्रभा

निष्फलं मोक्षरूपपुरुषार्थानुपयोगित्वात्, साक्षात्परम्परया वा तदुपयोगित्वस्यैव फलत्वादित्याह—येनेति । तत्र=सत्यासत्ययोर्मध्ये व्यवस्थितौ=भासमानौ । सत्यम्=कालत्रये बाधरहितम् । तत्र बाधितमसत्यम् । विशिष्टम्=उपलक्षितम्=आधेयतया व्यक्त्युपहितम्, विशेष्यान्वयित्वे सा जाति, विधेयप्राधान्यात्स्त्रीत्वम् । विशेषणत्वं तु न विशेष्यान्वयित्वे सति अभेदेन सति विधेयानन्वयित्वरूपोपाधित्वस्यैव व्यक्तौ सत्त्वात् । विशेषणत्वं तु न विशेष्यान्वयित्वे सति अभेदेन विधेयान्वयित्वरूपविशेषणत्वस्याभावात् । जाति=जातिपदव्यवहार्यम् । 'द्रव्यं नित्यम्, इति भाष्ये कैयटेनोक्तम् । असत्योपाधिना=व्यक्त्याऽऽधेयतयाऽवच्छिन्नम् । द्रव्यशब्दवाच्यम्=द्रव्यवाचकघटादिवाच्यम्, द्रव्यात्मको यः शब्दस्तद्वाच्यं वा मीमांसकमते शब्दस्य द्रव्यत्वात् । प्रत्याहाराह्निकान्ते अक्षरराशिरिति प्रतीकं कैयटः ब्रह्मतत्त्वमेवेति । वाचकशब्दरूपतया वेदरूपतया वा । कैयटे 'प्रतिभाति' इति पाठः । ब्रह्मणः साक्षाज्ज्ञातु- मशक्यतया रूपनामनिरूपणद्वारा तज्ज्ञानाय शास्त्रस्योपयोग इति भाव. । जाते ब्रह्मरूपत्वे 'आकृतिरनित्या' इति प्रतीकस्थकैयटविरोधमाशङ्क्य परिहरति—अविद्येति-कार्यमात्रोपादानभूता सदसदादिभिरनिर्वचनीया, मिथ्याज्ञानजन्यसंस्काररूपा वा अविद्या । ननूक्ताविद्याया अवृत्तिकतया घटपदादिसकलसाधारणतया च जातित्वासम्भव इत्यत आह—आविद्यक इति—आविद्यक इति चिन्त्यम्, कुत्रो विधायकाभावात् । अविद्यया

दर्पणव्याख्या

स्फोटरूप यद् व्यङ्ग्य तद्व्यञ्जकवर्णात्मकशब्दस्येत्यर्थः ॥ ७२ ॥ नन्वेतावता प्रबन्धेन पदत्वादेर्जातित्वस्य, तद्वाचकत्वस्य च व्यवस्थापनमफलम्, पुरुषार्थानुपयोगित्वादित्याशङ्क्य समाधानपरतया मूलमवतारयति—*ननु का सेति* । सा= वाचकत्वेनाभिमता जाति केति योजना । * सत्यांश इति * सत्यत्वम्=कालत्रयाबाध्यत्वम्, तद्विपरीतमसत्यत्वम् । पर्य्य- [illegible] * तद्व्यक्तीति * तद्व्यक्त्युपलक्षितमित्यर्थः, परमार्थब्रह्मणा व्यक्तीना वैशिष्ट्यासम्भवात् । अत एव जगत्कर्त्तृ [illegible] तदुपलक्षणत्वमामनन्तीति भाष्यम् । *जातिरिति* तद्व्यवहारविषय इत्यर्थः । *असत्योपाधीति* व्यक्तीनामुपाधित्वञ्च, [illegible] अपि नानाप्रतीतिजनकत्व तदवच्छिन्नम्=तदुपलक्षितमित्यर्थ. । *द्रव्यशब्देति* गवा- दिशब्देत्यर्थः । गुणगतजातेरनङ्गी [illegible] आत्मको यश्शब्दस्तद्वाच्यमित्यर्थः, मीमांसकैः शब्दस्य द्रव्यत्वोपगमात् । *शब्दस्वरूपतयेति* श्रुत्यात्मकशब्दरूपतयेत्यर्थ । [illegible] ब्रह्मणी वेदितव्ये" इति श्रुते । अयमाशयः — 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत." इत्यादितैत्तिरीयकश्रुतौ ब्रह्मणो [illegible] उपादानत्वश्रवणादुपादेयस्य चोपादानाभिन्नत्वस्य लोकप्र सिद्धत्वाद्ब्रह्मार्थयोरपि स्वाभिन्नोपादानाभिन्नत्वे न परस्पराभिन्नत्वे मुख्य [illegible] पृथक्प्रतीयमानजगत "नेह नानाऽस्ति" इति श्रुत्या [illegible] दृढे बाधितार्थप्रतीतेरधिष्ठानसत्त्वैकनियम्यत्वेनावशिष्यमाणब्रह्मण. [illegible] द्रूपस्य साक्षाज्ज्ञातुमशक्यतयोपलक्षणीभूत- रूपनामनिरूपणद्वारा तज्ज्ञानाय शास्त्रस्योपयोग इति । * कथमिति * सङ्गच्छता- [illegible] मित्यनेनान्वितम्, पूर्वापरनिरोधादिति भावः । मिथ्याज्ञानरूपायास्तज्जन्यसंस्काररूपाया वा जातित्वासम्भवादाह—*आविद्य [illegible] क इति* अविद्याकल्पित इत्यर्थः ।

